वामनजयादित्यविरचिता

# काशिका

न्यास-पदमञ्जरी-भावबोधिनी-सहिता

तृतीयो भागः

[२.३—३.२]

सम्पादकौ

डा. जयशङ्कर लाल त्रिपाठी

डा. सुधाकर मालवीयः

तारा प्रिण्टिंग वर्क्स

वामनजयादित्यविरचिता

# काशिका

## न्यास-पदमञ्जरी-भावबोधिनी-सहिता

तृतीयो भागः

[२.३—३.२]

सम्पादकौ
डा. जयशङ्कर लाल त्रिपाठी
डा. सुधाकर मालवीयः

तारा प्रिंटिंग वर्क्स

प्राच्यभारतीग्रन्थमाला—१९

*Prācyabhāratīgranthamālā—19*

# का शि का

डॉ० जयशङ्कर लाल त्रिपाठी

डॉ० सुधाकर मालवीयः

*Prācyabhāratīgranthamālā—19*

# KĀŚIKĀ

**(A COMMENTARY ON PĀṆINI'S GRAMMAR)**

of

VĀMANA & JAYĀDITYA

with

NYĀSA or VIVARAṆAPAÑJIKĀ

of

JINENDRABUDDHI

and

PADAMAÑJARĪ

of

HARADATTA MIŚRA

with

**BHĀVABODHINĪ**

Hindi Exposition by Dr. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by* :

**Dr. Jaya Shankar Lal Tripathi**
Vyākaraṇācārya (Goldmedalist), M. A., Ph, D, D. Litt.,

and

**Dr. Sudhakar Malaviya**
Sahityācārya, M. A., Ph. D.,

Department of Sanskrit, Banaras Hindu University

*Foreword by*

**Prof. Biswanath Bhattacharya**
*Mayūrabhañja Professor & Head, Department of Sanskrit, Banaras Hindu University*

Volume III

[Adhyāyas 2.3—3.2]

TARA PRINTING WORKS
VARANASI
1987

प्राच्यभारतीग्रन्थमाला—१२

श्रीमद्वामन-जयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

श्रीजिनेन्द्रबुद्धिविरचितया 'न्यास'परपर्यायकाशिकाविवरणपञ्जिकाख्यया

विद्वद्वरश्रीहरदत्तमिश्रविरचित-'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता

डॉ० जयशङ्करलालत्रिपाठिविरचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता


संपादकौ

डॉ० जयशङ्कर लाल त्रिपाठी

व्याकरणाचार्यः ( लब्धस्वर्णपदकः ), एम० ए०, पी-एच्० डी०, डी० लिट्०

डॉ० सुधाकर मालवीयः

साहित्याचार्यः, एम० ए०, पी-एच्० डी०

संस्कृत-विभागः, काशी हिन्दू विश्वविद्यालयः

प्रस्तावकः

डॉ० विश्वनाथ भट्टाचार्यः

मयूरभञ्ज प्रोफेसर, विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी हिन्दू विश्वविद्यालयः


## तृतीयो भागः

( २.३—३.२ अध्यायात्मकः )


तारा प्रिंटिंग वर्क्स

वाराणसी

१९८७ तमः खिष्टाब्दः ]　　　　[ २०४४ तमो वैक्रमाब्दः

## FOREWORD

Inroducing the *THIRD* Volume of the *Kāśikāvṛtti* provides me with a great pleasure and a sense of academic achievement. Dr. Jaya Shankar Lal Tripathi a senior colleague and Reader and Dr. Sudhakar Malaviya, the Senior Research Assistant in the Department of Sanskrit have undertaken the publication of the renowned *Vṛtti* on Paninian *Aṣṭādhyāyī* by Vāmana and Jayāditya along with the two well known commentaries *Nyāsa* (Kāśikāvivaraṇapañjikā) by Jinendrabuddhi and *Padamañjarī* by Haradatta Miśra. I congratulate them for undertaking such an ambitious project which, when completed, will meet a long-felt need of providing a thoroughly dependable edition of the basic texts of *Aṣṭādhyāyī* and *Kāśikā* along with two most important commentaries.

In addition to the meticulous care taken by the editors in printing the text as flawlessly as possible, they have provided useful critical notes and references whenever necessary and extensive indices to render the edition almost indispensible for the students following the Sūtra-Vṛtti-Bhāṣya mode of grammatical study in particular and researchers in general. Dr. Tripathi has also added a Hindi rendering of the *Vṛtti* which happens to be a pioneering effort. Translation of *Śāstras*, especially of one like the Vyākaraṇa where extreme precision is truly the soul of style, is a difficult and different job. I am happy to note that Dr. Tripathi with his firm grounding in the *Śāstra* has given an exposition which, apart from being faithful to the text, has done full justice to the purport as well.

Publication of the Kāśikā as planned is a stupendous work and the learned editors happen to be ideally qualified to fulfill the same. While congratulating both of them, I only hope and pray that they succeed in bringing out all the ten volumes as early as possible. I am sure that the entire Sanskritic world will welcome the grand scholarly venture.

BISWANATH BHATTACHARYA

*Professor & Head, Department af Sanskrit*

*Banaras Hindu University*

*July 25, 1986*

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥

ऋ० १०.७१.४ ।

अपि खल्वेकः—पश्यन्नपि न पश्यति । अपि खल्वेकः—शृण्वन्नपि न शृणोत्येनामिति—अविद्वांसम् आह अर्धम् ( अविद्वल्लक्षणमर्थमर्द्धर्चं आहेत्यर्थः ) ॥ उतो त्वस्मै तन्वं विसस्रे=तनुं विवृणुते । जायेव पत्य उशती सुवासाः तद्यथा—जायेव पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते । वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम्-इति महाभाष्यः । ( पस्पशाह्निकम् ) ( नि० १.१९ ) ।

## PUBLISHER'S NOTE

We have the pleasure in presenting the Third Volume of Kāśikā with Nyāsa and Padamañjarī along with the new Hindi exposition Bhāvabodhinī by Dr. Jaya Shankar Lal Tripathi.

The learned editors of the present edition—Dr. Jaya Shankar LaL Tripathi, Reader and Dr. Sudhakar Malaviya in the Sanskrit Department, Banaras Hindu University have taken great pains and care in editing the text and the Hindi exposition. They have provided, in addition to Hindi exposition, critical notes and references which, we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole work shall be completed in ten Volumes as follows :

| *Volume* | *Adhyāya/Pāda* | *to* | *Adhyāya/Pāda* |
|---|---|---|---|
| I | 1 | — | 1/2 |
| II | 1/3 | — | 2/2 |
| III | 2/3 | — | 3/2 |
| IV | 3/3 | — | 4/1 |
| V | 4/2 | — | 5/1 |
| VI | 5/2 | — | 6/1 |
| VII | 6/2 | — | 6 |
| VIII | 7 | | |
| IX | 8 | | |
| X | Indices | | |

We hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किंचन ।।

—पराशरोपपुराणम् ।

# सम्पादकीयम्

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥**

—पाणिनीयशिक्षा ४१-४२ ।

विश्वस्य प्राचीनतमास्वखिलासु भाषासु संस्कृतं सर्वा अपि अतिशेते—इत्यत्र न कस्यापि वैमत्यम् । विषयोऽयं आश्चर्यकरः यत्सत्स्वपि बहुविधेषु राजनैतिकपरिवर्तनेषु धार्मिकान्दोलनेषु च यदि काचिद् भाषास्ति तादृशी याऽस्मिन् विशालेऽपि भारते आसेतु हिमाचलं मूलभाषापदवीमारूढा भाषणादिव्यवहारपदमधिष्ठिता सञ्जागर्तितराम्, तर्हि सा केवलमियं **सुरभारती** एव इति विमर्शका आकलयन्ति ।[1] वस्तुतोऽस्य वैशिष्ट्यस्य हेतुषु अस्या व्याकरणं प्रामुख्यं भजते, येनाद्यापीयं भाषाऽक्षुण्णरूपेण विराजमाना सर्वान् भारतीयान् वैदेशिकानपि च सम्मोहयति ।

वेदानां सम्यग्ज्ञानाय तेषां षडङ्गानां ज्ञानम् आवश्यकमेव । अतएव व्याकरण-विषये प्राचीनकालादेव विज्ञायते यत्—'**छन्दः पादौ तु वेदस्य मुखं व्याकरणं स्मृतम्** ।' षट्स्वङ्गेषु व्याकरणं पदपदार्थज्ञानस्य तदायत्तत्वात् प्रधानम् ।

**महर्षिः पाणिनीः** (ख्रि० पू० ५०० वर्षकालिकः)

तत्र सत्सु बहुषु व्याकरणेषु महेश्वरप्रसादादधिगतवैशिष्ट्यं पाणिनीयं व्याकरणं लौकिकवैदिकोभयशब्दानां नियामकम् । महर्षिः पाणिनिः स्वकीययाऽद्भुतप्रतिभया सकलशब्दशास्त्र-समुद्रं समुन्मथ्याष्टस्वध्यायेषु नवनीतमिवापेक्षितं सर्वं व्याकरणं सूत्ररूपेण प्रोक्तवान् । तत्राष्टाध्याय्यां सप्तनवत्यधिकनवशतोत्तरत्रिसहस्राणि (३९९७) सूत्राणि वर्त्तन्ते । तस्यां व्याकरणशास्त्रसम्बद्धाः सर्वेऽपि विषयाः सूत्रशैल्यां प्रतिपादिताः ।

**वार्त्तिककारः कात्यायनः** (ख्रि० पू० ३०० वर्षकालिकः)

पाणिनि-परवर्तिषु वैयाकरणेषु वार्त्तिककारः कात्यायनः विशेषतोऽत्र उल्लेखनीयः । पाणिनीयसूत्रे उक्तानुक्तदुरुक्तार्थान् विवेचयता समीक्षणत्वेन वार्त्तिकानि कात्यायनेन विरचितानि । तान्यपि सूत्राणीव प्रमाणानीति सर्वे स्वीकुर्वन्ति । किन्तु वार्त्तिकानां स्वरूपादिकमद्यापि न व्यवस्थितमिति खेदावहम् ।

**भाष्यकारः पतञ्जलिः** (ख्रि० पू० १५० वर्षकालिकः)

सूत्राणि वार्त्तिकानि चैतदुभयमपि संक्षिप्तरूपेण व्याकरणसिद्धान्तान् प्रत्यपादयत्, येनाभिप्रायबोधने काठिन्यमन्वभूयत । अतो महर्षिणा पतञ्जलिना अनुपमे स्वकीये महाभाष्ये सरलया भावगम्भीरया च शैल्या विशदरूपेण विषयाणां प्रतिपादनमकारि । एवं **पाणिनि-कात्यायन-पतञ्जलयो 'त्रिमुनि'** इत्याख्यया वैयाकरणैः स्तूयन्ते ।

---

1. 'Even at the present moment, after a century of English rule and English teaching, I believe that **Sanskrit** is more widely understood in India than **Latin** was in Europe at the time of Dante," इति विद्वद्धुरीणो भट्टमोक्षमूलरः, 'India : What can it teach us.'

**व्याख्यानस्य द्वैविध्यम्**

कालान्तरे पुनः शास्त्रसौकर्याय बालावबोधनाय च प्रयोगप्रक्रियाक्रमं संलक्ष्य नैकेषां प्रक्रियाग्रन्थानां रचना सञ्जाता। अस्मिन् शब्दशास्त्रे ये ग्रन्थाः पाणिनिविरचित-सूत्रक्रमेण वर्त्तन्ते, ते**ऽष्टाध्यायीक्रमा**वलम्बिनः, ये च प्रयोगानुसारेण विद्यन्ते, ते **प्रक्रियाक्रमा**वलम्बिनः कथ्यन्ते। तत्र वामनजयादित्येन कृता **'काशिकावृत्तिः'** अष्टाध्यायीक्रमस्य उपलब्धवृत्तिषु प्रथमावृत्तिः।

**काशिका**

अष्टाध्यायीक्रमवलम्ब्य संपादितेषु सर्वेषु ग्रन्थेषु पाणिनेः संक्षिप्ता शैली, अपरत्र च महाभाष्यकारस्य अतिविस्तृता बहुपरिश्रमसाध्या च शैली, अत्र मध्यममार्गेण व्याकरणशास्त्रस्य सर्वेषां विषयाणां परिज्ञानाय कैश्चिद् वृत्तिकारैः प्रयासो व्यधायि। तत्र वामन-जयादित्याभ्यां (ख्रि० ६५०) महाभाष्यसमाश्रिता सरलरीत्या सोदाहरण-सूत्र-व्याख्यान-प्रतिपादनपरापेक्षितभावप्रकाशिका 'काशिका' नाम्नी वृत्तिर्विरचिता।

सा चेदानीमियं वृत्तिः पाणिनीयाष्टाध्याय्या उपलब्धवृत्तिषु प्राचीनतमा। अस्यां प्रतिसूत्रमनुवृत्त्युदाहरणप्रत्युदाहरणानि शङ्कासमाधानपुरःसराणि समुपलभ्यन्ते। काशिकाकाराभ्यां पाणिनिशास्त्रोपरि परम्पराप्राप्तस्य विषयजातस्य प्रयत्नेन रक्षणं कृतम्, यतो गणपाठोपसंख्यानेष्टयादीनां परिष्कृतरूपेण सह वृत्ति-भाष्य-नामधातु-पारायणादिषु विप्रकीर्णस्य तन्त्रस्य [=व्याकरणशास्त्रस्य] सारसङ्ग्रहोऽत्र जिज्ञासुभिः सारल्येनोपलभ्यते।

**काशिकायाः व्याख्याः—**

१. न्यासः (=काशिकाविवरणपञ्जिका)

२. पदमञ्जरी

३. भावबोधिनी (हिन्दी व्याख्या)

**(१) न्यासः (काशिकाविवरणपञ्जिका)**

काशिकावृत्तेः टीका **काशिकाविवरणपञ्जिका**परपर्याया **'न्यास'** इत्याख्यया प्रसिद्धा आचार्यजिनेन्द्रबुद्धिपादविरचिता (७०० ई०)। इयं सरलापि गम्भीराऽपेक्षितपदार्थबोधनसमर्थेति बोध्यम्।

**(२) पदमञ्जरी**

काशिकावृत्तेः अपरा प्रौढा टीका 'पदमञ्जरी' श्रीविद्वद्वर-हरदत्तेन (११०० ई०) प्रणीता। अत्र काशिकायाः प्रतिसूत्रं प्रति-पदं व्याख्यानं दृश्यते। अस्याः गाम्भीर्यं महत्त्वं च विदुषां सुस्पष्टम्।

**(३) भावबोधिनी**

अत्र न्यास-पदमञ्जरी-समाश्रिता सकलकाशिकावृत्तेः विशदा डॉ० जयशङ्करलालत्रिपाठिविरचिता 'भावबोधिनी' नामधेयाऽभिनवापूर्वा हिन्दी-व्याख्या विराजते। अस्यां सूत्राणां विस्तृतं व्याख्यानं प्रदर्श्य प्रक्रिया-ज्ञानसौकर्याय प्रकृति-प्रत्ययादिनिर्देशपुरस्सरं व्युत्पादनम्, अथ च 'विमर्श' इत्येतदन्तर्गतं गम्भीरविषयविवेचनं जिज्ञासु-शङ्का-समाधानाय समायोजितम्।

**प्रस्तुतं संस्करणम्**

अथेदानीं सप्रश्रयं सामोदं च विद्वज्जनसमक्षं प्रस्तूयते—आचार्यजिनेन्द्रबुद्धिपादविरचितया **न्यासा**-परपर्याय **'काशिकाविवरणपञ्जिकाख्यया'** श्रीविद्वद्वरहरदत्तमिश्रविरचितया **पदमञ्जरी**समाख्यया व्याख्यया च सहितायाः, अथ च डॉ० जयशङ्करलालत्रिपाठिविरचितया **'भावबोधिनी'** त्याख्ययाऽभिनवया हिन्दीव्याख्यया च विभूषितायाः **'काशिका'** नामवृत्तेः द्वितीयाध्यायस्य तृतीयपादतः तृतीयाध्यायस्य द्वितीयपादपर्यन्तः **तृतीयो भागः**।

**संस्करणस्यास्य वैशिष्ट्यानि**

१. सम्पूर्णकाशिकायाः हिन्द्यां विशदं व्याख्यानम् ।

२. काशिकावृत्तानुपलब्धानामुद्धरणानामाकरग्रन्थेभ्यः संशोधनं विधाय मूलस्थाननिर्देशपुरस्सरं संयोजनम् ।

३. वृत्तावुदाहरणत्वेनोद्धृतानां वैदिकपाठानां स्वराङ्कनसहिता प्रस्तुतिः ।

४. न्यासस्य पदमञ्जर्याश्च विविधपाठानां समीक्षणपूर्वकं सम्पादनम् ।

५. टीकाद्वये उपलब्धानामुद्धरणानां बाहुल्येन मूलनिर्देशः ।

तत्र तावत् तत्तत्पाठसंशोधनार्थं यानि पुस्तकानि प्रयुक्तानि दृष्टानि वास्माभिः तानि प्रथमभागस्य सम्पादकीये निर्दिष्टानि । व्यतिरिक्तमेतद्—एतेषु पुस्तकेषु यत्र क्वापि उद्धृतांशेषु त्रुटयोऽवलोकिताः तत्तदाकर-ग्रन्थेभ्यः मूलपाठं संशोध्य ताः बाहुल्येनापकृता अस्माभिः ।

**सम्पादन-शैली**

प्रतिसूत्रमत्र उट्टङ्किता प्रथमसङ्ख्या अष्टाध्यायीसूत्रस्यानुपूर्वि-क्रमावलम्बिनी । सूत्रस्य पश्चाद् गृहीता संख्या तत्सूत्रस्य अष्टाध्यायीक्रमागत-पादस्थान्तर्गतसूत्रस्य संख्यां बोधयति । तदुपरि कोष्ठके गृहीता संख्या निर्णयसागरमुद्रणालयतः प्रकाशित—'सिद्धान्तकौमुदी' स्थसूत्रस्य संख्यां द्योतयति । मन्ये, एतत् शोध-च्छात्राणां विद्वद्वराणां वा किमपि उपकाराय सम्पद्येत । रीतिरियं विद्वद्वरेण्येन डा० आर्येन्द्रशर्ममहोदयेनापि समादृता, सैवाऽनुसृताऽस्माभिरपि ।

सुविदितं हि इदमस्य ग्रन्थस्याध्येतॄणां यदस्मिञ्च्छास्त्रे निबद्धानि गम्भीरवाक्यान्यतिक्लिष्टानि, तथापि श्रीमद्गुरुचरणेभ्योऽखिल-विद्यापारंगतेभ्यः सम्पूर्णानन्द-संस्कृत-विश्व-विद्यालयस्य व्याकरणविभागाध्यक्ष-चरेभ्यः पण्डितप्रकाण्डेभ्यः श्रीमद्भ्यो मुरलीधरमिश्रमहोदयेभ्यः, श्रीमद्भ्यो भूपेन्द्रपति-त्रिपाठिमहोदयेभ्यः, श्रीमद्भ्यो भूपनारायण-झा-महोदयेभ्यः, श्रीमद्भ्यो रामप्रसादत्रिपाठिमहोदयेभ्यः, श्रीमद्भ्यः कालिकाप्रसाद-शुक्लमहोदयेभ्यः, श्रीमद्भ्यो देवदत्तशर्मोपाध्यायमहोदयेभ्यश्च यदुपलब्धं तदेवास्य संस्करणस्योपजीव्यम् ।

अन्ते काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाः प्राच्य-प्रतीच्योभयविधविद्यापारङ्गताः सूक्ष्मसमीक्षकाः श्रद्धेयाः मनीषिणः डॉ० विश्वनाथभट्टाचार्यमहोदयाः अस्य ग्रन्थस्य प्रास्ताविकं विलिख्यास्मान् भृशमनुगृहीतवन्त इति तेषां कृतज्ञतां प्रकटयामः ।

काशीस्थ-तारायन्त्रालयाधिपतीनां दुर्लभ-प्राचीन-संस्कृत-ग्रन्थरत्नानां प्रकाशने रतानां श्रीमद्रमा-शङ्करपण्ड्या-महोदयानामाभारोऽस्माभिः हृदयेन स्वीक्रियते यैः सौष्ठवसम्पन्नं सत्वरञ्चैतत् संस्करणं विद्वत्-समक्षमुपस्थापितम् ।

**"प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम् ।"**

—ध्वन्यालोकः

संस्कृत विभागः, काशीहिन्दूविश्वविद्यालयः
**ज्योति पर्व २०४३ ( २.११.१९८६ )**

**जयशङ्करलाल त्रिपाठी**
**सुधाकर मालवीयः**

# भूमिका

**येन धौताः गिरः पुंसां विमलैः शब्दवारिभिः ।**

**तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ।।**

भारतीय मनीषियों ने शब्दशास्त्र का सूक्ष्म चिन्तन प्राचीन काल से ही आरम्भ कर दिया था। उनके गम्भीर अनुशीलन के फलस्वरूप प्रातिशाख्य ग्रन्थों एवं पाणिनीय जैसे विभिन्न व्याकरणों का प्रणयन हुआ। शब्दानुशासन का विस्तृत एवं विशाल रूप सुदीर्घ वैदिक युग से ही प्राप्त होता है। गो-पथ ब्राह्मण[1] में पाणिनीय व्याकरण में प्रयुक्त अनेक पारिभाषिक शब्दों का विवेचन उपलब्ध होता है। यास्क के निरुक्त में वैयाकरणों के मत उद्धृत हैं।[2] वाल्मीकीय रामायण[3] और महाभारत[4] से स्पष्ट है कि संस्कृत भाषा का व्याकरण अत्यन्त प्राचीन है। अन्ततः पातञ्जल महाभाष्य के उद्धरण से इस व्याकरणशास्त्र पर अत्यन्त प्राचीनत्व की मुहर लगा दी गई है :—'**पुराकल्पे एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते**।'[5]

### पाणिनि-पूर्ववर्ती वैयाकरण

सम्प्रति यद्यपि पाणिनीय अष्टाध्यायी ही सर्वाङ्गपूर्ण और सर्वविद्वज्जनों द्वारा समादृत है। परन्तु पाणिनि की इस अद्भुत कृति में पूर्ववर्त्ती आचार्यों के योगदान को अस्वीकार नहीं किया जा सकता। उनके मतों का सम्यक् रूप से अनुशीलन करने के बाद ही पाणिनि ने सूत्रों की रचना की।

### अष्टाध्यायी में उल्लिखित आचार्य

अष्टाध्यायी के अध्ययन से यह ज्ञात होता है कि पाणिनि के भी पहले—१. काश्यप (पा० सू० १.२.२५), २. सेनक (पा० सू० ५.४.११२), ३. आपिशलि (पा० सू० ६.१.१२), ४. स्फ़ोटायन (पा० सू० ६.१.१२३), ५. चाक्रवर्मण (५.१.३०), ६. भारद्वाज (पा० सू० ७.२.६३), ७. गार्ग्य (पा० सू० ८.३.२०), ८. शाकल्य (पा० सू० ८.३.१९), ९. शाकटायन (पा० सू० ८.४.५०), १०. गालव (पा० सू० ८.४.६७)—ये दस आचार्य हो चुके थे।

### अष्टाध्यायी में अनुल्लिखित आचार्य

अष्टाध्यायी में कुछ आचार्यों का उल्लेख सर्वनाम शब्दों के द्वारा भी किया गया है, जैसे—उदीचाम् (४.१.५३), एकेषाम् (४.१.१७), आचार्याणाम् (८.३.१२४), प्राचाम् (८.३.५)।

पाणिनि द्वारा अनुल्लिखित भी अनेक वैयाकरण पाणिनि से पूर्व विद्यमान थे जिनका निर्देश अन्यान्य ग्रन्थों में उपलब्ध होता है। ये आचार्य हैं—१. इन्द्र, २. भागुरि, ३. पौष्करसादि, ४. चारायण, ५. काशकृत्स्न, ६. वैयाघ्रपद, ७. माध्यन्दिनि, ८. रौढि, ९. शौनक, १०. गौतम तथा ११. व्याडि।

---

१. ओङ्कारं पृच्छामः—को धातुः ? किं प्रातिपदिकम्········ ? कति पदः ? कः संयोगः ? किं स्थाननादानुप्रादानानुकरणम्········? (गो० ब्रा० पू० १.२४)

२. नि० १३.२।

३. वा० रा० कि० का० ३.२९।

४. महाभा० उद्योग पर्व ४.३.६१।

५. महाभा० (पस्पशा०)।

**पाणिनि का काल (५०० ई० पू०)**

पाणिनि के समय के निर्धारण में विद्वानों में मतभेद है। किन्तु इनका समय ई० पू० ५ वीं शती अनेक विद्वान् स्वीकार करते हैं। उपरितम सीमा के रूप में सत्यव्रत सामश्रमी आदि कुछ विद्वान् इनका समय २४०० ई० पू० और राजवाडे एवं वैद्य ९००–८०० ई० पू०, वेलवलकर ७००–६०० ई० पू०, भण्डारकर ७०० ई० पू०, बलदेव उपाध्याय ५०० ई० पू०, मैकडानल ५०० ई० पू०, मैक्समूलर ३५० ई० पू० और निम्नतम सीमा के रूप में कीथ आदि विद्वान् इन्हें ३०० ई० पू० का स्वीकार करते हैं। युधिष्ठिर मीमांसक इनका समय वि० पू० २९०० वर्ष मानते हैं। डा० वासुदेवशरण अग्रवाल इनकी तिथि ई० पू० पञ्चम शतक का मध्य निर्धारित करते हैं।

**पाणिनि की अष्टाध्यायी**

इतिहासकारों के अनुसार पाणिनि ने 'जाम्बवतीविजय' ( = पातालविजय) की भी रचना की थी। किन्तु इनकी कीर्ति-पताका **अष्टाध्यायी** के कारण ही है। इसका स्वरूप नाम से ही स्पष्ट है—आठ अध्याय। इनमें प्रत्येक अध्याय चार-चार पादों में विभक्त है। इस प्रकार बत्तीस पादों में चार हजार सूत्र (काशिका के अनुसार ३९९२) हैं। यद्यपि आपिशलि का व्याकरण भी आठ अध्यायों में है। किन्तु 'अष्टाध्यायी' शब्द पाणिनीय-व्याकरण के लिए ही योगरूढ़ हो गया है।

**अष्टाध्यायी का द्विविध अध्ययन**

कालान्तर में शास्त्रसौकर्य के लिए और बालावबोध में इसे सरल बनाने के लिए शब्दप्रयोग एवं शब्द-साधुत्व की प्रक्रिया को देखकर अनेक प्रक्रियाग्रन्थों की रचना हुई।

**(क) अष्टाध्यायी-क्रम**

इस शब्दशास्त्र में जो ग्रन्थ पाणिनिविरचित सूत्रक्रम के अनुसार हैं वे 'अष्टाध्यायीक्रम' वाले कहे जाते हैं। इनमें सूत्र अष्टाध्यायी के ही अनुसार व्याख्यात हैं। इस क्रम के अनुसार अपने रूप एवं स्थान किसी से भी परिवर्तित करके सूत्र का अध्ययन करना इष्टसाधक नहीं बन सकता। इस क्रम से सूत्रार्थ के अध्ययन पर विशेष ध्यान दिया जाता है।

**(ख) प्रक्रिया-क्रम**

परन्तु कालान्तर में लक्ष्य ( = प्रयोग) को प्रधानता दी जाने लगी और ११ वीं शती में अष्टाध्यायी के अध्ययन की दूसरी धारा भी बन गई। अभी तक सूत्रार्थ के ज्ञान की प्रधानता थी। किन्तु अब लक्ष्यसिद्धि-मात्र प्रधान होने लगी। इस क्रम के अन्तर्गत शब्दसाधुत्व की प्रक्रिया के क्रमानुसार सूत्रों का उपस्थापन किया जाने लगा।

इस प्रक्रिया-क्रम के अन्तर्गत धर्मकीर्ति (११ वीं शती) का 'रूपावतार', विमल सरस्वती (१४ वीं शती) की 'रूपमाला', रामचन्द्राचार्य (१४ वीं शती) की 'प्रक्रियाकौमुदी' आदि विशिष्ट रचनाएँ हुई। इनकी अनेक टीकाएँ भी लिखीं गई। इस क्रम का सबसे महत्त्वपूर्ण ग्रन्थ भट्टोजि दीक्षित (१५६० ई०) की 'वैयाकरण-सिद्धान्त-कौमुदी' है। 'प्रक्रिया-कौमुदी' में मात्र लौकिक शब्दों पर विचार किया गया है। किन्तु 'सिद्धान्त-कौमुदी' में वैदिक और लौकिक उभयविध शब्दों की प्रक्रिया बताई गई है।

**अष्टाध्यायी-क्रम का वैशिष्ट्य**

पाणिनि ने अष्टाध्यायी में सूत्रों के उपन्यास में एक विशेष क्रम का ध्यान रखा है। इसकी संक्षिप्तता ही इसकी प्रमुख विशेषता है। पाणिनि ने व्याकरण के प्रत्येक नियम को सूत्र रूप में अति संक्षिप्त करके प्रस्तुत

किया है। भाषा की ऐसी समाहार शक्ति स्यात् ही कहीं अन्यत्र देखने को मिले। उन्होंने सूत्रों का प्रणयन करके उन्हें स्थान-विशेष पर रखा है। यदि इसका उल्लंघन करके अध्ययन किया जाता है तो निश्चित ही पाणिनि के उद्देश्य (संक्षेप में व्याकरण का ज्ञान) की सिद्धि नहीं हो सकती। पाणिनि ने इन सूत्रों में पूर्ववर्ती पद या पदसमूह को अग्रिम सूत्रों से सम्बद्ध करने के लिए 'अनुवृत्ति' पद्धति को प्रस्तुत किया। इसलिए आगे के सूत्रों में केवल अतिरिक्त अंश ही लिखने की आवश्यकता पड़ी। कहीं-कहीं अधिकार-सूत्र मानकर अपेक्षित सभी सूत्रों में उसका सम्बन्ध कर लिया गया है। प्रक्रिया के अनुसार पूर्ववर्ती सूत्र की अपेक्षा परवर्ती सूत्र की बलवत्ता मानी जाती है—'विप्रतिषेधे परं कार्यम्' (१.४.२) इसका ज्ञान अष्टाध्यायी-क्रम के अध्ययन से ही सम्भव है। 'पूर्वत्रासिद्धम्' (८.२.१) में संकेतित पूर्व के प्रति पर की असिद्धि का ज्ञान हमें अष्टाध्यायी-क्रम में सरलतया हो जाता है। प्रक्रिया-क्रम में शब्दरूप-सिद्धि की प्रधानता है। अतः प्रक्रियांश का अच्छा ज्ञान सम्भव हो जाने पर भी सूत्रार्थ-सम्बन्धी अपेक्षित सम्यग् ज्ञान अपूर्ण ही रहता है।

अष्टाध्यायी-क्रम की वैज्ञानिकता की उपेक्षा करके कुछ उपयोगी शब्दों का शीघ्र ज्ञान कराना ही प्रमुख उद्देश्य मानकर सिद्धान्तकौमुदी आदि प्रक्रिया-ग्रन्थों की लोकप्रियता बढ़ी। इससे व्याकरणशास्त्र के अध्ययन की सही दिशा (कम्प्यूटर = संक्षिप्त पद्धति) छूट गई। वैदिक शब्दों के विषय में सर्वथा अज्ञान ही रहने लगा। अष्टाध्यायी में एक साथ ही दोनों प्रकार के शब्दों का अध्ययन करने से उनका अन्तर सरलतया समझ में आ जाता है। इस प्रकार अष्टाध्यायी-क्रमाश्रित ग्रन्थों (महाभाष्य तथा काशिका आदि) के अध्ययन में श्रम करना थोड़े समय में अधिक ज्ञान की प्राप्ति करना है।

**वार्त्तिककार कात्यायन (३०० ई० पू०)**

आचार्य कात्यायन वार्त्तिककार के रूप में जाने जाते हैं। इनका समय पाणिनि के बाद ई० पू० तृतीय शती माना जाता है। पाणिनि की अष्टाध्यायी के बाद भाषा में प्रविष्ट हुए नवीन रूपों का औचित्य सिद्ध करने के लिए कात्यायन ने पाणिनि के सूत्रों पर वार्त्तिकों (पूरक-सूत्रों) की रचना की। ये वार्त्तिक पाणिनि की अष्टाध्यायी का मण्डन ही करते हैं क्योंकि ये अष्टाध्यायी के पूरक हैं। अतः कात्यायन पाणिनि-सम्प्रदाय के द्वितीय आचार्य माने जाते हैं।

**महाभाष्यकार पतञ्जलि (१५० ई० पू०)**

सूत्रों तथा वार्त्तिकों का अत्यन्त सारगर्भित और संक्षिप्त रूप होने से उन पर समय-समय पर विभिन्न आचार्यों ने व्याख्या-ग्रन्थों का प्रणयन किया। इनमें पतञ्जलि (१५० ई० पू०) का महाभाष्य सर्वोत्कृष्ट है। पतञ्जलि ने कुछ ऐसी पारिभाषिक युक्तियों का प्रयोग किया है जिनके आधार पर इन्होंने पाणिनि के मूल सूत्रों के क्षेत्र में प्रभावशाली ढंग से विस्तार कर दिया है। किन्तु इस कार्य के लिए इन्होंने कात्यायन की भाँति किसी संवर्धन के समावेश का साहस अत्यल्प ही किया है। महाभाष्य सभी सूत्रों पर उपलब्ध नहीं है। इसका गद्य लालित्य, संक्षिप्तता एवं प्रसाद गुण के लिए प्रसिद्ध है।

इस प्रकार इन तीन महर्षियों ने मिलकर पाणिनीय व्याकरण को पूर्णता प्रदान की। इसीलिए इन्हें बाद में **'त्रिमुनि'** की संज्ञा से अभिहित किया गया।

**भर्तृहरिकृत वाक्यपदीय**

पाणिनीय व्याकरण के दार्शनिक क्रम के अन्तर्गत शब्दार्थ-सम्बन्ध की व्याख्या की जाती है। स्फोटवाद पर पहुँचकर यही गम्भीर चिन्तन का रूप ले लेता है। इसका व्यवस्थित रूप से गम्भीर विवेचन भर्तृहरि के वाक्यपदीय में हुआ है।

**पाणिनि-भिन्न व्याकरण के सम्प्रदाय**

पाणिनि-सम्प्रदाय के अतिरिक्त अन्य भी अनेक व्याकरण के सम्प्रदायों का आविर्भाव कालान्तर में हुआ जिनके नाम हैं—१. चान्द्र-सम्प्रदाय, २. जिनेन्द्र-सम्प्रदाय, ३. शाकटायन-सम्प्रदाय, ४. हेमचन्द्र-सम्प्रदाय, ५. कातन्त्र-सम्प्रदाय, ६. सारस्वत-सम्प्रदाय, ७. मुग्धबोध-सम्प्रदाय, ८. जौमर-सम्प्रदाय, ९. सौपद्म-सम्प्रदाय, १०. मतवादी सम्प्रदाय के अन्तर्गत हरिनामामृत और चैतन्यामृत।

**अष्टाध्यायी के व्याख्यान**

पाणिनि की अष्टाध्यायी पर अनेक आचार्यों ने वृत्तिग्रन्थों की रचना की थी, जिनके नाम हैं—१. पाणिनि, २. श्वोभूति, ३. व्याडि, ४. कुणि, ५. माथुर, ६. वररुचि, ७. देवनन्दी, ८. दुर्विनीत, ९. चुल्लि-भट्टि, १०. निर्लूर, ११. चूर्णिकार या चूर्णि। किन्तु इनकी वृत्तियाँ अप्राप्त हैं।

जो एकमात्र वृत्ति प्राप्त है उसका नाम है—१. 'काशिकावृत्ति' जयादित्य और वामन-कृत।

पाणिनीयाष्टाध्यायी के सूत्रक्रमानुसार लिखी गईं अन्य भी वृत्तियाँ हैं। इनमें कुछ मुद्रित हैं, कुछ अमुद्रित और कुछ का तो मात्र उल्लेख ही प्राप्त होता है। ये भागवृत्ति, भाषावृत्ति और दुर्घटवृत्ति आदि हैं।

## काशिकावृत्ति

**जयादित्य एवं वामन (६५० ई०) और उनका काल**

जयादित्य ने 'काशिका' नाम से प्रसिद्ध वृत्ति की रचना की। उपलब्ध वृत्तियों में यह वृत्ति ही सर्वाधिक महत्त्वपूर्ण और अत्यन्त प्राचीन है। इसके प्रणेता दो विद्वान् जयादित्य और वामन हैं। इनमें से प्रथम पाँच अध्याय जयादित्य द्वारा विरचित हैं और शेष तीन वामन द्वारा रचित हैं ऐसी प्रसिद्धि है।

इत्सिंग की भारत-यात्रा-विवरण में जयादित्य को 'काशिका' का रचयिता लिखा है। अतः इनका समय ६५० ई० पू० माना जाता है। वामन का काल सातवीं शती का उत्तरार्ध है।

**जयादित्य एवं वामनकृत वृत्ति का विभाग**

१. प्रयोगाणां तु निर्वाहो णिचश्चेत्यात्मनेपदात्।
**जयादित्यस्य** हृदयं गूढमेतत्प्रकाशितम्॥ का० भाग २ पृ० ७९—१.३.६७ पदमञ्जरी।

यहाँ पर हरदत्त ने मात्र जयादित्य का ही नाम लिया है। उनका यहाँ यह कहना है कि जयादित्य का ही हृदय ऐसा है जिन्होंने इस गूढ़ बात को प्रकाशित किया है। यहाँ वह वामन को भी साथ ले सकते थे। किन्तु मात्र जयादित्य का ही ग्रहण किया है। इससे यह निश्चित है कि प्रथम पाँच अध्याय जयादित्य द्वारा रचित हैं।

२. **वामन**स्तु 'अके जीविकार्थे' इत्यत्र 'अक इति.......कस्मान्न स्यादिति।'
—का० भा० २, पृ० ३५९, २.१.१७ पर पद०।

यहाँ पर हरदत्त ने वामन का मत उपस्थित किया है। ऊपर की वृत्ति यदि दोनों द्वारा रचित होती तो इनका मत अलग से क्यों दिया जाता? अतः आरम्भ के ५ अध्यायों पर भी वामन की वृत्ति थी किन्तु किसी कारणवश उसे अलग रक्खा गया। हरदत्त के समय वह विद्यमान थी। अतः यह सिद्ध होता है कि वामन ने सम्पूर्ण अष्टाध्यायी पर वृत्ति लिखी थी।

**काशिका नाम का कारण**

यह वृत्ति काशी में रची गयी थी अतः इसका नाम काशिका पड़ा। किन्तु सृष्टिधर के मत में सूत्रों के अर्थों को प्रकाशित करने के कारण इसका नाम 'काशिका' पड़ा है। काशिका का अन्य नाम 'एकवृत्ति'

भी है। काशिका में पाणिनीय क्रमानुसार लौकिक एवं वैदिक सूत्रों की यथास्थान व्याख्या होने से 'भागवृत्ति' के प्रतिपक्ष में काशिका के लिए 'एकवृत्ति' शब्द का व्यवहार होता है।

**काशिका का वैशिष्ट्य**

काशिका में प्रत्येक पाणिनि-सूत्र की व्याख्या की गयी है। इसमें महाभाष्य के मत से भिन्न आचार्यों के मत भी व्यक्त किए गए हैं। इस वृत्ति की मुख्य विशेषता इसमें वार्त्तिकों के पूर्ण स्वरूप का होना है। काशिका का मुख्य उद्देश्य पाणिनि की प्रक्रिया को समझाना है। इसीलिए आवश्यकतानुसार अनेक वार्त्तिकों को पाणिनि की इच्छा का अभिव्यञ्जक मानकर 'इष्टियों' के रूप में पढ़ दिया गया है और कहीं-कहीं उन वार्त्तिकों के मूल रूप में हेर-फेर भी कर दिया गया है। वार्त्तिकों की अभिव्यक्ति संक्षेप में होने से कहीं वार्त्तिक छूट गए हैं और कुछ वार्त्तिक तो महाभाष्य आदि में प्राप्त भी नहीं होते। जैसे— १. उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः ( पृ० ९० ), २. अत्रायुष्यादानां पर्यायग्रहणं कर्तव्यम् (पृ० ९२), ३. वशादिरप्ययमादेश इष्यते ( २.४.५४), ४. वलादावार्धधातुके विकल्प इष्यते ( २.४.५६), ५. निन्दाक्षमाव्याधि० ( ३.१.५ ), ६. अत्रापि सन्नर्थविशेष इष्यते ( ३.१.६), ७. शसिदुहिगुहिभ्यो वेति वक्तव्यम् ( ३.१.१०९ ), ८. पाणौ सृजेर्ण्यद् वक्तव्यः, ९. समवपूर्वाच्च ( ३.१.११० ), १०. भवतेश्च इति वक्तव्यम् ( ३.१.१४३), ११. भगे च दारेरिति वक्तव्यम् ( ३.२.४१ ), १२. कुत्सितग्रहणं कर्तव्यम् (३.२.८६), १३. माङ्याक्रोशे ( ३.२.१२४ ), १४. द्विषः शत्रुर्वा वचनम् ( ३.२.१२८), १५. अलङ्कृञो मण्डनार्थाद् युचः पूर्वविप्रतिषेधेनेष्णुज वक्तव्यः ( ३.२.१३६ ), १६. व्यधेः सम्प्रसारणं कुरच्च वक्तव्यः ( ३.२.१६२ ), १७. धृषेश्चेति वक्तव्यम् (३.२.१७२)।

काशिका की शैली यह है कि ये पहले सूत्र के 'अनुवृत्त अंश' का संकेत करके उस सूत्र का सामान्य अर्थ देते हैं, फिर उसके उदाहरणों एवं प्रत्युदाहरणों के द्वारा सूत्रघटक पदों का फल बताते हैं। वे संज्ञा सूत्रादि के लक्ष्यों का भी निर्देश कर अन्ततः अपेक्षित गणपाठ भी सूत्र की वृत्ति के साथ-साथ प्रस्तुत करते हैं।

**काशिका के व्याख्यान**

काशिका की अनेक व्याख्या भी लिखी गईं। किन्तु उसमें से कई का नामोल्लेख ही प्राप्त होता है। ये हैं—१. इन्दुमित्रकृत 'अनुन्यास', २. महान्यास, ३. विद्यासागर मुनीन्द्रकृत 'प्रक्रियामञ्जरी' (अमुद्रित), ४. रामदेव मिश्र कृत 'वृत्तिप्रदीप' (अमुद्रित) ५. वृत्तिरत्नाकर (अमुद्रित), ६. चिकित्सासार, ७. सनातन।

काशिका की उपलब्ध महत्त्वपूर्ण टीकाओं में **न्यास** और **पदमञ्जरी** सर्वाधिक प्रसिद्ध हैं।

**१. जिनेन्द्रबुद्धि-कृत न्यास (७२५–७५० ई०)**

काशिका के उपलब्ध व्याख्यानों में 'न्यास' अथवा इसी का अन्य नाम 'काशिकाविवरणपञ्जिका' प्राचीनतम है। इसके कर्त्ता बोधिसत्त्वदेशीय आचार्य जिनेन्द्रबुद्धि हैं। इसके लिए प्रयुक्त 'बोधिसत्त्वदेशीय' विशेषण से प्रकट है कि ये बौद्ध सम्प्रदाय के प्रसिद्ध विद्वान् थे।

'न्यास' काशिका का बड़ा ही प्रौढ़, प्रयोगबहुल तथा पाण्डित्यपूर्ण व्याख्यान है। इसमें न्यासकार ने मूल के तथ्यों का विवरण बहुत अच्छे ढंग से दिया है। इनके अनुसार 'काशिका' जैसे अन्य व्याख्यानों का सार लेकर लिखी गई है वैसे ही 'न्यास' भी अन्य व्याख्या ग्रन्थों का उत्कृष्ट सार है।

**२. हरदत्तमिश्र-कृत पदमञ्जरी (११वीं शती)**

काशिका पर द्वितीय विद्वत्तापूर्ण टीका 'पदमञ्जरी' विद्वद्वर हरदत्त मिश्र द्वारा विरचित है। इस टीका का नाम इसलिए पद-मञ्जरी है क्योंकि यह काशिका के प्रायः प्रत्येक पद की व्याख्या करते हुए लिखी गई है। काशिका के पाठभेदों पर विचार करना और अन्य नए उदाहरण भी प्रस्तुत करना इस टीका का अपना

वैशिष्ट्य है। न्यास की अपेक्षा पदमञ्जरी सामान्य विद्यार्थी के लिए कम उपयोगी है, क्योंकि इसमें पाण्डित्य-प्रदर्शन की प्रवृत्ति है। हरदत्त महाभाष्य के तलस्पर्शी विद्वान् थे। अतः इन्होंने काशिकाकार की कटु आलोचना की। इनके इस दर्प के कारण नव्यवैयाकरण भट्टोजि दीक्षित एवं नागेश भट्ट आदि ने इनकी अत्यधिक समालोचना की है।

**३. भावबोधिनी हिन्दी-व्याख्या**

पाणिनि के केवल सूत्रों पर यद्यपि अनेक प्रकार की हिन्दी व्याख्यायें प्रकाशित हैं किन्तु अद्यावधि 'काशिकावृत्ति' पर हिन्दी व्याख्या न थी। इसी कमी को दूर करने का 'भावबोधिनी' में प्रयास किया गया है।

इस व्याख्या का उद्देश्य सरल और सुबोध शैली में व्याकरणशास्त्रीय विषयों का स्पष्टीकरण है। यहाँ पाण्डित्य-प्रदर्शन न होकर यथासम्भव सुगमतया विषय-विवेचन पर विशेष ध्यान दिया गया है। इसमें अनुवाद के अतिरिक्त अपेक्षित अभिप्राय प्रकट करने के लिए कोष्ठक के माध्यम से अतिरिक्त पदों और वाक्यों का प्रयोग किया गया है। 'विमर्श' के अन्तर्गत गम्भीर विषयों का स्पष्टीकरण है।

**प्रस्तुत संस्करण**

काशिका के प्रस्तुत तृतीय भाग में अष्टाध्यायी के द्वितीय अध्याय के तृतीय एवं चतुर्थ पादों और तृतीय अध्याय के प्रथम एवं द्वितीय पादों का मूल न्यास, पदमञ्जरी तथा भावबोधिनी के साथ समाविष्ट है। इसमें ४९६ सूत्रों की व्याख्या की गई है। प्रस्तुत संस्करण में तीन प्रकार से संख्याओं का निर्देश है—

१. सूत्र से पहले (अर्थात् ४६२) अष्टाध्यायी के सम्पूर्ण सूत्रों की संख्या व्यक्त करती है।

२. सूत्र के बाद आने वाली संख्या (१) उस सूत्र का अष्टाध्यायी-क्रम में आने वाले पाद के अन्तर्गत सूत्र की संख्या का द्योतन करती है।

३. कोष्ठक में दी गई अन्तिम संख्या (अर्थात् ५३६) निर्णय सागर से प्रकाशित 'सिद्धान्त-कौमुदी' के सूत्रक्रम की परिचायक है।

यह सब जो कुछ हो सका है वह गुरुओं का ही कृपा-प्रसाद है उनके श्रद्धेय चरणों में बैठकर जो कुछ व्याकरण का ज्ञान हमें प्राप्त हो सका उसे आज विद्वानों के सामने प्रस्तुत करने में हमें अपार हर्ष हो रहा है। श्रद्धेय्या प्रोफेसर डॉ० पद्मा मिश्र से हमें काशिका पर कार्य करने की महती प्रेरणा प्राप्त हुई। वैदिक उद्धरणों के सम्बन्ध में बहुत-सी नवीन बातों का ज्ञान उन्हीं से मिला। काशिका के इस सस्करण का प्राक्कथन श्रद्धेय प्रो० डॉ० विश्वनाथ भट्टाचार्य, अध्यक्ष, संस्कृत विभाग, कला संकाय, काशी हिन्दू विश्वविद्यालय ने लिखकर हम लोगों पर महान् अनुग्रह किया है तदर्थ हम हृदय से कृतज्ञता व्यक्त करते हैं। हमारा यह कार्य जो सफल हो सका, उसमें सबसे अधिक श्रेय इस ग्रन्थ के प्रकाशक महोदय को ही है। उनका धैर्य असीम है। आज के इस बहुधन-साध्य वातावरण में इतना धन लगाकर इस कार्य को करना साधारण प्रकाशक के बल-बूते की बात नहीं है। अतः हम तारा प्रेस के संचालक और संस्कृत के दुर्लभ ग्रन्थों के प्रकाशक श्री रमाशङ्कर जी पंड्या महोदय के अत्यन्त आभारी हैं।

विदुषां वशंवद—

**जयशङ्कर लाल त्रिपाठी**

**सुधाकर मालवीय**

ज्योति पर्व, २.११.१९८६

वि० सं० २०४३ संस्कृत विभाग

काशी हिन्दू विश्वविद्यालय

## काशिकायाः तृतीयभागस्य विषयाः

### द्वितीयाध्यायस्य तृतीयः पादः



### द्वितीयाध्यायस्य चतुर्थः पादः



### तृतीयाध्यायस्य प्रथमः पादः



### तृतीयाध्यायस्य द्वितीयः पादः

★

## संकेत-सूची

| | | |
|---|---|---|
| अमर० | = | अमरकोषः |
| आ० गृ० | = | आश्वलायनगृह्यसूत्रम् |
| ऋ० | = | ऋग्वेदः |
| ऐ० ब्रा० | = | ऐतरेयब्राह्मणम् |
| कात्या० वा० | = | कात्यायनवार्त्तिकम् |
| कि०, किरात० | = | किरातार्जुनीयम् |
| कुमार० | = | कुमारसम्भवम् |
| कौ० सू० | = | कौशिक-गृह्यसूत्रम् |
| ग० सू० | = | गणसूत्रम् |
| चान्द्रपरि० | = | चन्द्रकृतपरिभाषा |
| तै० आ० | = | तैत्तिरीयारण्यकम् |
| तै० सं० | = | तैत्तिरीय-संहिता |
| दश० उ० सू० | = | दशपादि-उणादिसूत्र |
| धा० पा० | = | धातुपाठः |
| नि० | = | निरुक्तम् |
| प० | = | परिभाषा |
| पा० शि० | = | पाणिनीयशिक्षा |
| पा० सू० | = | पाणिनीयसूत्रम् |
| पि० छ० | = | पिङ्गलछन्दःसूत्रम् |
| फि० सू० | = | फिट्सूत्रम् |
| भट्टि० | = | भट्टिकाव्यम् |
| मनु० | = | मनुस्मृतिः |
| म० भा० | = | महाभाष्यम् |
| मै० | = | मैत्रायणीयसंहिता (यजुर्वेदीया) |
| वा० | = | वार्त्तिकम् |
| वाज० सं० | = | वाजसनेयिसंहिता |
| वा० प० | = | वाक्यपदीयम् |
| व्या० परि० | = | व्याडिकृतपरिभाषा |
| शाक० परि० | = | शाकटायनकृतपरिभाषा |
| शा० श्रौ० सू० | = | शाङ्खायनश्रौतसूत्रम् |
| शिशु० | = | शिशुपालवधम् (माघः) |

॥ श्रीगणेशाय नमः ॥

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

न्यास-पदमञ्जरी-भावबोधिनीसहिता

## अथ द्वितीयाध्याये तृतीयः पादः

### ४६२. अनभिहिते ॥ १ ॥ ( ५३६ )

**'अनभिहिते' इत्यधिकारोऽयं वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामः, 'अनभिहिते' इत्येवं तद्वेदितव्यम्। अनभिहिते = अनुक्ते, अनिर्दिष्टे कर्मादौ विभक्तिर्भवति। केनानभिहिते ? तिङ्कृत्तद्धितसमासैः, परिसंख्यानम्**

**न्यासः**

**अनभिहिते** ॥ दधातेर्हिनोतेर्वाऽनभिहित इत्यस्य रूपम्; समानत्वात्, अनेकार्थत्वाच्च धातूनाम्। न ज्ञायते किमर्थस्यानभिहितशब्दस्य ग्रहणमिति सन्देहः स्यात्, अतस्तं निराकर्तुमाह—**अनभिहितेऽनुक्त** इत्यादि। यद्यनभिहिते कर्मादौ द्वितीयादयो विभक्तयो भवन्तीति सामान्येनोच्येत; ततो यथा 'कृतः कटः' इत्यत्र क्तप्रत्ययेन कर्मणोऽभिहितत्वात् कटशब्दाद् द्वितीया न भवति, तथा 'कटं करोति', 'भीष्ममुदारं शोभनं दर्शनीयम्' इत्यत्र कटशब्दादुत्पद्यमानया द्वितीयया भीष्मादिगतस्य कर्मणोऽभिहितत्वाद् भीष्मादिभ्यो द्वितीया न प्राप्नोति। तस्मात् कश्चिद् विशेषोऽत्राभिमत इति मत्वा तं विशेषं पृच्छति—**केनानभिहित इति** ? इतरो विदिताभिप्राय आह—**तिङ्कृत्तद्धितसमासैरित्यादि**। क्रियत इति कर्मणि लकारः। 'सार्वधातुके यक्'। 'रिङ् शयग्लिङ्क्षु' इति

**पदमञ्जरी**

**अनभिहिते** ॥ अनभिहितशब्दोऽयमनेकार्थः, तथा हि—अभिपूर्वस्य दधातेर्हिनोतेश्चैतद्रूपं सम्भवति; अभिपूर्वश्च दधातिर्बन्धनेऽपि दृष्टः—अश्वाभिधानीमादत्त इति, उच्चारणेऽपि—अभिहितः श्लोक इति, प्रतिपादनेऽपि—अभिहितोऽर्थ इति; हिनोतिरपि गतौ वृद्धौ च वर्तते, इह तु वक्ष्यमाणानां कर्मादीनां बन्धनाद्यर्थचतुष्टयासम्भवात्प्रतिपादनवचनोऽभिहितशब्द इत्याह—**अनभिहिते अनिर्दिष्टे अनुक्त इति**। वचिरत्र प्रतिपादनवचनः। उक्तार्थानामप्रयोग इति यथा सामान्येन 'अभिहिते' इत्येतावत्युच्यमाने कटं करोति भीष्ममुदारं दर्शनीयमित्यत्र कटशब्दाद्विशेष्यवाचिन उत्पद्यमानया द्वितीययाऽनवयवेन कटगतस्य कर्मत्वस्याभिहितत्वाद्भीष्मादिभ्यो द्वितीया न स्यादिति मन्यमानः पृच्छति—**केनानभिहित इति**। इतरोऽपि विदिताभिप्राय आह—**तिङ्कृत्तद्धितसमासैरिति**। बहुषु प्रयुक्तेषु केषाञ्चिद्वर्जनेन केषाञ्चित्कार्यान्वयप्रतिपादनम् = **परिसंख्यानम्**. प्रत्युदाहरणेषु सर्वत्र द्वितीया न भवति।

**भावबोधिनी**

विश्वेशं शारदां ढुण्ढिं कपीशं च गुरूंस्तथा।
प्रणम्य, काशिकाव्याख्यां तनोमि शिवतुष्टये॥

'अनभिहिते'—यह अधिकार है—ऐसा समझना चाहिये। इस सूत्र के आगे जिनका कथन किया जायगा 'अनभिहित में' ऐसा समझना चाहिये। अनभिहित = अनुक्त में, कर्मादि के अनिर्दिष्ट रहने पर [ द्वितीया आदि ] विभक्ति होती है। [ भाव यह है कि 'अनभिहित में' इसका आगे के सभी सूत्रों में सम्बन्ध होता है। अतः अनभिहित = अनुक्त कर्म में द्वितीया, अनुक्त करण में तृतीया—इसी प्रकार अनुक्त कारक में ही अन्य सभी विभक्तियाँ समझनी चाहिये। ] किसके द्वारा अभिहित = उक्त न होने पर ? (क) तिङ्, (ख) कृत्, (ग) तद्धित, (४) समास—इनके द्वारा कर्म आदि के उक्त

**( म० भा० )। वक्ष्यति--'कर्मणि द्वितीया', ( २.३.२ ) कटं करोति। ग्रामं गच्छति। अनभिहित इति किम्? तिङ्—क्रियते कटः। कृत्–कृतः कटः। तद्धित–शत्यः, शतिकः ( ५.१.२१ )। समास–प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः।**

**परिसंख्यानं किम्? कटं करोति भीष्ममुदारं दर्शनीयम् ( म० भा० )।**

**न्यासः**

रिङादेशः। **शत्यः, शतिक इति**। 'शताच्च ठन्यतावशते' इति ठन्यती भवतः।

**पदमञ्जरी**

**कटं करोति भीष्ममित्यादि**। कटः कृतो भीष्म उदारो दर्शनीय इति करोतेरुत्पद्यमानः क्तप्रत्ययोऽनवयवेन सर्वकर्माभिधत्ते तद्वद् द्वितीयापीति यो मन्दधीर्मन्यते तं प्रतीदं परिगणनम्, सूक्ष्मदृशस्तु प्रति न वक्तव्यमेव। तथा हि प्रातिपदिकादुत्पद्यमाना द्वितीया यदाकारविशिष्टोऽर्थः प्रातिपदिकेनाभिधीयते तदाकारविशिष्टस्यैव कर्मभावमाचष्टे। कटशब्देन कटत्वजातिविशिष्टोऽर्थोऽभिधीयते, न भीष्माद्याकारविशिष्ट इति तत्प्रतिपादनाय

**भावबोधिनी**

न रहने पर द्वितीया आदि विभक्तियाँ होती हैं, ऐसा परिगणन करना चाहिये। आगे कहा जायगा—'कर्मणि द्वितीया' ( पा० सू० २।३।२ ) कर्म में द्वितीया होती है—कटं करोति। [ चटाई बनाता है। ] ग्रामं गच्छति। [ गाँव जाता है। इनमें 'कट' और 'ग्राम' ईप्सिततम होने से 'कर्तुरीप्सिततमं कर्म' पा० सू० १।४।४९ से कर्मसंज्ञक हो जाते हैं। और उक्त चार में से किसी के द्वारा कर्म का अभिधान नहीं है अतः 'कर्मणि द्वितीया' पा० सू० २. ३. २ से द्वितीया होती है।]

अनभिहित में = अभिधान = कथन न होने पर—इसका क्या प्रयोजन है? (क) तिङ् [ से अभिधान में द्वितीया नहीं होती है— ] जैसे—क्रियते कटः। [ चटाई बनायी जाती है। यहाँ तिङ् 'त' प्रत्यय से कर्म का अभिधान होने से कट कर्म में द्वितीया नहीं होती है, उक्त कर्म मानकर प्रथमा होती है ] (ख) कृत्—कृतः कटः [ चटाई बन गयी। यहाँ कृत् क्त प्रत्यय से कर्म का अभिधान है। ] (ग) तद्धित शत्यः—शतिकः [ सौ रुपयों से खरीदा गया घोड़ा आदि। यहाँ 'तेन क्रीतम्' ( पा० सू० ५।१।३७ ) के अधिकार में 'शताच्च ठन्यतावशते' ( पा० सू० ५।१।२१ ) से यत् और ठन् प्रत्ययों से कर्म का अभिधान है। ] (घ) समास—प्राप्तम् उदकं यं ग्रामम् [ उदक ने जिस गाँव को प्राप्त कर लिया है। यहाँ द्वितीयार्थ में बहुव्रीहि है। अतः समास से ही कर्म का अभिधान हो जाने के कारण ] प्राप्तोदकः ग्रामः [ यहाँ द्वितीया नहीं होती है। ]

**विमर्श**—प्रस्तुत सूत्र अधिकार सूत्र है। अतः इस पादसमाप्ति तक विभक्ति-विधायक सूत्रों के साथ सम्बद्ध होता रहता है। अभिहित = कथित, उक्त, न अभिहितः—अनभिहितः तस्मिन्। भाव यह है कि द्वितीया-विधायक सूत्र 'कर्मणि द्वितीया' के साथ प्रस्तुत सूत्र जोड़ कर 'अनभिहिते कर्मणि द्वितीया' ऐसा अर्थ किया जाता है। इसी प्रकार 'अनभिहिते करणे तृतीया, अनभिहिते कर्तरि तृतीया' आदि समझनी चाहिये। जब किसी अन्य के द्वारा कर्म, करण आदि कारकों का अभिधान = कथन नहीं हुआ रहता है तभी द्वितीया, तृतीया आदि विभक्तियाँ होती हैं। इस अभिधान का परिगणन कर दिया गया है कि तिङ्, कृत्, तद्धित और समास इन्हीं चार के द्वारा अभिधान न रहने पर कर्मादि में द्वितीयादि होती है। यदि इनमें से किसी एक से भी कर्मादि का अभिधान = कथन हो चुका रहता है तो उस कर्म आदि में भी द्वितीया नहीं होती है। चूँकि विभक्ति के बिना पद नहीं बन सकता अतः उनमें प्रातिपदिकार्थमात्र मान कर प्रथमा ही होती है। इसीलिये ऊपर के सभी लक्ष्यों में कर्म रहने पर भी द्वितीया न होकर प्रथमा ही हुई है।

अनु०—परिसंख्यान = परिगणन का क्या प्रयोजन है? कटं करोति भीष्मम् उदारं दर्शनीयम्। [ यहाँ कट-पदोत्तरवर्त्ती द्वितीया से यद्यपि कर्म का अभिधान है परन्तु उपरिपरिगणित तिङ्कृत्तद्धितसमास—में से किसी के द्वारा अभिधान नहीं है। अतः 'भीष्मम्, उदारम्, दर्शनीयम्' इन सभी समानाधिकरण प्रातिपदिकों से द्वितीया होती है। परिगणन का फल यही है। अतः कुछ लोगों ने 'निपात द्वारा भी अभिधान का जो समर्थन किया है, वह व्यर्थ है। ]

'बहुषु बहुवचनम्' ( १.४.२१ ) इत्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टाः, तत्र विशेषणार्थ-

न्यासः

''बहुषु बहुवचनम्' इत्येवमादि। तत्रेदमुक्तम्—कर्मादयोऽप्यरे विभक्तीनां वाच्याः, अतस्तदीये बहुत्वे बहुवचनम् भवतीति। एवञ्च ब्रुवता वृत्तिकृता कर्माद्याश्रितायां संख्यायां द्वितीयादयो विभक्तयो भवन्तीत्येतदुक्तं भवति। न च तत्र कश्चिद् विशेष उपात्तः। सन्ति च कर्मादयोऽभिहिताः, अनभिहिताश्च। तत्र विशेषानुपादानाद्, यथा अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो विभक्तयो भवन्ति, तथाऽभिहितकर्माद्याश्रयेष्वपि स्युः। अतोऽनभिहिता ये कर्मादयस्तदाश्रयेष्वेकत्वादिषु यथा विभक्तयो स्युरन्यत्र मा भूवन्नित्यनभिहित इत्येतद्

पदमञ्जरी

यथा भीष्मादिशब्दप्रयोगो भवति तथा तदाकारविशिष्टस्य कर्मत्वाभिधानाय द्वितीया भविष्यति। क्तप्रत्ययस्तु प्रकृत्यर्थस्य न कर्मतामाचष्टे, किन्तु प्रकृत्यर्थं प्रति यस्य कर्मभावः तमिति युक्तं यदनवयवेन सर्वकर्माभिधत्ते। ननु च कर्मादयो विभक्त्यर्थास्तेषां च तिङादिभिरभिहितवचनमनर्थकम्, अन्यत्रापि विहितस्याभावादभिहिते, यत्राप्यनभिहिताधिकारो न क्रियते तत्रापि शब्दान्तरप्रतिपादितेऽर्थे नैव विहितं भवति, तद् यथा—बहुपटुरिति बहुचोक्तत्वादीषदसमाप्तेः सत्यपि सम्भवे कल्पबादयो न भवन्ति, द्विर्दश द्विदशाः—समासेनोक्तत्वात्सुजर्थस्य सुज्न भवति, पटुगुप्तौ—द्वन्द्वेनोक्तत्वाच्चार्थस्य च-शब्दो न प्रयुज्यते; तद्वदत्रापि तिङादिभिरभिहितत्वादेव द्वितीयादयो न भविष्यन्ति।

नन्वभिहितार्थस्यापि प्रयोगो दृष्टः—अपूपौ द्वाविति, सत्यम्; अयं तु न्यायः यदुताभिहिते विहितं न स्यात्, न हि व्यसनितया शब्दः प्रयुज्यते, अपि त्वर्थाभिधानाय, स चेदर्थः शब्दान्तरेणाभिहितः किमिति शब्दान्तरं प्रयुज्यते, अक्षिनिकोचादिभिरप्यवगतेऽर्थे शब्दो नैव प्रयुज्यते, किं पुनः शब्देनैवाभिहिते। अपूपौ द्वावित्यादौ तु द्वावानय, कौ द्वौ ताविति सामान्योपक्रमे वाक्यमिति यथाकथञ्चिदुपपादनीयम्, तस्मान्नार्थं एतेनेत्याशङ्क्य संख्यापि विभक्त्यर्थ इति दर्शयन्नाह—बहुषु बहुवचनमित्येवमादिनेति।

अयमर्थः—'त्रिकः प्रातिपदिकार्थः' इत्यस्मिन्दर्शने कर्मादिवदेकत्वादिसंख्या विभक्त्यर्थः, तत्र कर्मादीनां युगपद्विभक्तिभिरभिधीयमानानां परस्परं विशेषणविशेष्यभावमनापन्नानां केवलप्रातिपदिकार्थगतानामभिधानं वृक्ष एको वृक्षः कर्म पशुरेकः पशुः करणमिति वाभिधानम्, पश्चाच्चैकक्रियान्वयबलेन परस्परसम्बन्ध इति प्राभाकरा मन्यन्ते।

भाट्टास्तु परम्परासम्बद्धस्य स्वतन्त्रस्यानेकार्थस्याक्षाः, पादाः, माषा इत्यादावभिधानदर्शनेऽप्येकशेषमन्तरेणादर्शनात् यजेतेत्यादौ च कृतिकार्ययोर्युगपल्लिङाभिधीयमानयोरपि विशेषणविशेष्यभावस्य प्राभाकरैरप्यभ्युपगमात्तद्वदेव विशिष्टाभिधानं मन्यन्ते।

भावबोधिनी

'बहुषु बहुवचनम्' ( पा० सू० १।४।२१ ) इस प्रकार के सूत्रों से विभक्तियों के वाच्य अर्थ के रूप में संख्या का निर्देश किया गया है, उसमें विशेषणार्थ यह सूत्र आरम्भ किया जा रहा है--जिनके कर्म आदि आश्रयों का अभिधान नहीं किया गया है उन एकत्वादि अर्थों में द्वितीया आदि विभक्तियाँ होती हैं।

विमर्श---विभक्ति का क्या अर्थ है---इस विषय में दो पक्ष हैं--(१) संख्या, (२) कारक---विभक्ति का अर्थ है। संख्या अर्थ है—इस पक्ष में प्रस्तुत सूत्र की आवश्यकता है क्योंकि सूत्र रहने पर---अनभिहित कर्म में जो एकत्व उसमें द्वितीया होती है---यह 'कर्मणि द्वितीया' (पा० सू० २।३।२) आदि सूत्रों का अर्थ होता है। इसके अनुसार 'कृतः कटः' आदि में क्त प्रत्यय से कर्ममात्र के उक्त रहने पर भी एकत्व संख्या के उक्त न होने से द्वितीया-वारण कठिन है। अतः इसी पक्ष को मानकर प्रस्तुत सूत्र की उपयोगिता काशिकाकार ने भी प्रदर्शित की है।

मिदमारभ्यते—अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या ( म० भा० ) इति।

न्यासः

विशेषणमारभ्यते। **अनभिहितकर्माद्याश्रयेष्विति**। अनभिहिताः कर्मादय आश्रया येषामिति बहुव्रीहिः। एतेन 'बहुषु बहुवचनम्' इत्यादेः शास्त्रस्य, अनभिहित इत्येतस्य च 'कर्मणि द्वितीया' इत्येवमादिभिः सहैकवाक्यतां दर्शयति – अनभिहिते कर्मणि द्वितीया बहुषु बहुवचनमिति। एवमन्यत्राप्येकवाक्यता वेदितव्या। एकवाक्यता च गुणप्रधानभावमन्तरेण न सम्भवतीत्येकस्य गुणभावेन भवितव्यम्, अपरस्य प्रधानभावेन। तत्र विशेषणत्वादनभिहित इत्यस्य कर्माद्यपेक्षया गुणभावः, कर्मादीनां तु विशेष्यत्वात् प्राधान्यम्, एकत्वाद्यपेक्षया कर्मादीनान्तु विशेषणत्वादप्राधान्यम्। एकत्वादीनां विशेष्यत्वात् प्रधानभावः। अथ कथं कटशब्दादुत्पद्यमाना द्वितीया भीष्मादिपदानुगतं कर्माभिदधाति, यथा—निष्ठेति चेत्? स्यादेतत्—'यथा कटः कृतो भीष्म उदारः शोभनो दर्शनीय इत्यत्र करोतेः कर्मण्युत्पद्यमाना निष्ठा सर्वं भीष्मादिकमपि कर्माभिदधाति, तथा कटशब्दादुत्पद्यमाना द्वितीया' इति, वार्त्तमेतत्; कृत इति क्रियाकारकसम्बन्धनिमित्तमभिधानम्। क्रिया चोत्पद्यमाना सामर्थ्यात् सर्वाणि कारकद्रव्याण्याक्षिपति। ततः कृञ उत्पद्यमानः क्तः साधारणतया यावत् करोतेरुपयाति कर्मतां तावत् सर्वमेवाभिदधातीति युक्तम्। भीष्मादिगताया अपि कर्मतायाः क्तप्रत्ययेनाभिधानम्। कटस्तु विशिष्टद्रव्यवचनः, तत उत्पद्यमाना द्वितीया तद्गतमेव कर्म शक्नोत्यभिधातुम्, नान्यगतं किञ्चित्, तत् कथं तया भीष्मादिगतमपि कर्माभिधीयते? तथा च निरर्थकं परिगणनम्। तस्मात् तिङ्कृत्तद्धितसमासैरेवाभिधानं सम्भवतीति सम्भवदुदाहरणप्रदर्शनपरमेतत् परिसंख्यानं वेदितव्यम्, न परिगणनम्॥ १॥

पदमञ्जरी

अस्माकमप्ययमेव पक्षः। तत्र कर्मादयो विशेषणम्, एकत्वादयो विशेष्याः, कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति। विपर्ययो वा—एकत्वादिविशिष्टं यत्कर्म तत्र द्वितीयेति। तत्र यद्यपि कर्मादिप्राधान्यपक्षे तिङादिभिः प्रधानभूतानां कर्मादीनामभिहितत्वादप्रसङ्गः, द्वितीयादीनां संख्याप्राधान्यपक्षे कर्मादिष्वभिहितेष्वपि प्रधानभूतसंख्याभिधानाय द्वितीयादयः स्युरेव। **प्राभाकरे** तु पक्षे कर्माद्यंशाभिधानेऽपि संख्यांशस्यानभिहितस्याभिधानाय द्वितीयादयः स्युरिति। **अनभिहितकर्माद्याश्रयेष्विति**। अनभिहितानि कर्मादीन्याश्रयो येषां तेष्वित्यर्थः। एतेन कर्मणीत्यादिसप्तमीनिर्देश एकत्वादीनामाधारतया, न पुनरभिधेयतयेति दर्शितम्। **अनभिहित**

भावबोधिनी

'कारक विभक्त्यर्थ है'—इस पक्ष में तो 'कृतः कटः' आदि में 'क्त' प्रत्यय से ही कर्मकारक का अभिधान हो जाता है 'उक्तार्थानामप्रयोगः' इसी न्याय से द्वितीयादिवारण सम्भव है। इस अनभिहिताधिकार की आवश्यकता नहीं है। इसीलिये भाष्य में लिखा है—

'स कथं कर्तव्यः? यद्येकत्वादयो विभक्त्यर्थाः।
अथ हि कर्मादयो विभक्त्यर्थाः, नार्थोऽनभिहिताधिकारेण॥' (म० भा० २।३।१)'

सिद्धान्तकौमुदी में भट्टोजिदीक्षित ने प्रस्तुत सूत्र पर यह लिखा है "अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः।" ……क्वचिन्निपातेनाभिधानम्—"विषवृक्षोऽपि सम्वर्ध्य स्वयं छेत्तुमसाम्प्रतम्।"

परन्तु नागेशभट्ट ने दीक्षित के उपर्युक्त कथन का खण्डन शब्देन्दुशेखर में किया है। नागेश का तात्पर्य यह है कि 'छेत्तुम्' यह तुमुन्नन्त प्रयोग तभी सम्भव होगा जब कोई दूसरा तिङन्त क्रियापद अध्याहृत किया जाय। अतः 'विषवृक्षः अपि सम्वर्ध्य स्वयं छेत्तुं यत् इष्यते तत् असम्प्रातम्' ऐसा अन्वय करना चाहिये। अतः 'प्रायेण' के फल के रूप में निपात द्वारा अभिधान मानना अनावश्यक है प्रस्तुत विषय की सूक्ष्म विवेचना पदमञ्जरी में देखें॥ १॥

**४६३. कर्मणि द्वितीया ॥ २ ॥ ( ५३७ )**

**द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः। कर्मणि कारके या संख्या तत्र**

न्यासः

**कर्मणि द्वितीया** ॥ द्वितीया तिङ्विभक्तिरप्यस्तीति तस्या अप्यत्र ग्रहणमिति कस्यचिदाशङ्का स्यात्, अतस्तान्निराकर्तुमाह—**द्वितीयादयः शब्दा इत्यादि**। कर्मशब्देनेह साधनं कर्म गृह्यते, न तु क्रियाकर्म। **तथा**

पदमञ्जरी

**इति**। यदि प्रसज्यप्रतिषेधः स्यात्ततो द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहितेऽपि विभक्त्यभावप्रसङ्गः, प्रासाद आस्ते इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्चान्यतरेण सदिप्रत्ययेन घञाभिहितम्—प्रसीदन्त्यस्मिन्प्रासाद इति, तत्राभिहिते न भवतीत्युच्यमाने सप्तमी न स्यात्। पर्युदासे त्वासिप्रत्ययेन यदनभिधानं तदाश्रया सप्तमी सिद्धयति। ननु च प्रासादाख्यस्य द्रव्यस्य कारकत्वादभिहितत्वादन्यत्वं नास्ति? नैष दोषः; शक्तिः कारकम् तत्र सदिक्रियाशक्त्यभिधानेऽप्यासिक्रियाशक्तेरनभिधानम्। नन्वेवं प्रसज्यप्रतिषेधेऽपि या शक्तिरभिहिता तत्र मा भूद्विभक्तिः, या त्वनभिहिता तत्र भविष्यति? उच्यते—अनभिहिते कर्मणीत्येकत्वादीनामाधारनिर्देशः संख्या च द्रव्यधर्मः, अतोऽनभिहिते कर्मणीत्यादिभिरपि शक्तिद्वारेण द्रव्यमेवोच्यते—अनभिहिता या कर्मादिशक्तिस्तदाधारभूतं यद् द्रव्यं तस्यैकत्वादिषु विभक्तय इति। एवं च यदि प्रसज्यप्रतिषेधः स्यात्ततोऽभिहितशक्तिद्वारेण द्रव्यस्याभिहितत्वात्प्रतिषेधः स्यात्; पर्युदासे तु अनभिहितशक्तिद्वारे विधिरिति स्पष्ट एव फलभेदः। यत्र तर्हि शक्तिभेदो नास्ति तत्र कथम्—आसने आस्ते, शयने शेत इति? अत्राप्यासनशयनादिशब्दैरासनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिकमभिहितमिति तस्य शक्त्युद्भवप्रतिपादनाय विभक्तिर्भविष्यति।

यदि तर्हि पर्युदासोऽयमिति निर्णीयते, इह पक्त्वा भुज्यत ओदन इति भुजिप्रत्ययेनाप्यभिहित ओदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीया प्राप्नोति, भावे हि क्त्वाप्रत्ययः; प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनाभिधानमाश्रित्य प्रतिषेधः सिद्धयति? उच्यते; नात्रौदनस्य युगपदुभाभ्यां शाब्द एवान्वयः, किं तर्हि? भुजिनैव, सन्निधानात्तु पचिनान्वयः। केवलशब्दव्यापारनिरूपणे तु किमिष्टकाः पक्त्वौदनो भुज्यते, उतौदनमेवेति न ज्ञायते, अतः शब्दव्यापारापेक्षयाभिधानमेवेति द्वितीया न भविष्यति। अनभिहितवचनमनर्थकम्; प्रथमाविधानस्यानवकाशत्वात्। कृतः कट इत्यादिषु द्वितीयादयो मा भूवन्निति सूत्रारम्भः। यदि चात्रापि स्युः, क्वेदानीं प्रथमा स्यात्। नन्वनवकाशत्वात्प्रथमा भवन्ती कृतः कट इत्यादावेव भवतीति न पुनः कटं करोतीत्यादावपीति कुतोऽयं नियमः? उच्यते—कृतः कट इत्यादौ यद्यपि कृतशब्दसन्निधाने कटस्य कर्मता प्रतीयते, तथापि तत्र वाक्यार्थत्वादव्यतिरिक्त एव प्रातिपदिकार्थ इति प्रथमा भविष्यति, यथा—वीरः पुरुष इति। कटं करोतीत्यत्र तु कटशब्देनैव कर्मशक्तिमानर्थोऽभिधीयत इति व्यतिरिक्तत्वात्प्रातिपदिकार्थस्य प्रथमा न भविष्यति। नन्वकारकेषु सावकाशा प्रथमा, यथा—वृक्ष इति? तन्न; अत्राप्यस्तीति प्रतीतेः कर्तृत्वात्तृतीयाप्रसङ्गः। तत्र ह्यन्यत्क्रियापदं न श्रूयते तत्रान्तरङ्गत्वादस्तीति गम्यते, लब्धसत्ताकस्य हि विशेषणान्तरयोगो भविष्यति। अथापि यत्र विशेषणान्तरनिवृत्तौ तात्पर्यम्, न क्रियासम्बन्धे, यथा—नीलमुत्पलं न रक्तम्, राज्ञोऽयं पुरुषो न देवदत्तस्येति, न ह्यत्र नीलमुत्पलमस्ति, राज्ञः पुरुषोऽस्तीति प्रतीतिः, अतोऽस्त्येवाकारकमवकाश इत्युच्येत? एवमपि विप्रतिषेधात्प्रथमा भविष्यति। द्वितीयादीनामवकाशो यत्र प्रातिपदिकार्थस्य व्यतिरेकः—कटं करोतीति; प्रथमायास्त्वकारकमवकाशः—नीलमुत्पलमिति; कृतः कट इत्यत्रोभयप्रसंगे परत्वात्प्रथमैव भविष्यति। ननु तामपि बाधित्वा परत्वात् षष्ठी प्राप्नोति, शेषलक्षणा षष्ठी प्रातिपदिकार्थमात्रस्य प्रथमाविधावुपयोगादशेषत्वान्न भविष्यति। इह तर्हि कर्त्तव्यः कट इति कृत्प्रयोगे प्रथमां बाधित्वा 'कर्तृकर्मणोः कृति' इति षष्ठी स्यात्, तत्प्रतिषेधार्थमनभिहिताधिकारः कर्तव्यः। तदेवं संख्याविभक्त्यर्थ इत्यस्मिन्पक्षे कर्तव्यं सूत्रमिति स्थितम् ॥ १ ॥

**कर्मणि द्वितीया** ॥ **द्वितीयादयः शब्दा इति**। स्वनिकायप्रसिद्धिरेषेत्यर्थः।

भावबोधिनी

सुप् प्रत्ययों के तीन तीन प्रत्ययों के समुदाय के लिये प्राचीन आचार्यों ने द्वितीया, तृतीया आदि शब्दों का प्रयोग

**द्वितीया विभक्तिर्भवति । कटं करोति । ग्रामं गच्छति ।**

**ॐ उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॐ ॥ ( म० भा० २.३.२ )**

**उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्देवदत्तम् । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो ग्रामम् ॥**
**ॐ अभितः-परितः-समया-निकषा-हा-प्रतियोगेषु च दृश्यते ॐ ( म० भा० २.३.२ वा० १ ) । अभितो**

**न्यासः**

हि—ये विभक्त्यर्था एकत्वादयस्तेषां विशेषणत्वेनैव कर्मादयोऽनुक्रंस्यन्ते । न च क्रियाकर्मणि द्वित्वबहुत्वे स्तः; साधनकर्मणि तु विद्येते, तस्मात् तस्यैव ग्रहणं युक्तम्, नेतरस्य ।

**उभसर्वतसोरित्यादि** । उभसर्वशब्दयोस्तसिप्रत्ययान्तयोः प्रयोगे द्वितीयाविभक्तिः कार्या । शेषलक्षणायां षष्ठ्यां प्राप्तायामयमारम्भः । उभसर्वतसोरित्यत्र यद्यप्युभशब्दः पठितस्तथापि सामर्थ्यादुभयशब्दो गृह्यते; साधर्म्यात् । न ह्युभशब्दस्तसिप्रत्ययान्तोऽस्ति; तस्य नित्यद्विवचनटाब्विषयत्वात् । तथा चोक्तम्—'अन्याभावो नित्यद्विवचनटाब्विषयत्वादुभयोऽन्यत्र' इति । **उभयतः सर्वत इति** 'पञ्चम्यास्तसिल्'। धिक्शब्दयोगेऽपि द्वितीया कार्या । तथोपर्यादिषु त्रिषु योगे द्वितीया कार्या । **आम्रेडितान्तेष्विति** । कृतद्विर्वचनेष्वित्यर्थः । **उपर्युपरि ग्राममित्यादौ** 'उपर्यध्यधसः सामीप्ये' इति द्विर्वचनम् । **ततोऽन्यत्रापि दृश्यत इति** । यथोक्तादन्यत्रापि दृश्यते द्वितीयेति सम्बन्धः ।

क्व चान्यत्र दृश्यत इत्यत आह **अभित इत्यादि** । 'पर्यभिभ्याञ्च' इति तसिः । अपिशब्दो विकल्पार्थः ।

**पदमञ्जरी**

**उभसर्वतसोरिति** । उभयसर्वशब्दयोस्तसिलन्तयोः प्रयोग इत्यर्थः । उभयशब्दैकदेश उभशब्दोऽनुकृतः, उभशब्दस्य तसिलन्तस्याभावात्, तस्य द्विवचनटाब्विषयत्वात् । धिगित्यविभक्तिको निर्देशः । **आम्रेडितान्तेष्विति** । कृतद्विर्वचनेष्वित्यर्थः । **उभयतः सर्वत इति** । पञ्चम्यास्तसिल् । **धिगिति** । निन्दार्थोऽयम् । **उपर्युपरीति** । 'उपर्यध्यधसस्सामीप्ये' इति द्विर्वचनम् । ततोऽन्यत्रापीत्युक्तम्, तानेवान्यान्परिगणयति—**अभित इत्यादि** ।

**भावबोधिनी**

किया है, अर्थात् सु, औ, जस्—यह प्रथमा है, अम्, औट्, शस्—यह द्वितीया है आदि इन्हीं प्राचीनों के व्यवहार से इस पाणिनीय व्याकरण में भी व्यवहार होता है । कर्म कारक में जो संख्या अर्थ है उसमें द्वितीया विभक्ति होती है । उदा०—कटं करोति [ चटाई बनाता है । ] ग्रामं गच्छति [ गाँव जाता है । इनमें 'कर्तुरीप्सिततमं कर्म' ( पा० सू० १।४।४९ ) सूत्र से 'कट' और 'ग्राम' की कर्मसंज्ञा होती है । तिङादि के द्वारा कर्म अभिहित नहीं है, संख्या भी अभिहित नहीं है; अतः प्रस्तुत सूत्र से कर्मवाचक शब्दों से द्वितीया विभक्ति होती है । ]

* तस् प्रत्ययान्त उभ और सर्व शब्दों के अर्थात् 'उभयतः' और 'सर्वतः' के योग में द्वितीया करनी चाहिये । 'धिक्' के योग में भी द्वितीया करनी चाहिये । आम्रेडितान्त, अर्थात् द्वित्व कर दिये गये 'उपरि उपरि', 'अधि-अधि' तथा 'अधोऽधः' इनके योग में द्वितीया करनी चाहिये । इनसे अतिरिक्त के योग में भी द्वितीया देखी जाती है । *

उदा०—(१) उभयतः ग्रामम् [ गाँव के दोनों ओर । 'उभ' शब्द न लेकर 'उभय' लेना चाहिये क्योंकि इसी से तसिल् प्रत्यय होता है । ] (२) सर्वतः ग्रामम् [ गाँव के सभी ओर ] (३) धिक् देवदत्तम् [ देवदत्त को धिक्कार है । ] (४) उपर्युपरि ग्रामम्—[ गाँव के ऊपर ऊपर ] (५) अध्यधि ग्रामम् [ गाँव गाँव में ] (६) अधोऽधो ग्रामम् [ गाँव के नीचे नीचे । इन सभी में उक्त पदविशेष का योग मानकर द्वितीया हुई है । अतः उपपद-द्वितीया समझनी चाहिये । ]

[ उक्त से भिन्न के योग में भी द्वितीया होती है—इस पर लिखते है—] * अभितः, परितः, समया, निकषा, हा तथा प्रति—इन शब्दों के योग में द्वितीया देखी जाती है । * क्रमशः उदा०—अभितः ग्रामम् [ गाँव के दोनों ओर ],

ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । बुभुक्षितं न प्रतिभाति किञ्चित् ( म० भा० ) ॥

**५६४. तृतीया च होश्छन्दसि ॥ ३ ॥ ( ३३९४ )**

**'कर्मणि' इति वर्त्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते, च शब्दात्सा च भवति । छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च । 'यवाग्वाऽग्निहोत्रं जुहोति' 'यवागूमग्निहोत्रं जुहोति ( शां० श्रौ० सू० ३.१२.१६ ) ।**

**छन्दसीति किम् ? यवागूमग्निहोत्रं जुहोति ।**

न्यासः

अपि दृश्यतेऽपि न दृश्यते च । तेन हा तात हा मातरित्यादि सिध्यति ॥ २ ॥

**तृतीया च होश्छन्दसि ॥ यवाग्वाऽग्निहोत्रं जुहोतीति** । यद्यप्यत्र 'सुपां सुपो भवन्ति' इति द्वितीयास्थाने तृतीयादेशविधानेऽप्येतत् सिध्यति; तथापि पयसा जुहोति, आज्येन जुहोतीत्येवमादि न सिध्यति । तथा हि--स्थानिवद्भावात् 'स्वमोर्नपुंसकात्' इत्येकस्य लुक् प्राप्नोति । अपरस्य 'अतोऽम्' इत्यम्भावः ॥ ३ ॥

पदमञ्जरी

**अभितो ग्राममिति** । उभयत इत्यर्थः । **परित इति** । सर्वत इत्यर्थः । 'पर्यभिभ्यां च' इति तसिल् । आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोऽभितःशब्दोऽस्ति, सोऽपि गृह्यते । समयानिकषाशब्दौ समीपवचनौ गृह्येते । हाशब्दः शोकादिवृत्तिः । हा कन्ये इत्यादौ कारकविभक्तित्वादन्तरङ्गत्वात्सम्बोधनविभक्तिर्भवति । **बुभुक्षितं न प्रतिभातीति** । प्रतिरत्र क्रियाविशेषकत्वादुपसर्गो न कर्मप्रवचनीय इति पठ्यते ॥ २ ॥

**तृतीया च होश्छन्दसि ॥ यवाग्वाग्निहोत्रमिति** । क्व पुनरग्निहोत्रशब्दो वर्तते ? हविषि; तेष्वग्निहोत्रमधिश्रयेत्, अग्निहोत्रं शरशरायत्, तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिषु दर्शनात् । जुहोतिरपि प्रक्षेपे । एकस्मिन्नेव प्रयोगे यवागूशब्दात् तृतीया, अग्निहोत्रशब्दाद् द्वितीया; यवाग्वाख्यं हविर्देवतोद्देशेन प्रक्षिपतीत्यर्थः ।

अयं योगः शक्योऽवक्तुम्, कथम् ? अग्निहोत्रशब्दो ज्योतिष्यपि वर्त्तते—अग्निहोत्रं प्रज्वलितमिति । जुहोतिरपि प्रीणने । तद्यदा यवागूशब्दात् तृतीया तदा यवाग्वाग्निहोत्रं प्रीणयतीत्यर्थः, यदा तु द्वितीया तदा यवाग्वाग्निहोत्रं प्रीणयतीत्यर्थः, यदा तु द्वितीया तदा यवाग्वाख्यं द्रव्यमग्निहोत्रं हविरग्नौ प्रक्षिपतीत्यर्थः ।

**मीमांसकास्त्वाहुः** अग्निहोत्रशब्दः कर्मनामधेयमिति, दृश्यते च–स एष यज्ञ पञ्चविधोऽग्निहोत्रं दर्शपूर्ण-

भावबोधिनी

परितः ग्रामम् [ गाँव के चारों ओर ] । समया ग्रामम् [ गाँव के समीप ]. निकषा ग्रामम् [ गाँव के समीप ], हा देवदत्तम् [ देवदत्त के लिये दुःख है । ] बुभुक्षितं न प्रतिभाति किञ्चित् [ भूखे को कुछ भी अच्छा नहीं लगता है । ]

**विमर्श**—हा कन्ये ! आदि में अन्तरंग होने से सम्बोधन विभक्ति होती है । यह पदमंजरीकार का मत है । न्यासकार 'अन्यत्रापि दृश्यते' में 'अपि' को विकल्पार्थक मानते हैं और इसी आधार पर कहीं द्वितीया होना और कहीं न होना सम्भव है । इसीलिये 'हा तात ! हा मातः' आदि सम्भव होते हैं ॥ २ ॥

'कर्मणि' इसकी अनुवृत्ति होती है । द्वितीया की प्राप्ति रहने पर तृतीया का विधान किया जाता है 'च' शब्द के बल से वह द्वितीया भी होती है । वेदविषय में जुहोति धात्वर्थ के कर्म कारक में तृतीया विभक्ति होती है और द्वितीया भी होती है । उदा०—यवाग्वा अग्निहोत्रं जुहोति । [ यवागू रूप हविः को अग्नि में छोड़ता है । तृतीया होती है । 'च' के बल से द्वितीया भी होती है—] यवागूम् अग्निहोत्रं जुहोति ।

वेदविषय में—इसका क्या फल है ? यवागूम् अग्निहोत्रं जुहोति । [ इस लौकिक प्रयोग में केवल द्वितीया ही होती है । ]

**४६९. अन्तराऽन्तरेण युक्ते ॥ ४ ॥ ( ५४९ )**

**द्वितीया स्वर्यते, न तृतीया। अन्तराऽन्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते। आभ्यां योगे द्वितीया विभक्तिर्भवति। षष्ठ्यपवादोऽयं योगः। तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे। अन्तरेणशब्दस्तु तच्च विनार्थं च। अन्तरा त्वां च मां च कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः ( म० भा० )। अन्तरेण**

**न्यासः**

**अन्तरान्तरेण युक्ते ॥ अन्तराऽन्तरेणशब्दौ** निपातौ साहचर्याद् गृह्येते इति। अयमन्तराशब्दो यद्यपि स्त्रीप्रत्ययान्तोऽस्ति, तथाऽस्त्रीप्रत्ययान्तोऽपि; अन्तरेणशब्दस्त्वस्त्रीप्रत्ययान्तो गृह्यते। यश्चास्त्रीप्रत्ययान्तोऽन्तराशब्दः स निपात एवेत्यन्तराशब्दस्य तावन् निपातस्य ग्रहणम्। अतस्तेन निपातेन साहचर्यादन्तरेण शब्दस्यापि तस्यैव ग्रहणम्। तेनानिपातो यस्तृतीयान्तोऽन्तरेणशब्दः, यश्च टाबन्तोऽन्तराशब्दस्ताभ्यां योगे द्वितीया न भवति। किं ते बाभ्रवाणां शालङ्कायनानाञ्चान्तरेण गतेन? ग्रामयोरन्तरायां पुरि वसतीत्यन्तरशब्दोऽत्र विशेषवचनः। गमिरपि ज्ञानवचनः। किं ते विशेषेण ज्ञानेनेत्यर्थः। **षष्ठ्यपवादोऽयं योग इति।** शेषलक्षणायां षष्ठ्यां प्राप्तायामस्यारम्भात्। षष्ठ्यपवादत्वमस्य योगस्यान्तरान्तरेणशब्दार्थप्रदर्शनद्वारेण विस्पष्टीकर्त्तुमाह--**तत्रे**त्यादि। मध्यं हि सम्बन्धिशब्दत्वादमध्यभूतं द्वितीयं सम्बन्धिनमपेक्ष्य भवति। तत्र यदपेक्षं मध्यत्वं ततो मध्येन व्यतिरेके समुपजनिते षष्ठी प्राप्नोति। विनार्थोऽपि शेष एव। अत्रापि षष्ठ्येव प्राप्नोति। विनार्थोऽपि शेष एव। अत्रापि षष्ठ्येव प्राप्नोति। **अन्तरा त्वाञ्च माञ्च कमण्डलुरिति।** तव

**पदमञ्जरी**

मासावित्यादि। तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि च, एतद्वा अग्निहोत्रमन्ये्युह्वर्यते अजरामर्यं वा एतद्यदग्निहोत्रमिति च त इत्याहुः। करणत्वात् तृतीयायां प्राप्तायां पक्षे द्वितीयार्थं वचनम्। इदं च सूत्रानुगुणं न भवति, कर्मणेति हि वर्त्तते ॥ ३ ॥

**अन्तरान्तरेण युक्ते ॥ अन्तरान्तरेणशब्दावित्यादि।** ननु यथा नौर्नावि बद्धा नेतरेतरत्राणाय भवति तादृगेतत्, द्वयोरपि निपातत्वव्यभिचारात्, सत्यम्; साहचर्यात्साजात्यं लक्ष्यते, सजातीयविजातीयभावे सजातीयप्रत्ययो भवति, तद्यथा—गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्भवति, न त्वाचार्यपरशुरामयोः। यद्वा—अन्तराशब्देनातृतीयान्तेन साहचर्यादन्तरेणेत्यस्याप्यतृतीयान्तस्य ग्रहणम्, स च निपात एव। तथान्तरेण शब्देनाटाबन्तेन साहचर्यादन्तराशब्दस्याप्यटाबन्तस्यैव ग्रहणम्, स च निपात एव। **षष्ठ्यपवादो योग इति।** असत्यस्मिन्योगे शेषत्वात् षष्ठी प्राप्नोति। सति त्वस्मिन्नुपयुक्तत्वात् षष्ठी न भवतीत्यपवादत्वमेतत्। **मध्यमाधेयेति।** आधेयपरतन्त्रमित्यर्थः। सप्तम्यन्तस्य मध्यशब्दस्यार्थे वर्त्तत इति यावत्। **अन्तरा त्वां च मां च कमण्डलु-**

**भावबोधिनी**

**विमर्श**—अग्निहोत्र शब्द का अर्थ हविः है। जुहोति का अर्थ विधानपूर्वक अग्नि में छोड़ना है। तृतीया विभक्ति होने पर भी कर्म अर्थ ही रहता है। अतः यवागू रूप अग्निहोत्र = हवि को आग में छोड़ता है—यह अर्थ है। यदि मीमांसक-मतानुसार अग्निहोत्र को कर्मनामधेय मान लें तब तो करण होने से तृतीया प्राप्त है उसमें वैकल्पिक द्वितीया के लिये यह सूत्र है। परन्तु यह कथन सूत्रानुकूल नहीं है ॥ ३ ॥

'द्वितीया' इसकी अनुवृत्ति होती है, 'तृतीया' की अनुवृत्ति नहीं होती है। परस्पर साहचर्य के कारण 'अन्तरा' तथा 'अन्तरेण' इन दोनों निपात शब्दों का ही ग्रहण होता है। इनके योग में द्वितीया होती है। यह सूत्र षष्ठी विभक्ति का अपवाद है। इनमें 'अन्तरा' शब्द आधेयप्रधान मध्य अर्थ को कहता है अर्थात् 'मध्ये' इस अर्थ का वाचक है। 'अन्तरेण' शब्द इस [ मध्ये ] अर्थ को और 'बिना' अर्थ को कहता है। [ दो अर्थों का वाचक है। ] उदा०—अन्तरा त्वां च मां च कमण्डलुः [तुम्हारे और मेरे बीच में कमण्डलु है। ] अन्तरेण त्वां च मां च कमण्डलुः [तेरे और मेरे मध्य में कमण्डलु है। यहाँ 'मध्य' के दोनों सम्बन्धी हैं अतः इन युष्मत् और अस्मत् शब्दों में षष्ठी एकवचन प्राप्त था। उसका अपवाद

पुरुषकारं न किञ्चिल्लभ्यते।

युक्तग्रहणं किम्? अन्तरा तक्षशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकारः॥

४६६. कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥ ( ५५८ )

**कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने। क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः संबन्धः = अत्यन्तसंयोगः। मासमधीते। संवत्सरमधीते। मासं कल्याणी। संवत्सरं कल्याणी।**

**न्यासः**

मम मध्ये कमण्डलुरित्यर्थः। अथ कमण्डलुशब्दाद् द्वितीया कस्मान्न भवति? सत्यप्यन्तरान्तरेणयोगे तस्य प्राधान्यात्। तथा हि—कमण्डलोः स्वार्था प्रवृत्तिः, युष्मदस्मदोस्तु परार्थाः, कमण्डलुविशेषणत्वेन तयोः प्रवृत्तत्वात्। तत्र कमण्डलोः स्वार्थे वर्त्तमानात् प्राधान्येनावस्थितत्वात् प्रातिपदिकार्थादप्रच्युतत्वात् परत्वात् प्रथमैव भवति। द्वितीयायास्त्वप्रधाने युस्मदस्मच्छब्देऽवकाश इति ताभ्यां तेनेव प्रथमान्तेन कमण्डलुनोपजनिते व्यतिरेके षष्ठ्यां प्राप्तायां द्वितोया विधीयते। **अन्तरेण पुरुषकारमिति**। विना पुरुषकारेणेत्यर्थः।

**अन्तरा तक्षशिलां पाटलिपुत्रञ्च स्रुघ्नस्य प्राकार** इति। अत्र स्रुघ्नः प्राकारविशेषणत्वेनोपक्षीणसामर्थ्य इति न भवति तस्यान्तराशब्देन योगः॥ ४॥

**कालाध्वनोरत्यन्तसंयोगे॥** कालाध्वनोरित्यर्थग्रहणम्। अत आह—**कालशब्देभ्योऽध्वशब्देभ्यश्चेत्यादि।**

**पदमञ्जरी**

**रिति**। तव च मम च मध्ये कमण्डलुरित्यर्थः। अत्र यथा मध्यस्यावध्यपेक्षायामवधिभूताभ्यां युष्मदस्मद्भ्यां योगः, तथाऽऽधारस्याधेयपरतन्त्रत्वादाधेयेन कमण्डलुनापि योगात्ततोऽपि द्वितीया प्राप्नोति, नैष दोषः, कमण्डलुरित्यत्र तिष्ठत्यस्तीति वा क्रियापदानुषङ्गात्कमण्डलुः कर्त्ता, स च तिङाभिहित इति प्रथमैव भविष्यति, कारकविभक्तित्वात्। तदेतत् 'सहयुक्तेऽप्रधाने' इत्यत्रोपपादयिष्यामः। निपातयोर्ग्रहणादिह न भवति—किं तेन तयोरन्तरेण ज्ञातेन! विशेषवचनोऽयम्—अन्तरायां पुरि वसतीति स्रुघ्नस्य प्राकार इति, नात्र स्रुघ्नस्यान्तराशब्दार्थेन योगः, किं तर्हि? प्राकारेण॥ ४॥

**कालाध्वनोरत्यन्तसंयोगे॥ मासमधीत** इति। ननु कर्मत्वादेवात्र द्वितीया सिद्धा, कथम्? 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्'। अवश्यं कर्मसंज्ञैवाश्रयणीया—आस्यते मासः, आसितव्यः आसित इति कर्मणि लकृत्यक्तखलर्था यथा स्युरिति, सत्यम्; इदमप्यवश्यं वक्तव्यम्—द्रव्यगुणाभ्यामत्यन्तसंयोगे द्वितीया

**भावबोधिनी**

यह द्वितीया होती है। बिना अर्थ का उदा० ] अन्तरेण पुरुषकारं न किञ्चित् लभ्यते। [ पुरुषार्थ किये बिना कुछ भी नहीं प्राप्त होता है। यहाँ भी षष्ठी का अपवाद द्वितीया होती है। ]

युक्ते [ = योगे ]—इसका ग्रहण किसलिये है? —अन्तरा तक्षशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकाराः [ तक्षशिला और पटना के मध्य में स्रुघ्न देश के प्राकार हैं। यहाँ 'अन्तरा' शब्द के अर्थ का योग 'स्रुघ्नस्य प्राकाराः' के साथ नहीं है। अतः उसमें सम्बन्ध में षष्ठी ही होती है। इसी प्रकार 'अन्तरा त्वां मां च कृष्णस्य मूर्तिः' यहाँ भी 'कृष्ण' में द्वितीया न होकर षष्ठी ही होती है। ]॥ ४॥

अत्यन्तसंयोग = अनवरत सम्बन्ध की प्रतीति रहने पर कालवाची शब्दों से और अध्वा = मार्गवाची शब्दों से द्वितीया विभक्ति होती है। (१) क्रिया, (२) गुण, (३) द्रव्य—इनमें से किसी के साथ पूर्णरूप से (क) काल और (ख) अध्वा का सम्बन्ध = अत्यन्त संयोग होता है। (क) काल के उदा०—(१) मासम् अधीते [ महीने भर पढ़ता है। ] सवत्सरम् अधीते [ वर्ष भर पढ़ता है। ये दोनों क्रिया के साथ काल के अत्यन्त संयोग के उदाहरण हैं। ] (२) मासं कल्याणी [ महीना भर कल्याण करने वाली ], संवत्सरं कल्याणी। [ वर्ष भर कल्याण करने वाली। यहाँ कल्याण =

मासं गुडधानाः। अध्वनः खल्वपि-क्रोशमधीते। योजनमधीते। क्रोशं कुटिला नदी ( म० भा० )। क्रोशं पर्वतः। योजनं पर्वतः।

अत्यन्तसंयोग इति किम् ? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः। योजनस्यैकदेशे पर्वतः॥

## ४६७. अपवर्गे तृतीया॥ ६॥ (५६३)

'कालाध्वनोरत्यन्तसंयोगे' इति वर्त्तते। अपवर्गः = फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः। अपवर्गे गम्यमाने

### न्यासः

मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः। योजनस्यैकदेशे पर्वत इति। नात्र 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया न भवति॥ ५॥

अपवर्गे तृतीया॥ अपवर्ग इति। अत्यन्तसंयोगस्य फलरूपमेतद् विशेषणमुपात्तम्। तच्च क्रियात्यन्तसंयोगस्यैव सम्भवति, नान्यस्येति सामर्थ्यादत्र क्रियात्यन्तसंयोग एव गृह्यते। सर्वस्याश्च क्रियायाः परि-

### पदमञ्जरी

यथा स्यादिति। तत्र क्रियात्यन्तसंयोगेऽपि परत्वादनेनैव युक्ता द्वितीया! मासस्येति। 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति षष्ठी॥ ५॥

अपवर्गे तृतीया॥ अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिरिति। तत्रैवापवर्गशब्दो लोके प्रसिद्ध इति

### भावबोधिनी

मंगल गुण का मास और संवत्सर के साथ अत्यन्त संयोग है।] (३) मासं गुडधानाः। [महीना भर गुड और धान = अनाज] संवत्सरं गुडधानाः। [वर्ष भर गुड़ और धान। यहाँ गुड़ धान रूपी द्रव्य का मास और संवत्सररूपी काल के साथ अत्यन्त संयोग है।] (ख) अध्ववाचक से भी द्वितीया के उदा०—(१) क्रोशम् अधीते [कोश भर पढ़ता है।] योजनम् अधीते। [योजन भर पढ़ता है। यहाँ अध्ययन क्रिया के साथ क्रोश और योजन का अनवरत सम्बन्ध होने से द्वितीया होती है।] (२) क्रोशं कुटिला नदी [कोशभर टेढ़ी नदी], योजनं कुटिला नदी। [योजन भर टेढ़ी नदी। यहाँ कुटिलत्व गुण के साथ क्रोश और योजन का अत्यन्त संयोग है।] (३) क्रोशं पर्वतः [कोश भर पहाड़।] योजनं पर्वतः [योजन भर पहाड़। इनमें पर्वत रूप द्रव्य का अध्ववाची क्रोश और योजन के साथ अत्यन्तसंयोग है। अतः द्वितीया होती है।]

अत्यन्तसंयोग रहने पर—इसका क्या फल है? मासस्य द्विः अधीते [महीने में दो बार पढ़ता है। यहाँ काल का क्रिया के साथ अत्यन्त संयोग नहीं है। अतः यह सूत्र लागू न होकर सम्बन्ध में षष्ठी होती है।] क्रोशस्य एकदेशे पर्वतः [कोश भर में एक स्थान पर पहाड़ है।] योजनस्य एकदेशे पर्वतः। [योजन भर में एक देश में पहाड़ है। यहाँ भी अत्यन्त संयोग नहीं है। अतः द्वितीया नहीं होती है, सम्बन्ध सामान्य में षष्ठी होती है।]

विमर्श—जब (१) किसी क्रिया (२) गुण या (३) द्रव्य के साथ साकल्येन = पूर्ण रूप से लगातार काल का या मार्ग का सम्बन्ध होता है तब उस कालवाची से और मार्गवाची से द्वितीया होती है। अन्तः = विच्छेदः, तम् अतिक्रान्तः—अत्यन्तः, स चासौ संयोगश्च—इस विग्रह में 'अत्यन्तसंयोगः' बना है। यहाँ संयोग कभी क्रिया के साथ, कभी गुण के साथ और कभी द्रव्य के साथ होता है। इस सूत्र से द्वितीया करने में अत्यन्त = अनवरत संयोग अनिवार्य है। अतः उक्त उदाहरणों में अध्ययन क्रिया के साथ जब काल = मास का लगातार सम्बन्ध प्रतीत होता है तभी द्वितीया होती है—मासम् अधीते। मास = तीस दिन। इनमें प्रत्येक दिन पढ़ने पर ही अत्यन्त संयोग होता है और तभी द्वितीया होती है। ऐसा ही अत्यन्त संयोग गुण और द्रव्य के साथ भी देखना चाहिये। इसीलिये प्रत्युदाहरण—मासस्य द्विः अधीते—में द्वितीया नहीं होती है। क्योंकि मास = ३० दिन हैं। केवल दो बार अध्ययन क्रिया होती है। अतः यहाँ द्वितीया न होकर सम्बन्ध में षष्ठी ही होती है॥ ५॥

'कालाध्वनोः अत्यन्तसंयोगे' इनकी अनुवृत्ति होती है। अपवर्ग = फल की प्राप्ति होने पर क्रिया की परिसमाप्ति

कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति। मासेनानुवाकोऽधीतः। संवत्सरेणानुवाकोऽधीतः। अध्वनः—क्रोशेनानुवाकोऽधीतः। योजनेनानुवाकोऽधीतः।

**अपवर्ग इति किम्? क्रोशमधीतोऽनुवाकः। मासमधीतः। कर्तृव्यावृत्तौ फलसिद्धेरभावात् तृतीया न भवति। मासमधीतोऽनुवाको न चानेन गृहीतः ( म० भा० )।।**

**४६८. सप्तमीपञ्चम्यौ कारकमध्ये ।। ७ ।। ( ६४३ )**

**'कालाध्वनोः' इति वर्त्तते। कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः। अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता, द्व्यहाद्वा भोक्ता ( म० भा० )। त्र्यहे त्र्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्ये**

**न्यासः**

समाप्तिरस्ति; तस्माद् विशेषणोपादानसामर्थ्यात् फलप्राप्तौ सत्यां क्रियायाः परिसमाप्तिरिहापवर्गो विज्ञायत इत्यत आह—**फलप्राप्तावित्यादि**। **कर्तृव्यावृत्ताविति**। न हि मासमधीतोऽनुवाको न चानेन गृहीत इत्युक्तेऽपवर्गो गम्यते, किं तर्हि? कर्त्तुरशक्तिमात्रम्। न च तत्रापवर्गव्यपदेशः ।। ६ ।।

**सप्तमीपञ्चम्यौ कारकमध्ये ।। अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता, द्व्यहाद् भोक्तेति**। ननु चात्र देवदत्त एक एव कर्त्ता, कारकभेदे सति तन्निबन्धनो मध्यव्यपदेशो भवति, तत् कथमसति कारकभेदे कारकयोर्मध्ये कालो भवतीत्यत आह—**कर्तृशक्त्योरित्यादि**। न हि द्रव्यं कारकम्, किं तर्हि? शक्तिः, सा चेह भिद्यते।

**पदमञ्जरी**

भावः। **कर्तृव्यावृत्ताविति**। अशक्त्यादिना कर्त्तुरुपरमादित्यर्थः, तत्र मध्ये क्रिया विच्छिन्नेति प्रवृत्त्यपायः, न त्वपवृक्तेति ।। ६ ।।

**सप्तमीपञ्चम्यौ कारकमध्ये ।। कारकमध्य इति**। मध्यस्यावधिद्वयापेक्षत्वाद् द्विवचनान्तेन समासः, कालाध्वनोश्चैतद्विशेषणमित्याह—**कारकयोर्मध्ये यौ कालाध्वानाविति**। **अद्य भुक्त्वेत्यादि**। ननु चात्र देवदत्त एकः कर्त्ता तत्कथं कारकयोर्मध्ये काल इत्याह—**कर्तृशक्त्योरिति**। स्यादेवं यदि द्रव्यं कारकं स्यात्, शक्तिस्तु

**भावबोधिनी**

प्रतीत होने पर अत्यन्तसंयोग में काल और अध्ववाचक से तृतीया विभक्ति होती है। उदा०—मासेन अनुवाकः अधीतः। [ महीना भर में अनुवाक पढ़ लिया। ] संवत्सरेण अनुवाकः अधीतः। [ एक वर्ष में अनुवाक पढ़ लिया ] [ यहाँ अध्ययन का फल ज्ञानप्राप्ति, स्मृति आदि की प्रतीति होने से अपवर्ग है। कालवाचक से तृतीया होती है। ] मार्गवाचक से—क्रोशेन अनुवाकः अधीतः। [ एक कोश भर में अनुवाक पढ़ लिया। ] योजनेन अनुवाकः अधीतः। [ योजन भर में अनुवाक पढ़ लिया। ]

अपवर्ग = क्रियाफल की परिपूर्णता प्रतीत रहने पर—इसका क्या फल है? क्रोशमधीतः अनुवाकः। मासम् अधीतः [ एक कोश तक पढ़ा। एक महीना तक पढ़ा ] कर्तव्य की आवृत्ति होने पर फलसिद्धि न होने से तृतीया नहीं होती है। पूर्वसूत्र से द्वितीया होती है। ] उसने एक महीने तक अनुवाक पढ़ा, किन्तु याद न कर सका [ इस प्रकार फलप्राप्ति नहीं होती है। ]

**विमर्श**—'कालाध्वनोरत्यन्तसंयोगे' 'तथा अपवर्गे तृतीया' इन दोनों सूत्रों से क्रिया, गुण तथा द्रव्य के साथ काल या मार्ग का अत्यन्त = लगातार संयोग होने पर क्रमशः द्वितीया और तृतीया विभक्ति होती है। दोनों सूत्रों की प्रवृत्ति में भेद यह है कि प्रथम सूत्र सामान्यतया द्वितीया करता है। परन्तु प्रस्तुत सूत्र तभी तृतीया करता है जब क्रियाफल की प्राप्ति भी प्रतीत होती है। इस प्रकार दोनों सूत्रों के लक्ष्य अलग-अलग स्पष्ट हो जाते हैं।। ६ ।।

'कालाध्वनोः' इस अंश की अनुवृत्ति होती है। दो कारकों के मध्य में जो काल और अध्वा के वाचक हैं, उनसे सप्तमी और पञ्चमी ये दो विभक्तियाँ होती हैं। उदा०—अद्य भुक्त्वा देवदत्तः द्व्यहे भोक्ता। अद्य भुक्त्वा द्व्यहाद् वा भोक्ता [ आज खाकर देवदत्त दो दिन पर खायेगा। ] त्र्यहे त्र्यहाद् वा भोक्ता। [ आज खाकर तीन दिनों बाद खायेगा। दो कर्तृत्व शक्तियों के बीच में यह काल है। [ भाव यह है कि यहाँ देवदत्त एक ही कर्ता कारक है। दो कारक नहीं है,

कालः। इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विद्ध्यति। क्रोशाल्लक्ष्यं विद्ध्यति ( म० भा० )। **कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः।** संख्यातानुदेशो न भवति; अस्वरितत्वात्॥

**४६९. कर्मप्रवचनीययुक्ते द्वितीया॥ ८॥ ( ५४८ )**

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति। अनुर्लक्षणे ( १.४.८४ )। **शाकल्यस्य संहितामनु प्रावर्षत्। आगस्त्यमन्वसिञ्चत् प्रजाः॥**

न्यासः

तथा हि—देवदत्ते द्वे शक्ती व्यवस्थिते; एकाद्य भुजेः साधनम्, अपरा द्व्यहेऽतीत इति कर्तृशक्तिभेदे सति युक्तो मध्यव्यपदेशः। **कर्तृकर्मणोरित्यादि**। इष्वासः कर्त्ता, लक्ष्यं कर्म। **कर्मापादानयोरिति**। कर्म तदेव। अपादानं यतः परो निर्याति। **कर्माधिकरणयोर्वेति**। इहेत्यनेन यन्निर्दिश्यते तदधिकरणम्। कर्म च तदेव। **तयोर्मध्ये क्रोश इति**। क्रोशस्येहापादानाधिकरणत्वाभावात् सप्तमीपञ्चम्यौ न भवतः। न हि क्रोशाच्छरोऽपैति, किं तर्हि? तदेकदेशात्। नापि क्रोशे व्यवस्थितं लक्ष्यम्, किं तर्हि? तदेकदेश एव। तस्मात् क्रोशस्य शेषत्वात् षष्ठ्यां प्राप्तायां सप्तमीपञ्चम्यौ विधीयेते। अथात्र संख्यातानुदेशः कस्मान्न भवति, यावता कालाध्वानौ हि द्वौ, सप्तमी-पञ्चम्यावपि द्वे, अत एव साम्यात् संख्यातानुदेशेन भवितव्यम्—कालात् सप्तमी, अध्वनः पञ्चमीत्यत आह— **संख्यातानुदेश इत्यादि**। 'स्वरितेनाधिकारः' इत्यत्र स्वरितेनेति योगविभागः कृतः, तत् पूर्वेणापि सम्बध्यते। यत्र स्वरितत्वं प्रतिज्ञायते तत्र यथासंख्यं यथा स्यात्। इह तु स्वरितत्वं नास्ति, अतो न भवति संख्यातानुदेशः॥७॥

**कर्मप्रवचनीययुक्ते द्वितीया॥ शाकल्यस्य संहितामनु प्रावर्षदिति**। 'अनुर्लक्षणे' इति कर्मप्रवचनीयसंज्ञा॥८॥

पदमञ्जरी

कारकम्, सेह भिद्यते—एका अद्य भुजेः साधनम्, अपरा द्व्यहभुजेः, तेनानयोर्मध्ये काल इत्यर्थः। **कर्तृकर्मणोरिति**। इषूनस्यतीष्वासः पुरुषः स कर्त्ता, इष्वसने व्यधने स्थाने वा कर्म लक्ष्यम्। **कर्मापादानयोरिति**। कर्म तदेव सामर्थ्याद् गम्यमानं धनुरपादानं यतः शरा अपयन्ति। **कर्माधिकरणयोर्वेति**। कर्म तदेवाधिकरणमिहेति निर्दिष्टः प्रदेशः। इह कालाध्वानौ द्वौ, सप्तमीपञ्चम्यावपि द्वे, ततश्च संख्यातानुदेशः प्राप्नोति—कालात्सप्तमी, अध्वनः पञ्चमीति, अत आह—**संख्यातानुदेश इत्यादि**। **अस्वरितत्वादिति**। स्वरितेन लिङ्गेन यथासंख्यमित्येतत् तत्रैव प्रतिपादितम्॥ ७-८॥

भावबोधिनी

तब दो कारकों के मध्य में न होने से यह सूत्र कैसे प्रवृत्त होगा? समाधान यह है कि कारक=शक्ति ली जाती है। प्रथम दिन एक कर्तृत्व शक्ति है दूसरे या तीसरे दिन दूसरी है। अतः शक्तिद्वय के मध्य में होने से यहाँ पञ्चमी और सप्तमी का प्रयोग सम्भव है।] अध्वा का उदा०—इहस्थः अयम् इष्वासः क्रोशे लक्ष्यं विध्यति, क्रोशात् लक्ष्यं विध्यति [—यहाँ बैठा हुआ बाण चलाने वाला पुरुष एक कोश पर स्थित लक्ष्य को वेध लेता है।] यहाँ [ इष्वासः—] कर्तृ शक्ति तथा [ लक्ष्यम् ] कर्म शक्ति के मध्य में अथवा [ लक्ष्यम्—] कर्म और [ धनुः इस ] अपादान शक्ति के मध्य में अथवा [ इह ] अधिकरण शक्ति और [ लक्ष्यम् ] कर्म शक्ति के मध्य में कोश = अध्वा है अतः [ सप्तमी और पञ्चमी होती है।] यहाँ संख्यात अनुदेश नहीं है, क्योंकि स्वरितप्रतिज्ञा नहीं है।

विमर्श—यहाँ कारक शब्द शक्तिमान् का प्रतिपादक न होकर शक्ति का प्रतिपादक है। अतः उक्त उदाहरणों में शक्तिभेद मानकर मध्यवर्तिता का उपपादन करना चाहिये। यहाँ काल और अध्वा दो हैं तथा सप्तमी और पञ्चमी विभक्तियाँ भी दो हैं। अतः काल से सप्तमी और अध्वा से पञ्चमी हो जाय—ऐसी शंका नहीं करनी चाहिये क्योंकि ऐसा पाणिनीय स्वरित संकेत नहीं है। दोनों से दोनों ही विभक्तियाँ होती हैं॥ ७॥

कर्मप्रवचनीयसंज्ञक शब्दों के योग में द्वितीया विभक्ति होती है। 'लक्ष्यलक्षणभाव द्योत्य रहने पर 'अनु' इसकी कर्मप्रवचनीयसंज्ञा होती है' इत्यर्थक 'अनुर्लक्षणे' सूत्र है। उदा०—शाकल्यस्य संहितामनुप्रावर्षत्। [ शाकल्य की संहिता पढ़ने पर वर्षा हुई।] आगस्त्यम् अनु असिञ्चत् प्रजाः।]

### ४७०. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥ ( ६४९ )

'कर्मप्रवचनीययुक्ते' इति वर्त्तते। यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति। उप ( १.४.८७ ) खार्यां द्रोणः। उपनिष्के कार्षापणम्। 'यस्य चेश्वरवचनम्' इति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति। अधि ( १.४.९७ ) ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः ( म० भा० ) इति। द्वितीयापवादो योगः॥

**न्यासः**

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी॥ उपखार्यां द्रोण इति।** खार्या अधिको द्रोण इत्यर्थः। 'उपोऽधिके च' इत्युपशब्दस्य कर्मप्रवचनीयसंज्ञा। **यस्य चेश्वरवचनमिति। यस्येश्वरव्यपदेश** इत्यर्थः। ईश्वरव्यपदेशस्तु स्वामिन एव सम्भवति। तत्रैव सप्तम्या भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्त्तुमाह- **यस्य चेश्वरवचनमित्यादि।** यस्य चेश्वरवचनमित्यनेन द्वयोरपि=स्वस्वामिनोः पर्यायेण सप्तमी

**पदमञ्जरी**

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी॥** यस्मादधिकं तदस्मिन्नधिकमिति च निर्देशादधिकशब्दयोगे पर्यायेण सप्तमीपञ्चम्यौ भवतः। **उपखार्यां द्रोण इति।** 'उपोऽधिके च' इति कर्मप्रवचनीयसंज्ञा। **यस्य चेश्वरवचनमित्यादि।** द्वयमनेनोच्यते, द्वयोरपि भवति, तत्रापि पर्यायेणेति तत्र द्वयोरपि तावद्ब्रवति, कथम्? ईश्वर उच्यते येन तदीश्वरवचनमैश्वर्यम्, अथ वा ईश्वरशब्दो भावप्रधानः ईश्वरः तस्योक्तिरीश्वरवचनम्, यस्य स्वामिन ईश्वरत्वमुच्यते ततः सप्तमीत्यर्थः। अथ वा—यस्येति स्वं निर्दिश्यते, यस्य स्वस्येश्वर उच्यते ततः स्वात्सप्तमीत्यर्थः। पर्यायेण वा भवति; शेषविषये कर्मप्रवचनीयविभक्त्यारम्भादेकत उत्पन्नया विभक्त्या द्विष्ठस्यापि संबन्धस्याभिधानात्। **अधि ब्रह्मदत्त इति।** 'सप्तमी शौण्डैः' इति समासपक्षे ब्रह्मदत्ताधीना इति भवति

**भावबोधिनी**

[ इन दोनों में 'लक्ष्यलक्षणभाव प्रतीत होता है अतः 'अनुर्लक्षणे ( पा० सू० १।११।४८ ) सूत्र से कर्म प्रवचनीय संज्ञा के बाद प्रस्तुत सूत्र से द्वितीया होती है ] ॥ ८ ॥

'कर्मप्रवचनीययुक्ते' [ कर्मप्रवचनीय संज्ञक के योग में ] इसकी अनुवृत्ति होती है। जिससे अधिक हो और जिसकी ईश्वरवचनता हो, उसमें कर्मप्रवचनीय के योग में सप्तमी विभक्ति होती है। उदा०—उपखार्यां द्रोणः [ खारी से द्रोण अधिक=बड़ा है। ] उपनिष्के कार्षापणम्। [ निष्क से कार्षापण अधिक=बड़ा है। दोनों में 'उपोऽधिके च' ( पा० सू० १।४।८७ ) से 'उप' की कर्मप्रवचनीयसंज्ञा होती है और इसके योग में खारी तथा निष्क से अधिक कहा जाता है इनमें सप्तमी विभक्ति होती है। ] 'यस्य चेश्वरवचनम्' इससे स्व और स्वामी दोनों में पर्याय से सप्तमी होती है अर्थात् कभी स्ववाची से और कभी स्वामिवाचक से सप्तमी विभक्ति होती है। उदा०—अधि ब्रह्मदत्ते पञ्चालाः [ पञ्चाल ब्रह्मदत्त के अधीन हैं। यहाँ स्वामी में सप्तमी है। ] अधि पञ्चालेषु देवदत्तः [ देवदत्त पञ्चालों का स्वामी है। यहाँ स्ववाचक से सप्तमी है। ] कर्मप्रवचनीय के योग में प्राप्त होने वाली द्वितीया का अपवाद यह योग है, अर्थात् इनमें सप्तमी ही होती है, द्वितीया नहीं।

**विमर्श**—सामान्यतया कर्मप्रवचनीय-संज्ञक के योग में द्वितीया का विधान है। परन्तु यदि किसी से किसी दूसरे को अधिक बताना इष्ट हो तो वहाँ द्वितीया न होकर सप्तमी ही होती है; जैसे—'उपखार्यां द्रोणः' यहाँ खारी नामक परिमाणविशेष की अपेक्षा द्रोण नामक परिमाण को अधिक कहना है। अतः 'उपोऽधिके च' सूत्र से 'उप' की कर्मप्रवचनीय संज्ञा होती है, तब यह सूत्र 'खारी' में सप्तमी विभक्ति करता है।

'ईश्वरवचनम्' इसकी आवृत्ति करके या तन्त्र द्वारा दो अर्थ कहे जाते हैं—(१) 'ईश्वरस्य वचनम्' जिस स्व=सम्पत्ति आदि का ईश्वर=स्वामी कहा जाय उस स्ववाचक से सप्तमी होती है। जैसे—अधि पञ्चालेषु ब्रह्मदत्तः पञ्चालों के स्वामी ब्रह्मदत्त हैं। (२) ईश्वरवचनम्—यहाँ भावप्रधाननिर्देश है—ईश्वरत्वस्य वचनम्=स्वामी होने का कथन। इस पक्ष में स्वामिवाचक से सप्तमी होती है—अधि ब्रह्मदत्ते पाञ्चालाः। ब्रह्मदत्त के स्वभूत=प्रजाभूत पञ्चाल

**४७१. पञ्चम्यपाङ्परिभिः ॥ १० ॥ ( ५९८ )**

अप, आङ्, परि–इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति । अप ( १.४.८९ ) त्रिगर्तेभ्यो वृष्टो देवः । आ पाटलिपुत्राद् वृष्टो देवः । परि ( १.४.८८ ) त्रिगर्तेभ्यो वृष्टो देवः । अपेन साहचर्यात् परेर्वर्जनार्थस्य ग्रहणम्, तेनेह न भवति—वृक्षं परि ( १.४.९० ) विद्योतते विद्युत् ॥

**४७२. प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥ ( ६०० )**

मुख्यसदृशः = प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनम् = प्रतिदानम् । यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र

**न्यासः**

भवतीति । कथम्, यावता 'अधिरीश्वरे' इत्यनेनाधिशब्दस्य कर्मप्रवचनीयसंज्ञा विहिता, ईश्वरस्तु स्वामी, स च स्वमपेक्ष्य भवति ? स्वस्वामिसम्बन्धेऽधिशब्दः कर्मप्रवचनीयसंज्ञो भवति । तत्र कदाचित् स्वामी कर्मप्रवचनीयविभक्त्या युज्यते, कदाचित् स्वमित्येतत् प्रतिपादितं प्रागेव । कथं पुनर्यस्य चेश्वरवचनमित्युच्यमाने स्वमपि कर्मप्रवचनीयविभक्त्या युज्यते, न हि तस्येश्वरव्यपदेशोऽस्ति ? एवं तर्हि अनुक्तसमुच्चयार्थश्चकारः क्रियते, तेन यस्येश्वरव्यपदेशो नास्ति तत्रापि सप्तमी विज्ञायत इत्यदोषः ॥ ९ ॥

**पञ्चम्यपाङ्परिभिः ॥** अपपरिशब्दयोः 'अपपरी वर्जने' इत्यनेन कर्मप्रवचनीयसंज्ञा विहिता, आङश्च 'आङ्मर्यादावचने' इत्यनेन । **वृक्षं परि विद्योतते इति** । परिः 'लक्षणेत्थम्भूताख्यान' इत्यादिना ॥ १० ॥

**प्रतिनिधिप्रतिदाने च यस्मात् ॥ मुख्यसदृशः प्रतिनिधिरिति** । मुख्यो यः कश्चित् कार्ये रूढः = समर्थः, प्रसिद्धः = प्रधानभूतस्तेन सदृशो यस्तदभावे तस्य कार्यस्य सिद्ध्यर्थमुपादीयते स प्रतिनिधिः । **अभिमन्युरर्जुनतः**

**पदमञ्जरी**

विभक्त्यर्थवृत्तित्वेऽधिब्रह्मदत्तमित्यव्ययीभावः । अयं योगः शक्योऽवक्तुम्, स्वामिन्याधारे पञ्चालाः स्थिता स्वेष्वाधारेषु ब्रह्मदत्तः स्थितः, तत्र यदा यदधिकरणं तत्र सप्तमी भविष्यति, एवं च कृत्वा 'अधिरीश्वरे' इति कर्मप्रवचनीयसंज्ञा न वक्तव्या, ऐश्वर्यविषयश्चाधिः क्रियया नैव युज्यते । अतो गत्युपसर्गत्वबाधार्थापि न युज्यते ॥ ९–१० ॥

**प्रतिनिधिप्रतिदाने च यस्मात्** ॥ यस्मादित्यनेनैव सूत्रेण पञ्चमी । **मुख्यसदृशः प्रतिनिधिरिति** । मुख्यः क्वचित्कार्ये रूढः, यश्च तदभावे तत्कार्ये प्रतिनिधीयते स तत्प्रतिनिधिः । कर्मणि 'उपसर्गे घोः किः' । एवं प्रतिदानमित्यपि, कर्मण्येव ल्युट् । **दत्तस्येति** । अथात्रानेनैव सूत्रेण पञ्चमी प्राप्नोति, यथा –यस्मादिति, एवं तर्हि कर्मणि षष्ठी । ननु न दत्तमेव प्रत्यर्प्यते, किं तर्हि ? द्रव्यान्तरम्, सत्यम्; तुल्यमूल्यत्वात्तदेव प्रत्यर्पित-

**भावबोधिनी**

है । यदि समास कर दिया जाय तो 'ब्रह्मदत्ताधीनाः पञ्चालाः' यह होता है । क्योंकि समास हो जाने पर ख = ईन प्रत्यय हो जाता है ॥ ९ ॥

अप, आङ् तथा परि—इन कर्मप्रवचनीयसंज्ञक शब्दों के योग में पञ्चमी विभक्ति होती है । उदा०—त्रिगर्तेभ्यो वृष्टः देवः । [ त्रिगर्त देश को छोड़कर पानी बरसा । ] आ पाटलिपुत्राद् वृष्टो देवः । [ पटना तक पानी बरसा । ] परि-परि त्रिगर्तेभ्यः वृष्टः देवः । [ त्रिगर्त देश को छोड़कर पानी बरसा ] 'अप' इसके साहचर्य के कारण वर्जनार्थक 'परि' का ही ग्रहण है, अतः यहाँ पञ्चमी नहीं होती है—वृक्षं परि विद्योतते विद्युत् [ वृक्ष पर बिजली चमकती है । भाव यह है कि 'अपपरी वर्जने' ( पा० सू० १।४।८८ ) से वर्जन अर्थ में ही 'अप' की कर्मप्रवचनीय संज्ञा होती है । अतः 'परि' भी वर्जनार्थप्रतिपादक ही लिया जाता है, लक्ष्यलक्षणभाव आदि अर्थों वाला नहीं ।' 'आङ्' यह मर्यादा और अभिविधि दोनों अर्थों वाला लिया जाता है ॥ १० ॥

मुख्य के समान प्रतिनिधि होता है । दिये हुये को वापस लौटाना = प्रतिदान है । जिसका प्रतिनिधि है और जिसका प्रतिपादन है उसमें कर्मप्रवचनीय के योग में पञ्चमी विभक्ति होती है । उदा० –अभिमन्युः अर्जुनतः प्रति

**कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति। अभिमन्युरर्जुनतः प्रति ( १.४.९२ )। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रति ( १.४.९२ ) यच्छति।**

**ननु च प्रतिनिधिप्रतिदाने कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने ? नैष दोषः, सम्बन्धसम्बन्धात्तस्यापि योगोऽस्त्येव ॥**

**न्यासः**

**प्रतीति।** यतो मुख्यादर्जुनादभिमन्युः प्रतिनिधिस्ततः पञ्चमीविभक्तिर्भवति। प्रतियोगे पञ्चम्यास्तसिः। **माषानस्मै तिलेभ्यः प्रतियच्छतीति।** ये तिलाः पूर्वं दत्तास्तेभ्यो माषाणां प्रतिदानम्। तिलेभ्य इति पञ्चमी भवति। तिलान् गृहीत्वा माषान् ददातीत्यर्थः।

ननु च 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति प्रतेः प्रतिनिधिप्रतिदानयोरेवार्थयोः कर्मप्रवचनीयसंज्ञा, तयोरेव प्रतिना योग उपपद्यते, न तु यतस्ते तस्येति मन्यमान आह—**ननु चेत्यादि। सम्बन्धसम्बन्धादिति।** सम्बध्यत इति सम्बन्धः=प्रतिनिधिः, प्रतिदानञ्च, तदुभयमपि कर्मप्रवचनीयेन प्रतिना युज्यते। तेन सम्बन्धेन यः सम्बन्धः स सम्बन्धसम्बन्धः। कस्य पुनस्तेन संबन्धः ? यतः प्रतिनिधिः प्रतिदानञ्च तस्य। सम्बन्धिशब्दौ हि प्रतिनिधिप्रतिदानशब्दौ। तौ च नासति पूर्वविज्ञाते मुख्ये पूर्वदत्ते च भवत इति प्रतिनिधिप्रतिदानाभ्यां यस्य संबन्धस्तस्य ताभ्यां सम्बन्धीऽस्तीति ते अपि कर्मप्रवचनीयैर्युक्ते भवत इति। क्वचित् **सम्बन्धिसम्बन्धादिति**

**पदमञ्जरी**

मिति प्रतिपत्तिः, प्रतिनिर्यातनम्=प्रत्यर्पणम्, अत्र भावे ल्युट्। **यस्मात्प्रतिनिधिरिति।** सूत्रवदेव पञ्चमी। **एवं यतश्चेत्यत्रापि। अर्जुनतः प्रतीति।** प्रतियोगे पञ्चम्यास्तसिः। अर्जुनो युद्धादौ प्रसिद्धस्तत्सदृशोऽभिमन्युरित्यर्थः। **माषानित्यादि।** ये पूर्वं गृहीतास्तिलास्तेभ्यो माषाः प्रतिदानम्। **संबन्धिसंबन्धादिति।** प्रतिनिधिर्मुख्यमपेक्ष्य भवति, प्रतिदानमपि पूर्वदत्तम्, ततश्च यस्य कर्मप्रवचनीयस्य प्रतिनिधिप्रतिदानाभ्यां योगस्तस्य ताभ्यामपि मुख्यपूर्वदत्ताभ्यां तद्द्वारको योगोऽस्तीत्यर्थः ॥ ११ ॥

**भावबोधिनी**

[ अभिमन्यु अर्जुन का प्रतिनिधि है। ] प्रद्युम्नः वासुदेवतः प्रति [ प्रद्युम्न वासुदेव का प्रतिनिधि है। ] माषान् अस्मै तिलेभ्यः प्रतियच्छति। [ इसे तिलों के बदले में उड़द दे रहा है। ]

यहाँ प्रतिनिधि और प्रतिदान ये कर्मप्रवचनीय से युक्त हैं न कि जिसका प्रतिनिधि है और जिसका प्रतिदान है वे कर्मप्रवचनीय से युक्त है [ तब उनसे पञ्चमी कैसे होगी ] ? इस प्रकार का दोष नहीं है, क्योंकि सम्बन्ध=सम्बन्धी का सम्बन्ध होने से उनका=जिसका प्रतिनिधि और प्रतिदान है, का भी योग होता ही है।

**विमर्श—**'यस्मात्' यह षष्ठी के अर्थ में सौत्र पञ्चमी है अतः इसका तात्पर्य 'यस्य'=जिसका—यह है। जिसका प्रतिनिधि होता है और जिसका प्रतिदान किया जाता है उससे पञ्चमी होती है। काशिकाकार ने पञ्चमी का स्वतन्त्र प्रयोग न करके उसके अर्थ में तसिल् प्रत्यय का प्रयोग किया है—"पञ्चम्यास्तसिल्" ( पा० सू० ४।३।७ )

प्रतिनिधि तथा प्रतिदान पदार्थवाचक का ही कर्मप्रवचनीय के साथ योग रहता है न कि जिनका प्रतिनिधि है और जिनका प्रतिदान है ? इसका समाधान यह है कि प्रतिनिधि और प्रतिदान का मुख्य और पूर्वगृहीत पदार्थ के साथ सम्बन्ध रहता है। इनके द्वारा सम्बन्ध हो जाने से कर्मप्रवचनीय का योग हो जाता है।

'सम्बन्धसम्बन्धात्' यहाँ 'सम्बध्यते'—इति सम्बन्धः' यह अर्थ है इससे प्रतिनिधि और प्रतिदान का ग्रहण होता है। इनका अपने मुख्य और पूर्वगृहीत पदार्थ के साथ सम्बन्ध है। अतः योग हो जाता है।

यदि 'सम्बन्धिसम्बन्धात्' ऐसा पाठ मान लिया जाय तो अधिक स्पष्ट हो जाता है। इनमें प्रतिनिधि और प्रतिदान हैं सम्बन्धी, इनका सम्बन्ध है मुख्य और पूर्वगृहीत के साथ। अतः योग सम्भव है। क्योंकि मुख्य की अपेक्षा मानकर ही उसका प्रतिनिधि होता है और प्रतिदान भी पूर्वदत्त वस्तु की अपेक्षा करके ही होता है ॥ ११ ॥

४७३. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥ ( ५८५ )

**गत्यर्थानां धातूनां चेष्टाक्रियाणां परिस्पन्दक्रियाणां[1] कर्मणि कारकेऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः । ग्रामं गच्छति । ग्रामाय गच्छति । ग्रामं व्रजति । ग्रामाय व्रजति ।**

**गत्यर्थग्रहणं किम् ? ओदनं पचति । कर्मणीति किम् ? अश्वेन व्रजति । चेष्टायामिति किम् ? मनसा पाटलिपुत्रं गच्छति । अनध्वनीति किम् ? अध्वानं गच्छति ।**

**अध्वनीत्यर्थग्रहणम् ( म० भा० ) । पन्थानं गच्छति । मार्गं गच्छति ।**

**आस्थितप्रतिषेधश्चायं विज्ञेयः ( म० भा० ) । आस्थितः = संप्राप्तः, आक्रान्त उच्यते । यत्र तु उत्पथेन पन्थानं गच्छति, तत्र भवितव्यमेव चतुर्थ्या---पथे गच्छतीति ( म० भा० ) ।**

न्यासः

पाठः । तत्रापि प्रतिनिधिः प्रतिदानञ्च सम्बन्धिशब्देनोच्यते; तदुभयस्यापि कर्मप्रवचनीयेन सम्बन्धात् । तेन सम्बन्धिना यः सम्बन्धः स सम्बन्धिसम्बन्ध इति स एवार्थः ॥ ११ ॥

**गत्यर्थ कर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥** यदि क्रियामात्रमिह चेष्टाशब्देनोच्यते तदा चेष्टाग्रहणमपार्थकम् । सर्वो हि धातुः क्रियावचनः । तस्माद् विशेषणोपादानसामर्थ्यात् परिस्पन्दवचनोऽयं चेष्टाशब्दो विज्ञायते, इत्याह---**परिस्पन्दक्रियाणामिति** । परिस्पन्दः = शरीरव्यापारः, सा क्रिया येषां ते तथोक्ताः ।

**अध्वनीत्यर्थग्रहणमिति** । अर्थप्रधानत्वान्निर्देशस्य, सप्तमीनिर्देशाच्च । यदीह स्वरूपग्रहणं स्यात् 'अनध्वनः' इति कुर्यात् । **आस्थितप्रतिषेधश्चायं विज्ञायते** । येन देशविशेषेण प्राप्यं ग्रामादिकं प्राप्यते स

पदमञ्जरी

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ चेष्टाक्रियाणामिति** । वस्तुव्याख्यानमेतत्, सूत्रे तु सप्तमी चेष्टायामिति । **परिस्पन्दनक्रियाणामिति** । परिस्पन्दन एव चेष्टाशब्दः प्रसिद्ध इति भावः । 'स्वं रूपम्' इति वचनात्स्वरूपग्रहणाशङ्कायामाह---**अध्वन्यर्थग्रहणमिति** । सप्तमीनिर्देशादिति भावः । सप्तमीनिर्देशे ह्यनध्वनि कर्मणीत्यन्वयः । नानध्वनः प्रकृतेरिति अर्थ एव कर्म नाध्वशब्दः, तेनाध्वपर्यायेभ्योऽपि चतुर्थी न भवति । द्वितीया तु 'कर्मणि द्वितीया' इति भवति ।

**आस्थितः संप्राप्त इति** गन्त्राधिष्ठित इत्यर्थः । **यत्र त्विति** । यदोत्पथेन पन्था एवाक्रमितुमिष्यते तदा

भावबोधिनी

गति = गमन अर्थवाली चेष्टाक्रियावाली = शरीर के अवयवों के व्यापार अर्थवाली धातुओं के कर्मकारक में द्वितीया और चतुर्थी होती है, अध्वा को छोड़कर, अर्थात् अध्ववाचक से ये विभक्तियाँ नहीं होती हैं । उदा०--- ग्रामं गच्छति [ गाँव जाता है । ] ग्रामाय गच्छति । [ गाँव जाता है । दोनों विभक्तियों का अर्थ कर्मकारक ही है । ] ग्रामं व्रजति, ग्रामाय व्रजति [ गाँव जाता है । ]

गति = गमन अर्थवाली का---इसका ग्रहण किसलिये है ? ओदनं पचति । [ चावल पकाता है । यहाँ गमनार्थक न होने से चतुर्थी नहीं होती है, ईप्सित = कर्म में द्वितीया होती है । ] कर्म में---इसके ग्रहण का क्या प्रयोजन है ? अश्वेन व्रजति । [ घोड़े से जाता है । यहाँ अश्व करण है, कर्म नहीं । अतः ये विभक्तियाँ नहीं होती हैं । ] चेष्टा = शारीरिक अवयवों की क्रिया अर्थ में---इसका क्या फल है ? मनसा पाटलिपुत्रं व्रजति । [ मन से पटना जाता है । मन से चेष्टा नहीं होती है । अतः यह सूत्र नहीं लागू होता है । ] अध्वा न हो---इसका क्या प्रयोजन है ? अध्वानं गच्छति । [ रास्ते पर जाता है । यहाँ कर्म में भी ये विभक्तियाँ नहीं होती हैं । ]

अध्वनि = मार्ग में---इसमें अर्थ का ग्रहण है शब्द का नहीं । [ अतः इनमें भी यह लागू नहीं होता है---] पन्थानं गच्छति । मार्गं गच्छति ।

इसको आस्थित-प्रतिषेध समझना चाहिये । आस्थित = सम्प्राप्त, आक्रान्त [ का प्रतिषेध होता है ] । किन्तु जहाँ पर उत्पन्था से = गलत रास्ता से रास्ता की जाता है वहाँ तो चतुर्थी होती ही है---पथे गच्छति [ कोई रास्ता भूल गया है । सही रास्ता मालूम करके उस पर जब जाता है तब यह प्रयोग होता है । ]

---

१. 'परिस्पन्दनक्रियाणाम्' पदमञ्जरीसम्मतोऽयं पाठः ।

**द्वितीयाग्रहणं किम्? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्यात्—ग्रामं गन्ता, ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति ॥**

**४७४. चतुर्थी संप्रदाने ॥ १३ ॥ ( ५७० )**

**संप्रदाने कारके चतुर्थी विभक्तिर्भवति। उपाध्यायाय गां ददाति, माणवकाय भिक्षां ददाति, देवदत्ताय रोचते, पुष्पेभ्यः स्पृहयति इत्यादि ॥**

**न्यासः**

देशविशेषो लोकेऽध्वेति रूढः। केन च प्राप्यं प्राप्यते? यः पन्था आक्रान्तस्तेन। तस्मात् तस्यैवायं प्रतिषेधः। यदा तु स एवोत्पथेन प्राप्यते तदा तस्य पथोऽध्वव्यपदेशो न भवतीति भवत्येव तत्र चतुर्थी। **द्वितीयाग्रहणं किमिति।** कर्मणि कारके चतुर्थ्यां विकल्पितायां पक्षे न्यायप्राप्तैव द्वितीयेति भावः। तत् क्रियते बाधकबाधनार्थम्। **अपवादविषयेऽपि यथा स्यात्।** अथार्थग्रहणं किमर्थम्, न गतिकर्मणीत्येवोच्येत, यावता गतिरर्थ एव? नैतदस्ति; या गतिर्गमिनैव शब्दान्तरसन्निधानाद्यनपेक्षयोच्यते तत्र यथा स्यात्। पादविहरणात्मिका च या गतिः प्रधानभूता तस्या एव ग्रहणं यथा स्यादित्येवमर्थम्, तेनेह न भवति—स्त्रियं गच्छति, अजां ग्रामं नयति। अत्र हि गमेर्मैथुनमर्थः स्त्रीशब्दसन्निधानाद् गम्यते, न तु गमेः केवलात्। नयतेश्च प्रापणमेवार्थः प्रधानभूतः, तद्विशेषणन्तु पादविहरणमप्रधानम्। **यद्येवम्,** ग्रामं गमयति, ग्रामाय गमयतीति ण्यन्ते गुणभूतत्वाद् गमेर्न सिद्ध्यति, गमेरत्र प्रेषणाध्येषणादिको ह्यर्थः प्राधान्यमनुगच्छति, नैष दोषः; न ह्यत्र ग्रामो ण्यन्तस्य कर्म, किं तर्हि? गमेरेव ॥ १२ ॥

**चतुर्थी सम्प्रदाने ॥ देवदत्ताय रोचत** इति। 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानसंज्ञा। **पुष्पेभ्यः स्पृहयतीति।** अत्र 'स्पृहेरीप्सितः' इत्यनेन।

**पदमञ्जरी**

भवत्येव चतुर्थीत्यर्थः। इह कस्मान्न भवति—अजां नयति ग्राममिति? अगत्यर्थत्वात्। प्रतीता ह्यत्र गतिर्न त्वसौ नयतेरर्थः; प्रापणवाचित्वात्। इह तर्हि स्त्रियं गच्छतीति चतुर्थी प्राप्नोति? सिद्धं त्वसंप्राप्तवचनात्, असंप्राप्तं यद्वस्तु गमनेन संप्रेप्स्यते तस्मिन्कर्मणीति वक्तव्यम्, स्त्री तु संप्राप्तैवेति चतुर्थ्यभावः। अध्वनश्चानपवादः। संप्राप्तो ह्यध्वा, यदा त्वसंप्राप्तः संप्रेप्स्यते तदा भवितव्यमेव चतुर्थ्येत्युक्तं पुरस्तात्।

**न चतुर्थ्येवेति।** नञः काक्वा प्रयोगाद्विकल्पेतेत्यनेनान्वयः। कर्मणि चतुर्थ्यां विकल्पितायाम् **'तथायुक्ते कर्मणि द्वितीया'** इत्येव द्वितीया भविष्यतीति भावः। **ग्रामाय गन्तेति।** द्वितीया तावत्कृद्योगे षष्ठीं बाधते, तया च तुल्यकक्षा चतुर्थी द्वन्द्वेन प्रतिपाद्यत इति चतुर्थ्यपि कृद्योगे भवतीति भावः।

**भावबोधिनी**

द्वितीया का ग्रहण क्यों है चतुर्थी का ही विकल्प क्यों न कर दिया जाय? [ क्योंकि चतुर्थी के विकल्पपक्ष में द्वितीया स्वतः हो सकती है? ] अपवाद के विषय में भी द्वितीया हो—[इसके लिये द्वितीया का ग्रहण है—] जैसे ग्रामाय गन्ता, ग्रामं गन्ता यहाँ 'कर्तृकर्मणोः कृति' [ पा० सू० २।३।६७ ] इससे कृद्योग मानकर होने वाली षष्ठी नहीं होती है [ ये ही दोनों विभक्तियाँ होती हैं। ] ॥ १३ ॥

सम्प्रदान कारक अर्थ में चतुर्थी विभक्ति होती है। उदा०—उपाध्यायाय गां ददाति, माणवकाय भिक्षां ददाति। [ उपाध्याय को गाय देता है, ब्रह्मचारी को भिक्षा देता है। दोनों वाक्यों में 'कर्मणा यमभिप्रैति स सम्प्रदानम्' ( पा० सू० १।४।३२ ) से सम्प्रदान संज्ञा हो जाने पर इस सूत्र से चतुर्थी होती है। ] देवदत्ताय रोचते [ मोदकः ] देवदत्त को लड्डू अच्छा लगता है। [ इसमें 'रुच्यर्थानां प्रीयमाणः' ( पा० सू० १।४।३३ ) से देवदत्त की सम्प्रदान संज्ञा होती है। तब इससे चतुर्थी होती है। ] पुष्पेभ्यः स्पृहयति [ फूल चाहता है। 'स्पृहेरीप्सितः' ( पा० सू० १।४।३६ ) से सम्प्रदान संज्ञा और इस सूत्र से चतुर्थी होती है। ]

*** चतुर्थीविधाने तादर्थ्ये उपसंख्यानम् *** ( म० भा० २.३.१३ वा० १ )। यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम्।

*** क्लृपि संपद्यमाने चतुर्थी वक्तव्या *** ( म० भा० २.३.१३ वा० २ )। मूत्राय कल्पते यवागूः। क्लृपीत्यर्थनिर्देशः। मूत्राय संपद्यते यवागूः। मूत्राय जायते यवागूः।

### न्यासः

**तादर्थ्ये उपसंख्यानमिति**। तच्छब्देन चतुर्थ्यन्तस्यार्थो निर्दिश्यते। तस्मा इदं तदर्थम्, तस्य भावस्तादर्थ्यम्। तत्र चतुर्थ्या उपसंख्यानम् = प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्--'चतुर्थी' इति योगविभागः क्रियते, तेन तादर्थ्ये चतुर्थी भवतीति। अथवा--'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति तादर्थ्ये चतुर्थ्याः समासवचनं ज्ञापकं भवति--तादर्थ्येऽपि चतुर्थीति।

**क्लृपि सम्पद्यमान इत्यादि**। क्लृप्त्यर्थानां धातूनां प्रयोगे सम्पद्यमाने कर्त्तरि सम्पादनक्रियाविशिष्टे चतुर्थी वक्तव्या = व्याख्येयेत्यर्थः। व्याख्यानं तु तमेव योगविभागमाश्रित्य। तथा **उत्पातेन ज्ञाप्यमाने** इत्यादावपि। **मूत्राय कल्पते यवागूरिति**। यवागूर्मूत्रविकाररूपेण भवतीत्यर्थः। विकाररूपापत्तौ चतुर्थी विज्ञेया। तेनेह न भवति--देवदत्तस्य शालयः सम्पद्यन्त इति। यदा चाभेदविवक्षा तदा परत्वात् प्रथमैव भवति, न चतुर्थी--मूत्रमिदं सम्पद्यते यवागूरिति, उच्चारोऽयं सम्पद्यते यवौदन इति। यदा तु 'जनिकर्त्तुः

### पदमञ्जरी

अयं योगः शक्योऽवक्तुम्, कथम्? संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात्क्रियापि कृत्रिमं कर्म। तत्र यदा गमनस्य संदर्शनादीनां च स्वरूपभेदो विवक्ष्यते तदा संदर्शनादिकर्मणा गमनेनाभिप्रेयमाणस्य ग्रामस्य संप्रदानत्वाच्चतुर्थी। अभेदविवक्षायां तु गमनस्य कर्मत्वाभावाद् ग्रामः कर्मैव भवतीति द्वितीया सिद्धा नार्थं एतेनेति **भाष्यकारस्य** पक्षः। तत्र कृतप्रयोगे षष्ठ्येव भवति ॥ १२ ॥

**चतुर्थी संप्रदाने ॥ तादर्थ्यं इति**। तच्छब्देन कार्यं प्रति निर्दिश्यते, तस्मै इदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयते। तदर्थस्य भावस्तादर्थ्यमिति ष्यञा कार्यकारणसम्बन्धोऽभिधीयते; समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेनेति वचनात्। तत्र द्विष्ठत्वेऽपि सम्बन्धस्य षष्ठीवद्विशेषणादेव चतुर्थी भवति—यूपाय दार्विति। हेतुतृतीयापि विशेष्यान्न भवति। हेतुहेतुमद्भावस्यापि चतुर्थ्यैव प्रत्यायितत्वात्, षष्ठीविषये च हेतुतृतीया। इह तु प्रातिपदिकार्थस्याव्यतिरेकात्प्रथमैव भवति। यदि तर्हि तादर्थ्यं उपसंख्यानं क्रियते, नार्थः संप्रदाने चतुर्थ्या, योऽपि ह्युपाध्यायाय गौर्दीयते उपाध्यायार्थः स भवति। अवश्यं संप्रदानग्रहणं कर्तव्यम् 'रुच्यर्थानां प्रीयमाणः' इत्याद्यर्थम्।

### भावबोधिनी

* चतुर्थी के विधान में तादर्थ्य में = उसके लिये है—इस अर्थ में चतुर्थी कहनी चाहिये। * उदा०--यूपाय दारु [ यूप = यज्ञीय पशुबन्धनार्थ बनने वाले खूंटे के लिये लकड़ी। अतः दारु यूप के लिये है। अतः तादर्थ्य की प्रतीति होने से यह चतुर्थी करता है। इसी प्रकार ] कुण्डलाय हिरण्यम् = कुण्डल के लिये सोना। रन्धनाय स्थाली = पकाने के लिये बटलोई। अवहननाय उलूखलम् = कूटने के लिये उलूखल। [ अन्त के दो उदाहरणों को तादर्थ्य मानकर चतुर्थी तो हो सकती है। परन्तु समास नहीं हो सकता। क्योंकि समास वहीं होता है जहाँ प्रकृतिविकृतिभाव प्रतीत होता है। ]

* क्लृप्त्यर्थक धातुओं के प्रयोग में सम्पद्यमान कर्ता अर्थ में चतुर्थी कहनी चाहिये। * मूत्राय कल्पते यवागूः [ लपसी मूत्र बन जाती है। ] क्लृपि--यह अर्थपरक है, इसके समान अर्थवाली अन्य धातुओं के योग में भी चतुर्थी होती है—मूत्राय सम्पद्यते यवागूः। [ लपसी मूत्र बनती है। ] मूत्राय जायते यवागूः। [ लपसी मूत्र बनती है। ]

❀ उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या ❀ ( म० भा० २.३.१३ )।

वाताय कपिला विद्युदातपायातिलोहिनी।
[1]पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ ( म० भा० २.३.१३ )

❀ हितयोगे चतुर्थी वक्तव्या ❀ ( म० भा० २.३.१३ वा० ४ )। गोभ्यो हितम्। अरोचकिने हितम् ॥

४७८. क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ १४ ॥ ( ५८१ )

**क्रियार्था क्रिया उपपदं यस्य, सोऽयं क्रियार्थोपपदः। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३.३.१० ) इत्येष विषयो लक्ष्यते। क्रियार्थोपपदस्य च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्ति-**

न्यासः

प्रकृतिः' इति प्रकृतेरपादानत्वं विवक्ष्यते तदा यवाग्वा इति पञ्चम्येव स्यात्--मूत्रं सम्पद्यते यवाग्वा इति।

**वाताय कपिला विद्युदिति।** अत्र कपिला विद्युदुत्पातो वातस्य लक्षणम्। तेन ज्ञाप्यमाने वाते चतुर्थी भवति। **अरोचकिने इति।** 'अत इनिठनौ' इतीनिः ॥ १३ ॥

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः॥ क्रियार्था क्रियोपपदं यस्येत्यादि।** कथं पुनरयमर्थो लभ्यते, यावता नेह सूत्रे द्वितीयं क्रियाग्रहणमुपात्तमस्तीत्याह--**तुमुन्ण्वुलावित्यादि।** 'तत्रोपपदं सप्तमीस्थम्' इति पारिभाषिकमुपपदं सम्भवतीति क्रियार्थोपपदग्रहणेनायं विषयो लभ्यते। तत्र विषये क्रियार्थैव क्रियोपपदं सम्भवतीत्यसत्यपि द्वितीये क्रियाग्रहणे यदत्र क्रियार्थोपपदं तत् क्रियैवेति गम्यते। **स्थानिन इति।**

पदमञ्जरी

**क्लृपि संपद्यमान इति।** संपत्तिरभूतप्रादुर्भावरूपोत्पत्तिरिह गृह्यते, तत्र यद्रूपमुपजायते ततो विकाराच्चतुर्थी। **मूत्राय कल्पते यवागूरिति।** प्रकृतिविकारयोर्भेदविवक्षायां चतुर्थी। अभेदविवक्षायां तु मूत्रं संपद्यते यवागूरिति प्रथमैव भवतीति केचिदाहुः। अन्ये त्वभेदविवक्षायामेव चतुर्थीमिच्छन्ति। यदा तु 'जनिकर्त्तुः-प्रकृतिः' इत्यपादानत्वं विवक्ष्यते, तदा विकाराच्चतुर्थी न भवतीति केचिदाहुः—मूत्रं संपद्यते यवाग्वा इति। अन्ये तत्रापि चतुर्थीमिच्छन्ति—मूत्राय संपद्यते यवाग्वा इति।

**उत्पातेनेति।** प्राणिनां शुभाशुभयोः सूचको भूतविकार उत्पातः। **अरोचकिन इति।** अरुचिः=अरोचकम्, 'रोगाख्यायाम्' इति ण्वुल्, बहुलवचनादस्त्रीलिङ्गता ॥ १३ ॥

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः॥ क्रिया क्रियार्थोपपदं यस्येति।** ननु नास्मिन्नर्थेऽक्षराणि सन्ति तत्राह—**तुमुन्ण्वुलावित्यादि।** परिभाषितमुपपदं क्रियार्थमन्यत्र सम्भवतीत्ययमेव विषयो गृह्यते। अत्र च विषये क्रियैव क्रियार्थोपपदं तेनायमर्थो लभ्यते इति भावः। 'यत्र गम्यते चार्थो न च प्रयुज्यते शब्दः स स्थानी'

भावबोधिनी

* उत्पात द्वारा ज्ञाप्यमान=सूचित होने वाले पदार्थवाचक में चतुर्थी होती है, ऐसा कहना चाहिये। * [ उत्पात=प्राणियों के शुभ और अशुभ को सूचित करने वाला जो भूतविकार है, वह उत्पात है। ] उदा०—(१) कपिला विद्युत् वाताय, (२) अतिलोहिनी आतपाय, (३) वर्षाय पीता विज्ञेया, (४) दुर्भिक्षाय सिता भवेत् [ (१) कपिल वर्ण की बिजली आंधी के लिये, (२) अति लाल रंग की बिजली आतप=धूप, लू के लिये, (३) पीली वर्षा के लिये और (४) सित वर्ण की दुर्भिक्ष के लिये समझनी चाहिये, इनकी सूचक होती है।

* हित के योग में चतुर्थी कहनी चाहिये। * उदा०—गोभ्यः हितम् [ गायों के लिये हितकारक। अरोचकिने हितम्। अरुचि के लिये हितकारक ॥ १३ ॥

क्रियार्थक क्रिया है उपपद, जिसके वह क्रियार्थोपपद है। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (पा० सू० ३।३।१०) इस सूत्र का विषय लक्षित होता है। [ जहाँ एक कोई क्रिया दूसरी किसी क्रिया के लिये होती है वहाँ पहले होने

१. 'पीता भवति सस्याय', 'कृष्णा सर्वविनाशाय' इति वा पाठो।

भवति। द्वितीयापवादो योगः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति।

क्रियार्थोपपदस्येति किम्? प्रविश पिण्डीम्। प्रविश तर्पणम्। भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः। कर्मणीति किम्? एधेभ्यो व्रजति शकटेन। स्थानिन इति किम्? एधानाहर्तुं व्रजति॥

**न्यासः**

शब्दास्तिष्ठन्त्यस्मिन्निति स्थानम्। तदस्यास्तीति स्थानी। एतदुक्तं भवति—यस्यार्थः प्रतीयते, न तु प्रयोगोऽस्ति, स स्थानीत्युच्यत इति।

**एधेभ्यो व्रजतीति**। आङ्पूर्वो हरतिरत्र स्थानी, तत्कर्म त्वेधाः। एधानाहर्तुं व्रजतीत्यर्थः। ननु चात्र तादर्थ्यमस्ति, अतस्तादर्थ्यं इत्येव सिद्धा चतुर्थी, तत् किमर्थमिदं वचनम्? नियमार्थम्—स्थानिनोऽप्रयुज्यमानस्यैव कर्मणि यथा स्यात्, प्रयुज्यमानस्य मा भूत। **भक्षिरत्र स्थानीति**। प्रविश गृहं पिण्डीं भक्षयेति गम्यमानत्वात्। प्रविश तर्पणमित्यत्रापि[1] पिबतिः स्थानी। **न तु क्रियार्थोपपद इति**। तुमुन्नादिविशिष्टप्रत्ययान्तो हि क्रियार्थोपपदो भवति। अयन्तु लोडन्तः। न च लोट् क्रियार्थोपपदे विधीयत इति न भवति भक्षिरत्र क्रियार्थोपपदः॥ १४॥

**पदमञ्जरी**

इति स्वनिकायप्रसिद्धिमाश्रित्याह—**स्थानिनोऽप्रयुज्यमानस्येति**। **एधेभ्यो व्रजतीति**। ननु चात्र 'तादर्थ्ये' इत्येव चतुर्थी सिद्धा, इहापि तर्हि प्राप्नोति एधानाहर्तुं व्रजतीति? हरणार्था व्रजिक्रिया, न पुनरेधार्था चेदुदाहरणेऽपि तर्ह्येवमेव। एतावांस्तु विशेषः—प्रत्युदाहरणे शब्दः प्रयुज्यते, उदाहरणे तु नेति प्रतीयमाना च क्रिया कारकव्यपदेशस्य निमित्तम्। तत्र यथा प्रत्युदाहरणे आहरणापेक्षया द्वितीया सम्भवत्येवमुदाहरणेऽपि प्रतीयमानहरणापेक्षा द्वितीयैव स्यादित्ययमारम्भः। **भक्षिरत्र स्थानीति**। प्रविश गृहं पिण्डीं भक्षयेति गम्यमानत्वात्। **न तु क्रियार्थोपपद इति**। यद्यपि पिण्डीभक्षणार्थं गृहप्रवेशनं तथापि पारिभाषिकमुपपदं न भवतीति भावः। **शकटेनेति**। ननु 'मध्येऽपवादाः' इति द्वितीयामेव चतुर्थी बाधिष्यते, न करणतृतीयाम्, एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता। इदं त्वत्र प्रत्युदाहरणं द्रष्टव्यम्—ब्राह्मणस्यैधेभ्यो व्रजतीति। असति कर्मग्रहणे इतरोपपदविभक्तिवदियमपि शेषविषयैव स्यात्॥ १४॥

**भावबोधिनी**

वाली क्रिया क्रियार्थक मानी जाती है। भविष्य में होने वाली क्रिया के वाचक से तुमुन् और ण्वुल् होते हैं, उसी में यह चतुर्थी विभक्ति करता है।] क्रियार्थ क्रिया जिसकी उपपद है, ऐसे स्थानी = अप्रयुज्यमान धातु के कर्म कारक में चतुर्थी विभक्ति होती है। यह द्वितीया विभक्ति का अपवाद सूत्र है। उदा०—एधेभ्यः व्रजति, [ लकड़ियाँ लेने के लिये जाता है। ] पुष्पेभ्यः व्रजति [ फूल लेने के लिये जाता है। ]

क्रियार्थोपपद का—इसका ग्रहण किसलिये है? प्रविश पिण्डीम् [ घर में प्रवेश करो, पिण्डी को खाओ ] प्रविश तर्पणम् [ घर में प्रवेश करो, पिण्डी को खाओ। ] इनमें भक्षि धातु स्थानी = अप्रयुक्त है, किन्तु क्रियार्थोपपद नहीं है। [ अतः कर्म पिण्डी में चतुर्थी नहीं होती है। ] कर्म में—इसका क्या प्रयोजन है? एधेभ्यो व्रजति शकटेन [ बैलगाड़ी से लकड़ी लेने जा रहा है। यहाँ 'शकट' में चतुर्थी नहीं होती है क्योंकि वह करण है, कर्म नहीं। ] स्थानी अप्रयुज्यमान का—इसका क्या फल है? एधान् आहर्तुं व्रजति। [ यहाँ तुमुन्नन्त का प्रयोग है। अतः चतुर्थी नहीं होती है। ]

विमर्श—प्रस्तुत सूत्र कर्म में चतुर्थी विभक्ति करता है। यह कर्म तुमुन्नन्त क्रिया का होना चाहिये और तुमुन्नन्त का प्रयोग नहीं होना चाहिये, गम्यमान होना चाहिये। तुमुन् प्रत्यय वहीं होता है जहाँ एक कोई क्रिया किसी दूसरी

---

१. प्रविश जलम्, तर्पणं पिब-इति वाक्यम्, करोतिः स्थानीति च केषुचित् पुस्तकेषु पाठः, तत्र प्रविश जलं तर्पणं कुर्विति वाक्ययोजना।

### ४७६. तुमर्थाच्च भाववचनात् ॥ १५ ॥ (५८२)

तुमुना समानार्थस्तुमर्थः। **तुमर्थभाववचनप्रत्ययान्तात्** प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति। **'भाववचनाश्च'** (३.३.११) इति वक्ष्यति, तस्येदं ग्रहणम्। **पाकाय व्रजति। त्यागाय व्रजति। भूतये व्रजति।** संपत्तये व्रजति।

तुमर्थादिति किम्? पाकः, त्यागः, रागः। भाववचनादिति किम्? कारको (३.३.१०) व्रजति॥

न्यासः

**तुमर्थाच्च भाववचनात्॥ तुमुना समानार्थ इति।** वृत्तौ गम्यमानत्वात् समानशब्दो न प्रयुक्तः। **तुमर्थभाववचनप्रत्ययान्तादिति।** तुमर्थो भाववचनप्रत्ययोऽन्तो यस्य स तथोक्तः। **भाववचनाश्चेति वक्ष्यति, तस्येदं ग्रहणमिति।** स एव हि तुमर्थो भाववचनः सम्भवति, नान्यः। **पाकाय व्रजतीति।** यद्यप्यत्र तादर्थ्यं गम्यते तथापि चतुर्थी न भवति; तस्मिन्नेव तादर्थ्ये विहिते न भावप्रत्ययेन तस्योक्तत्वात्, यथा—पाचको व्रजतीत्यत्र न भवति। तेन चतुर्थीविधानार्थमिदमारब्धम्। अथ वा—भाववचनादेव यथा स्यात्, इह मा भूत्—पाचको व्रजतीति नियमार्थमेतत्। **पाकः, त्यागः, राग इति** भावे घञ्। ननु च क्रियार्थोपपदग्रहणमनुवर्त्तिष्यते, तदर्थाद्विभक्तेर्विपरिणामं कृत्वैवमभिसम्बन्धः करिष्यते—क्रियार्थोपपदाद्भाववचनादिति। यस्तु क्रियार्थोपपदो

पदमञ्जरी

**तुमर्थाच्च भाववचनात्॥ तुमुना समानार्थस्तुमर्थ इति।** वस्तुव्याख्यानमेतत्, विग्रहस्तु तुमर्थोऽस्येति तुम्शब्देन तुमर्थो लक्ष्यते। **तुमर्थभाववचनप्रत्ययान्तादिति।** तुमर्थो भाववचनः प्रत्ययोऽन्तेऽस्य तत्तथोक्तम्। **तस्येदं ग्रहणमिति।** स एव हि तुमर्थो भाववचनः, नान्यः। **पाकाय व्रजतीति।** नन्वत्र तादर्थ्यैव सिद्धम्; न चैवं पाचको व्रजतीत्यभाववचनादपि प्रसङ्गः, अत्र कर्त्ता प्रधानं न च तं प्रति तादर्थ्यमस्ति, किं तु प्रकृत्यर्थं प्रति; एवं तर्हि भाववचनेनैव तादर्थ्यस्य द्योतितत्वाच्चतुर्थी न सिद्ध्यतीति सूत्रारम्भः। न ह्येतल्लक्षणनेत्रो ज्ञातुमर्हति—घञादीनां चतुर्थीसापेक्षाणामेव तादर्थ्यप्रकाशने शक्तिरिति।

तुमर्थग्रहणं शक्यमकर्त्तुम्, कथम्? पाकः, त्यागः, राग इति क्रियार्थोपपदग्रहणमनुवर्त्तिष्यते। नन्वेतत् षष्ठीनिर्दिष्टम्, पञ्चमीनिर्दिष्टेन चेहार्थः; अर्थाद्विपरिणामो भविष्यति, **भाववचनादित्यनेन सम्बन्धात्।** न वै

भावबोधिनी

क्रिया के लिये होती है जैसा कि सूत्र है—'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्। (पा० सू० ३।३।१०) जैसे 'एधान् आहर्तुं व्रजति' यहाँ 'आहर्तुम्' इस तुमुन्नन्त का प्रयोग न करें, तब इसके कर्म 'एध' में चतुर्थी होती है—एधेभ्यः व्रजति। परन्तु चतुर्थी के कारण तुमुन्नन्त का अर्थ प्रतीत हो जाता है। अतः इस वाक्य का अर्थ होता है - लकड़ियाँ लेने के लिये जाता है॥ १४॥

तुमुन् के समान अर्थवाला तुमर्थ है, तुमर्थ भाववचन प्रत्यय जिसके अन्त में है ऐसे प्रातिपदिक से चतुर्थी होती है। [भाववचन यह सामान्य नहीं लिया जाता है अपितु आगे] 'भाववचनाश्च' (पा० सू० ३।३।११) यह सूत्र कहा जायगा, उसी का ग्रहण है। उदा०—पाकाय व्रजति [पाक करने के लिये जाता है।] त्यागाय व्रजति [त्याग = दान करने के लिये जाता है।] भूतये व्रजति [भूति के लिये जाता है।] सम्पत्तये व्रजति [सम्पत्ति के लिये जाता है।]

तुमर्थ - तुमुन् के समान अर्थ वाले से—इसका ग्रहण किस लिये है? पाकः, त्यागः, रागः, [यहाँ सामान्य भाववाची हैं] भाववाची प्रत्ययान्त से - इसका क्या फल है? कारको व्रजति। [यह तुमर्थक होने पर भी भाववाचक न होकर कर्तृवाचक ण्वुल्प्रत्ययान्त है, अतः यह सूत्र नहीं लगता है।]

**विमर्श** इस सूत्र की प्रवृत्ति के सम्बन्ध में निम्न बातें समझ लेनी चाहिये—

(१) जिन भाववाचक प्रत्ययों का अर्थ तुमुन् प्रत्यय के अर्थ के समान है उन्हीं का प्रयोग हो।

४७७. नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ॥ १६ ॥ ( ५८३ )

**नमः, स्वस्ति, स्वाहा, स्वधा, अलम्, वषट्–इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः ( मै० १.२.१३ )। स्वस्ति प्रजाभ्यः। स्वाहाऽग्नये ( तै० १.८.१३.१ )। स्वधा पितृभ्यः ( मै० १.२.१३ )। अलं मल्लो मल्लाय ( म० भा० )। अलमिति—पर्याप्त्यर्थग्रहणम्-प्रभुर्मल्लो मल्लाय, शक्तो मल्लो मल्लाय ( म० भा० )। वषडग्नये। वषडिन्द्राय ( ऋ० ७.९७.७ )। चकारः पुनरस्यैव समुच्चयार्थः, तेनाशीर्विवक्षायामपि**

**न्यास॥**

भाववचनः स तुमर्थ एवेति किं तुमर्थग्रहणेन ? नैतदस्ति; न हि क्रियार्थोपपदग्रहणं भाववचनस्य विशेषणं सम्भवति। किं तर्हि ? धातोरेव। तस्मात् तुमर्थग्रहणं कर्त्तव्यमेव। **कारको व्रजतीति**—'तुमुन्ण्वुलौ' इति ण्वुल्। भवत्ययं तुमर्थो न तु भाववचनः, किं तर्हि ? कर्तृवचनः, तेन तदन्तान्न भवति ॥ १५ ॥

**नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ॥ अलमिति पर्याप्त्यर्थस्य ग्रहणमिति।** 'तस्मै प्रभवति सन्तापादिभ्यः' इत्यलंशब्दसमानार्थेन प्रभवतिशब्देन योगे चतुर्थीनिर्देशाल्लिङ्गात्। ननु चास्माल्लिङ्गादर्थस्येदं ग्रहणम्, न तु शब्दस्येत्येषोऽर्थः प्रतीयते; न तु पर्याप्त्यर्थस्येत्येषोऽर्थः। तथा च भूषणप्रतिषेधयोरपि ग्रहणं स्यात्। एवञ्च कन्यामलंकुरुते, अलं बाले रोदनेनेत्यादावपि चतुर्थी स्यात्, नैष दोषः; सामर्थ्यात् पर्याप्त्यर्थस्यैव ग्रहणं भविष्यति, कथम् ? कन्यामलंकुरुते इत्यत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति 'कर्मणि द्वितीया' इति द्वितीययैव भवितव्यम्। अलं बाले रोदनेनेत्यत्राप्यत एव हेतोः करणे तृतीययैव। अत्र हि रोदनं करणभावमापन्नमेव प्रतिषेधेन सम्बध्यत इति सामर्थ्यात् पर्याप्त्यर्थस्य ग्रहणं सम्पद्यते। **चकारः पुनरस्यैव समुच्चयार्थ**

**पदमञ्जरी**

भाववचनस्य क्रियार्थोपपदत्वं सम्भवति, किं तर्हि ? धातोः। धातोर्भाववचनस्यासम्भवादेवं विज्ञास्यते—क्रियार्थोपपदाद्धातोर्यो विहितो भाववचन इति ॥ १५ ॥

**नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ॥ अलमिति पर्याप्त्यर्थग्रहणमिति।** अलमित्यर्थग्रहणं तत्रापि पर्याप्तिग्रहणमित्यर्थः। तत्र तावदर्थग्रहणं तस्मै प्रभवतीति निर्देशात्, इह चालं कुरुते कन्यामिति 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीया भविष्यति। एवमलमोदनेनेत्यत्रापि करणे तृतीया, ओदनेन न किञ्चित्साध्यमित्यर्थावगमात्, तेन भूषणप्रतिषेधयोरग्रहणात्पर्याप्तेरेव ग्रहणम्। **चकारः पुनरित्यादि।** अन्यथा स्वस्ति-

**भावबोधिनी**

(२) तुमुन् प्रत्यय तो भाव अर्थ में ही होता है, पुनः 'भाववचनात्' यह कथन विशेष अभिप्राय वाला है। वह यह है कि 'भाववचनाश्च' पा० सू० ३।३।११ इस अधिकार सूत्र के अन्तर्गत जिन प्रत्ययों का विधान है उन्हें ही लेना चाहिये, अन्य सामान्य भाववाची प्रत्ययों को नहीं।

(३) यहाँ तुमुन् के समानार्थक भावप्रत्यय का ग्रहण है। चूँकि तुमुन् प्रत्यय से तादर्थ्य की प्रतीति हो जाती है अतः इन भावप्रत्ययों से भी तादर्थ्य की प्रतीति होती है। इस कारण इस प्रकार के प्रत्ययवाले शब्दों के योग में तादर्थ्य-चतुर्थी सम्भव नहीं है क्योंकि 'उक्तार्थानाम् अप्रयोगः।' इस स्थिति में प्रातिपदिकार्थमात्र में प्रथमा प्राप्त होती है, उस प्रथमा को रोक कर चतुर्थी करने वाला—यह सूत्र है। यही सबसे महत्त्वपूर्ण बात है ॥ १५ ॥

नमः, स्वस्ति, स्वाहा, स्वधा, अलम् और वषट्—इनके योग में चतुर्थी होती है। क्रमशः उदा०—नमो देवेभ्यः। [देवताओं के लिये नमस्कार।] स्वस्ति प्रजाभ्यः [प्रजा के लिये कल्याण।] स्वाहा अग्नये [अग्नि के लिये स्वाहा।] स्वधा पितृभ्यः [ पितरों के लिये स्वधा।] अलं मल्लः मल्लाय [ यह पहलवान उस पहलवान के किये समर्थ है। ] अलम् – यह पर्याप्ति = समर्थता अर्थवाले का ग्रहण है [ निषेध अर्थवाले का नहीं ] प्रभुः मल्लः मल्लाय; शक्तः मल्लः मल्लाय, [ पहलवान पहलवान के लिये समर्थ है। ] वषट् इन्द्राय। [ अग्नि के लिये वषट् = स्वाहा। इन्द्र के लिये वषट् = स्वाहा। सूत्र में चकार का प्रयोग पुनः इसी चतुर्थी के समुच्चय के लिये है, इस कारण आशीर्वाद अर्थ कहने

षष्ठीं बाधित्वा चतुर्थ्येव भवति—स्वस्ति गोभ्यो भूयात् । स्वस्ति ब्राह्मणेभ्यः ( म० भा० ) ॥

**४७८. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ १७ ॥ ( ५८४ )**

**मन्यतेः कर्मणि = मन्यकर्मणि । मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने । अनादरः = तिरस्कारः । न त्वा तृणं मन्ये न त्वा तृणाय मन्ये । न त्वा बुसं मन्ये । न त्वा बुसाय मन्ये ।**

**मन्यतिग्रहणं किम् ? न त्वा तृणं चिन्तयामि । विकरणनिर्देशः किमर्थः ? न त्वा तृणं मन्वे ।**

न्यासः

**इति ।** यदेतन्नमःप्रभृतियोगे चतुर्थीविधानं तत्समुच्चयार्थश्चकारः । तेन पुनर्विधानात् 'चतुर्थी चाशिष्यायुष्य' इत्यादिनाशीर्विवक्षायां पक्षे या षष्ठी विधीयते तामपि बाधित्वा चतुर्थ्येव भवति । यद्येवम्, कारकविभक्तिमपि बाधित्वा 'कन्यामलंकुरुते' इत्यादौ चतुर्थ्येव स्यात्, ततश्च यदुक्तम्-सामर्थ्यात् पर्याप्त्यर्थस्यैव ग्रहणं भविष्यतीति, तन्नोपपद्यते ? नैष दोषः; कारकविभक्तेर्बलीयस्त्वात् पुनर्विधानस्य चान्यत्र चरितार्थत्वात् । अथ वा—वक्ष्यमाणा विभाषा सिंहावलोकितन्यायेनेहाप्युपतिष्ठते । तेन 'कन्यामलंकुरुते' इत्यादौ चतुर्थी न भवति ॥ १६ ॥

**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ अनादरस्तिरस्कार इति ।** अत्रैवानादरशब्दस्य रूढत्वात् । तिरस्कारः = परिभवः, अवज्ञानमित्यर्थः । **न त्वा तृणाय मन्य इति ।** तृणादपि निकृष्टतरं त्वामहं मन्य इत्यर्थः । **विकरणनिर्देशः किमर्थ इति ।** 'मनिकर्मणि' इति कस्मान्नोक्तम्, एवं हि लघु सूत्रं भवतीति ? 'मन ज्ञाने' इत्यस्य दैवादिकस्य ग्रहणं यथा स्यात्, 'मनु बोधने' इत्यस्य तानादिकस्य ग्रहणं मा भूदित्येवमर्थो विकरणनिर्देश इति दर्शयितमाह—**न त्वा तृणं मन्व इति ।**

पदमञ्जरी

योगे चतुर्थ्या अवकाशः—स्वस्ति जाल्माय, जाल्मत्वादाशीरभावाद् भूतकथनमेतत्; कुशलार्थैराशिषि चतुर्थी चेत्यस्यावकाशः—अन्ये कुशलार्थाः, कुशलं देवदत्तस्य कुशलं देवदत्ताय; स्वस्ति गोभ्यो भूयात्, उभयप्रसङ्गे परत्वात्पक्षे षष्ठी स्यात् ॥ १६ ॥

**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ मन्यतेः कर्म मन्यकर्मेति ।** 'मन ज्ञाने' इत्यस्य दैवादिकस्य धातोः श्यना उपलक्षणम्, न तु प्रयोगस्थस्य श्यनन्तस्यानुकरणमित्यर्थः । तेन श्यनोऽभावेऽपि भवति—'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थत्' ( भट्टि० २.३६ ) इति । श्यना तु तानादिकस्य 'मनु अवबोधने' इत्यस्यैव निरासः ।

**अनादरस्तिरस्कार इति ।** न त्वादराभावमात्रम्, कथम् ? अनृतादिवन्नञः प्रतिपक्षवाचित्वादिति भावः ।

भावबोधिनी

की इच्छा में भी षष्ठी का बाध करके इस सूत्र से चतुर्थी ही होती है—स्वस्ति गोभ्यः भूयात्, स्वस्ति ब्राह्मणेभ्यः भूयात् । [ गायों के लिये कल्याण हो, ब्राह्मणों के लिये कल्याण हो । ]

**विमर्श**—देवताओं के उद्देश्य से कोई पदार्थ देने में 'स्वाहा' का प्रयोग होता है और पितरों के उद्देश्य से किसी पदार्थ के देने में 'स्वधा' शब्द का प्रयोग होता है ।

'.........वषड्योगात्' इतना पर्याप्त था 'च' का प्रयोग समुच्चय के लिये किया गया है । अतः इनके योग में सदैव चतुर्थी ही होती है । इस कारण 'चतुर्थी चाशिष्यायुष्य०' ( पा० सू० २।३।७३ ) से प्राप्त पाक्षिक षष्ठी का बाध करके केवल चतुर्थी ही होती है ॥ १६ ॥

मन्यते के कर्म में = मन्यकर्म में । अनादर अर्थ की प्रतीति होने पर प्राणी को छोड़कर मन्य धातु के कर्म में विकल्प से चतुर्थी होती है । अनादर = तिरस्कार । उदा०—न त्वा तृणं मन्ये न त्वा तृणाय मन्ये । [ मैं तुम्हें तिनका भी नहीं मानता हूँ । ] न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये । [ मैं तुम्हें भूसा भी नहीं मानता हूँ । यहाँ तृण और बुस मन्य धात्वर्थ क्रिया के कर्म हैं और प्राणी नहीं है । अतः कर्म में चतुर्थी और द्वितीया दोनों होती हैं । ]

**अनादर इति किम्?**

**अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम्।**
**अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति॥**

**अप्राणिष्विति किम्? न त्वा शृगालं मन्ये।**

**॥ यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम् ॥ ( म० भा० २.३.१७ )। व्यवस्थितविभाषा च ज्ञेया। न त्वा नावं मन्ये। यावत्तीर्णं न नाव्यम्। न त्वाऽन्नं मन्ये। यावन्न भुक्तं श्राद्धम्। प्राणिषु तूभयम्—न त्वा काकं मन्ये ( म० भा० )। न त्वा शृगालं मन्ये। इह चतुर्थी द्वितीया च भवतः। न त्वा श्वानं मन्ये। न त्वा शुने मन्ये ( म० भा० )। युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म? व्यवस्थितविभाषा-**

न्यासः

**अश्मानं दृषदं मन्य** इत्यादौ यथाव्यवस्थितस्य वस्तुनः स्वरूपमाविष्क्रियत इत्यत्रानादरो न गम्यते।

**यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यमिति**। अप्राणिग्रहणमपनीयानावादिग्रहणं कर्त्तव्यमित्यर्थः। यथान्यासे हि न त्वा नावं मन्य इत्यत्र चतुर्थी स्यात्। न त्वा शुने मन्य इत्यत्र चतुर्थी न स्यादित्यभिप्रायः॥१७॥

पदमञ्जरी

मन्यकर्मणि प्रकृष्टकुत्सितग्रहणमिति वार्त्तिकम् ( म० भा० २.३.१७ वा० १ ), यद्वाचिनश्चतुर्थी विधीयते ततः प्रकर्षेण यदि कुत्सा प्रतिपादयितुमिष्यते तदा चतुर्थी भवति, न तु सामान्यविवक्षायाम्। तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं संपद्यत इति मत्वाह—**न त्वा तृणायेति**। 'मन्यकर्मण्यनादर उपमाने विभाषा प्राणिषु' इति **आपिशलिरधीते स्म**, न तत्र प्रतिषेधापेक्षा, तथा च **भट्टिप्रयोगो** निदर्शनीयः।

**अश्मानं दृषदमित्यादि**। तत्त्वाख्यानमेतत्। **यस्य माता न पश्यतीति**। दर्शनयोग्यम्। **व्यवस्थित-विभाषा चेति**। ननु येषु प्राणिषु नेष्यते, ते नावादयो भविष्यन्तीति किं व्यवस्थितविभाषया? **वृत्तिकार एवात्र** साक्षात्प्रयोजनं वक्ष्यति।

**न त्वा नावमिति**। नावा तार्यमुदकं नाव्यं तद्यदेव तीर्णं तदेव नाव्यमपि सन्तीं त्वां नाहं नावं मन्ये,

भावबोधिनी

मन्यते—इस क्रियापद के ग्रहण का क्या प्रयोजन है? न त्वां तृणं चिन्तयामि। [ मैं तुम्हें तिनका भी नहीं सोचता हूँ। यहाँ मन्य धातु का प्रयोग नहीं है चिन्त धातु का है। ] श्यन् विकरण का निर्देश किस लिये है? न त्वां तृणं मन्वे [ तुम्हें तृण भी नहीं मानता हूँ। यहाँ श्यन् विकरणयुक्त 'मन्य' का उल्लेख होने से दिवादिगणीय 'मन ज्ञाने' इसी का ग्रहण है, न कि तनादिगणीय 'मनु अवबोधने' इसका। अतः प्रत्युदाहरण में केवल द्वितीया ही होती है। ] अनादर = तिरस्कार अर्थ प्रतीत होने पर—इसका क्या फल है?

'दृषद् = पत्थर की चक्की को पत्थर मानता हूँ, उलूखल को काष्ठ मानता हूँ, जिसकी माता नहीं देखती है, उसको अन्धी का पुत्र मानता हूँ।'

[ इस श्लोक में वास्तविक बात कही गयी है। अनादर की प्रतीति नहीं होती है। अतः चतुर्थी नहीं होती है। ]

'अप्राणी-प्राणी से भिन्न में' इसका क्या प्रयोजन है? न त्वां शृगालं मन्ये [ तुम्हें सियार भी नहीं मानता हूँ। सियार एक प्राणी है। अतः इसमें चतुर्थी नहीं होती है। ]

* सूत्र में जो 'अप्राणिषु' ऐसा कहा गया है उसको 'अनावादिषु' = नौ आदि से भिन्न में, ऐसा कहना चाहिये। * इसको व्यवस्थित-विभाषा समझना चाहिए, [ सार्वत्रिक नहीं ]। उदा०—न त्वा नावं मन्ये यावत् तीर्णं न नाव्यं जलम् [ तुम्हें नौका नहीं मानता क्योंकि जितना जल पार कर लिया वह नौका द्वारा पार करने योग्य नहीं था, अर्थात् बिना नौका के पैदल ही पार किया जा सकता था। ] न त्वाऽन्नं मन्ये, यावत् न भुक्तं श्राद्धम् [ तुम्हें अन्न नहीं मानता हूँ क्योंकि ब्राह्मणों ने श्राद्ध खाया नहीं है। ] प्राणियों में तो दोनों विभक्तियाँ होती हैं। उदा०— न त्वा काकं मन्ये न त्वा शृगालं मन्ये [ तुम्हें कौआ भी नहीं मानता हूँ। तुम्हें सियार भी नहीं मानता हूँ। इनमें चतुर्थी और द्वितीया दोनों

विज्ञानादेव न भवति ॥

४७९. कर्तृकरणयोस्तृतीया ॥ १८ ॥ ( ५६१ )

**कर्त्तरि करणे च कारके तृतीया विभक्तिर्भवति । देवदत्तेन कृतम् । यज्ञदत्तेन भुक्तम् । करणे—दात्रेण लुनाति । परशुना छिनत्ति ।**

*** तृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम् * ( म० भा० २.३.१८ वा० १ ) । प्रकृत्याऽभिरूपः । प्रकृत्या दर्शनीयः । प्रायेण याज्ञिकः । प्रायेण वैयाकरणः । गार्ग्योऽस्मि गोत्रेण । समेन धावति । विषमेण धावति ।**

न्यासः

**कर्तृकरणयोस्तृतीया ॥ तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानमिति ।** किं पुनः कारणं न सिद्धयति ? कर्तृकरणयोरभावात् । तयोस्त्वभावः प्रकृत्याभिरूप इत्यादौ क्रियाया अविद्यमानत्वादित्यभिप्रायः । प्रातिपदिकेनात्र सम्बन्धमात्रं प्रतीयते, न तु काचन क्रिया । न च तया विना कर्तृकरणे सम्भवतः; तयोः क्रियापेक्षत्वात् । ततश्च सम्बन्धलक्षणा षष्ठी स्यात्—प्रकृतेरभिरूपः; प्रायस्य याज्ञिकः, गोत्रस्य गार्ग्य इति । **समेन धावति, विषमेण धावतीति** । यद्यप्यत्र क्रियाप्यस्ति, तथापि नात्र समविषमशब्दौ करणत्वेन विवक्षितौ, किन्तर्हि ? कर्मत्वेन, ततश्च द्वितीया स्यात् । **द्विद्रोणेन धान्यं क्रीणातीत्यादावपि** द्विद्रोणादीनां कर्मत्वेन विवक्षितत्वाद्

पदमञ्जरी

प्रयोजनस्य निष्पन्नत्वादिति भावः । एवं यावन्न भुक्तं श्राद्धमित्यत्रापि द्रष्टव्यम् । **प्राणिषु तूभयमिति** । विषयविभागेन **एतदपीति** । एतदेव साक्षात्प्रयोजनमन्यत्र नावादित्वादेव सिद्धेरित्यवोचाम ॥ १७ ॥

**कर्तृकरणयोस्तृतीया ॥ प्रकृत्याभिरूप इति** । क्रियाया अश्रवणात्कर्तृकरणयोरभावात्षष्ठी प्राप्नोति ।

**प्रायेण याज्ञिक इति** । प्रायशब्दो बह्वर्थः. बहवो याज्ञिका इत्यर्थः । **गार्ग्योऽस्मीति** । प्रथमा षष्ठी वा प्राप्नोति । **समेनेति** । अत्र द्वितीया प्राप्नोति । **द्विद्रोणेनेति** । द्वयोर्द्रोणयोः समाहारो द्विद्रोणं पात्रादिः, द्वौ द्रोणौ कृत्वेत्यर्थः, अत्रापि द्वितीया प्राप्नोति । **पञ्चकेनेति** । पञ्च परिमाणमस्य पञ्चकः सङ्घः, तत्र संघसंघिनोर-

भावबोधिनी

होती हैं—न त्वा श्वानं मन्ये, न त्वा शुने मन्ये । तुम्हें कुत्ता भी नहीं मानता हूँ । युष्मद् से भी ये विभक्तियाँ क्यों नहीं होती हैं क्योंकि यह [युष्मत्पदार्थ] भी तो मन्य का कर्म है ? व्यवस्थित विभाषा-विज्ञान के कारण ही [युष्मद् से नहीं होता है ।]

**विमर्श**—पाणिनि ने 'अप्राणिषु' ऐसा लिखकर प्राणिमात्र में निषेध किया है परन्तु वार्तिककार ने इसके स्थान पर 'अनावादिषु' यह रखने का प्रस्ताव किया है । व्याख्यान-ग्रन्थों के आधार पर 'अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेषु इति' ऐसा निष्कर्ष माना है । सिद्धान्तकौमुदी में ऐसा ही उल्लेख है । इसको व्यवस्थितविभाषा मान कर लक्ष्यों में कहीं केवल द्वितीया और कहीं पर द्वितीया तथा चतुर्थी इन दोनों को करना चाहिये ।

काशिकाकार ने भाष्योक्त उदाहरण रख दिये हैं, इनका आशय समझने के लिये उद्द्योतकार की व्याख्या परम सहायक है—

''भाष्ये— न त्वां नावं मन्ये यावत् तीर्णं न नाव्यमिति ।' यावद् यतो नाव्यं = नावा स्वल्पनौकया तार्यमपि त्वया महत्यापि न तीर्णमतस्त्वां नावमुडुपमपि न मन्ये इत्यर्थः । नौशब्देनोडुपं स्वल्पनौकोच्यते । त्वां शब्दार्थस्तु महती नौः । एवं ह्यनादरो भवतीत्याहुः । एवम्—न त्वाऽन्नं मन्ये यावद् भुक्तं न श्राद्धम्—इत्यस्य यतः श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामपूपरूपमन्नमोदनमपि न मन्ये इत्यर्थः । ( उद्द्योत २।३।१७ )

इसके लक्ष्यों में व्यवस्थित विकल्प मान कर उपपत्ति कर लेनी चाहिये ॥ १७ ॥

[ अनुक्त ] कर्ता और करण कारक में तृतीया विभक्ति होती है । उदा०—देवदत्तेन कृतम् । यज्ञदत्तेन भुक्तम् [इन वाक्यों में क्त प्रत्यय द्वारा भूतकाल और कर्म अर्थ उक्त है, कर्ता अनुक्त है । अतः 'स्वतन्त्रः कर्ता' (पा० सू० १।४।५४) से कर्तृ संज्ञा करने के बाद प्रस्तुत सूत्र से 'देवदत्त' तथा 'यज्ञदत्त' में तृतीया विभक्ति होती है ।] करण में तृतीया के

**द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । साहस्रेणाश्वान् क्रीणाति ( म० भा० ) ॥**

**न्यासः**

**द्वितीयैव स्यात्** । **द्विद्रोणेन धान्यं क्रीणातीति** द्वौ द्वौ द्रोणौ कृत्वा धान्यं क्रीणातीत्ययमर्थो विवक्षितः । **पञ्चकेन पशून् क्रीणातीति** । पञ्च परिमाणमस्य पशुसंघस्य पञ्चकः संघः । पञ्चकं संघं कृत्वा पशून् क्रीणातीत्यर्थः । एवं **साहस्रेणाश्वान् क्रीणातीति** । साहस्रं संघं कृत्वा । सहस्रं सहस्रं कृत्वेत्यर्थः । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—प्रतीयमानापि क्रिया कारकाणां निमित्तं भवत्येव । इह च प्रकृत्याभिरूप इत्यत्र करोत्यर्थः प्रतीयते—प्रकृत्या कृतोऽभिरूप इति । एवं प्रायेण याज्ञिकः, प्रायेण वैयाकरण इत्यत्रापि करोत्यर्थो भवत्यर्थो वा गम्यते । गार्ग्योऽस्मि गोत्रेणेत्यत्रापि ज्ञाने भवने वा गम्यमाने गोत्रस्य करणत्वं प्रतीयते । समेन धावतीत्यादौ समेन विषमेण वा पथा करणेनेति गम्यते । द्विद्रोणेनेत्यत्रापि तृतीया न कर्मत्वं बोधयति । किं तर्हि ? करणत्वम् । अत्र हि द्विद्रोणाद्यर्थं हिरण्यादिकं मूल्यभूतं तादर्थ्याद् द्विद्रोणादिशब्देनोक्तम् । तस्यापि करणत्वमस्त्येवेति करण इत्येवं सर्वत्र तृतीया सिद्ध्यति ॥ १८ ॥

**पदमञ्जरी**

भेदविवक्षायां पशूनित्यनेनैतत्समानाधिकरणमित्यत्रापि द्वितीयैव प्राप्नोति । **साहस्रेणेति** । सहस्रपरिमाणः संघः साहस्रः । सर्वमन्यत्पूर्ववत् । इत्युपसंख्यानमारभमाणस्याभिप्रायः ।

प्रत्याख्यानं तु—इह तावत्प्रकृत्याभिरूप इति गम्यमानापि क्रिया करणादिव्यपदेशस्य निमित्तम् । इह च करोतिक्रिया गम्यते, करणान्तरव्युदासाय च प्रकृतेः करणत्वं विवक्षितं स्वभावेनायमभिरूपः कृतः, न वस्त्रालङ्कारादिनेत्यर्थः । **प्रायेणेत्ययमर्थः**—अस्मिन् ग्रामे ये विप्राः सन्ति ते बाहुल्येन यज्ञमधीयत इति तत्र याज्ञिकशब्दाभिधेयमध्ययनं प्रति बाहुल्यस्य करणत्वं संभूय यज्ञमधीयत इत्यर्थः । इह तर्हि कथं विशिष्टवेषं कंचित् दृष्ट्वाध्यवस्यति—प्रायेणायं याज्ञिक इति ? अत्राप्ययमर्थः—अस्मिंस्तावद्याज्ञिकानामाचारादिबाहुल्यमुपलभ्यते, अतोऽनेनाचारादिबाहुल्येन याज्ञिकोऽयं जनैर्ज्ञायत इति । तत्र प्रतीयमानज्ञानं प्रति करणत्वम् । केचित्—प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो ज्ञातमित्यस्यार्थे वर्त्तते इत्याहुः । दृश्यते च प्रायेण सामग्र्यविधौ गुणानामिति, 'प्रायेण निष्क्रामति चक्रपाणाविति' च । **गोत्रेणेति** । अनेनाहं ज्ञाये इति ज्ञानक्रियायामस्मीति भवनक्रियायां वा गोत्रस्य करणत्वम् । **समेनेति** । पथो गमने करणत्वं समेन पथेत्यर्थः । **द्विद्रोणेनेति** । द्विद्रोणाद्यर्थे मूल्ये द्विद्रोणादिशब्दस्तस्य च क्रयं प्रति कारणत्वम्, द्विद्रोणादीनां च मूल्यम्, तेन द्विद्रोणाद्येव क्रीयते इत्यर्थभेदोऽपि नास्ति ॥ १८ ॥

**भावबोधिनी**

उदा०—दात्रेण लुनाति [दाँती से काटता है । ] परशुना छिनत्ति [ फरसे से काटता है । इनमें 'साधकतमं करणम्' ( पा० सू० १।४।४२ ) सूत्र से 'दात्र' तथा 'परशु' की करणसंज्ञा होती है । तब अनुक्तकरण में प्रस्तुत सूत्र से तृतीया विभक्ति होती है । ]

* तृतीया के विधान में प्रकृति आदि को कहना चाहिये । * प्रकृत्या अभिरूपः [ प्रकृति = स्वभाव से सुन्दर ] प्रकृत्या दर्शनीयः [ स्वभाव से ही देखने योग्य ] । प्रायेण याज्ञिकः [ बहुत याज्ञिक ] । प्रायेण वैयाकरण [ बहुत से वैयाकरण अथवा मुख्यरूप से वैयाकरण ] गार्ग्यः अस्मि गोत्रेण [ गोत्र से गार्ग्य हूँ = मेरा गार्ग्य गार्ग्य है । ] समेन धावति [ सम = सीधा दौड़ता है ] विषमेण धावति [ टेढ़ा दौड़ता है । ] द्विद्रोणेन धान्यं क्रीणाति [ दो दो द्रोण अनाज खरीदता है । ] पञ्चकेन पशून् क्रीणाति [ पाँच पाँच करके पशुओं को खरीदता है । ] साहस्रेण अश्वं क्रीणाति [ हजार हजार करके घोड़े खरीदता है । ]

**विमर्श**—प्रकृत्यादि-गण में पठित शब्दों में कहीं षष्ठी, कहीं प्रथमा और कहीं द्वितीया विभक्ति प्राप्त होती है—इन सभी की अपवाद यह तृतीया की जा रही है ॥ १८ ॥

## ४८०. सहयुक्तेऽप्रधाने ॥ १९ ॥ ( ५६४ )

**सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिर्भवति। पुत्रेण सहागतः पिता। पुत्रेण सह गोमान्। पितुरत्र क्रियादिसंबन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्। सहार्थेन योगे तृतीयाविधानात्पर्याय-**

न्यासः

**सहयुक्तेऽप्रधाने** ॥ क्रियागुणद्रव्यसम्बन्धे हि सति सहयोगो भवति। अतः 'पुत्रेण सहागतः' इत्यादीनि क्रियादिसंबन्धे यथाक्रममुदाहरणानि **वृत्तिकृतोपन्यस्तानि**। सर्वत्र च पुत्रस्यात्राप्राधान्यमिति ततस्तृतीया भवति। ननु चोभयोरपि पितापुत्रयोः क्रियादिसम्बन्धः प्रतीयते, तत् कुतः पुत्रस्याप्राधान्यमितरस्य प्रधानभाव इत्याह - **पितुरत्रेत्यादि**। यद्युभयगतः क्रियादिसंबन्धः प्रतीयते, तथाप्युपात्तशब्दव्यापारापेक्षया प्रधाना-प्रधानव्यवस्था—शब्देन यस्य क्रियादिसंबन्धः प्रत्याय्यते तत् प्रधानमितरदप्रधानमिति। इह तु पितुरेव क्रियादिसंबन्धः प्रत्याय्यते शब्देन, न तु पुत्रस्य। कुत एतत्? शब्दशक्तिस्वाभाव्यात्। तथाविधा हि शब्द-शक्तिर्यतः पितुरेवात्र क्रियादिसम्बन्धं शक्नोति प्रतिपादयितुम्, न पुत्रस्येति। एवञ्चागत इत्यादावेकवचन-

पदमञ्जरी

**सहयुक्तेऽप्रधाने** ॥ क्रियागुणद्रव्यैर्द्वयोः सम्बन्धे सति सहशब्दस्य प्रयोगो भवति, अतः 'पुत्रेण सहागतः पिता' इत्यादीनि क्रियादिसम्बन्धे यथाक्रममुदाहरणान्युपन्यस्तानि। नन्वत्र सर्वतः सहार्थस्वभावादेव पितुः पुत्रस्य वा गमनादिना सम्बन्धः प्रतीयते, तत्कुतः पितुः प्राधान्यम्? केचिदाहुः—यस्य क्रियादिसम्बन्धो विशिष्टकालः प्रज्ञातः स यदान्यस्याप्रज्ञातविशिष्टकालक्रियासम्बन्धस्य तत्प्रतिपादनार्थमुपादीयते, यथा—'अयं पुरुषः कदागतः' इत्यपेक्षायाम् 'राज्ञा सहागतः' इति पुरुषागमनं विशिष्टकालमुपपादयितुं वाक्यं प्रवर्त्तत इति पुरुषस्य प्राधान्यम्, राज्ञस्तूपलक्षणत्वेनोपात्तत्वादप्राधान्यमिति। एवं तु 'भृत्यैः सह राजागतः' इत्यत्र न स्याद्, न हि भृत्यागमनं प्रसिद्धकालं येन तत्कालत्वं राजागमनस्य प्रतिपाद्येत। यत्र चोभयोरप्यज्ञातक्रियादिसम्बन्ध-स्तत्रापि न स्यात्—पुत्रेण सहागतः पितेति। तस्माद्वक्ष्यमप्राधान्यमत आह—**पितुरत्रेत्यादि**। पूर्वं प्रज्ञातोऽ-प्रज्ञातो वा यस्य क्रियादिसम्बन्धः शब्देनोच्यते तस्य प्राधान्यम्। यस्य तु सहार्थान्यथानुपपत्त्या प्रतीयते तस्याप्राधान्यम्।

कस्य पुनः शब्देनोच्यते? कस्य वा प्रतीयते? यस्य विवक्ष्यते। एतदुक्तं भवति—द्वयोस्तावत्क्रिया-सम्बन्धे सति सहशब्दस्य प्रयोगः, तत्र यदा द्वयोरपि क्रियादिसम्बन्धः शब्देनोच्यते—सहागतौ पितापुत्राविति, तदा द्वयोरपि प्राधान्यान्न भवति; यदा त्वेकस्य क्रियादिसम्बन्धं शब्देन प्रतिपिपादयिषत्यपरस्य सहार्थान्य-थानुपपत्त्या तदा तस्याप्राधान्यात्तद्वाचिनस्तृतीयेति। एवं च कृत्वा सह शाखया प्रस्तरं प्रहरतीति यद्यपि प्रस्तरस्य प्रहरणसम्बन्धः प्रज्ञातः, सूक्तवाकेन प्रस्तरं प्रहरतीति, शाखायास्त्वज्ञातः; तथाप्युक्तेन न्यायेन शाखाशब्दात्तृतीया सिद्ध्यतीति विभक्तिव्यत्यासो न वाच्यः। ननु पुत्रेण सहागत इत्यादौ पितुरेव कर्त्तुः क्तादिभिरभिधानम्, न त्वप्रधानस्य पुत्रादेस्तस्यापि तु सहार्थसामर्थ्यात्कर्तृत्वं प्रतीयत इत्यनभिहिते कर्तृकरण-योरिति तृतीया सिद्धा। इह तर्हि पुत्रेण सहागमनं पितुरिति 'कर्तृकर्मणोः कृति' इति षष्ठी प्राप्नोति, इह च तिलैः सह माषान्वपति तिलान्माषान्वपतीत्यर्थप्रतीतेर्द्वितीया प्राप्नोति, इह च पुत्रेण सह स्थूलः, पुत्रेण सह

भावबोधिनी

सह अर्थवाले शब्द के योग में अप्रधान में तृतीया होती है। उदा०—पुत्रेण सह आगतः पिता [ पुत्र के साथ पिता आया ] पुत्रेण सह गोमान् [ पुत्र के साथ गायों वाला पिता ]। इन उदाहरणों में पिता का आगमन आदि क्रिया के साथ सम्बन्ध शब्दतः [ क्त प्रत्यय द्वारा ] कहा जा रहा है परन्तु पुत्र का सम्बन्ध तो अर्थतः प्रतीत हो रहा है, अतः पुत्र की अप्रधानता है। सहार्थक शब्द के योग में तृतीया का विधान होने से पर्यायवाची शब्दों के योग में भी तृतीया होती

**प्रयोगेऽपि भवति—पुत्रेण सार्द्धमिति । विनापि सहशब्देन भवति, 'वृद्धो यूना' ( १.२.६५ ) इति निपातनात् ।**

**अप्रधान इति किम् ? शिष्येण सहोपाध्यायस्य गौः ॥**

**न्यासः**

मुपपद्यते; अन्यथा हि द्वित्वाद् द्विवचनं स्याद्, यथा–पितापुत्रावागताविति । **पुत्रस्य तु प्रतीयमानत्वादप्राधान्यमिति** । अर्थात् स पुनरर्थः सहार्थयोगः । स च भेदाधिष्ठानत्वात् पुत्रस्य क्रियादिसम्बन्धमन्तरेण न सम्भवतीति सम्बन्धस्य नान्तरीयकत्वात् पुत्रस्यापि क्रियादिसम्बन्धं प्रत्याययति । **सहार्थेन योगे तृतीयाविधानादिति** । कुतः पुनरेतदवगतं सहार्थेन योगे तृतीयाविधानमिति ? युक्तग्रहणात् । तस्य चैतदेव प्रयोजनम् - सहार्थेन योगे तृतीया यथा स्यात्, नान्यत् । **शिष्येण सहोपाध्यायस्य गौरिति** । अत्र द्रव्यसम्बन्धः षष्ठ्यैवोपाध्यायस्योच्यत इत्यस्य प्राधान्यम् । तत्रासत्यप्रधानग्रहणे प्रधानेऽप्युपाध्याये स्यात् । ननु च परत्वात् षष्ठी भविष्यति ? न भविष्यति; अशेषत्वात् । सति त्वप्रधानग्रहणे शेषोऽयं संपद्यत इति षष्ठी ।। १९ ।।

**पदमञ्जरी**

गोमानिति द्रव्यगुणसम्बन्धप्रतिपादन एव तात्पर्यमिति क्रियागन्धस्यैवाभावात्कर्तृगन्धोऽपि नास्तीत्यारभ्यमेवावश्यं सूत्रम् । **सहार्थेन योगे विधानादिति** । युक्तग्रहणादर्थग्रहणं लभ्यते, अन्यथा 'सहे प्रधाने' इत्येव वाच्यं स्यात् । **विनापि सहशब्देन वृद्धो यूनेति निपातनादिति क्वचित्पठ्यते ।**

इहाप्रधानवचनं प्रधाननिवृत्त्यर्थं क्रियते, पितुस्तृतीया मा भूदिति; तत्र प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वात्प्रथमा भविष्यति, नार्थोऽप्रधानवचनेनेति मन्यमानः पृच्छति—**अप्रधान इति किमिति । शिष्येण सहोपाध्यायस्य गौरिति** । यथात्राप्रधाने षष्ठीविषये तृतीया, एवं प्रधानेऽपि स्यादिति मन्यते । अत्राहुः - यथा ग्रामं न गच्छतीत्यादौ ग्रामगमनयोः पूर्वमभिसम्बन्धः पश्चान्नञा प्रतिषिध्यते, एवमुपाध्यायस्य पूर्वं गवा सम्बन्धः पश्चात्तत्सम्बन्धविशिष्टस्य गोः सहार्थेन योगः, अन्यथा कस्य सहत्वं प्रतिपाद्येत, अतो गवा सम्बन्धस्यान्तरङ्गत्वादुपाध्यायात् षष्ठी भविष्यतीति नार्थं एतेन ॥ १९ ॥

**भावबोधिनी**

है —पुत्रेण सार्द्धम् । कहीं-कहीं सहार्थक शब्द का योग न होने पर भी तृतीया होती है क्योंकि "वृद्धो यूना तल्लक्षणश्चेदेव विशेषः" ( पा० सू० १।२।६५) में ऐसा निपातन = प्रयोग है । [ सहार्थक के अभाव में भी 'यूना' में तृतीया है । ]

अप्रधान—यह किसलिये है ? शिष्येण सह उपाध्यायस्य गौः । [ शिष्य के साथ उपाध्याय की गाय । यहाँ उपाध्याय से तृतीया नहीं होती है । ]

**विमर्श**—इस सूत्र में 'अप्रधाने' का उल्लेख है । यह प्रधानता दो प्रकार की होती है (१) शाब्दी, (२) आर्थी । जब किसी शब्द से प्रतीत अर्थ के साथ सम्बन्ध होता है तब शाब्दी प्रधानता होती है । यही प्रधानता यहाँ ली जाती है । जैसे—पुत्रेण सह आगतः पिता । यहाँ 'आगतः' इस पद से प्रतीत होने वाली क्रिया का सम्बन्ध 'पिता' के साथ है, इसीलिये कर्तृ अर्थ उक्त होने से उसमें प्रथमा है । पुत्र के साथ नहीं है, अतः वह अप्रधान है । यदि पुत्र का भी आगमन क्रिया के साथ सम्बन्ध माना ही जाय तब तो 'पुत्रेण सह गोमान् पिता' आदि उदाहरण ही समझनी चाहिये । क्योंकि गोमान् का शाब्द-सम्बन्ध केवल पिता के साथ है । सह शब्द का अर्थ समानकालिकत्व आदि है ।

जो शब्दतः प्रधान होता है वह अर्थतः अप्रधान होता है । जैसे लोक में कहा जाय—'राम के साथ आप भी आइयेगा ।' यहाँ 'राम' प्रधान है 'आप' अप्रधान है । यह अप्रधानता यहाँ नहीं ली जाती है ।

'युक्ते' के बल से सहार्थक सभी शब्दों के योग में तृतीया हो जाती है । 'वृद्धो यूना' ( पा० सू० १।२।६५ ) युवा अपत्य के साथ प्रयुक्त होने पर वृद्ध शेष बचता है—इस सूत्र के अनुसार 'सह' का प्रयोग न होने पर भी तृतीया देखी जाती है ।। १९ ।।

## ४८१. येनाङ्गविकारः ॥ २० ॥ ( ५६५ )

**अङ्गशब्दोऽत्राङ्गसमुदाये शरीरे वर्तते, 'येन' इति च तदवयवो हेतुत्वेन निर्दिश्यते। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया विभक्तिर्भवति। अक्ष्णा काणः। पादेन खञ्जः। पाणिना कुणिः। अवयवधर्मेण समुदायो व्यपदिश्यते।**

**न्यासः**

**येनाङ्गविकारः** ॥ अयमङ्गशब्दोऽवयवे प्रसिद्धः स यदि तत्रैव वर्त्तमान इह गृह्यते तदात्रैव स्यात्—अक्षि काणमस्येति, अत्र ह्यक्ष्णः शरीरावयवस्य विकारः काणेन गुणेन द्योत्यत इति; इह तु न स्याद्—अक्ष्णा काण इति, न ह्यत्रावयवस्याक्ष्णो विकारो लक्ष्यते, किं तर्हि? अङ्गिनः समुदायस्येत्यत आह—**अङ्गशब्दोऽत्रेत्यादि**। अङ्गमस्यास्तीत्यङ्गः, अर्शआदित्वादच्प्रत्ययान्तोऽङ्गशब्द उपात्त इति दर्शयति; अङ्गिनोऽङ्गापेक्षत्वात्। यदपेक्षयाऽङ्गिनोऽङ्गित्वं तदेव येनेत्यनेन निर्दिश्यत इति दर्शयितुमाह—**येनेत्यादि**। विकृतेनेति सामर्थ्याल्लब्धमर्थं दर्शयति। न ह्यविकृतेनाङ्गिनोऽङ्गेन विकारो लक्ष्यते। **लक्ष्यत इति**। द्योत्यत इत्यर्थः। **अक्ष्णा काण इति**। अत्राक्ष्णावयवेन विकृतेनाङ्गिनो देवदत्तस्य विकारो लक्ष्यत इति ततस्तृतीया विभक्तिर्भवति। कथं पुनरवयवेन विकृतेन समुदायस्तथा व्यपदिश्यत इत्याह—**अवयवधर्मेणेत्यादि**। यथाढ्यमिदं नगरमित्यवयवधर्मेणाढ्यत्वेनात्र समुदायो व्यपदिश्यते, तथेहाप्यवयवेन विकृतेन समुदायो व्यपदिश्यत इति। कथं पुनरत्राक्षिशब्दस्य प्रयोगः क्रियते, यावता विनापि तेन काणत्वं गुणः समुदायस्य प्रतीयत एव? सत्यमेतत्; लौकिके शब्दप्रयोगे गुरुलाघवं प्रत्यनादरात्। यस्तु तदाद्रियते सोऽक्षिशब्दं न प्रयुङ्क्त एव।

**पदमञ्जरी**

**येनाङ्गविकारः** ॥ अङ्गशब्दोऽवयववाची प्रसिद्धः; ततश्चायं सूत्रार्थः स्याद्—येन गुणेनाङ्गस्याक्ष्यादेर्विकारस्ततस्तृतीयेति, ततश्चाक्षि काणमस्येत्यादावेव तु स्यात्, काणादेर्गुणवचनादेव च स्याद्; अक्ष्णा काण इत्यादावक्ष्यादेर्न स्यादित्यालोच्यान्यथा व्याचष्टे—**अङ्गशब्दोऽत्रेत्यादि**। अर्शआद्यच्प्रत्ययान्तः शरीरवचनोऽङ्गशब्दः सूत्रे उपात्त इत्यर्थः। **येनेति च** यदपेक्षमङ्गिनोऽङ्गित्वं स हेतुत्वेन निर्दिश्यते, हेतुत्वेनेतिवदन्येनेति हेतौ तृतीयेति दर्शयति। **विकृतेनेति**। सामर्थ्यादेवैतल्लभ्यते, न ह्यविकृतमङ्गमङ्गिनो विकारं प्रति हेतुः। **अक्ष्णा काण इति**। कथं पुनः पुरुषः काणः, यावताक्षिधर्मः काणता, तेनाक्ष्येव काणं भवति न पुरुषः? इत्याह—**अवयवधर्मेणेति**। तदेवं यदङ्गगतो विकारोऽवयवधर्मः समुदाय आरोपादङ्गिनः प्रतिपाद्यते, तत्र यदङ्गगतो विकारस्ततस्तृतीया भवति। कथं पुनरक्षिशब्दः प्रयुज्यते, यावता काणशब्दोऽक्षिगतमेव विकारमाचष्टे, तत्र काणो देवदत्त इत्युक्ते नैव संदेहो भवति—किं स्वयमेव काणः किं वाक्ष्णः काणतयेति, नाप्येवं संदेहः—किमक्ष्णः काणतयासौ काणः, किं वा पादस्येति, तदनर्थकोऽक्षिशब्दस्य प्रयोगः? एवं पादेन खञ्जः, पाणिना कुणिरित्यादौ पादादीनाम्? उच्यते—अक्ष्याद्युपक्रमे वाक्येऽक्ष्णेत्युक्ते न ज्ञायते किं निरूपयति? किं वा काण इति? तत्र निरूपयत्यादिनिवृत्तये काणशब्दप्रयोगः, यथा—द्वावानय, कौ तौ द्वावित्युक्ते ब्राह्मणाविति। **अङ्गविकार**

**भावबोधिनी**

इस सूत्र में 'अङ्ग' शब्द अङ्गसमुदाय शरीर अर्थ में प्रयुक्त है, और 'येन' इसके द्वारा उस शरीर का अवयव हेतुत्वरूप से निर्दिष्ट है। जिस विकृत = विकारयुक्त अङ्ग के कारण अङ्गी = शरीर का विकार लक्षित होता है, उस अङ्गवाचक से तृतीया विभक्ति होती है। उदा०—अक्ष्णा काणः [ आँख से काना ] पादेन खञ्जः [ पैर से लँगड़ा ] पाणिना कुणिः [ हाथ से लूला ] अवयववर्ती धर्म से अवयवी समुदाय का व्यवहार होता है।

**अङ्गविकार इति किम् ? अक्षि काणमस्य ( म० भा० ) ॥**

**४८२. इत्थम्भूतलक्षणे ॥ २१ ॥ ( ५६६ )**

**कञ्चित्प्रकारं प्राप्तः=इत्थम्भूतः, तस्य लक्षणमित्थम्भूतलक्षणम्, ततस्तृतीया विभक्तिर्भवति । अपि भवान् कमण्डलुना छात्त्रमद्राक्षीत् ( म० भा० ) ? छात्त्रेणोपाध्यायम् । शिखया परिव्राजकम् ।**

**न्यासः**

**अक्षि काणमस्येति ।** अत्रासत्यङ्गग्रहणे काणशब्दात् तृतीया स्यात् । लक्ष्यते हि काणत्वेन गुणेनाक्ष्णो विकारः समुदायस्यावयवस्य ॥ २० ॥

**इत्थम्भूतलक्षणे ॥** कञ्चित् प्रकारमित्यनेन इत्थमित्यस्यार्थमाचष्टे । तथा हि प्रकारवचने 'इदमस्थमुः' इति थमुप्रत्यये विहित इत्थमित्येतद्रूपं भवति । सामान्यस्य भेदको विशेषः प्रकार उच्यते । आपन्न इत्यनेन भूतशब्दस्यार्थमाचष्टे । तथा हि–'भू प्राप्तावात्मनेपदी' इत्यस्य चौरादिकस्य 'आ धृषाद्वा' इति यदा णिज् नास्ति तदा क्तप्रत्यये भूत इति रूपं भवति । तस्येतीत्थम्भूतस्य । **लक्षणमिति ।** लक्ष्यते चिह्न्यतेऽनेनेति लक्षणम् = चिह्नम् । **अपि भवान् कमण्डलुना छात्त्रमद्राक्षीदिति ।** अत्र मनुष्यत्वं सामान्यम्, तस्य च्छात्त्रत्वं प्रकारः; तं प्राप्तस्य च्छात्त्रस्य कमण्डलुर्लक्षणम् । **छात्त्रेणोपाध्यायमिति ।** मनुष्यत्वं सामान्यम्, तस्योपाध्यायत्वं

**पदमञ्जरी**

**इति किमिति ।** अङ्गग्रहणं प्रति प्रश्नः । क्वचित्तु तथैव पाठः । **अक्षि काणमस्येति ।** नन्वत्र परत्वात्प्रथमा भविष्यति, न; असत्यङ्गग्रहणेऽत्रैव स्यात् मुख्यो ह्यत्र विकारः । उदाहरणे तु गौणः, अवयवधर्मस्यावयविन्यारोपात् ॥ २० ॥

**इत्थम्भूतलक्षणे ॥** इदंशब्दात्सन्निहितवाचिनः प्रकारवचने थाल्, 'इदमस्थमुः' इति थमुप्रत्यये कृते इत्थमिति भवति । न चात्र किञ्चित्सन्निहितमस्तीतीत्थंशब्दः सन्निहितपरित्यागेन प्रकारविशेषमाचष्टे, 'भू प्राप्तावात्मनेपदी च', 'आ धृषाद्वा' इति णिजभावपक्षे गत्यर्थत्वात्कर्त्तरि क्तप्रत्ययस्तदाह—**कञ्चिदिति । तस्येति कर्मणि षष्ठी ।** लक्ष्यते येनेति **लक्षणम् ।** येन श्वेतच्छत्त्रादिना राजत्वादिप्रकारविशेषापन्नतयान्यो लक्ष्यते तदित्थम्भूतलक्षणम् । **तत्रेति ।** वर्त्तमानादित्यर्थः । **कमण्डलुना छात्त्रमद्राक्षीदिति ।** छात्त्रोपाध्याययोगच्छतोश्छात्त्रस्य हस्ते कमण्डलुर्भवति, कमण्डलुना छात्त्रोऽयमिति ज्ञातवानित्यर्थः । यद्येवम्, ईदृशे ज्ञाने कमण्डलोः करणत्वादेव तृतीया सिद्ध्यति ? एवं तर्हि यदायं प्रमाता प्रमिति-दशायामेवात्मनः प्रमितिविशेषं

**भावबोधिनी**

अङ्गी =शरीर का विकार —यह किसलिये है ? अक्षि काणम् अस्य [ इसकी आँख कानी है । आँख अवयव है, अवयवी = शरीर नहीं है । अतः इसके विकृत होने पर तृतीया नहीं होती है ।]

**विमर्श**—अङ्गानि सन्ति अस्य - इस विग्रह में मतुबर्थ में अर्श आदिभ्योऽच्" ( पा० सू० ५।२।१२७ ) सूत्र से अच् प्रत्यय होने के कारण अङ्ग शब्द अङ्गी का प्रतिपादक हो जाता है । अतः अङ्गविकार का भाव अङ्गी = शरीर का विकार लिया जाता है ।

अङ्ग के विकृत होने से अङ्गी को विकृत कैसे माना जाता है ? इसका उत्तर यह है कि अक्षि आदि अवयव में रहने वाले धर्म = विकार को लेकर समुदाय = अङ्गी को विकृत मान लिया जाता है क्योंकि अवयव जब विकृत है तब समुदाय स्वभावतः विकृत हो जाता है ॥ २० ॥

किसी प्रकार = विशेषण को प्राप्त = इत्थम्भूतः, उसका लक्षण = चिह्न —इत्थम्भूतलक्षण है, इसके प्रतिपादक शब्द से तृतीया विभक्ति होती हैं । उदा० - अपि भवान् कमण्डलुना छात्रम् अद्राक्षीत् ? [ क्या आपने कमण्डलु वाले छात्र को देखा ? ] छात्रेण उपाध्यायम् अद्राक्षीत् ? [ क्या छात्र वाले उपाध्याय को देखा ? ] शिखया परिव्राजकम् अद्राक्षीत् ? [ शिखा वाले संन्यासी को देखा ? ]

**इह न भवति कमण्डलुपाणिश्छात्र इति; लक्षणस्य समासेऽन्तर्भूतत्वात् ।**
**इत्थम्भूत इति किम् ? वृक्षं प्रति विद्योतनम् ॥**

## ४८३. संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥ ( ५६७ )

**न्यासः**

प्रकारः; तं प्राप्तस्योपाध्यायस्य लक्षणं छात्त्रः । **शिखया परिव्राजकमिति !** मनुष्यत्वं सामान्यम्, परिव्राजकत्वं प्रकारः, तं प्राप्तस्य परिव्राजकस्य लक्षणं शिखा ।

**लक्षणस्य समासेऽन्तर्भूतत्वादिति** । एकार्थीभावाद् बहुव्रीह्यर्थेन लक्षणार्थस्यापृथग्भावादित्यर्थः । बहुव्रीहावेव वाच्यत्वेनान्तर्भावो लक्षणस्येति गतार्थत्वात् तृतीया न भवति । **इत्थम्भूतलक्षण इति किम् ? वृक्षं** परि विद्योतते विद्युत् । नात्र विद्योतनत्वप्राप्तस्य कस्यचिद् वृक्षेण लक्षणम्, किं तर्हि ? विद्योतनस्यैव ॥ २१ ॥

**संज्ञोऽन्यतरस्यां कर्मणि** ॥ **मात्रा संजानीत इति** । 'ज्ञाजनोर्जा' इति जादेशः, 'ई हल्यघोः' इतीत्वम्, 'संप्रतिभ्यामनाध्याने' इत्यात्मनेपदम् । आध्याने तु 'अधीगर्थदयेशां कर्मणि' इति परत्वात् षष्ठी भवति—मातुः

**पदमञ्जरी**

प्रतिपादयितुं वाक्यं प्रयुङ्क्ते--कमण्डलुनायं छात्त्र इति, तदा ज्ञानक्रियाया अप्रतिभासादप्रतिपाद्यत्वाच्च करणत्वासम्भवः । उदाहरणं त्वेवं व्याख्येयम्—कमण्डलुना छात्त्र इत्येवं रूपं ज्ञानमभूदिति । कोऽर्थः ? अद्राक्षीदिति निर्दिष्टस्य द्रष्टुर्ज्ञानविशेषोऽत्र कथ्यते, न प्रयोक्तुरित्यर्थः ।

इह कमण्डलुपाणिश्छात्र इति बहुव्रीहौ कृते कमण्डलुशब्दात्तृतीया प्राप्नोति; न च प्रत्ययलक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधः, 'न ङिसंबुद्धयोः' इति लिङ्गात्; न च 'सुपो धातुप्रातिपदिकयोः' इति संप्रत्युत्पन्नायास्तृतीयाया लुग्लभ्यते, तस्याः समासप्रातिपदिकं प्रत्यनवयवत्वादित्यत आह—**इह न भवतीति** । **समासेऽन्तर्भूतत्वादिति** । समासार्थं प्रति गुणभूतत्वादित्यर्थः । इत्थम्भूतस्य लक्षणं यत्प्रधानं तत्र तृतीया । बहुव्रीहौ तु वर्त्तिपदानां स्वार्थोपसर्जनान्यपदार्थाभिधायित्वान्नास्ति प्राधान्यम् ॥ २१ ॥

**संज्ञोऽन्यतरस्यां कर्मणि** ॥ **संजानीत इति** । 'संप्रतिभ्यामनाध्याने' इत्यात्मनेपदम्, 'ज्ञाजनोर्जा' इति

**भावबोधिनी**

यहाँ नहीं होता है—कमण्डलुपाणिः छात्रः [ कमण्डलु है हाथ में जिसके ऐसा छात्र ] यहाँ समास हो जाने पर लक्षण = ज्ञापक समास में अन्तर्भूत हो जाता है । [ अतः उससे तृतीया नहीं होती है । ]

इत्थम्भूत = प्रकार = विशेषण को प्राप्त—इसका क्या फल है ? वृक्षं प्रति विद्योतनम् [ वृक्ष के प्रति विद्योतन । इसमें वृक्ष किसी विद्योतनत्व प्राप्त का लक्षण नहीं है, अतः वृक्ष से तृतीया नहीं होती है । ]

**विमर्श**—अयं प्रकारः—इस अर्थ में इदम् से थमुप्रत्यय करने पर 'इत्थम्' शब्द बनता है । चुरादिगणीय 'भू प्राप्तौ' धातु से क्त प्रत्यय करने पर 'भूतः' बनता है । दोनों का द्वितीया-तत्पुरुष करने पर -इत्थम् = प्रकार-विशेषम्, भूतः = प्राप्तः—विशेषण-विशेष को प्राप्त करने वाला, तस्य = विशेषणविशेषप्राप्तस्य लक्षणम् = ज्ञापकम् ऐसी व्याख्या करनी चाहिये ।

भाव यह है कि कोई किसी विशेषता से युक्त है, उस विशेषता का ज्ञापक जो होता है, उससे तृतीया होती है । उपर्युक्त उदा०—'अपि भवान् कमण्डलुना छात्रम् अद्राक्षीत्' यहाँ छात्र, छात्रत्वरूप विशेषण को प्राप्त है, इस छात्रत्व विशेषण का ज्ञापक है—कमण्डलु, क्योंकि कमण्डलु देख कर ही उसके छात्रत्व = छात्र होने का ज्ञान होता है । इस प्रकार कमण्डलु लक्षण है, उससे तृतीया होती है । छात्रेण उपाध्यायम्,—यहाँ उपाध्याय का उपाध्यायत्व छात्र के कारण ही है, विना छात्र को पढ़ाये उपाध्याय होना सम्भव नहीं है । अतः लक्षण = छात्र से तृतीया होती है ।

कमण्डलुपाणिः छात्रः—यहाँ कमण्डलुः पाणौ यस्य स तादृशः—इस बहुव्रीहि में लक्षण = ज्ञापक समास में अन्तर्भूत है, स्वतन्त्र नहीं है, अतः तृतीया नहीं होती है ॥ २१ ॥

सम्पूर्वक ज्ञाधातु के कर्मकारक में द्वितीया के प्राप्त रहते विकल्प से तृतीया विभक्ति होती है । उदा०—

संपूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति । पित्रा संजानीते । पितरं संजानीते । मात्रा संजानीते । मातरं संजानीते ( अ० भा० ) ॥

४८४. हेतौ ॥ २३ ॥ ( ५६८ )

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते । तद्वाचिनस्तृतीया विभक्तिर्भवति धनेन कुलम् । कन्यया शोकः । विद्यया यशः ॥

न्यासः

सञ्जानातीति । कृत्प्रयोगे चानाध्यानेऽपि 'कर्तृकर्मणोः कृति' इति परत्वात् षष्ठ्येव भवति— मातुः संज्ञातेति ॥ २२ ॥

हेतौ ॥ हेतुर्द्विविधः—शास्त्रीयः, लौकिकश्च । तत्र शास्त्रीयः 'तत्प्रयोजको हेतुश्च', लौकिकः फलसाधनयोग्यः पदार्थः । तत्र शास्त्रीये हेतौ 'कर्तृकरणयोस्तृतीया' इत्येवं सिद्धा तृतीया । तस्माल्लौकिकस्य हेतोरिदं ग्रहणमित्यत आह—**फलसाधनयोग्य इत्यादि** । अनिष्पादयन्नपि फलं तत्साधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति योग्यग्रहणम् । **धनेन कुलमित्यादौ** कुलादीन्यकुर्वन्त्यपि धनादीनि तत्करणयोग्यतया लोके हेतुत्वं न विवक्षितम्, किं तर्हि ? कारणस्यान्यथात्वम् । तेन तादर्थ्ये चतुर्थी भवति ॥ २३ ॥

पदमञ्जरी

जादेशः । आध्याने तु 'अधीगर्थदयेशाम्' इति षष्ठी भवति–मातुः संजानातीति । कृत्प्रयोगे त्वनाध्यानेऽपि परत्वात् 'कर्तृकर्मणोः कृति' इति षष्ठी भवति—मातुः संज्ञातेति ॥ २२ ॥

हेतौ ॥ 'तत्प्रयोजको हेतुश्च' इति शास्त्रीयस्य हेतोश्चकारेण कर्तृसंज्ञाविधानात्कर्तृकरणयोरित्येव तृतीयायाः सिद्धत्वाल्लौकिको हेतुर्गृह्यत इत्याह—**फलसाधनयोग्य इत्यादि** । लोके ह्यङ्कुरादिकार्योत्पादने योग्यतामात्रप्रयुक्तोऽनाश्रितव्यापारो द्रव्यगुणक्रियाविषयो बीजादिर्हेतुः । उक्तं च—

द्रव्यादिविषयो हेतुः[1] कारकं नियतक्रियम् । इति ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते ॥ [वा० प० ३।७।२५]

उदाहरणेषु क्रियाया अभावात्करणत्वमनाशङ्कनीयम् । यूपाय दार्वित्यत्र तादर्थ्यं विवक्षितम्, न तु सदपि हेतुत्वमिति दारुशब्दात् प्रथमैव भवति ॥ २३ ॥

भावबोधिनी

पित्रा संजानीते पितरं सञ्जानीते [ पिता को पहचानता है । ] मात्रा सञ्जानीते, मातरं सञ्जानीते [ माता को पहचानता है । ]

**विमर्श** –'सम्प्रतिभ्यामनाध्याने' ( पा० सू० १।३।४६ ) सूत्र से यहाँ आत्मनेपद होता है । द्वितीया के अर्थ में ही तृतीया भी है ॥ २२ ॥

फलसाधन के योग्य पदार्थ को लोक में हेतु कहा जाता । हेतुवाचक से तृतीया होती है । उदा० धनेन कुलम् [ धन के कारण कुल है । ] कन्यया शोकः [ कन्या के कारण शोक है । ] विद्यया यशः । [ विद्या के कारण यश है । ]

**विमर्श**—हेतु दो प्रकार के हैं—(१) शास्त्रीय, (२) लौकिक । शास्त्रीय हेतु संज्ञा का ज्ञान पाणिनि के 'तत्प्रयोजको हेतुश्च' ( पा० सू० १।४।५५ ) इस सूत्र से होता है । यह कर्ता ही है अतः इसमें 'कर्तृकरणयोस्तृतीया' ( पा० सू० २।३।१८ ) से तृतीया सिद्ध ही है । अतः यहाँ लौकिक हेतु ही लिया जाता है, जो फल के साधन के योग्य होता है, करता है अथवा नहीं, यह देखने की आवश्यकता नहीं है, उसमें वह योग्यता होनी चाहिये ।

हेतु और करण का अन्तर निम्न कारिका में स्पष्ट है—

द्रव्यादिविषयो हेतुः करणं नियतक्रियम् ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते ॥ [वा० प० ३।७।२५]

इस प्रकार व्यापारविशिष्ट और व्यापाररहित द्रव्य, गुण, क्रिया तीनों हेतु हो सकते हैं । परन्तु करण, का

१. 'करणम्' इति वाक्यपदीये पाठः ।

## ४८५. अकर्तर्यृणे पञ्चमी ॥ २४ ॥ ( ६०१ )

**'हेतौ' इति वर्त्तते। कर्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी विभक्तिर्भवति। तृतीयापवादो योगः। शताद्बद्धः। सहस्राद्बद्धः ॥**

**अकर्त्तरीति किम् ? शतेन बन्धितः। शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसंज्ञकम् ॥**

## ४८६. विभाषा गुणेऽस्त्रियाम् ॥ २५ ॥ ( ६०२ )

**न्यासः**

**अकर्त्तर्यृणे पञ्चमी** ॥ **शतेन बन्धित इति**। बन्धेर्ण्यन्तस्य निष्ठायामेतद्रूपम्। **शतमृणञ्च भवतीति**। उत्तमर्णाय देयत्वात्। प्रयोजकत्वात् कर्तृसंज्ञेति, 'तत्प्रयोजको हेतुश्च' इति चकारात् कर्तृसंज्ञाविधानात्। ननु लौकिको हेतुः पूर्वसूत्रे गृहीतः, स चेहानुवर्त्तत इति तत एव पञ्चमी विधीयते, न चात्र लौकिको हेतुः, किं तर्हि ? पारिभाषिक इति प्राप्त्यभावादकर्त्तरीति प्रतिषेधोऽनर्थकः ? नैतदस्ति; तत्र हि शास्त्रीये हेतौ तृतीया सिद्धैवेति लौकिकस्य हेतोर्ग्रहणम्, इह तु पञ्चमी विधीयते। न चात्रासौ शास्त्रीये हेतौ केनचित् सिध्यति। द्वावपीह हेतू गृह्येते। अथ वा शास्त्रीयस्यापि हेतोर्लौकिकं हेतुत्वमविरुद्धमेव। यो हि बन्धने प्रयुङ्क्ते स तत्साधनयोग्यो भवत्येवेति ।।२४।।

**विभाषा गुणेऽस्त्रियाम्** ॥ धनेन कुलमिति धनं द्रव्यम्, न गुणः। द्रव्याश्रितो हि गुणो भवति, न

**पदमञ्जरी**

**अकर्त्तर्यृणे पञ्चमी ॥ बन्धित इति**। बन्धेर्ण्यन्तस्य निष्ठान्तस्य रूपम्। **शतमृणं च भवतीति**। उत्तमर्णाय धार्यमाणत्वात्। **प्रयोजकत्वाच्च कर्तृसंज्ञकमिति**। 'तत्प्रयोजको हेतुश्च' इति चकारेण कर्तृसंज्ञाविधानात्। ननु च पूर्वसूत्रे लौकिकस्य हेतोर्ग्रहणम्, अयं तु शास्त्रीयः; शास्त्रीयस्यापि लौकिकत्वमस्त्येव। अथ वा—कस्य हेतोः पूर्वसूत्रे शास्त्रीयस्याग्रहणम्—कर्त्तरि सिद्धा तृतीयेति ? न त्वेवम्, पञ्चम्या असिद्धत्वादिहार्थमेव सामान्यग्रहणं स्यात् ।।२४।।

**विभाषा गुणेऽस्त्रियाम्** ॥ 'सत्त्वे निविशतेऽपैति' इति लक्षितस्य गुणस्य ग्रहणम्; तदनुरूपत्वादुदाहरण-प्रत्युदाहरणयोरिति केचित्। अन्ये तु 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादावनेनैव पञ्चमीमिच्छन्तः परतन्त्र-

**भावबोधिनी**

विषय तो केवल क्रिया होती है और यह व्यापारविशिष्ट ही होता है। इस प्रकार हेतु और करण का लक्ष्यभेद बन जाता है ॥ २३ ॥

'हेतौ' इसकी अनुवृत्ति होती है। कर्ताकारक से भिन्न जो ऋण हेतु होता है, उससे पञ्चमी विभक्ति होती है। यह सूत्र तृतीया का अपवाद है। उदा०—शताद् बद्धः [ सौ रुपये ऋण के कारण बाँधा गया। ] सहस्राद् बद्धः। [ हजार रुपयों के ऋण के कारण बाँधा गया। इनमें ऋणदाता कर्ता है। ऋण हेतु है। तृतीया न होकर पञ्चमी होती है। ] कर्ता से भिन्न ऋण में—इसका क्या फल है ! शतेन बन्धितः। सौ रुपये ऋण हैं और बन्धन क्रिया का प्रयोजक होने से ऋण कर्तृसंज्ञक भी होता है।

**विमर्श**—'शतेन उतमर्णेन अधमर्णः बन्धितः' यह पूरा वाक्य है। यहाँ बन्ध धातु से हेतुमान् अर्थ में णिजन्त करके 'क्त' प्रत्यय करने पर 'बन्धितः' बना है। इस प्रकार 'शत' प्रयोजक कर्ता है, उत्तमर्ण प्रयोज्य कर्ता है और अधमर्ण कर्म है। यहाँ पञ्चमी न हो सके—इसके लिये 'अकर्तरि' यह है ॥ २४ ॥

'हेतौ' इसकी अनुवृत्ति होती है। स्त्री लिङ्ग को छोड़कर अर्थात् पुंल्लिङ्ग और नपुंसकलिङ्ग गुण हेतु रहने पर

**'हेतौ' इति वर्त्तते। गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति। जाड्याद्बद्धः, जाड्येन बद्धः। पाण्डित्याद् मुक्तः, पाण्डित्येन मुक्तः।**

**गुणग्रहणं किम्? धनेन कुलम्। अस्त्रियामिति किम्? बुद्ध्या मुक्तः। प्रज्ञया मुक्तः॥**

## ४८७. षष्ठी हेतुप्रयोगे॥ २६॥ ( ६०७ )

**हेतोः प्रयोगः = हेतुप्रयोगः। हेतुशब्दस्य प्रयोगे = हेतौ द्योत्ये षष्ठी विभक्तिर्भवति। अन्नस्य हेतोर्वसति॥**

### न्यासः

द्रव्यमेव। गुणशब्देन चात्र सम्बन्धिमात्रं परार्थरूपापन्नमुच्यते, तेनाग्निरत्र धूमादित्याद्यपि सिद्धं भवति। ननु चास्त्रियामित्युच्यते, तेन नास्तीह घटोऽनुपलब्धेरित्यादि न सिद्ध्यति? नैतदस्ति; 'विभाषा गुणे' इति योगविभागः कर्तव्यः। तेन यत्रेष्यते तत्र योगविभागादिष्टसिद्धिरिति स्त्रियामपि भवत्येव॥२५॥

**षष्ठी हेतुप्रयोगे॥** प्रयोगस्य शब्दधर्मत्वाद् हेतुरित्यनेन हेतुशब्द एव विज्ञायत इत्यत आह—**हेतुशब्दप्रयोग इति।** एवञ्च हेतुशब्दस्य स्वरूपग्रहणे सति तत्पर्यायाणां निमित्तकारणादीनां प्रयोगे षष्ठी न भवतीति किमर्थं पुनरिदमुच्यते, यावता शेषविवक्षयैवात्राध्ययनादिभ्यः षष्ठी भविष्यति, तत्सामानाधिकरण्याच्च हेतुशब्दादपि? एवं तर्हि सैव शेषविवक्षाऽस्मिन् विषये वचनेनाख्यायते मन्दधियामनुग्रहाय॥२६॥

### पदमञ्जरी

मात्रस्य ग्रहणं वर्णयन्ति, यथा—यस्य हि गुणस्य भावादिति। 'विभाषा गुणे' इति योगविभागात् 'नास्तीह घटोऽनुपलब्धेः' इति स्त्रियामपि क्वचिद्भवति। केचित्त्वपादानपञ्चमीमेतामिच्छन्ति, तथा च 'नास्तीह घटोऽनुपलब्धितः' इति 'अपादाने चाहीयरुहोः' इति तसिलपि भवति, योगविभागवादिनां त्वाद्यादित्वात्तसिः॥२५॥

**षष्ठी हेतुप्रयोगे॥ हेतुशब्दस्येति।** प्रयोगस्य शब्दधर्मत्वादेवमुक्तम्, न त्वनेनार्थग्रहणं व्यावर्त्यते; पर्यायप्रयोगेऽपि 'निमित्तकारणहेतुषु' इति वक्ष्यमाणेन षष्ठ्या इष्टत्वात्। हेतुशब्दस्य प्रयोगे सति हेतुहेतुमद्भावलक्षणस्यैव सम्बन्धविशेषस्य नियमेन प्रतीतौ 'हेतौ' इति तृतीयापवादो योगः॥२६॥

### भावबोधिनी

विकल्प से पञ्चमी होती है। [ पक्ष में तृतीया होती है। उदा०—जाड्याद् बद्धः, जाड्येन बद्धः [ जडता = मूर्खता के कारण बाँधा गया। ] पाण्डित्याद् मुक्तः, पाण्डित्येन मुक्तः [ पाण्डित्य के कारण मुक्त हो गया। इनमें बन्धन और मुक्ति दोनों के हेतु हैं जाड्य और पाण्डित्य, ये नपुंसक लिङ्ग हैं। अतः पञ्चमी और तृतीया दोनों होती हैं। ]

गुण के ग्रहण का क्या फल है? धनेन कुलम्। [ धन से कुल है। धन गुण नहीं, द्रव्य है। अतः पञ्चमी नहीं होती है। ] स्त्रीलिङ्ग में न हो—इसका क्या फल है? बुद्ध्या मुक्तः। प्रज्ञया मुक्तः [ बुद्धि के कारण मुक्त हो गया। प्रज्ञा के कारण मुक्त हो गया। हेतु है परन्तु स्त्रीलिंग है। अतः पञ्चमी नहीं होती है। ]

विमर्श—काशिकाकार ने प्रस्तुत सूत्र के योगविभाग की चर्चा नहीं की है। व्याख्याकारों के अनुसार और सिद्धान्तकौमुदी के अनुसार इसमें 'विभाषा' यह एक सूत्र है और 'गुणेऽस्त्रियाम्' यह दूसरा सूत्र है। 'विभाषा' इस सामान्य सूत्र के बल से गुणभिन्न और स्त्रीलिङ्ग भी हेतु में पञ्चमी हो जाती है। इसीलिये—'धूमाद् अग्निमान् पर्वतः' 'नास्ति घटः अनुपलब्धेः—आदि में अगुण 'धूम' और स्त्रीलिङ्ग 'अनुपलब्धि' से पञ्चमी होती है। इस प्रकार सभी लक्ष्यों में उपपत्ति हो जाती है॥ २५॥

हेतु का प्रयोग = हेतुप्रयोग। हेतु शब्द के प्रयोग में = हेतु के द्योत्य रहने पर षष्ठी विभक्ति होती है। उदा०—अन्नस्य हेतोर्वसति [ अन्न के कारण रहता है। यहां वास का हेतु अन्न है और हेतु शब्द का प्रयोग भी है। अतः षष्ठी होती है]॥ २६॥

**४८८. सर्वनाम्नस्तृतीया च ॥ २७ ॥ ( ६०८ )**

**सर्वनाम्नो हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति षष्ठी च । पूर्वेण षष्ठ्यामेव प्राप्तायामिदमुच्यते । कस्य हेतोर्वसति । केन हेतुना वसति । यस्य हेतोर्वसति । येन हेतुना वसति ।**

*** निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् * ( म० भा० २.३.२३ वा० १ ) ॥ किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति । कस्मान्निमित्ताद्वसति । कस्य निमित्तस्य वसति । कस्मिन्निमित्ते वसति । एवं कारणहेत्वोरप्युदाहार्यम् ।**

**अर्थग्रहणं चैतत् । पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति । तेनेहापि भवति—किं प्रयोजनं वसति । केन प्रयोजनेन वसति । कस्मै प्रयोजनाय वसति । कस्मात्प्रयोजनाद् वसति । कस्य प्रयोजनस्य वसति । कस्मिन् प्रयोजने वसति ॥**

**न्यासः**

**सर्वनाम्नस्तृतीया च ॥ निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायदर्शनमिति ।** एतच्चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यत इति वेदितव्यम् ।

यद्यर्थग्रहणमेतत्, कस्मात् पर्यायोपादानं कृतमित्याह—**पर्यायोपादानमित्यादि** । असति पर्यायग्रहण एतत् स्वरूपग्रहणमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निकर्त्तुं पर्यायग्रहणम् ॥२७॥

**पदमञ्जरी**

**सर्वनाम्नस्तृतीया च ॥** 'सर्वनाम्नः' इति प्रयोगापेक्षा षष्ठी । **सर्वनाम्नो हेतुशब्दस्य च प्रयोग इति ।** पञ्चम्यां तु हेतुशब्दादयं विधिर्न स्यात् । कथं तर्हि सर्वनाम्नस्तृतीया भवतीति ? अत्रापि सर्वनाम्नः प्रयोग इत्यर्थो द्रष्टव्यः ।

**निमित्तकारणहेतुष्विति ।** यद्यप्यस्मिन् सूत्र इदं **वृत्तिकारेण पठितम्, भाष्यकारेण तु 'हेतौ'** इत्यत्र पठितत्वादसर्वनाम्नोऽप्येतद्विभक्तिविधानं गम्यते, तत्र च प्रायग्रहणादेवासर्वनाम्नः प्रथमाद्वितीये न भवतः, अन्यास्तु यथादर्शनं भवन्ति—अन्नेन कारणेन वसति, अन्नाय कारणाय वसति, अन्नात्कारणाद्, अन्नस्य कारणस्य, अन्ने कारणे इति ।

**पर्यायोपादानं त्विति ।** ननु विपरीतमिदं स्वरूपविधौ पर्यायोपादानं कर्त्तव्यम्, अर्थग्रहणे तु न कर्त्तव्यमिति; किं चार्थग्रहणे सत्येकशेषप्रसङ्गः, विरूपाणामपि समानार्थानामेकशेषवचनात् ? एवं मन्यते—यथा

**भावबोधिनी**

सर्वनाम हेतु शब्द के प्रयोग में हेतु के द्योत्य रहने पर तृतीया और षष्ठी विभक्तियाँ होती हैं । पूर्ववर्ती सूत्र से षष्ठी की प्राप्ति में ही तृतीया का भी कथन है । उदा०—कस्य हेतोः वसति, केन हेतुना वसति ? [ किस हेतु से रहता है ? [ यस्य हेतोः वसति, येन हेतुना वसति । [ जिस हेतु से रहता है । यहाँ 'किम्' और 'यत्' सर्वनाम शब्दों का प्रयोग है और हेतु शब्द का भी प्रयोग है । अतः षष्ठी तथा तृतीया दोनों होती हैं । ]

* निमित्त, कारण और हेतु - इनके प्रयोग में सभी विभक्तियाँ प्रायः देखी जाती हैं । * उदा०—किं निमित्तं वसति ? केन निमित्तेन वसति ? कस्मै निमित्ताय वसति ? कस्मात् निमित्तात् वसति ? कस्य निमित्तस्य वसति ? कस्मिन् निमित्ते वसति ? [ किस निमित्त से रहता है ? पूर्वोक्त सभी वाक्यों का एक यही अर्थ है । ] इस 'निमित्त' शब्द के समान ही 'कारण' और 'हेतु' के भी उदाहरण देने चाहिये ।

और यह अर्थ का ग्रहण है [ शब्द का नहीं ] । पर्याय शब्दों का उपादान तो इसलिये है कि स्वरूपविधि अर्थात् केवल एक शब्द की ही विधि न समझी जाय । इस कारण यहाँ भी होती है—किं प्रयोजनं वसति ? केन प्रयोजनेन

**४८९. अपादाने पञ्चमी ॥ २८ ॥ ( ५८७ )**

**अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात्पराजयते।**

**❀ पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् ❀ ( म० भा० २.३.२८ वा० १ )। प्रासादमारुह्य प्रेक्षते, प्रासादात्प्रेक्षते।**

न्यासः

**अपादाने पञ्चमी ॥ वृकेभ्यो बिभेतीति**। 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वम्। अध्ययनात् पराजयत इत्यत्र 'पराजेरसोढः' इत्यपादानत्वम्। 'विपराभ्याञ्जेः' इत्यात्मनेपदम्।

**पञ्चमीविधान इत्यादि**। यदेतत् पञ्चमीविधानमत्र ल्यब्लोपे कर्मणि पञ्चमी स्यादित्युपसंख्यानम् = व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्--इह पूर्वसूत्राच्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन ल्यब्लोपे कर्मणि पञ्चमी भविष्यति।

पदमञ्जरी

आकृतिगणेषु केचिदुपलक्षणार्थं पठचन्ते, एवमिहापि स्वरूपपरा एव निमित्तादिशब्दा उपलक्षणार्थाः—एवमर्थानां शब्दानामिति ॥२७॥

**अपादाने पञ्चमी ॥ प्रासादादिति**। अत्र ल्यबन्तस्याप्रयोगेऽप्यर्थो गम्यत इति द्वितीया प्राप्नोति।

**आसनादिति**। सप्तम्यत्र प्राप्नोति। प्रत्याख्यान तु—प्रेक्षणम् = चक्षुषा पदार्थानां ज्ञानम्, तैजसं चक्षुर्बहिर्निःसृत्य विषयान् गृह्णाति, निःसरणाङ्गके च प्रेक्षणे धातुर्वर्तते, तत्राङ्गभूतनिःसरणं प्रति प्रासाद उपात्तविषयमपादानं भवति–प्रासादात्प्रेक्षत इति, कोऽर्थः? प्रासादप्रदेशाच्चाक्षुषं तेजो निःसार्य पदार्थान् गृह्णातीति।

भावबोधिनी

वसति? कस्मै प्रयोजनाय वसति? कस्मात् प्रयोजनाद् वसति? कस्य प्रयोजनस्य वसति? कस्मिन् प्रयोजने वसति? [ किस प्रयोजन से रहता है? यह एक ही अर्थ सभी वाक्यों का है ] ॥ २७ ॥

[ अनभिहित ] अपादान कारक में पञ्चमी विभक्ति होती है। उदा०—ग्रामाद् आगच्छति। [ गाँव से आता है। ] पर्वताद् अवरोहति। [ पहाड़ से उतरता है। यहाँ 'ध्रुवमपायेऽपादानम्' पा० सू० १।४।२४ सूत्र से अवधिभूत 'ग्राम' और 'पर्वत' की अपादानसंज्ञा होती है और फलस्वरूप इस सूत्र से पञ्चमी विभक्ति होती है। ] वृकेभ्यः बिभेति। [ भेड़ियों से डरता है। यहाँ 'भीत्रार्थानां भयहेतुः' ( पा० सू० १।४।२५ ) सूत्र से भयहेतुभूत वृक की अपादानसंज्ञा होकर पञ्चमी होती है। ] अध्ययनात् पराजयते। [ अध्ययन से घबड़ाता है। यहाँ 'पराजेरसोढः' पा० सू० १।४।२६ से 'अध्ययन' की अपादान संज्ञा करके प्रस्तुत सूत्र से पञ्चमी होती है। ]

* पञ्चमीविधान के प्रसङ्ग में ल्यबन्त क्रियापद के लोप में उसके कर्म में पञ्चमी कहनी चाहिये। * उदा०—प्रासादम् आरुह्य प्रेक्षते = प्रासादात् प्रेक्षते [ प्रासाद से देखता है। यहाँ ल्यबन्त क्रियापद है—आरुह्य। इसका कर्म है—प्रासादम्। आरुह्य का लोप = अप्रयोग करने पर कर्म = प्रासाद से पञ्चमी होती है। ]

* और ल्यबन्त के लोप में अधिकरण में भी पञ्चमी कहनी चाहिये। * उदा०-आसने उपविश्य प्रेक्षते = आसनात् प्रेक्षते [ आसन पर बैठकर देखता है। यहाँ 'उपविश्य' इस ल्यबन्त का अधिकरण है 'आसने'। इससे पञ्चमी होती है। ] शयनात् प्रेक्षते [ शयने उपविश्य प्रेक्षते। पलंग पर बैठकर देखता है। ]

**❀ अधिकरणे चोपसंख्यानम् ❀ ( म० भा० २.३.२८ वा० २ ) । आसने उपविश्य प्रेक्षते, आसनात्प्रेक्षते । शयनात्प्रेक्षते ।**

**❀ प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या ❀ (म० भा २.३.२८ वा० ३) । कुतो भवान् ? पाटलिपुत्रात् ।**

**❀ यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या ❀ (म० भा० २.३.२८ वा० ४) । गवीधुमतः सांकाश्यं चत्वारि योजनानि । कार्त्तिक्या आग्रहायणी मासे ।**

**न्यासः**

**अधिकरणे चोपसंख्यानमित्यादि** । अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः । प्रतिपादनन्तु पूर्ववच्चकारानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम् ।

**प्रश्नाख्यानयोश्चेत्यादि** । वक्तव्येति व्याख्यातव्येत्यर्थः । व्याख्यानन्तु तामेव चकारानुवृत्तिमाश्रित्य कर्त्तव्यम् । अथ वा—अत्रापादान इत्येवं सिद्धा पञ्चमी । तथा हि कुतो भवानित्यत्रागच्छतीति प्रतीयते, पाटलिपुत्रादित्यत्राप्यागच्छामीति; अतः स्फुटमेवापादानत्वम् ।

**यतश्चाध्वकालेत्यादि** । यतः प्रभृत्यध्वनः कालस्य निर्माणमियत्तापरिच्छेदस्तत्र पञ्चमी वक्तव्या । एतदुक्तं भवति—अध्वनि काले च निर्मीयमाणे यदवधिभूतत्वेन विवक्ष्यते तत्र पञ्चमी वक्तव्या=व्याख्येया । व्याख्यानन्तु पूर्ववच्चकारानुवृत्तिमाश्रित्य कर्त्तव्यम् । अथ वा—अध्वनि निर्मीयमाणे अपादान इत्येवं सिद्धा पञ्चमी । तथा हि—गवीधुमतः साङ्काश्यं चत्वारि योजनानीत्यत्र निःसृत्येति क्रिया गम्यते । अतो युक्तमेवापादनत्वम् । कार्त्तिक्या आग्रहायणी मास इत्यत्रापि परेणेति शब्दो गम्यते । तत्रोत्तरसूत्रेण दिग्योगलक्षणा पञ्चमी भविष्यति ।

**पदमञ्जरी**

**प्रश्नाख्यानयोश्चेति** । विशिष्टे प्रश्नाख्याने गृह्येते यत्र लोके पञ्चमी प्रयुज्यते । इह न भवति—कस्यायमर्थो राज्ञोऽर्थ इति । **कुतो भवानिति** । क्रियाया अभावादनपादानत्वात् फलवद्वचनप्रत्यक्षादिप्रमाणसिद्धामागमनादिक्रियामपेक्ष्येदं प्रयुज्यते, तत्र प्रयोक्तुराख्यातुश्च मनसि विपरिवर्तमानमागमनं प्रत्यपेक्षितक्रियमपादानम्—पाटलिपुत्रादिति ।

**यतश्चेति** । यदवधित्वेनाश्रित्याध्वकालयोः परिच्छेदस्तत इत्यर्थः । **गवीधुमन्नाम** नगरम्, **सांकाश्यं**=तपोवनम् ।

**भावबोधिनी**

* प्रश्न तथा आख्यान=उत्तर देना—इनमें भी पञ्चमी कहनी चाहिये । * कुतो भवान् ? आप कहाँ से ? [ यहाँ प्रश्न है । अतः किम् शब्द से पञ्चमी के अर्थ में तसिल् प्रत्यय है । ] पाटलिपुत्रात् । [ पटना से । यह प्रश्न का उत्तर है । इसमें भी पञ्चमी होती है । ]

* जहाँ से अध्वा=मार्ग और काल का निर्माण=अवधिरूपेण कथन रहता है उसमें पञ्चमी कहनी चाहिये । * उदा०—गवीधुमतः सांकाश्यं चत्वारि योजनानि । [गवीधुमान् नामक स्थान से सांकाश्य नामक [तपोवन] स्थान चार योजन दूर है । यहाँ गवीधुमान् से मार्ग का अवधिरूपेण कथन होने से उससे पञ्चमी होती है । ] कार्त्तिक्या आग्रहायणी मासे [ कार्त्तिकी पूर्णिमा से अगहनी पूर्णिमा एक महीना पर होती है । यहाँ काल का अवधिरूपेण कथन है । अतः 'कार्त्तिकी' में पञ्चमी होती है । ]

**❀ तद्युक्तात्काले सप्तमी वक्तव्या ❀ (म० भा० २.३.२८ वा० ५)। कार्त्तिक्या आग्रहायणी मासे।**

**❀ अध्वनः प्रथमा सप्तमी च वक्तव्या ❀ (म० भा० २.३.२८ वा० ६)। गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा॥**

## ४९०. अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते॥ २९॥ (५९९)

**न्यासः**

**तद्युक्तात् काल इत्यादौ** तदित्यनेन पञ्चमी सम्बध्यते। पञ्चमीयुक्तात् परो यः कालस्तत्र सप्तमी वक्तव्या = व्याख्येया। व्याख्यानन्तु कार्त्तिक्या आग्रहायणी मास इत्यत्र 'यस्य च भावेन भावलक्षणम्' इत्यनेन सप्तमी सिद्धा। कार्त्तिक्याः परो यो मासस्तत्सत्तयाऽऽग्रहायण्या भावो लक्ष्यते।

**अध्वनः प्रथमेत्यादि**। तद्युक्तादिति वर्त्तते। तत्र यदा साङ्काश्यस्य योजनादभेदो विवक्ष्यते तदा प्रथमा। **गवीधुमतः साङ्काश्यं चत्वारि योजनानीति**। भेदविवक्षायान्तु 'यस्य च भावेन भावलक्षणम्' इति सप्तमी। तथा हि गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु सत्सु भवतीत्येषोऽर्थः प्रतीयते। तत्र योजनस्य सम्बन्धि गमनं साङ्काश्यभावस्य लक्षणं भवति॥ २८॥

**अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। अन्य इत्यर्थग्रहणमिति**। अर्थद्वारक एव हि शब्दस्य

**पदमञ्जरी**

कृत्तिकायुक्ता पौर्णमासी कार्त्तिकी, पौर्णमास्याम् 'लुबविशेषे' इति लुब्न भवति 'सास्मिन्पौर्णमासी' इत्यधिकारे 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः' इति निर्देशात्। अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वात्स्वार्थिकोऽण्, 'आग्रहायण्यश्वत्थात्' इति निपातनाण्णत्वम्। **तद्युक्तादिति**। तेन पञ्चम्यन्तार्थेनार्थद्वारेण युक्तात्काले वर्त्तमानान्मासादिशब्दादित्यर्थः। यद्वा--तया पञ्चम्या युक्तो योऽर्थः कार्त्तिक्यादिस्ततः परो यः कालो मासादिस्तत्र वर्त्तमानादित्यर्थः। अर्थतश्च परत्वं न शब्दत इति व्यवहितेऽपि भवति, कार्त्तिक्याग्रहायण्योर्मध्यवर्त्ती मासः कार्त्तिक्याः परो भवति।

**अध्वन इति**। तद्युक्तादित्यपेक्ष्यते। प्रत्याख्यानं तु—वाक्यैकदेशस्यात्र प्रयोगः। तदयमर्थः—गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः सांकाश्यम्, चतुर्षु योजनेषु सत्सु सांकाश्यमिति, गतानीति च कर्मणि निष्ठा, यदा जनैर्योजनानि गतानि भवन्ति ततस्तैः सांकाश्यं प्राप्यत इत्यर्थः। यद्वा-- अध्ववर्त्तिनां निःसरणं गमनं वाध्वन्यारोप्य निःसृत्य गतानीति ल्यपः कर्त्तरि क्तस्य च प्रयोगः, तस्य प्रतीयमान-निःसरणक्रियापेक्षयापादानत्वम्, गतानीति च प्रातिपदिकार्थस्याव्यतिरेकात् प्रथमा, गतेषु सत्स्विति 'यस्य च भावेन भावलक्षणम्' इति सप्तमी, आग्रहायणी मास इति कार्त्तिक्याः परत्र मासे गते सति आग्रहायणी भवतीत्यर्थः। तत्र दिग्योगलक्षणा पञ्चमी, सप्तमी पूर्ववत्॥ २८॥

**अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते॥ अन्य इत्यर्थग्रहणमिति**। व्याख्यानात्। **निर्दिश्यमान-**

**भावबोधिनी**

* उस पञ्चमीयुक्त = पञ्चम्यन्त से परे जो कालवाची, उसमें सप्तमी कहनी चाहिये। * कार्त्तिक्या आग्रहायणी मासे। [ कार्त्तिकी पूर्णिमा के एक महीना बाद अगहनी पूर्णिमा है।* यहाँ कालवाची मास में सप्तमी होती है। ]

❀ उस पञ्चम्यन्त से युक्त = परवर्त्ती अध्ववाची से प्रथमा और सप्तमी कहनी चाहिये। ❀ उदा०—गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा। [ गवीधुमान् से सांकाश्य चार योजन है। यहाँ अध्ववाची 'योजन' से प्रथमा और सप्तमी दोनों होती है। ]॥ २८॥

**अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि—इत्येतैर्योगे पञ्चमी विभक्तिर्भवति।**

**(१) अन्य—इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणो देवदत्तात्।**

**(२) आराच्छब्दो दूरान्तिकार्थे वर्त्तते। तत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (२.३.३४) इति प्राप्ते पञ्चमी विधीयते। आराद्देवदत्तात्। आराद्यज्ञदत्तात्।**

**(३) 'इतर' इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्।**

**(४) 'ऋते' इति अव्ययं वर्जनार्थे। ऋते देवदत्तात्। ऋते यज्ञदत्तात्।**

**न्यासः**

शब्दान्तरेण योगो भवति। तस्मादर्थस्येदं ग्रहणं विज्ञायते। तेनेत्यादिनाऽर्थग्रहणस्य फलं दर्शयति। अथान्यो देवदत्ताद् यज्ञदत्त इति यज्ञदत्तशब्दादपि पञ्चमी कस्मान्न भवति? देवदत्तादुत्पन्नया पञ्चम्योभयगतस्याप्यन्यत्वस्य प्रतिपादितत्वात् तद्विशिष्टमन्यत्वमेकत एवोत्पाद्यमानया पञ्चम्या शक्यं प्रतिपादयितुमिति द्वितीयसम्बन्धिनः पञ्चमी न भवति।

**इतर इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यत इति।** यथा क्वचित् प्रकरणे द्वौ प्रकृतौ—देवदत्तः, अन्यश्च कश्चित्। तत्रैकस्तावन्निर्दिश्यते देवदत्तः शूर इति। तस्य निर्दिश्यमानस्य योऽसौ द्वितीयः सम्बन्धी प्रतियोगी स इतरशब्देनोच्यते, यथा—इतरः कातर इति।

**पदमञ्जरी**

**प्रतियोगीति।** यथा देवदत्तयज्ञदत्तयोः प्रकृतयोराह—देवदत्तः शूरः, इतरः कातर इति; तस्यान्यार्थान्तर्भावोऽस्तीति चिन्त्यम्। **ऋते यज्ञदत्तादिति।** कथं यत्किञ्चिद्राजसूयमृते सोममिति? छान्दसत्वात्, कथं 'न मामृते राम रमेत बाली' इति? 'क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते' इति च? निरंकुशाः कवयः।

**भावबोधिनी**

अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच् तथा आहि—इनके योग में पञ्चमी विभक्ति होती है। 'अन्य' इसके अर्थ का ग्रहण है, शब्द का नहीं। अतः इसके पर्याय शब्दों के प्रयोग में भी पञ्चमी होती है। उदाहरण (१) अन्यः देवदत्तात् [ देवदत्त से भिन्न ]। अर्थान्तरं देवदत्तात् [ देवदत्त से अलग ]। विलक्षणः देवदत्तात् [ देवदत्त से विलक्षण। ये सभी पर्याय हैं। ]

(२) 'आरात्' शब्द दूर तथा समीप अर्थों में प्रयुक्त होता है। यहाँ 'दूरान्तिकार्थैः षष्ठी अन्यतरस्याम्' ( पा० सू० २.३.३४ ) से षष्ठी की प्राप्ति रहने पर पञ्चमी का विधान किया जा रहा है। उदा०—आरात् देवदत्तात् [ देवदत्त से दूर या पास। ] आरात् यज्ञदत्तात् [ यज्ञदत्त से दूर या समीप ]

(३) 'इतर' इससे निर्दिश्यमान का प्रतियोगी पदार्थ कहा जाता है। [ प्रस्तुत दो पदार्थों में एक का निर्देश करके दूसरे को इतर शब्द से कहा जाता है। जैसे—देवदत्त और यज्ञदत्त में 'देवदत्तः शूरः इतरः कातरः—देवदत्त शूर है, दूसरा कायर है। ] देवदत्तात् इतरः [ देवदत्त से भिन्न। ]

(४) 'ऋते' यह अव्यय वर्जन अर्थ में है। उदा०—ऋते देवदत्तात् [ देवदत्त को छोड़कर। ] ऋते यज्ञदत्तात् [ यज्ञदत्त को छोड़कर। ]

**(५) दिक्शब्दः—पूर्वो ग्रामात् पर्वतः। उत्तरो ग्रामात्। पूर्वो ग्रीष्माद्वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। 'दिक्शब्द' इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्शब्देन योगे यथा स्यात्; इतरथा हि दिग्वृत्तिनैव स्यात्—इयमस्याः पूर्वेति। इह तु न स्यात्—अयमस्मात्पूर्वः काल इति।**

**(६) अञ्चूत्तरपद—प्राग् ग्रामात्। प्रत्यग् ग्रामात् (म० भा०)। ननु चायमपि दिक्शब्द एव? 'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०) इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः।**

**(७) आच्—दक्षिणा ग्रामात्। उत्तरा ग्रामात्। (८) आहि—दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्॥**

**न्यासः**

**शब्दग्रहणमित्यादि।** शब्दग्रहणे सति दिशि दृष्टः शब्दो दिक्शब्द इत्येषोऽर्थो लभ्यते। तेन योऽपि संप्रति दिक्शब्दो देशे काले च वर्त्तते, सोऽपि दिशि दृष्ट इति तद्योगे पञ्चमी भवति। तत्र देशवृत्तिना योगे पञ्चमी—पूर्वो ग्रामात् पर्वत इति। कालवृत्तिनापि—पूर्वो ग्रीष्माद्वसन्त इति। **इतरथा हि दिग्वृत्तिनैव योगे स्यादिति।** तत्रैव दिक्शब्दस्य मुख्यत्वात्।

**प्राग् ग्रामादिति।** प्रपूर्वादञ्चतेर्ऋत्विगादिसूत्रेण क्विन्प्रत्ययः। तदन्ताद् यदा दिक्शब्देभ्यः 'सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकाल' इत्यादिना विहितस्य 'अस्तातेरञ्चेर्लुक्' इति लुक्, लुकि कृते तदेदमुदाहरणम्। **दक्षिणा ग्रामादुत्तरा ग्रामाद्। दक्षिणाहि ग्रामादुत्तराहि ग्रामादिति।** 'दक्षिणादाच्' 'आहि च दूरे' 'उत्तराच्च' इत्याजाही प्रत्ययौ॥ २९॥

**पदमञ्जरी**

**शब्दग्रहणमिति।** सति हि तस्मिन् दिशि दृष्टः शब्दो दिक्शब्द इत्युत्तरपदलोपी समासो लभ्यते, तेन यदा कदाचिद्दिशि दृष्टेन संप्रति देशकालवर्त्तिनापि योगे भवति—ग्रामात्पूर्वो देशश्चैत्रात्पूर्वः फाल्गुन इति। अवयववाचिभिस्तु योगे न भवति—पूर्वं कायस्येति, 'तस्य परमाम्रेडितम्' इति निर्देशात्।

**ननु चायमपीति।** सध्र्यङ् देवदत्तेनेत्यादावदिक्शब्दार्थमञ्चूत्तरपदग्रहणं न भवति, दिक्शब्दैः साहचर्यादस्यापि दिक्शब्दस्यैव ग्रहणादिति भावः। **दक्षिणेति।** 'दक्षिणादाच्'; 'आहि च दूरे', 'उत्तराच्च' इत्याजाही प्रत्ययौ॥ २९॥

**भावबोधिनी**

(५) दिक्शब्द—[ दिक्शब्द में मध्यमपदलोपी समास है—दिशि दृष्टः शब्दः दिक्शब्दः] उदा०—पूर्वो ग्रामात् पर्वतः [ गाँव से पूर्व में पर्वत है। ] उत्तरः ग्रामात्। [ गाँव से उत्तर में पर्वत है। ] पूर्वः ग्रीष्माद् वसन्तः। [ वसन्त ऋतु ग्रीष्म से पूर्व होती है। ] उत्तरः ग्रीष्मः वसन्तात् [ ग्रीष्म वसन्त के बाद होती है। ] 'दिक्शब्द'—इसमें दिक्शब्द का ग्रहण इसलिये है कि देश और काल दोनों अर्थों में प्रयुक्त के साथ पञ्चमी हो सके अन्यथा केवल दिशा अर्थ वाले शब्द के ही योग में होगी—इयम् अस्याः पूर्वा। [ यह दिशा इससे पूर्व है। ] इसमें नहीं हो सकेगा—अयम् अस्मात् पूर्वः कालः [ यह समय इससे पूर्व है। ]

(६) अञ्चूत्तरपद—[ अञ्चु है उत्तर पद जिसका उसके योग में भी पञ्चमी होती है। उदा०—प्राग् ग्रामात्, प्रत्यग् ग्रामात् [ यहाँ प्र+अञ्चु=प्राग् के साथ ग्राम में पञ्चमी होती है। गाँव से पूर्व। ] प्रत्यग् ग्रामात् [ गाँव से पश्चिम। ] प्रश्न—यह भी तो दिक्शब्द ही है? [ अतः उसी से निर्वाह सम्भव था, अलग ग्रहण का क्या प्रयोजन है? ] उत्तर—आगे 'षष्ठी अतसर्थप्रत्ययेन' (पा० सू० २।३।३०) यह सूत्र कहा जायगा [ इसके अनुसार षष्ठी प्राप्त होती है ] इसका यह पहले से ही अपकर्ष=अपवाद है।

(७) आच्—[ यह प्रत्यय है। ] दक्षिणा ग्रामात् [ गाँव से दक्षिण में। यहाँ 'दक्षिणादाच्' पा. सू. ५।३।६६ से आच् प्रत्यय है। ] उत्तरा ग्रामात् [ गाँव से उत्तर में। यहाँ 'उत्तराच्च' पा. सू. ५।३।३८ से आच् प्रत्यय है। ]

## ४९१. षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥ (६०९)

**'दक्षिणोत्तराभ्यामतसुच्' (५.३.२८) इति वक्ष्यति, तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। [पुरो ग्रामस्य] पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य (म० भा०)॥**

### न्यासः

**षष्ठ्यतसर्थप्रत्ययेन॥** अतसर्थाः प्रत्यया दिक्शब्देभ्यः स्वार्थ एव भवन्तीति तदन्तस्य दिक्शब्दत्वात् पूर्वेण पञ्चम्यां वचनमिदम्। **पुरो ग्रामस्येति।** 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यादिनाऽसिप्रत्ययः, पूर्वशब्दस्य पुरादेशश्च। **पुरस्तादित्यत्रापि** 'दिक्शब्देभ्यः सप्तमी' इत्यादिनाऽस्तातिप्रत्ययः। 'अस्ताति च' इति पुरादेशः। **उपरि ग्रामस्य, उपरिष्टाद् ग्रामस्येति।** 'उपर्युपरिष्टात्' इत्यूर्ध्वशब्दस्योप इत्यादेशो रिल्रिष्टातिलौ च प्रत्ययौ भवतः॥ ३०॥

### पदमञ्जरी

**षष्ठ्यतसर्थप्रत्ययेन॥** अत्र तस्यतेर्नञ्पूर्वस्य क्विप्यतसिति रूपसम्भवेऽपि प्रत्यक्षश्रुतत्वात् प्रत्ययाप्रत्ययपरिभाषया च प्रत्ययस्यैव ग्रहणमिति सिद्धं नार्थः प्रत्ययग्रहणेन। **पुरस्तादिति।** 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' 'अस्ताति च' इति पूर्वशब्दस्य पुरादेशः। **उपर्युपरिष्टादिति।** ऊर्ध्वशब्दस्योपशब्द आदेशो रिल्रिष्टातिलौ प्रत्ययौ भवतः, 'ततः पश्चाद्धस्ती' इति भाष्यकारप्रयोगात्पञ्चमी॥ ३०॥

### भावबोधिनी

(८) आदिह—[ यह भी प्रत्यय है ] दक्षिणाहि ग्रामात् [ गाँव से दक्षिण में ] उत्तराहि ग्रामात् [ गाँव से उत्तर में। यहाँ "आहि च दूरे" पा. सू. ५।३।३७ से 'आहि' प्रत्यय हुआ है। ]॥ २९॥

'दक्षिणोत्तराभ्यामतसुच्' (पा. सू ५।३।२८) यह सूत्र आगे कहा जाएगा उसी का यहाँ ग्रहण है। अतसर्थ वाले प्रत्ययान्त शब्द के योग में षष्ठी विभक्ति होती है। उदा०—दक्षिणतः ग्रामात् [ गाँव से दक्षिण में। यहाँ 'दक्षिणोत्तराभ्यामतसुच्' पा. सू. ५।३।२८ से अतसुच् प्रत्यय हुआ है। ] उत्तरतः ग्रामात् [ गाँव से उत्तर में। यहाँ भी वही प्रत्यय है। ] पुरस्ताद् ग्रामस्य [ गाँव के पूर्व में। यहाँ 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' पा. सू. ५।३।३९ सूत्र से अतस् के अर्थ में 'अस्'—प्रत्यय हुआ है और पूर्व को 'पुर्' आदेश हुआ है—पुर्+अस्=पुरः तथा ] पुरस्ताद् ग्रामस्य [ गाँव के पूर्व में। यहाँ भी पूर्व शब्द से "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" पा. सू. ५।३।२७ से अस्ताति=अस्तात् प्रत्यय हुआ है और पूर्वोक्त सूत्र से 'पूर्व' का 'पुर्' आदेश हुआ है। ] उपरि ग्रामस्य [ गाँव के ऊपर ] उपरिष्टाद् ग्रामस्य [ गाँव के ऊपर। यहाँ 'ऊर्ध्व' शब्द से निपातन द्वारा इनकी सिद्धि होती है। 'उपर्युपरिष्टात्' पा. सू. ५।३।३१ से 'ऊर्ध्व' का 'उप' आदेश तथा रिल् और रिष्टातिल् ये दो प्रत्यय करने पर उक्त शब्दों की सिद्धि होती है। ]

**विमर्श—**'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (पा. सू. ५।३।२७) इस सूत्र से दिक्देश और काल अर्थ में वर्तमान दिक्शब्द जो सप्तमी, पञ्चमी और प्रथमान्त है, उनसे स्वार्थ में 'अस्ताति' प्रत्यय होता है। इस सन्दर्भ में अगला सूत्र 'दक्षिणोत्तराभ्यामतसुच्' पा. सू. ५।३।२८ है। यह पूर्वोक्त स्थिति में ही 'दक्षिण' और 'उत्तर' शब्दों से अतसुच् प्रत्यय करता है। यह स्वार्थिक प्रत्यय है। अस्ताति के अर्थ में ही अतसुच् है। अतः 'अतसर्थ' के स्थान पर 'अस्तात्यर्थ' यह कहना उचित था। परन्तु संयुक्त शब्दरूप के निर्देश की अपेक्षा सरल का ग्रहण करना ही उचित मान कर 'अतसर्थप्रत्ययेन' लिखा है। 'अस्ताति' प्रत्यय से लेकर 'आहि' तक के प्रत्यय इसी अर्थ में हैं। इनके योग सूत्र में कहीं पूर्व सूत्र से पञ्चमी और कहीं इस सूत्र से षष्ठी होती है॥ ३०॥

## ४९२. एनपा द्वितीया ॥ ३१ ॥ (६१०)

'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (५.३.३५) इति वक्ष्यति । तेन युक्ते द्वितीया विभक्तिर्भवति । पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम् । दक्षिणेन ग्रामम् । उत्तरेण ग्रामम् ।

षष्ठ्यपीष्यते—दक्षिणेन ग्रामस्य । उत्तरेण ग्रामस्य । तदर्थं योगविभागः कर्तव्यः ॥

## ४९३. पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ ३२ ॥ (६०३)

पञ्चमीग्रहणम् [इह] अनुवर्त्तते । पृथक्, विना, नाना—इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च । पृथग् देवदत्तेन, पृथग् देवदत्तात् । विना देवदत्तेन, विना देवदत्तात् । नाना देवदत्तेन, नाना

### न्यास

**एनपा द्वितीया ॥ पूर्वेण षष्ठ्यां प्राप्तायां वचनमिदमिति** । एनपोऽतसर्थत्वात् । **तदर्थो योगविभागः कर्त्तव्य इति** । एनपेति पृथग्योगः कर्तव्यः, एनपा षष्ठी यथा स्यात्; अन्यथा हि द्वितीययासौ बाध्येत । ततो द्वितीयेति द्वितीयो योगः, अत्र चैनपेति वर्त्तते ॥ ३१ ॥

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ पञ्चमीग्रहणमनुवर्त्तत इति** । स्वरितत्वात् । इमे सर्वे पृथगादयोऽसहायेऽर्थे वर्त्तन्ते । भेदेनोपादानन्तु पर्यायान्तरनिवृत्त्यर्थम् । इह तृतीयापञ्चम्यौ मा भूताम्–हिरुग् देवदत्तस्य । विष्वग् देवदत्तस्येति । तत्रासत्यां पञ्चमीग्रहणानुवृत्तौ यथा हिरुगित्यादिना पर्यायान्तरेण योगे षष्ठी भवति, तथा पृथगादिभिर्योगे पक्षे षष्ठी स्यात्, न पञ्चमी । तस्मात् पञ्चमीग्रहणमनुवर्त्तनीयम् ।

### पदमञ्जरी

**एनपा द्वितीया** ॥ 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्' ( मेघदूतम् २.२८ ), 'णस्त्र्यधिकारात्परेस वासरूपविधिनाऽवश्यं भवति', 'ततः परेण नायमनुवर्तत' इत्यादीनां चिन्त्यं साधुत्वम् ॥ ३१ ॥

**पृथग्विनानानाभिस्तृतीयान्यतरस्याम्** ॥ अन्यतरस्यांग्रहणेन पक्षे यथाप्राप्तस्याभ्यनुज्ञानात् तृतीयया मुक्ते शेषत्वात्पक्षे षष्ठी प्राप्नोति । अथ स्यादनेकार्थत्वान्निपातानामन्यतरस्यांग्रहणं समुच्चयार्थम्, न विकल्पार्थमिति ? एवमप्यनन्तरा द्वितीया समुच्चीयेत । अथापि योगविभागेनास्या अपि सिद्धिः, एवमपि तदनन्तरा षष्ठी समुच्चीयेत न कथञ्चन पञ्चमी, सा चेष्यते, तत्कथमित्याह—**पञ्चमीग्रहणमिति । इहेति ।** न पूर्वयोर्योगयोः मण्डूकगतयोऽधिकारा भवन्ति, यद्यनुवृत्तिसामर्थ्यात्पञ्चमी, अन्यतरस्यांग्रहणं तर्हि किमर्थम् ?

### भावबोधिनी

'एनबन्यतरस्यामदूरेऽपञ्चम्याः' पा० सू० ५।३।३५ यह सूत्र आगे कहा जाएगा । [ यह 'एनप्' प्रत्यय भी अतस् के समान स्वार्थिक है । ] इस एनप् प्रत्ययान्त के योग में द्वितीया विभक्ति होती है । [ अतसर्थ प्रत्यय होने के कारण ] पूर्व सूत्र से षष्ठी की प्राप्ति रहने पर यह सूत्र बनाया गया है । उदा० दक्षिणेन ग्रामम् [ गाँव से दक्षिण ओर ] उत्तरेण ग्रामम् । [ गाँव से उत्तर की ओर ]

षष्ठी भी इष्ट है – दक्षिणेन ग्रामस्य उत्तरेण ग्रामस्य । इस षष्ठी का विधान करने के लिये योग-विभाग करना चाहिये । [ भाव यह है कि 'एनपा' यह योग-विभाग करके पूर्व सूत्र से षष्ठी' की अनुवृत्ति कर लेनी चाहिये । ] ॥ ३१ ॥

यहाँ पञ्चमीग्रहण की अनुवृत्ति होती है । पृथक्, विना, नाना–इन शब्दों के योग में तृतीया विभक्ति होती है, और विकल्प से पञ्चमी भी होती है । उदा० पृथग् देवदत्तात्, पृथग् देवदत्तेन [ देवदत्त से पृथक् = अलग ], बिना देवदत्तेन, विना देवदत्तात् [ देवदत्त के विना ], नाना देवदत्तेन, नाना देवदत्तात् [ देवदत्त के बिना, या भिन्न । ] 'पृथग् बिना नानाभिः' यह योग-विभाग द्वितीया विभक्ति के लिये करना चाहिये, अर्थात् इन तीनों के योग में द्वितीया का भी उपपादन करने के लिये योग-विभाग करना चाहिये ।

देवदत्तात् । 'पृथग्विनानानाभिः' इति योगविभागो द्वितीयार्थः ॥

विना वातं विना वर्षं विद्युत्प्रपतनं विना ।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ ॥

**४९४. करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥ (६०४)**

स्तोक, अल्प, कृच्छ्र, कतिपय—इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करण इत्येव सिद्धा। यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता। स्तोकान्मुक्तः, स्तोकेन मुक्तः। अल्पान्मुक्तः, अल्पेन मुक्तः, कृच्छ्रान्मुक्तः, कृच्छ्रेण मुक्तः। कतिपयान्मुक्तः, कतिपयेन मुक्तः।

असत्त्ववचनस्येति किम् ? स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। करण इति किम् ? क्रियाविशेषणे

**न्यासः**

यद्येवम्, अनुवृत्तेरेव पक्षे भविष्यति, तत् किमर्थमन्यतरस्यांग्रहणम् ? सत्यम्; तत् कृतञ्च तस्या एवानुवृत्तेः सूचनार्थमुत्तरार्थञ्च ॥ ३२ ॥

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ यदा तु धर्ममात्रमित्यादि ।** यद्योगाद् द्रव्यं स्तोकादिव्यपदेशमासादयति ते गुणा धर्मशब्देनोच्यन्ते। तन्मात्रं स्तोकादिभिः शब्दैरभिधीयमानं करणत्वेन यदा विवक्ष्यते न तु द्रव्यम्, तदा स्तोकादिशब्दानामसत्त्ववचनता। यदा तु सोऽयमित्यभेदाद् तद्वति द्रव्ये वर्त्तन्ते, तदा तेषां सत्त्ववचनता भवति।

**पदमञ्जरी**

समुच्चयार्थम्। तत्र किं समुच्चीयते? इत्यपेक्षायाम् **'पञ्चमीग्रहणमिहानुवर्त्तते'** इत्युच्यते। **योगविभागः [द्वितीयार्थः] कर्त्तव्य इति**। असत्यपि **मुनित्रयवचने** प्रयोगबाहुल्यादेवं व्याख्यातम् ॥ ३२ ॥

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ यदा धर्ममात्रमिति।** यद्योगाद् द्रव्यं स्तोकादिव्यपदेशमासादयति ते गुणा धर्माः, उभयवचना ह्येते द्रव्यमाहुर्गुणं च शुक्लादिवत्। यदा गुणवचनास्तदाऽसत्त्ववचनतेत्यर्थः। **क्रियाविशेषणे कर्मणीति**। आख्यातेन हि क्रिया साध्यमानावस्थोच्यते—चलति, चलनं

**भावबोधिनी**

"वायु के बिना, वर्षा के बिना, बिजली गिरे बिना, हाथी द्वारा किये गये दोषों के बिना किसने ये दोनों वृक्ष गिरा दिये हैं ॥"

[ यहाँ 'बिना' का सुन्दर प्रयोग है। ] ॥ ३२ ॥

स्तोक, अल्प, कृच्छ्र, और कतिपय—इन असत्त्ववाची ( अद्रव्यवाची ) शब्दों से करण कारक में विकल्प से तृतीया होती है। यहाँ पक्ष में पञ्चमी का विधान होता है, तृतीया तो 'करण में' इसी से सिद्ध ही है। जब केवल धर्म की करणत्वरूप से विवक्षा होती है, द्रव्य की नहीं; तब स्तोक आदि शब्द असत्त्ववाची होते हैं। उदा० स्तोकात् मुक्तः, स्तोकेन मुक्तः [ थोड़े से ही मुक्त हो गया ] अल्पात् मुक्तः, अल्पेन मुक्तः। [ अल्प प्रयासादि से ही छूट गया। ]

कृच्छ्रात् मुक्तः, कृच्छ्रेण वा मुक्तः [ कष्ट से मुक्त हुआ ] कतिपयात् मुक्तः, कतिपयेन मुक्तः [ कुछ से छूट गया। यहाँ सभी शब्द केवल धर्म के वाचक है धर्मी द्रव्य के नहीं। ]

असत्त्ववाची = द्रव्य का वाचक न हो—इसका क्या फल है ? स्तोकेन विषेण हतः [ थोड़े से विष से मर गया ] अल्पेन मधुना मत्तः [ थोड़े से मधु से मत्त हो गया। यहाँ स्तोक और अल्प शब्द विशेषणरूपेण विष तथा मधु रूपी द्रव्यों के वाचक हैं। अतः पञ्चमी नहीं है, करण में केवल तृतीया होती है। ] करण में होती है—इसका क्या फल है ?

कर्मणि मा भूत्—स्तोकं मुञ्चति ॥

४९९. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ ३४ ॥ (६११)

पञ्चम्यनुवर्त्तते । दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च । दूरं ग्रामात्, दूरं ग्रामस्य (म० भा०)। विप्रकृष्टं ग्रामात्, विप्रकृष्टं ग्रामस्य । अन्तिकं ग्रामात्, अन्तिकं ग्रामस्य । अभ्याशं ग्रामात्,

न्यासः

**क्रियाविशेषणे कर्मणि मा भूदिति** । क्रियायाः साध्यत्वात् कर्मत्वम् । तद्विशेषणमपि कर्म भवति, तच्चासत्त्वं भवति । क्रियैव हि तावद् द्रव्यं न भवति, कुतः पुनस्तद्विशेषणं द्रव्यं भविष्यति ? एकार्थत्वेऽपि स्तोकादीनां भेदेनोपादानं पर्यायान्तरनिवृत्त्यर्थम् । इह मा भूत्—मात्रया मुक्त इति ॥ ३३ ॥

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्** ॥ विकल्पेन पञ्चम्यां विहितायां पक्षे शेषत्वादेव यद्यपि सिद्ध्यति, तथापि यदिह षष्ठीग्रहणं कृतं तत् 'चतुर्थी चाशिष्य' इत्यादिनाऽऽशिषि या चतुर्थी विधीयते तामपि बाधित्वा षष्ठ्येव यथा स्यादित्येवमर्थम्—दूरं हितं ग्रामस्य, अन्तिकं हितं ग्रामस्येति । ननु चान्यतरस्यांग्रहणे प्रकृते पुनरन्यतरस्यांग्रहणं किमर्थमित्याह—**अन्यतरस्यांग्रहणमित्यादि** । यदीहान्यतरस्यांग्रहणं न क्रियेत तदा पक्षे तृतीया स्यात्; तस्या एवानन्तरसूत्रे श्रुतत्वात् । पुनरन्यतरस्यांग्रहणं क्रियमाणं पञ्चमीविधानार्थं विज्ञायते;

पदमञ्जरी

करोतीति । अतस्तद्विशेषणं स्तोकादि कर्म भवति—स्तोकं चलनं करोतीति । एवं तु विशेष्यवचनस्स्तोकशब्दो द्रव्यवचन इति नात्र प्रसङ्गः । यत्र च फलान्तरं साध्यं प्रति धात्वर्थः करणतया विवक्ष्यते तत्र विशेषणत्वं न स्यात्—शोभनं 'ज्योतिष्टोमेन स्वर्गकामो यजेत'(तै०सं०)ति । अत्र हि यथा फलभावनायां करणभूतस्य याग-स्याभिधायकाद् ज्योतिष्टोमशब्दात् तृतीया भवति, तथा तद्विशेषणाच्छोभनशब्दादपि स्यात् । अन्यस्त्वाह—संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात्क्रियायाः कर्मत्वात् तद्विशेषणस्य कर्मत्वं स्यादिति तस्यापि संदर्शनादीनां क्रियायाश्चाभेदविवक्षायां कर्मत्वं न स्याद्, न हि तत्र क्रियायाः कर्मत्वमस्ति ॥ ३३ ॥

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्** ॥ पक्षे पञ्चम्यर्थे वचनम्, षष्ठी तु शेषत्वादेव सिद्धा । यद्येवम्, अन्यतरस्यांग्रहणमनर्थकं षष्ठीमात्रवचने वैय्यर्थ्यादेव प्रकृता पञ्चमी विधायिष्यते, तत्राह—**अन्यतरस्यांग्रहण-मिति** । वचनसामर्थ्याद्धि प्रकृतविधाने विज्ञायमाने तृतीयाया अपि विधिः स्यात् । ननु कृतमप्यन्यतरस्यां-ग्रहणं विकल्पार्थम्, समुच्चयार्थं वा; विकल्पार्थे तावत् षष्ठ्या मुक्ते स्वादिसूत्रेणा प्राप्ताः सर्वा एव विभक्तयः स्युः, समुच्चयार्थेऽपि प्रकृता तृतीया कस्मान्न समुच्चीयते ? उच्यते—'पृथग्विनानानाभिः' इत्यत्र तावद्

भावबोधिनी

क्रिया के विशेषण कर्म में [ पञ्चमी-तृतीया ] न होने लगे—स्तोकं मुञ्चति [ थोड़ा छोड़ता है । यहाँ स्तोक यह मोचन क्रिया का विशेषण है । ]

**विमर्श**—स्तोक आदि शब्द जब विशेषणादि होकर किसी सत्त्व = द्रव्य अर्थ के वाचक नहीं होते है, अकेले प्रयुक्त होकर केवल धर्म के वाचक होते हैं, तब यह सूत्र पञ्चमी और तृतीया दोनों करता है । जब 'स्तोकेन विषेण' आदि रूप में द्रव्यवाची होते हैं तब यह सूत्र लागू नहीं होता है करण में केवल तृतीया ही होती है । अतः—'स्तोकाद् मुक्तः अथवा स्तोकेन मुक्तः'—इनका अर्थ है—थोड़े प्रयास से छूट गया ॥ ३३ ॥

[ 'अपादाने पञ्चमी' पा० सू० २।३।२८ से ] 'पञ्चमी' इसकी अनुवृत्ति होती है। दूर और अन्तिक = समीप अर्थवाले शब्दों के योग में षष्ठी विभक्ति विकल्प से होती है और पक्ष में पञ्चमी होती है । उदा०—ग्रामाद् दूरम्, ग्रामस्य दूरम् [ गाँव से दूर ] । विप्रकृष्टं ग्रामात्, विप्रकृष्टं ग्रामस्य [ गाँव से दूर ] । अन्तिकं ग्रामस्य, अन्तिकं ग्रामात्

**अभ्याशं ग्रामस्य । अन्यतरस्यांग्रहणं पञ्चम्यर्थम्, इतरथा हि तृतीया पक्षे स्यात् ॥**

## ४९६. दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३५ ॥ (६०५)

**पञ्चम्यनुवर्त्तते । दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात्पञ्चमी तृतीयापि समुच्चीयते । दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य (म० भा०) । अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य ।**

**प्रातिपदिकार्थे विधानम् । असत्त्ववचनग्रहणं चानुवर्त्तते । सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति— दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वम् ॥**

### न्यासः

प्रयोजनान्तराभावात् । तथा हि—तृतीयाविकल्पार्थं तावदेतन्न भवति । तृतीयाविकल्पो हि पूर्वकेणान्यतरस्यांग्रहणेन सिध्यति । न चान्या काचिद्विभक्तिः प्रकृता, किं तर्हि ? तस्मात् पञ्चमीविकल्पार्थमेतद् विज्ञायते ॥३४॥

**दूरान्तिकार्थेभ्यो द्वितीया च ॥ पञ्चमी चेति ।** तदनुवृत्तिसामर्थ्यात् **तृतीयापि समुच्चीयत इति** चकारेण । **यथायथमिति ।** यथास्वं यो यस्यात्मीयो विषयस्तत्रासौ भवति, न विभक्त्यन्तरमित्यर्थः ॥ ३५ ॥

### पदमञ्जरी

'अन्यतरस्यांग्रहणेन पञ्चमी समुच्चीयते' इत्युक्तम्, अत इहाप्येकप्रघट्टकत्वात्सैव समुच्चीयते । अत एतदपि न चोदनीयम्—'अन्यतरस्यांग्रहणे प्रकृते पुनरन्यतरस्यांग्रहणं किमर्थम्' इति; तत्रापि हि पक्षे तृतीया स्यात् ॥३४॥

**दूरान्तिकार्थेभ्यो द्वितीया च ॥ प्रातिपदिकार्थे विधानमिति ।** अर्थान्तरस्यानिर्देशादिति भावः । नन्वनिर्देशेऽप्यर्थान्तरस्य शेषविषये पूर्वविभक्तिविषये च विधानमेतद्युक्तम्, प्रथमाविषये तु परत्वात्सैव प्राप्नोति ? नैष दोषः; उत्तरत्राप्येतदनुवर्त्तते, तेनोत्तरविभक्तिविषयेऽपि सर्वत्र यथाभिधानं भवति । तथा च दूरादावसथान्मूत्रमित्यधिकरणेऽपि भवति—आवसथस्य दूर इत्यर्थः । प्रातिपदिकार्थे विधानमित्येतत्तदाहृतविषयं द्रष्टव्यम् । तथा च—'सत्त्ववचनेभ्यो यथायथं विभक्तयो भवन्ति' इति वक्ष्यति, प्रातिपदिकार्थ एव तु विधाने यथायथमित्यनुपपन्नम्, प्रथमैव भवतीति वाच्यं स्यात् ॥ ३५ ॥

### भावबोधिनी

[ गांव के समीप ] । अभ्याशं ग्रामात्, अभ्याशं ग्रामस्य [ गांव के समीप ] । 'अन्यतरस्याम्' [ विकल्प से ]—इसका ग्रहण पञ्चमी के लिये है, अन्यथा पक्ष में तृतीया होने लगती ॥ ३४ ॥

[ 'अपादाने पञ्चमी' पा० सू० २।३।२८ से ] 'पञ्चमी' इसकी अनुवृत्ति होती है । दूर तथा अन्तिक = समीप अर्थों के वाचक शब्दों से द्वितीया विभक्ति होती है 'च' के बल से पञ्चमी और तृतीया इनका भी समुच्चय होता है । उदा०—दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य [ गाँव से दूर । यहाँ 'दूर' शब्द में तीनों विभक्तियाँ हैं । ] अन्तिकं ग्रामस्य, अन्तिकात् ग्रामस्य, अन्तिकेन ग्रामस्य [ गाँव के समीप ] ।

[ इन विभक्तियों का कोई अतिरिक्त अर्थ नहीं है क्योंकि ] प्रातिपदिक के अर्थ में ही इनका विधान है । और यहाँ असत्त्ववचन = अद्रव्यवाची—इसकी अनुवृत्ति होती है । सत्त्ववाची = द्रव्यवाची दूर और अन्तिक अर्थवाले शब्दों से तो विषयानुसार विभक्तियाँ होती हैं—दूरः पन्थाः [ दूर वाला रास्ता । यहाँ प्रथमा है । ] दूराय पथे देहि [ दूर वाले रास्ते के लिये दीजिये ] दूरस्य पथः स्वम् [ दूर वाले रास्ते का धन ] ॥ ३५ ॥

## ४९७. सप्तम्यधिकरणे च ॥ ३६ ॥ (६३३)

**सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि – दूरे ग्रामस्य, अन्तिके ग्रामस्य, अभ्याशे ग्रामस्य। दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीयातृतीयापञ्चमीसप्तम्यः।**

**❀ सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ❀ (म०भा० २.३.३६ वा० १)। अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि।**

### न्यासः

**सप्तम्यधिकरणे च॥ दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्तीति।** पूर्वसूत्रेण द्वितीयादयस्तिस्रः, अनेन सप्तमी।

**सप्तमीविधाने क्तस्येन्विषयस्येत्यादि।** इन्विषयो यः क्तस्तदीये कर्मणि सप्तमी विधेया। कश्चेन्विषयः क्तः? यस्तदन्तस्तेनैव सह प्रयुज्यत इत्यर्थः। अनन्यत्रभावार्थत्वादत्र विषयशब्दस्य। **अधीती व्याकरणे इति।** अधीतं व्याकरणमनेनेति। 'श्राद्धमनेन भुक्तम्' इत्यतोऽनेनेत्यनुवर्त्तमाने 'पूर्वादिनिः' इत्यत इनिरित्यनुवर्त्तमाने च 'इष्टादिभ्यश्च' इतीनिप्रत्ययः। अत्र यद्यपि कर्मण्येव क्तो विहितस्थापि तद्धित उत्पन्नेऽधीतव्याकरणयोरभिसम्बन्धो निवर्त्तते। अस्ति च धात्वर्थस्य व्याकरणेन सम्बन्ध इति कर्मैव व्याकरणं भवतीत्यतो द्वितीया स्याद्, यथा—कृतपूर्वी कटमिति। तस्मात् सप्तम्या उपसंख्यानम् = प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—योऽसावधीती कर्त्ता तस्य व्याकरणं विषयत्वेन विवक्ष्यते। तस्मादधिकरण इत्येवं सिद्धा सप्तमी।

### पदमञ्जरी

**सप्तम्यधिकरणे च॥ क्तस्येन्विषयस्येति।** इन्नन्तः शब्दो विषयो वृत्तिभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। **अधीती व्याकरण इति।** अधीतमनेनेति विगृह्य श्राद्धमनेन भुक्तमित्यतोऽनेनेति वर्त्तमाने 'इष्टादिभ्यश्च' इतीनिप्रत्यये कृते तद्धितार्थेन कर्त्रा सहैकीभूतस्याधीतस्य निष्कृष्य व्याकरणादिना सम्बन्धाभावात् क्तप्रत्ययेनानभिहिते व्याकरणादौ गुणभूतयापि प्रकृतिवाच्ययाऽध्ययनक्रिययाऽधीतवान् व्याकरणमितिवत् कर्मतया सम्बध्यमाने कृतपूर्वी कटमितिवद् द्वितीयायां प्राप्तायां सप्तमी विधीयते। इह मासमधोती व्याकरण इति कालकर्मणोर्बहिरङ्गत्वात्सप्तम्यभावः।

### भावबोधिनी

अधिकरण कारक में सप्तमी विभक्ति होती है, 'च' के बल से दूर तथा समीप अर्थवाची शब्दों से भी सप्तमी होती है। उदा० कटे आस्ते [ चटाई पर बैठता है। ] शकटे आस्ते [ बैलगाड़ी पर बैठता है। ] स्थाल्यां पचति [ बटलोई में पकाता है। इन लक्ष्यों में 'आधारोऽधिकरणम्' पा० सू० १।४।४५ से कट, शकट और स्थाली की अधिकरण संज्ञा होती है। इसके बाद यह सूत्र उनमें सप्तमी विभक्ति करता है। ] दूर और समीप अर्थों के वाचक शब्दों से भी सप्तमी होती है—दूरे ग्रामस्य [ गाँव से दूर ]। अन्तिके ग्रामस्य, अभ्याशे ग्रामस्य। [ गाँव के समीप में ]। दूर तथा समीप अर्थों के वाचक शब्दों से चार विभक्तियाँ होती हैं—(१) द्वितीया, (२) तृतीया, (३) पञ्चमी, (४) सप्तमी। [ इन चारों का अतिरिक्त कोई अर्थ नहीं होता है ये प्रातिपदिकार्थ में ही विहित हैं। ]

* सप्तमी के विधान में, इन्प्रत्ययविशिष्ट 'क्त' प्रत्ययान्त के कर्म में भी कहना चाहिये।* उदा०—अधीती व्याकरणे [ व्याकरण को पढ़नेवाले ] परिगणिती याज्ञिके [ याज्ञिक परिगणनवाला ] अम्नाती छन्दसि [ वेद आम्नात करने वाला ]।

**❀ साध्वसाधुप्रयोगे च सप्तमी वक्तव्या ❀ (म० भा० वा० २)। साधुर्देवदत्तो मातरि। असाधुः पितरि।**
**❀ कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या ❀ (म०भा० वा० ३)।**
**ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते।**
**❀ कारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या ❀ (म० भा० वा० ४)।**
**दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति।**

**न्यासः**

**साध्वसाधुप्रयोग इत्यादि**। अनचार्थमिह साधुशब्दस्य ग्रहणम्। अर्चायां हि 'साधुनिपुणाभ्यामर्चायाम्' इत्यनेनैव सिद्धा सप्तमी। **साधुर्देवदत्तो मातरीत्यादि**। अत्राप्यधिकरण एव सप्तमी। तथा ह्यत्र मातृस्थासु क्रियासु मातृशब्दो वर्त्तते, पितृस्थासु क्रियासु पितृशब्दः; तासाञ्च क्रियाणां साध्वसाधुतां प्रति विषयभावोऽस्तीति वैषयिकाधिकरण एव सप्तमी। वक्तव्यशब्दस्तु व्याख्येय इत्यर्थे वर्तते। एवमुत्तरत्रापि।

**कारकार्हाणाञ्चेत्यादि**। भावप्रधानोऽत्र कारकशब्दः। क्रियां प्रति येषां कारकत्वं साधनत्वं न्याय्यं ते कारकार्हा, तेषां कारकार्हत्वे सप्तमी वक्तव्या। **ऋद्धेष्वित्यादि**। ऋद्धा हि भुजिक्रियां प्रति साधनभावमर्हन्ति। तेषामेव चेह कारकत्वं विवक्षितम्। एतदनुसारेण कारकार्हाणाञ्चाकारकत्व इत्येवमादेरर्थो वेदितव्यः। अत्रापि सर्वत्र 'यस्य च भावेन भावलक्षणम्' इत्यनेनैव सिद्धा सप्तमी। तथा हि—ऋद्धादिसम्बन्धिना भुजिक्रियादिलक्षणेनात्र भावेन दरिद्रादिसम्बन्ध्यासनादिभावो लक्ष्यते।

**पदमञ्जरी**

**साधुर्देवदत्तो मातरीति**। अत्र साधुत्वासाधुत्वयोर्मातापितृविषयत्वेऽपि क्रियाया अभावादधिकरणत्वाभावाद्वचनम्। 'साधुनिपुणाभ्याम्' इत्येव सिद्धेऽनचार्थमत्र साधुग्रहणम्, तेन तत्त्वकथनेऽपि भवति। अर्चाग्रहणं तत्र निपुणार्थम्। कथं तर्हि तत्र प्रत्युदाहरिष्यते-अर्चायामिति किं साधुर्भृत्यो राज्ञ इति? उच्यते, राज्ञो भृत्येन सह शाब्दोऽन्वयः, न साधुना—राज्ञो भृत्यः स साधुरिति। तत्र राजनि वान्यत्र वेति नैतच्छब्देन स्पृश्यते, प्रत्यासत्त्या तु राजविषयमेव साधुत्वं गम्यत इत्येतावता तं प्रत्युदाहरणं द्रष्टव्यम्।

**कारकार्हाणामिति**। कारकशब्दो भावसाधनः, कारकत्वार्हाणामित्यर्थः। **ऋद्धेष्विति**। ऋद्धा भोजनक्रियामर्हन्तीति कारकार्हाः, लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनम्। **दरिद्रेष्वासीनेष्विति**। दरिद्रा भो नक्तुंार्हन्तीत्यकारकार्हाः।

**भावबोधिनी**

**विमर्श**—इन्विषयस्य क्तस्य—इन् = इन्नन्तः शब्दो विषयो = वर्तनभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अन्ये त्वाहुः—इनो विषयः—इति षष्ठीसमासः। विषयशब्देनेह प्रकृतिरुच्यते, क्तान्तस्येनः प्रकृतित्वादति। [ तत्त्वबोधिनीव्याख्या ]। भाव यह है कि जिस क्त प्रत्ययान्त से पुनः इनि प्रत्यय होनेवाला है, उस क्त प्रत्ययान्त के कर्म में सप्तमी होती है। ऐसे प्रयोगों में पहले कर्म की अविवक्षा मानकर भाव में 'क्त' प्रत्यय किया जाता है—अध्ययनम् = अधीतम्। इसके बाद अधीतम् अनेन—इस विग्रह में 'इष्टादिभ्यश्च' ( पा० सू० ५।२।८८ ) सूत्र से 'इनि' प्रत्यय होता है—अधीती। इसके बाद 'किम् अधीतवान्?' इस प्रश्न में 'व्याकरणम्' इस कर्म को जोड़ा जाता है। इस कर्मभूत 'व्याकरण' से सप्तमी होती है—व्याकरणकर्मक-अध्ययनकर्ता—यह अर्थ होता है।

[ अनु० ] * साधु तथा असाधु के प्रयोग में सप्तमी कहनी चाहिये।* उदा०—साधुः देवदत्तः मातरि [ माता के लिये अच्छा देवदत्त ], असाधुः पितरि [ पिता के लिये खराब देवदत्त ]।

* कारकत्व = कारक बनने योग्यों के कारक बनने पर सप्तमी कहनी चाहिये।* उदा० ऋद्धेषु भुञ्जानेषु दरिद्रा

❀ **तद्विपर्यासे च सप्तमी वक्तव्या** ❀ (म० भा०, वा०)। **ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति।**

❀ **निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या** ❀ (म० भा० २.३.३६ वा०)।

**चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥** (म० भा०)

**न्यासः**

**चर्मणि द्वीपिनं हन्तीत्यत्र** द्वीपिहननस्य निमित्तं चर्म, तस्य द्वीपिना कर्मणा सह संयोगः। अत्रापि चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धा सप्तमी। ननु च दूरान्तिकार्थानुकर्षणार्थश्चकारः; नार्थस्तदनुकर्षणार्थेन चकारेण, सप्तमीति योगविभागादेव दूरान्तिकार्थेभ्यः सप्तमी भविष्यति। अथ वा—उत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् सप्तमी वेदितव्या॥ ३६॥

**पदमञ्जरी**

**तद्विपर्यासे चेति।** कारकार्हाणामकारकत्वेऽकारकार्हाणां च कारकत्व इत्यर्थः।

**निमित्तात्कर्मयोग इति।** यत् क्रियाप्रयोजनं यदर्थः क्रियारम्भस्तत्फलमिह निमित्तम्, तद्वाचिनः सप्तमी भवति। यदि तस्य निमित्तस्य कर्मणा कर्त्तुरीप्सिततमेन सह समवायादिलक्षणः सम्बन्धो भवतीत्यर्थः, तत्र हेतुतृतीयायां प्राप्तायां वचनम्, तत्र हन्तिकर्मणा द्वीप्यादिना चर्मादेर्निमित्तस्य समवायः सम्बन्धः। **चमरीमिति।** चमरशब्दाज्जातिलक्षणो ङीष्। पुष्कलकः=शंकुः, स सीम्नि=सीमाज्ञानार्थं हतो=निखात इत्यर्थः, तेन च निहन्यमानेन शङ्कुना सीम्नः संयोगः सम्बन्धः। कर्मसम्बन्ध इति किम्? वेतनेन धान्यं लुनाति॥ ३६॥

**भावबोधिनी**

आसते [ सम्पन्न लोगों के खाते हैं, दरिद्र बैठे रहते हैं। ] ब्राह्मणेषु तरत्सु वृषला आसते। [ ब्राह्मण तर जाते हैं=पार हो जाते हैं, शूद्र पड़े रहते हैं। ]

* कारत्व=कारक बनने के योग्य लोगों के कारक न बनने पर उनसे सप्तमी कहनी चाहिये।* उदा० दरिद्रेषु आसीनेषु ऋद्धा भुञ्जते [ दरिद्र लोग बैठे रहते हैं, धनी खा लेते हैं। ] वृषलेषु आसीनेषु ब्राह्मणास्तरन्ति [ शूद्र बैठे रहते हैं, ब्राह्मण पार हो जाते हैं। ]

* पूर्वोक्त का वैपरीत्य रहने पर भी सप्तमी कहनी चाहिये।* उदा०—ऋद्धेषु आसीनेषु दरिद्रा भुञ्जते। [ सम्पन्न लोग बैठे रहते हैं, दरिद्र खा लेते हैं। ] ब्राह्मणेषु आसीनेषु वृषलाः तरन्ति। [ ब्राह्मण बैठे रह जाते हैं, शूद्र नदी पार कर जाते हैं। ]

* कर्म के साथ संयोग रहने पर निमित्तवाचक शब्द से सप्तमी कहनी चाहिये।* उदा० चर्मणि द्वीपिनं हन्ति। [ चमड़े के लिये बाघ को मारता है। ] दन्तयोः हन्ति कुञ्जरम्। [ दाँतों के लिये हाथी को मारता है। ] केशेषु चमरी हन्ति। [ केश=पूँछ के लिये चमरी गाय को मारता है ] सीम्नि पुष्कलकः हतः। [ सीमा=अण्डकोष के लिये पुष्कलक=गन्धमृग मारा गया। अथवा सीमा के ज्ञान के लिये शंकु गाड़ा गया। ]

**विमर्श**—वार्तिकस्थ 'संयोग' शब्द सम्बन्धपरक है। और इसीलिये संयोग तथा समवाय इन दोनों सम्बन्धों को ही लिया जाता है। नव्यवैयाकरणों ने 'कर्मयोगे' यह पाठ करके—योगः=संयोगसमवायात्मकः' ऐसी व्याख्या की है, 'निमित्त' शब्द हेतुवाचक नहीं है। जिस फल की प्राप्ति के लिये कोई क्रिया की जाती है, उसे ही 'निमित्त' माना जाता है। चर्मणिद्वीपिनं हन्ति—आदि में हनन क्रिया का फल है - चर्मप्राप्ति, इस चर्म का द्वीपी=बाघ के साथ समवाय सम्बन्ध है। अतः इस हनन-क्रिया के कर्मभूत बाघ के साथ अवयवरूपेण विद्यमान 'चर्म' में सप्तमी होती है। इसी प्रकार अन्य उदाहरणों में "हेतौ" ( पा० सू० २।३।२३ ) से तृतीया प्राप्त होती है, इसकी अपवाद यह सप्तमी है॥ ३६॥

## ४९८. यस्य च भावेन भावलक्षणम् ।। ३७ ।। ( ७३४ )

**'सप्तमी' इति वर्तते। भावः = क्रिया। यस्य च भावेन = यस्य च क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमी विभक्तिर्भवति। प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः। दुग्धास्वागतः। अग्निषु हूयमानेषु गतः। हुतेष्वागतः (म० भा०)।**

**भावेनेति किम्? यो जटाभिः स भुङ्क्ते। पुनर्भावग्रहणं किम्? यो भुङ्क्ते स देवदत्तः॥**

### न्यासः

**यस्य च भावेन भावलक्षणम्** ।। कीदृशी पुनः क्रिया क्रियान्तरं लक्षयतीत्यत आह—**प्रसिद्धा चेत्यादि**। चकारोऽवधारणार्थः प्रसिद्धैवेत्यर्थः। न हि स्वयमप्रसिद्धं परस्य लक्षणमुपपद्यते। अथ कथं फलायमानेष्वाम्रेषु गतः, पक्वेष्वागत इत्यत्र सप्तमी, न हीह भावः श्रूयते? यद्यपि न श्रूयते तथापि गम्यते। फलायमानेषु जातेष्विवत्यर्थः ।। ३७ ।।

### पदमञ्जरी

**यस्य च भावेन भावलक्षणम्** ।। इह भूयो दर्शनाश्रयो लक्ष्यलक्षणभावः, यथा—अग्निधूमयोः, ततश्चोदित आदित्ये तमो नष्टम्, उदिते चन्द्रमसि समुद्रः प्रवृद्ध इत्यादावेव स्याद्; इह त्वग्निषु हूयमानेषु गत इत्यग्निहवनं यदा गमनेन सह पुनःपुनर्न दृष्टचरं तदा न तत्तस्य लक्षणमितीह न स्यादित्याशङ्कयाह—**प्रसिद्धा च क्रियेति**। प्रसिद्धिरेव क्रियायाः क्रियां प्रति लक्षणत्वे उपयुज्यते, न पुनर्दर्शनम्। एतदुक्तं भवति—निर्ज्ञातकाला क्रिया अनिर्ज्ञातायाः क्रियायाः सकृदपि कालपरिच्छेदहेतुत्वेनोपात्ता भवत्येव लक्षणमिति ।। ३७ ।।

### भावबोधिनी

पूर्व सूत्र से 'सप्तमी' इसकी अनुवृत्ति होती है। भाव = क्रिया। जिसके भाव द्वारा जिसकी क्रिया द्वारा दूसरी क्रिया लक्षित होती है, उस भाववान् = क्रिया विशिष्टवाचक से सप्तमी विभक्ति होती है। और प्रसिद्ध क्रिया दूसरी क्रिया को लक्षित करती है। उदा०—गोषु दुह्यमानासु गतः [ गायों के दुहते रहने पर गया ]। दुग्धासु गोषु आगतः [ गायों के दुह चुकी जाने पर चला गया। ] अग्निषु हूयमानेषु गतः [ अग्नियों के हवन करने पर गया = अग्निहोत्र के समय गया। ] हुतेषु अग्निषु आगतः [ अग्नियों के हवन काल के बाद आ गया। ]

भावद्वारा = क्रियाद्वारा—इसका क्या फल है? यो जटाभिः स भुङ्क्ते। [ जो जटाओं के सहित है, वह खा रहा है। [ यहाँ ज्ञापक जटाये हैं, वे क्रिया = भाव नहीं हैं। अतः सप्तमी नहीं होती है। ] दूसरी बार भाव = क्रिया के ग्रहण का क्या फल है? यो भुङ्क्ते सः देवदत्तः। [ जो खा रहा है वह देवदत्त है। यहाँ भोजन क्रिया से दूसरी क्रिया नहीं अपितु देवदत्त द्रव्य लक्षित हो रहा है। अतः सप्तमी नहीं होती है। ]

**विमर्श**—'भाव' शब्द क्रियावाची है। जहाँ एक क्रिया का काल ज्ञात = प्रसिद्ध रहता है और दूसरी का ज्ञात नहीं रहता है वहाँ ज्ञात कालवाली क्रिया अज्ञात कालवाली क्रिया की लक्षक होती है। इस प्रकार ज्ञात क्रिया के आश्रयभूत कर्ता और कर्म के वाचक शब्दों से सप्तमी होती है। किसी ने प्रश्न किया—देवदत्तः कदा गतः? उत्तर दिया गया—गोषु दुह्यमानासु गतः। कदा आगतः? गोषु दुग्धासु आगतः। यहाँ दोहन क्रिया ही गमन क्रिया की लक्षक होती है। परन्तु कर्त्ता या कर्म के माध्यम से ही क्रिया रहती है। उक्त उदाहरणों में कर्म = गो में क्रिया है, अतः तदाश्रयभूत 'गो' से सप्तमी होती है।

कर्ता का उदाहरण नहीं दिया गया है। इसका उदाहरण है—कदा गतः? ब्राह्मणेषु अधीयानेषु गतः। जब ब्राह्मण अध्ययन कर रहे थे तब गया। ]

## ४९९. षष्ठी चानादरे ॥ ३८ ॥ ( ६३५ )

**पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात् सापि भवति । अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः । रुदतः प्राव्राजीत्, रुदति प्राव्राजीत् । क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत् । क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः ॥**

## ५००. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥ ( ६३६ )

**षष्ठीसप्तम्यौ वर्तेते । स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, प्रसूत—इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः । गवां स्वामी, गोषु स्वामी । गवामीश्वरः, गोष्वीश्वरः । गवामधिपतिः, गोष्वधि-**

### न्यासः

**षष्ठी चानादरे** ॥ अनादरः = तिरस्कारः, परिभव इत्यर्थः । **रुदत इति** । 'रुदिर् अश्रुविमोचने', शतृप्रत्ययः ॥ ३८ ॥

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** ॥ स्वामीश्वराधिपतीनामेकार्थत्वेऽपि भेदेनोपादानं पर्या-

### पदमञ्जरी

**षष्ठी चानादरे ॥** 'अनादरे' इति पूर्वेण सप्तमी, एतच्च भावलक्षणभावस्य विशेषणम्, यश्चानादरे सति भावलक्षणः, सोऽनादराधिको भवतीत्याह—**अनादराधिक इति** । अनादरविशिष्टेऽनाद्रियमाण इत्यर्थः । **रुदतः प्राव्राजीदिति** । पित्रादिकस्य रोदनमनादृत्य प्रव्रज्यां कृतवानित्यर्थः ॥ ३८ ॥

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ गवां दायाद इति** । दीयत इति दायः = अंशः, दायमादत्त इति सोपसर्गादपि दायाद इति निपातनात् कः । गवामित्येतत्समुदायस्य विशेषणमवयवमपि दायांशं

### भावबोधिनी

इसे सत् सप्तमी कहा जाता है क्योंकि इसके प्रयोग 'सत्' शब्दरूप का भी प्रयोग कर देने पर स्पष्टता हो जाती है, जैसे—ब्राह्मणेषु अधीयानेषु सत्सु गतः ॥ ३७ ॥

पूर्ववर्त्ती सूत्रद्वारा सप्तमी की प्राप्ति रहने पर षष्ठी का विधान किया जा रहा है, 'च' के बल से वह सप्तमी भी होती ही है । जिस भावलक्षण में अनादर की प्रतीति अधिक हो रही है, उस क्रिया विशिष्ट से षष्ठी और सप्तमी दोनों विभक्तियाँ होती हैं । उदा०—रुदतः प्राव्राजीत्, [ पुत्रादि के रोते रहने पर भी संन्यास ले लिया । ] क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत् । [ पुत्रादि के चिल्लाते रहने पर भी संन्यास ले लिया । ] चिल्लाते रहते हुए भी पुत्रादि का तिरस्कार करके संन्यास ले लिया—यह अर्थ है ।

**विमर्श**—एक क्रिया दूसरी क्रिया की लक्षक हो, साथ ही अनादर = तिरस्कार अर्थ भी प्रतीत हो रहा हो तब लक्षक = अनादर कर्ता से षष्ठी और सप्तमी दो विभक्तियाँ होती है । उक्त उदाहरणों से यह भाव निकलता है कि किसी व्यक्ति के स्त्री पुत्र आदि रो रहे थे, चिल्ला रहे थे, संन्यास ग्रहण के लिये रोक रहे थे, परन्तु उनका तिरस्कार करके संन्यास ले ही लिया । इससे षष्ठी का विधान अधिक है क्योंकि सप्तमी तो पहले सूत्र से ही सिद्ध है ॥ ३८ ॥

षष्ठी और सप्तमी इन दोनों की अनुवृत्ति होती है । स्वामिन, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, और प्रसूत—इन शब्दों के योग में षष्ठी तथा सप्तमी ये दोनों विभक्तियाँ होती हैं । उदा०—गवां स्वामी, गोषु स्वामी [ गायों का मालिक ] । गवाम् ईश्वरः, गोषु ईश्वरः [ गायों का ईश्वर = मालिक ] । गवाम् अधिपतिः, गोषु, अधिपतिः [ गायों का अधिपति ] गवां दायादः, गोषु दायादः । [ गोरूपी पैतृक धन का अधिकारी ] गवां साक्षी, गोषु साक्षी । [ गायों का साक्षी = देखने वाला ] गवां प्रतिभूः, गोषु प्रतिभूः । [ गायों का जमानतदार ] । गवां प्रसूतः, गोषु प्रसूतः [ गायों की

**पतिः। गवां दायादः, गोषु दायादः। गवां साक्षी, गोषु साक्षी। गवां प्रतिभूः, गोषु प्रतिभूः। गवां प्रसूतः, गोषु प्रसूतः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम् ॥**

**५०१. आयुक्तकुशलाभ्यां चासेवायाम् ॥ ४० ॥ ( ६३७ )**

**षष्ठीसप्तम्यौ वर्तेते। आयुक्तः=व्यापारितः, कुशलः=निपुणः ताभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः। आसेवा=तात्पर्यम्। आयुक्तः कटकरणस्य। आयुक्तः कटकरणे। कुशलः कटकरणस्य। कुशलः कटकरणे।**

**आसेवायामिति किम्? आयुक्तो गौः शकटे। तत्र सप्तम्येवाधिकरणे भवति ॥**

**५०२. यतश्च निर्धारणम् ॥ ४१ ॥ ( ६३८ )**

**षष्ठीसप्तम्यौ वर्तेते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणम्=निर्द्धारणम्। यतो निर्द्धारणं**

**न्यासः**

यान्तरनिवृत्त्यर्थम्। इह मा भूत्--ग्रामस्य राजेति। **षष्ठ्यामेव प्राप्तायामिति**। शेषलक्षणायां षष्ठ्यां प्राप्तायाम्।

**आयुक्तकुशलाभ्यां च सेवायाम्** ॥ आयुक्तता निपुणता च कटादिकरणविषयैवेति सप्तम्यामेव प्राप्तायां पक्षे षष्ठीविधानार्थं वचनम्।

**आसेवायामिति किम्? आयुक्तो गौः शकटे**। ईषद् युक्त इत्यर्थः ॥ ४० ॥

**यतश्च निर्धारणम्** ॥ किमर्थं पुनरिदम्, यावता निर्धार्यमाणोऽवयवः समुदायान्तर्भूतः; तत्र यदा समुदाय-

**पदमञ्जरी**

स्पृशतीति गवात्मकस्य दायस्यादातेत्ययमर्थो भवति। **गवां प्रसूत इति**। गा एवानुभवितुं जात इत्यर्थः ॥ ३९ ॥

**आयुक्तकुशलाभ्यां चासेवायाम् ॥ आयुक्तो गौः शकट इति**। आङीषदर्थे ईषद्युक्त इत्यर्थः ॥ ४० ॥

**यतश्च निर्धारणम्** ॥ **जातिगुणक्रियाभिरिति**। प्रदर्शनमेतत्। अमीषां छात्राणां देवदत्तः पटुरिति

**भावबोधिनी**

सन्तान = बछड़ा आदि ]। इनके योग में सामान्यतया केवल षष्ठी ही प्राप्त रहती है, पक्ष में सप्तमी का विधान करने के लिये यह सूत्र है।

**विमर्श**—स्वामी, ईश्वर तथा अधिपति—ये सभी समानार्थक है। अतः इनका उल्लेख करने से अन्य किसी समानार्थक=पर्याय के योग में ये विभक्तियाँ ( केवल सप्तमी ) नहीं होती हैं। सामान्य षष्ठी तो सर्वत्र होती है ॥ ३९ ॥

'षष्ठी और सप्तमी' इनकी अनुवृत्ति होती है। आयुक्त=व्यापारित=लगाया गया, कुशलः=निपुण, इन दोनों शब्दों के योग में आसेवा=उसमें लगा होना—प्रतीत होने पर षष्ठी और सप्तमी विभक्तियाँ होती है। आसेवा=तात्पर=तत्परता=उसमें लगा होना। उदा०—आयुक्तः कटकरणस्य, आयुक्तः कटकरणे [ चटाई बनाने में लगाया हुआ ] कुशलः कटकरणस्य, कुशलः कटकरणे [ चटाई बनाने में कुशल=निपुण ]

आसेवा में—इसका क्या फल है? आयुक्तः गौः शकटे [ बैलगाड़ी में थोड़ा लगा हुआ बैल ] यहाँ केवल सप्तमी ही होती है [ क्योंकि यहाँ व्यापादित अर्थ नहीं है अपितु ईषद् युक्तः=आ युक्तः—यह अर्थ है ॥ ४० ॥

'षष्ठी और सप्तमी' इनकी अनुवृत्ति होती है। (१) जाति, (२) गुण और (३) क्रिया इनमें से किसी के कारण समुदाय से एकदेश=अवयव का पृथक्करण=निर्धारण होता है, जिस ( समुदाय ) से निर्धारण होता है, उस ( समुदाय वाचक ) से षष्ठी और सप्तमी होती है, क्रमशः उदा०—(१) मनुष्याणां क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः। [ मनुष्यों में क्षत्रिय सबसे अधिक शूर=पराक्रमी होता है। ] (२) गवां कृष्णा सम्पन्नक्षीरतमा, गोषु कृष्णा सम्पन्न-

**ततः षष्ठीसप्तम्यौ विभक्ती भवतः। मनुष्याणां क्षत्रियः शूरतमः। मनुष्येषु क्षत्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरतमा। गोषु कृष्णा संपन्नक्षीरतमा। अध्वगानां धावन्तः शीघ्रतमाः। अध्वगेषु धावन्तः शीघ्रतमाः ॥**

## ६०३. पञ्चमी विभक्ते ॥ ४२ ॥ ( ६३९ )

**'यतश्च निर्द्धारणम्' इति वर्तते। षष्ठीसप्तम्यपवादो योगः। विभागः=विभक्तम्। यस्मिन्निर्द्धारणाश्रये**

### न्यासः

स्याधिकरणत्वं विवक्ष्यते तदा सप्तमी सिद्धैवेति, यथा—वृक्षे शाखेति; यदा त्ववयवावयविसम्बन्धस्तदा षष्ठी, यथा—वृक्षस्य शाखेति ? सत्यमेतत्; प्रपञ्चार्थं वचनम् ॥ ४१ ॥

**पञ्चमी विभक्ते ॥ विभागो विभक्तमिति।** 'नपुंसके भावे क्तः' **यस्मिन्निर्धारणाश्रये इति।** यतो निर्धार्यते स इह निर्धारणाश्रय इति सर्वस्मिन्नेव निर्धारणाश्रये विभागोऽस्तीति विशेषणोपादानसामर्थ्याद् विभाग एव यत्र स निर्धारणाश्रयो विज्ञायते; तेन कृष्णा गवां सम्पन्नक्षीरतमेत्यत्र न भवति। तथा हि—गोषु निर्धार्यमाण एकदेशो यस्माद् गोत्वेनान्तर्भूतः प्रतीयते तस्मान्नास्ति विभाग इति। यदा तु कृष्णेन गुणेन पृथग्भूतः प्रतीयते तदाऽस्ति विभाग इति। नात्र निर्धारणाश्रयो विभाग एव। इह पुनर्माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति

### पदमञ्जरी

संज्ञयापि निर्धारणदर्शनात् ॥ ४१ ॥

**पञ्चमी विभक्ते ॥ विभक्तमस्यास्तीति।** निर्द्धार्यमाणात्। एतदुक्तं भवति—निर्द्धार्यमाणस्य निर्द्धारणाश्रयस्य च विभागे सति निर्द्धारणं भवति, ततश्च सर्वत्रैव निर्द्धारणाश्रये विभक्तमस्तीति सामर्थ्यादवधारणमाश्रीयते—यस्मिन्निर्धारणाश्रये विभाग एव, न केनचिदात्मभाव इति। तेन गवां कृष्णेत्यादौ यद्यपि गोमण्डला-

### भावबोधिनी

क्षीरतमा। [ गायों में काली गाय सबसे अधिक दूध वाली है। ] (३) अध्वगानां धावन्तः शीघ्रतमः, अध्वगेषु धावन्तः शीघ्रतमः [ राह चलने वालों में दौड़ने वाला सबसे अधिक तेज है। ]

**विमर्श**—जब किसी समुदाय का कोई अवयव किसी जाति, गुण अथवा क्रिया के कारण उस समुदाय से = अन्यों की अपेक्षा अलग [ उत्कृष्ट या निकृष्ट ] कहना विवक्षित होता है उस समय समुदायवाची शब्द से षष्ठी और सप्तमी दोनों विभक्तियाँ होती हैं। उदा०—मनुष्याणां मनुष्येषु वा क्षत्रियः शूरतमः। यहाँ मनुष्य यह समुदायवाचक है, 'क्षत्रिय' यह जाति है, इसके कारण शूरतमत्वविशिष्ट का निर्धारण हो रहा है। अतः समुदायवाचक 'मनुष्य' से षष्ठी और सप्तमी होती है। गवां गोषु वा कृष्णा सम्पन्नक्षीरतमा—यहाँ 'गो' यह समुदायवाचक है 'श्यामा गो' = एक देश है, सम्पन्नक्षीरतमत्व गुण के कारण निर्धारण प्रतीत होता है। अतः 'गो' में दोनों विभक्तियाँ होती है। अध्वगानाम् अध्वगेषु वा धावन्तः शीघ्रतमाः—यहाँ 'अध्वग' = राहपर चलने वाले' यह समुदायवाचक है, 'धावन्तः' ये एक देश है, 'शीघ्रतमाः' यह क्रियावाचक है, इसीके कारण निर्धारण होता है, अतः दोनों विभक्तियाँ होती है।

काशिकाकर ने संज्ञा के कारण निर्धारण होना नहीं लिखा है। संज्ञा से भी निर्धारण होता है, जैसे—छात्राणां छात्रेषु वा मैत्रः पटुः। यहाँ समुदायवाचक = छात्र है, मैत्रः यह संज्ञा है, पटुत्वविशिष्टता बतानी है। दोनों विभक्तियाँ होती हैं ॥ ४१ ॥

'यतश्च निर्धारणम्' इसकी अनुवृत्ति होती है। यह सूत्र षष्ठी और सप्तमी इन दोनों का अपवाद है। विभागः = विभक्तः [ भाव में 'क्त' प्रत्ययान्त है। ] जिस निर्धारणाश्रय = निर्धारण की अवधि में विभाग है उससे पञ्चमी विभक्ति होती है। उदा०—माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः [ मथुरावाले पटना वालों से अधिक सुकुमार हैं। ] आढ्यतराः = अधिक धनी है।

विभक्तमस्यास्ति ततः पञ्चमी विभक्तिर्भवति । माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः । आढ्यतराः ॥

**९०४. साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४३ ॥ ( ६४० )**

**साधु, निपुण-इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत् प्रतिः प्रयुज्यते। मातरि साधुः । पितरि साधुः । मातरि निपुणः । पितरि निपुणः ।**

**अर्चायामिति किम् ? साधुर्भृत्यो राज्ञः । तत्त्वकथने न भवति। अप्रतेरिति किम् ? साधुर्देवदत्तो मातरं प्रति (म० भा०) ।**

**अप्रत्यादिभिरिति वक्तव्यम् ❀ ( म० भा० २.३.४३ वा० १ ) । साधुर्देवदत्तो मातरं परि। मातरमनु (म० भा०) ॥**

**न्यासः**

न केनचित् प्रकारेण माथुराणां पाटलिपुत्रकेष्वन्तर्भावः, अपि च विभाग एव। तथा हि—न पाटलिपुत्रकेषु माथुरत्वेन नाप्याढ्यतरत्वेन माथुराणामन्तर्भावः । तस्मादत्र विभाग एवेत्ययमस्य योगस्य विषयः ।

अन्ये त्वाहुः—यत्र राशीकृतस्य पृथक्करणं स पूर्वस्य योगस्य विषयः, यत्र तु पृथग्भूतस्यैव गुणान्तराविष्करणं सोऽस्य; तत्र द्वयोरप्यवस्थयोर्विभाग एवेति कृत्वा । अयमपि योगः प्रपञ्चार्थं एव। विभागो हि सम्बन्धात् प्रच्युतिः । पाटलिपुत्रकाश्च सम्बन्धात् प्रच्यवमानानां माथुराणां सम्बन्धे प्रच्युतेरवधिभावमुपयान्तीत्यपादान इत्येवं पञ्चमी सिद्धा ॥ ४२ ॥

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ अप्रत्यादेरिति वक्तव्यमिति ।** के पुनः प्रत्यादयः ? येषां 'लक्षणेत्थम्भूताख्यान' इत्यादिना कर्मप्रवचनीयसंज्ञा विहिता ते प्रतिपर्यनवः प्रत्यादयः ॥ ४३ ॥

**पदमञ्जरी**

श्लक्ष्णा गौः पृथक् क्रियते, तथापि गवात्मनान्तर्भावोऽस्तीति न भवति । उदाहरणे तु माथुराणां पाटलिपुत्रेषु प्राणित्वेनान्तर्भावेऽपि शब्दोपात्ताकारापेक्षयानन्तर्भावाद्विभाग एव भवति । प्रत्याख्यातं चैतत्सूत्रमपादानप्रकरणे—

बुद्ध्या समीहितैकत्वात् पञ्चालान् कुरुभिः पृथग् ।
यदा विभजते वक्ता तदाऽपायः प्रतीयते ॥ (वा० पा० ३.७.४) इति ॥ ४२ ॥

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥** साधुशब्दः 'कृवापाजिमि' इत्युणन्तः, 'पुण कर्मणि शुभे' इत्यस्मान्निपूर्वात् 'इगुपपध' इति के, निपुण इति भवति । 'अर्च पूजायाम्' इत्यस्माद्भौवादिकात् 'गुरोश्च हलः' इत्यकारः, चौरादिकात्तु युचा भाव्यम् । अप्रतेरित्यत्र प्रयोग इत्यध्याहार्यम्, तदाह—**न चेत्प्रतिः प्रयुज्यत इति ।**

**भावबोधिनी**

**विमर्श**—पूर्ववर्ती सूत्र से निर्धारणावधि में षष्ठी और सप्तमी कही गयी है। यह सूत्र केवल पञ्चमी करता है। पूर्वसूत्र के उदाहरणों में भेद और अभेद दोनों की प्रतीति रहती है। परन्तु इसके लक्ष्यो में केवल भेद ही प्रतीत होता है। इसीलिये 'विभक्ते' का उल्लेख चरितार्थ है। इसके उदाहरणों में समुदाय और उसका अवयव-आदि नही प्रतीव होते हैं। यहाँ निर्धारण की अवधि = पाटलिपुत्रक से पञ्चमी होती है। अतः पञ्चमी का अर्थ अवधित्व है।

भाष्यकार ने अपादान में ही पञ्चमी मानकर इस सूत्र का प्रत्याख्यान कर दिया है ॥ ४२ ॥

साधु और निपुण इनके योग में अर्चा = सेवा आदि की प्रतीति रहने पर षष्ठी होती है, यदि 'प्रति' शब्द का प्रयोग न हो तो। उदा०—मातरि साधुः [ माता के विषय में साधु = हितकारक है ] पितरि साधुः [ पिता के विषय में साधु = हितकारक है। मातरि निपुणः, पितरि निपुणः [ माता के विषय में कुशल है, पिता के विषय में कुशल है। ]

अर्थ में—इसका क्या फल है ? साधुः भृत्यः राज्ञः [ राजा का अच्छा नौकर। ] वास्तविक कथन में नहीं होता है। 'प्रति' का प्रयोग न होनेपर—इसका क्या फल है ? साधुः देवदत्तः मातरं प्रति [ माता के प्रति साधु = हितकारी

५०५. प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥ ( ६४१ )

**प्रसित, उत्सुक—इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात्सप्तमी च। प्रसितः=प्रसक्तः, यस्तत्र नित्यमेवावबद्धः स प्रसितशब्देनोच्यते। केशैः प्रसितः, केशेषु प्रसितः। केशैरुत्सुकः॥**

५०६. नक्षत्रे च लुपि ॥ ४५ ॥ ( ६४२ )

**तृतीयासप्तम्यावनुवर्तेते। लुबन्तान्नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः। पुष्येण (४.२.३,४)**

**न्यासः**

**प्रसितोत्सुकाभ्यां तृतीया च**॥ प्रसितशब्दोऽयं गुणवचनोऽप्यस्ति—प्रकृष्टः सितः=प्रसितः, क्रियाशब्दोऽप्यस्ति—'षिञ् बन्धने' इत्यस्य प्रपूर्वस्य निष्ठायां व्युत्पाद्यते, तत्रेहोत्सुकशब्देन साहचर्यात् क्रियाशब्दो विज्ञायत इत्यत आह—**प्रसितः प्रसक्त इति। यस्तत्र नित्यमेवाबद्धः स प्रसितशब्देनोच्यत इति।** आबद्ध इवाबद्धः, यो हि यत्र प्रसक्तः, स तत्राबद्ध इव भवति। **केशैः प्रसितः, केशेषु प्रसित इत्यादि।** प्रसितत्वमुत्सुकत्वञ्च केशविषयमिति 'सप्तम्यधिकरणे' इत्येव सिद्धा सप्तमी। पक्षे तृतीयाविधानार्थं वचनम् ॥ ४४ ॥

**नक्षत्रे च लुपि**॥ नक्षत्रे च लुपीति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमीविधानम्। अत एवाह—**लुबन्तान्नक्षत्र-**

**पदमञ्जरी**

**साधुर्भृत्यो राज्ञ इति।** पूर्वमेवैतद् दूषितमुपपादितं च। निपुणः पुत्रो मातुरिति तु तत्त्वकथने न्याय्यं प्रत्युदाहरणम् ॥ ४३ ॥

**प्रसितोत्सुकाभ्यां तृतीया च**॥ 'षिञ् बन्धने' प्रकर्षेण बद्धः=प्रसितः, तदाह—**यस्तत्रनित्यमवबद्ध इति** नित्यमित्यनेन प्रशब्दस्यार्थमाचष्टे। अवबद्ध इवावबद्धः, यो हि यत्र प्रसक्तः स तत्रावबद्ध इव भवतीति भावः। तेन प्रकर्षेण सितः शुक्लतर इत्यस्य ग्रहणं न भवतीति प्रदर्शितं भवति। **केशेषु प्रसित इति।** तत्पर इत्यर्थः ॥ ४४ ॥

**नक्षत्रे च लुपि**॥ नक्षत्रे प्रकृत्यर्थे सति यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानादिति सूत्राक्षरान्वयः। यच्चोच्यते—नक्षत्रं लुपीति पञ्चम्यर्थे सप्तमी लुबन्तान्नक्षत्रवाचिन इत्यर्थं इति, तत्रोत्तराभ्यां

**भावबोधिनी**

है। 'प्रति आदि नहीं होनेपर—ऐसा कहना चाहिये।' * साधुः देवदत्तः मातरं परि, साधुः देवदत्तः मातरम् अनु [ देवदत्त माता के लिये हितकारी है। यहाँ सप्तमी नहीं होती है। 'लक्षणेत्थम्भूताख्यान भागवीप्सासु प्रतिपर्यनवः' पा० सू० १।४।९० से कर्मप्रवचनीय संज्ञा होने से 'कर्मप्रवचनीययुक्ते द्वितीया' ( पा० सू० २.३.८ ) इससे द्वितीया होती है ॥ ४३ ॥

'प्रसित' और 'उत्सुक' इन शब्दों के योग में तृतीया विभक्ति होती है, 'च' के बल से सप्तमी होती हैं। प्रसित= प्रसक्त=लगा हुआ, जो जहाँ नित्य ही अनबद्ध ( आबद्ध ) है, उसे 'प्रसित' शब्द से कहा जाता है। उदा०--केशैः प्रसक्तः, केशेषु प्रसक्तः [ बालों के विषय में उन्हें सम्भालने में लगा हुआ ]। केशैः उत्सुकः, केशेषु उत्सुकः [ केशों के लिये उत्सुक=उत्कण्ठित। केशविषयिणी उत्सुकता और प्रसितत्व को प्रतीति होने से सप्तमी तो सिद्ध ही है, यह सूत्र तृतीया का विधान करने के लिये है। ] ॥ ४४ ॥

'तृतीया और सप्तमी' इनकी अनुवृत्ति होती है। लुबन्त नक्षत्रवाचक शब्द से तृतीया और सप्तमी विभक्तियाँ होती हैं। उदा०—पुष्येण पायसम् अश्नीयात्, पुष्ये पायसम् अश्नीयात्—[पुष्यनक्षत्र से युक्त काल में खीर भक्षण कर।] मघाभिः पललौदनम्, मघासु पललौदनम् [ मघानक्षत्र से युक्त काल में माँस और भात खाये। ]

**पायसमश्नीयात् । पुष्ये पायसमश्नीयात् । मघाभिः पललौदनम् । मघासु पललौदनम् ।**

**नक्षत्र इति किम् ? पञ्चालेषु (४.२-६९, ८१) वसति । लुपीति किम् ? मघासु ग्रहः । इह कस्मान्न भवति—अद्य पुष्यः, अद्य कृत्तिका (म० भा०) ? 'अधिकरणे' इति वर्तते । वचनं तु पक्षे तृतीयाविधानार्थम् ॥**

## ५०७. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥ ( ५६२ )

**न्यासः**

**शब्दादित्यादि । पुष्येणेत्यादि ।** 'नक्षत्रेण युक्तः कालः' इति विहितस्याणः 'लुबविशेषे' इति लुप् । पञ्चालेषु वसतीत्यत्रापि 'तस्य निवासः' इति विहितस्याणः 'जनपदे लुप्' इति लुप् ।

**मघासु ग्रह इति ।** सामीप्येऽधिकरण एव सप्तमी । अत्र 'नक्षत्रेण युक्तः कालः' इत्यस्यार्थस्याविवक्षितत्वादण् न भवति । **अद्य पुष्य इति ।** पूर्ववदण्, लुप् । 'अधिकरणे' इत्यनुवर्त्तते । न चेहाधिकरणत्वं विवक्षितमिति भावः ॥ ४५ ॥

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ प्रातिपदिकार्थः सत्तेति ।** यदि जातिस्तदा देवदत्तादौ न स्यात् । अथ सतो भावः सत्ता, तदाकाशकुसुमादौ न स्यादित्याह—प्रातिपदिकार्थः सत्तेति । यत्रार्थान्तरनिरपेक्षा शब्दस्य प्रवृत्तिः स सर्वः प्रातिपदिकार्थः । सत्ताग्रहणं तूपलक्षणार्थम् । **उच्चैर्नीचैरिति ।** अत्रोच्चैःशब्दस्य

**पदमञ्जरी**

फल्गुनीभ्यां नोत्तरा गच्छेदिति विशेषणान्न स्यात्, तस्यालुबन्तत्वात् । कथं तर्हि लुबन्तान्नक्षत्राभिधायिनः शब्दादिति वृत्तिः ? प्रायोवृत्त्यैतदुक्तम्—लुबन्तार्थाभिधायी प्रायेण लुबन्तो भवति । लुबर्थाभिधायिनः शब्दमात्रादित्यर्थः । **लुबन्तादिति ।** लुबन्ते समाप्तावस्येति बहुव्रीहिः, स्थानिद्वारकं च लुपोऽन्त्यावयवत्वं द्रष्टव्यम् ।

**अधिकरण इति वर्त्तत इति ।** एवं च पुष्यं प्रतीक्षते, पुष्याय स्पृहयति, पुष्यस्य समीप इत्यादावपि न भवति ॥ ४५ ॥

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ प्रातिपदिकार्थः सत्तेति ।** अत्र जिघृक्षितस्येदं लक्षणम्, न प्रातिपदिकार्थमात्रस्य; गौः, शुक्लः, पाचकः, डित्थ इत्यादावसम्भवात् । योऽर्थः सन्नेव केवलं न जात्यादिरूपो

**भावबोधिनी**

नक्षत्र में—इसका क्या फल है ? पञ्चालेषु वसति [ पञ्चाल जनपद में रहता है । यहाँ 'तस्य निवासः' सूत्र से अण् प्रत्यय होता है, 'जनपदे लुप्' सूत्र से उसका लुप् हो जाता है । अतः यह सुबन्त तो है परन्तु नक्षत्रवाली नहीं हैं । ] लुप् होनेपर—इसका क्या फल है ? मघासु ग्रहः [ मघानक्षत्र में ग्रह है । यहाँ अणादि का लुप् नहीं है । ] यहाँ पर क्यों नहीं होता है—अद्यपुष्यः अद्यकृत्तिका ? 'अधिकरणे' अधिकरणकारक में' इसकी अनुवृत्ति होती है । यहाँ वह अर्थ नहीं है । अतः अण् और लुप् रहने पर भी यह सूत्र लागू नहीं होता है । ] यह सूत्र पक्ष में तृतीया करने के लिये है [ क्योंकि अधिकरण में सप्तमी तो सिद्ध ही है । ]

**विमर्श**—'पुष्येण नक्षत्रेण युक्तः कालः—इस अर्थ में' नक्षत्रेण युक्तः ( पा० सू० ४।२।३ ) से अण् प्रत्यय होता है और उसका 'लुबविशेषे' ( पा० सू० ४।२।४ ) से लुप् = लोप हो जाता है । लुप्त होने पर भी 'यः शिष्यते स लुप्यमानार्थाभिधायी' न्याय से प्रत्यय का अर्थ भी प्रकृति से ही प्रतीत हो जाता है । अतः 'पुष्ये वा पायसम् अश्नीयात्' = पुष्य नक्षत्र से युक्त काल में खीर खाये—यह अर्थ प्रतीत होता है ॥ ४५ ॥

प्रातिपदिकार्थ = सत्ता । लिङ्ग = स्त्रीलिङ्ग, पुंल्लिङ्ग और नपुंसक लिङ्ग । परिमाण = द्रोण, खारी, आढक आदि । वचन = एकत्व द्वित्व और बहुत्व । सूत्रघटक 'मात्र' शब्द का सम्बन्ध इनमें से प्रत्येक के साथ होता है—(१) प्रातिपदिकार्थ मात्र में (२) लिङ्ग मात्र में, (३) परिमाण मात्र में, (४) वचन मात्र में प्रथमा विभक्ति होती है ।

**प्रातिपदिकार्थः = सत्ता । लिङ्गम् = स्त्रीलिङ्गपुंल्लिङ्गनपुंसकानि । परिमाणम्–द्रोणः, खारी, आढकम् ( म० भा० ) । वचनम् = एकत्वद्वित्वबहुत्वानि । मात्रशब्दः प्रत्येकमभिसंबध्यते । प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे प्रथमा विभक्तिर्भवति ।**

**न्यासः**

स्वार्थे जात्याद्यर्थान्तरनिरपेक्षा वृत्तिः । अत्र च प्रथमायाः प्रयोजनम्—'सपूर्वायाः प्रथमाया विभाषा' इति विकल्पेन तेमयादिविधिर्यथा स्यात्—ग्राम उच्चैस्ते स्वम्, ग्राम उच्चैस्तव स्वमिति । पदसंज्ञा तु षष्ठ्याऽपि स्यादेव ।

**कुमारी, वृक्षः, कुण्डमिति** । ननु चात्रापि प्रातिपदिकार्थ इत्येवंसिद्धा प्रथमा, लिङ्गमपि प्रातिपदिकार्थं एव भवति । तथा च वक्ष्यति[1] 'स्त्रियाम्' इत्यत्र—'सिद्धास्तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः' इति ? नैतदस्ति; इदमपि हि तत्र वक्ष्यति[2]—'अथ वा पुनरिदमस्तु । स्त्रियामभिधेयायाम्' इति । किञ्च—

**पदमञ्जरी**

न लिङ्गसंख्याकारकशक्तियोगी, स इह प्रातिपदिकार्थत्वेन विवक्षितः, यथा—अव्ययार्थ इत्यर्थः । अव्ययार्थो हि केवलमस्तीति शक्यते वक्तुम्, न पुनरीदृशस्तादृश इति । गौः शुक्ल इत्यादौ तु सत्त्वरूपेऽर्थे लिङ्गग्रहणादेव सिद्ध्यतीति भावः ।

अन्ये त्वाहुः—अन्वयव्यतिरेकाभ्यां यस्य योऽर्थः प्रतीतो यमर्थं प्रातिपदिकं न व्यभिचरति येन विना प्रातिपदिकस्याप्रयोगः, स सर्वः प्रातिपदिकार्थः । सत्ताग्रहणं तूपलक्षणम्, तेन सत्ता गोत्वं शौक्ल्यं शुक्लो गुणः पाचको डित्थो गौः शुक्ल इत्यादिकमप्युदाहरणमिति । नन्वत्र सर्वत्र लिङ्गग्रहणादेव सिद्धम्, न; मात्रग्रहणं क्रियते, तच्चावधारणार्थम्, पयोमात्रं व्रतयतीतिवत् । ततश्च स्त्री पुमान्नपुंसकमित्यादावेव तु स्याद्—यत्र लिङ्गमेवार्थः, सत्तेत्यादौ तु जात्याद्यधिकार्थसद्भावान्न स्यात् । अथ कन्यामात्रं वरयतीतिवन्मात्रशब्दस्य व्याप्तिवचनत्वाल्लिङ्गमात्रे प्रथमा लिङ्गमस्तीत्येव प्रथमा भवतीति व्याख्यानादधिकार्थसद्भावेऽपि प्रथमा भवतीति ? उच्यते-हन्तैवं वृक्षं पश्येत्यादौ कर्मादिसद्भावेऽपि लिङ्गमस्तीत्येव प्रथमा स्यात्; कर्मण्येव द्वितीयेत्यस्मिन्प्रत्ययनियमपक्षे कर्मादीनां द्वितीयादिष्वनियतत्वात् । **वचनमेकत्वादीति** । पूर्वाचार्यप्रसिद्धेरिति भावः ।

**भावबोधिनी**

प्रातिपदिकार्थमात्र में प्रथमा विभक्ति का उदा०—उच्चैः, नीचैः [ ऊपर, नीचे । ये अव्यय हैं । ]

लिङ्ग का ग्रहण किसलिये है ? कुमारी, वृक्षः, कुण्डम्—इनमें भी प्रथमा जिस प्रकार से हो सके ।

परिमाण का ग्रहण किसलिये है ? द्रोणः, खारी, आढकम्—इनमें भी जिस प्रकार से प्रथमा हो सके ।

वचन का ग्रहण किसलिये है ? एकत्व आदि अर्थों के उक्त रहने पर भी जिस प्रकार से प्रथमा हो सके—एकः, द्वौ, बहवः ।

प्रातिपदिक का ग्रहण किसलिये है ? अन्तर्थक निपात का भी प्रातिपदिक होना कहा गया है, उससे भी प्रथमा जिस प्रकार हो सके, प्रलम्बते, अध्यागच्छति । [ यहृ 'प्र' और 'अधि' का अतिरिक्त अर्थ नहीं है । ]

**विमर्श**—प्रस्तुत सूत्र में दो पद हैं । प्रथम पद में पहले प्रातिपदिकार्थश्च, लिङ्गं च, परिमाणं च, वचनं च—इस विग्रह में द्वन्द्व समास करके 'प्रातिपदिकार्थलिङ्गपरिमाणवचनानि एव' इस अस्वपद विग्रह में 'मात्र' शब्द के साथ समास

१. वार्तिककार इति शेषः ।

२. भाष्यकार इति शेषः । काशिकायां त्वेते वाक्ये 'स्त्रियाम्' इति सूत्रव्याख्यायां न स्तः—इति ध्येयम् ।

**प्रातिपदिकार्थमात्रे—उच्चैः । नीचैः ।**

**लिङ्गग्रहणं किम् ? कुमारी, वृक्षः, कुण्डम् ( म० भा० ) इत्यत्रापि यथा स्यात् ।**

**न्यासः**

स्त्रीत्वं प्रत्येषा गतिः स्यात्, पुंनपुंसके तु नियोगतो विभक्तिवाच्ये एव । तथा हि—विना विभक्त्या तटशब्दः प्रयुज्यमानः किं पुंस्त्वमाचष्टे ? उत नपुंसकत्वम् ?—इति सन्देहः स्यात्, तत्र यथा राज्ञः पुरुष इत्यत्र प्रातिपदिकार्थेनानुपात्ते स्वस्वामिकसम्बन्धे तस्य चाभिधाने विभक्त्यपेक्षया षष्ठी भवति, तथा पुंनपुंसकयोरपि षष्ठी स्यात् । तस्माल्लिङ्गग्रहणं कर्त्तव्यम् ।

**द्रोणः, खारी, आढकमिति** । ननु चात्रापि प्रातिपदिकार्थत्वादेव सिध्यति प्रथमा, तथा हि द्रोणादयः शब्दाः परिमाणे लौहे दारुमये वा अर्थान्तरनिरपेक्षा एव वर्त्तन्ते ? सत्यम्; सिध्यति तदा यदा परिमाण एव वर्त्तन्ते तदा न सिध्यति । तथा हि—द्रोणादयः शब्दा द्रोणादिकं परिमाणमर्थान्तरं प्रवृत्तिनिमित्तमुपादाय व्रीह्यादौ परिमेये वर्त्तन्ते ; कथं पुनस्ते तत्र वर्त्तन्ते ? सोऽयमित्यभेदसम्बन्धात्—द्रोणपरिमितो व्रीहिर्द्रोण इति ।

**पदमञ्जरी**

**उच्चैरिति** । अत्र प्रथमायां सत्यां ग्राम उच्चैस्तव स्वमित्यादौ 'सपूर्वायाः प्रथमाया विभाषा' इति तेमयादिविकल्पो भवति, पदत्वं तु षठ्यापि सिद्धम्, यस्मिन् ह्यर्थे द्वितीयादयो न विहिताः स शेषः । नन्वसङ्ख्यत्वादव्ययार्थस्य कथं षष्ठी स्यात् ? एकत्वाद्यर्थनियमे षठ्याः सङ्ख्यायामनियतत्वात्, प्रत्ययनियमेऽपि तुल्यजातीयापेक्षत्वान्नियमस्यैकत्वादिभिः परस्परमेव व्यावर्त्तनात् । विधिवाक्यपक्षे तु स्वादिसूत्रेण भिन्नवाक्यस्य 'बहुषु बहुवचनम्' इत्यादेः सङ्ख्यासम्भवे विध्यर्थत्वात् ।

ननु ङ्याप्प्रातिपदिकात्स्वादयो विधास्यन्ते, तत्रार्थे प्रथमेत्युक्ते कस्यार्थं इत्यपेक्षायां यस्मात्स्वादिविधिस्तदर्थ इति विज्ञास्यते, नार्थः प्रातिपदिकग्रहणेन, तत्रायमप्यर्थः—लिङ्गग्रहणं न कर्त्तव्यं भवति कुमारी सीमेत्यादावप्यत एव सिद्धम्, प्रातिपदिकग्रहणे तु क्रियमाणे सोमादिशब्दानां स्त्रीयुक्तार्थाव्यभिचारेऽपि प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्तदर्थे प्रथमासिद्धयर्थं लिङ्गग्रहणं कर्त्तव्यं स्यात् ? उच्यते—प्रातिपदिकग्रहणं तावदर्थपदेनासम्बद्धमित्यत्रैव वक्ष्यते, लिङ्गग्रहणमनेकलिङ्गार्थम्—तटः, तटम्, तटी; कुमारी; कुण्डम्, कुण्डः, कुण्डिका; अन्यथा येनार्थेन विना प्रकृतेरप्रयोगस्तदर्थमात्रे विधीयमाना प्रथमा नानालिङ्गेभ्यस्तत्तद्विशेषमन्तरेण प्रयुज्यमानेभ्यो न स्यात् । अथ मात्रग्रहणमकृत्वा व्याप्तिवचनं वाङ्गीकृत्याधिकार्थसद्भावेऽपि प्रकृत्यर्थस्यान्वय इति स्यात् ? यद्येवम्, वृक्षं पश्येत्यादौ कर्माद्याधिक्येऽपि स्यात्प्रत्ययनियमपक्षे, तदिह वृत्तौ कुमारो, कुण्डमित्युदाहरणम्, वृक्षशब्दस्त्वर्थादुदाहृतः । ननु मा भून्मात्रग्रहणम्, मा च भूल्लिङ्गहणम्, मा च कारि 'संबोधने च' इति सूत्रम्, सर्वत्रार्थ इत्येव प्रथमा भविष्यति; न चैवं कर्मादिष्वपि प्रसङ्गः, कर्मणि द्वितीयैवेत्येवमर्थनियमस्याश्रयणात् ? एवमपि 'राज्ञः पुरुषः' इति षष्ठ्यर्थेऽपि स्यात्, शेषलक्षणा हि षष्ठी, उपयुक्तादन्यश्च शेषः, तत्र यदि

**भावबोधिनी**

होता है—'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम्' यहाँ 'मयूरव्यंसकादयश्च' ( पा. सू. २।१।७२ ) सूत्र से नित्य समास होता है । यहाँ द्वन्द्व के अन्त में 'मात्र' का योग है 'द्वन्द्वादौ द्वन्द्वान्ते द्वन्द्वमध्ये च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इस न्याय से प्रत्येक पद के साथ 'मात्र' का सम्बन्ध होता है ।

यहाँ ध्यान रखना चाहिये कि प्रातिपदिक का अपना अर्थ सर्वत्र ही रहता है । अतः (१) केवल प्रातिपदिकार्थ में, (२) इस प्रातिपदिकार्थ के साथ-साथ लिङ्गमात्र अर्थ होने पर, (३) प्रातिपदिकार्थ के साथ-साथ परिमाण अर्थ अधिक

**परिमाणग्रहणं किम् ? द्रोणः, खारी, आढकम्–इत्यत्रापि यथा स्यात् ।**

**न्यासः**

यद्येवम्, निमित्तरूपेण निमित्तिनोऽभिधानादव्यतिरिक्त एव प्रातिपदिकार्थं इति प्रातिपदिकार्थं इत्येव सिद्धा प्रथमा ? न सिध्यति, न हि मुख्ये सति गौणस्याश्रयणं युक्तम् । नन्वेवमपि लिङ्गग्रहणादेवात्र प्रथमा भविष्यति, तत् किं परिमाणग्रहणेन ? नैतदस्ति; तस्य हि यत्र परिमाणं नास्ति सोऽवकाश इति । अत्र परिमाणाधिक्ये षष्ठ्येव स्यात् । तस्मात् परिमाणग्रहणं कर्त्तव्यम् ।

परिमाणग्रहणञ्च यत्र निमित्तादर्थान्तरे सोऽयमित्यभेदसम्बन्धाच् शब्दः प्रवर्त्तते, तदुपलक्षणार्थं वेदितव्यम् । तेन परिमाणवदर्थान्तरभूतेष्वप्युन्मानादिषु प्रथमा भवति । घृतम्, पलम्, दीर्घं काष्ठम्, शुक्लः पटः,

**पदमञ्जरी**

प्रकृत्यर्थस्याधिक्येऽपि प्रथमा स्यात् । ततस्तस्यापि प्रथमाविधावुपयुक्तत्वात्षष्ठी न स्यात् । अथ वचनसामर्थ्या-त्स्वस्वामिभावादौ षष्ठी भवन्ती लिङ्गाधिकोऽपि स्याद् । अतो मात्रग्रहणं तावत्कर्त्तव्यम्, तस्मिश्च क्रियमाणे लिङ्गग्रहणम्, 'संत्रोधने च' इति सूत्रं च कर्त्तव्यम्; तदाधिक्येऽपि यथा स्यादिति ।

**परिमाणग्रहणं किमिति** । अर्थ इति वा लिङ्ग इति वा सिद्धि मन्यते । **द्रोणः, खारीति** । अयं भावः— येनार्थेन विना प्रकृतेरप्रयोगस्तस्मिन्नर्थे प्रथमा । द्रोणादयश्च लौहं दारुमयं परिमाणमेवार्थं न व्यभिचरन्ति । यदा तु द्रोणादिपरिमिते व्रीह्यादौ वर्त्तन्ते तदा तस्य व्यभिचारित्वान्न स्यात् । न च लिङ्ग ग्रहणादपि सिद्धिः — तदाधिक्यमात्रे हि तेन स्यादिति, परिमाणग्रहणं चोन्मानादीनामुपलक्षणम्, तेन घृतं पलमित्यादावपि भवति । अथ लवणेन संसृष्टः, लवणः सूपः, लवणं शाकमित्यत्र कथं प्रथमा, लवणशब्दो हि लवणजातीयमेव द्रव्यं न व्यभिचरति, व्यभिचरति तु संसृष्टम् ? उच्यते —साधारणशब्दोऽयम्, लवणजातीयस्य संसृष्टस्य चाक्षादिशब्दवत् । एवं च 'लवणाल्लुक्' इति वचनाद्विज्ञायते । तत्र यथा दधिदाधिकशब्दयोः प्रथमा भवत्येवमत्रापि भविष्यति । इह तर्हि कथं शुक्लः पट इति, शुक्लः पट इति, शुक्लशब्दो गुणमेव न व्यभिचरति, व्यभिचरति तु तद्वन्तम्, पटस्य शुक्ल इति दर्शनात् ? अत्रापि 'गुणवचनेभ्यो मतुपो लुग् वाच्यः' इति वचनात्साधारणशब्दतैव । इह तर्हि कथं गौर्वाहीक इति, गोशब्दो हि सास्नादिमन्तमेव न व्यभिचरति, व्यभिचरति तु वाहीकम् ? अत्रापि वाहीके सास्नादिमद्रूपारोपाद्गोशब्दः प्रयुज्यते, तत्र यथा सास्नामिद्वृत्तेर्भवत्येवं वाहीकवृत्तेरपि भविष्यति । यद्येवम्, द्रोणः खारीत्यादावप्येवमेव भविष्यति, लवणादिशब्दवत्साधारणशब्दाः स्युः, गौर्वाहीक इत्यादिवद्गौणा वा, गङ्गायां घोष इतिवल्लाक्षणिका वा; नान्या गतिरस्ति, सर्वथा सिद्धा प्रथमा । किं च परिमेयवृत्तिभ्यो द्वितीयदयो यथा भवन्ति तथा प्रथमापि भवति । अथ प्रस्थेन परिमिता व्रीहय इत्येवं प्रातिपदिकार्थव्यतिरेकेऽपि यथा स्यादिति परिमाणग्रहणम् । यद्येवम्, प्रस्थेनेति तृतीया न स्यात्, शेषविवक्षायां च षष्ठी न स्यात्, प्रास्थिक इति तद्धितश्च न स्यात्, तदेतत्परिमाणग्रहणं चिन्त्यप्रयोजनम् ।

**उक्तेष्वपीति** । अन्यथानभिहिताधिकारात् 'बहुषु बहुवचनम्' इत्यादिनास्यैकवाक्यत्वात्तिङ्कृत्तद्धित-समासैरिति परिगणनस्य प्रत्याख्यातत्वादेकादिशब्दैरेकत्वादीनामभिहितत्वादुक्तार्थत्वाद् वा न स्यादिति भावः ।

**भावबोधिनी**

होने पर (४) और वचनमात्र में प्रथमा होती है ।

नव्यवैयाकरणों ने इस सूत्र के विषय में गम्भीर विचार किया है । इनके अनुसार अलिङ्ग और नियतलिङ्ग शब्दों के बाद प्रथमा के लिये 'प्रातिपदिकार्थमात्रे प्रथमा' यह समझना चाहिये । इनके अनुसार 'नियतोपस्थितिकः प्रातिपदिकार्थः' अर्थात् जिस प्रातिपदिक के उच्चारण करने पर जो अर्थ नियतरूपेण सदा प्रतीत होता है, वही उस प्रातिपदिक का अर्थ

**वचनग्रहणं किम् ? एकत्वादिषूक्तेष्वपि यथा स्यात्–एकः द्वौ, बहवः ( म० भा० )।**

**प्रातिपदिकग्रहणं किम् ? निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तम्, ततोऽपि यथा स्यात्–प्रलम्बते। अध्यागच्छति ।।**

**न्यासः**

हस्तो मुष्टिर्वितस्तिरित्येवमादि सिद्धं भवति। कुत एतत् ? मात्रशब्दात्। स ह्यत्र व्याप्तिवचनो गृह्यते, यथा— कन्यामात्रं वरयति; ब्राह्मणमात्रं भोजयतीति। तेन परिमाणग्रहणस्यैवोपलक्षणार्थता विज्ञायते। यदि तु यथा 'पयोमात्रं भुङ्क्ते' इत्यत्र मात्रशब्दो नियमार्थः, तथेहापि नियमार्थ एव स्यात्, ततश्चोन्मानादिषु प्रथमा न स्यात्; तस्य परिमाणादन्यत्वात्—उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति।

वचनग्रहणे त्वसत्युक्तेष्वेकत्वादिषु प्रथमा न स्यात्। 'अनभिहिते' इत्यधिकारात्। ननु च परिगणनं तत्र कृतम्, तत् कुतोऽयं प्रसङ्गः ? नैतदस्ति; प्रत्याख्यातं हि तत्र परिगणनम्। तथा हि कटः कर्म, भीष्मादयोऽपि

**पदमञ्जरी**

**एकः द्वो बहव इति।** अथ कथमेकं पश्यैकेन कृतमित्यादौ द्वितीयादयो भवन्ति, न हि तत्र कश्चिद्यत्नोऽस्ति ? उच्यते, तत्रार्थद्वयमस्ति—कर्मादयः, एकत्वादयश्च। तत्रैकत्वादीनामभिधानेऽपि कर्मादिप्रतिपादनाय द्वितीयादयो भविष्यन्ति; इह त्वनभिहितार्थान्तराभावान्न स्यात्। नन्वत्राप्येकादिभिः शब्दैरेकत्वादिविशिष्टं द्रव्यमभिधीयते तत्रैकत्वादिगुणस्य निष्कृष्याभिधानाय प्रथमा भविष्यति, यथा गुणोपसर्जनद्रव्यवचनाच्छुक्लादिशब्दात्प्रवृत्तिनिमित्तभूतस्य गुणस्य निष्कृष्याभिधाने भावप्रत्ययः—पटस्य शौक्ल्यमिति। तदेवं वचनग्रहणमपि शक्यमकर्तुम्।

**प्रातिपदिकग्रहणं किमिति।** उक्तोऽत्र प्रष्टुरभिप्रायः। **निपातस्यानर्थकस्येति।** अन्यथार्थाभावान्न स्यादिति भावः। **प्रलम्बत इति।** किं पुनरत्र प्रथमया प्रार्थ्यते ? पदत्वम्; षष्ठ्यामप्येतत्सिद्धम्, तथा हि—कर्मादिषु द्वितीयादयो विहिताः प्रकृत्यर्थमात्रे प्रथमा, तत्र प्रकृत्यर्थाभावे स्वस्वामिभावादिसंबन्धसद्भावे चोपयुक्तादन्यत्वात्सिद्धा षष्ठी। न च तस्या एकत्वादिषु नियमः; उक्तोत्तरत्वात्। तदेवमर्थलिङ्गमात्रे प्रथमेत्येतावदेवावश्यं कर्त्तव्यम्, मात्रग्रहणमपि न कर्त्तव्यम्। कर्माद्याधिक्ये कस्मान्न भवति ? ज्ञापकात्, यदयम् 'संबोधने च' इत्याह। यदि ह्याधिक्येऽपि स्यात्तदनर्थकं स्यात्। उत्तरार्थे हि 'संबोधने सामन्त्रितम्' इत्येव वक्तव्यं किं योगविभागेन ! इहावधारणार्थान्मात्रग्रहणात् 'संबोधने च' इति ज्ञापकाद्वाऽऽधिक्ये प्रथमया न भवितव्यम्, ततश्च 'वीरः पुरुषः' इत्यादौ पदसामानाधिकरण्ये विशेषणविशेष्यभावम्याधिकार्थस्य प्रतीतेः प्रथमा न प्राप्नोति, न; वाक्यार्थत्वात्। यदत्राधिक्यं स वाक्यार्थ; पूर्वं स्वार्थमात्रनिष्ठाभ्यामुभाभ्यां प्रथमा विधीयते, पश्चात्त्वाकांक्षावशेनान्योन्यान्वये विशेषावगतिरुपधायमाना बहिरङ्गत्वात्प्रथमप्रवृत्तं संस्कारं न बाधत इत्यर्थः।

**भावबोधिनी**

होता है, वही प्रथमा से प्रतीत होता है। इस श्रेणी में दो ही प्रकार के शब्द हैं—(१) अलिङ्ग—जिनका कोई लिङ्ग नहीं होता है, जैसे अव्यय आदि और (२) नियत लिङ्ग—जिनका लिङ्ग एक ही रहता है। अतः 'उच्चैः' 'नीचैः' आदि अव्यय, रामः, श्रीः, ज्ञानम् आदि के बाद प्रथमा के लिये यह है।

जिनमें अनेक लिङ्ग होते है, वहाँ लिङ्ग को नियतोपस्थितिक नहीं माना जा सकता। वहाँ प्रातिपदिकार्थ के अतिरिक्त लिङ्ग अर्थ अधिक प्रतीत होता है, अतः उसे भी प्रथमा का ही अर्थ समझना चाहिये। जैसे—तटः, तटी, तटम्।

प्रातिपदिकार्थ के साथ-साथ परिमाण अर्थ अधिक प्रतीत होने पर—इसका उदाहरण है—द्रोणो व्रीहिः। यहाँ द्रोणपदोत्तर प्रथमा का अर्थ परिमाणसामान्य है, द्रोण का अर्थ परिमाणविशेष है। दोनों का अभेद सम्बन्ध है। व्रीहि

**न्यासः**

कर्माणि, तत्र कर्मणीत्येव द्वितीया सिद्धा। कटशब्दादुत्पद्यमानया द्वितीयया सामान्यकर्मोक्तम्, न विशेषकर्म। तत्रावश्यं विशेषो वक्तव्य इति भीष्मादिभ्योऽपि विशेषाभिधानार्थं द्वितीया भविष्यति। अथ वा—कट एव कर्म, तत्सामानाधिकरण्याद् भीष्मादिभ्योऽपि द्वितीया भविष्यति; नार्थः परिगणनेन।

यत् पुनरिदं 'तिङ्कृत्तद्धितसमासैः परिसंख्यानम्' इति वृत्तावुपन्यस्तम्, तदेभिरेवाभिधानं सम्भवतीति सम्भवप्रदर्शनार्थपरं वेदितव्यम्। यद्यप्येकादिभिरपि संख्याशब्दैरेकत्वादीनामभिधानं सम्भवति, तथाप्यभिहितेऽपि तैरेकत्वादावर्थे वचनग्रहणाद् यत्नाद् भवितव्यं विभक्त्येति। तैरप्यभिधानस्य सम्भवप्रदर्शनार्थं यत्नः कृतः।

**निपातस्यानर्थकस्येत्यादि**। अथार्थविशेषणार्थं प्रातिपदिकग्रहणं कस्मान्न विज्ञायते? असति हि तस्मिन् न ज्ञायते—कस्यार्थ इति, तथा चार्थमात्रे प्रथमा स्यात्? नैतदस्ति; प्रातिपदिकाद्धि प्रथमा विधीयते। तत्रासति

**पदमञ्जरी**

अपर आह—अभिहिते प्रथमेति लक्षणं कर्त्तव्यम्, तिङादिभिरभिहिते कर्त्रादौ वृक्षस्तिष्ठति, कृतः कटः, शत्यः प्रासोदको ग्राम इत्यादौ प्रथमा भवतीत्यर्थ, तत्र वीरः पुरुषः इत्यादावाधिक्येऽप्यभिहितत्वात्सिद्धा प्रथमेति। अत्र को दोषः? यत्र क्रिया नास्ति तत्र न स्यात्-वृक्षः, प्लक्षः। तत्रापि क्रियाऽस्ति, कथम्? वृक्षः प्लक्षः, अस्तीति गम्यते। इह तर्हि प्रसाद आस्त इति सदिक्रियाया, आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यम्, तच्च सदिप्रत्ययेन घञाभिहितं प्रसीदत्यस्मिन्प्रासाद इति आसिप्रत्ययेन तिङानभिहितम्, तत्र सदिप्रत्ययेन यदभिधानं तदाश्रया प्रथमा प्राप्नोति। यत्र च विशेषणसबन्धे तात्पर्यम्—नीलमुत्पल न रक्तमिति, तत्रापि न स्यात्; क्रियाया अभावात्।

अन्यस्त्वाह—तिङ्समानाधिकरणे प्रथमेति लक्षणं तिङन्तेन यत्समानाभिधेयं देवदत्तः पचतीति, तत्र प्रथमा; प्रासाद आस्त इत्यत्र तु वैयधिकरण्यात्तदभावः, वीरः पुरुष इत्यादौ चाधिक्येऽपि तिङ्सामानाधिकरण्यं प्रति योग्यत्वाद्भवतीति। अत्र को दोषः? इह देवदत्तः पच् लट् इति स्थिते यावत्तिङामुत्पत्तिर्नास्ति तावत्तिङ्-सामानाधिकरण्याभावात्प्रथमैवेति नियमस्याप्रवृत्तौ देवदत्तशब्दादविशेषेण विहिताः स्वादयः स्थिता इति शतृशानचोर्निमित्तस्याप्रथमासामानाधिकरण्यस्य विद्यमानत्वात्तावेव स्याताम्, तिङां त्वभावः स्यात्। न च तिङ्विधेरानर्थक्यम्; तिङादिषु सावकाशत्वात्। प्रथमैवेति नियमस्यापि स एव विषयः स्यादिति दोषः। पक्षे चायं दोषः, कतरस्मिन् पक्षे? 'लटः शतृशानचौ' इत्यत्र द्वौ पक्षौ—अप्रथमेति पर्युदासः, प्रसज्यप्रतिषेधो वेति। तथा 'कर्मणि द्वितीया' इत्यादावपि प्रकरणे द्वैतं भवति-विभक्तिनियमः स्यात्, अर्थनियमो वेति; तद्यदार्थनियमः पर्युदासश्चाश्रीयते तदाऽयं दोषः। कथम्? कर्मणि द्वितीयैवेत्यस्मिन् नियमे द्वितीयादीनामनियतत्वात् प्रादिपदि-कार्थमात्रेऽपि भावात्तदाश्रयौ शतृशानचौ प्राप्नुतः, प्रसज्यप्रतिषेधे तु प्रथमाया अपि तत्र भावात्तदाश्रयः प्रतिषेधः प्रवर्त्तत इति न दोषः, शतृशानचोरभावात्तिङ्क्षु सत्सु तत्सामानाधिकरण्यात्प्रथमैवेति नियमेन

**भावबोधिनी**

परिमेय = परिच्छेद्य है, अतः परिच्छेद्य-परिच्छेदकभाव से इनका अन्वय होता है। इस प्रकार 'द्रोणरूपं यत् विशेषपरिमाणम्, तदभिन्नं यत् सामान्यपरिमाणम् (= प्रथमार्थ), तत्परिच्छिन्नो व्रीहिः' यह परिष्कृत बोध होता है। इस प्रकार को कल्पना की आवश्यकता के मूल में है—दो पदार्थों के परस्पर अन्वय का सिद्धान्त—"नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः।" दो प्रातिपदिकार्थों का परस्पर अभेद सम्बन्ध ही माना जाता है। परन्तु द्रोण = परिमाण और व्रीहि = परिमेय का अभेद सम्बन्ध सम्भव नहीं है। इसी विवशता के कारण मध्य में प्रथमा = प्रत्यय का अर्थ परिमाण सामान्य मानना पड़ता है। इस प्रकार पहले प्रातिपदिकार्थ और प्रत्ययार्थ का अन्वय, इसके बाद प्रत्ययार्थ और प्रातिपदिकार्थ का अन्वय किया जाता

## ५०८. सम्बोधने च ॥ ४७ ॥ ( ५३३ )

**आभिमुख्यकरणम् = संबोधनम्, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमारम्यते। संबोधने च प्रथमा विभक्तिर्भवति। हे देवदत्त ! हे देवदत्तौ ! हे देवदत्ताः ॥**

**न्यासः**

प्रातिपदिकग्रहणे प्रातिपदिकार्थ एव भवतीति विज्ञायते। तस्माद् **वृत्तिकारोक्तमेव** प्रातिपदिकग्रहणस्य प्रयोजनं न्याय्यम् ॥ ४६ ॥

**सम्बोधने च** ॥ सम्बोधनम्=अभिमुखीकरणम्, तदधिके प्रातिपदिकार्थ इत्यभिमुखीकरणस्य क्रिया-परत्वात् प्रातिपदिकार्थे तस्यान्तर्भावो नास्ति, तस्यातदात्मकत्वात्, तस्मात् तेनाधिकः प्रातिपदिकार्थो भवति। अथ कथमिह प्रथमा—हे पचन्, हे पचमानेति ? कथञ्च न स्यात् ? शतृशानज्भ्यामुक्तत्वात् सम्बोधनस्य।

**पदमञ्जरी**

द्वितीयादीनां व्यावर्त्तितत्वात्। यदा तु द्वितीयादीनां कर्मादिषु नियमः—कर्मण्येव द्वितीयेति, तदा तदभावे तासामभावादनियतायाश्च प्रथमायाः सन्निधानात्पर्युदासे प्रसज्यप्रतिषेधे न नास्ति शतृशानचोः प्रसङ्गः; तदभावे च तिङ्क्षु सत्सु तत्सामानाधिकरण्यात्तत्रैव प्रथमा भवतीति नियमेन कर्मादिषु प्रथमाव्यावृत्तिरिति न दोषः।

ननु च विभक्तिनियमे कर्माद्यभावेन यद्यपि द्वितीयादीनां तत्राभावस्तथापि शेषषष्ठी प्राप्नोति, तथा हि—यदि तिङ्सामानाधिकरण्य एव प्रथमेत्यस्मान्नियमात्प्रागेव द्वितीयादिवत् षष्ठ्यपि नियता स्यात् ? स्यात्तत्रा-प्रसङ्गस्तस्याः। सा तु शेषलक्षणा। यत्र च विभक्त्यन्तरस्य नियमो न कृतः स शेषः, ततश्च तिङ्सामाना-धिकरण्यात्प्राक् शेषत्वात् षष्ठी प्राप्नोतीति तत्सामानाधिकरण्याच्छतृशानचावेव स्याताम्। पर्युदासे प्रसज्य-प्रतिषेधे तु न दोषः, प्रथमाया अपि भावात् ? सत्यम्; द्वयोरपि पक्षयाः पर्युदासे भवत्येव दोषः। **भाष्ये** तु विभक्तिनियमे पर्युदासेऽपि न दोष इत्यनास्थावादः पाक्षिक एष दोष इत्यत्रैव तात्पर्यम्। क्षन्तव्यं च किञ्चिदुद्-ग्रन्थाभिधानमित्युपरम्यते ॥ ४६ ॥

**सम्बोधने च ॥ आभिमुख्यकरणमिति।** यद्वस्तु येनाकारेण सिद्धं तस्य तेनाकारेणाभिमुखीकरणं सम्बो-धनम्, न त्वेकश्रुतिविधाविव कस्यचिदर्थस्यानुष्ठेयता प्रत्यायनम्; वाक्यार्थो हि सः। अभिमुखीकरणं तु न वाक्यार्थः, येन वीरः पुरुष इत्यादिवद्यदत्राधिक्यं स वाक्यार्थ इति प्रथमा सिद्ध्येत्। यस्य पदान्तरसंप्रयोगे सत्येव प्रतीतिः स वाक्यार्थः। इह तु देवदत्तेत्येतावत्युक्ते आभिमुख्यकरणं गम्यते, अतः पदार्थ एवात्राधिक्य-

**भावबोधिनी**

है। इसी कारण इसके उदाहरण के रूप में केवल 'द्रोणः' इतना नहीं है, अपितु 'द्रोणो व्रीहिः' इतना है। परन्तु लक्ष्य द्रोणपदोत्तरवर्त्ती प्रथमा ही है। व्रीहि पद से प्रथमा तो 'प्रातिपदिकार्थ मात्र' में प्रथमा का उदाहरण है। यह सूक्ष्म विषय है।

वचन = संख्या। प्रकृति से ही अर्थ की प्रतीति हो जाती है। अतः 'उक्तार्थानाम् अप्रयोगः' नियम से विभक्ति की प्राप्ति नहीं है, अतः इसका ग्रहण किया गया है ॥ ४६ ॥

आभिमुख्यकरण = अपने सामने करना = सम्बोधन है, सम्बोधन अर्थ अधिक रहने पर प्रातिपदिकार्थ में प्रथमा नहीं प्राप्त होती है, उसे करने के लिये यह सूत्र बनाया गया है। और [ उक्तसूत्र के अतिरिक्त ] सम्बोधन अर्थ में भी प्रथमा होती है। उदा०—हे देवदत्त ! देवदत्तौ ! देवदत्ताः !

## ५०९. साऽऽमन्त्रितम् ॥ ४८ ॥ ( ४११ )

**संबोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति । तथा चैवोदाहृतम् ।**
**आमन्त्रितप्रदेशाः-'आमन्त्रितं पूर्वमविद्यमानवद्' ( ८.१.७२ ) इत्येवमादयः ॥**

**न्यासः**

एतावपि 'सम्बोधने च' इति सम्बोधन एव वक्ष्यति । मा भूदनेन, पूर्वसूत्रेण भविष्यति ? सम्बोधनार्थस्येह 'कृत्तद्धितसमासाश्च' इत्यनेन प्रातिपदिकार्थत्वात् । योगविभाग उत्तरार्थः ॥ ४७ ॥

**साऽऽमन्त्रितम् ॥ तदन्तं शब्दरूपमिति ।** ननु च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्त विधिर्नास्ति' इति ज्ञापितमेतत् 'सुप्तिङन्तं पदम्' इत्यत्रान्तग्रहणेन । इह च संज्ञाविधौ प्रत्ययग्रहणम्, तत् कथं तदन्तस्य संज्ञा विधीयते ? नैतदस्ति; यद्यपि संज्ञाविधौ प्रत्यग्रहणमिह, तथापि तदन्तस्यैवेयं संज्ञा विधीयते । यदीह प्रत्यय-मात्रस्य संज्ञाग्रहणं स्यात् तदा प्रदेशेषु तस्यैव ग्रहणं स्यात्, तथा च संज्ञाकरणमनर्थकं स्यात् । प्रदेशेषु सम्बोधन इत्येवं ब्रूयात् । एवमपि प्रत्ययमात्रस्य ग्रहणं लभ्यत एव; तस्यैव सम्बोधने विहितत्वात् । तस्मात् संज्ञाकरणादेव तदन्तस्य संज्ञा लभ्यते । सेति वचनं पूर्वसूत्रेणापि सम्बोधने या विहिता तस्या अपीयं संज्ञा यथा स्यात्—हे पचन्, हे पचमानेत्यत्र । असति त्वस्मिन् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति पूर्वसूत्रेणैव या विहिता तस्या एव स्यात् सेत्येतदुच्यमानं सर्वनामपदं सामान्येन प्रवर्त्तत इति कृत्वा । अतः सम्बोधनमात्रे या प्रथमा तां प्रतिपादयति, तेन सर्वत्र संज्ञा सिद्धा भवति । आमन्त्रितसंज्ञायां सत्यां हे देवदत्त इत्यादौ 'आम-न्त्रितस्य' इत्याद्युदात्तत्वं भवति । 'आमन्त्रितम्' इति महत्याः संज्ञायाः करणं वैचित्र्यार्थम् ॥ ४८ ॥

**पदमञ्जरी**

मिति षष्ठ्यां प्राप्तायामिदं वचनं तदाह—**तदधिके प्रातिपदिकार्थ इति ।** असिद्धेन चाकारेणाभिमुखीकरणं न न संभवति—राजा भव युध्यस्व स्वाहेन्द्रशत्रुर्वर्द्धस्वेति । हे पचन् हे पचमानेत्यादौ शतृशानचोः संबोधने विधानेऽपि विभक्तिरहितयोस्तयोः कर्त्राद्यभिधान एव सामर्थ्यम्; तथा लोटो द्विर्वचननिरयेक्षस्येत्यनेन प्रथमा भवति । यद्वा—अभिहितः सोऽर्थोऽन्तभूतः प्रातिपदिकार्थः संपन्न इति पूर्वेण भविष्यति, योगविभाग उत्तरार्थः ॥ ४७ ॥

**सामन्त्रितम् ॥ तदन्तं यच्छब्दरूपमिति ।** महासञ्ज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम् आमत्रणमामन्त्रितमिति । अभेदोपचारात्तत्साधने शब्दे वर्त्तते विभक्त्यन्तेन केवलया विभक्त्येति संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य ग्रहण-मिति भावः । उदाहरणेषु 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं भवति, सेति वचनं प्रादिपदिकार्थसूत्रेणापि संबोधने विहिता या प्रथमा तदन्तस्यापि संज्ञा यथा स्यात् - हे पचन् ! हे पचमान !; असति तु तस्मिन् 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इत्यनन्तरसूत्रविहिताया एव स्यात् ॥ ४८ ॥

**भावबोधिनी**

**विमर्श—**सम्यग् बोधनम्—सम्बोधन । जब कोई व्यक्ति किसी को अपनी विवक्षित बात बताना चाहता है तब जिसको अभिमुख करके कहा जाता है, वह सम्बोध्य होता है । उसमें प्रथमा होती है । यह सम्बोधन सदैव उद्देश्यभूत पदार्थ में ही होता है विधेय में नहीं । अतएव 'राजा भव, युध्यस्व' आदि में 'राजन्' में सम्बोधन प्रथमा नहीं है । इस सूत्र के साथ मिलकर केवल पाँच अर्थों में ही प्रथमा विभक्ति होती है ॥ ४७ ॥

सम्बोधन में जो प्रथमा है, तदन्त [ प्रथमान्त ] शब्दरूप की आमन्त्रित संज्ञा होती है । जैसा कि [ पूर्वसूत्र में ] उदाहरण दिया जा चुका है ।

आमन्त्रित संज्ञा के प्रदेश—'आमन्त्रितं पूर्वमविद्यमानवद्' ( पा० सू० ८।१।७२ ) आदि सूत्र हैं ॥ ४८ ॥

**५१०. एकवचनं संबुद्धिः ॥ ४९ ॥ ( १९२ )**

**आमन्त्रितप्रथमाया यदेकवचनं तत्संबुद्धिसंज्ञं भवति । हे पटो ! हे देवदत्त !**

**संबुद्धिप्रदेशाः–'एङ्ह्रस्वात्संबुद्धेः' ( ६.१.६९ ) इत्येवमादयः ॥**

**५११. षष्ठी शेषे ॥ ५० ॥ ( ६०६ )**

**न्यासः**

**एकवचनं सम्बुद्धिः** ॥ **हे पटो, हे देवदत्त इति** । अत्र सम्बुद्धिसंज्ञायां सत्याम् 'सम्बुद्धौ च' इत्यधिकृत्य 'ह्रस्वस्य गुणः' इति गुणे 'एङ् ह्रस्वात् सम्बुद्धेः' इति सोर्लोपो यथायोगं भवति । अथ सुग्रहणमेव कस्मान्न कृतम्, न च सप्तमीबहुवचनस्य प्रसङ्गः; सम्बोधनप्रथमाधिकारात् ? सत्यम्; किन्तु नैतदस्ति, प्रत्ययमात्रस्य संज्ञाविधानार्थमेकवचनग्रहणं कृतम्—हे पचन्, हे पचमानेति; अन्यथा हि पूर्वेण यथा तदन्तस्य संज्ञा विहिता तथेहापि स्यात् । न चेहासंज्ञिनः कश्चिद् विशेषोऽङ्गीक्रियत इति । सुशब्देन तदन्तमेव लक्ष्यते, ततश्च तदन्तस्यैव संज्ञा स्यात् । तथा च 'एङ्ह्रस्वात् सम्बुद्धेः' इति सोर्लोपो विधीयमानः 'आदेः परस्य' इत्यादेरेव स्यात्, प्रत्ययमात्रस्य न स्यात् । तस्मात् प्रत्ययमात्रस्य संज्ञा यथा स्यादित्येवमर्थमेकवचनग्रहणम् ॥ ४९ ॥

**षष्ठी शेषे** ॥ कर्मादीनां प्रकृतत्वात् तदपेक्षया शेषत्वं विज्ञायत इत्याह—**कर्मादिभ्यो योऽन्य इति** । कर्मादयः कारकविशेषास्तस्य सम्बन्धस्य हेतुभूताः, स तु फलभूतः । हेतुफलयोश्च प्रसिद्धमन्यत्वमिति तेभ्योऽन्यो भवति । **प्रातिपदिकार्थव्यतिरेक इति** । व्यतिरेकः = आधिक्यम् । अथ वा—येन प्रातिपदिकार्थो व्यतिरिच्यते = व्यतिरेकीक्रियते स व्यतिरेकः । प्रातिपदिकार्थस्य व्यतिरेकः = प्रातिपदिकार्थव्यतिरेकः । स शेषः । कः पुनर-

**पदमञ्जरी**

**एकवचनं संबुद्धिः** ॥ हे **पटो इति** । संबुद्धौ च 'ह्रस्वस्य गुणः' इति गुणः, 'सुः संबुद्धिः' इति वक्तव्ये एकवचनग्रहणमेकोऽर्थं उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम्; अन्यथा प्रक्रमाभेदाय तदन्तस्य स्यात् ॥४९॥

**षष्ठी शेषे** ॥ उपयुक्तादन्यः शेषः, कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्ता इत्याह—**कर्मादिभ्योऽन्य इति** । ननु न कर्मादिभ्योऽन्यः प्रातिपदिकार्थस्य व्यतिरेकः संभवति, कथम् ? क्रियामन्तरेण संबन्धानुपपत्तेः, सर्वत्र तस्यास्तन्निमित्तानां कर्मादीनां चावश्यम्भावात् । तथा हि—राज्ञः पुरुष इति राजा कर्त्ता; राजा द्रव्यं पुरुषाय ददातीत्यर्थसंप्रत्ययात् । **वृक्षस्य शाखेति** । लोकप्रसिद्धया वृक्षोऽधिकरणम्, तार्किकप्रक्रियया तु शाखा । देवदत्तस्य गौरित्यादौ तु प्रतिग्रहणादौ कर्तृत्वं प्रतीयते—देवदत्तः प्रतिग्रहीता क्रेता विनिमाताऽपहर्त्ता वेति; उच्यते, नटस्य शृणोतीत्यत्र तावत्क्रियाकारकसंबन्धरूप एव शेषः, कथम् ? 'आख्यातोपयोगे' इत्युपयोगग्रहणान्नटस्यापादनसंज्ञा नास्ति, दुह्यादिपरिगणनाच्चाकथितत्वेऽपि कर्मसंज्ञा नास्ति, तदयं नटः कारकमेव शेषः । यच्चोक्तम्—क्रियायास्तन्निमित्तानां च सर्वत्र भावान्नान्यः प्रातिपदिकार्थस्य व्यतिरेक इति, तन्न; प्रतिग्रह-

**भावबोधिनी**

आमन्त्रित प्रथमा [ सम्बोधनान्त प्रथमा ] का जो एकवचन है उसकी सम्बुद्धिसंज्ञा होती है । उदा०—हे पटो !, हे देवदत्त !

सम्बुद्धि संज्ञा के प्रदेश—'एङ्ह्रस्वात् सम्बुद्धेः' (पा० सू० ६।१।६९) आदि हैं ।

**विमर्श**—'सम्बोधन अर्थ में' होने वाली प्रथमा विभक्ति के एकवचन की सम्बुद्धि संज्ञा होती है । इसके फलस्वरूप 'हे पटो !' आदि में 'सम्बुद्धौ च' ''ह्रस्वस्य गुणः'' (पा० सू० ७।३।१०७) से गुण होता है । और 'हे देवदत्त ! आदि में 'एङ्ह्रस्वात् सम्बुद्धेः' (पा० सू० ६।१।६९) से सुलोप होता है ॥ ४९ ॥

**कर्मादिभ्यो योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषस्तत्र षष्ठी विभक्तिर्भवति । राज्ञः पुरुषस्य गृहम् । पशोः पादः । पितुः पुत्रः ॥**

**न्यासः**

सावित्याह—**स्वस्वामिकसम्बन्धादिरिति** । आदिशब्देनावयवावयविप्रभृतेः सम्बन्धस्य ग्रहणम् । सम्बन्धश्च यद्यपि द्विष्ठस्तथापि तस्यैकत्वादेकत एव सम्बन्धिन उत्पद्यमानया षष्ठ्या विभक्त्याऽभिहितत्वात् द्वितीय-सम्बन्धिनः षष्ठो न भवति । एकस्मादुत्पद्यमानापि षष्ठी विशेणादेव भवति; न विशेष्यात् । विशेष्यात्तु प्रथमैव भवति; यस्माच्छेषशब्दोऽयं यथा प्रकृतादन्यविशेषणमाचष्टे तथा परार्थमपि । एवं ह्यभियुक्ताः पुरुषा उप-दिशन्ति—शेषः परार्थं इति । राज्ञः पुरुष इति स्वस्वामिकसम्भन्धस्योदाहरणम् । अत्र पुरुषस्य प्राधान्यम्, विशेष्यत्वात् । राज्ञोऽप्राधान्यम्, विशेषणत्वात् । विशेषणस्य परार्थत्वात् शेषभाव इति ततः षष्ठी भवति । यदा तु द्वावपि विशेषणभूतौ तृतीये सम्बन्धिन्यपेक्षितौ भवतः, तदा द्वाभ्यामपि षष्ठी भवति ।

**राज्ञः पुरुषस्य गृहमिति** । **पशोः पाद इति** । अत्रावयवावयविसम्बन्धे षष्ठी । **पितुः पुत्र** इत्यत्र जन्य-जनकसम्बन्धे षष्ठी । अथ शेषग्रहणं किमर्थम्, यावता 'कर्मणि द्वितीया' इत्येवमादौ प्रत्ययनियमोऽर्थनियमश्चेति द्वावपि पक्षौ । तत्र प्रत्ययनियमपक्षे यदि शेषग्रहणं न क्रियेत तदा कर्मण्येव द्वितीयेति कर्मानियतम्, द्वितीया

**पदमञ्जरी**

क्रयादिजन्यस्य सर्वलोकप्रसिद्धस्य स्वस्वामिभावादिसंबन्धस्यापि दुरपलापत्वात् । यदि च परस्परमुपकार्योप-कारकभावे संबन्धानुपपत्तेः क्रियाकारकसंबन्धोऽपि सर्वत्र वस्तुस्थित्याऽस्तीत्युच्येत, अस्तु तथा, न कश्चिद्दोषः; न हि यद्यद्वस्तुस्थित्यास्ति तत्तदभिधातव्यम्, यदेव तु विवक्षितं तदेव स्वनिमित्तां विभक्तिं प्रसूते । तत्र स्वस्वामिभावादिसंबन्धविवक्षायां सन्नपि क्रियाकारकसंबन्धो न विवक्ष्यत इति द्वितीयाद्यभावे षष्ठी भविष्यति । एवं च मातुः स्मरति, न माषाणामश्नीयात्, अनुकरोति भगवतो नारायणस्येत्यादौ श्रूयमाणेऽपि क्रियाशब्दे मातृसंबद्धं स्मरणमिति संबन्धमात्रं विवक्षितम्, कर्मत्वं तु सदप्यविवक्षितमिति षष्ठी भवति उक्तं च—

संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते ॥ इति ।

'षष्ठी शेषे' इति चेद्विशेष्यस्य प्रतिषेधः स्वस्वामिभावादिसंबन्धः षष्ठ्यर्थः, स च द्विष्ठः । तत्र यद्यप्येक-स्मादप्युत्पन्नयापि षष्ठस्यापि संबन्धस्यावगमादुभाभ्यां षष्ठी न भवति, तथापि कदाचिद्विशेष्यादपि प्राप्नोति

**भावबोधिनी**

कर्म आदि कारकों से जो भिन्न प्रातिपदिकार्थ से भिन्न = स्वस्वामिभाव आदि सम्बन्ध 'शेष' पदार्थ है, इसमें षष्ठी विभक्ति होती है । उदा०—राज्ञः पुरुषः [ राजा का पुरुष = कर्मचारी ] । पशोः पादः [ पशु का पैर ] । पितुः पुत्रः [ पिता का पुत्र ] ।

**विमर्श—**'शेष' पदार्थ समझने के लिये पहले वाले पदार्थ समझ लेने चाहिये । 'कर्मणि द्वितीया' (पा० सू० २।३।२) से लेकर "सप्तम्यधिकरणे च" (पा० सू० २।३।३५) तक विभिन्न कारक अर्थों में द्वितीया आदि का विधान किया जा चुका है । 'प्रातिपदिकार्थे' (पा० सू० २।३।४६) से प्रातिपदिकार्थ में प्रथमा विभक्ति का विधान किया जा चुका है । अतः कारक एवं प्रातिपदिकार्थ से व्यतिरिक्त—बचे हुए को ही 'शेष' समझना चाहिये । यह स्व-स्वामिमात्र, जन्यजनकभाव, अवयवावयवि-भाव आदि सम्बन्ध हैं । इन्हीं के लिये षष्ठी का प्रयोग होता है ।

यहाँ एक बात ध्यान रखनी चाहिये कि सम्बन्ध सदैव दोनों सम्बन्धियों में ही रहता है । अतः जैसे 'राजा' से षष्ठी होती है वैसे ही 'पुरुष' से भी षष्ठी क्यों नहीं होती ? इसका समाधान करते हुए यह कहा जाता है कि दोनों में

न्यासः

तु नियता; अतस्तत्रापि षष्ठी स्यादिति शेषग्रहणं कर्त्तव्यम् । शेष एव यथा स्यादन्यत्र मा भूदिति अर्थनियमपक्षे तु शेषग्रहणं शक्यमकर्तुम् । यावता कर्मणि द्वितीयैवेति कर्म नियतम्, द्वितीया त्वनियता; तस्यामन्यत्रापि प्राप्तायां षष्ठीत्युच्यमानं सूत्रमिदं नियमार्थं भविष्यति—यत्र षष्ठी चान्या च प्राप्नोति तत्र षष्ठ्येव भवति । एवमन्यत्रापि वेदितव्यम् ।। ५० ।।

पदमञ्जरी

प्रथमा च न प्राप्नोति; संबन्धस्याधिकस्य भावात्, न वा वाक्यार्थत्वात् । यदत्र पुरुषस्याधिक्यं स वाक्यार्थः, राज्ञ इत्येतत्पदसन्निधानात्पुरुषस्य संबन्धः प्रतीयते, पुरुषप्रातिपदिकं तु स्वार्थमात्रे वर्त्तत इति तत्र प्रथमा च भविष्यति, षष्ठी च न भविष्यतीति । एतदुक्तं भवति—राज्ञ इति केवलपद उच्चार्यमाणे संबन्धित्वमनियत-प्रतियोगिकमवगम्यते, पुरुषपदसन्निधौ तु सविशेषस्य प्रतीतिरित्येतावत्, ततश्चानियतं स्वमपेक्ष्य प्रथममेव संबन्धाश्रया षष्ठी भवति । ननु च षष्ठ्युच्चारणानुच्चारणकृतो यो विशेषोऽङ्ग भवान् पुरुषपदादपि षष्ठीमुच्चा-रयतु, गंस्यते स विशेषः ? नैतत्सुष्ठूच्यते, न हि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते, किं तर्हि ? विद्यमान एवार्थः प्रतिपिपादयिषितश्च वाचकपदप्रयोगे हेतुर्भवति । तत्र गुणस्य परोपकारकत्वेन विवक्षितत्वात्त-दन्ते षष्ठी भवति, पुरुषस्य तूपकार्यत्वात्वात्स्वनिष्ठत्वेन विवक्षितत्वात्प्रथमा भवति । तत्र च संबन्धो गुणे पदं निधाय प्रधानमपि स्पृशति, गुणश्च प्रधानोपकाराय प्रवृत्तोऽन्यथानुपपत्ते रूपान्तरमाश्रयति । प्रधानं तु स्वनिष्ठ-त्वेन न रूपान्तरं भजते, उक्तं च—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानः सन् प्रधानेऽप्युपयुज्यते ।। ( वा० प० ३.७.१५७ ) इति ।

यदा तु पुरुषस्याप्राधान्यं राज्ञश्च प्राधान्यं विवक्ष्यते, तदा पुरुषस्य राजेत्यपि भवत्येव; यदा च राज्ञः पुरुषस्य गृहमिति तत्पुरुषस्य गृहादिसंबन्धो विवक्ष्यते तदैकस्यापि वस्तुनो भिन्नविषयो गुणप्रधानभावो न विरुद्ध्यत इति द्वाभ्यामपि षष्ठी भवति । राज्ञ इति हि षष्ठ्या राजपुरुषयोरेव संबन्धोऽभिहितः, न पुरुषस्य गृहस्य च । इह पञ्चके प्रातिपदिकार्थे 'कर्मणि द्वितीया' इत्यादौ चार्थनियमपक्षे शेषग्रहणं शक्यमकर्तुम्, कथम् ? कर्मादयो नियताः, शेषोऽनियतः, ततश्च स्वादिसूत्रेण द्वितीयादिषु षष्ठ्यां च शेषे प्राप्तेषु षष्ठीत्येतावदप्युच्यमानं नियमार्थं सम्पद्यते—षष्ठ्येव भवतीति । यत्र च षष्ठी च प्रत्ययान्तरं च प्राप्नोति तत्रैवंविधा नियम इत्यर्था-च्छेष एव भविष्यतीति उत्तरार्थमेव तदवश्यं शेषग्रहणं कर्त्तव्यम् । त्रिकपक्षे तु स्वार्थे षष्ठी मा भूदिति द्वितीया-दीनामिव कर्मादिः शेषो वाच्यत्वेन विधातव्यः । तथा प्रत्ययनियमपक्षे कर्मादीनामनियतत्वात्तेष्वपि षष्ठ्यां प्राप्तायां शेष एव षष्ठो न कर्मादिष्विति षष्ठीनियमार्थं शेषग्रहणं कर्त्तव्यम् ।। ५० ।।

भावबोधनी

रहने पर भी इस सम्बन्ध की प्रतीति गुण = विशेषण में ही दिखाई देती है । अतः उसी में षष्ठी द्वारा इसका अभिधान होकर प्रधान = विशेष्य में भी सम्बन्ध मान लिया जाता है । इस विषय में भर्तृहरि की निम्न कारिका स्मरणीय है—

'द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषुव्यतिरिच्यते ।
तत्राभिधीयमानः सन् प्रधानेऽप्युपयुज्यते ।। (वा० प० ३.७.१५७) ।। ५० ।।

## ५१२. ज्ञोऽविदर्थस्य करणे ॥ ५१ ॥ ( ६१२ )

जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति। सर्पिषो जानीते। मधुनो जानीते। सर्पिषा करणेन प्रवर्तत इत्यर्थः।

प्रवृत्तिवचनो जानातिरविदर्थः। अथ वा-मिथ्याज्ञानवचनः। सर्पिषि रक्तः प्रतिहतो वा। चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते। मिथ्याज्ञानमज्ञानमेव।

अविदर्थस्येति किम् ? स्वरेण पुत्रं जानाति ॥

### न्यासः

**ज्ञोऽविदर्थस्य करणे** ॥ यद्यपि बहवो विदयः सन्ति, तथापि यस्यार्थे जानातेर्वृत्तिः सम्भवति तस्यैव विदेः प्रतिषेधकरणं युक्तम्, 'विद ज्ञाने' इत्यस्यैवार्थे जनातेर्वृत्तिः सम्भवति, तस्मादविदर्थस्येत्यनेन ज्ञानार्थस्यैव प्रतिषेधो विज्ञायत इत्याह—**अज्ञानार्थस्येत्यादि। सर्पिषो जानीते, मधुनो जानीते इति**। 'अपह्नवे ज्ञः' इत्यनुवर्त्तमाने, 'अकर्मकाच्च' इत्यात्मनेपदम्। मधुन इति—'इकोऽचि विभक्तौ' इति नुम्। सर्पिषा करणभूतेन प्रवर्तत इत्यर्थः। यस्य प्रियतमं सर्पिस्तस्य प्रवृत्तिं प्रति। सर्पिषः करणभूतत्वात् धातूनामनेकार्थत्वाज्जानातिरिह प्रवृत्त्यर्थः। **सर्पिषि रक्तः प्रतिहतो वेति**। सर्पिषि रक्तत्वं प्रतिहतत्वञ्च चित्तभ्रान्तेः कारणमाह। यदि सर्वमेव ग्राह्यं तदात्मना सर्पिःस्वभावतया प्रतिपद्यते। एवं सत्यविदर्थता नोपपद्यते, ज्ञानार्थत्वादित्यत आह—**मिथ्याज्ञानमज्ञानमेवेति**। ज्ञानकार्याकरणादिति भावः। अविपरीतविषयपरिच्छेदो

### पदमञ्जरी

**ज्ञोऽविदर्थस्य करणे** ॥ असंदेहार्थं विदर्थस्य ज्ञः करण इत्येव वक्तव्ये तदकरणादविदर्थस्येति पदच्छेदः, लुग्विकरणश्च विदिर्गृह्यते तदर्थ एव जानातेर्वृत्तिसंभवात्, तदाह—**अविदर्थस्याज्ञानार्थस्येति। सर्पिषो जानीत इति**। 'अपह्नवे ज्ञः' अकर्मकाच्च' इत्यात्मनेपदम्। **प्रवृत्तिवचन इति** ज्ञानपूर्विकायां प्रवृत्तौ वर्त्तमान इत्यर्थः। **सर्पिषि रक्त इति**। रागो मिथ्याज्ञानस्य हेतुः, द्रौपद्यां रक्तो हि कीचको रहसि भीमसेनमालिङ्ग्यावोचद्—अहो उत्तमाङ्गनामीदृशी सुस्पर्शेति। **प्रतिहितो वेति**। प्रतिघातो द्वेषस्य हेतुः, द्वेषश्च मिथ्याज्ञानस्य हेतुः, यो हि परिहासशीलेन केनचित्पूयादिकमशुचिद्रव्यं निर्दिश्योक्तः-सर्पिरेतत्पिबेति, स तत्र प्रतिहतस्तत आरभ्य सर्पिर्द्वेष्टि, द्विषतश्चातस्मिन्नपि तज्ज्ञानमुत्पद्यते। यदि सर्वमेव ग्राह्यम्, तदात्मना सर्पिः स्वभावतया प्रतिपद्यते, एव सत्यविदर्थत्वं नोपपद्यते तत्राह—**मिथ्याज्ञानमेवेति**। ज्ञानकार्याकरणादिति भावः। अविप्लुतविषयपरिच्छेदो

### भावबोधनी

अविद् अर्थवाली = ज्ञानभिन्न अर्थवाली ज्ञा धातु के करण कारक में षष्ठी विभक्ति होती है। उदा०—सर्पिषो जानीते [ घी के द्वारा प्रवृत्त होता है। ] मधुना जानीते [ मधु के द्वारा प्रवृत्त होता है। ] घृतरूपी करण से प्रवृत्त होता है—यह अर्थ है।

प्रवृत्ति अर्थ का वाचक ज्ञा धातु अविद् अर्थ वाला है। अथवा मिथ्याज्ञान का वाचक है। घी में रक्त है अथवा प्रतिहृत है। चित्र की भ्रान्ति से उस रूप से सभी विषयों को समझ लेता है। मिथ्याज्ञान अज्ञान ही है [ क्योंकि ज्ञान का कार्य उससे नहीं होता है। ]

अविद् अर्थ वाली—इसका क्या फल है ? स्वरेण पुत्रं जानाति। [ आवाज से पुत्र को पहचान लेता है। यहाँ ज्ञान अर्थ होने से षष्ठी न होकर तृतीया होती है। ]

**विमर्श**—विद् धातु का अनेक अर्थों में प्रयोग होता है। यहाँ अज्ञान = ज्ञान न होना अर्थ वाली ही ली जाती है। इस अर्थ में यह अकर्मक हो जाती है। अतः 'अकर्मवाच्य' (पा० सू० १।३।४५) से आत्मनेपद होता है। सर्पिषो

**५१३. अधीगर्थदयेशां कर्मणि ॥ ५२ ॥ ( ६१३ )**

**'शेषे' इति वर्तते। अधीगर्थाः=स्मरणार्थाः, 'दय दानगतिरक्षणेषु' ( धा० पा० ४८१ ), 'ईश ऐश्वर्ये' ( १०२१ )—एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। मातुरध्येति। मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे। मधुन ईष्टे।**

**कर्मणीति किम्? मातुर्गुणैः स्मरति। शेष इति किम्? मातरं स्मरति॥**

**न्यासः**

हि ज्ञानकार्यम्, तच्च मिथ्याज्ञानेन न क्रियत इति मिथ्याज्ञानमज्ञानमुच्यते, यथा—पुत्रकार्याकरणात् पुत्रोऽप्यपुत्र इति॥ ५१॥

**अधीगर्थदयेशां कर्मणि॥ अधीगिति।** 'इक् स्मरणे' इत्यस्याधिपूर्वस्य ग्रहणम्। अधीगित्यनेन समानार्था अधीगर्थाः। ककारानुबन्धकरणमस्य धातोरत्रैव सूत्रे विशेषणार्थम्। अध्ययनार्थानामित्युच्यमाने सन्देहः स्यात्—कोऽयं धातुरिति। अधिपूर्वस्योच्चारणेनाधिपूर्वस्यैवास्य प्रयोग इति दर्शयति। **कर्मणि कारक इत्यादि।** यदा तदेव कर्म शेषकार्यत्वाच्छेषत्वेन विवक्ष्यते न कर्मत्वेन, तदा तत्र षष्ठी भवति। **अध्येतेति।** अदादित्वाच्छपो लुक्। एवम् **ईष्टे इति।** व्रश्चादिसूत्रेण षत्वम्।

**मातुर्गुणैः स्मरतीति।** अत्र कर्मग्रहणाद् गुणानां करणभूतानां शेषविवक्षायामपि षष्ठी न भवति॥ ५२॥

**पदमञ्जरी**

हि ज्ञानकार्यम्, तच्च मिथ्याज्ञानेन न क्रियते, अस्मिन्पक्षे उदकादिकर्मणासकर्मकत्वाद् 'अकर्मकाच्च' इत्यात्मनेपदानुपपत्तेः परस्मैपदमुदाहार्यं मन्यते॥ ५१॥

**अधीगर्थदयेशां कर्मणि॥** 'इक् स्मरणे' (धा. पा. १०४७) ककारोऽत्रैव विशेषणार्थः, अधिपूर्वस्यैवोच्चारणमेवमेवायं प्रयोक्तव्य इति ज्ञापनार्थम्। **शेषत्वेन विवक्षित इति।** ननु शेषत्वेन विवक्षिते पूर्वेणैव सिद्धा षष्ठी, यथा—न माषाणामश्नीयाद्, अनुकरोति भगवतो नारायणस्येति? सत्यम्, प्रकरणं तु नियमार्थम्—अस्मिन्विषये षष्ठी भवत्येव श्रूयत एव न लुप्यत इति। किं कृतं भवति? समासो निवर्त्तितो भवति—मातुः स्मरणमिति। एवं पूर्वसूत्रे परत्र च प्रकरणे सर्वत्र द्रष्टव्यम्। समासे सति 'सुपो धातुप्रातिपदिकयोः' इति षष्ठी लुप्येत, तेन प्रतिपदविधानषष्ठी न समस्यत इति सिद्धं भवति। कथं तर्हि विशेषस्मृतेः संशय इति समासः? उच्यते; शेषषठ्या एव समासनिषेधः, इह तु 'कर्तृकर्मणोः कृति' इति कर्मरूपविवक्षायामेव षष्ठी समासो भविष्यति। कः पुनरत्र विशेषः—शेषषष्ठ्याः समासः स्यात्, कारकषष्ठ्या वा? अयमस्ति विशेषः—कारकषष्ठ्याः समासे कृत्स्वरो भवति, शेषषष्ठ्याः समासे तु समासान्तोदात्तत्वं स्यात्, अन्तोदात्तसमासनिवृत्तये प्रकरणम्। यत्र च कारकषष्ठी प्रतिषिध्यते, यथा—मातुः स्मृतमिति, तत्र समासोऽपि मा भूत्। एवं चात्र प्रकरणे येऽनुपात्ताः, यानि चात्र प्रत्युदाहरणानि, तेषूभयेष्वपि निष्ठायोगे शेषषष्ठ्याः समासः, अन्यत्र कारकषष्ठ्या अपीति वेदितव्यम्। **गुणैरिति।** गुणेषु शेषत्वेन विवक्षितेषु अस्य नियमस्याभावात्समासो भवत्येवेत्यर्थः। इयमेवास्मिन्प्रकरणे प्रत्युदाहरणगतिरिति॥ ५२॥

**भावबोधनी**

जानीते—यहाँ ज्ञा का अर्थ प्रवृत्ति है। अथवा मिथ्याज्ञान अर्थ है। अतः घी को मानकर प्रवृत्त हो रहा है वास्तव में घी नहीं है॥ ५१॥

'शेषे' [ शेष अर्थ में ] इसकी अनुवृत्ति होती है। अधीगर्थ=अधि उपसर्गपूर्वक इक् धातु के अर्थवाले=स्मरण अर्थवाले, 'दय दानगति और रक्षण अर्थवाले है'—इनके कर्मकारक में शेषत्वरूप से विवक्षित होनेपर षष्ठी विभक्ति

## ५१४. कृञः प्रतियत्ने ॥ ५३ ॥ ( ६१४ )

**सतो गुणान्तराधानम् = प्रतियत्नः। करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति। एधोदकस्योपस्कुरुते। शस्त्रपत्रस्योपस्कुरुते।**

**प्रतियत्न इति किम्? कटं करोति। कर्मणीति किम्? एधोदकस्योपस्कुरुते प्रज्ञया। शेष इत्येव— एधोदकमुपस्कुरुते॥**

## ५१५. रुजार्थानां भाववचनानामज्वरेः ॥ ५४ ॥ ( ६१५ )

**न्यासः**

**कृञः प्रतियत्ने॥ एधोदकस्योपस्कुरुते इति।** गन्धनादिसूत्रेणात्मनेपदम्, 'उपात् प्रतियत्न' इत्यादिना सुट्॥ ५३॥

**रुजार्थानां भाववचनानामज्वरेः॥** रुजेति केचिद्भिदादिषु पठन्ति। ये न पठन्ति तेऽपि 'चिन्तिपूजि-कथिकुम्बिचर्चश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वादस्मादेव निपातनाद्वा रुजाशब्दस्य साधुत्वं वर्णयन्ति।

**पदमञ्जरी**

**कृञः प्रतियत्ने॥ एधोदकस्येति।** 'जातिरप्राणिनाम्' इत्येकवद्भावः। **उपस्कुरुत इति।** गन्धनादि-सूत्रेणात्मनेपदम्। 'उपात्प्रतियत्न' इत्यादिना सुट्॥ ५३॥

**रुजार्थानां भाववचनानामज्वरेः॥** 'रुजो भङ्गे' भिदादिपाठादस्मादेव निपातनाद्वाऽङ्। **भाववचनाना-मिति।** नायमर्थो भाववाचिनामिति, धातूनां भाववाचित्वाव्यभिचारात्। किं तर्हि? भावशब्देन घञादिवाच्यः

**भावबोधनी**

होती है। उदा०—मातुः अध्येति, मातुः स्मरति [माता का स्मरण करता है]। सर्पिषो दयते [ घी का दान करता है ]। सर्पिषः ईष्टे [ घी पर अधिकार रखता है ]। मधुनः ईष्टे [ मधु पर अधिकार रखता है। ]

कर्म में—इसका क्या फल है? मातुः गुणैः स्मरति [ माता का गुणों के कारण स्मरण करता है। यहाँ 'गुणैः' में षष्ठी नहीं होती है। करणत्वेन तृतीया ही होती है। ] शेष अर्थ में' इसका क्या फल है? मातरं स्मरति [ माता को याद करती है। यहाँ कर्मत्वेन विवक्षित होने से माता से नहीं होती है, द्वितीया ही होती है॥ ५२॥

विद्यमान का दूसरा गुण बदल देना प्रतियत्न है। प्रतियत्न = किसी गुण को और दूसरे गुण में बदल देना—अर्थ की प्रतीति रहने पर, कृञ् के कर्म की शेषत्व रूप से विवक्षा करने पर षष्ठी विभक्ति होती है। उदा०—एधोदकस्य उपस्कुरुते [ लड़की और पानी के गुण को बदल देती है। अथवा 'एधः उकस्य उपस्कुरुते' लकड़ी पानी के गुण को बदल देती है। ] शस्त्र-पत्रस्य उपस्कुरुते [ शस्त्रपत्र का गुण बदल देता है। ]

प्रतियत्न की प्रतीति में—इसका क्या फल है? कटं करोति? चटाई बनाता है? [ यहाँ सामान्य अर्थ है। अतः षष्ठी नहीं होती है ] कर्म में—इसका क्या फल है? एधोदकस्य उपस्कुरुते प्रज्ञया। [ प्रज्ञा के बल से लकड़ी और पानी का गुण बदल देता है। ] शेष अर्थ में—इतनी ही है—एधोदकम् उपस्कुरुते। [ यहाँ कर्म की कर्मत्वेन ही विवक्षा है, शेष रूपेण नहीं। अतः षष्ठी न होकर द्वितीया होती है।

**विमर्श**—इस सूत्र से जब कर्म में षष्ठी होती है तब 'गान्धनावक्षेपण सेवनसाहसिक्य प्रतियत्न प्रकथनोपयोगु कृञः' ( पा० सू० १।३।३२ ) से आत्मनेपद होता है, और 'उपात् प्रतियत्ने' ( पा० सू० ६।१।१३९ ) इससे सुट् आगम होने पर 'उपस्कुरुते' बनता है॥ ५३॥

भाव = धात्वर्थ को कहने वाले घञ आदि प्रत्यय, तदन्त शब्द है। कर्ता जिनके ऐसी रुजा अर्थ वाली धातुयें, ज्वर अर्थ को छोड़कर, उन अर्थों वाली धातुओं के कर्म कारक की शेषत्व रूप से विवक्षा में षष्ठी विभक्ति होती है।

**रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। चौरस्य रुजति रोगः। चौरस्यामयत्यामयः।**

**रुजार्थानामिति किम्?**

**एति जीवन्तमानन्दो नरं वर्षशतादपि।**
**जीव पुत्रक मामैवं तपः साहसमाचर॥**

**भाववचनानामिति किम्? नदी कूलानि रुजति (म० भा०)। अज्वरेरिति किम्? चौरं ज्वरयति ज्वरः।**

**न्यासः**

रुजा अर्थो येषां ते **रुजार्थाः। भाववचनानामिति।** यदि भावार्थाभिधायिनां रुजार्थानामित्येषोऽर्थो विवक्षितः स्यात्, तदाऽनर्थकमिदं वचनं स्यात्। सर्वं एव हि रुजार्था भाववचनाः। तस्मान्नात्र धातुवाच्यो भावो विवक्षितः, किं तर्हि? प्रत्ययवाच्यः, यत्र 'भावे' इति घञ् विधीयते। वचनशब्दोऽयं कर्तृसाधनः, वक्तीति वचनः, 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्। न च रुजार्थानां यो भावस्तस्य वचनक्रियां प्रति कर्तृत्वं सम्भवतीति सामर्थ्याद्वचनशब्देन प्रकृत्यर्थं परित्यज्य प्रत्ययार्थो विवक्षित इति प्रतीयते। स पुनः कर्तृशक्तिः। भाववचनानामिति बहुव्रीहिः—भावो वचनः कर्त्ता येषां ते भाववचनाः। भावकर्तृका इत्यर्थः। एतत् सर्वं चेतसि कृत्वाऽऽह—**भावकर्तृकाणामिति।** भावकर्तृकाणामित्येवं नोक्तं वैचित्र्यार्थम्। **चौरस्य रुजतीति।** 'रुजो भङ्गे', तौदादिकः। अत्र रोगो भावः कर्त्ता। **चौरस्यामयतीत्यत्राप्यामयः।** 'अम रोगे', चौरादिकः।

**एति जीवन्तमानन्दो नरं वर्षशतादपीति।** अस्त्यत्रानन्दो भावः कर्त्ता। न त्वेतिर्धातू रुजार्थः, किं तर्हि? गत्यर्थः। **नदी कूलानि रुजतीति।** रुजिरत्र द्रव्यकर्तृकः, न भावकर्तृकः; नद्या द्रव्यत्वात्। नैतद् युक्तं प्रत्युदाहरणम्, रुजाशब्दो हि रूढिशब्दत्वाद् व्याधिमेवाचष्टे; न चात्र व्याधिवचनः, किं तर्हि? भङ्गवचनो रुजिः। एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता **वृत्तिकृता।** इदन्त्वत्र प्रत्युदाहरणम्—श्लेष्मा पुरुषं रुजतीति। व्याधिना

**पदमञ्जरी**

सिद्धरूपो भाव उच्यते। वचन इति कर्त्तरि ल्युट्। तत्र प्रकृत्यर्थो न विवक्ष्यते, न हि रुजार्थानां भावो वक्ता प्रतिपादयितोच्चारयिता वोपपद्यते। तस्मात्प्रत्ययार्थ एव कर्ता विवक्षितः—भावो वचनः कर्त्ता येषामित्यर्थः, तदाह—**भावकर्तृकाणामिति। चौरस्यामयतीति।** 'अम रोगे' चुरादिः, 'नान्ये मितोऽहेतौ' इति चुरादौ वचनात् 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वं न भवति। 'ज्ञप मिच्च' इत्यारभ्य 'नान्ये मितोऽहेतौ' इतः प्राग्ये पठितास्त एव चुरादिषु मितो भवन्ति, नान्य इत्यर्थः। **आमय इति** आङ्पूर्वस्य मीनातेरेच्, 'मीनातिमिनोति'

**भावबोधिनी**

उदा०—चौरस्य रोगस्य रुजा [ रोग चोर को कष्ट देता है। ] चौरस्य आमयति आमयः [ रोग चोर को कष्ट देता है। ]
रोग अर्थ वाली के कर्म में— इसका क्या फल है?

'जीवित मनुष्य के पास आनन्द सौ वर्ष के बाद भी आता है। प्रिय पुत्र जीवित रहो, इस प्रकार की कठोर तपस्या के लिये साहस मत मरो।'

[ यहाँ 'आनन्द' भाव प्रत्ययान्त है कि रोग अर्थ वाला नहीं है। अतः इस सूत्र की प्रवृत्ति नहीं होती है। ]

भाव वचन वाली—इसका क्या फल है? नदी कूलानि रुजति। [ नदी तट को गिराती है। यहाँ 'नदी' कर्तृरूपेण है किन्तु यह भाववाची न होकर द्रव्यवाची है। अतः 'कूलानि' में षष्ठी नहीं होती है। ]

अज्वरेः=ज्वर का नहीं—इसका क्या फल है? चौर ज्वरयति ज्वर। [ ज्वर चोर को कष्ट देता है। यहाँ नहीं होती है। ]

**॥ अज्वरिसंताप्योरिति वक्तव्यम् ॥ ( म० भा० २.३.५४ वा० १ ) । चौरं संतापयति तापः । शेष इत्येव—चौरं रुजति रोगः ॥**

## ५१६. आशिषि नाथः ॥ ५५ ॥ ( ६१६ )

**'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' ( धा० पा० ६,७ ) पठ्यते, तस्याशीः—क्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । सर्पिषो नाथते । मधुनो नाथते ।**

### न्यासः

ग्राहयतीत्यर्थः । **ज्वरयतीति** । 'ज्वर रोगे', हेतुमण्णिच् । घटादित्वान्मित्त्वम् । 'मितां ह्रस्वः' इति ह्रस्वः ।

**सन्तापयतीति** । 'तप सन्तापे', हेतुमण्णिच् । सन्तापोऽत्र भावः कर्त्ता ॥ ५४ ॥

**आशिषि नाथः ॥ सर्पिषो नाथत इति** । सर्पिर्यस्य नास्त्यतोऽर्थित्वादाशास्ते सः—सर्पिर्मे भूयादिति । 'आशिषि नाथः' इत्युपसंख्यानादात्मनेपदम् ।

### पदमञ्जरी

इत्यात्वस्य 'निमिमीलियां खलचोः' इति प्रतिषेधः । **नदीकूलं रुजतीति** । अत्र नदी कर्त्री, न भावः । ननु रुजाशब्दो व्याधौ रूढ इति नात्र प्रसङ्गः ? एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता, इदं तु प्रत्युदाहरणम्—श्लेष्मा पुरुषं रुजतीति, व्याधिना कासादिना ग्राहयतीत्यर्थः । **ज्वरयतीति** । 'ज्वर रोगे' घटादिः । **सन्तापयतीति** । 'हेतुमति च' इति णिच्, सन्तापोऽत्र भावः, कर्त्ता च ॥ ५४ ॥

**आशिष नाथः ॥ नाथत इति** । 'आशिषि नाथः' इत्युपसंख्यानादात्मनेपदम्, तच्चानुदात्तेत्त्वादेव सिद्धे

### भावबोधिनी

ज्वर तथा सन्तापि—इन दो को छोड़कर ऐसा कहना चाहिये । उदा०—चौरं सन्तापयति तापः [ ताप चोर को सन्तप्त करता है । यहाँ नहीं होती है । ] 'शेष' अर्थ रूप से विवक्षित ही कर्म में होती है—चौरं रुजति रोगः [ रोग चोर को कष्ट देता है । यहाँ कर्म रूपेण ही विवक्षा है । द्वितीया ही होती है । ]

**विमर्श**—वक्ति इति वचन—यह कर्ता में ल्युट् है । यहाँ केवल प्रत्ययार्थ 'कर्ता' ही विवक्षित हैं भावः = धात्वर्थः वचनः = कर्ता येषां धातूनां ते भाववचनाः तेषाम् = भाववचनानाम् । इस प्रकार भाव है कर्ता है जिनका ऐसी धातुओं की प्रतीति होती है । ऐसी धातुयें यदि रोग अर्थ वाली हैं तो इनके कर्म की शेषत्वेन विवक्षा में षष्ठी होती है । उदा०—रोगः चौरस्य रुजति । यहाँ 'रोग' शब्द रुज धातु से भाव प्रत्यय करके बनता है । इसका अर्थ कर्ता है और रुजति = पीड़ित करता है इसका कर्म है - चौर, इससे षष्ठी होती है ।

सिद्धान्तकौमुदीकार के अनुसार इससे विहित षष्ठी वाले का समास नहीं होता है । अतः चौरस्य रोगस्य रुजा यह उदाहरण है—रोग कर्तृका, चौर सम्बन्धिनी सन्तापादि पीड़ा यह अर्थ होता है ॥ ५४ ॥

नाधृ नाथृ ये दो-दो धातुयें याच्ञा, उपताप ऐश्वर्य और आशीर्वाद अर्थों में पढ़ी गयी हैं । इनमें आशीः क्रिया वाली धातु के कर्म कारक में शेषत्वेन विवक्षा होने पर षष्ठी विभक्ति होती है । उदाहरण—सर्पिषो नाथते [ मुझे घी हो जाय, यह कहता है ] मधुनो नाथते [ मेरे पास मधु हो जाय—यह कहता है, आशीर्वाद देता है । ]

आशीर्वाद में—इसका क्या फल है ? माणवकम् उपनाथति, अङ्ग, पुत्रक, अधीष्व । [ ब्रह्मचारी से याचना करता है, प्रिय पुत्र पढ़ो । यहाँ आशीः नहीं, अपितु याचना अर्थ है । अतः कर्म में षष्ठी नहीं होती है ।

**आशिषीति किम् ? माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व ॥**

५१७. जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥ ( ६१७ )

**जासि, निप्रहण, नाट, क्राथ, पिष्–इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति । 'जसु हिंसायाम्' ( धा० पा० १६६९ ) 'जसु ताडने' ( धा० पा० १७१९ ) इति च चुरादौ पठ्यते तस्येदं ग्रहणम्, न दैवादिकस्य–'जसु मोक्षणे' ( धा० पा० १२१२ ) इत्यस्य । चौरस्योज्जासयति । वृषलस्योज्जासयति । 'निप्रहण' इति संघातविगृहीतविपर्यस्तस्य ग्रहणम् । चौरस्य निप्रहन्ति । चौरस्य निहन्ति । चौरस्य प्रहन्ति । चौरस्य प्रणिहन्ति । चौरस्योन्नाटयति । वृषलस्योन्नाटयति । चौरस्योत्क्राथयति । वृषलस्य क्राथयति ।**

न्यासः

**माणवकमुपनाथतीति** । याचत इत्यर्थः ॥ ५५ ॥

**जासिनिप्रग्रहणनाटक्राथपिषां हिंसायाम्** ॥ **न दैवादिकस्येति** । हिंसायामिति वचनात् । अस्य च तत्राप्रवृत्तेः । अत एव हि ण्यन्तस्यैव ग्रहणम् भविष्यति, तत् किमर्थो ण्यन्तस्य निर्देश इति ? कः पुनराह ण्यन्तस्य निर्देश इति ? अत्र ह्वीकारोऽयं धातुनिर्देशार्थः कृतः, 'इक्श्तिपौ धातुनिर्देशे' इति । यद्येवम्, जासीत्याकारः कथं श्रूयते ? उच्यते—आकारमुच्चार्य विकृतनिर्देशः कृतः, विकृतनिर्देशस्तु यत्रास्यैतद्रूपं भवति तत्रैव यथा स्यादिह मा भूद्—दस्युमजीजसदिति । लुङ्, 'णिश्रि' इत्यादिना च्लेश्चङ्, 'णौ चङ्युपधाया ह्रस्वः', 'चङि' इति द्विर्वचनम्, 'सन्वल्लघुनि' इत्यादिना सन्वद्भावः, 'सन्यतः' इतीत्वम्, 'दीर्घो लघोः' इति दीर्घः । नाटक्राथयोरपि विकृतनिर्देशस्यैतदेव प्रयोजनम् । इह मा भूत—दस्युमनीनटदिति, दस्युमचिक्रथदिति । क्रथेर्वृद्धिश्च प्रयोजनम्, एतच्च **निपातानाद् वृद्धिरिति** ब्रुवता **वृत्तिकारेण** दर्शितम् । **निप्रहन्निति** । धातूपसर्ग-निर्देशमात्रमिह तन्त्रम् । न तूपसर्गयोः संघातः, नाप्यानुपूर्वी; तयोरविवक्षितत्वात् । तेन निप्रशब्दयोर्व्यस्त-समस्तयोर्विपरीतानुपूर्वीकयोश्च ग्रहणं विज्ञायत इत्याह—**संघातविगृहीतविपर्यस्तस्य ग्रहणमिति । चौरस्य प्रणिहन्तीति** । 'नेर्गदनद' इत्यादिना णत्वम् । **चौरस्योन्नाटयतीति** । 'नट अवस्पन्दने', चुरादिणिच् । **चौरस्योत्क्राथयतीति** पूर्ववण्णिच् । ननु च णिचि कृते 'अत उपधायाः' इति वृद्धिः सिद्धा, तत्किमर्थमुच्यते—

पदमञ्जरी

नियमार्थम्—आशिष्येव नाथ इति, तेन प्रत्युदाहरणे परस्मैपदम् ॥ ५५ ॥

**जासिनिप्रहणनाटक्राथपिषां हिंसायाम्** ॥ **न दैवादिकस्येति** । 'जासि' इति निर्देशाद् 'हिंसायाम्' इति वचनाच्च निप्राभ्यां यथासंभवमुपसृष्टो हनो निप्रहणः, 'हन्तेरत्पूर्वस्य' इति णत्वम् । **प्रणिहन्तीति** । 'नेर्गद'

भावबोधिनी

सिद्धान्तकौमुदीकार के अनुसार यह षष्ठी भी समास रोकने के लिये है । अतः 'सर्पिषो नाथनम्' 'मधुनो नाथनम्' ये उदाहरण हैं । ] ॥ ५५ ॥

जासि, निप्रहण, नाट, क्राथ और पिष्—इन हिंसा क्रिया रूपी अर्थवाली धातुओं के कर्म कारक में षष्ठी विभक्ति होती है । 'हिंसा में जसु धातु है' ऐसा चुरादिगण में पठित है, उसी का इसमें ग्रहण है, 'मोक्षण अर्थ में जसु धातु है' इस दिवादिगणीय का ग्रहण नहीं है । उदा०—चौरस्य उज्जासयति [ चोर को मारता है । ] वृषलस्य उज्जासयति [ शूद्र को मारता है । ] 'निप्रहण' इस समुदाय का, विगृहित = अलग-अलग का भी ग्रहण होता है । उदा०—चौरस्य निप्रहन्ति, चौरस्य निहन्ति, चौरस्य प्रहन्ति, चौरस्य प्रणिहन्ति [ सभी का एक ही भावार्थ है—चोर को मारता है । ] चौरस्य उन्नाटयति । [ चोर को नष्ट करता है । ] वृषलस्य उन्नाटयति । [ शूद्र को नष्ट करता है । ] चौरस्य उत्क्राथयति । चोर को मारता है । ] वृषलस्य क्राथयन्ति । [ शूद्र को मारता है । ] इसमें निपातनाद् उपधा वृद्धि होती है । क्योंकि

**निपातनाद् वृद्धिः। अयं हि घटादौ पठ्यते–'श्रथ क्नथ क्रथ क्लथ हिंसार्थाः' ( धा० पा० ७९९-८०२ ) इति, तत्र 'घटादयो मितः' ( धा० पा० ७६३-८२२ ) इति मित्संज्ञायाम् 'मितां ह्रस्वः' ( ६.४.९२ ) इति ह्रस्वत्वं स्यात्। चौरस्य पिनष्टि। वृषलस्य पिनष्टि।**

**हिंसायामिति किम्? धानाः पिनष्टि। शेष इत्येव–चौरमुज्जासयति। एषामिति किम्? चौरं हिनस्ति। निप्रहण इति किम्? चौरं विहन्ति॥**

## ५१८. व्यवहृपणोः समर्थयोः॥ ५७॥ ( ६१८ )

**व्यवहृ, पण–इत्येतयोः समर्थयोः = समानार्थयोः कर्मणि कारके षष्ठीविभक्तिर्भवति। द्यूते क्रयविक्रय-व्यवहारे च समानार्थत्वमनयोः। शतस्य व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। आयप्रत्ययः कस्मान्न भवति? स्तुत्यर्थस्य पणतेरायप्रत्यय इष्यते।**

### न्यासः

निपातनाद् वृद्धिरिति? 'अत आह--**अयं हीत्यादि। ह्रस्वत्वं स्यादिति।** 'मितां ह्रस्वः' इत्यनेन। **चौरस्य पिनष्टीति।** 'पिष्लृ सञ्चूर्णने' रुधादित्वाच् श्नम्। **धानाः पिनष्टीति।** अत्र हिंसा नास्ति; तस्याः प्राणिधर्मत्वात्। इदञ्चाभावकर्तृकाणामपि यथा स्यादित्येवमर्थमारब्धम्--चौरस्योज्जासयति देवदत्तः॥ ५६॥

**व्यवहृपणोः समर्थयोः॥ शतस्य व्यवहरतीति।** शतं क्रयविक्रयेण विनियुङ्क्ते, दीव्यतीति वेत्यर्थः। **शतस्य पणते** इत्यत्रापि स एवार्थः। अनुदात्तेत्त्वादात्मनेपदम्। **आयप्रत्ययः कस्मान्न भवतीति।** 'गुपूधूप' इत्यादिना प्राप्नोतीति भावः। **स्तुत्यर्थस्येत्यादि।** यद्यपि 'पण

### पदमञ्जरी

इत्यादिना णत्वम्। 'नट अवस्यन्दने' चुरादिः, 'नट नृत्तौ' इत्यस्य तु घटादिपठितस्याग्रहणम्, विकृतनिर्देशात्। **निपातनाद् वृद्धिरिति।** घटादिपाठस्तु 'घटादयः षितः' इत्यातिदेशिकोऽङ् यथा स्यात्, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति दीर्घश्च यथा स्यादित्येवमर्थः॥ ५६॥

**व्यवहृपणोः समर्थयोः॥ समर्थयोरिति।** संशब्दो वृत्तौ समानार्थः, समशब्दस्य वा निपातनात्पररूपमिति भावः। संबद्धार्थयोरिति तु न विज्ञायते, व्याख्यानात्। संभवति हि व्यवहृपणोर्हेतुहेतुमद्भावः संबन्धः। **शतस्य**

### भावबोधिनी

धातु घटादि के अन्तर्गत पठित है--'श्रथ, क्नथ, क्रथ, क्लथ--हिंसार्थाः।' इसमें 'घटादयो मितः' ( गण सूत्र ) से मित् संज्ञा होती है और 'मितां ह्रस्वः' (पा० सू० ६।४।९२) से ह्रस्व होना चाहिये। चौरस्य पिनष्टि। [ शूद्र को पीसता है। ]

हिंसा अर्थ में—इसका क्या लाभ है? धानाः पिनष्टि। [ अन्न पीसता है। यहाँ सूखा अनाज पीसने से हिंसा अर्थ नहीं है। अतः षष्ठी न होकर द्वितीया ही होती है। ] 'शेष' अर्थ की विवक्षा में—इतना ही है—चौरम् उज्जासयति [ चोर को मारता है। यहाँ कर्मत्वेन ही विवक्षा है अतः द्वितीया ही होती है। ] इन्हीं धातुओं के कर्म में—इसका क्या फल है? चौरं हिनस्ति [ चोर को मारता है। यहाँ सूत्र में पठित कोई 'धातु नहीं' है। ] निप्रहण—इसका क्या फल है? चौरं विहन्ति [ यहाँ 'नि' 'प्र' के साथ हन् नहीं है। अतः षष्ठी नहीं होती है। ]॥ ५६॥

'व्यवहृ' और 'पण्' इन समर्थ = समानार्थक धातुओं के कर्म कारक में षष्ठी होती है। द्यूतक्रीडा और क्रयविक्रय-व्यवहार [ खरीदना बेचना ] इन अर्थों में इन दोनों की समानार्थता है। उदा०—शतस्य व्यवहरति। [ सौ रुपयों का जुआ खेलता है, या खरीद बिक्री करता है। ] सहस्रस्य व्यवहरति [ हजार रुपयों का जुआ खेलता है, या खरीद बिक्री करता है। ] शतस्य पणते, सहस्रस्य पणते [ सौ रुपये जुआ खेलता है या खरीद बिक्री करता है। ] यहाँ पण धातु से

**समर्थयोरिति किम् ? शलाकां व्यवहरति । गणयतीत्यर्थः । ब्राह्मणान् पणायते । स्तौतीत्यर्थः । शेष इत्येव-शतं पणते ।**

## ५१९. दिवस्तदर्थस्य ॥ ५८ ॥ ( ६१९ )

**व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति । शतस्य दीव्यति । सहस्रस्य दीव्यति । तदर्थस्येति किम् ? ब्राह्मणं दीव्यति । योगविभाग उत्तरार्थः ।**

## ५२०. विभाषोपसर्गे ॥ ५९ ॥ ( ६२० )

**'दिवस्तदर्थस्य' ( २.३.५८ ) इति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते । उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति । शतस्य प्रतिदीव्यति । सहस्रस्य प्रतिदीव्यति । शतं प्रतिदीव्यति । सहस्रं प्रतिदीव्यति।**

**उपसर्गस्येति किम् ? शतस्य दीव्यति । तदर्थस्येत्येव—शलाकां प्रतिदीव्यति ।**

**न्यासः**

व्यवहारे स्तुतौ च' इति स्तुतिव्यवहारयोः पणिः पठ्यते, तथापि स्तुत्यर्थस्यैव पणतेरायप्रत्यय इष्यते, न व्यवहारार्थस्य। तत्र **वृत्तिकारः** स्वयमेव युक्तिं वक्ष्यति। स्तुत्यर्थेन पणिना साहचर्य्यात् तदर्थ एव पणिरायमुत्पादयति, न व्यवहारार्थ इति । **शलाकां व्यवहरतीति** । परिगणयतीत्यर्थः । अत्र व्यवहारार्थे पणिर्न वर्त्तत इत्यसमानार्थत्वम् । **ब्राह्मणान् पणायतीति** । स्तौतीत्यर्थः । पणयतीत्यस्यार्थे व्यवहरतेर्वृत्तिर्नास्तीत्यसमानार्थता ॥ ५७ ॥

**दिवस्तदर्थस्य** ॥ **ब्राह्मणान् दीव्यतीति** । स्तौतीत्यर्थः । 'हलि च' इति दीर्घः । यदि तदर्थस्यैव भविष्यति, पूर्वयोग एव दिवो ग्रहणं कर्त्तुं युक्तं स्यात् । तत् किमर्थो योगविभाग इत्यत आह—**योगविभाग उत्तरार्थः** ॥५८॥

**विभाषोपसर्गे** ॥ **शलाकां प्रति दीव्यतीति** । अर्थान्तरे क्रीडादौ दीव्यतिर्वर्त्तते ॥ ५९ ॥

**पदमञ्जरी**

**व्यवहरतीति** । शतं क्रयविक्रयरूपेण विनियुङ्क्ते, दीव्यति वेत्यर्थः । शलाकां व्यवहरति गणयतीत्यर्थं ॥ ५७ ॥

**दिवस्तदर्थस्य** ॥ अत्र 'शेष' इति नानुवर्त्तते, उत्तरसूत्रद्वयारम्भसामर्थ्यात् । अथ पूर्वसूत्र एव दिविरपि कस्मान्न पठितः, एवं हि तदर्थस्येति न वक्तव्यं भवति ? तत्राह—**योगविभाग इति** ॥ ५८ ॥

**विभाषोपसर्गे** ॥ **शलाकां प्रतिदीव्यतीति** । अत्र विजिगीषादौ दिविर्वर्त्तते, न व्यवहारे ॥ ५९ ॥

**भावबोधिनी**

'आप' प्रत्यय गुपू धूप विच्छिपणिपनिभ्यः आपः' ( पा. सू. ३।१।२८ ) सूत्र से ] क्यों नहीं होता है ? स्तुति अर्थवाली ही पण धातु से 'आप' प्रत्यय इष्ट है ।

समर्थ = समानार्थकों के कर्म में—इसका क्या फल है ? शलाकां व्यवहरन्ति । [ शलाकाओं की ] गणना करते हैं—यह अर्थ है । ब्राह्मणान्—पणायते । ब्राह्मणों को स्तुति करता है, यह अर्थ है । शेषत्वेन विवक्षा में ही षष्ठी, होती है, अन्यथा द्वितीया ही होती है—शतं पणते [ सौ रुपयों का जुआ खेलता है, खरीद बिक्री करता है । यहाँ द्वितीया ही होती है । ] ॥ ५७ ॥

तदर्थक = व्यवहृ तथा पण के समान अर्थवाली दिव् धातु के कर्म में [शेषत्वेन विवक्षा में] षष्ठी होती है । उदा०—शतस्य दीव्यति [ सौ रुपये जुआ खेलता है । ] सहस्रस्य दीव्यति [ हजार रुपये जुआ खेलता है । ]

तदर्थक = व्यवहृ तथा पण के समानार्थक का—इसका क्या फल है ? ब्राह्मणं दीव्यति । [ ब्राह्मण की स्तुति करता है । ] [ इस दिव् का भी पूर्वसूत्र में ग्रहण न करके ] अलग सूत्र बनाना अग्रिम सूत्र में अनुवृत्ति के लिये है ॥५८॥

'दिवस्तदर्थस्य' इस पूर्वोक्त सूत्र से नित्य षष्ठी की प्राप्ति रहने पर उपसर्गविशिष्ट दिव् के कर्म में यह विकल्प कहा जा रहा है । उपसर्ग रहने पर तदर्थक [ व्यवहृपण—इनके समानार्थक ] दिव् धात्वर्थ के कर्म कारक में विकल्प से षष्ठी

## ५२१. द्वितीया ब्राह्मणे ॥ ६० ॥ ( ३३९५ )

**ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति । गांमस्य तदहः सभायां दीव्येयुः ( मै० सं० १.६.११.५६ ) ।**

**अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम् । सोपसर्गस्य तु छन्दसि व्यवस्थितविभाषयापि सिद्ध्यति ।**

## ५२२. प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ ६१ ॥ ( ६२१ )

### न्यासः

**द्वितीया ब्राह्मणे ॥ ब्राह्मण इति ।** ब्राह्मणशब्दः शतपथस्याख्या । **गामस्येति** । शेषषष्ठी । सभायामित्ये-तदपेक्षया । **तदहरिति** । एतदुदाहरणम् । 'स्वमोर्नपुंसकात्' इत्यमो लुक्, अहन्नित्यनुवर्तमाने 'रोऽसुपि' इति नकारस्य रेफः, विसर्जनीयः । **दीव्येयुरिति** लिङ्, झेर्जुस्, 'अतो येयः' इतोयादेशः, 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः । सोपसर्गस्य विभाषया षष्ठ्यां प्राप्तायां नित्यं द्वितीयाविधानार्थं वचनं कस्मान्न भवतीत्याह— **सोपसर्गस्येति** । 'विभाषोपसर्गे' इत्यनेन व्यवस्थितविभाषयापि च्छन्दसि नित्यं द्वितीया भविष्यतीति तदर्थंकमिदं वचनं नोपपद्यते ॥ ६० ॥

**प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ॥ इष्यतेर्दैवादिकस्येति ।** 'इष गतौ' इत्यस्य श्यना निर्देश इष्यन्तराणां निवृत्त्यर्थः । लोण्मध्यमपुरुषैकवचनेन निर्देशस्तु लकारान्तरस्य पुरुषान्तरस्य वचनान्तरस्य च निवृत्त्यर्थः ।

### पदमञ्जरी

**द्वितीया ब्राह्मणे ॥** मन्त्रव्यतिरेको वेदभागः = ब्राह्मणम् । **गामस्य तदहः सभायामिति ।** गामस्य सभायामित्यन्वयः । तदहरित्येतदुदाहरणम्, 'स्वमोर्नपुंसकात्' इति लुक् - 'अहन्' इति रुत्वम् ।

**अनुपसर्गस्य नित्यं षष्ठ्यां प्राप्तायामिति ।** 'दिवस्तदर्थस्य' इत्यनेन ' अथ सोपसर्गस्यापि पूर्वेण षष्ठ्यामपि प्राप्तायां नित्यद्वितीयार्थं कस्मान्न भवतीत्याह—**सोपसर्गस्येत्यादि** ॥ ६० ॥

**प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ इष्यतेर्दैवादिकस्येति ।** 'इषु गतौ' इत्यस्य श्यना निर्देश इच्छतीषणा-त्योरिच्छाभीक्ष्ण्यार्थयोर्निवृत्त्यर्थः । **तद्विषय एवेति** । लोण्मध्यमैकवचनान्तः । **देवतासंप्रदान इति ।** देवता

### भावबोधिनी

होती है । उदा०—शतस्य प्रतिदीव्यति [ सौ रुपये जुआ खेलता है, क्रय-विक्रय करता है । ] सहस्रस्य प्रतिदीव्यति [ एक हजार रुपये जुआ खेलता है, या क्रय-विक्रय करता है । ] पक्ष में द्वितीया होती है—शतं प्रतिदीव्यति, सहस्रं प्रतिदीव्यति [ सौ रुपये जुआ खेलता है, हजार रुपये जुआ खेलता है । ]

उपसर्ग से युक्त का—इसका क्या फल है ? शतस्य दीव्यति [ सौ रुपये जुआ खेलता है । यहाँ केवल षष्ठी होती है । ] तदर्थक = व्यवहृ, था । इनके समनार्थक का—यही लिया जाता है—शलाकां प्रतिदीव्यति [ शलाका गिनता है, यहाँ नहीं होती है । ] ॥ ५९ ॥

ब्राह्मणभावविषयक प्रयोग में तदर्थक = व्यवहृ तथा पण के समानार्थक दिव् धात्वर्थ के कर्मकारक में द्वितीया होती है । उदा०—गामस्य तदहः सभायां दीव्येयुः । यहाँ 'तदहः' यहाँ द्वितीया होती है ।

उपसर्गरहित के कर्म में षष्ठी को प्राप्ति रहने पर यह द्वितीया की जाती है । उपसर्ग सहित दिव् के कर्म में तो वेद में व्यवस्थित विभाषा मानकर भी द्वितीया सिद्ध हो जाती है ।

**विमर्श**—'मन्त्रब्राह्मणयोर्वेद नामधेयम्' इसके अनुसार वेद को मन्त्रात्मक और ब्राह्मणात्मक कहा गया है । इस सूत्र की प्रवृत्ति ब्राह्मण भाग में है, जहाँ मन्त्रों की व्याख्या की गयी है ॥ ६० ॥

'प्रेष्य' यह दिवादिगण में पठित 'इष गतौ' धातु के लोट्लकार मध्यमपुरुष एकवचन का क्या रूप है, इसके साहचर्य के कारण 'ब्रू' यह धातु भी लोट्लकार मध्यमपुरुष एकवचन वाली का ही ग्रहण होता है । पूर्वोक्त 'प्रेष्य' और

**'प्रेष्य' इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यब्रुवोर्हविषः कर्मणः षष्ठी विभक्तिर्भवति देवतासंप्रदाने सति। 'अग्नये छागस्य हविषो वपाया? मेदसः प्रे३ष्य' (का० श्रौ० सू० ६.६.२६) 'अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि३' (का० श्रौ० सू० ६.६.२०)।**

**प्रेष्यब्रुवोरिति किम्? 'अग्नये छागं हविर्वपां मेदो जुहुधि' (का० श्रौ० सू० ६.६.२३)। हविष इति किम्? 'अग्नये गोमयानि प्रेष्य' (श० ब्रा० १२.५ २ ३) देवतासंप्रदान इति किम्? माणवकाय पुरोडाशं प्रेष्य।**

**❀ हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः ❀ (म० भा० २.३.६१ वा० १) 'इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य३' (का० श्रौ० सू० ६.६.२३)॥**

## न्यासः

**तद्विषय एवेति**। लोण्मध्यमपुरुषैकवचनविषय एव। **अग्नये छागस्येत्यादि**। छागस्य विकारश्छागः। तत्राग्निर्देवता सम्प्रदानम्। छागविकारो वपादि सम्प्रदेयं हविः कर्म। **अनुप्रेष्येति**। 'अतो हेः' इति हेर्लुक्। **अनुब्रूहीति**। 'सेर्ह्यपिच्च' इति हिरादेशः। अदादित्वाच्छपो लुक्। भाषाविषयेऽप्ययं योगः; उत्तरसूत्रे छन्दोग्रहणात्।

**जुहुधीति**। 'हुझल्भ्यो हेर्धिः' इति धिभावः। **अग्नये गोमयानि प्रेष्येति**। ननु च गोमयानि हवींषि भवन्त्येव, तत् कथं प्रत्युदाहरणम्? नैवम्; देवतासम्प्रदानग्रहणादेव सम्बन्धिशब्दत्वाद्धविर्ग्रहणे सिद्धे पुनर्हविर्ग्रहणादभ्यवहार्यस्य हविषो ग्रहणं विज्ञायते। न च गोमयान्यभ्यवहार्याणि भवन्तीति युक्तं प्रत्युदाहरणम्।

**हविषः प्रस्थितस्येत्यादि**। प्रस्थितशब्देन यद्विशिष्यते हविस्तत् प्रस्थितम्। तस्य षष्ठयाः प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'विभाषोपसर्गे' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा। तेन हविषः प्रस्थितस्य न भवति॥ ६१॥

## पदमञ्जरी

संप्रदानं यस्यार्थस्य तत्र वर्तमानयोः कर्मणि कारक इत्यन्वयः। **हविषः** हविर्विशेषवाचिन इत्यर्थः। **प्रे३ष्येति**। 'ब्रूहिप्रेष्य' इत्यादिना प्लुतः। **अग्नये गोमयानि प्रेष्येति**। गोमयं हविष्ट्वेन क्वापि न चोदितम्। **हविषः प्रस्थितस्येति**। प्रस्थितशब्देन यद्विशेष्यते तस्येत्यर्थः। इदं च भाषायामपि भवति; उत्तरत्र छन्दोग्रहणात्॥६१॥

## भावबोधिनी

'ब्रूहि' के हविष्यरूपी कर्म से देवतासम्प्रदान अर्थ में षष्ठी विभक्ति होती है। अर्थात् देवता को देना हो तो उक्त धातुओं के हविः कर्म में षष्ठी होती है। उदा०—अग्नये छागस्य हविषो वपायाः मेदसः प्रेष्य [ यहाँ छाग का वपा मेदा आदि हवि कर्म है, इसमें षष्ठी होती है। ] अग्नये छागस्य हविषो वपायाः मेदसोऽनुब्रूहि। [ यहाँ भी वही कर्म में षष्ठी है।]

प्रेष्य तथा ब्रूहि—इनके ही कर्म में—इसका क्या फल है? अग्नये छागं हविर्वपां मेदो जुहुधि। [ यहाँ 'हु' का प्रयोग है। अतः षष्ठी नहीं होती है। ] हविषः—इसका क्या फल है? अग्नये गोमयानि प्रेष्य [ यहाँ सम्प्रदान में षष्ठी नहीं होती है। ] देवता का सम्प्रदान हो—इसका क्या फल है—माणवकाय पुरोडाशं प्रेष्य। [ माणवक देवता नहीं होता है।]

❀ प्रस्थित शब्द से जिसे विशेषित किया जाय उसका प्रतिषेध करना चाहिये। * इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य। [ यहाँ नहीं होता क्योंकि 'प्रस्थित' विशेषण प्रयुक्त है। ]

**विमर्श**—मैत्रावरुण के प्रति अध्वर्यु सम्प्रेष करता है—"हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद् हविः वपाख्यं मेदोरूपं तद् प्रेष्य। होता यक्षदग्निं छागस्य वपाया मेदसो जुषतां हविर्होतर्यज इति प्रैषेण प्रकामेत्यर्थः।

अग्नये छागस्य हविषो वपायाः मेदसोऽनुब्रूहि। 'हे मित्रावरुण! अग्न्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद् हविः वपाख्यं मेदोरूपं तत्पुरोऽनुवाक्यया प्रकाशमेत्यर्थः।' [ प्रस्तुत सूत्र पर बालमनोरमाव्याख्या। ]॥ ६१॥

## ५२३. चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६२ ॥ ( ३३९६ )

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति बहुलम्। पुरुषमृगश्चन्द्रमसः ( वा० सं० २४.३५ )। पुरुषमृगश्चन्द्रमसे। 'गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। ते वनस्पतिभ्यः (वा० सं० २४.३५)।

बहुलग्रहणं किम्? 'कृष्णो रात्र्यै' ( का० सं० ६८.४० )। 'हिमवते हस्ती (वा० सं० २४.३०)।

★ षष्ठ्यर्थे चतुर्थी वक्तव्या★ ( म० भा० २.३.६२ वा० १ )। या खर्वेण पिबति तस्यै खर्वो जायते। या दतो धावते तस्यै श्यावदन्। या नखानि नि कृन्तते। तस्यै कुनखी। याऽऽङ्क्ते तस्यै काणः। याऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशान् प्रलिखते तस्यं खलतिः (तै० सं० २ ५.१.६)। 'अहल्यायै जारः (श० ब्रा० ३.३.१.१९)॥

## ५२४. यजेश्च करणे ॥ ६३ ॥ ( ३३९७ )

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति। 'घृतस्य यजते' ( श० ब्रा० ४.४.२.४ )। घृतेन यजते। 'सौम्यस्य यजते' (श० ब्रा० ४.४.२.५)। सोमेन यजते॥

### न्यासः

**चतुर्थ्यर्थे बहुलं छन्दसि॥ बहुलग्रहणं किमिति।** विभाषाग्रहणानुवृत्तेरेव सिध्यतीति मन्यमानस्य प्रश्नः। **कृष्णो रात्र्यं, हिमवतो हस्तीति।** अत्र बहुलग्रहणात् सप्तम्यर्थेऽपि चतुर्थी भवति। **वक्तव्येति** व्याख्यातव्येत्यर्थः। तत्रेदं प्रतिपादनम्—बहुलग्रहणमिह क्रियते। तेन क्वचित् षष्ठ्यर्थेऽपि चतुर्थी भवति। क्वचिदन्यदेवेत्येषोऽपि बहुलग्रहणस्यार्थोऽभिमत एव॥ ६२॥

**यजेश्च करणे॥ घृतस्य यजत इति।** यजिरत्र देवपूजायां वर्त्तते, तत्र च घृतस्य करणभावः॥ ६३॥

### पदमञ्जरी

**चतुर्थ्यर्थे बहुलं छन्दसि॥ या खर्वेणेति।** रजस्वलायाः खर्वपानादिप्रतिषेधार्थोऽयमर्थवादः। तर्हि वक्तव्यम्—षष्ठ्यर्थे चतुर्थीति? न वक्तव्यम्, योगविभागात्सिद्धम्। चतुर्थ्यर्थ इति नायं समासः, किं तर्हि? चतुर्थी अर्थ इति योगो विभक्तव्यः, षष्ठीत्यनुवर्त्तते-अर्थे षष्ठी भवति, चतुर्थी चेति, तत्र स्वार्थ एव षष्ठी-चतुर्थ्योर्विधानमनर्थकमित्यन्योऽन्यसन्निधानादन्योऽन्यार्थे विभक्तिद्वयं विज्ञायते॥ ६२॥६३॥

### भावबोधिनी

वेद विषय में चतुर्थी के अर्थ में बहुलरूप से षष्ठी होती है। उदा०—पुरुषमृगश्चन्द्रमसः, पुरुषमृगश्चन्द्रमसे। [यहाँ षष्ठी और चतुर्थी दोनों होती हैं] गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्, ते वनस्पतिभ्यः [ यहाँ भी दोनों विभक्तियाँ हैं।]

बहुल का ग्रहण किसलिये है? कृष्णो राज्यै, हिमवतो हस्ती [इनमें कहीं केवल चतुर्थी और कहीं केवल षष्ठी ही है।]

★ षष्ठी के अर्थ में चतुर्थी कहनी चाहिये।★ उदा०—या खर्वेण पिबति तस्यै खर्वो जायते। [ तस्यै यह तस्या के अर्थ में है। ] या दतो धावति तस्यै श्यावदन्। [ तस्यै = तस्याः ] या नखानि कृन्तति तस्यै कुनखः। [तस्यै = तस्याः] याऽङ्क्ते तस्यै काणः। [ तस्यै = तस्याः ] याऽभ्यङ्क्ते तस्यै दुश्चर्मा। [ तस्यै = तस्याः ] या केशान् प्रलिखति तस्यै खलतिः। [ तस्यै = तस्याः। ] अहल्यायै जारः। [ अहल्यायै = अहिल्यायाः ]।

विमर्श—'बहुल' ग्रहण के कारण जैसे चतुर्थी के अर्थ में कहीं-कहीं षष्ठी होती है, वैसे ही षष्ठी के अर्थ में चतुर्थी भी होती है॥ ६२॥

यज धातु के करण कारक में वेदविषय में बहुलरूप से षष्ठी विभक्ति होती है, अर्थात् दोनों विभक्तियाँ होती हैं। उदा०—घृतस्य यजते, घृतेन यजते। [ घी से याग करता है। ] सोमस्य यजते, सोमेन यजते [ सोमरस से याग करता है ]॥ ६३॥

## ५२५. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥ ६४ ॥ ( ६२२ )

'छन्दसि बहुलम्' इति निवृत्तम् । कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति । पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नोऽधीते ।

कृत्वोऽर्थग्रहणं कम् ? अह्नि शेते । रात्रौ शेते । प्रयोगग्रहणं किम् ? अहनि भुक्तम् । गम्यते हि द्विस्त्रिश्चतुर्वेति, न त्वप्रयुज्यमाने भवति । कालग्रहणं किम् ? द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरण इति किम् । द्विरह्नो भुङ्क्ते । शेष इत्येव-द्विरहन्यधीते ॥

### न्यासः

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥ पञ्चकृत्व इति ।** 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' । **द्विरह्न इति ।** 'द्वित्रिचतुर्भ्यः सुच्' ।

**गम्यते हि द्विस्त्रिश्चतुर्वेति ।** प्रकरणादेरिति भावः । ननु च बहिरङ्गः प्रकरणाद्यर्थं इति पञ्चकृत्व इत्यन्यत्र च वचनस्य चरितार्थत्वादिह न भविष्यति ? एवं तर्ह्येतज् ज्ञापयति—प्रकरणाद्यर्थोऽपि विभक्तोनां निमित्तमिति । तेन 'वृद्धो यूना' इति 'सहयुक्तेऽप्रधाने' इति सहार्थे गम्यमाने तृतोया भवतोति ॥ ६४ ॥

### पदमञ्जरी

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥** कृत्वसुचोऽर्थो लक्ष्यते, कृत्वोऽर्थो येषां ते कृत्वोऽर्थाः । **पञ्चकृत्व इति ।** 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' । **द्विरिति ।** 'द्वित्रिचतुर्भ्यः सुच्' अर्थग्रहणमेतदर्थम् ॥ ६४ ॥

### भावबोधिनी

'छन्दसि बहुलम्' [ वेद में बहुलरूप से होता है । ] इसकी निवृत्ति हो गयी । कृत्वसुच् अर्थवाले प्रत्ययों [प्रत्ययान्त] शब्दों के प्रयोग में कालरूप अधिकरण में षष्ठी विभक्ति होती है । उदा०—पञ्चकृत्वः अह्नः भुङ्क्ते । [ दिन में पाँच बार खाता है ।] द्विः अह्नः अधीते [ दिन में दो बार पढ़ता है ।]

कृत्वसुच् अर्थ वाले प्रत्ययान्त के प्रयोग में इसका क्या फल है ? अह्नि शेते [दिन में सोता है ।] रात्रौ शेते [ रात में सोता है । यहाँ कृत्वोऽर्थक नहीं है । ] प्रयोग रहने पर—इसका क्या फल है ? अहनि भुक्तम् [ दिन में खाया । ] यहाँ दो बार, तीन बार या चार बार यह प्रतीति हो जाती है । अप्रयोग में नहीं होती है । कालग्रहण का क्या फल है ? द्विः कांस्यपात्र्यां भुङ्क्ते [कांसे के पात्र में दो बार खाता है । यहाँ कांसपात्री द्रव्यवाची है, कालवाची नहीं है ।] अधिकरण कारक में—यह किस लिये है ? द्विः अह्नः भुङ्क्ते । [ दिन में दो बार खाता है । यहाँ सम्बन्ध अर्थ में षष्ठी है, अधिकरण में प्रस्तुत सूत्र से नहीं । वास्तव में यहाँ षष्ठ्यन्त का प्रयोग न करके अन्य किसी अर्थवाली विभक्ति का प्रयोग करना ठीक होता, क्योंकि यह षष्ठी का प्रत्युदाहरण है, और षष्ठी ही प्रयुक्त है । अतः यह चिन्तनीय है । ] शेष अर्थ में ही होती है—द्विः अहनि अधीते । [ यहाँ अधिकरण में सप्तमी ही होती है । ]

**विमर्श**—'संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्'' ( पा. सू. ५।४।१७ ) सूत्र से किसी क्रिया की अभ्यावृत्ति की गणना के अर्थ में कृत्वसुच् प्रत्यय होता है । इसी सन्दर्भ में 'द्वित्रिचतुर्भ्यः सुच्'' ( पा. सू. ५।४।१८ ) सूत्र से पूर्वोक्त अर्थ में सुच् प्रत्यय भी होता है । दोनों का ग्रहण करने के लिये ही 'कृत्वोऽर्थप्रयोगे' यह उल्लेख है । दिन में दो-बार चार-बार पढ़ता है—आदि अर्थों में दिन अधिकरण है, उससे सप्तमी प्राप्त है, उसमें षष्ठी करने के लिये यह सूत्र है ॥ ६४ ॥

## ५२६. कर्तृकर्मणोः कृति ।। ६५ ।। ( ६२३ )

**कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति । भवतः शायिका । भवत आसिका । कर्मणि– अपां स्रष्टा । 'पुरां भेत्ता' ( ऋ० ८.१७.१४ ) । 'वज्रस्य भर्त्ता' ( तै० सं० १.४.२८.१ ) ।**

### न्यासः

**कर्तृकर्मणोः कृति ।। आसिकेति ।** भावे 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' । **स्रष्टेति ।** सृजेस्तृच् । 'सृजिदृशोर्झल्यमकिति' इत्यम्, व्रश्चादिना षत्वम् ।

**तद्धितप्रयोगे मा भूदिति ।** अथ तिङ्प्रयोगे मा भूदित्येवमर्थमपि कृद्ग्रहणं कस्मान्न भवति ? तत्र 'न लोकाव्ययनिष्ठा' इत्यनेन षष्ठीप्रतिषेधात् । **कृतपूर्वी कटमिति ।** 'पूर्वादिनिः' इत्यत्र इनिरित्यनुवर्तमाने 'सपूर्वाच्च' इतीनिप्रत्ययः । अत्र कर्त्ता तद्धितेनैवोक्त इत्यत्र षष्ठ्याः प्रसङ्गो नास्ति, कर्म तु तेनानभिहितमित्यसति कृद्ग्रहणे कटादेः कर्मणः षष्ठी स्यात् । ननु चात्र वाक्यमेवैतन्नोपपद्यते, तथा हि—कर्मणो निष्ठयाऽभिहितत्वाद् द्वितीययाऽत्र न भवितव्यम्, नापि तद्धितेन, असामर्थ्यात् । तत् पुनरसामर्थ्यं सापेक्षत्वात् । तथा हि—कृतः कटः पूर्वमनेनेति कृतशब्दः कटमपेक्षते, नैवम्; धातोरुत्पद्यमाना निष्ठा कथं कटशब्दस्य कर्मताम-

### पदमञ्जरी

**कर्तृकर्मणोः कृति । इह क्रियायाः साधनं भवतीति ।** कर्तृकर्मभ्यां क्रिया सन्निधाप्यते, धातुरेव क्रियावाची, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च । तत्र तिङ्प्रयोगे 'न लोकाव्यय' इति लप्रतिषेधेन भाव्यम् । स चावश्यं लप्रतिषेधः कर्त्तव्यः, ये कृतो लादेशास्तदर्थम्–ओदनं पचन्, ओदनं पचमानः, 'पपिः सोमं ददिर्गाः' (ऋ० ६.२३.४) । इति, इह तु नार्थः कृद्ग्रहणेनेति मत्वा पृच्छति—**कृतीति किमिति । कृतपूर्वी कटमिति ।** ननु कृतः कटः पूर्वमनेनेत्यस्मिन्विग्रहे क्तस्य कर्मणि विधानात्तेनैव कर्मणोऽभिहितत्वान्नैव द्वितीयया भाव्यम्, एवं च तदपवादः षष्ठ्यपि न प्राप्नोति; इहाप्यनभिहिताधिकारात्, कृतशब्दस्य च कटापेक्षस्य समासो दुर्लभः, एतेन तद्धितो व्याख्यातः, तस्मादयमसाधुरेव प्रयोगः ? सत्यम्, विशेषविवक्षायां नैव समासतद्धितौ भवतः, यदा तु कृतं पूर्वमनेनेति कर्मसामान्ये भावे वा क्त उत्पद्यते तदा सापेक्षत्वाभावात्समासः, केन ? 'सुप्सुपा' इति, ततः 'पूर्वादिनिः', 'सपूर्वाच्च' इतीनिः प्रत्ययः । न च कटस्य क्तेनाभिधानं करोतेरुत्पद्यमानः क्तप्रत्ययः कर्मसामान्यमेवाह, विशेषकर्मसंबन्धात्तु तस्याभिधानम्, न चात्र तद्धितेनैकार्थीभूतस्य निष्कृष्य कटेन संबन्धः सम्भवति, क्रियया तु गुणभूतया कारकाणां सम्बन्धो भवति, यथा—कटं कृतवानिति । कृतपूर्वीशब्दश्चायं पूर्वं कृतमनेनेत्यस्मिन्नर्थे व्युत्पादितः पूर्वं कृतवानित्यनेन समानार्थः संपद्यते, तत्र करोतिक्रियापेक्षमस्ति कटस्य कर्मत्वम्, तनभिहितं च तदिति कृद्ग्रहणे षष्ठी स्याद् । यत्र च निष्ठान्तेन शब्देन कर्तृकर्मणोः संबन्धस्तत्रैव निष्ठाश्रयः

### भावबोधिनी

कृत् प्रत्ययान्त के प्रयोग में कर्ता और कर्म में षष्ठी विभक्ति होती है । उदा०—भवतः शायिका [ आपका सोना । यहाँ शायिका में भाव अर्थ में ण्वुच् कृत् प्रत्यय है । अतः भवत् में कर्ता में षष्ठी है । ] भवत् आसिका [ आपका बैठना । यहाँ आस् से ण्वुच् प्रत्यय है । कर्ता में षष्ठी है । ] कर्म में षष्ठी के उदा०—अपां स्रष्टा । [ जल के सृष्टि कर्ता सृज् से तृच् कृत् प्रत्यय है । कर्म में षष्ठी है । ] पुरां भेत्ता [ नगरों का भेदन करने वाला । पुर से षष्ठी बहुवचन है ।] वज्रस्य भर्ता [ वज्र का रखनेवाला । वज्र कर्म में षष्ठी है । ]

**कर्तृकर्मणोरिति किम्? शस्त्रेण भेत्ता। कृतीति किम्? तद्धितप्रयोगे मा भूत्—कृतपूर्वी कटम्। भुक्तपूर्व्योदनम् (म० भा०)।**

**न्यासः**

भिदध्यात्। तस्या हि कर्मसामान्यमेवाभिधातुं सामर्थ्यम्, न कर्मविशेषम्। वाक्ये तर्हि कथं तया कटशब्दस्य कर्मत्वमभिधीयते? तत्र युक्तमभिधानम्; कृत इत्यनेन सामानाधिकरण्यात्। तद्धिते तूत्पन्न एकार्थीभावात्सामानाधिकरण्यं निवृत्तमिति केन कटादेः कर्मभावोऽभिधीयते? क्रिया तु प्रकृत्यर्थत्वाद् यथा वाक्ये गुणीभूता साधनसम्बन्धमनुभवति, तथा वृत्तावपीति करोत्यर्थापेक्षं कटशब्दस्य कर्मत्वमुपपद्यते। तस्माद् भवितव्यमेव द्वितीयया।

किञ्च—वृत्तिसमानार्थेन वाक्येन भवितव्यम्। न च वृत्तौ बाह्यं कटादिकं कर्म गम्यते येन प्रत्ययमुत्पादयिष्यते। वाक्ये कटादिकर्मापेक्षा निष्प्रयोजनेति गम्यते। तस्मादेवं विग्रहः कर्त्तव्यः—कृतं पूर्वमनेनेति। ततश्च नास्ति सापेक्षत्वमिति भवत्येव तद्धितः।

**पदमञ्जरी**

प्रतिषेधः, यथा—कटं कृतवान्, कृतः कटो देवदत्तेनेति, इह तु कृतस्य कटेन संबन्धो न भवतीत्युक्तमेव। अथ तु वस्तुतो निष्ठान्ते पदे धातुवाच्यक्रियापेक्षे ये कर्तृकर्मणी तयोः प्रतिषेधः, तथा सति नेदं कृद्ग्रहणस्य प्रयोजनम्, तेनैतदपि निरस्तम्।

असति कृद्ग्रहणे, कटं कारयति पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति णिच्प्रकृतेः पचेरर्थं प्रति कर्तृकर्मणोः षष्ठीप्रसङ्गः। सति तु कृद्ग्रहणे, णिचोऽकृत्वान्न भवतीति कथमिव निरस्तम् 'न लोक' इत्यत्र नैवं ज्ञायते—लप्रकृतिभूतस्य धातोर्ये कर्तृकर्मणी इति, किं तर्हि? लान्ते पदे या क्रियोच्यते प्राधान्येन गुणभावेन वा, तत्र ये कर्तृकर्मणी तयोः षष्ठी न भवतीति तेनेदमप्यप्रयोजनम्।

अथ स्याद्–'न लोकाव्यय' इत्यत्राव्ययविशेषणार्थं कृद्ग्रहणम्, तेनोच्चैः कटानां स्प्रष्टेत्यत्राकृतोऽप्यव्ययस्य प्रयोगे निषेधाभाव इति, तदपि न; अव्ययेन कर्तृकर्मणी विशेषयिष्यामः—अव्ययस्य ये कर्तृकर्मणी तयोः षष्ठी नेति, न चाकृत उच्चैसः कर्तृकर्मणी सम्भवतः। इह तर्हि करोतीति कृदिति कृच्छब्देन कर्त्तोच्यते, तत्र कर्तृकर्मणोरित्येव षष्ठ्यामपि सिद्धायां पुनर्विधानं गुणभूतेऽपि कर्त्तरि यथा स्यात्—भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति, भिदेर्ण्यन्तात्पर्यायादिना ण्वुच्, अत्र ण्यर्थस्य प्राधान्यात्प्रयोजककर्त्ता प्रधानम्, प्रयोज्यकर्त्ता तु प्रकृत्यर्थस्य गुणभावाद्गुणभूत इति प्रधानेतरसन्निधौ प्रधानादेव स्यात्, कृद्ग्रहणादप्रधानादपि भवति, एतदपि नास्ति प्रयोजनम्; तृतीयावत् सिद्धम्, तद्यथा—पाचित ओदनो देवदत्तेन यज्ञदत्तेनेत्यादौ प्रधानाप्रधानयोर्द्वयोरपि कर्त्रोस्तृतीया भवति, तत्कस्य हेतोः? एकशब्दवाच्यत्वाभावेन विरोधाभावात् तथा षष्ठ्यपि भविष्यति।

इह तर्हि प्रयोजनम्, 'उभयप्राप्तौ कर्मणि' इति बहुव्रीहिर्यथा स्याद्, अन्यथान्यपदार्थस्यानुपात्तत्वात्तत्पुरुषः स्यात्तत्र चानिष्टं वक्ष्यते। यद्येवम्, उत्तरत्रैव कृद्ग्रहणम् कर्त्तव्यम्, अथ वा—अनुपात्तेऽप्यन्यपदार्थे व्याख्यानाद् बहुव्रीहिर्भविष्यति, यथा—'एकाचो द्वे प्रथमस्य' इति तदेतत्कृद्ग्रहणं चिन्त्यप्रयोजनम्।

**भावबोधिनी**

कर्ता और कर्म में—इसका क्या फल है? शस्त्रेण भेत्ता [ शस्त्र से भेदन करने वाला, यहाँ करण है। अतः षष्ठी नहीं होती है। ] कृत् प्रत्ययान्त के प्रयोग में—इसका क्या फल है? तद्धित प्रत्ययान्त के प्रयोग में न होने लग जाय—कृतपूर्वी कटम् [ पहले चटाई बनाने वाला। ] भुक्तपूर्वी ओदनम् [ पहले चावल खाने वाला। ]

**शेष इति निवृत्तम्, पुनः कर्मग्रहणात्; इतरथा हि कर्तरि च कृति इत्येवं ब्रूयात् ॥**

**न्यासः**

**इतरथा हीति**। यदि शेषग्रहणमनुवर्त्तेत इत्यर्थः। **कर्त्तरि च कृतीत्येवं ब्रूयादिति**। एवमपि ह्युच्यमाने शेष इत्यनुवृत्तौ चकारकरणात् कर्मणीत्येतल्लभ्यत एव, किं कर्मग्रहणेन ? तस्मात् पुनः कर्मग्रहणं शेषाधिकारनिवृत्त्यर्थम्। पुनः कर्मग्रहणेन हि पूर्वस्य कर्मग्रहणस्य निवृत्तिराख्यायते। तन्निवृत्तौ तत्सम्बद्धवृत्तमपि शेषग्रहणं निवर्त्तते ॥ ६५ ॥

**पदमञ्जरी**

केचिदाहुः—इहैव तद्धितनिवृत्त्यर्थं कृद्ग्रहणमिति प्रजानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः 'प्रज्ञादिभ्यश्च' इति स्वार्थिकेऽणि कृते व्याकरणं प्राज्ञ इत्यत्र षष्ठी न भवति। ननु क्रियमाणेऽपि कृद्ग्रहणे कस्मादेवात्र न भवति, यावता भवत्येव कृतोऽत्र प्रयोगः, न ह्यत्रैतच्छक्यं वक्तुम्—प्रत्ययार्थेनैकार्थीभूतस्य कृदन्तस्य निष्कृष्य व्याकरणेन सम्बन्धो न सम्भवतीति प्रत्ययस्य स्वार्थिकत्वेनार्थान्तराभावात् ? नैष दोषः, कृद्ग्रहणसामर्थ्यात्कृदन्तेनैव योगे षष्ठी विज्ञास्यते, इह तु कृता तद्धितेन चैकरूपः सम्बन्ध इति न भविष्यतीत्यलमतिक्षोदेन।

**शेष इति निवृत्तमिति**। तेनाप्राप्ता षष्ठी विधीयत इत्यस्याः समासो भवतीति कृद्योगा च षष्ठ समस्यत इति न वक्तव्यं भवति ॥ ६५ ॥

**भावबोधिनी**

शेषे--इसकी निवृत्ति हो जाती है क्योंकि पुनः कर्म का ग्रहण किया गया है। अन्यथा 'कर्तरि च कृति' इतना ही सूत्र बनाया होता।

**विमर्श**—इस सूत्र में 'कृति' इसके ग्रहण की क्या आवश्यकता है—यह एक विचारणीय प्रश्न है ? अभिप्राय यह है कि धातु से दो प्रकार के ही प्रत्यय होते हैं—(१) तिङ् और (२) कृत्। यह कृत्ग्रहण तिङ्ग्रहण तिङ् की व्यावृत्ति के लिये नहीं माना जा सकता क्योंकि आगे 'न लोकाव्यय निष्ठाखलर्थ तृ नाम्' ( पा. सू. २।३।६९ ) से ल = तिङ् के योग में षष्ठी का निषेध किया गया है। तद्धित की व्यावृत्ति के लिये भी मानना ठीक नहीं है क्योंकि 'शतेन क्रीतः शत्यः अश्वः आदि में 'तेन क्रीतम् के अन्तर्गत विहित 'यत्' प्रत्यय से कर्म का अभिधान हो चुका है। 'देवदत्तं हिरुक्' आदि अव्यय के योग में भी षष्ठी करना सम्भव नहीं है, क्योंकि "न लोकाव्यय०" सूत्र से निषेध हो जाता है।

उपर्युक्त विवेचन से यह सिद्ध हो जाता है कि केवल 'कृत्' प्रत्ययान्त के प्रयोग में ही षष्ठी की प्राप्ति है। अतः इस 'कृति' के ग्रहण की कोई आवश्यकता नहीं है ?

समाधान यह है कि तद्धित प्रत्यय के साथ भी यदि कृत् प्रत्यय रहे तो भी षष्ठी नहीं होती है। जैसे—कृतपूर्वी, कटम्। कटः पूर्वं कृतः अनेन—इस विग्रह में पूर्वादिनिः' ( पा० सू० ५।२।८६ ) 'सपूर्वाच्च' ( पा० सू० ५।२।८७ ) से इनि प्रत्यय होता है यह कर्ता अर्थ में तद्धित प्रत्यय है। इसका कर्म है—कटम्। इसमें षष्ठी न हो—इसके लिये तद्धित है।

यहाँ पहले कर्म की अविवक्षा करके भाव अर्थ में क्त प्रत्यय होता है। इसी लिये समास आदि सम्भव होता है। अनन्तर कर्म की विवक्षा में 'कटम्' आदि का योग होता है। यह स्थिति केवल ऐसे ही वृत्ति प्रयोगों के लिये है, सबके लिये नहीं।

कृतपूर्वी कटम्—यहाँ 'क्त' यह कृत् प्रत्यय है, 'इनि' यह तद्धित प्रत्यय है। जहाँ केवल कृत् प्रत्यय रहता है वहीं कर्ता या कर्म में षष्ठी होती है—इसके लिये कृति' इसका ग्रहण है ॥ ६५ ॥

## ६२७. उभयप्राप्तौ कर्मणि ॥ ६६ ॥ ( ६२४ )

**पूर्वेण षष्ठी प्राप्ता नियम्यते । 'उभयप्राप्तौ' इति बहुव्रीहिः—उभयोः प्राप्तिर्यस्मिन्कृति सोऽयमुभयप्राप्तिः । तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि । आश्चर्यो गवां दोहोऽगोपालकेन । रोचते मे ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं यज्ञदत्तेन । बहुव्रीहिविज्ञानादिह नियमो न भवति—आश्चर्यमिदमोदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भाव इति ॥**

**न्यासः**

**उभयप्राप्तौ कर्मणि ॥ उभयप्राप्ताविति बहुव्रीहिरिति** । तेन तत्पुरुषशङ्कां निरस्यति । बहुव्रीहेराश्रयणस्य प्रयोजनं वक्ष्यति । उभयग्रहणेन प्रकृतत्वात् कर्तृकर्मणी सम्बध्येते । **उभयोः प्राप्तिर्यस्मिन् कृतीत्यनेनैकस्मिन्नेवेत्यभिप्रायः** । **कर्मण्येवेति** नियमस्य स्वरूपं दर्शयति ! उभयप्राप्तावेव कर्मणीत्येष तु विपरीतनियमो न भवति । मा भूत् पूर्वसूत्रेण कर्मणि षष्ठीविधानस्य वैयर्थ्यमिति । **आश्चर्यो गवां दोहोऽगोपालकेनेति** । दुहेर्भावे घञ् । तत्रोभयप्राप्तौ कर्मण्येव गोषु षष्ठी भवति, नाऽगोपालके कर्त्तरि । अत्र च 'क्त्वोऽर्थप्रयोगे' इत्यतः प्रयोगग्रहणं नानुवर्त्तते । तेन गम्यमानेऽपि कर्मणि षष्ठी भवति, यथा—'अन्तर्द्धौ येनादर्शनमिच्छति' इत्यत्र ह्यप्रयुज्यमानस्यात्मनः कर्मत्वं गम्यते । **पानमिति** । 'ल्युट् च' इति भावे ल्युट् । इह तु न भवति—आश्चर्यमिदमोदनस्य च पाको ब्राह्मणानाञ्च प्रादुर्भाव इति । न ह्यत्रैकस्मिन् कृत्युभयोः प्राप्तिः । तथा

**पदमञ्जरी**

**उभयप्राप्तौ कर्मणि ॥** उभयशब्देन प्रकृतत्वात्कर्तृकर्मणी सम्बध्येते । **उभयप्राप्ताविति बहुव्रीहिरिति** । न तत्पुरुषः । उभयोः कर्तृकर्मणोः षष्ठीप्राप्तौ सत्यामिति । अत्र प्रयोजनं वक्ष्यति—**कर्मण्येवेति** । विपरीतस्तु नियमो न भवति—उभयप्राप्तावेव कर्मणीति । एवं हि पूर्वसूत्रे कर्मग्रहणमनर्थकं स्याद्, अनेनैव विशिष्टविधानमाश्रयणीयं स्यादिति भावः । **आश्चर्यं इति** । सकर्मकेभ्यो भावे कृति विहिते कर्मणि कर्त्तरि च षष्ठी प्राप्ता नियमेन कर्त्तुरपनीयते । प्राप्तिग्रहणाच्च प्राप्तिमात्रे नियम इति कर्तृकर्मणोः प्रयोगेऽपि कर्त्तरि तृतीया भवति, 'अन्तर्धौ येनादर्शनमिच्छति' इति अत्र ह्यात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः । अत्र च 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति कर्तृकर्मणोरिति प्राप्तिर्नियम्यते, शेषषष्ठी तु कर्तर्यपि भवत्येव । नियमस्य प्रयोजनं पक्षे तृतीयाश्रवणम् । कर्मापि यदा शेषत्वेन विवक्ष्यते तदा तत्रापि शेषषष्ठी भवत्येव ।

**भावबोधिनी**

पूर्व सूत्र से षष्ठी प्राप्त होती है, उसके लिये यह सूत्र नियम करता है । 'उभय प्राप्तौ' यह बहुव्रीहि है—**उभयोः** [ कर्तृकर्मणोः ] प्राप्तिः यस्मिन् कृति अर्थात् कर्ता और कर्म दोनों में षष्ठी की प्राप्ति जिस कृत् प्रत्यय के परे रहते होती है—वह प्रत्यय-'उभयप्राप्तिः' है । ऐसे स्थल पर केवल कर्म में ही षष्ठी होती है, कर्ता में नहीं, [ यही नियम करता है ।] उदा० – आश्चर्यं गवां दोहः अगोपालकेन [ अगोपालक द्वारा गाय का दुहा जाना आश्चर्य है । यहाँ 'दोहः' = दुह् + घञ् कृत् प्रत्ययान्त है । इसका कर्ता 'अगोपालक' है और कर्म 'गो' है । कर्म में ही षष्ठी होती है । ] रोचते मे ओदनस्य भोजनं देवदत्तेन [ देवदत्त द्वारा चावल का भोजन मुझे अच्छा लगता है । यहाँ भोजन = भुज् + ल्युट् कृ प्रत्ययान्त है । देवदत्त कर्ता है । ओदन कर्म है । इसी में षष्ठी होती है । ] साधु खलु पयसः पानं यज्ञदत्तेन [ यज्ञदत्त द्वारा दूध का पीना अच्छा है । ] बहुव्रीहि विज्ञान के कारण यहाँ नहीं होता है—आश्चर्यम् इदम् ओदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भावः । [ यह आश्चर्य है—चावल का पकना और ब्राह्मणों का प्रादुर्भाव । यहाँ 'पाक' के साथ ओदन कर्म का और 'प्रादुर्भाव' के साथ ब्राह्मण कर्ता का योग है । एक ही के साथ कर्ता और कर्म नहीं है । अतः यह सूत्र लागू नहीं होता है । 'कर्तृकर्मणोः कृति' (पा० सू० २।३।६५) से ही कर्ता और कर्म में षष्ठी होती है । ]

का. तृ. ११

**❀ अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम्❀ (म० भा० २.३.६६ वा० २) । भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य कटस्य ॥**

**❀ शेषे विभाषा❀ (म० भा०, वा० ३) । अकाकारयोः स्त्रीप्रत्यययोर्ग्रहणात् तदपेक्षयाशेषः स्त्रीप्रत्यय एव गृह्यते । विचित्रा हि सूत्रस्य कृतिः पाणिनेः, पाणिनिना वा (म० भ०) ॥**

**केचिदविशेषेणैव विभाषामिच्छन्ति—शब्दानामनुशासनमाचार्येण, आचार्यस्येति वा ॥**

**न्यासः**

ह्योदनस्य पाक इत्यत्र कर्मण्येवौदने प्राप्तिः, न तु ब्राह्मणेषु कर्तृषु । न हि पाकस्य कर्तृत्वेन विवक्षिता ब्राह्मणाः, किं तर्हि ? प्रादुर्भावस्य कर्तृत्वेन । ब्राह्मणानां च प्रादुर्भाव इत्यत्रापि प्रादुर्भाव इत्येतस्मिन् कृति कर्तृष्वेव ब्राह्मणेषु प्राप्तिः, न कर्मण्योदने । न हि प्रादुर्भावस्योदनः कर्म; भवतेरकर्मकत्वात् । पाकस्यैव त्वोदनः कर्मत्वेन विवक्षितः ।

**अकाकारयोरित्यादि ।** नियमस्यायं प्रतिषेधः । अकाकारयोः प्रयोगे नियमो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'चतुर्थ्यर्थे बहुलं छन्दसि' इत्यतो बहुलग्रहणमनुवर्त्तते, तेनाकाकारयोः प्रयोगे नियमो न भविष्यतीति ।

**शेषे विभाषेति ।** अस्याप्यर्थो बहुलग्रहणसमाश्रयणेन व्याख्यातव्यः । **भेदिकेति ।** पूर्ववद्भावे ण्वुच् ।

**पदमञ्जरी**

तस्याश्च 'कर्मणि च' इति निषेधाभावात्समासेऽपि भवति । निषेधस्य तु प्रयोजनं कृत्स्वरो मा भूदिति । एतदपि सूचितम्—पूर्वेण षष्ठी प्राप्तौ नियम्यत इति । आश्चर्यमिदमित्येतावदेकं वाक्यम्, किं तदित्याह— **ओदनस्येति ।** अत्र पाके ओदनस्य कर्मत्वम्, प्रादुर्भावे च ब्राह्मणानां कर्तृत्वमित्यनेकत्वात्कृदुभयप्राप्तिर्भवति । **भेदिकेति ।** पर्यायादिषु ण्वुच् । **चिकीर्षेति ।** 'अ प्रत्ययात्' । अत्रोभयत्रापि कर्त्तरितृतीया न भवति । षष्ठी तु शेषविवक्षयापि सिद्ध्यति । समासोऽप्यत्र भवति—धर्मजिज्ञासा देवदत्तस्य, शिष्यस्याचार्यशुश्रूषेति 'शेषे

**भावबोधिनी**

* 'अक और अकार इन स्त्रीप्रत्ययों के प्रयोग में नियम नहीं होता है–' ऐसा कहना चाहिये । * उदा०— भेदिका देवदत्तस्य काष्ठानाम् [ देवदत्त का लकड़ी काटना । यहाँ भेदिका = भिद् = ण्वुच् = अक प्रत्ययान्त स्त्रीप्रत्ययान्त का प्रयोग है । अतः यह नियम लागू न होकर कर्ता और कर्म दोनों में षष्ठी होती है । ] चिकीर्षा देवदत्तस्य कटस्य [ देवदत्त की चटाई बनाने की इच्छा । यहाँ सन्नन्त 'चिकीर्ष' से 'अप्रत्ययात्' ( पा० सू० ३।३।१०२ ) से 'अ' प्रत्यय, स्त्री प्रत्यय होता है । इसमें भी नियम लागू नहीं होता है । कर्ता और कर्म दोनों में षष्ठी होती है । ]

* शेष प्रत्ययों में विकल्प होता है । * अक और अकार इन स्त्रीप्रत्ययों का ग्रहण होने से इनकी अपेक्षा शेष-भिन्न स्त्री प्रत्यय ही लिये जाते हैं, सभी नहीं । उदा०—विचित्रा हि सूत्रस्य कृतिः पाणिनेः, पाणिनिना वा । पाणिनि द्वारा सूत्रों की रचना आश्चर्यजनक है । यहाँ कृतिः = कृ + क्तिन् के साथ कर्ता पाणिनि में विकल्प से षष्ठी होती है । षष्ठी न होने पर अनुक्त कर्ता मानकर तृतीया होती है । ]

कुछ लोग—'शेषे' को सामान्य मानकर सर्वत्र विकल्प चाहते हैं'—शब्दानाम् अनुशासनम् आचार्यस्य आचार्येण वा । [ आचार्य का शब्दों का अनुशासन । यहाँ 'अनुशासन' यह कृत्प्रत्ययान्त नपुंसक लिङ्ग है । इसके साथ भी कर्ता में विकल्प से षष्ठी होती है । पक्ष में अनुक्त कर्ता में तृतीया होती है । ]

**विमर्श**—'कर्तृकर्मणोः कृति' ( पा० सू० २।३।६५ ) यह सामान्यतया कृदन्त के साथ कर्ता और कर्म में षष्ठी का विधान करता है । यह सूत्र तभी प्रवृत्त होता है जब केवल कर्ता या कर्म एक ही हो । यदि किसी कृत्-प्रत्ययान्त के

### ५२८. क्तस्य च वर्तमाने ॥ ६७ ॥ ( ६२५ )

**'न लोकाव्ययनिष्ठा खलर्थतृनाम्' (२.३.६९) इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते। क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः।**

**क्तस्येति किम्? ओदनं पचमानः। वर्तमान इति किम्? ग्रामं गतः।**

**※ नपुंसके भाव उपसंख्यानम्※ ( म० भा० २.३.६७ वा० १ )। छात्रस्य हसितम्। मयूरस्य नृत्तम्। कोकिलस्य व्याहृतम् ( म० भा० )।**

**न्यासः**

**चिकीर्षेति।** 'अ प्रत्ययात्' इत्यकारप्रत्ययः ॥ ६६ ॥

**क्तस्य च वर्त्तमाने ॥ राज्ञां मत इति।** 'मतिबुद्धि' इत्यादिना क्तः। राज्ञामिति कर्त्तरि षष्ठी। कर्म तु निष्ठयाभिहितम्। अथेह कस्मान्न भवति—शीलितो देवदत्तेन, रक्षितो देवदत्तनेत्यादि, शीलितादिष्वपि 'मतिबुद्धिपूजार्थेभ्यश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वाद् वर्तमान एव क्तो विधीयते? यद्यप्येवम्, तथापि बहुलग्रहणानुवृत्तेरिह न भविष्यतीत्यदोषः। अथ वा – प्रकरणादेवात्र वर्तमानकालता गम्यते। पदार्थस्तु भूतत्वमेव प्रतिपादयति, न वर्तमानताम्। यस्य तु पदार्थो वर्तमानस्तत्प्रयोगे भवत्येव षष्ठी, यथा—कान्तो हरिश्चन्द्र इव प्रजानामिति।

**पदमञ्जरी**

विभाषा' इति। तत्र यदा नियमेन कर्त्तरि तृतीया तदा 'कर्मणि च' इति निषेधात्पाणिनिना सूत्रकृतिः, आचार्येण शब्दानुशासनमित्यसाधुः समासः; पाणिनेः सूत्रकृतिः, आचार्यस्य शब्दानुशासनमिति तु साधुः ॥६६॥

**क्तस्य च वर्त्तमाने ॥ राज्ञां मत इति।** 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। **शेषविज्ञानादिति।** उपसंख्यानं प्रत्याचष्टे, सदप्यत्र छात्रस्य कर्तृत्वमविवक्षायां तिरोधीयते, सम्बन्धित्वमात्रमेव तु विवक्षिष्यते,

**भावबोधिनी**

साथ कर्ता और कर्म इन दोनों का प्रयोग रहता है तब क्या दोनों में षष्ठी है अथवा किसी एक में? एक में हो तो क्या कर्ता में या कर्म में? इसके नियमार्थ यह सूत्र है—जहाँ कृत्प्रत्ययान्त के योग मे कर्ता और कर्म दोनों हैं, उनमें केवल कर्म में ही षष्ठी होती है।

कुछ विद्वानों के मत में कर्ता में विकल्प से षष्ठी होती है, कर्म में नित्य, अतः—शब्दानाम् अनुशासनम् आचार्येण अथवा आचार्यस्य—ये दोनों प्रयोग शुद्ध है ॥ ६६ ॥

'न लोकाव्ययनिष्ठाखलर्थतृनाम्' ( पा० सू० २।३।६९ ) इससे षष्ठी का प्रतिषेध प्राप्त रहते पुनः षष्ठी का विधान है। वर्तमानकाल अर्थ में विहित क्त प्रत्यय विशिष्ट के प्रयोग में षष्ठी विभक्ति होती है। उदा०—राज्ञां मतः [ राजाओं का माना हुआ ] राज्ञां बुद्धः [ राजाओं का जाना हुआ ] राज्ञां पूजितः [ राजाओं का पूजा हुआ। ]

'क्त' प्रत्यय के—इसका क्या फल है? ओदनं पचमानः [ यहाँ शानच् प्रत्यय है। ] वर्तमान अर्थ में होनेवाले क्त—इसका क्या फल है? ग्रामं गत.। [ गाँव गया। यहाँ भूत काल है। ]

* नपुंसक लिङ्ग में भाव में 'क्त' प्रत्यय के योग में षष्ठी होती है—ऐसा कहना चाहिये। * छात्रस्य हसितम् [ छात्र का हँसना ]। मयूरस्य नृत्तम् [ मोर का नाचना ]। कोकिलस्य व्याहृतम् [ कोयल का कूहकना। इन सभी में भाव में नपुंसक में क्त प्रत्यय होने से कर्ता में षष्ठी होती है। ] * [ उपर्युक्त उपसंख्यान अनावश्यक है क्योंकि ] शेष अर्थ में षष्ठी करके सिद्ध हो जाता है। * और इस प्रकार कर्ता अर्थ की विवक्षा में तृतीया भी होती है—छात्रेण हसितम्।

**विमर्श**—'न लोकाव्यय निष्ठा०' पा० सू० ३।२।६९ यह निष्ठा सामान्य क्त के प्रयोग में प्राप्त षष्ठी का निषेध करता है। इस सन्दर्भ में प्रस्तुत सूत्र षष्ठी का विधान करता है—'मतिबुद्धिपूजार्थेभ्यश्च' ( पा० सू० ३।२।८८ ) से

※ शेषविज्ञानात् सिद्धम्※ ( म० भा० २.३.६७ वा० २) । तथा च कर्तृविवक्षायां तृतीयापि भवति—छात्त्रेण हसितमिति ॥

**५२९. अधिकरणवाचिनश्च ॥ ६८ ॥ ( ६२६ )**

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३.४.७६) इति वक्ष्यति, तस्य प्रयोगे षष्ठी विभक्तिर्भवति । अयमपि प्रतिषेधापवादो योगः । इदमेषामासितम् । इदमेषां शयितम् । इदमहेः सृप्तम् ( म० भा० ) । इदं वनकपेर्यातम् । इदमेषां भुक्तम् । इदमेषामशितम् ।

द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठीद्वितीयावत् । नेताऽश्वस्य ग्रामस्य चैत्रः ।

न्यासः

**शेषविज्ञानात् सिद्धमिति** । उपसंख्यानं प्रत्याचष्टे—तथा चेत्यादिना । यस्तूपसंख्यानमारभते, तस्य कर्तृत्वविवक्षायामपि षष्ठ्येव भवति, न तृतीयेति दर्शयति ॥ ६७ ॥

**अधिकरणवाचिनश्च ॥ तस्य प्रयोगे षष्ठी विभक्तिर्भवतीति** । यथासम्भवं यत्र कर्तैव सम्भवति तत्र कर्तरि भवति, यथा—इदमेषामासितमिति । अत्रासेरकर्मकत्वात् कर्तैव सम्भवति, न कर्म । यत्र तु कर्म कर्त्तापि सम्भवति । तत्रोभयत्रापि, यथा—इदमेषां भुक्तमोदनस्येति । भुजेः सकर्मकत्वात् कर्माप्यस्त्येवौदनः । 'उभयप्राप्तौ कर्मणि' इति नियमः कस्मान्न भवति ? 'कर्तृकर्मणोः कृति' इत्यस्याः षष्ठ्याः प्राप्तेरेव नियमो

पदमञ्जरी

ततश्च न माषाणामश्नीयादितिवत्सिद्धा षष्ठीत्यर्थः । **तथा चेति** । उपसंख्याने त्वेतन्न सिद्ध्यतीति भावः ॥ ६७ ॥

**अधिकरणवाचिनश्च ॥ तस्य च प्रयोगे षष्ठी विभक्तिर्भवतीति** । यथासम्भवं यत्र कर्तैव सम्भवति तत्र कर्तरि—इदमेषामासितमिति, सकर्मकेभ्यस्त्वधिकरणे क्ते विहिते द्वयोरपि कर्तृकर्मणोरनभिहितत्वाद् द्वयोरपि षष्ठी भवति—इदमेषां भुक्तमोदनस्येति । उभयप्राप्तौ कर्मणीत्ययं तु नियमः 'कर्तृकर्मणोः कृति' इत्यस्या एव

भावबोधिनी

जहाँ 'क्त' होता है वह वर्तमान काल अर्थ में होता है, वहाँ षष्ठी होती है । अतः उदाहरणों में भूतकाल की प्रतीति न मानकर वर्तमानकाल की ही प्रतीति समझनी चाहिये ॥ ६७ ॥

'आगे' क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानेभ्यः' ( पा० सू० ३।४।७६ ) सूत्र कहा जायगा, इससे विहित क्त प्रत्ययान्त के प्रयोग में षष्ठी होती है । यह भी [ 'न लोकाव्यय०' पा० सू० २।३।६९ इस ] प्रतिषेध का अपवाद सूत्र है । उदा० – इदम् एषाम् आसितम् । [ यह इनका बैठने का स्थान = विस्तर आदि है । ] इदम् एषां शयितम् [ यह इनकी शय्या है । ] इदम् अहेः सृप्तम् । [ यह सांप के जाने का स्थान है । ] इदं वनकपेः यातम् [ यह जंगली बन्दर का मार्ग है । ] इदम् एषां भुक्तम् [ यह इनके भोजन का पात्र है । ] इदम् एषाम् अशितम् [ यह इनके भोजन का पात्र है । इन सभी में अधिकरण अर्थ में क्त है—आस्यते अस्मिन् तत् आसितम् आदि । ]

द्विकर्मक धातुओं के प्रयोग में कर्ता में कृत् प्रत्यय में दोनों कर्मों में षष्ठी होती है जैसे कि दोनों में द्वितीया होती है—नेता अश्वस्य ग्रामस्य चैत्रः [ घोड़े को गाँव ले जाने वाला चैत्र । यहाँ 'नेता' = नी + तृच् है । 'अकथितं च' ( पा० सू० १।४।५१ ) इससे 'ग्राम' की कर्मसंज्ञा और ईप्सिततम मानकर 'अश्व' की कर्म संज्ञा होती है । अतः दोनों में जैसे चैत्रः अश्वं ग्रामं नयति — में द्वितीया होती है वैसे ही 'अश्वस्य' और 'ग्रामस्य' में षष्ठी भी दोनों में होती है । ]

कुछ लोग केवल प्रधान कर्म में ही षष्ठी मानते हैं । इनके मत में तो—नेता अश्वस्य ग्रामं चैत्रः यही होता है [ गौण में केवल द्वितीया ही होती है । ]

**अन्ये प्रधाने कर्मण्याहुः, तदा—नेताऽश्वस्य ग्रामं चैत्रः ॥**

### ५३०. न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ ६९ ॥ ( ६२७ )

**'कर्तृकर्मणोः कृति' ( २.३.३५ ) इति षष्ठी प्राप्ता प्रतिषिध्यते। ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन्–इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति। 'ल' इति शतृशानचौ ( ३.२.१२४ ) कानच्क्वसू (३.२.१०६,१०७)**

**न्यासः**

विज्ञायते। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति, 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति वा। अधिकरणे चेति वक्तव्ये वाचिग्रहणमधिकरणक्तोपलक्षणं मा विज्ञायीत्येवमर्थम्। उपलक्षणार्थत्वे हि तस्यार्थान्तरवृत्तेरपि ध्रौव्यगतिप्रत्यवसानार्थेभ्य उत्पन्नस्य क्तस्य प्रयोगे षष्ठी स्यात्। वाचिग्रहणे तु यदा भावे क्तप्रत्ययो भवति तदा षष्ठो न भवति। तदा कर्तरि तृतीयैव भवति—इहानेनासितमिति। न ह्यत्राधिकरणवाची क्तः; क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यश्चेति चकाराद् यथाप्राप्तश्चेति भावे कर्तरि च विधानात्। यदा तु कर्तरि क्तो भवति तदा तेनैवाभिहितत्वात् तत्र षष्ठी न भवति। इहेम आसिता इति चकारः पूर्वापेक्षया समुच्चयार्थः ॥ ६८ ॥

**न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ किकिनौ च गृह्येते इति।** यद्यपि किकिनोरलादेशत्वात् स्थानिवद्भावेन लग्रहणेन तयोर्ग्रहणं नास्ति, तथापि 'लिट् च' इत्यतिदेशेन भवितव्यम्। विशेषातिदेशे हि

**पदमञ्जरी**

प्राप्तेः। वाचिग्रहणं किम्? 'अधिकरण' इत्युच्यमाने क्तोपलक्षणं विज्ञायेत, ततश्चार्थान्तरवृत्तेरपि ध्रौव्यादेरुत्पन्नस्य क्तस्य प्रयोगे षष्ठी स्यात्; वाचिग्रहणे तु सति यदाधिकरणं वक्ति तदैव षष्ठी भवति, पदार्थान्तरे तदा कर्तरि तृतीया कर्मणि द्वितीया भवति—इहैभिरासितं ग्रामे गत इति; इह गत्यर्थे चातुश्शब्द्यं भवति—इदमेषां गतमित्यधिकरणे, इदमेते गता इति कर्तरि, इहैभिर्गतमिति नपुंसके भावे, कर्तृविवक्षायां इदमेषाङ्गतमिति तत्रैव शेषविवक्षायाम् ॥ ६८ ॥

**न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥** जिघृक्षितरूपविनाशप्रसङ्गात् **तृनामित्यत्र** णत्वाभावः। **उ उकेति।** अनेनोकारप्रश्लेषं दर्शयति। तत्र लश्चेति पूर्वद्वन्द्वे उकारस्य पूर्वनिपातः स्यात्, परनिपातेऽपि लवुकेति स्यात्;

**भावबोधिनी**

**विमर्श**—'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' ( पा० सू० ३।४।७६ ) यह सूत्र ध्रौव्य = अकर्मक गति, प्रत्यवसान = भक्षण—इन अर्थों वाली धातुओं से अधिकरण अर्थ में 'क्त' प्रत्यय करता है। इसी का प्रस्तुत सूत्र में ग्रहण है। अतः आस्यतेऽस्मिन् तत् आसनम्—आदि रूप से अधिकरण अर्थ की प्रतीति समझनी चाहिये। एषाम्—आदि कर्ता है, इनमें षष्ठी होती है। अतः जिसपर बैठा जाता है, चला जाता है, सोया जाता है—आदि के अनुसार आसन, मार्ग, शय्या = पलंग आदि अर्थों की प्रतीति होती है।

जहाँ एक प्रधान कर्म और एक गौण कर्म रहने पर दोनों में द्वितीया होती है—'चैत्रः अश्वं ग्रामं नयति।' इसी प्रकार यह षष्ठी भी कृत् प्रत्यययोग में दोनों से ही होती है—'नेताऽश्वस्य ग्रामस्य चैत्रः।' परन्तु कुछ विद्वान् केवल प्रधान कर्म में ही षष्ठी का समर्थन करते हैं, गौण में नहीं ॥ ६८ ॥

'कर्तृकर्मणोः कृति' ( पा. सू. २।३।६७ ) इससे प्राप्त होने वाली षष्ठी का निषेध होता है। (१) ल, (२) उ, (३) उक, (४) अव्यय, (५) निष्ठा, (६) खलर्थ और (७) तृन्—इनके प्रयोग में षष्ठी विभक्ति नहीं होती है। 'ल्' इससे शतृ, शानच्, कानच्, क्वसु, कि, किन्—इतने का ग्रहण होता है—ओदनम् पचन् [पच् + लट् = शतृ, ओदन कर्म में षष्ठी प्राप्त होती है, उसका निषेध होता है।] ओदन पचमान [ पच् + लट् = शानच्, यहाँ भी कर्म में प्राप्त षष्ठी का निषेध

**किकिनौ ( ३.२.१८१ ) च गृह्यन्ते—ओदनं पचन्। ओदनं पचमानः। ओदनं पेचानः। ओदनं पेचिवान्। पपिः सोमं ददिर्गाः ( ऋ० ६.२३.४ )। उ-कटं चिकीर्षुः ( ३.२.१६८ )। ओदनं बुभुक्षुः ( म० भा० )। कन्यामलंकरिष्णुः ( ३.२.१३६ )। इष्णुचोऽपि प्रयोगे निषेधः। उक—आगामुकं ( ३.२.१२४ ) वाराणसीं रक्ष आहुः।**

**न्यासः**

नान्तरीयकः सामान्यातिदेश इति; विशेषस्य सामान्येनाविनाभावादिति। तेन सामान्यनिबन्धनः प्रतिषेधः किकिनोरपि सिध्यतीति युक्तं तयोरपि ग्रहणम्। **पचमान** इति शानच्। स्वरितेत्त्वादात्मनेपदम्। **पेचान** इति 'लिटः कानज् वा' इति वचनात् कानच्। द्विर्वचनम्। 'अत एक' इत्यादिनैत्वाभ्यासलोपौ। **पेचिवानिति 'क्वसुश्च'** इति क्वसुः। एत्वाभ्यासलोपयोः कृतयोः 'वस्वेकाजाद्घसाम्' इतीट्। 'उगिदचाम्' इति नुम्। 'सान्तमहतः' इत्यादिना दीर्घः। **ददिः पपिरिति**। 'आदृगमहनजनः किकिनौ लिट् च' इति किकिनोरन्यतरः। लिट् चेत्यतिदेशाद् द्विवचनम्। 'आतो लोप इटि च' इत्याकारलोपः। **चिकीर्षुरिति**। 'सनाशंसभिक्ष उः'। **अलंकरिष्णुरिति**। 'अलं कृञ्' इत्यादिनेष्णुच्। **आगामुक इति**। 'लषपतपद' इत्यादिनोकञ्।

**पदमञ्जरी**

तस्मात्परयोर्द्वन्द्वं कृत्वा पश्चाल्लशब्दस्य द्वन्द्वः कार्यः, उकारेण च कृतो विशेषणात्तदन्तविधिः; व्यपदेशिवद्भावात्केवलस्यापि ग्रहणम्। **शतृशानचाविति**। तेन शानजर्थं तृन्निति प्रत्याहारो नाश्रयणीय इति भावः। **किकिनौ चेति**। ननु लग्रहणेन लकारास्तदादेशाश्च ग्रहीतुं युक्ताः—कटं कारयाञ्चकार, ओदनं पाचयति; किकिनोस्त्वयुक्तं ग्रहणम्, अलत्वादलादेशत्वाच्च, नैष दोषः; 'किकिनौ लिट् च' इत्यनेन लिट्त्वातिदेशः क्रियते, न लिट्संज्ञा। तत्र 'कारयाम्' 'पचानः' इत्यादौ लिटि तदादेशे च दृष्टः प्रतिषेध किकिनोरपि भविष्यति। उदाहरणेषु सर्वत्र कारकषष्ठ्याः प्रतिषेधः। शेषषष्ठी तु भवत्येव—ब्राह्मणस्य कुर्वन्, ओदनस्य पचन्, 'अपां पेरुरसि', (तै.सं. १.३.८.१) 'नरकस्य जिष्णवो गुणैः', तानि द्विषद्वीर्यनिराकरिष्णुरिति। **आगामुकमिति**। 'लषपतपद' इत्यादिनोकञ्,

**भावबोधिनी**

होता है। ] ओदनं पेचानः [ पच्+लिट्=कानच्, यहाँ भी कर्म में प्राप्त षष्ठी नहीं होती है। ] ओदनं पेचिवान् [पच्+लिट्=क्वसु, यहाँ भी षष्ठी नहीं होती है। ] पपिः सोमम् [ पा+लिट्=कि, यहाँ भी सोम में षष्ठी का निषेध हो जाता है। ] ददिः गाः [ दा+लिट्=किन्, 'गो' में षष्ठी का निषेध होता है 'ल' इससे लकार और उसके स्थान पर विहित आदेश लिये जाते हैं, अतः इनके योग में प्राप्त षष्ठी का निषेध हुआ है। 'लटः शतृशानचाणप्रथमासमानाधिकरणे' (पा० सू० ३।२।१२४) से लट् का शतृ और शानच् होते हैं। लिट् के स्थान पर 'लिटः कानच् वा' (पा० सू० ३।२।१०६) 'क्वसुश्च' ( पा० ३।२।१०७ ) इन सूत्रों से कानच् और क्वसु प्रत्यय होते हैं "आदृगमहनजनः कि किनौ लिट् च' ( पा० सू० ३।२।१०७) इस सूत्र से कि तथा किन् प्रत्यय होते हैं और लिट् का अतिदेश होने से उसके सभी कार्य होते हैं। ]

(२) कटं चिकीर्षुः [ सन्नन्त चिकीर्ष धातु से 'सनाशंस भिक्ष उः' ( पा० सू० ३।२।१६८ ) इससे 'उ' प्रत्यय होता है। ] कर्म में षष्ठी नहीं होती है। ओदनं बुभुक्षुः [ यहाँ सन्नन्त बुभुक्ष्+उ ]। कन्याम् अलङ्करिष्णुः उष्णुच के प्रयोग में भी षष्ठी का प्रतिषेध होता है। ]

(३) उक—आगामुकं वाराणसीं रक्ष आहुः [ राक्षस को वाराणसी के प्रति आने का इच्छुक कहते हैं। यहाँ 'लषपतपद०' ( पा० सू० ३।२।१५४ ) आदि सूत्र से 'उकञ्' प्रत्यय होता है। 'वाराणसी' कर्म में षष्ठी का निषेध हो जाता है। ]

**❀ उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ❀** ( म० भा० २.३.६९ वा० ४) । **दास्याः कामुकः**[1] । **अव्यय— कटं कृत्वा । ओदनं भुक्त्वा** ( ३.४.२१ ) ।

**❀ अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ❀** (म० भा० २.३.६९ वा० ५) । **व्युष्टायां पुरा सूर्यस्योदेतोराधेयः** ( ३.४.१६ ) । ( काठ० सं० ८.३ ) **पुरा क्रूरस्य विसृपो विरप्शिन्** ( ३.१.१७ ) । (तै० सं० १.१.९.३) **निष्ठा—ओदनं भुक्तवान् । देवदत्तेन कृतम् । खलर्थ—ईषत्करः** ( ३.३.१२६ ) **कटो भवता । ईषत्पानः** ( ३.३.१२८ ) **सोमो भवता । तृन्निति प्रत्याहारग्रहणम्, 'लटः शतृशानचौ'** ( ३ २.१२४ ) **इत्यारभ्य आ तृनो नकारात् । तेन शानन्-चानश्-शतृ-तृनामपि प्रतिषेधो भवति** ( म० भा० ) । **सोमं पवमानः** ( ३.३.१२८ ) ।

**न्यासः**

**उकप्रतिषेधे इत्यादि** । प्रतिपाद्यत इति शेषः । प्रतिपादनन्तु बहुलग्रहणानुवृत्तिमाश्रित्य कर्त्तव्यम् । **कृत्वेति** । 'समानकर्तृकयोः' इति क्त्वा ।

**अव्ययप्रतिषेध इत्यादि** । अत्रापि पूर्ववद्वाक्यशेषो वेदितव्यः । प्रतिपादनञ्च पूर्ववदेव । अथ वा— 'अव्ययीभावश्च' इत्यत्र 'सर्वमिदं काण्डं स्वरादिषु पठ्यते' इत्यादिना **वृत्तिकारेण** प्रतिपादनं कृतम् । 'संज्ञापूर्वको विधिरनित्यः' इति वा । **उदेतोरिति** । उत्पूर्वादिणो भावलक्षणे 'स्थेण्कृञ्वदिचरि' इत्यादिना तोसुन् । **विसृप** इति 'सृपितृदोः कसुन्' । **ईषत्कर इति** । ईषद् इत्यादिना खल् । **ईषत्पान इति** । 'आतो युच्' । **आतृनो नकारादिति** । ताच्छीलिकस्य तृनः सम्बन्धिनो नकारादित्यर्थः । **पवमान इति** । 'पूङ् पवने', 'पूङ्यजोः शानन्' । **नडमाघ्नान इति** । 'ताच्छील्यवयोवचनशक्तिषु चानश्' । 'गमहन' इत्यादिनोपधालोपः । 'हो हन्तेः'

**पदमञ्जरी**

रक्षांसि वाराणसीं प्रत्यागमनशीलानि भवन्ति, शापादिमोक्षार्थमित्यर्थः । **दास्याः कामुक इति** । द्वितीयानिवृत्त्यर्थं वचनम्, षष्ठी तु शेषविज्ञानादेव सिद्धा । **पुरासूर्यस्येति** । 'भावलक्षणे' इत्यादिना तोसुन् । **विसृप इति** । 'सृपितृदोः कसुन्' 'पूङ्यजोः शानन्' 'ताच्छील्यवयोवचनशक्तिषु चानश्' 'इङ्धार्योः शत्रकृच्छ्रिणि' इत्येतेषु 'ल' इति नानुवर्त्तत इति स्थापयिष्यते, तेन लग्रहणादसिद्धिरिति मत्वाऽऽह—**तृन्निति प्रत्याहारग्रहणमिति** ।

**भावबोधिनी**

* उक के प्रतिषेध में कमु धातु से होने वाले उकञ् के योग में षष्ठी का प्रतिषेध नहीं कहना चाहिये भाषा में ।* उदा०—दास्याः कामुकः [ दासी को चाहने वाला । यहाँ षष्ठी का प्रतिषेध नहीं होता है । ]

(४) अव्यय—कटं कृत्वा, ओदनं भुक्त्वा [ 'समानकर्तृकयोः पूर्वकाले' ( पा० सू० ३।४।२१ ) से क्त्वा प्रत्यय होता है और 'क्त्वातोसुन् कसुनः' ( पा० सू० १।१।४० ) से अव्ययसंज्ञा हो जाती है । अतः षष्ठी नहीं होती है । ]

* अव्ययों के प्रतिषेध में तोसुन् और कसुन् के प्रयोग में प्रतिषेध नहीं कहना चाहिये ।* उदा०—पुरा सूर्यस्य उदेतोराधेयः । [ यहाँ उदेतोः के कर्म में षष्ठी होती है—सूर्यस्य ] पुरा क्रूरस्य विसृपो विरप्शिन् । [ विसृपः में कसुन् प्रत्यय है । कर्म में षष्ठी होती है ]

(५) निष्ठा—ओदनं भुक्तवान् [ भुज् + क्तवतु । कर्म में षष्ठी होती है । ] देवदत्तेन कृतम् [ कृ + क्त । 'क्तक्तवतू निष्ठा' ( पा० सू० १।१।२६ ) से 'क्त' और 'क्तवतु' ये दोनों निष्ठा प्रत्यय होवे हैं ।]

(६) खलर्थ—ईषत्करः कटो भवता [ आपके द्वारा चटाई बनाना आसान है । ] ईषत् पानः सोमो भवता । [ आपके द्वारा सोम पीना आसान है । यहाँ 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' ( पा० सू० ३।३।१२६ ) से खल् प्रत्यय होता है । उसी सन्दर्भ में आतो युच्' ( पा० सू० ३।३।१२८ ) सूत्र से आकारान्त धातु से युच्=अन प्रत्यय होता है ]

१. 'वृषल्याः कामुकः' अधिकोऽयं पाठः क्वचित् पुस्तकान्तरे ।

**नडमाघ्नानः** ( ३.२.१२९ )। **अधीयन्** ( ३.२.१३० ) **पारायणम्** ( म० भा० )। **कर्ता** ( ३.२.१३४ ) **कटान्**। **वदिता जनापवादान्**।

❋ **द्विषः शतुर्वा वचनम्** ❋ ( म० भा० २.३.६९ वा० ७ )। **चौरं द्विषन्**। **चौरस्य द्विषन्**॥

## ५३१. अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७० ॥ ( ६२८ )

**न्यासः**

इत्यादिना कुत्वम्। **अधीयन्निति**। 'इङ्धार्योः। शत्रकृच्छ्रिणि' इति शत्रादेशः। इयङादेशः। उपसर्गेण सह दीर्घः। **कर्त्तेति**। 'आक्वेस्ताच्छील्य' इत्यादिना तृन्।

**द्विषः शतुर्वा वचनमिति**। द्विषः परो यः शतृप्रत्ययस्तस्य प्रयोगे वावचनं कर्त्तव्यम्; अभिधानाभिधेययोरभेदोपचारात्। वेत्यनेन वार्थं उक्तः। वार्थोऽपि विकल्पः। विकल्प उच्यते = प्रत्याख्यते येन तद्वावचनम्। तस्य व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्—बहुलग्रहणमिहानुवर्त्तते, तेन द्विषः शतुर्विकल्पेन प्रतिषेधो भविष्यति। **द्विषन्निति**॥ 'द्विषोऽमित्रे' इति शतृप्रत्ययः॥ ६९॥

**अकेनोर्भविष्यदाधमर्ण्ययोः अकस्य भविष्यति काल इति**। नाधमर्ण्ये, तस्य तत्रासम्भवात्। **इनस्तु भविष्यदाधमर्ण्ययोरिति**। तस्योभयोरपि सम्भवात्। ननु च साम्यादिह संख्यातानुदेशेन भवितव्यम्? नैतदस्ति;

**पदमञ्जरी**

**द्विषः शतुर्वा वचनमिति**। 'द्विषोऽमित्रे' इति योऽयं शतृप्रत्ययः, तत्प्रयोगे विकल्पेन प्रतिषेधो वक्तव्य इत्यर्थः। प्रत्याख्यानं तु शेषविवक्षायां षष्ठ्यन्यत्र द्वितीयेति, सता च समासप्रतिषेधात्समासे कृत्स्वरार्थं कारकषष्ठी विधेयेत्यपि नास्ति॥ ६९॥

**अकेनोर्भविष्यदाधमर्ण्ययोः**॥ अकस्य भविष्यति काले इनस्तु आधमर्ण्ये चेति। संख्यातानुदेशस्तु व्याख्यानान्न भवतीति भावः। **ग्रामं गमीति**। 'भविष्यति गम्यादयः'। ननु च नात्र षष्ठ्याः प्रसंगः, कथम्?

**भावबोधिनी**

(७) तृन्—यह एक प्रत्याहार का ग्रहण है यह 'लटः शतृशानचौ' (पा० सू० ३।२।१२४) इसके 'तृ' से लेकर 'तृन्' ( पा० सू० ३।२।१३५ ) के न् तक है। इस कारण शानन्, चानश्, शतृ, तृन्—इनके योग में भी षष्ठी का प्रतिषेध हो जाता है। सोमं पवमानः [ पूङ् यजोः शानन् ( पा० सू० ३।३।१२८ ) पू + शानन् हैं ] नडम् आघ्नानः [ ताच्छील्य वयोवचनशक्तिषु चानश्। ( पा० सू० ३।२।१२९ ) से चानश् प्रत्यय आहन् + चानश् = आन ] अधीयन् पारायणम्। [अधि इ + शतृ प्रत्यय "इङ् धार्योः शतृ अकृच्छ्रिणि' ( पा० सू० ३।४।१३० ) से शतृ आदेश लट् का होता है। 'इ' का इयङ् होता है। ] कर्ता कटान् [ कृ + तृन् "आक्वेस्तच्छीलतद्धर्म०" ( पा० सू० ३।१।१३४ ) से तृन् प्रत्यय होता है। ] वदिता जनापवादान् [ यहाँ भी वद् + तृन् हैं। ]

* द्विष् धातु के शतृ प्रत्ययान्त के योग में विकल्प से करना चाहिए। * चौरं द्विषन् चौरस्य द्विषन् [ द्विष् + लट् = शतृ, वैकल्पिक षष्ठी होती है। अतः पक्ष में द्वितीया होती है। यहाँ 'द्विषोऽमित्रे' ( पा. सू. ३।२।१३१ से शतृ प्रत्यय होता है। ]

**विमर्श**—यहाँ ध्यान रखना चाहिए कि जहाँ 'कर्तृकर्मणोः कृति' ( पा. सू. २।३।६६ ) से कर्म कारक में षष्ठी प्राप्त है, उसी का प्रतिषेध प्रस्तुत सूत्र करता है। यदि सम्बन्ध मात्र की विवक्षा में शेष अर्थ में षष्ठी करनी चाहें तो की जा सकती है। अतः यह सूत्र प्रख्यात कर दिया गया हैं। इस प्रकार कर्मत्व विवक्षा में द्वितीया और शेषत्व विवक्षा में षष्ठी होती है॥ ६९॥

भविष्यत् काल में विहित 'अक प्रत्ययान्त के और भविष्यत्काल तथा अधमर्णता अर्थ में विहित 'इनि' प्रत्ययान्त के प्रयोग में षष्ठी विभक्ति नहीं होती है। उदा०—कटं कारको व्रजति। [ भविष्यत् में चटाई बनाने वाला जाता है। ]

**अकस्य भविष्यति काले विहितस्य, इनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्ठी विभक्तिर्न भवति। कटं कारको ( ३.३.१० ) व्रजति। ओदनं भोजको ( म० भा० ) व्रजति। इनः खल्वपि-ग्रामं गमी ( ३.३.३ )। ग्रामं गामी। आधमर्ण्ये शतं दायी ( ३.३.१७० )। सहस्रं दायी ( म० भा० )।**

**भविष्यदाधमर्ण्ययोरिति किम्? यवानां लावकः ( ३.१.१३३ )। सक्तूनां पायकः। अवश्यंकारी ( ३.३.१७० ) कटस्य।**

**इह कस्मान्न भवति-वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इति? भविष्यदधिकारे विहितस्याकस्येदं ग्रहणम्॥**

## ५३२. कृत्यानां कर्तरि वा॥ ७१॥ ( ६२९ )

**'कर्तृकर्मणोः कृति' ( २.३.६५ ) इति नित्यं षष्ठी प्राप्ता कर्त्तरि विकल्प्यते। कृत्यानां प्रयोगे कर्त्तरि वा**

### न्यासः

स्वरितेन हि संख्यातानुदेशो भवति, न चेह तदर्थं स्वरितत्वं प्रतिज्ञायते। **कटं कारको व्रजतीति।** 'तुमुन्ण्वुलौ' इत्यादिना ण्वुल्। **ग्रामं गमीति।** गमेरिनिः। स च 'भविष्यति गम्यादयः' इति वचनाद् भविष्यत्कालविषयः। **शतं दायीति।** 'आवश्यकाधमर्ण्ययोर्णिनिः'। **यवानां लावक इति।** 'ण्वुल्तृचौ' इति ण्वुल्। **अवश्यंकारीति।** आवश्यके णिनिः। **वर्षशतस्य पूरक इति।** 'पूरी आप्यायने', चौरादिकः। तस्मात् 'ण्वुल्तृचौ' इति भविष्यत्काले ण्वुल्। स हि त्रिषु कालेषु भवति। **भविष्यदधिकारविहितस्याकस्येदं ग्रहणमिति।** इह हि भविष्यदिति स्वर्यते। स्वरितेनाधिकारावगतिर्भवति। तेन भविष्यदधिकारविहितस्येदमकस्य ग्रहणम्, न सर्वस्य॥ ७०॥

**कृत्यानां कर्त्तरि वा॥ गेयो माणवकः साम्नामिति।** 'भव्यगेय' इत्यादिना कर्तरि गेयशब्दो व्युत्पा-

### पदमञ्जरी

गत्यर्थकर्मणीत्यत्रोक्तम्—'द्वितीयाग्रहणं किम्? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्याद्ग्रामस्य गन्ता' इति, सत्यम्; श्रौते तावत् प्रतिषेधे लभ्यमाने किं द्वितीयाग्रहणसामर्थ्याश्रयणेनेति मन्यते॥ ७०॥

**कृत्यानां कर्तरि वा॥ कर्त्तरीति किमिति।** 'तयोरेव कृत्यक्तखलर्थाः' इति वचनादकर्मकेभ्यो भावे

### भावबोधिनी

ओदनं पाचको व्रजति है। [ भविष्यत् में चावल पकाने वाला जाता है। यहाँ 'तुमुनण्वुलौ क्रियायां क्रियार्थायाम्' ( पा. सू. ३।३।१० ) भविष्यत् काल अर्थ में ण्वुल्=अक प्रत्यय होता है। ] इनके योग में भी—ग्रामं गमी [ गाँव को जाने वाला ] 'भविष्यति गम्यादयः' ( पा. सू. ३।३।३ ) से इनि प्रत्यय है ] अधर्मणता=कर्जदार होना—इसका उदा०—शतं दायी। सहस्रं दायी [ सौ रुपयों का कर्जा चुकाने वाला। हजार रुपयों का कर्जा चुकाने वाला। यहाँ 'आवश्यकाधमर्ण्ययोर्णिनिः' ( पा. सू. ३।३।१७० ) से णिनि प्रत्यय होता है। ]

भविष्यत् काल तथा अधर्मणता – इन अर्थों में ही निषेध होता है-इसका क्या फल है? यवानां लावकः [ जौ काटने वाला ] सक्तूनां पायकः [ सत्तू पीने वाला। ] अवश्यंकारी कटस्य [ चटाई को अवश्य बनाने वाला। इनमें 'ण्वुलतृचौ' ( पा. सू. ३।१।१३३ ) से सामान्य कर्तृ अर्थ में ण्वुल्=अक है। अवश्यंकारी—में आवश्यक अर्थ में णिनि है। अतः षष्ठी का निषेध न होकर षष्ठी हो जाती है। ]

इसमें निषेध क्यों नहीं होता है—वर्षशतस्य पूरकः, [ सौ वर्ष पूरा करने वाला। पुत्रपौत्राणां दर्शकः। [ पुत्र तथा पौत्रों को देखने वाला। यहाँ भविष्यत् काल की प्रतीति होने से षष्ठी निषेध होना चाहिये। ] इसका समाधान यह है कि 'भविष्यति गम्यादयः' ( पा. सू. ३।३।३ ) इसके 'भविष्यत् में' अधिकार के अन्तर्गत आने वाले 'अक' का ही ग्रहण है। [ 'ण्वुलतृचो' पा. सू, ३।१।१३३ से होने वाला अक=ण्वुल् काल सामान्य में है। अतः उसके योग में निषेध नहीं होता है ]॥ ७०॥

**'कर्तृकर्मणोः कृति' ( पा० सू० २।३।६५ ) इससे नित्य षष्ठी प्राप्त होती है, इसका कर्ता अर्थ में विकल्प से**

**षष्ठी विभक्तिर्भवति, न कर्मणि । भवता कटः कर्तव्यः । भवतः कटः कर्तव्यः ।**

**कर्त्तरीति किम् ? गेयो माणवकः साम्नाम् ( म० भा० ) ।**

**※ उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः ※ ( म० भा० २.३.७१ ) । क्रष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा देवदत्तेन ।।**

**न्यासः**

दितः । गायतीति गेयः साम्नामिति कर्मणि षष्ठी नित्यमेव भवति । **वक्तव्य इति** । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'न लोकाव्ययनिष्ठा०' इत्यत्र नेति योगविभागः कर्तव्यः, तेनोभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो भविष्यति । अथ वा कृत्यानामिति योगविभागाश्रयणात्, अत्र च नेत्यनुवृत्तेः । वेति व्यवस्थितविभाषा-विज्ञानाद्वा । उभयप्राप्तौ कृत्ये षष्ठीप्रतिषेधो भविष्यति । तेन क्रष्टव्या शाखा ग्रामं देवदत्तेनेति । कृषेः 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यमागमो भवति । अत्र देवदत्ते कर्तरि षष्ठी मा भूदिति । एवमुभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्य इत्युक्तम् । कर्मणि तु शाखायां कृत्येनाभिहितत्वादेव षष्ठी न भविष्यति । ग्रामस्याप्रधानत्वादेव यथैव हि कृत्याः प्रधाने कर्मणि भवन्ति नाप्रधाने, तथा षष्ठ्यपि । न चेह ग्रामः प्रधानं कर्म, किं तर्हि ? शाखेति ।। ७१ ।।

**पदमञ्जरी**

सकर्मकेभ्यश्च कर्मणि कृत्यानां विधानात्कर्त्तुरेव तैरनभिधानं सम्भवतीति कर्तृकर्मणोर्द्वयोरधिकारेऽपि कर्तर्येव षष्ठी भविष्यतीति प्रश्नः । **गेय इति** । 'भव्यगेय' इत्यादिना कर्त्तरि यत्प्रत्ययः । **साम्नामिति** । कर्मणि नित्यमेव षष्ठी भवति ।

**उभयप्राप्तौ कृत्य इति** । उभयो कर्तृकर्मणोः प्राप्तिर्यस्मिन् कृत्ये तत्र द्वयोरपि कर्तृकर्मणोः षष्ठी न भवतीत्यर्थः । **क्रष्टव्येति** । कृषेर्द्विकर्मकत्वात्प्रधाने कर्मणि कृत्यप्रत्ययः, न त्वप्रधान इति तस्मिन् कर्मणि कर्तरि च प्राप्ता षष्ठी न भवति । एतच्च योगविभागाल्लभ्यते, कथम् ? कृत्यानामित्येको योगः, अत्रोभयप्राप्तौ नेति च वर्तते, युगपदुभयप्राप्तीनां कृत्यानां प्रयोगे षष्ठी न भवतीत्यर्थः; ततः कर्तरि वा, अत्र षष्ठीत्येवानुवर्तते, अन्यत्सर्वं निवृत्तम् ।। ७१ ।।

**भावबोधिनी**

विधान होता है । कृत्य प्रत्ययान्त शब्दों के प्रयोग में कर्ता अर्थ में विकल्प से षष्ठी होती है, कर्म में नहीं होती है । उदा०—भवता कटः कर्त्तव्यः । [ आपके द्वारा चटाई बनायी जानी चाहिये । यहाँ कर्ता में तृतीया विभक्ति है । पक्ष में षष्ठी है—] भवतः कटः कर्तव्यः ।

कर्ता में ही विकल्प होता है—इसका क्या फल है ? गेयो माणवकः साम्नाम् [ साम गान करने वाला माणवक । यहाँ 'भव्यगेयप्रवचनीयोप०' ( पा० सू० ३।४।६८ ) से कर्ता अर्थ में यत् प्रत्यय हुआ है । अतः कर्म में षष्ठी के विकल्प का प्रश्न नहीं है । नित्य षष्ठी होती है—साम्नाम् ] * जिसमें कर्ता तथा कर्म दोनों में षष्ठी की प्राप्ति है ऐसे कृत्य प्रत्यय प्रयोग में कर्ता, कर्म दोनों में षष्ठी नहीं होती हैं—ऐसा कहना चाहिये । * उदा०—क्रष्टव्या ग्रामं शाखा देवदत्तेन [ देवदत्त द्वारा शाखा को गाँव में खींचकर ले जाना चाहिये । यहाँ कृष् धातु द्विकर्मक है । शाखा प्रधान कर्म है और ग्राम गौण कर्म है । इनमें षष्ठी नहीं होती है तथा कर्ता देवदत्त में भी नहीं होती है । ] नेतव्या ग्रामम् अजा देवदत्तेन [ देवदत्त द्वारा बकरी गाँव में ले जानी चाहिये । यहाँ भी 'नी' द्विकर्मक है । अजा प्रधान और ग्राम गौण कर्म है । देवदत्त कर्ता है । सभी में षष्ठी का निषेध हो जाता है । यहाँ प्रधान कर्म में कृत्य प्रत्यय होने से 'शाखा' तथा 'अजा' का कर्म उक्त होने से उनमें प्रथमा होती है । ] ।। ७१ ।।

**५३३. तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ॥ ७२ ॥ ( ६३० )**

**तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा। शेषे विषये तृतीयाविधानात् तया मुक्ते षष्ठ्येव भवति। तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य। सदृशो देवदत्तेन, सदृशो देवदत्तस्य।**

**अतुलोपमाभ्यामिति किम्? तुला देवदत्तस्य नास्ति। उपमा कृष्णस्य न विद्यते। वेति वर्तमानेऽन्यतरस्यांग्रहणमुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम्; इतरथा हि तृतीयानुकृष्येत ॥**

**५३४. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥ ( ६३१ )**

**न्यासः**

**तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ॥ तुल्यार्थैः** सदृशार्थैरित्यर्थः। अर्थग्रहणं पदान्तरनिरपेक्षया ये तुल्यार्थतामाहुस्तत्परिग्रहार्थम्। तेन पदान्तरसान्निध्येन द्योतका इवादयो निर्वर्त्तिता भवन्ति—गौरिव गवय इति, यथा गौस्तथा गवय इति। स्वरूपनिवृत्त्यर्थं त्वर्थग्रहणं न भवति; बहुवचननिर्देशादेव स्वरूपविधेर्निरस्तत्वात्। इहापि पितुस्तुल्यः प्रज्ञयेति प्रज्ञाशब्दात् षष्ठी न भवति; हेतुत्वेन करणत्वेन वा प्रज्ञाया विवक्षितत्वात्। **इतरथा हि तृतीयानुकृष्येतेति**। तस्या अनन्तरसूत्रे श्रुतत्वात्। अन्यतरस्यांग्रहणस्य त्वेतदेव प्रयोजनमिति। तदेव चकारेणानुकृष्यत इति ॥ ७२ ॥

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥** तृतीयानिर्देशादेवार्थग्रहणे सिद्धेर्थग्रहणादर्थशब्दः

**पदमञ्जरी**

**तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ शेषविषये विधानादिति**। शेष इत्यधिक्रियत इति भावः। बहुवचननिर्देशादेव स्वरूपग्रहणाभावे सिद्धेऽर्थग्रहणं पदान्तरनिरपेक्षा ये तुल्यानाहुस्तत्परिग्रहार्थम्। तेन द्योतका इवादयो निर्वर्त्तिता भवन्ति-गौरिव गवयः, यथा गौस्तथा गवय इति। **तुला देवदत्तस्येति**। तुलोपमाशब्दौ कर्मसाधनौ तुल्यार्थौ तत्र प्रतिषेध्या तृतीया, षष्ठी तु भवत्येव। इह 'स्फुटोपमं भूतिसितेन शम्भुना' (शशु. १.४) इति शम्भुना स्फुटोपमा यस्येत्युपमाशब्देनापि योगे करणे तृतीया भवति, भावसाधनत्वात्तस्य, यथा—उपमीयतेऽनेनेत्यादौ; इतरथा हि तृतीयानुकृष्येतेति तस्यानन्तरसूत्रे श्रुतत्वाद् अन्यतरस्यांग्रहणे तु सति तस्य प्रयोजनान्तराभावात्तदेव चकारेणानुकृष्यते ॥ ७२ ॥

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥** आयुष्यादीनां सुखपर्यन्तानां द्वन्द्वं कृत्वार्थशब्देन

**भावबोधिनी**

तुल्यार्थक शब्दों के योग में विकल्प से षष्ठी होती है, पक्ष में षष्ठी होती है, यह 'तुला' और 'उपमा' इन दो शब्दों के योग पर होता है। शेष विषय में तृताया का विधान होने के कारण इसके न होने पर षष्ठी ही होती है। उदा०—तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य [ देवदत्त के तुल्य ]। सदृशो देवदत्तेन, सदृशो देवदत्तस्य [ देवदत्त के सदृश ]।

'तुला' और 'उपमा' इनके योग में नहीं होता है—इसका क्या फल है? तुला देवदत्तस्य नास्ति [ देवदत्त की तुला = बराबरी नहीं है ] उपमा कृष्णस्य न विद्यते। [ कृष्ण की बराबरी नहीं है। यहाँ तुला और उपमा इन शब्दों का ही योग है। अतः यह सूत्र लागू नहीं होता है, सम्बन्ध अर्थ में केवल षष्ठी होती है। ]

[ 'कृत्यानां कर्तरि वा' पा० सू० २।३।७१ इस सूत्र से ] 'वा' इसकी अनुवृत्ति रहने पर भी यहाँ 'अन्यतरस्याम्' [विकल्प] इसका ग्रहण अग्रिम सूत्र में 'च' के द्वारा अन्यतरस्याम्—विकल्प की अनुवृत्ति के लिये है, यदि इसका ग्रहण नहीं होता तो अग्रिम सूत्र के 'च' के द्वारा 'तृतीया' की अनुवृत्ति होने लगती। [अर्थात् चतुर्थी के विकल्प में तृतीया होने लगती, षष्ठी नहीं हो पाती। 'अन्यतरस्याम्' के ग्रहण से षष्ठी ही होती है, अतः इसका फल अग्रिम सूत्र में हैं।]॥ ७२ ॥

आशीः अर्थ की प्रतीति रहने पर आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ और हित—इन शब्दों के योग में

**आशिषि गम्यमानायाम् आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ, हित–इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। चकारो विकल्पानुकर्षणार्थः। शेषे चतुर्थीविधानात्तया मुक्ते षष्ठी विभक्तिर्भवति।**

**❀ अत्रायुष्यादीनां पर्यायग्रहणं कर्त्तव्यम् ❀। आयुष्यं देवदत्ताय देवदत्तस्य वा भूयात्। चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। मद्रं देवदत्ताय देवदत्तस्य वा भूयात्। भद्रं देवदत्ताय, भद्रं देवदत्तस्य। कुशलं देवदत्तस्य। निरामयं देवदत्ताय, निरामयं देवदत्तस्य। सुखं देवदत्ताय, सुखं देवदत्तस्य। शं देवदत्ताय, शं देवदत्तस्य। अर्थो देवदत्ताय, अर्थो देवदत्तस्य। प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य। हितं देवदत्ताय, हितं देवदत्तस्य। पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य।**

**आशिषीति किम्? आयुष्यं देवदत्तस्य तपः॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः॥**

**न्यासः**

पृथगेव निमित्तं विज्ञायते। कथं पुनस्तृतीयाग्रहणादर्थग्रहणं सिध्यति? अपरिसमाप्तत्वादस्य वाक्यस्य योग इत्यध्याह्रियते। स चार्थैरेव सम्भवति न शब्दैरिति सामर्थ्यादर्थग्रहणं सिध्यति॥ ७३॥

**इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य तृतीयः पादः॥**

**पदमञ्जरी**

बहुव्रीहिविधानादर्थशब्देनायुष्यादिभिः प्रत्येकं सम्बन्धः। तत्र मद्रभद्रशब्दयोः पर्यायत्वात्सूत्रे भद्रशब्दो न पठितव्य इति केचिदाहुः। अन्ये त्वर्थशब्दोऽपि पृथगेव निमित्तम्, व्याख्यानाच्च सर्वत्रार्थग्रहणं वर्णयन्ति। वृत्तावपि क्वचिदर्थशब्दोऽप्युदाह्रियते।

**हितं देवदत्तस्येति।** 'हितयोगे चतुर्थी वक्तव्या' (वा० १२३) इत्यस्यानाशिषि चरितार्थत्वादाशिषि हितयोगेऽप्यनेन विकल्पेन भाव्यम्; अन्यथाऽत्र हितग्रहणमनर्थकमिति मन्यते॥ ७३॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयाध्यायस्य तृतीयः पादः॥**

**भावबोधिनी**

चतुर्थी विभक्ति होती है। चकार यह [ पूर्वसूत्र से ] विकल्प = अन्यतरस्याम् इसकी अनुवृत्ति के लिये है। शेष अर्थ में चतुर्थी का विधान होने के कारण इसके अभाव में षष्ठी विभक्ति होती है।

★ इस सूत्र में आयुष्य आदि के पर्याय शब्दों का ग्रहण करना चाहिये। ★ उदा०—आयुष्यं देवदत्ताय भूयात्, देवदत्ताय वा भूयात् [ देवदत्त को आयुष्य हो जाय। चतुर्थी और षष्ठी दोनों विभक्तियाँ होती हैं। ] चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। [ देवदत्त का चिरकालीन जीवन हो जाय। ] भद्रं देवदत्ताय देवदत्तस्य वा भूयात्। [ देवदत्त का कल्याण हो। ] भद्रं देवदत्ताय, देवदत्तस्य वा। [ देवदत्त का कल्याण हो। ] कुशलं देवदत्ताय, देवदत्तस्य वा। [ देवदत्तस्य का कुशल। ] निरामयं देवदत्तस्य, देवदत्तस्य वा। [ देवदत्त की नीरोगता हो जाय। ] सुखं देवदत्ताय देवदत्तस्य वा [ देवदत्त का सुख हो। ] शं देवदत्ताय देवदत्तस्य वा। [ देवदत्त का कल्याण हो। ] अर्थः देवदत्ताय देवदत्तस्य वा। [ देवदत्त का अर्थ हो। ] प्रयोजनं देवदत्ताय देवदत्तस्य वा [ देवदत्त का प्रयोजन पूरा हो जाय। ] हितं देवदत्ताय देवदत्तस्य वा। [ देवदत्त का हित हो। ] पथ्यं देवदत्ताय देवदत्तस्य वा। [ देवदत्त का पथ्य हो। ]

आशीः अर्थ में—इसका क्या फल है? आयुष्यं देवदत्तस्य तपः। [ देवदत्त का तप आयुः के लिये है—यह यथार्थ-कथन है, आशीः अर्थ नहीं है, अतः केवल षष्ठी ही होती है। ]॥ ७३॥

॥ इस प्रकार श्रीजयादित्य द्वारा विरचित काशिकावृत्ति में द्वितीय अध्याय का तृतीयपाद समाप्त हुआ॥

॥ इस प्रकार जयशङ्करलाल-त्रिपाठिविरचित भावबोधिनी हिन्दी-व्याख्या में काशिकावृत्ति के द्वितीय अध्याय का तृतीय पाद समाप्त हुआ॥

# अथ द्वितीयाध्याये चतुर्थः पादः

## ८३८. द्विगुरेकवचनम् ॥ १ ॥ ( ७३१ )

द्विगुः समासः एकवचनं भवति। एकस्य वचनम् = एकवचनम्। एकस्यार्थस्य वाचको भवतीत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्यैकवद्भावो विधीयते, द्विग्वर्थ एकवद्भवतीति। समाहारद्विगोश्चेदं ग्रहणम्, नान्यस्य।

**न्यासः**

**द्विगुरेकवचनम्**। अत्र यदि पारिभाषिकमेकवचनं गृह्येत तदानुप्रयोग एकवचनं न स्यात्—**पञ्चपूलीयं** शोभनेति, अनुप्रयोगस्याद्विगुत्वात्; यदि पारिभाषिकमेकवचनमिहाभिप्रेतं स्यात् तदा द्विगोरेकवचनमित्येवं ब्रूयात्, तस्मादन्वर्थस्यैकवचनस्येदं ग्रहणं न पारिभाषिकस्येति मनसि कृत्वाह—**एकस्य वचनमेकवचनमिति**। एतेनैकवचनशब्दस्य षष्ठीसमासतां दर्शयन्नन्वर्थतां दर्शयति। एकस्य वचनं वाचकमेकवचनमिति। वक्तीति वचनम्, 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्। एकवचनस्यैवार्थं पर्यायान्तरेण स्पष्टीकर्तुमाह—**एकार्थस्येत्यादि**। ननु चैकवचनमिति पुंल्लिङ्गेन भवितव्यम्; कथम्? द्विगोः पुंल्लिङ्गत्वात्, न; लिङ्गसामान्यस्य विवक्षितत्वान्नपुंसकलिङ्गेनैव सामान्येन निर्देशः कृत इत्यदोषः। **तदनेन प्रकारेणेति**। अन्वर्थस्यैकवचनशब्दग्रहणात्मकेनेत्यर्थः। न चानेकार्थाभिधायिनः शब्दस्य वचनशतैरप्येकार्थाभिधायित्वं शक्यते कर्तुम्; शब्दानामर्थाभिधायित्वस्य स्वाभाविकत्वात्, उच्यते चेदं वचनम्, ततः सामर्थ्यादतिदेशोऽयं विज्ञायत इत्यत आह—**द्विग्वर्थस्यैकवद्भावो विधीयत इति**। अस्यैवार्थं स्पष्टीकर्तुमाह—**द्विग्वर्थ एकवद्भवतीति**। यद्येवम्,

**पदमञ्जरी**

**द्विगुरेकवचनम्**॥ अत्र यदि पारिभाषिकमेकवचनं गृह्येतानुप्रयोगत एकवचनं न स्यात्—**पञ्चपूलीयं** शोभनेति, तस्याद्विगुत्वाद् 'द्विगोः' इति पञ्चम्या च निर्देशः स्यात्, अतोऽन्वर्थस्यैकवचनस्येदं ग्रहणमिति मत्वाऽऽह - **एकस्य वचनमेकवचनमिति**। वक्तीति वचनम्, 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्, एकस्यार्थस्य वचनमेकवचनमिति कर्मणि षष्ठ्याः समासः। तत्र चैकस्यार्थस्य वाचकं भवतीति सामान्येनोपक्रमः, पश्चात्किं तदित्यपेक्षायां द्विगुरित्यस्य पुंल्लिङ्गस्य सम्बन्ध इत्येकवचनमिति नपुंसकोपपत्तिः। एतदेव व्यनक्ति—**एकस्यार्थस्येति**। एवं च द्विगुरेकार्थस्य वाचको भवति। यदि द्विग्वर्थ एको भवति, न च वस्तुतोऽनेकार्थस्य वचनशतेनाप्येकार्थत्वमापादयितुं शक्यमिति सामर्थ्यादतिदेशो विज्ञायते, तदाह-- **तदनेन प्रकारेणेति**। तदिति वाक्योपन्यासे किमुक्तं भवतीत्याह—**द्विग्वर्थ एकवद्भवतीति**। **समाहारद्विगोश्चेदं ग्रहणमिति**। तद्धितार्थे यो द्विगुस्तस्यैकवद्भावो मा भूदित्येवमर्थं पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा इति।

**भावबोधिनी**

द्विगु समास एकवचन होता है। एक का वचन = एकवचन। एक अर्थ का वाचक होता है, यह अर्थ होता है। इसलिये इस प्रकार से द्विगु के अर्थ का एकवद्भाव किया जाता है—द्विगु का अर्थ एकवत् होता है। यह समाहार-द्विगु का ही ग्रहण है अन्य [ तद्धितार्थादि में विहित ] द्विगु का ग्रहण नहीं है। उदा०—पञ्चपूलाः समाहृताः [ पञ्चानां

**न्यासः**

तद्धितार्थे यो द्विगुस्तस्याप्येकवद्भावः प्राप्नोति—पञ्चसु कपालेषु संस्कृतौ संस्कृता वा पञ्चकपालौ पञ्चकपाला वेत्यत आह—**समाहारद्विगोश्चेत्यादि**। चकारोऽवधारणे। समाहारद्विगोरेवेति यावत्। कथं पुनः समाहार-द्विगोरेव ग्रहणं लभ्यते? एवं मन्यते—'द्वन्द्वश्च' इत्यत्र चकारेण द्विगुरनुकृष्यते। यस्मिन्नर्थे द्वन्द्व एकार्थीभवति, तस्मिन्नेवार्थे दिगोरप्येकवद्भावो यथा स्यादिति। द्वन्द्वश्च समाहार एवैकार्थी भवति, नान्यत्र। तस्माद् द्विगोरप्येकवद्भावस्तत्रैव भवति; अतः समाहारे द्विगोरेवेदं ग्रहणं युक्तं भवति। यदि तर्हि समाहारद्विगोरेवेदं ग्रहणं तदा निष्प्रयोजनोऽतिदेशः, तथा हि-समाहारो द्विगोरर्थः, समाहारश्च भावसाधनः, समाहरणं समाहारः = समुदायः, स चैक एव। तत्र न्यायप्राप्तमेवैकवचनमिति निष्फलः सूत्रारम्भः? नैतदस्ति; यतः 'समुदायिभ्योऽनन्यः समुदायः' इत्यस्मिन् दर्शनेऽनेकद्रव्यात्मकत्वात् समुदायस्यैकवचनं न सिद्ध्यतीतीद-

**पदमञ्जरी**

अथ क्रियमाणेऽपि समाहारग्रहणे इह कस्मान्न भवति—पञ्चपूली च पञ्चपूली च पञ्चपूल्य इति, शिष्य-माणस्य द्विगुत्वात्तदर्थस्यैकवद्भावः प्राप्नोति? न वा; बहिरङ्गत्वाद्, बहिरङ्गोऽयं द्विग्वर्थः सत्येव द्विगावेकशेषात्प्रागभावादेकशेषे सति पश्चादुपजायमानत्वादन्तरङ्गे प्राथमकल्पिके द्विग्वर्थे चरितार्थं एक-वद्भावोऽत्र न भविष्यति। यद्येवम्, पञ्चगवः पटा इत्यत्राप्येवमेव भविष्यति? सत्यम्; यदा पटाः प्रत्येकं पञ्चभिर्गोभिः क्रीताः यदा तु बहवः पटाः संहताः पञ्चभिर्गोभिः क्रीयन्ते तदाऽयमेकशेषस्याविषयः। यदि तर्हि समाहारद्विगोर्ग्रहणम्, नार्थोऽनेन, कथम्? समाहरणं समाहारः = समूहः, तस्यैकत्वाद्यूथं वनमित्यादि-वदेकवचनं भविष्यति।

यदि तर्हि समाह्रियत इति समाहार इति कर्मसाधनः समाहारशब्दः, तदाऽपेक्षितपरस्पराः पञ्चपूलाः समासार्थं इति बहुवचनप्रसङ्गेऽतिदेश आरभ्यते, तदाह—प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधि-करण्याच्च द्विगोरेकवचनविधानमिति। अधिकरणं द्रव्यम्, संख्यावाची पञ्चादिशब्दः, यत्संख्याविशिष्टं द्रव्यमभिधीयते तदभिधानयोग्यं वचनमुत्पद्यते। पञ्चपूलीशब्देन पञ्चपूलाः समाह्रियमाणा उच्यन्ते, अतः समासार्थस्य पञ्चादिभिः सामानाधिकरण्याद् द्विवचनबहुवचनप्रसङ्गे एकवचनं विधीयत इत्यर्थः। संख्यासामाना-धिकरण्यादित्यनेन कर्मसाधनत्वं समाहारशब्दस्य दर्शयति, भावसाधने तु वैयधिकरण्यं पञ्चानां पूलानाम्। न वा समाहारैकत्वादिति, अयमर्थः—तिरोहितावयवभेदः समूहरूपः समाहारो द्विग्वर्थस्तस्यैकत्वाद्वनादिवदेक-

**भावबोधिनी**

समाहारः ]—पञ्चपूली [ दशपूलाः समाहृताः = दशानां पूलानां समाहारः— ] दशपूली [ घास आदि के पाँच गट्ठरों का समूह, दश गट्ठरों का समूह।] द्विगु का अर्थ एक होता है अतः अनुप्रयोग में भी एकवचन होता है–पञ्चपूलीयं शोभना इति।

विमर्श—सूत्रस्थ 'वचन' शब्द में कर्ता अर्थ में ल्युट = अन प्रत्यय है—वक्ति इति वचनम्, एकस्य वचनम् = एकवचनम्। एक अर्थ को कहने वाला। इस स्थिति में 'द्विगु' एकवचन, यह पुंल्लिङ्ग होना चाहिये था? यहाँ लिङ्ग सामान्य की विवक्षा के कारण नपुंसक लिङ्ग का प्रयोग है। यहाँ यौगिक 'वचन' शब्द ही लेना चाहिये। पारिभाषिक लेने पर तो 'द्विगोरेकवचनम्' ऐसा होने लगता। जहाँ समाहार अर्थ में द्विगु होता है वहाँ उद्भूतावयवभेद की विवक्षा में अवयवगत बहुत्व के कारण बहुवचन की प्राप्ति होती है। वही 'एकवत्' हो यह अतिदेश करने के लिये सूत्र है।

इस सूत्र से एकवद्भाव करने पर 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इस वचन के अनुसार स्त्रीलिङ्ग होने पर 'द्विगोः' सूत्र से ङीप् होता है—पञ्चानां पूलानां समाहारः—पञ्चपूली जहाँ उत्तरपद अकारान्त नहीं रहता है वहाँ 'स नपुंसकम्' ( पा० सू० ) सूत्र से नपुंसकलिङ्ग होने पर—पञ्चानां गवां समाहारः—पञ्चगवम् आदि रूप होते

**पञ्चपूलाः समाहृताः पञ्चपूली । दशपूली । द्विग्वर्थस्यैकत्वादनुप्रयोगेऽप्येकवचनं भवति--पञ्चपूलीयं शोभनेति ॥**

**९३६. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥ ( ९०६ )**

**न्यासः**

मारब्धम् । तथा चोक्तं भाष्ये—'प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचने विधानम्' इति । प्रत्यधिकरणम् = प्रतिद्रव्यम् । वचनस्योत्पत्तौ प्रत्यभिधेयद्रव्यसमवायिनी सङ्ख्याविभक्तिः प्रयोजिकोत्पद्यते । द्विगोश्च योऽर्थः सोऽनेकद्रव्यात्मकः तथा हि—पञ्च पूलाः समाहृताः । समाह्रियमाणानां पूलानां पञ्चसंख्यावच्छिन्नत्वात् संख्यासामानाधिकरण्याच्च पञ्चैतानि द्रव्याणीति कृत्वा समुदायस्यैकवचनं न सिद्धयति । तत्रासत्यस्मिन् वचने बहुत्वाद् बहुवचनं स्यात् । अत एकवद्भावो विधीयत इति वाक्यार्थः ।

'समुदायिभ्योऽन्यः समुदायः' इत्यस्मिन् दर्शने सूत्रमिदं प्रत्याख्यातव्यमेव । तथा चोक्तम् भाष्ये—'न वा समाहारैकत्वात्' इति । न वा योगारम्भेणैवार्थः । यस्मादेकोऽयमर्थः समाहारो नाम । तत्रैकत्वादेकवचनं भविष्यतीति वाक्यार्थः । पञ्चपूलीति । 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीत्वे सति 'द्विगोः' इति ङीप् । अर्थस्यैकत्वादित्यादिनाऽर्थातिदेशस्य फलं दर्शयति ॥ १ ॥

**द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥** अत्राङ्गशब्दः समुदाये परिसमाप्यते ? प्रत्येकं परिसमाप्यते वा ? तत्र यदि समुदाये परिसमाप्येत तदैकमेवेदं वाक्यं स्यात्, तथा च व्यतिकरः प्रसज्येत । प्राणितूर्यसेनाङ्गानां परस्परसहितानां यो द्वन्द्वो व्यतिकीर्णावयवस्तस्यैकवद्भावः स्यात् । प्रत्येकं परिसमाप्तौ त्वेष दोषो न भवति ।

**पदमञ्जरी**

वचनसिद्धेर्नात्र सूत्रेण प्रयोजनम् । अवश्यं च तद् भावसाधनः समाहार आश्रयणीयः; अन्यथा पञ्चानां खट्वानां समाहारः पञ्चखट्वीत्यत्र वा टाबन्त इति स्त्रीत्वपक्षे खट्वाशब्दस्यानुपसर्जनत्वात् ह्रस्वो न स्यात् । अनुपसर्जनत्वं चाप्रथमानिर्दिष्टत्वादनेकविभक्तित्वाच्च । भावसाधने तु पञ्चानां खट्वानां समाहारः, समाहारं समाहारेणेति समासार्थस्य नानाविभक्तियोगेऽपि खट्वाशब्दस्य नित्यं षष्ठ्यन्तत्वात् 'एक विभक्ति च' इत्युपसर्जनत्वाद् ह्रस्वत्वं सिध्यति, एकवचनमित्येतदुत्तरार्थं कर्तव्यमेव । **पञ्चपूलीति ।** 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गत्वाद् 'द्विगोः' इति ङीप् ॥ १ ॥

**द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥** इह यस्य द्वन्द्वस्य कश्चिदवयवः प्राण्यङ्गवाची, कश्चित्तूर्याङ्गवाची, कश्चित्सेनाङ्गवाची; यथा—पाणिमार्दङ्गिकाश्वारोहा इति, स व्यतिकीर्णावयवोऽपि प्राण्यङ्गादीनां द्वन्द्वो

**भावबोधिनी**

हैं । त्रिलोकी अष्टाध्यायी, रासपञ्चाध्यायी आदि शब्द इसी प्रकार बने हैं । आगे 'यात्रादिगण' में पठित शब्द हैं, उनमें अकारान्त होने पर स्त्रीलिङ्गत्व का निषेध हो जाता है, नपुंसकलिङ्ग होता है--'पञ्चपात्रम्' आदि ॥ १ ॥

'एकवचनम्' इसकी अनुवृत्ति होती है । [ सूत्रघटक ] अङ्ग शब्द की प्रत्येक के साथ परिसमाप्ति होने से, सम्बन्ध होने से तीन वाक्य बनते हैं -(१) प्राणी के अङ्गों का द्वन्द्व एकवत् होता है, और (२) वाद्यों के अङ्गों का द्वन्द्व एकवद् होता है, तथा (३) सेना के अङ्गों का द्वन्द्व एकवत् होता है । उदा०—(१)प्राणी के अङ्गों का—पाणिपादम् [ हाथ और पैर । पाणी च पादौ च एषां समाहारः इसमें समाहार द्वन्द्व होता है । प्रस्तुत सूत्र से एकवद्भाव करने से एकवचन होता है । ] शिरोग्रीवम् [ सिर और गर्दन । शिरः च ग्रीवा च —इस विग्रह में समाहार द्वन्द्व एकवद्भाव, नपुंसकत्व, ह्रस्व करने पर यह रूप बनता है । ] (२) वाद्यों के अङ्गों का—मार्दङ्गिक पाणविकम् [ मृदंग बजाने वाले और पाणु बजाने वाले । मार्दङ्गिकाः पाणविकाश्च—एषां समाहारः—यह विग्रह है । ] वीणावादक-

**'एकवचनम्' इति वर्त्तते। अङ्गशब्दस्य प्रत्येकं वाक्यपरिसमाप्त्या त्रीणि वाक्यानि संपद्यन्ते। प्राण्यङ्गानां द्वन्द्व एकवद्भवति, तथा तूर्याङ्गानां सेनाङ्गानां च। प्राण्यङ्गानां तावत्–पाणिपादम्। शिरोग्रीवम्। तूर्याङ्गानाम्—मार्दङ्गिकपाणविकम्। वीणावादकपरिवादकम्। सेनाङ्गानाम्-रथिकाश्वारोहम्। रथिकपादातम्। हस्त्यश्वादिषु परत्वात्पशुद्वन्द्वे विभाषयैकवद् ( २.४.१२ ) भवति।**

**न्यासः**

तत्र हि प्राण्यङ्गानां द्वन्द्व एकवद्भवतीत्येवमादीनि त्रीणि वाक्यानि सम्पद्यन्ते। स्वविषये यत्र बहुवचनान्तं वाक्यं क्रियते तत्र प्रथमेन वाक्येन प्राण्यङ्गानां प्राण्यङ्गैरेव यः समासस्तस्यैकवद्भावो विधीयते। द्वितीयेन वाक्येन तूर्याङ्गानां तूर्याङ्गैः। तृतीयेन सेनाङ्गानां सेनाङ्गैरिति न भवति सङ्करप्रसङ्गः। न हि चतुर्थं वाक्यमस्ति येन व्यतिकीर्णावयवस्य द्वन्द्वस्यैकार्थता स्यादिति मन्यमानः प्रत्येकं वाक्यपरिसमाप्तिपक्षमाश्रित्याह—**अङ्गशब्दस्येत्यादि**। तथा तूर्याङ्गानामिति द्वन्द्व एकवद्भवतीत्यपेक्ष्यते। एवं सेनाङ्गानाञ्चेत्यत्रापि। **पाणिपादमिति**। अत्र यदि प्राण्यङ्गमपि प्राणिग्रहणेन गृह्यते तदा 'जातिरप्राणिनाम्' इति प्रतिषेधे प्राप्ते वचनमिदम्। अथ न गृह्यते तदा जातित्वादेव सिद्धे व्यतिकरनिरासार्थम्। **मार्दङ्गिकपाणविकमिति**। इहाप्यप्राणिनामिति प्रतिषेधे प्राप्ते वचनमिदम्। अप्राणिनान्तु 'जातिरप्राणिनाम्' इत्येवं सिद्धम्, यथा—पणवमृदङ्गमिति। **रथिकाश्वारोहमिति**। रथिकाश्चाश्वारोहाश्चेति वृत्तिपदार्थस्य बहुत्वं दर्शयितव्यम्। यस्माद् बहुत्वमेव सेनाङ्गत्वे कारणम्। बहुत्वाभावे सेनाङ्गत्वान्नास्तीति रथिकाश्वारोहाविति भवितव्यम्। **हस्त्यश्वादिषु**

**पदमञ्जरी**

भवत्येवेत्येकवद्भावः प्राप्नोति, तत्राह—**अङ्गशब्दस्येत्यादि**। ननु पूर्वपक्षेऽपि प्रत्येकमेव परिसमाप्तिरङ्गशब्दस्य, न हि प्राणितूर्यसेनानामेकमङ्गं सम्भवति? एवं तर्ह्यङ्गानामेव रूपस्य बहुवचनान्तस्य सतोऽङ्गशब्दस्य प्रत्येकं सम्बन्धः, न तु प्रत्येकपरिसमाप्तस्य पश्चाद्बहुवचनसम्बन्धः। **त्रीणि वाक्यानि संपद्यन्त इति**। सूत्रं तु तेषामेव ग्रहणकवाक्यमिति भावः। तत्र प्रथमेन वाक्येन प्राण्यङ्गानां प्राण्यङ्गयोरेव द्वन्द्वः कृतस्तस्यैकवद्भावो विधीयते, द्वितीयेन तूर्याङ्गानां तूर्याङ्गैरेव, तृतीयेन सेनाङ्गानां सेनाङ्गैरेवेति न संकरप्रसङ्गः। तथा तूर्याङ्गानामिति द्वन्द्व एकवद्भवतीत्यपेक्षते, अत्राङ्गशब्द उपकारकवचनः पूर्वत्रोत्तरत्र चावयववचनः सेनाङ्गानां चेति पूर्ववदपेक्षा। **पाणिपादमिति**। अत्र 'जातिरप्राणिनाम्' इत्येव सिद्धे व्यतिकरनिरासार्थं वचनम्। **मार्दङ्गिकपाणविकमिति**। 'शिल्पम्' इति ठक्। **वीणावादकेति**। 'नित्यं क्रीडाजीविकयोः' इति समासः, विपञ्ची परिवादिनी, तज्जीविकः=परिवादकः। पणवमृदङ्गमित्यादौ तु 'जातिरप्राणिनाम्' इत्येव सिद्धम्। **रथिकाश्वारोहमिति**। कथं रथवाजिपत्तिकरिणीसमाकुलमिति ( शिशु० १३.१७ ), यावतैकवद्भावे सति नपुंसकह्रस्वत्वेन भाव्यम्? निरङ्कुशाः कवयः। रथवाजिपत्तिसहिताः करिण्यो रथवाजिपत्तिकरिण्यस्ताभिः समाकुलमिति वा समर्थनीयम्।

**भावबोधनी**

परिवादकम् [ वीणा बजाने वाले और परिवादक का अर्थ विपञ्ची नामक वाद्य को बजाकर जीविका चलाने वाले। ] (३) सेना के अङ्गों का—रथिकाश्वारोहम् [ रथों पर सवार और घोड़ों पर सवार सैनिकों का समूह। ] रथिकपादातम् [ रथों पर सवार और पैदल चलने वाले सैनिकों का समूह। ] हस्त्यश्व [ हस्ती च अश्वश्च एषां समाहारः ] आदि शब्दों में, परवर्ती सूत्र होने के कारण, पशुओं के द्वन्द्व में [ विभाषा वृक्षमृग—पा. सू. २।४।१२ से ] विकल्प से एकवद्भाव होता है।

इतरेतरयोग में और समाहार में द्वन्द्व का विधान किया गया है। इनमें समाहार [ =समुदाय ] एक होता है अतः एकवचन सिद्ध ही है। परन्तु यह प्रकरण विषयविभाग के लिये है—(१) प्राणियों के अङ्गों आदि का समाहार

**इतरेतरयोगे समाहारे च द्वन्द्वो विहितः, तत्र समाहारस्यैकत्वात्सिद्धमेवैकवचनम्? इदं तु प्रकरणं विषयविभागार्थम्—प्राण्यङ्गादीनां समाहार एव द्वन्द्वः, दधिपयआदीनामितरेतरयोग एव** ( २.४.१४ ), **वृक्षमृगादीनाम्** ( २.४.१२ ) **उभयत्रेति** ॥

**न्यासः**

**परत्वात् पशुद्वन्द्वविभाषयैव भवितव्यमिति।** 'विभाषा वृक्षमृग' इत्यादिना। **इतरेतरयोग** इत्यादिना द्वन्द्वप्रकरणस्य प्रयोजनं दर्शयति। **प्राण्यङ्गादीनां समाहार** एवेत्यादिना विषयविभागार्थतां स्पष्टीकरोति॥ २॥

**पदमञ्जरी**

द्वन्द्वश्चेत्यारभ्य 'विभाषा समीपे' इत्यन्तस्य प्रकरणस्यानारम्भणीयतां शङ्कते—**इतरेतरयोग इत्यादि। सिद्धमेवैकवचनमिति।** ततश्चानारम्भणीयं प्रकरणमिति भावः। परिहरति—**इदं त्विति।** कः पुनरसौ विषयविभाग इत्याह—**प्राण्यङ्गादीनामिति।** कथं पुनः प्राण्याङ्गादीनां द्वन्द्व एकवचनो भवतीत्यस्य वचनस्य प्राण्यङ्गादीनां समाहार एवेत्यर्थो भवतीति? वचनव्यक्तिभेदात्। एवं ह्यत्र वचनं व्यज्यते—य एकवचनो द्वन्द्वः स एषां भवतीति, न पुनः प्राण्यङ्गादीनां यो द्वन्द्व इत्यनूद्य तस्यैकवचनता विधीयते। एकवचनान्तश्च द्वन्द्वः समाहारद्वन्द्वः, स प्राण्यङ्गादीनामपि 'चार्थे द्वन्द्वः' इत्येव सिद्ध इति स एवैषामिति नियमः संपद्यते; दधिपयआदिष्वपि येषां ब्रह्मप्रजापत्यादीनामनेन प्रकरणेन नियमस्याप्राप्तिस्तेषां तावत् 'चार्थे द्वन्द्वः' इत्यनेन प्राप्तो द्वन्द्वः प्रतिषिध्यते। य एकवचनो द्वन्द्वः स एषां न भवतीति वचनव्यक्त्याश्रयेण येषामपि दधिपयसी इत्यादीनां 'जातिरप्राणिनाम्' इति नियमस्य प्राप्तिस्तेषाम् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या० परि० १९) इति यद्यपि नियमस्य प्रतिषेधो युक्तः, तथापि ब्रह्मप्रजापत्यादिभिः साहचर्यादेकवचनो द्वन्द्व इत्येतावन्मात्रस्यापेक्षणात्समाहारद्वन्द्व एव प्रतिषिध्यते, न नियमः। वृक्षादिविभाषाप्रयोजनं तु तत्रैव वक्ष्यामः।

अथैवं कस्मान्न विज्ञायते—इतरेतरयोगपक्षेऽप्राप्त एकवद्भावो विधीयत इति? उच्यते—यदीतरेतरयोगविहितद्वन्द्वस्यैकवद्भावो विधीयेत, 'द्वन्द्वाच्चुदषहान्त' इत्यादिना समाहारनिबन्धनं कार्यं न स्याद्। दधिपयआदिषु तु यस्य द्वन्द्वस्यैकवचनप्राप्तिस्तस्य प्रतिषिध्येतेति समाहारद्वन्द्वस्यैकवचनतायां प्रतिषिद्धायामपि द्वित्वबहुत्वाभावाद् द्विवचनबहुवचने न स्यातामतो नियम एवाङ्गीकर्त्तव्यः। अत्र च व्याख्यानमेव शरणम्। अथ नियमोऽपि भवन्नेवमेव कस्माद्भवति—प्राण्यङ्गादीनां समाहार एवेति? न पुनः—प्राण्यङ्गादीनामेव समाहार इति? उच्यते—एवं हि विज्ञायमाने दधिपयआदिषु येषामनेन प्रकरणेन नियमो न प्राप्नोति तेषु प्रतिषेधोऽनर्थकः स्यात्, तिष्यपुनर्वस्वोरिति बहुवचनग्रहणमनर्थकं स्यात्। तद्धितसमाहारद्वन्द्वपक्षे तिष्यपुनर्वस्विदमित्यत्रैकवचनस्य प्रसङ्गे द्विवचनं मा भूदित्येवमर्थम्। यदि च त्वदुक्तो नियमः स्यात्तिष्यपुनर्वस्वोरत्र प्रकरणेऽसङ्कीर्त्तितयोः समाहारद्वन्द्वाभावादनर्थकं तत्स्यात्, अतो **वृत्तिकारोक्तमेव** नियमस्वरूपमिति निरवद्यम्॥ २॥

**भावबोधिनी**

में ही द्वन्द्व होता है, (२) दधिपय आदि शब्दों का इतरेतरयोग में ही द्वन्द्व होता है, (३) वृक्षमृग आदि शब्दों का दोनों [ इतरेतरयोग और समाहार ] में द्वन्द्व होता है।

**विमर्श**—प्राणितूर्यसेना—यह द्वन्द्व करके 'अङ्ग' के साथ समास होता है। अतः 'अङ्ग' शब्द का सम्बन्ध तीनों के साथ होने से तीन वाक्य बनते हैं।

जब प्राणी का अंग भी प्राणी मान लिया जाता है उस पक्ष में 'जातिरप्राणिनाम्' पा० सू० २।३।६ सूत्र से निषेध प्राप्त है उसके लिये यहाँ विधान है। इसी प्रकार अन्य उदाहरणों में भी यह विधान कर रहा है।

मृदङ्ग एक प्रसिद्ध वाद्य है उसी प्रकार पणव भी एक वाद्य है। यहाँ तूर्य = वाद्य शब्द उनके बजानेवाले के अर्थ

## ८३७. अनुवादे चरणानाम् ॥ ३ ॥ ( ९०७ )

**चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते। चरणानां द्वन्द्व एकवद्भवति, अनुवादे गम्यमाने। प्रमाणान्त-**

### न्यासः

**अनुवादे चरणानाम्॥ चरणशब्द इत्यादिना** सूत्रस्य विषयं दर्शयति। तथा हि—यो हि कठादिप्रोक्ताध्ययनविशेषः शाखा, तत्र यदा चरणशब्दो वर्त्तते तदा 'जातिरप्राणिनाम्' इत्येव सिद्धम्। यदा तु शाखानिमित्तकः पुरुषेषु वर्त्तते तदाऽप्राणिनामिति प्रतिषेधान्न सिद्ध्यतीतीदमारभ्यते। **शाखानिमित्तक इति**। शाखा निमित्तमस्येति बहुव्रीहिः। **प्रमाणान्तरावगतस्येति**। शब्दात् प्रमाणाद् यदन्यत् प्रमाणं तत् प्रमाणान्तरम्, तत्

### पदमञ्जरी

**अनुवादे चरणानाम्॥** चरणशब्दः कठकालापादिषु शाखाभेदेषु मुख्यः, तदध्यायिषु पुरुषेषु गौणः। उभयेषां चैषां 'गोत्रञ्च चरणैः सह' इति जातिसंज्ञा, तत्र शाखाभेदवाचिनः 'जातिरप्राणिनाम्' इत्येकवद्भावस्य सिद्धत्वाद् गौणोऽपि पुरुषवृत्तिरेव गृह्यत इत्याह—चरणशब्दः **शाखानिमित्तक इति**। शाखाध्ययननिमित्तक इत्यर्थः। **गौण** इति क्वचित्पठ्यते, क्वचिन्न! **प्रमाणान्तरावगतस्येति**। शब्दादन्यत्प्रमाणं प्रमाणान्तरम् =

### भावबोधिनी

में है इसीलिये वादक को भी वाद्य = तूर्य का अङ्ग मानकर एकवद्भाव होता है। मृदङ्गवादनं शिल्पमस्य इस अर्थ में 'शिल्पम्' पा० सू० ४।४।५५ से ठक् = इक प्रत्यय और आदिवृद्धि करके मार्दङ्गिक बनता है। इसी प्रकार पणववादनं शिल्पम् अस्य--इस अर्थ में पाणविक बनता है।

चूंकि समाहार एक होता है, उसमें भी द्वन्द्व का विधान है अतः एकत्व स्वतः सिद्ध इस सूत्र की क्या उपयोगिता ? इस शंका का समाधान यह है कि -(१) प्राणियों के अङ्गों आदि का केवल समाहार में ही द्वन्द्व होता है। (२) दधिपय आदि [ पा० सू० २।४।१४ में पठित ] शब्दों का इतरेतर योग में ही द्वन्द्व होता है। और (३) वृक्षमृग [ पा० सू० २।४।१२ में पठित ] शब्दों का दोनों अर्थों में द्वन्द्व होता है--इस विषयविभाग का ज्ञान कराने के लिये प्रस्तुत प्रकरण है ॥ २ ॥

चरण शब्द शाखा के अध्ययन को मानकर है, उनके अध्येता पुरुषों के अर्थ में प्रयुक्त है—चरण = शाखाओं के अध्येताओं का द्वन्द्व एकवत् होता है यदि अनुवाद प्रतीत हो रहा हो तो। अन्य किसी प्रमाण से अवगत [ मालूम होने वाले ] अर्थ का शब्द द्वारा संकीर्तन = अनुवाद है। अर्थात् शब्द प्रमाण से भिन्न प्रत्यक्षादि प्रमाण से जिस अर्थ का ज्ञान हो चुका है उसी को शब्द से कहना अनुवाद है। उदा०—उदगात् कठकालापम् [ कठ और कालाप का उदय हुआ ]। प्रत्यष्ठात् कठकौथुमम् [ कठ और कौथुम की प्रतिष्ठा हुई। ] जब कठ और कालाप आदि की उन्नति = उदय और प्रतिष्ठा किसी अन्य प्रमाण से ज्ञात हो चुकी है, वहाँ पुनः शब्द से अनुवाद होता है, तब इस प्रकार के उदाहरण बनते हैं। किन्तु जब पहली बार ही ऐसा कहा जाता है तब [ अनुवाद न होने से ] प्रत्युदाहरण बन जाता है। [इसकी व्याख्या विमर्श में आगे देखें। ]

अनुवाद में--इसका क्या फल है ? उदगुः कठकालापाः। [ कठों और कालापों ने उन्नति की ] प्रत्यष्ठुः कठकौथुमाः [ कठों और कालापों ने प्रतिष्ठा प्राप्त की। यहाँ अनुवाद नहीं है। अतः एकवद्भाव नहीं होता है।]

रावगतस्यार्थस्य शब्देन संकीर्त्तनम्[१] = अनुवादः। उदगात्कठकालापम्। प्रत्यष्ठात् कठकौथुमम् ( म० भा० )। कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते तदैवमुदाहरणम्। यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम्।

अनुवादे इति किम् ? उदगुः कठकालापाः। प्रत्यष्ठुः कठकौथुमाः ॥

❀ स्थेणोरद्यतन्यां चेति वक्तव्यम् ❀ म० भा० २.४३ वा० १,२। स्थेणोरिति किम् ? अनन्दिषुः

**न्यासः**

पुनः प्रत्यक्षादि। तेनावगतस्य परिच्छिन्नस्य शब्देन संकीर्त्तनमात्रमिति मात्रशब्दोऽर्थावगतिव्युदासार्थः। **उदगात्, प्रत्यष्ठादिति**। उत्पूर्वादिणः प्रतिपूर्वात् तिष्ठतेर्लुङ्, 'इणो गा लुङि' इति गादेशः, 'गातिस्था' इति सिचो लुक्। **कठकालापमिति**। कठेन प्रोक्तमधीयत इति कठाः। कठशब्दात् प्रोक्तार्थे 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः, तस्य 'कठचरकाल्लुक्', ततः 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्', 'छन्दोब्राह्मणानि च तद्विषयाणि' इति तद्विषयता। कलापिना प्रोक्तमधीयत इति कलापाः। प्रोक्तार्थे कलापिनोऽण्, 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते 'सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिशूकरसद्म-सुपर्वणामुपसंख्यानम्' इति टिलोपः। ततः 'तदधीते तद्वेद' इत्यण्। तस्य 'प्रोक्ताल्लुक्' इति लुक्। पूर्ववत् तद्विषयता च। कठाश्च कालापाश्च कठकालापम्। **यदा तु प्रथमत एवोपदेश इति**। अनवगतस्यैव प्राक् प्रमाणान्तरेण शब्देनाद्यं प्रत्यायनमर्थस्य प्रश्ने प्रतिवचने वोपदेशः, स यदा भवति तदात्र प्रत्युदाहरणम्। **उदगुरिति**। 'आतः' इति झेर्जुस्। 'उस्यपदन्तात्' इति पररूपत्वम्। **स्थेणोरद्यतन्याञ्चेति वक्तव्यमिति**।

**पदमञ्जरी**

प्रत्यक्षादि। **सङ्कीर्त्तनमात्रमिति**। मात्रशब्दोऽवगतिव्युदासाय। नन्वर्थप्रतिपादनाय प्रयोगः, स चेदर्थः प्रमाणान्तरेणावगतः, किमिति शब्दः प्रयुज्यते ? कार्यान्तरविधानार्थम्। यदा हि कठकालापेषूदितेषु आवाभ्यां तत्र गन्तव्यमिति संवादः कृतो भवति, स च विस्मृत्योदास्ते तदा तं प्रतीदमुच्यते—ननूदस्थात्कठकालापं किमास्यते इति। कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वाण्णिनिः, 'कठचरकाल्लुक्', कलापिशब्दात् 'कलापिनोऽण्' 'नान्तस्य टिलोपे सब्रह्मचारि०' ( वा० ७९८ ) इत्यादिना टिलोपः, उभयत्राध्येत्रणो लुक्। एतेन कौथुमो व्याख्यातः। **यदा तु प्रथमत एव शब्दोपदेश इति**। प्रमाणान्तरेणानवगतस्य शब्देनाद्यं प्रत्यायन-

**भावबोधिनी**

* यह एकवद्भाव √ 'स्था' और √ इण् इन दो धातुओं के योग में और अद्यतनी = लुङ् के विषय में होता है ऐसा कहना चाहिये। * [ इसलिये उदाहरणों में 'स्था' और 'इण्' के ही लुङ् लकार के रूपों का प्रयोग किया गया है--इसका क्या फल है ? अनन्दिषुः कठकालापाः। [ कठ और कालाप आनन्दित हुये। यहाँ √ टुनदि समृद्धौ धातु है। अतः एकवद्भाव नहीं होता है। ] अद्यतनी = लुङ् लकार में ही—इसका क्या फल है ? उद्यन्ति कठकालापाः [ कठ और कालाप उन्नति प्राप्त करते हैं। यहाँ अद्यतनी = लुङ् नहीं है, लट् है। अतः एकवद्भाव नहीं होता है। ]

**विमर्श**—किसी शाखा विशेष का अध्ययन चरण होता है, यहाँ यह अध्ययन कर्ता पुरुषों का प्रतिपादक है। अतः जब किसी शाखा विशेष के अध्येताओं का द्वन्द्व होता है। और अनुवाद की प्रतीति होती है तब एकवद्भाव होता है। कठेन प्रोक्तम् अधीयते इसमें पहले 'तेन प्रोक्तम्' पा.सू. ४।३।१०१ के अन्तर्गत 'कलापिवैशम्पायनान्तेवासिभ्यश्च' पा.सू. ४।३।१०४ से 'णिनि' प्रत्यय होता है, 'कठचरकाल्लुक्' पा. सू. ४।३।१०७ इससे इस णिनि का लुक् होने से मूल शब्द ही बचता है।

१. 'सङ्कीर्तनमात्रम्' पदमञ्जरीसम्मतः पाठः।

कठकालापाः। अद्यतन्यामिति किम् ? उद्यन्ति कठकालापाः ॥

६३८. अध्वर्युक्रतुरनपुंसकम् ॥ ४ ॥ ( ९०८ )

अध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुः। अध्वर्युक्रतुवाचिनां शब्दानामनपुंसकलिङ्गानां द्वन्द्व

न्यासः

व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'तुल्यार्थैरतुलोपमाभ्याम्' इत्यतः सूत्रादन्यतरस्यामित्यनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन स्थेणोरद्यतन्यामनुवादे चरणानामेकवद्भावो भविष्यति, नान्यत्रेति। अद्यतनीति लुङः पूर्वाचार्यप्रणीतैषा संज्ञा। अनन्दिषुरिति। 'टुनदि समृद्धौ', 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्। उद्यन्तीति। 'इणो यण्' इति यणादेशः॥ ३ ॥

अध्वर्युक्रतुरनपुंसकम्॥ अध्वर्युवेद इति। एतेनाध्वर्युशब्देनात्र यजुर्वेदो लक्ष्यत इति दर्शयति। अथाध्वर्योर्ऋत्विग्विशेषस्य यः क्रतुरिति क्रतुविशेषणमेवाध्वर्युग्रहणं कस्मान्न विज्ञायते ? असम्भवात्, को हि तस्य क्रतुर्भवति ? अपि तु धनव्ययशीलस्य। यदपि तस्य क्रतौ कर्तृत्वमस्ति तदपि ऋत्विगन्तरेण साधारण-मित्यध्वर्युणैकेन तस्य विशेषणमयुक्तम्। ननु चाथर्ववेदविहितो यः क्रतुस्तन्निवृत्त्यर्थमध्वर्युणैकेन कथं विशेषणं न स्यात्, न हि तत्राध्वर्यवः सन्ति ? नैतदस्ति; यदि ह्येतावत् प्रयोजनमभिमतं स्यात् तदाऽनथर्वण इति प्रतिषेधमेव कुर्यात्। लघीयसी हि साक्षात् प्रतिषेधे प्रतीतिर्भवति। त्रयीग्रहणं वा कुर्यात्। यदि चाध्वर्युणा

पदमञ्जरी

मित्यर्थः। उदगुरिति। 'आतः' इति झेर्जुस्, 'उस्यपदान्तात्' इति पररूपत्वम्। 'अद्यतनी' इति लुङः पूर्वाचार्य-संज्ञा। अनन्दिषुरिति। 'टुनदि समृद्धौ' ( धा० पा० ६७ ), 'सिजभ्यस्त' इति जुस्॥ ३ ॥

अध्वर्युक्रतुरनपुंसकम्॥ अध्वर्युशब्द ऋत्विग्विशेषे प्रसिद्धः, न च तेन क्रतोर्विशेषणमुपपद्यते, न हि सोऽस्ति क्रतुर्यत्राध्वर्योरनन्वयः, नापि सोऽस्ति यत्राध्वर्योरेवान्वय इति मुख्यार्थासम्भवादौपचारिकग्रहण-मित्याह—अध्वर्युवेद इति। यजुर्वेद इत्यर्थः। तत्र ह्याध्वर्यवं विधीयते। कर्मस्वरूपस्येतिकर्त्तव्यतायाः फलस्य चोपदेशः=विधानम्। अध्वर्युक्रतुवाचिनां शब्दानामनपुंसकलिङ्गानामिति। कथं तर्हि सूत्रे सामानाधिकरण्य-

भावबोधिनी

अतः—कठ=कठप्रोक्त। इस प्रोक्त प्रत्ययान्त 'कठ' शब्द से पुनः 'तदधीते तद्वेद' पा. सू. से अण् प्रत्यय होता है परन्तु इस अण् प्रत्यय का भी 'प्रोक्ताल्लुक' पा. सू. से लुक् हो जाता है अतः इस स्थिति में भी केवल 'कठ' ही बचता है। पूर्वोक्त प्रक्रिया के अनुसार 'कठ' द्वारा प्रोक्त शाखा का अध्ययन करने वाला—कठ कहा जाता है। इसी प्रकार कलापिना प्रोक्तम् अधीयते—इस अर्थ में कालापाः बनता है। कालापिना प्रोक्तम्—इस विग्रह में 'कालापिनोऽण्' पा सू. से अण् प्रत्यय, प्रकृतिभाव की प्राप्ति रहने पर भी टि=इन् का लोप, आदिवृद्धि कालापम्। इससे 'तदधीते तद्वेद' पा. सू. से पुनः अण होता है और यहाँ भी 'प्रोक्ताल्लुक' पा. सू. से लुक् हो जाता है। कठाश्च कालापाश्च—इति इति कठकालापम्।

किसी समय कठ शाखाध्यायियों और कालापशाखाध्यायियों की उन्नति आदि का प्रत्यक्षादि प्रमाण से ज्ञान करने के बाद जब शब्द से इसको पुनः कहा जाता है तभी उदाहरण बनते हैं। यह एकवद्भाव चरणों का ही होता है। तथा √स्था और √इण् का लुङ् लकार रहने पर ही होता है। अतः इसका क्षेत्र अति सीमित हो जाता है॥ ३ ॥

अध्वर्युवेद=यजुर्वेद में जिस क्रतु का विधान है वह अध्वर्युक्रतु होता है। अनपुंसकलिङ्ग अध्वर्युक्रतुवाची शब्दों का द्वन्द्व एकवत् होता है। अध्वर्युक्रतुः अनपुंसकम् 'द्वन्द्वः' यह गौण [ औपचारिक ] निर्देश है। [ अध्वर्युक्रतु के अवयवों का द्वन्द्व अध्वर्युक्रतुः और अनपुंसकलिङ्ग अवयव को अनपुंसक कहा गया है। यह शब्दलाघव के कारण है।]

एकवद्भवति । अध्वर्युक्रतुरनपुंसकं द्वन्द्व इति गौणो निर्देशः । अर्काश्वमेधम् । सायाह्नातिरात्रम् ।

अध्वर्युक्रतुरिति किम् ? इषुवज्रौ । उद्भिद्‍बलभिदौ । अनपुंसकमिति किम् ? राजसूयवाजपेये । इह कस्मान्न भवति—दर्शपौर्णमासौ ? क्रतुशब्दः सोमयागेषु रूढः ॥

**न्यासः**

क्रतुर्विशेष्येत तदेषुवज्रावित्यत्रापि स्यात् ? इषुवज्रावपि ह्यध्वर्योः क्रतू भवतः तयोरपि तत्कर्तृकत्वात् । तस्मादध्वर्यूणां यजुर्वेदविदां यो वेदः सोऽध्वर्युशब्देनोपलक्ष्यते । स पुनर्यजुर्वेदः । तत्राध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुरिति । इतिकर्त्तव्यतोपदेशः प्रयोगश्चानुष्ठानात्मको विधानशब्देनोक्तः । यदि तर्ह्यध्वर्युक्रतुवाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवद्भवतीति सूत्रार्थस्तदा सूत्रेऽध्वर्युक्रतुशब्दस्यानपुंसकमित्यस्य च द्वन्द्व इत्यनेन प्रकृतेन सामानाधिकरण्येन निर्देशो नोपपद्यते । अतोऽध्वर्युक्रतुवाचिनामनपुंसकलिङ्गानामिति वक्तव्यं स्यादित्यत आह—**अध्वर्युक्रतुरनपुंसकमिति । गौणोऽयं निर्देश इति** । गौण इत्यमुख्य औपचारिक इत्यर्थः । अध्वर्युक्रत्ववयवो द्वन्द्व उपचारेणाध्वर्युक्रतुरित्युक्तः । स एवानपुंसकलिङ्गावयवोऽनपुंसकमिति । गौणनिर्देशस्तु लाघवार्थो वेदितव्यः । यदि पुनरनपुंसकमित्यनेन मुख्यया वृत्त्या द्वन्द्व एवोच्येत तदा 'स नपुंसकम्' इत्यस्यापवादोऽयं विज्ञायेत । **अर्काश्वमेधमित्यादि** । अर्कश्चाश्वमेधश्चेत्यर्काश्वमेधम् । सायाह्नश्चातिरात्रश्चेति **सायाह्नातिरात्रम्** ।

**इषुवज्रावित्यादि** । इषुवज्रप्रभृतयोऽध्वर्युक्रतवो न सम्भवन्ति, न हि तेषामध्वर्युवेदे विधानम् । किं तर्हि ? सामवेदे । **राजसूयवाजपेये इति** । एतौ राजसूयवाजपेयशब्दौ पुंल्लिङ्गावपि स्तः । तत्र यदा नपुंसकलिङ्गौ प्रयुज्येते तत्रेदं प्रत्युदाहरणम् । **सोमयागेष्विति** । यत्र यत्र सोमपानं विहितं ते सोमयागाः । तेष्वेव क्रतुशब्दो रूढः । न च दर्शपौर्णमासौ सोमयागौ । 'अनपुंसकम्' इत्युपादानात् स्वरूपग्रहणमिह न भवति । न हि क्रतुसामान्यो नपुंसकलिङ्गो भवति ॥ ४ ॥

**पदमञ्जरी**

मित्याह— **अध्वर्युक्रतुरिति** । तादृशावयवत्वाद् द्वन्द्व एव तथोक्त इत्यर्थः । यदि पुनरनपुंसकमित्यनेन मुख्यया वृत्त्या द्वन्द्व एवोच्येत तदा 'स नपुंसकम्' इत्यस्यायमपवादो विज्ञायेत । न वाऽबाधेनोपपत्तौ सत्यां बाधो न्याय्यः । अर्कश्चाश्वमेधश्च **अर्काश्वमेधम्** । सायाह्नश्चातिरात्रश्च **सायाह्नातिरात्रम्** ।

**इषुवज्राविति** । सामवेदे एषां विधानम् । राजसूयवाजपेयशब्दावर्द्धर्चादिषु पठितौ, ततस्तौ नपुंसकलिङ्गौ प्रत्युदाहरणम् ॥ ४ ॥

**भावबोधिनी**

उदा०—अर्काश्वामेधम् [ अर्कश्च अश्वमेधश्च यह विग्रह है । द्वन्द्व के बाद एकवद्भाव और नपुंसकत्व अतिदेश होता है । ] सायाह्नातिरात्रम् [ सायाह्नश्च अतिरात्रश्च इस विग्रह में बनता है । ]

अध्वर्युक्रतु = यजुर्वेद का क्रतु—यह किस लिये है ? इषुवज्रौ । [ इषुश्च वज्रश्च ] उद्भिद्बलभिदौ [ उद्भित् च बलभित् च । ] ये सभी सामवेदीय क्रतु हैं । एकवद्भाव नहीं होता है । ] अनपुंसकलिङ्ग—इसका क्या फल है ? राजसूयवाजपेयौ [ राजसूय और वाजपेय शब्द अर्धर्चादिगण में पठित होने से विकल्प से नपुंसकलिङ्ग और पुल्लिङ्ग होते हैं । अतः इनका भी एकवद्भाव नहीं होता । यहाँ नपुंसकलिङ्ग रूपों का द्वन्द्व करके ही प्रत्युदाहरण समझना चाहिये । ] दर्शपौर्णमासौ—इसमें एकवद्भाव क्यों नहीं होता है ? क्रतु शब्द सोमयागों में रूढ़ है । [ जिस याग में सोमपान किया जाता है उसी में 'क्रतु' व्यवहार होता है । दर्श और पौर्णमास याग ऐसे नहीं है । अतः इनमें यह सूत्र प्रवृत्त नहीं होता है । ] ॥ ४ ॥

## ५३९. अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥ ( ९०९ )

**अध्ययनेन निमित्तेन येषामविप्रकृष्टा = प्रत्यासन्ना आख्या तेषां द्वन्द्व एकवद्भवति । पदकक्रमकम् । क्रमकवार्त्तिकम् । सम्पाठः = पदानां क्रमस्य च प्रत्यासन्नः ।**

**न्यासः**

**अध्ययनतोऽविप्रकृष्टाख्यानाम्** ॥ अधीतिरध्ययनमिति—भावसाधनोऽध्ययनशब्दः, कर्मसाधनो वा—अधीयत इत्यध्ययनमिति । **अध्ययनत इति** । 'आद्यादिभ्यस्तस्युपसंख्यानम्' इति हेतुतृतीयान्तात् तसिः । अत आह—**अध्ययनेन निमित्तेनेति** । **अविप्रकृष्टेति** । अविप्रकृष्टाऽऽख्या येषां तेऽविप्रकृष्टाख्याः । निमित्तस्य साधारणत्वादविप्रकृष्टता । तत् पुनर्निमित्तं सूत्रोपात्तमेवाध्ययनमाख्यानामधेयम् । **पदकक्रमकमिति** । पदमधीते, क्रममधीते इति 'क्रमादिभ्यो वुन्' । **क्रमकवार्त्तिकमिति** । वृत्तिमधीत इति वार्त्तिकः । क्रतूक्थादिसूत्रान्ताट् ठक् । कथं पुनः पदस्याध्येतुः क्रमस्य चाध्ययनेन निमित्तेनाविप्रकृष्टता भवतीत्याह—**सम्पाठ इत्यादि** । यस्मात् पदानां क्रमस्य च यः पाठः स नातिभिन्नः । ग्रन्थोऽपि तादृश एव, अतः प्रत्यासन्नः । यतश्च पदान्यधीत्य क्रमोऽध्येतव्यः, ततोऽपि सम्पाठस्तयोः प्रत्यासन्नः, ततश्च तेन सम्पाठेनाध्ययनेन

**पदमञ्जरी**

**अध्ययनतोऽविप्रकृष्टाख्यानाम्** ॥ आख्यायतेऽनेनेत्याख्येति शब्दमात्रमिहाख्याशब्देनोच्यते, न रूढिशब्द एव । असंदेहार्थं विप्रकृष्टाख्यानामध्ययनत इत्यकरणादविप्रकृष्टेति पदच्छेदः । आख्यानञ्च न स्वरूपेणाविप्रकर्षः, किन्तु प्रवृत्तिनिमित्तद्वारेण, तच्चेहाध्ययनम्, तदाह—**अध्ययनत इति** । अधीतिः = अध्ययनम्, अध्ययनेनाध्ययनतः, आद्यादित्वात्तसिः, प्रवृत्तिनिमित्तभूतस्याध्ययनस्याविप्रकृष्टत्वात्तद्द्वारेणाविप्रकृष्टा आख्या येषां तेऽध्ययनतोऽविप्रकृष्टाख्याः । एतदेवाह—**अध्ययनेन निमित्तेनेत्यादि** । **पदकक्रमकमिति** । पदान्यधीते पदकः, 'क्रमादिभ्योवुन्', एवं क्रमकः । वृत्तिः = संहिता, तामधीते वार्त्तिकः, उक्थादित्वाट् ठक्, अत्र प्रवृत्तिनिमित्तस्याध्ययनस्याविप्रकर्षं दर्शयति—**संपाठ इति** । संपठनं संपाठः, अध्ययनमित्यर्थः । **प्रत्यासन्न**

**भावबोधिनी**

अध्ययन रूपी निमित्त के कारण जिन शब्दों की अविप्रकृष्टा = प्रत्यासन्न = समीप की आख्या है, उन शब्दों का द्वन्द्व एकवद् होता है । उदा०—पदकक्रमकम् [ पदपाठ का अध्ययन करने वाले और क्रमपाठ का अध्ययन करने वाले ] क्रमकवार्तिकम् [ क्रमपाठ को पढ़ने वाले और वृत्ति = संहिता पाठ को पढ़ने वाले । ] पदों का और क्रम का सम्पाठ = अध्ययन प्रत्यासन्न = समीप है ।

अध्ययन के निमित्त से—इसका क्या फल है ? पितापुत्रौ [ पिता च पुत्रश्च यहाँ जन्यजनकभाव से प्रत्यासत्ति होने के कारण एकवद्भाव नहीं होता है । ] अविप्रकृष्ट आख्या वालों का—इसका क्या फल है ? याज्ञिकवैयाकरणौ । [ यज्ञ के अध्येता और व्याकरण के अध्येता यहाँ आख्या का निमित्त तो अध्ययन है परन्तु प्रत्यासत्ति नहीं है क्योंकि इन दोनों के अध्ययन से इनकी क्रिया की समीपता अथवा ग्रन्थ की समीपता नहीं है । ]

**विमर्श**—'अध्ययनतः' इसमें हेतु अर्थ में तस् प्रत्यय है । अतः 'अध्ययन हेतु' यह ज्ञात होता है । प्रवृत्तिनिमित्तभूत अध्ययन की अविप्रकृष्टता = समीपता से, इसके द्वारा जिनकी आख्या समीप की हो उनका द्वन्द्व एकवत् होता है । पदम् अधीते पदकः, क्रमम् अधीते क्रमकः—इनका द्वन्द्व होने पर एकवद्भाव होता है । पहले पदों को पढ़ा जाता है तब क्रम को पढ़ा जाता है अर्थात् पदपाठ के बाद क्रमपाठ का अध्ययन किया जाता है । अतः इनकी प्रत्यासत्ति

अध्ययनत इति किम् ? पितापुत्रौ । अविप्रकृष्टाख्यानामिति किम् ? याज्ञिकवैयाकरणौ ॥

९४०. जातिरप्राणिनाम् ॥ ६ ॥ ( ९१० )

**जातिवाचिनां शब्दानां द्वन्द्व एकवद्भवति, प्राणिनो वर्जयित्वा । आराशस्त्रि । धानाशष्कुलि ।**

**जातिरिति किम् ? नन्दकपाञ्चजन्यौ । अप्राणिनामिति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः ।**

**न्यासः**

निमित्तेन पदक इति क्रमक इति च याऽध्येतुराख्या सापि प्रत्यासन्ना भवतीत्यभिप्रायः । **पितापुत्राविति ।** 'आनङ् ऋतो द्वन्द्वे' इत्यानङादेशः । तत्र हि 'पुत्रेऽन्यतरस्याम्' इत्यतः पुत्र इत्यनुवर्त्तते । अत्रापि पितेति पुत्र इति चाख्ये प्रत्यासन्ने साधारणत्वान्निमित्तस्य । तथा हि जन्यजनकभावो द्वयोरपि तयोर्निमित्तम् । **याज्ञिकवैयाकरणमिति ।** यज्ञमधीते याज्ञिकः । क्रतूक्थादिना ठक् । व्याकरणमधीते वैयाकरणः । 'तदधीते तद्वेद' इत्यण् । अस्त्यत्राध्ययननिमित्तत्वमनयोराख्ययोः, न तु प्रत्यासत्तिः । न हि यज्ञाध्ययनेन व्याकरणाध्ययनेन वा तयोः क्रियाप्रत्यासत्तिर्नापि ग्रन्थप्रत्यासत्तिः ॥ ५ ॥

**जातिरप्राणिनाम् ॥** अयमपि गौण्या वृत्त्या जातिर्द्वन्द्व इति सामानाधिकरण्येन निर्देशः कृतः । जातिवाच्यवयवो द्वन्द्वो जातिरित्युक्तः । जातेश्च स्वरूपग्रहणं न भवति, अप्राणिनामिति प्रतिषेधात् । **आराशस्त्रीति ।** 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः ।

**नन्दकपापाञ्जन्याविति ।** संज्ञाशब्दयोरेव द्वन्द्वोऽयम्, न जातिशब्दयोः । अनेनाप्राणिनामित्यस्य

**पदमञ्जरी**

**इति ।** पदान्यधीत्य क्रमोऽध्येतव्य इति कृत्वा । एवं क्रमकवार्त्तिकमित्यत्रापि नानधीत्य संहितां क्रमोऽध्येतुं शक्य इति प्रत्यासत्तिर्विज्ञेया ॥ ५ ॥

**जातिरप्राणिनाम् ॥** जातिवाच्यवयवत्वाज्जातिर्द्वन्द्व इति गौणो निर्देशः । **आराशस्त्रीति ।** आरा = प्रतोदः । **धानाशष्कुलीति ।** षण्णां रसानां कुलं शष्कुली, गौरादिपाठाद्रूपसिद्धिः । **नन्दकपाञ्चजन्याविति ।** सञ्ज्ञाशब्दावेतौ, 'खड्गोऽस्य नन्दकः, शङ्खः पाञ्चजन्यः प्रकीर्त्तितः' ( अमर० १.१.२८ ) ।

**भावबोधनी**

होने से इनका द्वन्द्व एकवद् होता है । क्रम का अध्ययन करने के बाद वृत्ति = संहिता का अध्ययन किया जाता है । अतः इनकी भी समीपता है । इनको पढ़ने वालों का द्वन्द्व भी एकवद् होता है—क्रमकवार्तिकम् । क्रमपाठ पढ़नेवाले और संहितापाठ पढ़नेवाले ॥ ५ ॥

प्राणियों [ की जाति ] को छोड़कर अन्य जातिवाची शब्दों का द्वन्द्व एकवत् होता है । उदा०—आराशस्त्रि । [ आरा च शस्त्री च आरा = प्रतोद = लगाम, शस्त्री = लोहे की छुरी ] यहाँ द्वन्द्व करने पर एकवद्भाव और नपुंसक लिङ्ग होने से ह्रस्व होने पर रूप बनता है । धानाशष्कुलि । [ धाना च शष्कुली च यहाँ भी पूर्ववत् सभी प्रक्रिया होती है । धान और पूड़ी । ]

जातिवाची—इसका क्या फल है ? नन्दकपाञ्चजन्यौ । [ ये विष्णु के खड्ग और शङ्ख के नाम = संज्ञावाची हैं । अतः एकवद् नहीं होता है । ] प्राणियों का नहीं—इसका क्या फल है ? ब्राह्मण-क्षत्रियविट्शूद्राः । [ ये सभी प्राणी हैं । अतः इनमें भी एकवत् नहीं होता है । ]

**नञिवयुक्तन्यायेन ( व्या० परि० ६५ ) द्रव्यजातीनामयमेकवद्भावः, न गुणक्रियाजातीनाम्। रूपरसगन्धस्पर्शाः। गमनाकुञ्चनप्रसारणानि। जातिपरत्वे च जातिशब्दानामयमेकवद्भावो विधीयते, न नियतद्रव्यविवक्षायाम्—इह कुण्डे बदरामलकानि तिष्ठन्तीति ॥**

## ५४१. विशिष्टलिङ्गो नदी देशोऽग्रामाः ॥ ७ ॥ ( ९११ )

### न्यासः

पर्युदासतां दर्शयति। तेनायमर्थो भवतीत्याह—**नञिवयुक्तेत्यादि**। **रूपरसगन्धस्पर्शा इत्यादि** गुणजातिः। **गमनाकुञ्चनप्रसारणानीति** क्रियाजातिः। **जातिपरत्वे चेति**। यदा जातेः प्राधान्येन विवक्षा तदा जातेः परत्वे प्रधानत्वे सति जातिशब्दानामयमेकवद्भावो भवति। **न नियतद्रव्यविवक्षायामिति**। यदा क्वचिद् देशादौ नियतानां द्रव्यविशेषाणां विवक्षा भवति तदा जातिशब्दस्य प्रयोगेऽप्येकवद्भावो न भवति। कुत एतत्? जातिरित्यभिधानात् मुख्या जातिराश्रीयते, न गौणी। एतच्च प्रधाने कार्यसंप्रत्ययाल्लभ्यते। एतदुक्तम्भवति—यदा जातिरेव व्यक्तिविशेषमाश्रित्य प्रयुज्यते तदा नैकवद्भावः। यदा तु व्यक्तिविशेषमनाश्रित्य प्रयुज्यते तदैवैकवद्भाव इति। **बदरामलकानीति**। अत्र बदरामलकानाञ्च व्यक्तिप्रयुक्तानां प्रतीतिः, न जातिशब्दानाम्। अत एव व्यक्त्याश्रयं बहुवचनम्; अन्यथा जातेर्द्वित्वाद् द्विवचनमेव स्यात्, न बहुवचनम्। अप्राणिनामिति पर्युदासोऽयम्। तेनायमर्थो लभ्यते—नञिवयुक्तन्यायेन रूपरसस्पर्शादीनान्नैकवद्भाव इति। अप्राणिनामिति प्रतिषेधे बहुत्वं श्रूयमाणं विधावपि बहुत्वं गमयति। तेन बहुप्रकृतेरेव द्वन्द्व एकवद् भवति, न द्विप्रकृतेः—आराशस्त्र्याविति ॥ ६ ॥

**विशिष्टलिङ्गो नदी देशोऽग्रामाः** ॥ विशिष्टशब्दोऽयं भेदवचनः। योऽपि 'क्तेन नञ्विशिष्टेनानञ्' इत्यत्र सावधारणाधिक्ये विशिष्टशब्दो व्याख्यातः, सोऽपि भेदद्वारेणैव प्रतिपत्तव्यः। तेनेह **वृत्तिकारोऽपि 'भिन्न-**

### पदमञ्जरी

**जातिपरत्वे चेति**। जातिप्राधान्ये इत्यर्थः। **न नियतद्रव्यविवक्षायामिति**। यदा क्वचिद्देशादौ नियतानां द्रव्यविशेषाणां विवक्षा तदा जातिशब्दत्वेऽप्येकवद्भावो न भवतीत्यर्थः। **बदरामलकानीति**। फलजातिवाचिनावेतौ ॥ ६ ॥

**विशिष्टलिङ्गो नदी देशोऽग्रामाः** ॥ विशिष्टलिङ्गानामित्यस्य विवरणम्—**भिन्नलिङ्गानामिति**। विपूर्वः शिषिर्भिदिना समानार्थः। तथा च भेदकं विशेषणं भेद्यं विशेष्यमित्युच्यते। 'क्तेन नञ्विशिष्टेन' इत्यत्रापि

### भावबोधिनी

'नञ्युक्त और इवयुक्त स्वसदृश तथा स्वभिन्न के बोधक होते हैं इस न्याय से ( अप्राणिनाम् घटक नञ् के आधार पर ) द्रव्य जातियों का ही एकवद्भाव होता है न कि गुणजातियों अथवा क्रियाजातियों का। उदा०—रूपरसगन्धस्पर्शाः [ ये गुण जातिवाची हैं। ] गमनाकुञ्चनप्रसारणानि [ ये क्रियावाचक हैं। ] और जातिपरक होने पर जातिवाची शब्दों का यह एकवद्भाव किया जाता, न कि नियतद्रव्य की विवक्षा में—इह कुण्डे बदरामलकानि तिष्ठन्ति। [ यहाँ बदर और आमलक शब्द व्यक्ति के लिये प्रयुक्त हैं अतएव व्यक्त्याश्रयक बहुवचन होता है। जाति की प्रधानता रहने पर ही यह एकवद्भाव होता हैं ] ॥ ६ ॥

विशिष्ट लिङ्गवाले = भिन्न-भिन्न लिङ्गवाले नदीवाचक और देशवाचक शब्दों का द्वन्द्व एकवत् होता है, ग्रामवाचक शब्दों का द्वन्द्व छोड़कर। ] नदी है अवयव जिसका ऐसा द्वन्द्व 'नदी' कहा गया है, और देश का अवयव 'देश' कहा गया है। नदी, देशः, अग्रामाः यह असमस्त ही पद है। उदा०—उद्ध्यश्च इरावती च—उद्ध्येरावति। उद्ध्य

**विशिष्टलिङ्गानाम्=भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवद्भवति। नद्यवयवो द्वन्द्वो नदीत्युच्यते। देशावयवश्च देशः। नदी देश इत्यसमासनिर्देश एवायम्। उद्धयश्च इरावती च उद्धचेरावति। गङ्गाशोणम्। देशः खल्वपि-कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्। कुरुकुरुजाङ्गलम्।**

**विशिष्टलिङ्ग इति किम्? गङ्गायमुने। मद्रकेकयाः। नदी देश इति किम्? कुक्कुटमयूर्यौ। अग्रामा इति किम्? जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ।**

**न्यासः**

लिङ्गानामपि' इत्याह। **अग्रामा इति**। प्रतिषेधादनयोः स्वरूपग्रहणं न भवतीत्याह—**नदीवाचिनामित्यादि**। यदि नदीवाचिनां द्वन्द्वो देशवाचिनाञ्चैकवद् भवतीत्ययमत्र सूत्रार्थोऽभिमतः, तत् कथं नदीदेश इत्ययं द्वन्द्व इत्यनेन प्रकृतेन सामानाधिकरण्येन निर्देश इत्याह—**नद्यवयवो द्वन्द्वो नदीत्युच्यते इत्यादि**। एतेन गौणः सूत्रे निर्देश इति दर्शयति। नदीदेश इत्ययं यदि द्वन्द्वसमासस्तदा व्यतिकीर्णावयवो द्वन्द्वो यस्य कश्चिदवयवो नदी कश्चिद्देशस्तस्यैकवद्भावः स्यात्। किञ्च, द्वन्द्वो भवन्नेष समाहारे वा स्यात्? इतरेतरयोगे वा? तत्र पूर्वस्मिन् पक्षे 'स नपुंसकम्' इति नपुंसकत्वं स्यात्, इतरत्र तु द्विवचनमितीमं दोषं दृष्ट्वाऽऽह—**नदीदेश इति। असमास एवायं निर्देश इति**।

**पदमञ्जरी**

भेदद्वारेणैवाधिक्यमर्थो व्याख्यातः—यस्य हि नञ् भेदकः स नञाधिको भवति। **नदीवाचिनामित्यादि**। कथं तर्हि सूत्रे विशिष्टलिङ्गादिशब्दानां द्वन्द्वेन सामानाधिकरण्यमित्याह—**नद्यवयव इत्यादिना**। अग्रामावयवोऽग्राम इत्यपि द्रष्टव्यम्। **अग्रामा इति** चैकवचनस्थाने बहुवचनम्। **असमासनिर्देश एवायमिति**। समासे हि व्यतिकीर्णावयवो द्वन्द्व एकवत्स्यात्। गङ्गाकुरुक्षेत्रे इति समासो हि भवन्नितरेतरयोगे चेद् द्विवचनप्रसङ्गः, समाहारे चेन्नपुंसकत्वप्रसङ्ग इति भावः। **उध्येरावतीति**। 'उज्झ उत्सर्गे', ( धा० पा० १३०४ ) 'भिद्योध्यौ नदे'। **देशः खल्वपीति**। उदाह्रियत इति शेषः।

**जाम्बवशालूकिन्याविति**। जाम्बवं नगरम्, शालूकिनी ग्रामः, तत्रोभयतश्च ग्रामाणामिति प्रतिषेध एव भवति। ग्रामोभयावयवस्तु द्वन्द्वो नोदाहृतः। **जनपदो हि देश इति**। जना यत्र सञ्चरन्ति स देश इत्यर्थः। अवश्यं जनपदो देश इत्यङ्गीकर्त्तव्यमित्याह—**तथा चेति**। ग्रामे नाध्येयम्।

**भावबोधिनी**

और इरावती ] गङ्गाशोणम्। [ गंगा और सोन ] देश भी एकवद् होता है—कुरवश्च कुरुक्षेत्रं च—कुरु-कुरु क्षेत्रम्। [ कुरु देश और कुरुक्षेत्र देश ] कुरुकुरुजाङ्गलम् [ कुरवश्च कुरुजाङ्गलञ्च कुरु तथा कुरुजाङ्गलदेश ]।

विशिष्ट लिङ्ग = भिन्न-भिन्न लिङ्गवाले—इसका क्या फल है? गंगायमुने [ गंगा और यमुना ये दोनों स्त्रीलिङ्ग है। अतः एकवद् नहीं होता है। ] मद्रकेकयाः [ मद्राः च केकयाश्च—ये दोनों पुलिङ्ग है। अतः एकवद्भाव नहीं होता है। ]

नदी और देशवाचक—इसका क्या फल है? कुक्कुटमयूर्यौ। [ कुक्कुटश्च मयूरी च। ये भिन्न लिङ्ग है किन्तु नदी या देश के वाचक नहीं है। अतः एकवद्भाव नहीं होता है। ] अग्रामाः—इसका क्या फल है? जाम्बवश्च शालकिनी च—जाम्बवशालकिनी [ जाम्बव एक नगर है, शालूकिनी एक ग्राम है। एकवद्भाव नहीं होता है। ]

नदी का ग्रहण इसलिये किया गया है कि वह देश नहीं होती है। क्योंकि जनपद को ही देश कहा जाता है। इसलिये पर्वतों का ग्रहण नहीं होता है—कैलासश्च गन्धमादनं च—कैलासगन्धमादने। [ ये दोनों पर्वत हैं। ]

**नदीग्रहणमदेशत्वात्। जनपदो हि देशः, तथा च पर्वतानां ग्रहणं न भवति–कैलासश्च गन्धमादनं च कैलासगन्धमादने।**

**॥ अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः ॥ ( म० भा० २.४.७ वा० १ )। इह मा भूत्—मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम्।**

**॥ उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः ॥ ( म० भा० २.४.७ वा० २ )। सौर्यं च नगरम्, केतवतं**

न्यासः

**मद्रकेकया इति**। मद्राश्च केकयाश्च मद्रकेकयाः। अथ नदीग्रहणं कस्मात् क्रियते ? न देशग्रहणादेव नदीग्रहणं सिद्धमित्यत आह—**नदीग्रहणमदेशत्वादिति**। कस्मात् पुनर्नदी देशो न भवतीत्याह—**जनपदो हि देश इति**। तत्रैव देशशब्दस्य रूढत्वात्। यत् पुनर्नदी देश इत्युच्यते तत् तात्स्थ्यात्। भवति हि तात्स्थ्यात् ताच्छब्द्यम्, यथा—मञ्चाः क्रोशन्तीति। **तथा चेत्यादि**। तस्माजनपद एव देशो नान्यः पर्वतादिः एवञ्च कृत्वा देशग्रहणेन पर्वतादीनां ग्रहणं न भवति।

**अग्रामा इत्यत्रेत्यादि**। लोके हि ग्रामग्रहणेन नगरग्रहणं भवति, तथा ह्यभक्ष्यो ग्राम्यशूकर इत्युक्ते नागरोऽपि न भक्ष्यते। ततश्चेहाग्रामा इति प्रतिषेधः क्रियमाणो नगराणामपि प्राप्नोति, तस्मादग्रामा इति प्रतिषेधे नगरप्रतिषेधो वक्तव्यः, अग्रामा इत्यनेन नगराणां यः प्रतिषेधः प्राप्नोति तस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः, तेन नगराणां विधिरेव भवति। तत्रेदं व्याख्यानम्—यदयम् 'प्राचां ग्रामनगराणाम्' इत्यत्र ग्रामनगरयोर्भेदेनोपादनं करोति, तज् ज्ञापयति—इह शास्त्रे ग्रामग्रहणेन नगराणां ग्रहणं न भवतीति। तेनाग्रामा इति प्रतिषेधो नगराणां न भवति।

**उभयतश्चेत्यादि**। उभयस्मिन्नित्यर्थं उभयतः। यत्र कश्चिदवयवो ग्रामः कश्चिन्नगरं तत्र ग्रामाणां य

पदमञ्जरी

अभक्ष्या ग्रामकुक्कुटा इत्यादौ ग्रामग्रहणेन नगरमपि गृह्यते, तद्वदिहापि नगरावयवस्यापि द्वन्द्वस्यात्र प्रतिषेधः स्यात्, ज्ञापकात्सिद्धम्, यदयम् 'प्राचां ग्रामनगराणाम्' इति ग्रामग्रहणे नगरग्रहणं करोति, तज्ज्ञापयति—इह शास्त्रे ग्रामग्रहणे न नगरं गृह्यत इति ? नैतत्सुष्ठूच्यते, वक्ष्यति हि तत्र 'ग्रामत्वादेव सिद्धे नगरग्रहणं प्रवृत्तिभेदज्ञापनार्थम्, ग्रामग्रहणमङ्गविशेषणम्—पूर्वैषुकामशमी, नगरग्रहणं तूत्तरपदविशेषणम्—पूर्वपाटलिपुत्रकः' इति, 'वाहीकग्रामेभ्यश्च' 'उदीच्यग्रामाच्चेत्यादौ ग्रामग्रहणेन नगरग्रहणं न स्यात्तस्मादाह—**अग्राम इत्यत्र नगरप्रतिषेध इति**। ग्रामाश्रयस्य प्रतिषेधस्य प्रतिषेध इत्यर्थः।

**उभयतश्चेति**। ग्रामनगरात्मके उभयस्मिन्सति ग्रामाश्रयः प्रतिषेध एव वक्तव्यः, न पुनर्नगराश्रयः

भावबोधिनी

* अग्रामाः = ग्रामभिन्न—इसमें नगरों का प्रतिषेध कहना चाहिये। * यहाँ न हो—मथुरा च पाटलिपुत्रं च—मथुरापाटलिपुत्रम्। [ वार्तिक का आशय यह है कि अग्रामाः इसमें 'ग्राम' शब्द से नगर नहीं लेना चाहिये अतः 'नगरों को छोड़कर' ऐसा अर्थ नहीं होता है। नगरों का एकवद्भाव होता ही है। मथुरा और पाटलिपुत्र ये दोनों नगर हैं। अतः इनका द्वन्द्व एकवद् ही होता है। 'अग्रामाः' इस प्रतिषेध का प्रतिषेध होता है। ]

* दोनों = ग्राम और नगर का द्वन्द्व रहने पर ग्राम का प्रतिषेध कहना ही चाहिये, चर्थात् उसमें 'अग्रामाः' यह प्रतिषेध लागू होने से एकवद्भाव नहीं होता है। * उदा० —सौर्यं नगर और केतवत ग्राम—सौर्यं केतवते। [ यहाँ एकवद्भाव का प्रतिषेध होने से द्विवचन आता है। ]

**विमर्श**—'वि' उपसर्गयुक्त 'शिष्' धातु का अर्थ 'भिद्' धातु के समान ही होता है। अतः विशेषण = भेदक, विशेष्य = भेद्य पर्याय है। इसीलिये विशिष्ट = भिन्न अर्थ का वाचक है।

**च ग्रामः = सौर्यकेतवते ॥**

५४२. क्षुद्रजन्तवः ॥ ८ ॥ ( ९१२ )

**अपचितपरिमाणः क्षुद्रः । क्षुद्रजन्तुवाचिनां द्वन्द्व एकवद्भवति । दंशमशकम् । यूकालिक्षम् । क्षुद्रजन्तव इति किम् ? ब्राह्मणक्षत्रियौ ॥**

**क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः ।**
**शतं वा प्रसृतौ येषां के चिदा नकुलादपि ॥**

**न्यासः**

प्रतिषेध उच्यते स एव वक्तव्यः, व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—अग्रामा इति प्रसज्यप्रतिषेधोऽयं विज्ञेयः, न चेद् द्वन्द्वे ग्रामा विद्यन्त इति । तेन यत्र ग्रामगन्धोऽप्यस्ति तत्राप्येकवद्भावो न भवतीति ॥ ७ ॥

**क्षुद्रजन्तवः ॥** क्षुद्रशब्दोऽयमस्त्येव यः कार्पण्यवति पुरुषे वर्त्तते, यथा—क्षुद्रो देवदत्त इति, कृपण इति गम्यते; अस्ति च शीलहीनेऽङ्गहीने च, यथा—क्षुद्राभ्यो वेति, अत्र ह्यनियतपुंस्का विकलाङ्गाश्च स्त्रियः क्षुद्राग्रहणेन गृह्यन्ते; अस्ति च परिमाणापचये, यथा—क्षुद्रास्तण्डुला इति; इह तु जन्तुशब्दसन्निधानात् प्राणिशरीरस्याल्पतामाचष्टे । तेन परिमाणापचये वर्त्तमानस्य क्षुद्रशब्दस्य ग्रहणं विज्ञायत इत्याह—**अपचितपरिमाणः क्षुद्र इति** । अल्पशरीर इत्यर्थः । अपचिपरिमाणता चापेक्षाभेदादनवस्थितेति । अस्थिरेत्वर्थः ।

क्षुद्रजन्तुशब्दस्याभिधेयं प्रति स्मृतीरुपन्यस्यति—**क्षुद्रजन्तुरनस्थिः स्यादिति** । 'क्षुदिर् संपेषणे' । क्षुद्यत इति क्षुद्रः । औणादिकः 'स्फायीतञ्चि' इत्यादिना रक् । क्षुद्रश्चासौ जन्तुश्चेति क्षुद्रजन्तुः । **अनस्थिरिति** । यस्यास्थीनि न विद्यन्ते । केवलं यस्य चर्मशोणितमांसमस्ति स क्षुद्रजन्तुः । **अथवा क्षुद्र एव य इति** स्मृत्यन्तरमाह । क्षोदयितुं यः शक्यते स क्षुद्रजन्तुः । शब्दार्थवशात् प्रसिद्ध एव लोके क्षुद्रजन्तुर्ग्राह्यः । स पुनर्मशकादिरङ्गे यस्यात्मीयं शोणितं नास्ति । येषां वा गोचर्ममात्रं राशिं हत्वापि नरः पतितो न भवति ते प्रसिद्धाः क्षुद्रजन्तव उच्यन्ते । **शतं वा प्रसृतौ येषामिति** । अपरा स्मृतिः । प्रसृतौ = अञ्जलौ बद्धं येषां प्राणिनां शतं प्रसृतिर्भवति

**पदमञ्जरी**

प्रतिषेध इत्यर्थः ॥ ७ ॥

**क्षुद्रजन्तवः ॥** क्षुद्रशब्दोऽयमस्त्येव कृपणे—क्षुद्रोऽयं पुरुष इति, अस्त्यङ्गहीने शीलहीने च—'क्षुद्राभ्यो वा' इति, अस्ति परिमाणापचये—क्षुद्रास्तण्डुला इति; इह तु जन्तुशब्दसमभिव्याहारादन्तिमस्य ग्रहणमित्याह—**अपचितपरिमाणः क्षुद्र इति** । अल्पशरीर इत्यर्थः ।

अपचयस्यापेक्षिकत्वादनवस्था मा भूदिति स्मृतिमुपन्यस्यति—**क्षुद्रजन्तुरनस्थिः स्यादिति** । यस्यास्थीनि न विद्यन्ते सोऽनस्थिः । स्मृत्यन्तरमाह—**अथ वेति** । क्षोत्तव्यः क्षुद्रः, अर्हार्थेऽपि **'स्फायीतञ्चि' (दश० उ० ८–३१)**

**भावबोधिनी**

वर्तमान में 'उद्ध्य' को 'उज्ञ' कहते हैं यह जम्मू के जसरोटा जिले से होती हुई कुछ दूर पंजाब में बहकर गुरुदासपुर जिले में रावी के दाहिने किनारे पर मिल गई है। 'इरावती' को इस समय 'रावी' कहा जाता है। इसके लिये 'पाणिनिकालीन 'भारतवर्ष' पृ० सं० ५२ देखें ॥ ७ ॥

अपचितपरिमाणवाला = अल्पशरीरवाला 'क्षुद्र' कहा जाता है। क्षुद्र जन्तुवाचक शब्दों का द्वन्द्व एकवत् होता है। उदा०—देशमशकम् [ डाँस = एक कीड़ा और मच्छर ] यूकालिक्षम् [ जूँ और लीख। सिर आदि में होने वाले जीव ] क्षुद्रजन्तु—इसका क्या फल है ? ब्राह्मणक्षत्रियौ [ ब्राह्मण और क्षत्रिय। ये क्षुद्र जन्तु नहीं है। अतः इनका द्वन्द्व एकवत् नहीं होता है। ]

(१) क्षुद्र जन्तु वह है जिसके शरीर में हड्डी नहीं है, (२) अथवा जो क्षुद्र = छोटा ही है। (३) अथवा आधी

'आ नकुलादपि' इतीयमेव स्मृतिः प्रमाणम्; इतरासां तद्विरोधात् ॥

५४३. येषां च विरोधः शाश्वतिकः ॥ ९ ॥ ( ९१३ )

विरोधः = वैरम् । शाश्वतिकः = नित्यः । येषां शाश्वतिको विरोधस्तद्वाचिनां शब्दानां द्वन्द्व एकवद्भवति । मार्जारमूषकम् । अहिनकुलम् ।

शाश्वतिक इति किम् ? गौपालिशालङ्कायनाः कलहायन्ते ।

**न्यासः**

शतेन वा प्रसृतिः पूर्यते ते क्षुद्रजन्तवः । **केचिदा नकुलादपीति** । केचिद् वर्णयन्ति—नकुलपर्यन्ताः क्षुद्रजन्तव इति । **इयमेव स्मृतिः प्रमाणमिति** । अस्याः सर्वस्मृत्यनुग्राहिणीत्वात् । तथा ह्येतदुपलक्षितेषु क्षुद्रजन्तुषु स्मृत्यन्तरदर्शिता अपि क्षुद्रजन्तवोऽन्तर्भवन्ति । इतरा अपि स्मृतयः प्रमाणं कस्मान्न भवन्तीत्याह—**इतरासामित्यादि** । अनस्थ्यादीनां स्मृतीनामा नकुलादपीति स्मृत्या विरोधः । तस्मान् नैताः प्रामाण्येनाभ्युपगम्यन्ते तेन सर्वत्रेदं सिद्धं भवति । 'क्षुद्रजन्तवः' इति बहुवचननिर्देशाद् बहुप्रकृतेरेवैकवद्भावो यथा स्यात् । तेनेह न भवति—यूकालिक्षे, दंशमशकाविति । अयञ्च प्राणिजात्यर्थं आरम्भः । क्षुद्रजन्तव इति किमिति ? ननु च सूत्रस्याभावे किं प्रत्युदाहरणं स्यात् ? एवं मन्यते—अन्यथा हि जन्तव इति सूत्रं कर्त्तव्यम्, ततश्चातिप्रसङ्गः स्यादिति ॥ ८ ॥

**येषां च विरोधः शाश्वतिकः** ॥ प्रतिपक्षभावमात्रं लोके विरोधशब्देनोच्यते । तस्येह ग्रहणे सति छायातपौ, अग्निजले इत्यत्रापि स्यादिति मत्वा वैरमिह विरोधोऽभिमत इति दर्शयितुमाह—**विरोधो वैरमिति** । एवं मन्यते—क्षुद्रजन्तव इत्यतो जन्तुग्रहणमनुवर्त्तते । तेन जन्तूनां यो विरोधस्तस्येह ग्रहणं विज्ञायते । स च

**पदमञ्जरी**

इत्यादिना रक् प्रत्ययः, यः क्षुद्यमानोऽपि न म्रियते, यथा—जलूका, स क्षुद्रजन्तुः; यस्तु म्रियते स पापनिमित्तत्वान्न क्षोदार्हः । क्षुद्र एव य इति व्युत्पत्तिवशादेवायं प्रसिद्ध इत्यर्थः । स्मृत्यन्तरमाह—**शतं वेति** । प्रसृतिरञ्जलेरर्द्धं येषां शतं प्रसृतौ भवति, शतेनार्द्धाञ्जलिः पूर्यत इत्यर्थः । स्मृत्यन्तरमाह—**केचिदा नकुलादपीति** । नकुलपर्यन्ताः क्षुद्रजन्तव इत्यर्थः ।

**इतरासां तद्विरोधादिति** । अनस्थ्यादिभिः स्मृतिभिर्ये प्रयोगा उपदर्शिता न ते सर्वे ताभिः संगृह्यन्त इत्ययमत्र विरोधः ॥ ८ ॥

**येषां च विरोधः शाश्वतिकः ॥ विरोधो वैरमिति** । न सहानवस्थानादिः, छायातपावित्यादावपि प्रसङ्गात् । पूर्वसूत्राच्चानुवृत्तेन जन्तुग्रहणेन विरोधस्य विशेषणात् । जन्तूनां हि विरोधो वैरमेव भवति ।

**भावबोधिनी**

अञ्जलि में जिनकी सौ संख्या आ जाती है, आधी अञ्जलि में जो सौ आ जाते हैं । (४) कुछ लोग नेवले तक क्षुद्र जन्तु कहते हैं ।

'नकुल = नेवला तक क्षुद्र जन्तु है, यही स्मृति प्रमाण है क्योंकि अन्य वचनों का इसके साथ विरोध होने से वे त्याज्य है ॥ ८ ॥

विरोध = वैर । शाश्वतिक = नित्य, सदैव रहने वाला । जिनका शाश्वतिक विरोध है, उनके वाचक शब्दों का द्वन्द्व एकवत् होता है । उदा०—मार्जारमूषकम् । [ बिलाव और चूहा ] अहिनकुलम् [ साँप और नेवला ] ।

शाश्वतिक = नित्य—यह किसलिये है ? गोपालिशालङ्कायनः कलहायन्ते [ गौपालि और शालंकायन—इनका कदाचित् वैर हो जाता है सदैव नहीं । अतः इनके द्वन्द्व का एकवद्भाव नहीं होता है । ]

चकारः पुनरस्यैव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनामनेन नित्यमेकवद्भावो भवति—अश्वमहिषम्, श्वशृगालम्, काकोलूकम् ॥

५४४. शूद्राणामनिरवसितानाम् ॥ १० ॥ ( ९१४ )

निरवसानम् = बहिष्करणम्। कुतो बहिष्करणम् ? पात्रात्। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः ( म० भा० ) न निरवसिताः अनिरवसिताः। अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद्भवति। तक्षायस्कारम्। रजकतन्तुवायम्।

**न्यासः**

वैरस्वभाव एवेति। शाश्वतिको नित्य इति। शश्वदिति त्रैकाल्यमुच्यते। तत्र भवः शाश्वतिकः। 'कालाट्ठञ्'। अस्मादेव निपातनात् तान्तादपि को न भवति। यश्च त्रैकाल्ये भवति स नित्यः। **गोपालिशालङ्कायना इति।** गोपालयश्च शालङ्कायनाश्च गोपालिशालङ्कायनाः। नात्र शाश्वतिको विरोध इत्येकवद्भावो न भवति। **चकारः पुनरस्यैव समुच्चयार्थ इति।** प्रकृतस्यान्यस्य समुच्चेतव्यस्याभावादस्यैकवद्भावस्य समुच्चयार्थश्चकारो विज्ञायते। तेन किम्भवतीत्याह—**तेन पशुशकुनीत्यादि।** पशुशकुनिविभाषाया अवकाशः—महाजोरभ्रम्, महाजोरभ्राः; हंसचक्रवाकम्, हंसचक्रवाका इति। नित्यविरोधिनामेकवद्भावस्यावकाशः—ब्राह्मणनास्तिकमिति, श्वशृगालम्, अश्वमहिषम्। काकोलूकमित्यत्रोभयप्राप्तौ परत्वात् पशुशकुनिविभाषा स्यात्। चकारस्य पुनरस्यैव समुच्चयार्थत्वादनेन नित्यमेकवद् भवति ॥ ९ ॥

**शूद्राणामनिरवसितानाम् ॥** यद्यपि 'षिञ् बन्धने' इति सिनोतिर्बन्धने वर्त्तते, तथापि निरवपूर्वो बहिष्करणे वर्त्तत इत्याह—**निरवसानं बहिष्करणम्।** यैर्भुंक्ते पात्रं संस्कारेणापि न शुद्ध्यति तस्मात् ते ततो

**पदमञ्जरी**

**शाश्वतिको नित्य इति।** शश्वदिति त्रैकाल्यमाह। 'तत्र भवः' इति कालाट्ठञि तान्तादपि निपातनादिकादेशः, अव्ययानां भमात्रे टिलोपाभावश्च। गोपालस्यापत्यानि गौपालयः, अत्र कादाचित्को विरोधः। **चकारः पुनरित्यादि।** पशुशकुनिद्वन्द्वावकाशः—महाजोरभ्रं महाजोरभ्राः, हंसचक्रवाकं हंसचक्रवाकाः; विरोधिनामेकवद्भावस्यावकाशः—श्रमणब्राह्मणम्, मार्जारमूषिकम्; अश्वमहिषं काकोलूकमित्यत्रोभयप्रसङ्गे परत्वात्पशुशकुनिविभाषा स्यात्, चकारादयमेव भवति ॥ ९ ॥

**शूद्राणामनिरवसितानाम् ॥** शूद्रशब्दोऽत्र त्रैवर्णिकव्यतिरिक्तजातिमात्रवचनः, न वृषलपर्यायः, निरवसितप्रतिषेधात्। **निरवसित इति।** निरवपूर्वात्स्यतेः कर्मणि क्तः। तत्र प्रकृत्यर्थमाह—**निरवसानं बहिष्करणमिति।** अनेकार्थत्वाद्धातूनामुपसर्गवशाद्वेति भावः। पात्राद्बहिष्करणमिह विवक्षितमित्याह—**यैरिति।**

**भावबोधिनी**

चकार का प्रयोग पुनः इसी का समुच्चय करने के लिये है। इस कारण पशुओं और शकुनि = पक्षियों के द्वन्द्व में विरोधवाची शब्दों के द्वन्द्व का एकवद्भाव नित्य ही इस सूत्र से किया जाता है—अश्वमहिषम् [ घोड़ा और भैंसा ] श्वशृगालम् [ कुत्ता और सियार ] काकोलूकम् [ कौआ और उल्लू ] [ इनमें विकल्प से एकवद्भाव प्राप्त होता है। 'च' के कारण नित्य एकवद्भाव होता है। ] ॥ ९ ॥

निरवसान = बहिष्कार किससे बहिष्कार ? पात्र से। जिनके खा लेने पर संस्कार से भी पात्र शुद्ध नहीं होता है वे निरवसित हैं, न निरवसिताः = अनिरवसिताः। अनिरवसित शब्दों का द्वन्द्व एकवत् होता है। उदा०—तक्षायस्कारम् [ तक्षा = बढ़ई और लुहार ] रजकतन्तुवायम् [ धोबी और जुलाहा = कपड़ा बुननेवाला ]।

**अनिरवसितानामिति किम्? चण्डालमृतपाः ॥**

**५४५. गवाश्वप्रभृतीनि च ॥ ११ ॥ ( ९१५ )**

**गवाश्वप्रभृतीनि कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति । गवाश्वम्, गवाविकम्, गवैडकम्, अजाविकम्, अजैडकम् । कुब्जवामनम्, कुब्जकैरातकम्, पुत्रपौत्रम् । श्वचण्डालम् । स्त्रीकुमारम्, दासीमाणवकम् । शाटीपिच्छकम् । उष्ट्रखरम्, उष्ट्रशशम् । मूत्रशकृत्, मूत्रपुरीषम्, यकृन्मेदः, मांसशोणितम् । दर्भशरम्,**

**न्यासः**

बहिष्कृताः = पृथक् कृताः । न लभन्ते तत्र भोक्तुमित्यर्थः ॥ १० ॥

**गवाश्वप्रभृतीनि च** ॥ गवाश्वादीनि कृतैकवद्भावानि गणे पठ्यन्ते । तेषामनेन साधुत्वमात्रं विधीयते । न त्वेकवद्भाव इति दर्शयन्नाह—**गवाश्वादीनीति** । गवाश्वमित्येवमादीनामजैडकपर्यन्तानां पशुद्वन्द्वविकल्पे वचनमिदम् । कुब्जवामनप्रभृतीनां त्रयाणामप्राप्ते । श्वचाण्डालमित्यविरोधार्थम् । विरोधे हि 'येषाञ्च विरोधः' इत्येवं सिद्धम् । कदा च श्वचाण्डालस्याविरोधः? यदा विरोधं द्वन्द्वो नाचष्टे केवलद्धार्थमात्रे वर्त्तते तदा श्वचाण्डालमिहास्तीति । **स्त्रीकुमारं दासीमाणवमित्य**प्राप्ते वचनम् । **शाटीपिच्छकमिति** 'जातिरप्राणिनाम्' इति सिद्धे, अबहुप्रकृत्यर्थः पाठः । **उष्ट्रखरमुष्ट्रशशमिति** । पशुद्वन्द्वविभाषाप्राप्तौ नित्यार्थम् । मूत्रशकृदादीनां

**पदमञ्जरी**

**संस्कारेणापीति** । 'भस्मना शुध्यते कांस्यम्' इत्यादिना स्मृतिकारैरुक्तेन[1] न शुध्यति, तेन तत्र भोक्तुं न लभन्त इति ततो बहिष्कृता भवन्ति ॥ १० ॥

**गवाश्वप्रभृतीनि च** ॥ **द्वन्द्वरूपाणीति** अन्वयात्प्रभृतीनीति नपुंसकोपपत्तिः । गवाश्वप्रभृतीनि कृतैकवद्भावान्येव पठ्यन्ते, तेषामनेन साधुत्वमात्रं विधीयते, न त्वेकवद्भाव इत्याह—**गवाश्वप्रभृतीनीति** । गवाश्वादीनां चतुर्णां पशुद्वन्द्वे विभाषायां प्राप्तायां वचनम् । एवमुष्ट्रखरम्, उष्ट्रशशमिति । दर्भशरादीनां तृणोलप-

**भावबोधिनी**

अनिरवसित शूद्रों का—यह किस लिये है? चण्डालमृतपाः । [ चण्डाल और मृतप । ये ऐसे शूद्र हैं कि इनके खा लेने पर पात्र को सदा के लिये अशुद्ध मान लिया जाता है । अतः इनका द्वन्द्व एकवत् नहीं होता है । ] ॥ १० ॥

जिनका एकवद्भाव किया गया है, ऐसे गवाश्व आदि द्वन्द्वरूप साधु होते हैं । [ गणपाठ में इनका द्वन्द्व एकवद्भाव रूप में है । अतः इसी प्रकार का साधु माना जाता है । ] उदा०—गवाश्वम् [ गाय और घोड़ा ] । गवाविकम् [ गाय और भेंड़ ] । गवैडकम् [ गाय और एडक ] । अजाविकम् [ बकरी और भेंड़ ] । अजैडकम् [ बकरी और एडक = भेंड़ ] । कुब्जवामनम् [ कुबड़ा और बौना ] । कुब्जकैरातम् [ कुबड़ा और कैरात ] । पुत्रपौत्रम् [ बेटा और पोता ] । श्वचण्डालम् [ कुत्ता और चण्डाल ] । स्त्रीकुमारम् [ स्त्री और कुमार ] । दासीमाणवकम् [ दासी और माणवक ] । शाटीपिच्छकम् [ साड़ी और पिच्छक ] । उष्ट्रखरम् [ ऊँट और खरगोश ] । उष्ट्रशशम् [ ऊँट और खरगोश ] । मूत्रशकृत् [ पेशाब और टट्टी ] । मूत्रपुरीषम् [ पेशाब और टट्टी ] । यकृन्मेदः [ यकृत् और चर्बी ] । मांसशोणितम् [ मांस और खून ] । दर्भशरम् [ कुश और सरकण्डा ] । दर्भपूतीकम् [ कुश और पूतीक ] । अर्जुनशिरीषम् [ अर्जुन और शिरीष के पेड़ ] । तृणोलपम् [ तृण और उलप ] । दासीदासम् [ दासी और दास ] । कुटीकुटम् [ कुटी और कुट ] । भागवतीभागवतम् [ भागवती और भागवत् ] ।

१. भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।
रजसा शुध्यते नारी नदी वेगेन शुध्यति ॥ ( वृ० चाण० ६.३ )

दर्भपूतीकम्, अर्जुनशिरीषम्, तृणोलपम्। दासीदासम्, कुटीकुटम्, भागवतीभागवतम्।

**❀ गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम् ❀** ( म० भा० २.४.११ वा० १ )। रूपान्तरे तु नायं विधिर्भवति—गोऽश्वम्, गोऽश्वौ। पशुद्वन्द्वविभाषैव भवति ॥

## ८४६. विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥१२॥(९१६)

**न्यासः**

मांसशोणितपर्यन्तानामप्राणिजातीनामबहुप्रकृत्यर्थः पाठः। दर्भशरप्रभृतीनां तृणद्वन्द्वविभाषायां प्राप्तायां वचनम्। दासीदासादीनां त्रयाणामप्राप्ते। 'पुमान् स्त्रिया' इत्येकशेषो न भवत्यस्मादेव निपातनात्।

**गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तमिति**। कथम्? तथा रूपस्याश्रयणात्। गणपाठे हि यदेषां शब्दानां रूपं तदाश्रितम्। येन यथोच्चारितानामेकवद्भावलक्षणं द्वन्द्ववृत्तं भवति। **रूपान्तरे तु नायं विधिरिति**। यदा 'अवङ् स्फोटायनस्य' इत्यवङ् नास्ति तदा रूपान्तरे जातेऽनेन सूत्रेण यो विधिः क्रियते स न भवति। पशुद्वन्द्वविभाषैव प्रवर्तते ॥ ११ ॥

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्** ॥ वृक्षादिग्रहणेनेह वृक्षादि-विशेषवाचिनां ग्रहणम्, कथम्? यस्मादत्र हि वृक्षादिभिर्द्वन्द्वः प्रत्येकं विशिष्यते, तेनैषा विभाषा तुल्य-

**पदमञ्जरी**

पर्यन्तानां तृणद्वन्द्वे विभाषायां प्राप्तायां दासीदासादीनाम् 'पुमान्स्त्रिया' इत्येकशेषाभावोऽपि निपातनात्। शाटीपटीकांमत्यादीनामप्राणिजातिवचनानामबहुप्रकृत्यर्थः पाठः। अन्येषां कुब्जवामनादीनामप्राप्ते वचनम्। **यथोच्चारितं द्वन्द्ववृत्तमिति**। गणे यादृशाः कृतावङादेशाः पठितास्तादृशानामेव द्वन्द्ववृत्तं द्वन्द्वकार्यमेकवद्भाव-लक्षणं भवति। **रूपान्तरेष्विति**। 'अवङ् स्फोटायनस्य' इति विकल्पितत्वाद्यदा नास्ति तदेत्यर्थः। एतेन गणपाठे रूपमेषां विवक्षितम्, न पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमित्युक्तं भवति ॥ ११ ॥

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्** ॥ अत्र वृक्षादिभिः प्रत्येकं द्वन्द्वो विशेष्यते। न चैको वृक्षशब्दो द्वन्द्वः, न च द्वयोः सहप्रयोगः, एकशेषात्। न च पर्यायाणामपि सहयोगः, 'विरूपा-णामपि समानार्थानाम्' एकशेषवचनात्, नापि विशेषेण सहप्रयोगः—वृक्षश्च धवश्चेति, वृक्षशब्देनैवाशेषविशेषा-क्षेपाद्धवादिशब्दप्रयोगस्य निष्फलत्वात्। कथं तर्हि 'गोबलीवर्दौ' इत्यादौ सामान्यविशेषयोः सह प्रयोगः? बली-वर्दशब्दसंनिधौ गोशब्दस्य स्त्रीगवीष्वेव वृत्तेर्द्वयोरपि विशेषवचनत्वादिति चेद्, इहापि तर्हि धवपदसंनिधौ वृक्ष-

**भावबोधिनी**

गवाश्व आदि में जिस प्रकार के उच्चारित हैं वैसे का ही द्वन्द्व एकवत् होता है। यदि दूसरा रूप हो जाता है तो यह एकवत्भाव नहीं होता है—गोऽश्वम्, गोऽश्वौ [ गौश्च अश्वश्च—इसमें द्वन्द्व करने पर विभक्ति लोप होने के बाद "अवङ् स्फोटायनस्य" ( पा० सू० ६।१।१२३ ) से विकल्प से 'ओ' का अवङ् होने पर यह एकवद्भाव होता है। जब यह अवङ् नहीं होता है तब पूर्वरूप होने पर यह सूत्र लागू नहीं होता है। अतः अग्रिम सूत्र 'विभाषा' पा० सू० २।४।१२ से विकल्प से एकवद्भाव होता है ] ॥ ११ ॥

वृक्ष, मृग, तृण, धान्य, व्यञ्जन, पशु, शकुनि, अश्ववडव, पूर्वापर तथा अधरोत्तर—इन [ दश ] शब्दों का द्वन्द्व विकल्प से एकवत् होता है। उदा०—(१) प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः [ प्लक्षाश्च न्यग्रोधाश्च—यहाँ द्वन्द्व समास करने पर जब एकवद्भाव होता है तब नपुंसक लिङ्ग होता है। पक्ष में बहुवचन होता है। ] इसी प्रकार सभी में समझना चाहिये। प्लक्ष और न्यग्रोध=पीपल के वृक्ष ]। (२) रुरुपृषतम्, रुरुपृषताः [ रुरवश्च पृषताश्च यहाँ भी

**वृक्ष, मृग, तृण, धान्य, व्यञ्जन, पशु, शकुनि, अश्ववडव, पूर्वापर, अधरोत्तर—इत्येतेषां द्वन्द्वो विभाषैकवद्भवति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः।**

**न्यासः**

जातीयेष्वेवावतिष्ठते। विरूपेषु तुल्यजातीयेष्वपि, न स्वरूपेषु। तेषां द्वन्द्वो नास्ति; एकशेषविधानात्। विरूपेष्वपि न पर्यायेषु; तेषां द्वन्द्वाभावात्। द्वन्द्वाभावश्च युगपत्प्रयोगाभावात्, युक्तार्थभावाच्च। चार्थाभावस्त्वर्थभेदाभावात्। भिन्नाधिष्ठाना हि चार्थता। न च पर्यायाणां भिन्नार्थता सम्भवति; तस्माद् विरूपेष्वेव वृक्षादिविशेषवाचिष्वस्या विभाषाया उपस्थानम्। तेन विशेषग्रहणं वृक्षादिषु विज्ञायते, न स्वरूपग्रहणम्, नापि पर्यायग्रहणम्। अथ सामान्यविशेषवाचिनां ग्रहणं कस्मान्न विज्ञायते, संभवति हि सामान्यविशेषवाचिनां द्वन्द्वः, यथा—गोवलीवर्दमिति? न; अनभिधानात्। न हि वृक्षधवमित्येवं लोकेऽभिधानमस्ति; धवशब्दादेव

**पदमञ्जरी**

शब्दस्य तद्व्यतिरिक्तविषयतया द्वन्द्वप्रसङ्गः? किं च वाक्येऽपि कथं सहप्रयोगः—ब्राह्मणा आगता वसिष्ठोऽप्यागत इति? प्राधान्यख्यापनार्थमुक्तार्थस्यापि प्रयोग इति चेद्, द्वन्द्वेऽपि तर्हि प्राप्नोति। तस्मादनभिधानमेवाश्रयणीयम्, न हि वृक्षधवमिति लोकेऽभिधानमस्ति, अतो वृक्षविशेषवाचिनां ग्रहणम्। एवं मृगादिष्वपि द्रष्टव्यम्।

**इत्येतेषां द्वन्द्व इति**। एतेषामित्येकापि षष्ठी विषयभेदाद्भिद्यते—वृक्षादीञ्छकुनिपर्यन्तान्प्रत्यवयवषष्ठी, अश्ववडवादीन् प्रति निर्धारणषष्ठी। येऽत्राप्राणिनस्तेषां 'जातिरप्राणिनाम्' इति नित्यं समाहारद्वन्द्वे प्राप्ते उभयत्र विधीयते। यो विभाषाप्राप्तैकवचनो द्वन्द्वः स एषां भवतीति वचनव्यक्त्याश्रयणेन तेषामेव वृक्षादीनामन्यैः सह द्वन्द्वे यथाप्राप्तं नित्यो विकल्पितो वा एकवद्भावो भवति—व्रीहिकुशप्लक्षमिति, 'जातिरप्राणिनाम्' इति नित्यः, प्लक्षशब्दस्पर्शा इत्यत्राद्रव्यवाचित्वात् 'जातिरप्राणिनाम्' इत्यस्याप्रवृत्तौ 'चार्थे द्वन्द्वः' इत्युभयत्र प्राप्तो भवति। पशुग्रहणं हस्त्यश्वादिषु परत्वात् सेनाङ्गलक्षणस्य नित्यविधेर्बाधनार्थम्।

मृगशकुनिग्रहणं किमर्थम्, न ह्येतेषामनेन प्रकरणेन नित्य एकवद्भावः प्राप्तः, यद्बाधनाय विकल्पोऽभ्यनुज्ञायते, अन्यत्र प्राप्त्यभावादेषामुभयत्रैव द्वन्द्व इति नियमो न सम्भवति? अथैषामेवोभयत्र द्वन्द्व इति नियमः स्यात्, क्व तर्ह्येषां स्यात्? क्वचिदिति चेत्, यद्येवम्, 'चार्थे द्वन्द्वः' इति सामान्यलक्षणमनवकाशं स्यात्, विशिष्टविधानमेव तदानीमाश्रयणीयं स्यात्, प्राण्यङ्गादीनां समाहारे दधिपयआदीनामितरेतरयोगे वृक्षादीनामुभयत्रेति? अथैषामेवोभयत्रेत्यनेनान्येषामुभयत्रापि द्वन्द्वो वार्यते, अन्यतरत्र तु भवत्येव। एवमपि क्वान्यत्रेति न ज्ञायते, 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' ( व्या० परि० ९१ ) इति चानुपपन्नं स्यात्? उच्यते—यत्तुल्यजातीयानामेवायं विकल्पस्तत्रैव नियमः प्रवर्तते—मृगविशेषवाचिनां मृगविशेषवाचिभिरेवोभयत्र द्वन्द्वः, अन्यैस्तु सहान्यतरत्रेति। नन्वेमपि न ज्ञायते—क्वान्यतरत्रेति, स्यादेतद् एवम्, यद्युभयत्रैषां द्वन्द्व इति

**भावबोधिनी**

वैकल्पिक एकवद्भाव पक्ष में नपुंसक लिङ्ग एकवचन होता है। पक्ष में बहुवचन होता है रुरु और पृषत ये मृगों की विशेष जातियाँ हैं। ] (३) कुशकाशम्, कुशकाशाः [ कुशाश्च काशाश्च—कुश और काश = सरकण्डे ]। (४) व्रीहियवम्, व्रीहियवाः [ व्रीहयश्च, यवाश्च। व्रीहि और जौ ]। (४) दधिघृतम्, दधिघृते [ दधि च घृतं च ]। (५) गोमहिषम्, गोमहिषाः [गावश्च महिषाश्च। बैल और भैंसे। गो शब्द गाय तथा बैल दोनों का वाचक है।] (६) तित्तिरकपिञ्जलम्, तित्तिरकपिञ्जलाः [ तीतर और चातक पक्षी। ] (७) अश्ववडवम्, अश्ववडवाः [ अश्वाश्च वडवाश्च। घोड़ा और घोड़ी ]। (८) पूर्वापरम्, पूर्वापरे [ पूर्वश्च परश्च। पूर्व और पर ]। अधरोत्तरम्, अधरोत्तरे [ अधर और उत्तर ]।

**व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे।**

❀ बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम् ❀ ( म० भा० २.४.१२ वा० १ )। **एषां बहुप्रकृतिरेव द्वन्द्व एकवद् भवति, न द्विप्रकृतिः। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ।**

**न्यासः**

तदर्थाभिधायिनो वृक्षशब्दस्यार्थस्यावगतत्वात्, धवादिशब्दप्रयोगे वृक्षादिशब्दस्य प्रयोगानर्हत्वात्। गोवलीवर्दमित्यत्र तु वलीवर्दसन्निधाने गोशब्दस्य स्त्रीगवीष्वेव वृत्तेर्द्वावपि विशेषवाचिनाविति युक्तो द्वन्द्वः। येऽत्राप्राणिवाचिनस्तेषां 'जातिरप्राणिनाम्' इत्येकवद्भावे नित्ये प्राप्ते वचनमिदं विभाषार्थम्। परिशिष्टानामप्राप्ते। पशुग्रहणेनैव मृगादिग्रहणे सिद्धे पुनर्मृगादिग्रहणं किमर्थम्? तुल्यजातीयानां द्वन्द्वोऽयमेकवद्भवतीत्युक्तम्, अत्र पशुग्रहणेनैव सिद्धे मृगादिग्रहणे सत्यपि पश्वन्तरेणेषां परस्परेण वा द्वन्द्वो मा भूदित्येवमर्थम्। 'पशुद्वन्द्व' इत्येवं सिद्धेऽश्ववडवग्रहणं नियमार्थम्। योऽन्य एतयोः पर्यायस्तत्र मा भूद्--हयवडवे इति।

**बहुप्रकृतिरिति**। बह्वर्था बहुवचनान्ता वा प्रकृतिर्यस्य स बहुप्रकृतिः। बह्वर्थानां फलादीनामेषां

**पदमञ्जरी**

श्रुतं स्यात्। इह तु विभाषैकवचनो द्वन्द्व इति श्रूयते, ततश्च यो विभाषाप्राप्त एकवचनो द्वन्द्वः स मृगविशेषवाचिनां मृगविशेषवाचिभिरेव नान्यैरिति वचनव्यक्तौ व्यक्तमेव ज्ञायते--अन्यैः सहेतरेतरयोगद्वन्द्व इति। अथास्यां वचनव्यक्तौ विभाषाग्रहणं किमर्थम्, यावता विभाषैवैकवचनान्तो द्वन्द्वः प्राप्तस्तत्रैतावदेवास्तु-य एकवचनो द्वन्द्वः स एषामेभिरेवेति? उच्यते- असति विभाषाग्रहणे वचनव्यक्त्यन्तरमपि सम्भाव्येत-एषामेभिः सहैकवचन एव द्वन्द्व इति, यथा प्राण्यङ्गादिषु। सति तु तस्य नियमस्यासम्भवादभिमतो नियमः संपद्यते। एवं पूर्वापरम्, अधरोत्तरमित्यत्रापि नियमस्वरूपं विज्ञेयम्।

'पशुद्वन्द्व' इत्येव सिद्धेऽश्ववडवग्रहणं प्रतिपदविधानार्थम्। तत्र प्रतिपदविधानादश्ववडवमित्येकवद्भावपक्षे 'पूर्ववदश्ववडवौ' इत्येतद्बाधित्वा 'स नपुंसकम्' इत्येतदेव भवति, तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमेकवद्भाववदेव प्रतिपदविहितं भवति। 'पूर्ववदश्ववडवौ' इत्येतत्तु एकवद्भावाभावपक्षे प्रवर्तते—अश्ववडवौ, अश्ववडवान् इति। एतदेवाभिप्रेत्य **वृत्तिकारस्तत्र** वक्ष्यति—अश्ववडवयोर्विभाषैकवद्भाव उक्त इत्यादि।

**बहुप्रकृतिरिति**। बहवो बहुत्वसंख्यायुक्ता वर्तिपदार्थाः प्रकृतिः कारणं यस्य द्वन्द्वार्थस्य स बहुप्रकृतिः, तदर्थाभिधायित्वाद् द्वन्द्वोऽपि बहुप्रकृतिः। नेदं स्वतन्त्रं लक्षणम्, स्वातन्त्र्ये नित्यं चेद्वनस्पत्यादीनामपि एतत्सूत्रविहितं विकल्पं बाधित्वा बहुप्रकृतित्वे नित्य एकवद्भावः स्यात्, विकल्पे फलादीनामपि 'जातिरप्राणिनाम्' इत्यादिलक्षणान्तरेण प्राप्तं नित्यमेकवद्भावं बाधित्वा बहुप्रकृतित्वे विकल्पः स्यात्। अतो लक्षणान्तरस्य शेषोऽयम्। तत्रापि यदि 'विभाषा वृक्ष' इत्यत्र पठितत्वादस्यैव शेषत्वं स्यात्ततो वनस्पत्यादिष्वबहुप्रकृतित्वे एतद्विकल्पाभावेऽपि 'जातिरप्राणिनाम्' इति नित्यो विधिः स्यात्, फलादिषु तु न दोषः; एतद्विकल्पप्राप्त्यभावाल्लक्षणान्तरप्राप्तेरेव नियमनात्, तस्मात्सर्वस्यैव प्रकरणस्यार्थशेषस्तदेतदाह—**एषां बहु-**

**भावबोधिनी**

* बहुवचनान्त फल, सेना, वनस्पति, मृग, शकुनि, क्षुद्र जन्तु, धान्य और तृण— इनका एकवद्भाव होता है। * इन शब्दों की बहुवचनान्त अवस्था में ही एकवद्भाव होता है, द्विवचनान्त में नहीं। उदा०—बदरामलके [ यह द्विवचन का है। अतः एकवद्भाव नहीं होता है। इसी प्रकार आगे भी समझना चाहिये। ] रथिकाश्वारोहौ—रथ पर सवार

रुरुपृषतौ । हंसचक्रवाकौ । यूकालिक्षे । व्रीहियवौ । कुशकाशौ ।।

**५४७. विप्रतिषिद्धं चानधिकरणवाचि ।। १३ ।। ( ९१७ )**

**परस्परविरुद्धम् = विप्रतिषिद्धम् ।** विप्रतिषिद्धार्थानां शब्दानामनधिकरणवाचिनामद्रव्यवाचिनां द्वन्द्व एकवद् भवति । विभाषानुकर्षणार्थश्चकारः । शीतोष्णम्, शीतोष्णे । सुखदुःखम्, सुखदुःखे । जीवितमरणम् जीवितमरणे ।

विप्रतिषिद्धमिति किम् ? कामक्रोधौ । अनधिकरणवाचीति किम् ? शीतोष्णे उदके ।।

न्यासः

बहुवचनान्तानां वा द्वन्द्व एकवद्भवतीत्यर्थः ।। १२ ।

**विप्रतिषिद्धञ्चानधिकरणवाचि ।। अद्रव्यवाचिनामिति ।** एतेनाधिकरणशब्दोऽत्र द्रव्ये वर्तते नाधार इति दर्शयति । न हि विप्रतिषिद्धवाचिनां शब्दानामाधारे वृत्तिरस्ति; विभक्त्यर्थत्वादाधारशक्तेः । **शीतोष्णे इति ।** शीतोष्णयोः सहानवस्थानलक्षणेनैव विरोधेन विरुद्धत्वाद्विप्रतिषिद्धवाचित्वम् । तथा सुखदुःखयोरपि ।

पदमञ्जरी

**प्रकृतिरेवेति ।** एषां फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेवैकवद्भवतीत्यर्थः । **बदरामलके इति ।** अत्र 'जातिरप्राणिनाम्' इति न भवति । **रथिकाश्वारोहाविति ।** अत्र सेनाङ्गलक्षणः । **प्लक्षन्यग्रोधाविति ।** अत्रायं विकल्पः, 'जातिरप्राणिनाम्' नित्यश्च न भवति । अवनस्पतीनां तु वृक्षिविशेषाणामबहुप्रकृतित्वेऽप्ययं विकल्पो भवत्येव—आम्रपलाशम्, आम्रपलाशौ । अन्ये तु वनस्पतिग्रहणं वृक्षमात्रोपलक्षणं मन्यन्ते । **रुरुपृषतौ, हंसचक्रवाकाविति ।** अत्राप्यस्य विकल्पस्याभावः । **यूकालिक्षे इति ।** 'क्षुद्रजन्तवः' इत्यस्याभावः । **व्रीहियवौ, कुशकाशावित्यत्र** तूभयोः ।। १२ ।।

**विप्रतिषिद्धं चानधिकरणवाचि ।। परस्परविरुद्धमिति ।** सहानवस्थानादिलक्षणो विरोधः, 'विप्रतिषिद्धानाम्' इत्यादिसूत्रे तु तद्वाच्यवयवत्वाद् द्वन्द्वरूपमेव तथोक्तमिति भावः । **अद्रव्यवाचिनामिति ।** एतेनाधिकरणशब्दो द्रव्ये वर्तते, नाधार इति दर्शयति । न हि द्वन्द्वावयवानामाधारे वृत्तिः सम्भवति; विभक्त्यर्थत्वादाधारस्येति भावः । अयमपि नियमार्थः प्रारम्भः; नियमस्वरूपं च–य एकवचनो द्वन्द्वो विभाषाप्राप्तः स

भावबोधिनी

और घोड़ा पर सवार दो सैनिक । ] प्लक्षन्यग्रोधौ [ प्लक्ष और न्यग्रोध एक एक वृक्ष ] । रुरुपृषतौ [ रुरु और पृषत एक एक मृग विशेष मृग ] । हंसचक्रवाकौ [ हंस और चक्रवाक = चकोर ] । यूकालिक्षे [ जूँ और लीख ] व्रीहियवौ [ व्रीहि और जौं ] । कुशकाशौ [ कुश और काश = सरकण्डा ] ।

**विमर्श** - प्राणिभिन्न जातिवाची वृक्ष, तृण, धान्य और व्यञ्जनवाचकों में 'जातिरप्राणिनाम्' पा० सू० २।४।६ से विकल्प से एकवद्भाव प्राप्त है और शेष शब्दों में किसी से भी प्राप्त नहीं है, वहाँ नित्य एकवद्भाव का विधान प्रस्तुत सूत्र करता है ।

वार्तिक के अनुसार, जब बहुतों का द्वन्द्व होता है तभी यह एकवद्भाव होता है, एक एक को मिलाकर द्विवचन के द्वन्द्व में यह सूत्र लागू नहीं होता है ।। १२ ।।

परस्परविरुद्ध = विप्रतिषिद्ध होता है । विप्रतिषिद्ध अर्थवाले शब्द जो अधिकरणवाचक नहीं हैं— द्रव्यवाचक नहीं हैं, उनका द्वन्द्व एकवत् होता है । [पूर्वसूत्र से] विकल्प की अनुवृत्ति करने के लिये 'चकार' है । अर्थात् इनका विकल्प से एकवद्भाव होता है । उदा०— शीतोष्णम्, शीतोष्णे [ शीतं च उष्णम् च । एकवद्भाव नपुंसकलिङ्ग होने से उक्त रूप है । पक्ष में द्विवचन का रूप है । ] सुखदुःखम् सुखदुःखे [सुखं च दुःखं च] । जीवितमरणम्, जीवितमरणे [जीवन और मृत्यु ।]

विप्रतिषिद्ध = विरुद्ध अर्थवाले— इसका क्या फल है ? कामक्रोधौ । [ काम और क्रोध । ये एक साथ रहते हैं,

## ५४८. न दधिपयआदीनि ॥ १४ ॥ ( ९१८ )

**यथायथमेकवद्भावे प्राप्ते प्रतिषेध आरभ्यते । दधिपयआदीनि शब्दरूपाणि नैकवद् भवन्ति । दधिपयसी । सर्पिर्मधुनी । मधुसर्पिषी । ब्रह्मप्रजापती । शिववैश्रवणौ । स्कन्दविशाखौ । परिव्राट्कौशिकौ । प्रवर्ग्योपसदौ । शुक्लकृष्णौ । इध्माबर्हिषी । निपातनाद्दीर्घः । दीक्षातपसी । श्रद्धातपसी । मेधातपसी । अध्ययनतपसी । उलूखलमुसले । आद्यावसाने । श्रद्धामेधे । ऋक्सामे । वाङ्मनसे ॥**

**न्यासः**

**कामक्रोधाविति** । क्रुद्धोऽपि काममाचरतीति नानयोर्विप्रतिषिद्धत्वम् ॥ १३ ॥

**न दधिपयआदीनि ॥ यथायथमिति** । यथास्वं यस्य यदात्मीयं लक्षणं तेनेत्यर्थः । तत्र दधिपयसी इत्यादीनां त्रयाणां व्यञ्जनवाचित्वाद् विभाषैकवद्भावप्राप्तिः । ननु च सर्पिर्मधुनी, मधुसर्पिषी इति राजदन्तादिष्वनयोर्निपातनादेवैकवद्भावो न भविष्यति ? नैतदस्ति; पाक्षिको हि व्यञ्जनैकवद्भावः । तत्र यस्मिन् पक्षे स नास्ति तस्मिन्निपातनं पूर्वनिपातव्यभिचारार्थं स्यात् । इतरस्मिन्नपि पक्ष एकवद्भावनिषेधार्थोऽत्र पाठः । यद्येवम्, अनेनैव सिद्धत्वाद्राजदन्तादिषु पाठोऽनर्थकः स्यात् ? नानर्थकः; बहुवचनार्थत्वात् । **सर्पिर्मधुनी, मधुसर्पिषी इति** । ननु तत्रापि द्विवचनान्तावेव पठ्येते ? यद्यप्येवम्, तथापि शब्दाश्रयत्वात् परनिपातस्यार्थधर्मत्वाद् द्वित्वं नापेक्ष्यते । अर्थाश्रयस्त्वेकवद्भाव इति तत्प्रतिषेधे युज्यते संख्यां विवक्षितुम् । **ब्रह्मप्रजापती** इत्यादीनां पञ्चानां समाहारैकत्वात् प्राप्तिः । **शुक्लकृष्णाविति** । 'विप्रतिषिद्धम्' इत्यादिना । **इध्माबर्हिषी** इत्यादीनां समाहारैकत्वात् प्राप्तिः ॥ १४ ॥

**पदमञ्जरी**

यदि विप्रतिषिद्धवाचिनां भवत्यद्रव्यवाचिनामेव, द्रव्यवाचिनां त्वितरेतरयोग इति ॥ १३ ॥

**न दधिपयआदीनि ॥ यथायथमिति ॥**

व्यञ्जनत्वाद्विकल्पस्य प्राप्तिस्तत्रादितस्त्रिषु । पूर्वसूत्रविकल्पस्य शुक्लकृष्णाविति, त्विह ॥

यद्येवम्, प्रतिषिद्धेऽस्मिन्विकल्पे जातिलक्षणः । नित्यः स्यादेकवद्भावः ? परिहारोऽत्र वक्ष्यते ॥

स्त्रियां यदुक्तं तन्नेति, यथा षट्स्वभिधास्यते । तथात्राप्येकवद्भावमात्रमेव निषिध्यते ॥

किं च, ब्रह्मप्रजापत्यादिष्वत्र पठितेषु समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वो व्यवस्थाप्यते, तत्साहचर्यादितेष्वपि चतुर्षु तदेव युक्तम् ॥ १४ ॥

**भावबोधिनी**

विरुद्ध नहीं हैं। अतः एकवद्भाव नहीं होता है । ] अनधिकरणवाचक = अद्रव्यवाचक — इसका क्या फल है ? शीतोष्णे उदके [ ठण्डा और गरम पानी । यहाँ शीतोष्ण शब्द द्रव्यवाचक हैं । अतः एकवद्भाव नहीं होता है । ] ॥ १३ ॥

जिनका जैसे एकवद्भाव प्राप्त है, उनके विषय में यह निषेधविधान किया जा रहा है । दधिपय आदि शब्दरूप एकवत् नहीं होते हैं । उदा० — दधिपयसी [ दधि च पयश्च । दही और घी । यहाँ 'विभाषा वृक्ष०' पा. सू. २।४।१२ से वैकल्पिक एकवद्भाव प्राप्त है उसका निषेध होने से द्विवचन होता है । ] सर्पिर्मधुनी [ सर्पिश्च मधु च । घी और शहद ] मधुसर्पिषी [ शहद और घी । ] ब्रह्मप्रजापती [ ब्रह्मा च प्रजापतिश्च ] शिववैश्रवणौ [ शिव और वैश्रवण ] स्कन्दविशाखौ [ स्कन्द और विशाख ] परिव्राट्कौशिकौ [ परिव्राजक और कौशिक ] प्रवर्ग्योपसदौ [ प्रवर्ग्य और उपसद ] शुक्लकृष्णौ [ सफेद और काला ] इध्माबर्हिषी [ इध्मश्च बर्हिश्च ] यहाँ निपातनात् 'अ' का दीर्घ होता है । [ अतः इध्म का इध्मा बनता है ] । दीक्षातपसी [ दीक्षा और तप ] । श्रद्धातपसी [ श्रद्धा और तप ] । मेधातपसी [ मेधा और तप ] । अध्ययनतपसी [अध्ययन और तपस्या] । उलूखलमुसले [ ओखली और मूसल ] । आद्यावसाने [ प्रारम्भ और अन्त ] । श्रद्धामेधे [ श्रद्धा और मेधा ] । ऋक्सामे [ ऋग्वेद और सामवेद ] । वाङ्मनसे [ वाणी और मन ] ॥ १४ ॥

**९४९. अधिकरणैतावत्त्वे च ॥ १५ ॥ ( ९१९ )**

**'न' इति वर्त्तते। अधिकरणं वर्त्तिपदार्थः, स हि समासस्यार्थस्याधारः, तस्यैतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो नैकवद् भवति। यथायथमेकवद्भावः प्राप्तः प्रतिषिध्यते। दश दन्तोष्ठाः। दश मार्दङ्गिक-पाणविकाः ॥**

न्यासः

**अधिकरणैतावत्त्वे च ॥** अधिकरणं **वर्त्तिपदार्थ इति।** वर्तनं वर्तः=समासः। भावे घञ्। वर्त्तोऽ-स्यास्तीति वर्त्ति=समासावयवभूतम्। वर्त्ति च तत् पदञ्चेति वर्त्तिपदं तस्य पदस्यार्थोऽधिकरणमित्युच्यते। कथं पुनस्तस्याधिकरणत्वमित्यत आह—**स हीत्यादि।** आधारो ह्यधिकरणम्। वर्त्तिपदार्थश्च समासार्थ-स्याधारो भवति; तत्र तस्य समवायात्। वर्त्तिपदार्थैर्ह्यवयवैरवयवी समासार्थ आरभ्यते, अवयवी चावयवेषु समवैति। **तस्येति।** वर्त्तिपदार्थस्य। **दश इमे दन्तौष्ठा इति।** द्वन्द्वश्चेत्यादिना प्राप्तिः ॥ १५ ॥

पदमञ्जरी

**अधिकरणैतावत्त्वे च ॥** वृत्तिर्वर्तः=समासः, सोऽस्यास्तीति समासावयवभूतं वर्त्तिपदम्, तस्यार्थोऽ-धिकरणमित्युच्यते, कथं पुनस्तदधिकरणमित्याह—**स हीति।** नियमस्य चात्र प्रतिषेधः प्राण्यङ्गादीनां समाहार एवेति नियमो वर्त्तिपदार्थस्येयत्तायां गम्यमानायां न भवतीति, न पुनः पूर्वसूत्रवत्समाहारद्वन्द्वस्य प्रतिषेधः। यद्येवम्, प्रतिषिद्धेऽपि नियमे 'दश दन्तोष्ठाः' इत्यधिकरणैतावत्त्वेऽपि 'चार्थे द्वन्द्वः' इत्यनेन समाहारेऽर्थे द्वन्द्वः स्यादेव, ये चात्र प्रकरणेऽसंकीर्त्तितास्तेषु नियमस्याप्रसङ्गादसत्यस्मिन्प्रतिषेधे 'चार्थे द्वन्द्वः' इत्यनेन समाहारे द्वन्द्वः स्यादेव—दश ब्राह्मणक्षत्रिया इति, अतः प्रकृतानामन्येषां च सर्वेषामेकवचनो द्वन्द्वो न भवति, 'अधिकरणैतावत्त्वे' इति समाहारद्वन्द्व एव प्रतिषेध्यः? उच्यते—'अधिकरणं वर्त्तिपदार्थः' इत्युक्तम्, न च समाहारद्वन्द्वे वर्त्तिपदार्थस्यैतावत्त्वं शक्यं प्रतिपादयितुम्, दशादिशब्दप्रयोगेऽपि हि तस्यैव द्वन्द्वार्थस्य समाहारस्य सङ्ख्याविशेषोऽवगम्यते, न वर्त्तिपदार्थस्य, यथा द्विगौ—दशपञ्चपूल्य इति। अतो वर्त्तिपदार्थस्य सङ्ख्याविशेषं प्रतिपिपादयिषताऽवश्यमितरेतरयोग द्वन्द्वो विधेय इति दश ब्राह्मणक्षत्रिया इत्यादौ तावददोषः। यद्येवम्, अनेनैव न्यायेन 'दश दन्तोष्ठाः' इत्यादावपि समाहारद्वन्द्वो न भविष्यतीति नार्थः प्रतिषेधेन? नैवम्; असत्य-स्मिन्प्रतिषेधे प्राण्यङ्गादीनां समाहार एवेति नियमादितरेतरयोगद्वन्द्वो न स्यात्। न च समाहारद्वन्द्वे दशादि-प्रयोगेऽपि वर्त्तिपदार्थस्य सङ्ख्याविशेषः प्रतिपादयितुं शक्य इति अधिकरणैतावत्त्वे प्रतिपिपादयिषिते द्वन्द्व एव न स्यादित्यारभ्यः प्रतिषेधः। **दश दन्तोष्ठा इति।** अत्र दशशब्दस्य प्रत्येकं सम्बन्धाद्वर्त्तिपदार्थस्येयत्ता गम्यते, समुदायसम्बन्धेऽपि दन्तोष्ठात्मकवर्त्तिपदार्थगतैव सङ्ख्या ॥ १५ ॥

भावबोधिनी

'न' इसकी अनुवृत्ति होती है। अधिकरण=वर्त्ती=समास का अवयवभूत पदार्थ है। क्योंकि वह समास के अर्थ का आधार है, उसका एतावत्त्व=इतना है—परिमाण के प्रतीत होने पर द्वन्द्व एकवत् नहीं होता है। पूर्वोक्त नियमों से प्राप्त एकवद्भाव का प्रतिषेध होता है। उदा०—दश दन्तोष्ठाः [ दश दाँत और होंठ ]। दश मार्दङ्गिकपाणविकाः [ दश मृदङ्गवादक और पाणवादक। ] [ यहाँ दाँत, होंठ तथा मार्दङ्गिक और पाणविक की इयत्ता=परिमाण प्रतीत हो रहा है। यहाँ "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" पा० सू० २।४।२ से एकवद्भाव प्राप्त है, उसका निषेध है। वृत्तिः= वर्तः=समासः, सः अस्यास्ति वर्त्ती पदार्थः, समासावयवभूतं वर्तिपदम्, वर्ति च तत् पदं च—इति वर्तिपदम्, तस्य पदस्य अर्थः=अधिकरणम् ]॥ १५ ॥

५५०. विभाषा समीपे ॥ १६ ॥ ( ९२० )

**अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्व एकवद्भवति। उपदशं दन्तोष्ठम्, उपदशा दन्तोष्ठाः। उपदशं मार्दङ्गिकपाणविकम्, उपदशा मार्दङ्गिकपाणविकाः।**

**अव्ययस्य संख्ययाऽव्ययीभावोऽपि विहितः ( २.१.६ ), बहुव्रीहिरपि ( २.२.२५ )। तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः ( म० भा० )॥**

**न्यासः**

**विभाषा समीपे॥** अधिकरणैतावत्त्वस्य प्रकृतत्वात् तदपेक्षयैव समीपत्वं विज्ञायत इत्यत आह—**अधिकरणतावत्त्वस्य समीप इति।** **उपदशं दन्तौष्ठमिति।** अत्राधिकरणैतावत्त्वं दशसंख्या, तत्समोपं नवैकादश वा। तत्र दशशब्द एतावत्त्वमाचष्टे। उपशब्दः सामीप्यम्।

कथं पुनर्द्वन्द्वैकवद्भावो विकल्प्यमानोऽनुप्रयोगस्य लभ्यत इत्यत आह—**अव्ययस्येत्यादि।** यद्यप्यर्थातिदेशादनुप्रयोगस्यापि विकल्पो लभ्यते, तथापि परीहारान्तरमप्यस्तीति दर्शनार्थमस्योपन्यासः। तत्राव्ययस्य संख्याया अव्ययीभावो विहितः—'अव्ययं विभक्ति' इत्यादिना। बहुव्रीहिरपि विहितः—'संख्ययाव्ययासन्न' इत्यादिना। अत्रैकवद्भावपक्ष एकार्थस्य द्वन्द्वस्यैकार्थ एवाव्ययीभावोऽनुप्रयुज्यते। एकार्थत्वं पुनस्तस्य सामीप्यप्रधानत्वात् यद्यप्यव्ययीभावोऽव्ययम्, तथाप्यभेदैकत्वं भेदाभावलक्षणं तस्यास्त्येव सामानाधिकरण्यम्। इतरत्र तु बह्वर्थस्य द्वन्द्वस्य बह्वर्थ एव बहुव्रीहिरनुप्रयुज्यते। बह्वर्थं पुनर्बहुव्रीहेः समीपिनः प्राधान्यात्। बहुव्रीहिर्हि समीपो प्रधानत्वाद् भेदसंख्यामुपादत्त इति बह्वर्थो भवति। **उपदशमिति।**

**पदमञ्जरी**

**विभाषा समीपे॥** 'अधिकरणैतावत्त्वे' इत्यधिकारात्समीपरूप एतस्मिन्निति गम्यते, वृत्तौ त्वर्थमात्रं दर्शितम्। **अधिकरणैतावत्त्वस्य समीप इति।** अत्र च भावप्रधानः समीपशब्दः, अधिकरणैतावत्त्वस्य सामीप्ये परिच्छित्तावित्यर्थः। अत्र विस्पष्ट एव नियमस्य प्रतिषेधः, न हि विभाषा समाहारद्वन्द्वः प्रतिषेध्यः। **अव्ययीभावो विहित इति।** 'अव्ययं विभक्ति' इत्यादिना। यद्यप्यत्र सङ्ख्ययेति नास्ति, सङ्ख्ययापि तु भवत्येव। **बहुव्रीहिरिति।** 'सङ्ख्ययाव्यासन्न' इत्यादिना। तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यत इति एकार्थस्यैकार्थ इति भावः। ऐकार्थ्यञ्च तस्य सामीप्यप्रधानत्वात्। यद्यप्यव्ययीभावोऽव्ययत्वान्निःसङ्ख्यस्तथापि भेदाभावरूपमैकार्थ्यमस्त्येव। सामानाधिकरण्यं च सामीप्यतद्वतोरभेदाश्रयेण प्रतिपाद्यम्। अधिकरणैतावत्त्वमपि

**भावबोधिनी**

अधिकरण के एतावत्त्व = परिमाण के समीप अर्थ में द्वन्द्व विकल्प से एकवत् होता है। उदा० - उपदशं दन्तोष्ठम् उपदशाः दन्तोष्ठाः। [ दश के लगभग दाँत और ओंठ अर्थात् नौ या ग्यारह ] उपदशं मार्दङ्गिकपाणविकम्, उपदशाः मार्दङ्गिकपाणविकाः [ दश के लगभग मृदङ्गवादक और पाणवादक अर्थात् नौ या ग्यारह लोग। ]

अव्यय का संख्यावाचक के साथ अव्ययीभाव भी किया गया है और बहुव्रीहि भी। इसमें जब एकवद्भाव पक्ष है तब अव्ययीभाव का अनुप्रयोग होता है और जब नहीं है तब बहुव्रीहि का अनुप्रयोग होता है। ]

**विमर्श**—जब अधिकरण = समासावयभूत के परिमाण का समीप अर्थ कहना इष्ट होता है तब विकल्प से एकवद्भाव होता है। समीप अर्थ में अव्यय का संख्यावाचक के साथ "अव्ययं विभक्तिसमीप०" पा० सू० २।१।६ से अव्ययीभाव समास किया गया है और "सङ्ख्ययाव्ययासन्नदूराधिक०" पा० सू० २।२।२५ से बहुव्रीहि भी किया गया है।

५५१. स नपुंसकम् ॥ १७ ॥ ( ८२१ )

**यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च। पञ्चगवम्। दशगवम्। द्वन्द्वः खल्वपि— पाणिपादम्। शिरोग्रीवम्। परलिङ्गतापवादो योगः।**

**न्यासः**

'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यनुवर्तमाने 'अनश्च' इति टच् समासान्तः। 'नस्तद्धिते' इति टिलोपः। **उपदशा इति**। 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् ॥ १६ ॥

**स नपुंसकम् ॥ पञ्चगवमिति**। 'गोरतद्धितलुकि' इति टच्। सग्रहणं द्विगोरपि यथा स्यादित्येवमर्थम्। इतरथा हि 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यनन्तरस्यैव द्वन्द्वस्य स्यान्न व्यवहितस्य द्विगोः, नैतदस्ति; एकवचनमित्यनुवर्तते, 'तस्य नपुंसकम्' इत्यनेन सम्बन्धे सति कुतो व्यवधानम्? न ह्यत्रैकवचनेन विशेषो द्वन्द्वोऽनेनापेक्ष्यते, किं तर्हि? एकवचनमात्रम्। प्रसिद्ध्युपसंग्रहार्थं तर्हि सग्रहणम्। स इत्येतदनुवादो

**पदमञ्जरी**

समाहारसमाहारिणोर्भेदाविवक्षयैवोपपाद्यम्। **इतरत्र बहुव्रीहिरिति**। बह्वर्थस्य बह्वर्थ इति भावः। बह्वर्थत्वं च तस्य समीपिप्रधानत्वात्। ननु द्वन्द्वार्थस्यैकवद्भावादनुप्रयोगस्याप्येकवचनता सिद्धा, किमेतया क्लिष्टकल्पनया? उच्यते—अव्ययीभावस्यैवानुप्रयोगे तस्याव्ययत्वाद् बहुत्वाभावाद् बहुवचनं न स्यात्, सत्यपि वा तस्मिन्नम्भावे कृते उपदशा इति न स्यात्। बहुव्रीहेरेव चानुप्रयोगे उपदशस्य पाणिपादस्येति षष्ठी स्याद्, उपदशम्पाणिपादस्येति चेष्यते; अतो यथोक्तमेव साधीयः ॥ १६ ॥

**स नपुंसकम् ॥** परवल्लिङ्गतापवादो योगः। सग्रहणं व्यवहितस्य द्विगोरपि यथा स्याद्, अन्यथाऽव्यवहितस्य द्वन्द्वस्यैव स्यात्, नैतदस्ति; एकवचनमित्येतावन्मात्रमेवापेक्षिष्यामहे, नैकवचनविशेषं द्वन्द्वम्। एवं तर्हि योऽत्र प्रकरणेऽसङ्कीर्तितः समाहारद्वन्द्वस्तस्यापि यथा स्यात्? अन्यथा प्रकृतस्यैव द्वन्द्वस्य

**भावबोधिनी**

इन दोनों का क्षेत्र अलग-अलग है (१) जब एकवद्भाव होता है तब अव्ययीभाव समास वाले पद का अनुप्रयोग किया जाता है—उपदशं दन्तोष्ठम्। (२) जब एकवद्भाव नहीं होता है तब बहुव्रीहि समासवाले पद का अनुप्रयोग होता है—उपदशाः दन्तोष्ठाः। दशानां समीपे इस विग्रह से दश के समीपवर्त्ती नौ अथवा ग्यारह संख्या = परिमाण की प्रतीति होती है ॥ १६ ॥

जिसका यह एकवद्भाव किया गया है वह द्वन्द्व और द्विगु नपुंसक लिङ्ग होता है। उदा०—पञ्चगवम् [ पाँच गायों का समाहार। यहाँ "तद्धितार्थोत्तरपदसमाहारे च" पा० सू० २।१।५० से समास होता है और इसके पूर्व में संख्या होने से "संख्यापूर्वो द्विगुः' पा० सू० २।१।१० से द्विगु है। प्रस्तुत सूत्र नपुंसक लिङ्ग करता है और 'द्विगुरेकवचनम्" पा० सू० २।४।१ से एकवचन होता है। समासान्त टच् प्रत्यय करने पर 'पञ्चगवम्' बनता है। ] दशगवम् [ दशानां गवां समाहारः ]। द्वन्द्व भी नपुंसकलिङ्ग होता है—पाणिपादम् [ पाणी च पादौ च। हाथ और पैर ] शिरोग्रीवम्। [ शिरश्च ग्रीवा च। इनमें द्वन्द्व समास और 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' पा० सू० २।४।२ से एकवद्भाव और प्रस्तुत सूत्र से नपुंसक लिङ्ग होता है। ]

यह सूत्र परवर्त्ती पद के लिङ्ग होने का अपवाद है। [ 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' पा० सू० २।४।२६ से द्वन्द्व में परवर्त्ती पद का लिङ्ग प्राप्त है। वहाँ एकवद्भाव में नपुंसक लिङ्ग करने के लिये यह सूत्र है। ]

❀ अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते ❀ ( म० भा० २.४.३० वा० ४ )। पञ्चपूली। दशरथी।

❀ वाऽऽबन्तः स्त्रियामिष्टः ❀ ( वा० ५ )। पञ्चखट्वम्, पञ्चखट्वी।

❀ अनो नलोपश्च वा च द्विगुः स्त्रियाम् ❀ ( वा० ६ )। पञ्चतक्षम्, पञ्चतक्षी।

❀ पात्रादिभ्यः प्रतिषेधो वक्तव्यः ❀ ( वा० ७ )। पञ्चपात्रम्। चतुर्युगम्। त्रिभुवनम्॥

**न्यासः**

भविष्यति, अनुवादश्च प्रसिद्धस्यैव भवति। तथा च यथादर्शनमियं लिङ्गव्यवस्थाऽऽख्यायत इति। तेन द्वन्द्वैकवद्भावे नित्यं नपुंसकत्वं विज्ञायते। द्विगोश्चानियता। तेन 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इत्येतदुपपन्नं भवति। **पञ्चपूलीति**। 'द्विगोः' इति ङीप्। एतदेव द्विगोः स्त्रीप्रकरणे ङीब्विधानं ज्ञापकम्—'क्वचित् स्त्रियां द्विगुर्भाष्यते' इति।

**पञ्चखट्वम्, पञ्चखट्वीति**। उपसर्जनह्रस्वत्वे कृते पक्षे ङीप्।

**पञ्चतक्षम्, पञ्चतक्षीति**। नलोपे कृते पक्षे ङीप्॥ १७॥

**पदमञ्जरी**

द्विगोश्च स्यात्। ननु प्रकरणमपि नापेक्षिष्यते, यद्येवम्, एकसङ्ख्य इत्यादावेकार्थस्य स्यात्, अतोऽवश्यापेक्ष्यं प्रकरणम्। तस्मिंश्चापेक्ष्यमाणे प्राण्यङ्गादिसम्बन्धादिरूपेण द्वन्द्वः प्रकृत इति तस्यैव स्यात्। स इत्येतस्मिंस्तु सति अपेक्ष्यमाणेऽपि प्रकरणे प्राण्यङ्गादिसम्बन्धपरित्यागेन योऽत्र प्रकरणे संकीर्तितो द्वन्द्वो द्विगुश्च 'स नपुंसकम्' इति सर्वस्य समाहारद्वन्द्वस्य नपुंसकत्वं लभ्यते, एकादौ चातिप्रसङ्गो न भवति। तथा च 'युवोरनाकौ'' इत्यादावुच्यते—युवोरिति समाहारद्वन्द्वे स नपुंसकप्रसङ्गः। अतो यावान्कश्चन समाहारद्वन्द्वः प्राण्यङ्गादिसम्बन्धी, अन्यो वा, सर्वस्यास्य नपुंसकत्वं विधीयत इति सिद्धम्।

**अकारान्तोत्तरपद इति**। अत्रात इत्यधिकारे 'द्विगोः' इति ङीब्विधानं लिङ्गम्। **पञ्चखट्वीति**। स्त्रीत्वपक्षे उपसर्जनह्रस्वत्वम्।

**अनो नलोपश्चेति**। 'उत्तरपदत्वे चापदादिविधौ' ( भोज० परि० ४४ ) इति प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावान्नलोपवचनम्।

**पात्रादिभ्य इति**। तादर्थ्ये एषा चतुर्थी पात्राद्यन्तानां द्विगूनां सिद्धय इत्यर्थः। पात्रादिराकृतिगणः॥१७॥

**भावबोधिनी**

* जिस द्विगु का उत्तरपद अकारान्त है उसमें स्त्रीलिङ्ग होता है। * उदा०—पञ्चपूली [ पञ्चानां पूलानां समाहारः—इस विग्रह में द्विगु समास करने पर इस वचन से स्त्रीलिङ्ग होने से "द्विगोः" पा० सू० ४।१।२१ से ङीप् प्रत्यय होता है। पाँच गाठों का समूह। ] दशरथी। [ दशानां रथानां समाहारः। यहाँ भी प्रक्रिया पूर्ववत् है। ]

* आबन्त उत्तरपद हो तो विकल्प से स्त्रीलिङ्ग इष्ट है। * पञ्चखट्वम् पञ्चखट्वी। [ पञ्चानां खट्वानां समाहारः द्विगु समास। वैकल्पिक स्त्रीलिङ्ग, उपसर्जन का ह्रस्व करने पर ङीप् होता है। पक्ष में नपुंसकलिग होता है। ]

* अन् प्रत्ययान्त के न का लोप होता है और विकल्प से स्त्रीलिङ्ग होता है। * उदा०—पञ्चतक्षम्, पञ्चतक्षी [ पञ्चानां तक्ष्णाम् समाहारः। पाँच बढइयों का समूह। जब न् का लोप होता है। तब स्त्रीलिङ्ग होता ङीप् होता है। पक्ष में न् का लोप और नपुंसक लिङ्ग होता है। ] * पात्र आदि शब्दों से स्त्रीलिङ्ग का प्रतिषेध कहना चाहिये। * उदा०—पञ्चपात्रम् [ पञ्चानां पात्राणां समाहारः। ] चतुर्युगम् [ चतुर्णां युगानां समाहारः ] त्रिभुवनम् [ त्रयाणां भुवनानां समाहारः ]। [ इन सभी में उत्तरपद अकारान्त होने से स्त्रीलिङ्गता प्राप्त है। उसका प्रतिषेध होता है। अतः नपुंसक लिङ्ग के रूप होते हैं]॥ १७॥

## ८५२. अव्ययीभावश्च ॥ १८ ॥ ( ६५९ )

**अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति। अधिस्त्रि। उपकुमारि। उन्मत्तगङ्गम्। लोहितगङ्गम्। पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्ता, अन्यपदार्थप्रधानस्याभिधेयलिङ्गता, अत इदमुच्यते। अनुक्तसमुच्चयार्थश्चकारः।**

**❀ पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते ❀ ( म० भा० २.४.३० वा० १ )। पुण्याहम्। सुदिनाहम्।**

**❀ पथः संख्याव्ययादेः क्लीबतेष्यते ❀ (म०भा० २.४.३०वा० २) त्रिपथम्। चतुष्पथम्। विपथम्। सुपथम्।**

### न्यासः

**अव्ययीभावश्च ॥ अधिस्त्रीति।** 'अव्ययं विभक्ति' इत्यादिनाव्ययीभावः। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति। ह्रस्वत्वम्। **उन्मत्तगङ्गम्, लोहितगङ्गमिति।** 'अन्यपदार्थे च संज्ञायाम्' इति समासः। पूर्ववद्ध्रस्वत्वम्। **पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्तेति।** अधिस्त्रीत्यादौ पूर्वपदस्यालिङ्गत्वात्। **अन्यपदार्थप्रधानस्याभिधेयलिङ्गतेति।** उन्मत्तगङ्गामित्यादौ देशोऽभिधेयः, स च पुंल्लिङ्ग इति पुंल्लिङ्गत्वं प्राप्तम्।

**पुण्याहमिति** कर्मधारयः। 'राज हःसखिभ्यष्टच्' इति टच् समासान्तः। 'रात्राह्नाहाः पुंसि' इति पुंल्लिङ्गतायां वचनम्।

### पदमञ्जरी

**अव्ययीभावश्च ॥ पूर्वपदार्थप्रधानस्येति।** अधिस्त्रीत्यादौ पूर्वपदार्थस्यालिङ्गत्वादलिङ्गतैव प्राप्नोति। **अन्यपदार्थप्रधानस्येति।** उन्मत्तगङ्गमित्यादेः। **पुण्याहमिति।** कर्मधारये 'राजाहःसखिभ्यष्टच्', रात्राह्नाहाः पुंसि' इत्यस्यापवादः। **सुदिनमिति।** सुदिनशब्दः प्रशस्तवचनः। सुदिनासु समासु कार्यमेतदिति यथा।

### भावबोधिनी

अव्ययीभाव समास भी नपुंसकलिङ्ग होता है उदा०—अधिस्त्रि [ स्त्रियाम् अधि—इस विग्रह में सप्तमी विभक्त्यर्थ में 'अव्ययं विभक्तिसमीप०' पा० सू० २।१।६ से अव्ययीभाव समास होता है। प्रस्तुत सूत्र नपुंसकलिङ्ग करता है। 'ह्रस्वो नपुंसके प्रातिपदिकस्य'' पा० सू० १।२।४७ से ह्रस्व हो जाता है। ] उपकुमारि [ कुमार्याः समीपम्—यहाँ भी पूर्वोक्त प्रक्रिया होती है। ] उन्मत्तगङ्गम् [ उन्मत्ता गङ्गा यस्मिन् देशे—इस विग्रह में 'अन्यपदार्थे च संज्ञायाम्' पा० सू० २।१।२१ से अव्ययीभाव समास होता है। प्रस्तुत सूत्र से नपुंसकलिङ्ग होने पर रूप सिद्ध होता है। ] लोहितगङ्गम् [ लोहिता गंगा यस्मिन् देशे—इस अर्थ में यह अव्ययीभाव है। ये दोनों शब्द देशविशेष के लिये प्रयुक्त होते हैं। ]

पूर्वपदार्थप्रधान [ अव्ययीभाव ] की अलिङ्गता ही प्राप्त है और अन्यपदार्थप्रधान [ अव्ययीभाव ] की अभिधेयलिङ्गता प्राप्त है, इस लिये नपुंसकलिङ्ग करने के लिये यह सूत्र कहा जा रहा है। अनुक्त का समुच्चय करने के लिये सूत्र में च' कार है।

* पुण्य और सुदिन से परे अहन् शब्द का नपुंसकलिङ्ग इष्ट है। * पुण्याहम् [ पुण्यं च तदहः—यह कर्मधारय है। इसमें राजाहःसखिभ्यष्टच्' पा० सू० ५।४।९१ से टच्=अ प्रत्यय करने के बाद 'रात्राह्नाहाः पुंसि' पा० सू० २।४।२९ से पुंल्लिङ्गत्व प्राप्त है। यह नपुंसक लिङ्ग करता है। ] सुदिनाहम् [ सुदिनं च तदहः च। यहाँ भी सब प्रक्रिया पूर्ववत् ही है। ]

* संख्या और अव्यय जिसके आदि में हैं ऐसे पथिन् की नपुंसकलिङ्गता इष्ट है। * उदा०—त्रिपथम् [ त्रयाणां पन्थाः—यह षष्ठीसमास ही है क्योंकि द्विगु में तो सामान्यसूत्र से ही नपुंसकलिङ्ग हो जाता है। इसी प्रकार ] चतुष्पथम्

❀ क्रियाविशेषणानां च क्लीबतेष्यते ❀ । मृदु पचति । शोभनं पचति ॥

**७५३. तत्पुरुषोऽनञ्कर्मधारयः ॥ १९ ॥ ( ८२२ )**

अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते । **नञ्समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गो भवतीत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र । वक्ष्यति-'विभाषा सेनासुरा' च्छायाशाला-निशानाम्' ( २.४.२५ ) इति । ब्राह्मणसेनम् । ब्राह्मणसेना ।**

न्यासः

**विपथमिति** । 'पथः संख्याव्ययादेः' इति परवल्लिङ्गतायां प्राप्तायां वचनम् । 'कुगतिप्रादयः' इति समासः । **चतुष्पथमिति** षष्ठीसमासः । समाहारद्विगौ तु पूर्वेणैव सिद्धम् । 'ऋक्पूरब्धूःपथामानक्षे'इत्यकारः समासान्तः ॥ १८ ॥

**तत्पुरुषोऽनञ्कर्मधारयः** ॥ नञ्मात्रस्य तत्पुरुषस्याभावान्नत्रात्र नञ्समासो लक्ष्यत इत्याह—**नञ्समास-मिति । वक्ष्यति विभाषा सेनासुराच्छायेति ।** अनन्तरयोगेष्वस्याधिकारस्य प्रयोजनं नास्तीत्यतस्तानुल्लङ्घ्य व्यवहितस्य 'विभाषा सेनापुरा' इत्यादियोगस्योपन्यासः । इत उत्तरेष्वनन्तरेषु योगेष्वस्य प्रयोजनाभावः "न हि संज्ञायां कन्थोशीनरेषु तत्पुरुषो नञ्समासः, कर्मधारयो वाऽस्ति" इत्यादिना भाष्ये प्रतिपादितः । **दृढसेन**

पदमञ्जरी

**त्रिपथमिति** । षष्ठीसमासः । द्विगोः पात्रादित्वात्सिद्धम् । विरूपः पन्था **विपथम्**, प्रादिसमासः ।

**क्रियाविशेषणानां चेति** । क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते वचनम् ॥ १८ ॥

**तत्पुरुषोऽनञ्कर्मधारयः** ॥ असन्देहार्थं नञ्कर्मधारयस्तत्पुरुष इत्यन्यासादनञ्कर्मधारय इति **पदच्छेदः** । अत्र कर्मधारयशब्दो भावप्रधानः, नञ्च कर्मधारयश्च नञ्कर्मधारयौ, तौ न विद्येते यस्मिंस्तत्पुरुषे सोऽनञ्कर्म-धारय इति बहुव्रीहिः । तत्पुरुषे त्वस्मिन्नञ्मात्रस्य तत्पुरुषस्याभावात्तद्युक्ततत्पुरुषो नञ्शब्देन लक्षणीयः । स्यात्, लिङ्गवचनयोश्चान्यतरस्य व्यत्ययो वाच्यः स्यात्, अतो बहुव्रीहिरेव न्याय्यः । वृत्तौ वस्तुमात्रं दर्शितम्—**नञ्समासं कर्मधारयं च वर्जयित्वेति । विभाषा सेनेति** । अनन्तरेषु सूत्रेष्वस्य नातीवोपयोगः, 'सञ्ज्ञायां कन्था' इत्यत्र तावदनादिः सञ्ज्ञा गृह्यते 'न वा तत्पुरुषो नञ्समासः कर्मधारयो वा उशीनरेषु सञ्ज्ञास्ति, उपज्ञो-पक्रममित्यत्रापि षष्ठीतत्पुरुषाद् बिना तदादित्वासम्प्रत्ययः । 'छाया बाहुल्ये' इत्यत्रापि पूर्वपदार्थधर्मो बाहुल्यं षष्ठीतत्पुरुषमन्तरेण न गम्यते । सभाराजेत्यत्र तु राजाऽमनुष्यपूर्वेति वचनान्नञ्समासस्य कर्मधारयस्य च

भावबोधिनी

[ चतुर्णां पन्थाः--यहां भी षष्ठी समास है । परवर्त्ती लिङ्गत्व की प्राप्ति में नपुंसकत्व किया जाता है । ] विपथम् [ विरूपः पन्थाः ] सुपथम् [ सुरूपः पन्थाः । यहां समास के बाद 'ऋक्पूरब्धूपथामानक्षे' पा० सू० ५।४।७४ से 'अ' प्रत्यय और नपुंसकत्व होने पर रूप बनते है । ]

* और क्रिया के विशेषणों का भी नपुंसकलिङ्ग होता है । * उदा०--मृदु पचति [ मीठा पकाता है । ] शोभनं पचति [ सुन्दर पकाता है । यहाँ मृदु और शोभन पाक क्रिया के विशेषण हैं ] ॥ १८ ॥

यह अधिकार आगे वाले सूत्रों में उपस्थित होता है । नञ्समास और कर्मधारय को छोड़कर अन्य तत्पुरुष नपुंसक लिङ्ग होता है--यह अधिकार उनमें समझना चाहिये जिन्हें अब आगे [ पा० सू० २।४।२५ तक ] कहा जायगा । आगे "विभाषा सेना०" पा० सू० २।४।२५ यह कहा जायगा । उदा०--ब्राह्मणसेनम्, ब्राह्मणसेना । [ ब्राह्मणानां सेना--इस तत्पुरुष समास में विकल्प से नपुंसकलिङ्ग होता है । ]

**तत्पुरुष इति किम् ? दृढसेनो राजा । अनञिति किम् ? असेना । अकर्मधारय इति किम् ? परमसेना ( म० भा० ) ॥**

## ८५४. संज्ञायां कन्थोशीनरेषु ॥ २० ॥ ( ८२३ )

**संज्ञायां विषये कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेषु भवति । सौशमिकन्थम् । आह्वरकन्थम् ।**

**संज्ञायामिति किम् ? वीरणकन्था । उशीनरेष्विति किम् ? दाक्षिकन्था । परवल्लिङ्गतापवाद इदं प्रकरणम् ॥**

### न्यासः

इति बहुव्रीहिः । अथानञ्कर्मधारय इति कोऽयन्निर्देशः ? यदि ह्यत्र नञ्कर्मधारययोर्द्वन्द्वः, तदा समाहारे वा स्यादितरेतरयोगे वा ? तत्र पूर्वस्मिन् पक्षे नपुंसकत्वं प्रसज्येत, इतरत्र तु द्विवचनम् । निर्देशस्य सौत्रत्वादुभयथाप्यदोषः । तथा हि च्छन्दोवत् सूत्राणि भवन्तीति । छन्दसि च लिङ्गवचनव्यत्ययं तृतीयेऽध्याये वक्ष्यति ॥ १९ ॥

**संज्ञायां कन्थोशीनरेषु** ॥ प्रकृते न तदन्तविधिरिति प्रकृतस्य तत्पुरुषस्य कन्थया तदन्तविधिर्विज्ञायत इत्याह—**कन्थान्तस्तत्पुरुष इति । सौशमिकन्थमिति** । सौशमीनां कन्था इति षष्ठीसमासः । **दाक्षिकन्थेति** । अस्तीयं ग्रामस्य संज्ञा; न तूशीनरेषु, किं तर्हि ? ततोऽन्यत्रेति ॥ २० ॥

### पदमञ्जरी

सभान्तस्याप्रसङ्गः । द्वन्द्वस्य तु प्राप्नोति—ईश्वरश्च सभा च ईश्वरसभे इति, अतस्तत्रापि तत्पुरुष इत्यस्यांशस्योपयोगोऽस्त्येव । 'अशाला च' इत्यत्र समूहवचनः सभाशब्दः, समूहस्य च समूह्यपेक्षा स्फुटतरेति षष्ठी तत्पुरुषस्यैव भविष्यति, नान्यस्य, ब्राह्मणश्च सभा च ब्राह्मणसभे, असभा, परमसभेति । अतः 'विभाषासेना' इत्यत्रैवास्य साक्षादुपयोग इति भावः ॥ १९ ॥

**संज्ञायां कन्थोशीनरेषु** ॥ तत्पुरुषस्य कन्थया विशेषणात्तदन्तविधिरित्याह—**कन्थान्तस्तत्पुरुष इति । सौशमिकन्थमिति** । सुशमस्यापत्यानि सौशमयः ॥ २० ॥

### भावबोधिनी

तत्पुरुष--इसका क्या फल है ? दृढसेनः राजा [दृढा सेना यस्य सः--यह बहुव्रीहि है । अतः यह सूत्र लागू नहीं होता है । ] अनञ्समास-- इसका क्या फल है ? असेना [ न सेना--यह नञ्तत्पुरुष है । अतः सूत्र लागू नहीं होता है । ] अकर्मधारय--इसका क्या फल है ? परमसेना [ परमा चासौ सेना च--यहाँ कर्मधारय है । अतः इसमें भी सूत्र लागू नहीं होता है । ] ॥ १९ ॥

संज्ञा = नाम विषय रहने पर कन्थाशब्दान्त तत्पुरुष नपुंसकलिङ्ग होता है यदि वह कन्था उशीनर देश में होने वाली हो तो । उदा०--सौशमिकन्थम् [ सौशमीनां कन्था ] आह्वरकन्थम् [ आह्वराणां कन्था । ]

संज्ञा में--इसका क्या फल है ? वीरणकन्था । [ वीरणानां कन्था । यह संज्ञावाची नहीं है । ] उशीनर क्षेत्र में हो--इसका क्या फल है ? दाक्षिकन्था [ दाक्षीणां कन्था । यह उशीनर क्षेत्र से भिन्न स्थान है । ] यह प्रकरण परलिङ्गत्व का अपवाद है ।

**विमर्श**--प्राचीनकाल में उशीनर एक जनपद था । यह सम्भवतः रावी और चिनाव नदियों का मध्यवर्ती नीचे भाग में बसा था । वहां के ग्रामविशेष के लिये जो संज्ञाये थीं उनमें यदि 'कन्था' शब्द अन्त में हो तो नपुंसक लिङ्ग होता है । कन्था यहाँ ग्राम अथवा नगर का वाचक है ॥ २० ॥

**५५५. उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २१ ॥ ( ८२४ )**

**उपज्ञायते इत्युपज्ञा, उपक्रम्यते इत्युपक्रमः। उपज्ञा च उपक्रमश्च उपज्ञोपक्रमम्। तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, तदाद्याचिख्यासायाम् = तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम्। आख्यातुमिच्छा = आचिख्यासा, यद्युपज्ञेयस्योपक्रम्यस्य चार्थस्यादिराख्यातुमिष्यते तत एतद्भवति। पाणिन्युपज्ञमकालकं[1] व्याकरणम्। पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं व्याकरणम्। व्याड्युपज्ञं दशहुष्करणम्[2]। आद्योपक्रमं प्रासादः। नन्दोपक्रमाणि मानानि। दर्शनीयोपक्रमं सुकुमारम्।**

न्यासः

**उपज्ञोपक्रमं तदाद्याचिख्यासायाम्॥ उपज्ञायत इत्युपज्ञेति।** 'आतश्चोपसर्गे' इति कर्मण्यङ्। **उपक्रम्यत इत्युपक्रमः।** अत्र 'अकर्त्तरि च कारके संज्ञायाम्' इति कर्मणि घञ्। 'नोदात्तोपदेशस्य' इत्यादिना वृद्धिनिषेधः। **यद्यप्युपज्ञेयस्योपक्रम्यस्य चेत्यादि।** उपज्ञेयः = परिज्ञेयः। उपक्रम्यः = उपक्रमितव्यः। **आदिः = प्राथम्यम्। पाणिन्युपज्ञम्** इति षष्ठीसमासः, तेन तत्प्रथमतः प्रणीतम्। **अकालकमिति।** स स्वस्मिन् व्याकरणे कालाधिकारं न कृतवान्। **व्याड्युपज्ञं दशहुष्करणमिति।** व्याडिरप्यत्र युगपत्कालभाविनां विधीनां मध्ये दश

पदमञ्जरी

**उपज्ञोपक्रमं तदाद्याचिख्यासायाम्॥ उपज्ञायत इत्युपज्ञेति।** कर्मणि 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः। **उपक्रम्यत इत्युपक्रम** इति कर्मण्येव घञ्। 'नोदात्तोपदेशस्य' इति वृद्धिप्रतिषेधः। **उपज्ञा चोपक्रमश्चेति** समाहारद्वन्द्वः। **तदन्तस्तत्पुरुष इति।** सूत्रे तु उपज्ञोपक्रमं तत्पुरुषरूपमित्येवं सामानाधिकरण्येन विशेषणम्, तयोरुपज्ञोपक्रमयोरित्यादेर्विवरणम्—**यदीति।** आदिः = प्राथम्यम्। **पाणिन्युपज्ञमिति।** कर्तरि षष्ठ्याः समासः। पूर्वाणि व्याकरणान्यद्यतनादिकालपरिभाषायुक्तानि, तद्रहितं तु व्याकरणं पाणिनिप्रभृतिप्रवृत्तमित्यस्ति तदादित्वस्याख्यानम्। **व्याड्युपज्ञमिति।** अडः वृश्चिकलाङ्गूलम्, तेन च तैक्ष्ण्यं लक्ष्यते, विगताडो व्यडः, तस्यापत्यं व्याडिराचार्यः। स्वागतादिपाठात् 'न य्वाभ्याम्' इत्येष विधिर्न भवति। दुषिति सङ्केतशब्दः,

भावबोधिनी

उपज्ञायते इति—उपज्ञा [ यहाँ कर्म अर्थ में 'उप' उपसर्गपूर्वक 'ज्ञा' धातु से अङ् प्रत्यय है ] उपक्रम्यते इति—उपक्रमः [ यहाँ भी 'उप' उपसर्गपूर्वक 'क्रम धातु से घञ् प्रत्यय है तथा उपधावृद्धि का निषेध है। ] उपज्ञा च उपक्रमः च— उपज्ञोपक्रमम् [ यहाँ समाहार-द्वन्द्व है। ] उपज्ञाशब्दान्त और उपक्रमशब्दान्त तत्पुरुष नपुंसकलिङ्ग होता है यदि उन उपज्ञा और उपक्रम का आदि = प्रथमकर्त्ता को कहने की इच्छा प्रकट हो रही हो तो। आख्या = कहने की इच्छा = इच्छा = आचिख्यासा। यदि उपज्ञेय और उपक्रम्य अर्थ का आदि = प्राथम्य कहना चाहा जाता है, उससे नपुंसकलिंग होता है। उदा०-पाणिन्युपज्ञम् अकालकं व्याकरणम् [पाणिनेः उपज्ञा यह षष्ठी-तत्पुरुष है। समास के बाद नपुंसक लिङ्ग होता है। अकालकम् = कालसम्बन्धी परिभाषाओं से शून्य, पाणिन्युपज्ञम् = पाणिनि द्वारा बनाया गया, व्याकरणम् = व्याकरण। ] पाणिनि के उपज्ञान से सबसे पहले बनाया गया कालपरिभाषारहित व्याकरण। व्याड्युपज्ञं दशहुष्करणम्। [ व्याडि का बनाया हुआ दशहुष्करण ग्रन्थ है। ] आद्योपक्रमं प्रासादः। [ आद्य नामक व्यक्ति ने सबसे पहले प्रासाद बनाया। ] नन्दोपक्रमाणि मानानि [ नन्द ने सबसे पहले मान बाँट बनाये, चलाये। ] दर्शनीयोपक्रमं सुकुमारम् [ दर्शनीय ने सुकुमार सबसे पहले बनाये। ]

---

१. 'पाणिन्युपज्ञमकालापकम्'-इति वा पाठा०।

२. 'दुष्करणम्'-इति वा पाठा०।

उपज्ञोपक्रममिति किम्? **वाल्मीकिश्लोकाः। तदाद्याचिख्यासायामिति किम्? देवदत्तोपज्ञो रथः। यज्ञदत्तोपक्रमो रथः॥**

**५५६. छाया बाहुल्ये॥ २२॥ (८२५)**

**'विभाषा सेनासुराच्छाया शालानिशानाम्' (२.४.२५) इति विभाषां वक्ष्यति, नित्यार्थमिदं वचनम्। छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने। पूर्वपदार्थधर्मः = बाहुल्यम्। शलभादीनां हि बहुत्वं गम्यते। शलभच्छायम्। इक्षुच्छायम्।**

**न्यासः**

हुष्करणानि कृत्वा परिभाषितवान् पूर्वं पूर्वं कालमिति। वाल्मीकेः श्लोका **वाल्मीकिश्लोका इति** षष्ठीसमासः॥ २१॥

**छाया बाहुल्ये॥ पूर्वपदार्थधर्मो बाहुल्यमिति।** अत्र हेतुमाह—**शलभादीनामित्यादि। शलभादीनां**

**पदमञ्जरी**

यथात्र वृत्करणम्। नन्दो राजा। **मानानि** प्रस्थादीनि। **वाल्मीकिश्लोका** इति षष्ठीसमासः। अस्त्यत्र तदादित्वस्याचिख्यासा; वाल्मीकिः प्रथमं श्लोकप्रबन्धं ददर्शेति प्रसिद्धेः। देवदत्तो यज्ञदत्तेनोपज्ञायते यज्ञदत्तेनोपक्रम्यते इति क्रियासम्बन्धमात्रमत्र विवक्षितम्॥ २१॥

**छाया बाहुल्ये॥ पूर्वपदार्थधर्मो बाहुल्यमिति।** कथम्? बाहुल्य इति निमित्तसप्तमी। बाहुल्ये सति या छाया तद्वाची यश्छायाशब्दस्तदन्तस्तत्पुरुष इति सूत्रेऽक्षरान्वयः। तत्र कस्य बाहुल्यमित्यपेक्षायामावारकद्रव्य-

**भावबोधिनी**

उपज्ञा और उपक्रम [अन्त में हों]—इसका क्या फल है? वाल्मीकिश्लोकाः [वाल्मीकि द्वारा बनाये गये श्लोक। यहाँ उपज्ञा या उपक्रम दोनों नहीं हैं।] इन दोनों का प्राथम्य कहने की इच्छा प्रतीत हो रही हो—इसका क्या फल है? देवदत्तोपज्ञो रथः [देवदत्त द्वारा जाना गया रथ।] यज्ञदत्तोपक्रमः रथः [यज्ञदत्त द्वारा उपक्रान्त रथ। यहाँ दोनों वाक्यों में उपज्ञा तथा उपक्रम का प्राथम्य कहने की इच्छा नहीं है। अतः नपुंसक लिंग नहीं होता है।]

विमर्श—किसी विषय में यदि कोई नई दृष्टि या सूझ प्रकट होती है तो उसे 'उपज्ञा' कहते हैं। उदाहरणार्थ—पाणिन्युपज्ञम् अकालकं व्याकरणम्—पाणिनि द्वारा बनाया गया व्याकरण काल की परिभाषा से रहित है। पाणिनि से पहले भी व्याकरण थे। उनमें काल के विषय में अनेक प्रकार की परिभाषायें थीं। पाणिनि ने लोकव्यवहार से ही इनका ज्ञान सम्भव मानकर काल की परिभाषाओं से रहित व्याकरण की दृष्टि सबसे पहले दी। इसीलिये पाणिन्युपज्ञ अकालक व्याकरण माना जाता है। यहाँ पाणिनि को प्रथम व्याकरण-निर्माता नहीं समझना चाहिये।

जब सर्वथा नयी वस्तु बनायी जाती है या चलाई जाती है तब 'उपक्रम' कहा जाता है। जैसे नन्द के पहले नापने के लिये बाँट नहीं थे। इन्होंने ही सबसे पहले चलाये। अतः इनको उपक्रम का आदि पुरुष माना जाता है—नन्दोपक्रमाणि मानानि।

नपुंसकत्व तभी होता है जब उपज्ञा और उपक्रम का प्राथम्य = सबसे पहले होना प्रतीत रहे। अन्यथा सामान्य लिङ्ग होते हैं।॥ २१॥

'विभाषा सेनासुराच्छाया' पा. सू. २।४।२५ इससे विकल्प कहा जायगा, वहाँ नित्य [नपुंसुकलिङ्ग] करने के लिये यह सूत्र है। बाहुल्य = अधिकता प्रतीत होने पर छाया-शब्दान्त तत्पुरुष नपुंसकलिङ्ग होता है। बाहुल्य पूर्वपदार्थ का धर्म = उसमें रहने वाला है। क्योंकि शलभ [पतंगा] आदि का बहुत्व प्रतीत होता है। उदा०—शलभच्छायम् [बहुत से पतंगों की छाया = परछाईं] इक्षुच्छायम् [गन्नों की छाया।]

बाहुल्य इति किम् ? कुड्यच्छाया ॥

**५५७. सभा राजाऽमनुष्यपूर्वा ॥ २३ ॥ ( ८२६ )**

**सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति सा चेत्सभा राजपूर्वा, अमनुष्यपूर्वा च भवति। इनसभम्। ईश्वरसभम्।**

**इह कस्मान्न भवति—राजसभा ? पर्यायवचनस्यैवेष्यते। तदुक्तम्—'जितपर्यायस्यैव राजाद्यर्थम्' ( वा० १० ) इति। अमनुष्यपूर्वा—रक्षःसभम्। पिशाचसभम्।**

**इह कस्मान्न भवति—काष्ठसभा ? अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्त्तते। राजाऽमनुष्य-**

**न्यासः**

बहुत्वं शलभच्छायमित्यादौ हि गम्यते, न हि तेन विना छाया सम्भवति। अतः पूर्वपदार्थस्य शलभादेर्बाहुल्यं धर्मः ॥ २२ ॥

**सभा राजाऽमनुष्यपूर्वा ॥ इह कस्मान्न भवति—राजसभेतीति।** 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति वचनादिहैव युक्तं भवितुमित्यभिप्रायः। **तदुक्तमित्यादि।** एतेन 'पर्यायवचनस्यैवेष्यते' इत्येतदाप्तवचनेन द्रढयति। यतः पर्यायवचनस्यैवेष्यते तस्मादेव हेतारिदमुक्तम्। **जित्पर्यायवचनस्यैवेत्यादि।** कथं पुनः पर्यायवचनस्यैव भवतीत्येषोऽर्थः, यावता नेह सूत्रे तथाविधं वचनमस्ति ? एव मन्यते—ननु च पूर्वग्रहणमस्ति, अतः पूर्वग्रहणादेषोऽर्थो लभ्यते, कथम् ? यदि स्वरूपग्रहणं स्याद् 'राजाऽमनुष्यात्' इत्येवं ब्रूयात्, पञ्चम्येव हि दिक्शब्दमध्याहरयिष्यति, न च सभान्तस्य तत्पुरुषस्य पूर्वशब्दादन्यो दिक्शब्दोऽध्याहर्त्तुं शक्यत इति किं पूर्वग्रहणेन ? तत् क्रियतेऽर्थग्रहणं यथा स्यात्। अर्थग्रहणे च सत्यराजाऽमनुष्यपूर्वा इति द्विष्प्रतिषेधो वर्ण्यते—अराजपूर्वा, अमनुष्यपूर्वेति। तदनेन नञिवयुक्तन्यायेन तत्सदृशा राजपर्याया गृह्यन्ते, न तु तद्विशेषाश्चन्द्रगुप्तादयः, न हि ते राजार्थस्य वाचका इति। अथ वा—अर्थग्रहणेऽस्मिन् 'विभाषा समीपे' इत्यतो विभाषाग्रहणमनुवर्त्तते मण्डूकप्लुतिन्यायेन, सा च व्यवस्थितविभाषा विज्ञायते। तेनेह पर्यायवचनस्यैवेश्वरादेर्ग्रहणम् भविष्यति, नान्यस्य।

**अमनुष्यशब्दो हि रूढिरूपेण रक्षःपिशाचादिषु वर्त्तत इति।** यद्येवम्, 'अमनुष्यकर्तृके च' इत्यत्र

**पदमञ्जरी**

निमित्तकत्वाच्छायायास्तद्बाहुल्य इति गम्यते। तेन यानि बहूनि सम्भूयोपलम्भयोग्यामुपजीव्यां वा छायामारभन्ते तेष्वयं विधिः ॥ २२ ॥

**सभा राजाऽमनुष्यपूर्वा ॥** इह सभाशब्दः शालावचनः। **इह कस्मान्न भवतीति।** 'स्वं रूपम्' इति वचनादिहैव भवितुं युक्तमिति प्रश्नः। **पर्यायवचनस्यैवेति।** न स्वरूपस्य, नापि विशेषाणां चन्द्रगुप्तादीना-

**भावबोधिनी**

बाहुल्य = अधिकता प्रतीत रहने पर इसका क्या लाभ है ? कुड्यच्छाया [ दीवाल की छाया। यहाँ एक दीवाल है। अतः नसकपुंलिग नहीं होता है। स्त्रीलिङ्ग रहता है। ] ॥ २२ ॥

'सभा' शब्द जिस तत्पुरुष समास के अन्त में वह नपुंसकलिङ्ग होता है यदि इस 'सभा' शब्द के पहले राजा शब्द हो और मनुष्यभिन्न पूर्व में हो। उदा०—इनसभम् [ इनस्य सभा—इस षष्ठीतत्पुरुष में नपुंसकलिङ्ग होने से ह्रस्व हो जाता है। ] ईश्वरसभम् [ यहाँ भी नपुंसकलिङ्ग होने से ह्रस्व होता है। ]

यहाँ नपुंसकलिङ्ग क्यों नहीं होता है—राजसभा ? यहाँ पर्यायवाचियों का ही नपुंसकत्व इष्ट है। जैसा कि कहा गया है—'जित् निर्देश पर्यायवाची का ही हो—राजा आदि के लिये। मनुष्यभिन्न पूर्व में हो—रक्षःसभम्, [ रक्षसां सभा ] पिशाचसभम् [ पिशाचानां सभा। इन रक्षः = राक्षसों और पिशाचों को मनुष्य से भिन्न योनि का माना जाता है। ]

[ मनुष्यभिन्न होने से ] यहाँ क्यों नहीं होता है—काष्ठसभा ? अमनुष्य शब्द रूढि रूप से रक्षः तथा पिशाच आदि में ही प्रयुक्त होता है। अतः काष्ठ उसमें नहीं माना जाता है। ] राजा तथा अमनुष्य पूर्व में हो—इसका क्या लाभ

**पूर्वेति किम् ? देवदत्तसभा ॥**

**५५८. अशाला च ॥ २४ ॥ ( ८२७ )**

**अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति। संघातवचनोऽत्र सभाशब्दो गृह्यते। स्त्रीसभम्। दासीसभम्। दासीसंघात इत्यर्थः।**

**अशालेति किम् ? अनाथसभा। अनाथकुटीत्यर्थः ॥**

**न्यासः**

यदुदाहरिष्यति—जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखा, श्लेष्मघ्नं मधु, पित्तघ्नं घृतमिति, तद्व्याहन्यते ? नैष दोषः; अत्र हि चकारः क्रियते, तस्यैव विधेः समुच्चयार्थः। तेन पुनर्विधानात्, 'कृत्यल्युटो बहुलम्' इति वचनाद्वा रक्षःपिशाचादिभ्योऽन्यत्रापि भविष्यति। अथ वा—अमनुष्यशब्दोऽयं द्विविधः—अस्त्येवायमव्युत्पन्नो रूढिशब्दो यो रक्षःपिशाचादिषु वर्त्तते, अस्ति च व्युत्पन्नो नञ्समासः, तत्रेहाव्युत्पन्नस्य रूढिशब्दस्य ग्रहणम्। 'अमनुष्यकर्तृके च' इत्यत्र व्युत्पन्नस्यारूढिशब्दस्य ग्रहणमित्यविरोधः। **देवदत्तसभेति।** देवदत्तशब्दो न राजपर्यायः, नाप्यमनुष्यवचनः ॥ २३ ॥

**अशाला च ॥** सभाशब्दोऽयमस्त्येव कुटीवचनः—दीर्घा सभा, ह्रस्वा सभेति। अस्ति च सङ्घातवचनः, यथा—ब्राह्मणानां सभा, स्त्रीणां सभेति; इह चाशालेति कुटीवचनप्रतिषेधादितरो गृह्यत इत्यत आह—**सङ्घातवचन इत्यादि** ॥ २४ ॥

**पदमञ्जरी**

मित्यर्थः। एतदेवाप्तोक्तेन द्रढयति—**तदुक्तमिति।** कथं पुनरेतल्लभ्यते ? द्वावत्र नञौ—अराजपूर्वा, अमनुष्यपूर्वा चेति, तत्र 'नञिवयुक्तन्यायेन' ( व्या० परि० ६५ ) राजशब्दसदृशाः पर्याया एव गृह्यन्ते, अमनुष्यशब्दो रूढिरूपेणेति। कथं तर्हि 'अमनुष्यकर्तृके च' इत्यत्र पित्तघ्नं घृतमित्युदाहरिष्यते ? व्याख्यानात्तत्र मनुष्यादन्यमात्रस्य ग्रहणं न रूढिरित्यर्थः ॥ २३ ॥

**अशाला च ॥** सभाशब्दोऽयं शालावचनः, संघवचनश्च, तत्र शालाप्रतिषेधादितरस्य ग्रहणमित्याह—**संघातवचन इत्यादि।** तत्र पूर्वसूत्रेण राजामनुष्यपूर्वत्वे शालावचनस्यापि भविष्यति, अशालावचनस्य त्वनेन राजामनुष्यपूर्वत्वाभावेऽपीति ॥ २४ ॥

**भावबोधिनी**

है ? देवदत्तसभा। [ देवदत्त न राजा है और न अमनुष्य। अतः सूत्र लागू नहीं होता है। ]

**विमर्श**—'सभा राजाऽमनुष्यपूर्वा' इस सूत्र में 'स्वं रूपं शब्दस्याशब्दसंज्ञा' पा. सू. १।१।६८ सूत्र के अनुसार 'राजा' इस आनुपूर्वी का ही ग्रहण होना चाहिये था परन्तु उस सूत्र में वार्तिक है 'जित् पर्यायवचनस्यैव राजाद्यर्थम्'। जित् निर्देश करना चाहिये, उसके बाद कहना चाहिये कि इसमें केवल पर्याय शब्दों का ही ग्रहण होता है, न स्वरूप का और विशेष का। अतः राजा के पर्याय 'इन' 'ईश्वर' आदि पूर्व में रहने पर नपुंसक होता है। राजा या राजाविशेष चन्द्रगुप्त आदि पूर्व में रहने पर नहीं होता है – राजसभा, चन्द्रगुप्तसभा। 'स्वं रूपम्' सूत्र पर विशेष व्याख्या देखें ॥ २३ ॥

अशाला = शाला से भिन्न अर्थवाली जो सभा, तदन्त तत्पुरुष नपुंसकलिङ्ग होता है। यहाँ सभा शब्द संघातवाची = समुदायवाची लिया जाता है। उदा० स्त्रीसभम् [स्त्रियों का समूह] दासीसभम्। दासियों का समूह—यह अर्थ है।

अशाला = कुटीभिन्न अर्थ में—इसका क्या फल है ? अनाथसभा [ अनाथानां सभा ] अनाथों की कुटी–यह अर्थ है ॥ २४ ॥

**५५९. विभाषा सेनासुराच्छायाशालानिशानाम् ॥ २५ ॥ ( ८२८ )**

**सेना, सुरा, छाया, शाला, निशा–इत्येवमन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। श्वनिशम्, श्वनिशा॥**

**५६०. परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २६ ॥ ( ८१२ )**

**समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वाद् इतरेतरयोगद्वन्द्वस्येदं ग्रहणम्। परस्य यल्लिङ्गं तद् भवति**

**न्यासः**

**विभाषा सेनासुराच्छायाशालानिशानाम्॥** **श्वनिशमिति** यस्यां निशायां श्वानो मत्ता विहरन्ति[1] सा श्वनिशम्, श्वनिशेति चोच्यत इति॥ २५॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥** किमर्थमिदम्? इहायं द्वन्द्वः सर्वपदार्थप्रधानः, स यदा भिन्नलिङ्गावयवो भवति तदा पूर्वोत्तरयोः पदयोर्भिन्नलिङ्गयोरनुग्राहकमेकं लिङ्गं नास्ति येन समुदायो व्यपदिश्यते। उभाभ्याञ्च युगपदसम्भवादशक्यो व्यपदेशः कर्तुम्। अतः पर्यायः स्यादिति द्वन्द्वे नियमार्थं वचनम्। तत्पुरुषोऽपि द्विविधः—पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानश्चेति। ततो य उत्तरपदार्थप्रधानस्तत्पुरुषस्तस्य

**पदमञ्जरी**

**विभाषा सेनासुराच्छायाशालानिशानाम्॥** तत्पुरुष इति प्रकृतं षष्ठीबहुवचनान्तं विपरिणम्यते, नपुंसकमिति च भावप्रधानं संपद्यते। सेनाद्यन्तानां तत्पुरुषाणां नपुंसकत्वमित्यक्षरार्थः। वृत्तौ तु वस्तुमात्रं दर्शितम्। यद्वा—प्रथमास्थाने षष्ठी। **कुड्यच्छायमिति**। बाहुल्याभावेऽनेन विकल्पः, बाहुल्ये नित्यार्थम् 'छाया बाहुल्ये' इत्युक्तम्। **श्वनिशमिति**। यस्यां निशायां श्वान उपवसन्ति सा श्वनिशमित्युच्यते। सा पुनः कृष्णचतुर्दशी तस्यां हि श्वान उपवसन्तीति प्रसिद्धिः॥ २५॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥** किमर्थमिदम्? इह द्वन्द्वे त्रीणि दर्शनानि–अवयवार्था एवापेक्षितपरस्पराः द्वन्द्वार्थो न तु तद्व्यतिरिक्तः समुदायो नामेत्येकम्; अवयवार्थव्यतिरिक्त एव समुदायो द्वन्द्वार्थः, स चावयवलिङ्गेन लिङ्गवानिति द्वितीयम्; स एव स्वयं लिङ्गशून्य इति तृतीयम्। तत्र पूर्वके दर्शनद्वये विभिन्नलिङ्गावयवद्वन्द्वे युगपदुभयलिङ्गतानुपपत्तेः पर्यायेण लिङ्गद्वयप्रसङ्गे परस्यैव लिङ्गं भवतीति नियमार्थं भवति। तृतीये तु समासार्थस्यालिङ्गस्य परवल्लिङ्गता भवतीति विध्यर्थः। तत्पुरुषोऽपि द्विविधः—पूर्वपदार्थप्रधानोऽर्धपिप्पल्यादिः; उत्तरपदार्थप्रधानो राजकुमार्यादिः। तत्रोत्तरपदार्थप्रधाने प्राधान्यादेव परवल्लिङ्गस्य सिद्धत्वात्पूर्वपदार्थप्रधाने विध्यर्थं भवति। तत्र **वृत्तिकारेण** विधिपक्ष आश्रितस्तदाह—**परस्य यल्लिङ्गं**

**भावबोधिनी**

सेना, सुरा, छाया, शाला और निशा—इनमें से कोई शब्द जिसके अन्त में है वह तत्पुरुष विकल्प से नपुंसकलिङ्ग होता है। उदा०—ब्राह्मणसेनम्, ब्राह्मणसेना [ ब्राह्मणानां सेना–इस विग्रह में षष्ठीतत्पुरुष करने पर जब नपुंसकलिङ्ग होता तब ह्रस्व हो जाता है। ] यवसुरम्, यवसुरा [ यवानां सुरा। जौ की शराब ] कुडयच्छायम्, कुडयच्छाया [ दीवाल की छाया, परछाई ] गोशालम्, गोशाला [ गायों का बाड़ा ]। श्वनिशम्, श्वनिशा [ शुनः निशा। कुत्ते की रात—यह विग्रहबोध्य अर्थ है। परन्तु इसका प्रसिद्ध अर्थ यह है कि जिस रात में कुत्ते मत्त होकर घूमते हैं या भौंकते हैं, वह श्वनिशा कही जाती है। यह कृष्णपक्ष की चतुर्दशी मानी जाती है ]॥ २५॥

समाहार–द्वन्द्व में नपुंसकलिङ्ग का विधान किया गया है अतः यहाँ इतरेतरयोगद्वन्द्व का ग्रहण है। परवर्ती पद

---

१. स्वरन्तीति पाठान्तरम्। स्वरन्ति शब्दायन्ते भषन्तीत्यर्थः। 'स्वृ शब्दोपतापयोः'। श्वनिशा कृष्णचतुर्दशीत्याहुरिति च भट्टोजिः। शुनश्चतुर्दश्यामुपवसतः पश्याम इति शाबरभाष्ये।

**द्वन्द्वस्य तत्पुरुषस्य च।** उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर्विधीयते। कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ। तत्पुरुषस्य अर्द्धं पिप्पल्याः—अर्द्धपिप्पली। अर्द्धकोशातकी। अर्द्धनखरञ्जनी।

**न्यासः**

प्रधानत्वादेव परस्य यल्लिङ्गं तत्समुदायस्य भविष्यतीति तं प्रत्यनर्थकं वचनम्। यस्तु पूर्वपदार्थप्रधानस्तस्य पूर्वपदस्य यल्लिङ्गं तस्मिन् प्रसक्त उत्तरपदस्य यल्लिङ्गं तद्विधीयत इति तत्र विध्यर्थमेतद् भवति। **द्वन्द्वस्य तत्पुरुषस्य चेति।** एतेन द्वन्द्वतत्पुरुषयोरिति षष्ठीयमिति दर्शयति, न सप्तमी। यदीयं सप्तमी स्यात् तदा द्वन्द्वे तत्पुरुषे च यत् परं तदीयं लिङ्गं पूर्वपदस्यापद्येत; परशब्दस्य

**पदमञ्जरी**

**तद्भवतीति।** एवं हि सूत्रस्यैकरूपा वचनव्यक्तिर्भवति, इतरथा तत्पुरुषे विधिरूपा द्वन्द्वे नियमरूपेति वचनव्यक्तिभेदः स्यादिति भावः। द्वन्द्वस्य **तत्पुरुषस्य चेति।** एतेन द्वन्द्वतत्पुरुषयोरिति षष्ठीयमिति दर्शयति। सप्तम्यां त्वयमर्थो भवति—द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं भवतीति। तत्र कार्यिणोऽनुपादानात्परशब्दस्य च सम्बन्धिशब्दत्वात्तदाक्षिप्तस्य पूर्वपदस्य लिङ्गविधिर्भवति।

यद्वा-द्वन्द्वे तत्पुरुषे च विषये परस्यैव लिङ्गं भवतीत्यक्षरार्थः। तत्रापि पूर्वपदस्यैव लिङ्गविधिः। अत्र पक्षे मयूरीकुक्कुटावित्यत्रोत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे स्त्रीप्रत्ययस्य निवृत्तिः प्राप्नोति; कुक्कुटमयूर्यौ, राजकुमारी, अर्द्धपिप्पलीत्यादौ पूर्वपदे स्त्रीप्रत्ययप्रसङ्गः। किं पुनरस्मिन्पक्षे किंचिदिष्टं सिध्यति ? आहोस्विद्दोषान्तमेव ? सिध्यतीत्याह। इह पूर्वकायः अर्धद्रोण इति, यत्र पूर्वपदं नपुंसकमुत्तरपदं च पुंल्लिङ्गम्, तत्र परस्य लिङ्गे पूर्वस्यातिदिष्टे समासस्यापि तदेव भवति, न च पूर्ववदिह किंचिदनिष्टमापद्यते। द्वन्द्वेऽपि पूर्वके दर्शनद्वये गुणकर्मणी द्रव्यगुणावित्यादौ यत्र पुंनपुंसकाभ्यां भिन्नलिङ्गे पूर्वोत्तरपदे, यत्र वाऽवर्णान्तं स्त्रीप्रत्ययान्तं वा पदं न भवति—गतिस्थाने, योषित्पुरुषौ, तित्तिरिबलाके इति, तत्रोत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे द्वन्द्वस्य पर्यायेण द्वयोरपि लिङ्गे प्रवृत्तेऽपि सर्वमिष्टं सिध्यति, पूर्ववदेव न किञ्चिदनिष्टमापद्यते। 'व्यतिरिक्तो द्वन्द्वार्थः स्वयं लिङ्गशून्यः' इत्यत्र तु पक्षे द्वन्द्वार्थस्यालिङ्गत्वं तदवस्थमेवेति दोषान्तमेव। **द्वन्द्वस्य तत्पुरुषस्य चेति।** द्वन्द्वार्थस्य तत्पुरुषार्थस्य चेत्यर्थः। तेनानुप्रयोगेऽपि तदेवं लिङ्गं भवति। यदि तर्हि षष्ठ्याश्रयणेन समासार्थस्य परवल्लिङ्गमतिदिश्यते, 'पूर्ववदश्ववडवौ' इत्यत्रापि पूर्वपदार्थलिङ्गं समासार्थेऽतिदिश्यते, ततश्चोत्तरपदार्थस्य स्त्रीत्वं स्थितमेवेति टापः श्रवणप्रसङ्गः। सप्तमीपक्षे तु 'पूर्ववदश्ववडवौ' इत्यत्रापि पूर्वपदार्थलिङ्गमुत्तरपदार्थस्यातिदिश्यत इति वडवाशब्दस्य पुंस्त्वातिदेशात् स्त्रीत्वाभावे टापो निवृत्तिः सिध्यति। निपातनात्सिद्धम्। किं

**भावबोधिनी**

का जो लिङ्ग होता है वह द्वन्द्व और तत्पुरुष का होता है। द्वन्द्व और तत्पुरुष के परवर्ती पद के लिङ्ग का विधान किया जाता है। उदा०—कुक्कुटमयूर्यौ इमे [ कुक्कुटश्च मयूरी च। इतरेतरयोगद्वन्द्व करने पर परवर्ती मयूरी पद का स्त्रीलिङ्ग हो जाता है। इस तथ्य को स्पष्ट को स्पष्ट करने के लिये 'इमे' इस स्त्रीलिङ्ग द्विवचन का रूप लिखा गया है। ] मयूरीकुक्कुटी इमौ। [मयूरी च कुक्कुटश्च—समाहारद्वन्द्व करने पर परवर्त्ती कुक्कुट पद का पुल्लिङ्ग समास में होता है। इसी को स्पष्ट करने के लिये 'इमौ' इस पुल्लिङ्ग द्विवचन का उल्लेख है। ] तत्पुरुष का उदा०—अर्द्धं पिप्पल्याः—अर्द्धपिप्पली [ पीपल = औषधिविशेष का आधा भाग। पिप्पली स्त्रीलिङ्ग है। समास में स्त्रीलिङ्ग रहता है। ] अर्द्धं कोशातक्याः—अर्द्धकोशातकी [ कोशातकी का आधा भाग। ] अर्द्धं नखरञ्जनी [ अर्द्धनखरञ्जन्याः। यहाँ परवर्ती का स्त्रीलिङ्ग तत्पुरुष में भी रहता है। ]

❀ द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः ❀ ( म० भा० वा० १ )। द्विगुः—पञ्चसु कपालेषु संस्कृतः पुरोडाशः—पञ्चकपालः ( ४.२.१६, ४.१.८८ )। प्राप्तो जीविकां—प्राप्तजीविकः। आपन्नो

**न्यासः**

सम्बन्धिशब्दत्वात्। तथा च मयूरीकुक्कुटावित्यत्र पूर्वपदस्य स्त्रीप्रत्ययो निवर्त्तेत, तत्पुरुषेऽप्यर्द्धपिप्पलीत्यत्र पूर्वपदस्यापि स्त्रीप्रत्ययः स्यात्, तस्मात् षष्ठीयम्। तथा च सति समासार्थस्यायमतिदेशो विज्ञायते। पूर्वपदस्य न प्रतिषिध्यते, नापि विधीयत इति न भवति पूर्वोक्तदोषावसरप्रसङ्गः। समासार्थस्य लिङ्गातिदेशादनुप्रयोगोऽपि समासार्थस्यैव विशेषणमिति तल्लिङ्गमेव भवति। **कुक्कुटमयूर्याविमे इति।** उपसर्जनह्रस्वत्वं न भवति; उपसर्जनसंज्ञाया अभावात्। उक्तं ह्येतत् प्राक्—'उपसर्जनमिति महत्याः संज्ञायाः प्रयोजनमन्वर्थसंज्ञा। यथा विज्ञायेत—अप्रधानमुपसर्जनम्' इति। द्वन्द्वश्च सर्वपदार्थप्रधान इति नास्त्युपसर्जनसंज्ञा। अर्द्धपिप्पलीत्यादावपि सत्येकविभक्तियोगे यथा पिप्पल्यादेरुपसर्जनसंज्ञा न भवति, तथोपसर्जनसंज्ञाविधावेव तत्प्रतिपादितम्।

**पदमञ्जरी**

निपातनम्? न तावत् 'पूर्ववदश्ववडवौ' इति निपातनमाश्रयितुमुचितम्, वचनान्तरेऽनतिदेशप्रसङ्गाद् अश्ववडवान्, अश्ववडवैरिति। एवं तर्ह्यश्ववडपूर्वापराधरोत्तराणामित्यत्र टापोऽनुच्चारणान्निपातानादश्ववडवयोर्द्वन्द्वे टाब्निवर्तिष्यते।

अपर आह—'चार्थे द्वन्द्वः' इत्यत्रानेकमित्यधिकारात्सर्वेषामेव वर्तिपदार्थानां प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वं भविष्यति। इहापि तर्हि प्राप्नोति—कुक्कुटमयूर्याविति? अस्तु, का रूपसिद्धिः? परवल्लिङ्गमिति शब्दशब्दार्थौ, कोऽर्थः? लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्च तन्त्रेणैकशेषेण वोच्यते। तदयमर्थो भवति—द्वन्द्वार्थस्य तत्पुरुषार्थस्य परस्येव लिङ्गं भवति, तदभिधायी प्रत्ययश्च परस्यैव भवति ताभ्यामिति। तत्र च यत्र द्रव्यगुणौ गुणकर्मणी—अर्द्धद्रोण इत्यादौ, लिङ्गाभिधायी प्रत्ययो न संभवति तत्रार्थ एवातिदिश्यते, उभयसम्भवे तूभयम्-यथा कुक्कुटमयूर्याविति, ततश्चौपदेशिकस्य ह्रस्वत्वेऽप्यातिदेशिकस्य श्रवणं भविष्यति; तस्य चानुपसर्जनत्वात्तदन्तस्य चाप्रातिपदिकत्वात्पुनर्ह्रस्वत्वाभावः। इह तर्हि दत्तागार्ग्यायण्यौ, दत्ताकारीषगन्ध्ये इति ह्रस्वत्वे कृते समासात्पुनः ष्फष्यङौ प्राप्नुतः? स्ताम्, 'भस्याऽढे तद्धिते' ( वा० ७३१ ) इति पूर्वोत्पन्नयोर्निवृत्तिर्भविष्यति। यत्र तर्हि पुंवद्भावो नास्ति अभत्वाद्, यथा—दत्ता च युवतिश्च दत्तायुवती इति, तत्र द्वयोः स्त्रीप्रत्यययोः श्रवणप्रसङ्गः, तस्मादुपसर्जनह्रस्वत्वं द्वन्द्वे न भवति। अन्वर्था ह्युपसर्जनसंज्ञाऽप्रधानस्य विधीयते, द्वन्द्वे चावयवार्थानामेव कार्यान्वयादप्राधान्याभावः। परवल्लिङ्गमिति चार्थ एवातिदिश्यते, अश्ववडवाविति च निपातनादित्येतदेव सम्प्रति।

**द्विगुप्राप्तापन्नेत्यादि।** स तर्हि प्रतिषेधो वक्तव्यः? न वक्तव्यः, तत्पुरुषग्रहणं न करिष्यते, परवल्लिङ्गं द्वन्द्वस्येत्येव। कथं पूर्वकायः, अर्धपिप्पलीति? एकदेशिसमासो नारप्स्यते, कर्मधारय एवात्र भविष्यति—

**भावबोधिनी**

* (१) द्विगु को, (२) प्राप्त, आपन्न और अलं जिसमें पूर्व में हैं, उसको और (३) गतिसमास में परवल्लिङ्गता का प्रतिषेध कहना चाहिये। * [ भाव यह है कि तत्पुरुष का भेद द्विगु है, उसमें तथा प्राप्त, आपन्न और अलम् का भी तत्पुरुष होता है, उसमें और गतिसमास भी तत्पुरुष होता है, उसमें परवर्ती पद का लिङ्ग नहीं होता है। ] क्रमशः उदा० (१) द्विगु—पञ्चसु कपालेषु संस्कृतः—इस अर्थ में तद्धितार्थ में द्विगु होता है 'संस्कृत' अर्थ में होने वाले 'अण्' प्रत्यय का लुक् हो जाता है। यहाँ पुरोडाश का लिङ्ग होता है, कपाल का नहीं ], पञ्चकपालः। (२) प्राप्तः जीविकाम्—प्राप्तजीविकः [ जीविका = नौकरी को प्राप्त कर लेने वाला ] आपन्नो जीविकाम्—आपन्नजीविकः [ जीविका को प्राप्त

**जीविकाम्** - आपन्नजीविकः ( २.२.४ )। [ अलंपूर्व— ] **अलं जीविकायै—अलञ्जीविकः। गतिसमासः — निष्क्रान्तः कौशाम्ब्याः—निष्कौशाम्बिः** ( वा० ९४ )॥

५६१. पूर्ववदश्ववडवौ ॥ २७ ॥ (८१३)

**अश्ववडवयोर्विभाषैकवद्भावः** ( २.४.१२ ) **उक्तः, तत्रैकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायां-**

**न्यासः**

**वक्तव्य इति**। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'तत्पुरुष' इत्यनुवर्त्तमाने पुनस्तत्पुरुषग्रहणस्यैतत् प्रयोजनम्—तत्पुरुषविशेषस्य परवल्लिङ्गता यथा स्यादिति। तेन द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गता न भवति; अन्यथा यदि सर्वस्येयं तत्पुरुषस्य परवल्लिङ्गता स्यात् तदा 'परवल्लिङ्गं द्वन्द्वस्य च' इत्येवं ब्रूयात्। चकाराद्धि प्रकृतस्य तत्पुरुषस्येति विज्ञास्यत एवेति। **पञ्चकपाल इति**। तद्धितार्थे द्विगुः। संस्कृतार्थे उत्पन्नस्याणः 'द्विगोर्लुगनपत्ये' इति लुक्। **प्राप्तजीविक इति**। 'प्राप्तापन्ने च द्वितीयया' इति समासः। **अलञ्जीविक इति**। 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासः। **निष्कौशाम्बिरिति**। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति॥ २६॥

**पूर्ववदश्ववडवौ॥ अश्ववडवयोर्विभाषैकवद्भावो विहित इति**। 'विभाषा वृक्षमृग' इत्यादिना। **अर्थातिदेशश्चायम्, न निपातनमिति**। निपातने हि पूर्ववदिति वचनमनर्थकं स्यात्, अश्ववडवावित्येवं ब्रूयात्।

**पदमञ्जरी**

पूर्वश्चासौ कायश्च, अर्धं चासौ पिप्पली चेति। पूर्वादयः शब्दा एकदेशे वर्त्तन्ते, कायादयस्तु समुदाये, कथमेषां सामानाधिकरण्यम्? अवयवेन समुदायोपचारात्। तदेवं कर्मधारये कृते प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भविष्यति, नार्थस्तत्पुरुषग्रहणेन, नाप्येकदेशिसमासेन, षष्ठीसमासप्रसङ्गः इति चेन्न; इष्टत्वादनभिधानाच्च। तत्रैतत्स्यात्-यद्यपि पूर्वकाय इत्यादीनि रूपाणि कर्मधारयेणापि सिध्यन्ति, तथापि मुख्यार्थवृत्तिषु कायादिशब्देषु यथा पूर्वं कायस्येत्येवमादि वाक्यं भवति, तथा कायपूर्व इत्यादि षष्ठीसमासोऽपि स्याद्, अतस्तन्निवृत्तये एकदेशिसमास आरब्ध इति? तच्च नैवम्; इष्टत्वादनभिधानाच्च। तत्र तावद् 'द्वितीयतृतीय' इत्यत्रान्यतरस्यांग्रहणात्सूत्रकारस्य षष्ठीसमास इष्टः-भिक्षाद्वितीयमिति, 'अर्द्धं नपुंसकम्' इत्यत्रापि **भाष्यकार आह**— 'इष्यतेऽत्र षष्ठी समासोऽपि, तद्यथा-अपूपार्धं मया भक्षितम्' ( म० भा० ) इति। अस्ति च **पैङ्गले सूत्रे** प्रयोगः- 'स्वरार्धं चार्यार्धम्' (छन्द ४।१४) इति। पूर्वापरेत्यत्र त्वनभिधानात् षष्ठीसमासो न भविष्यति॥ २६॥

**पूर्ववदश्ववडवौ॥ अश्ववडवयोरिति**। 'विभाषा वृक्ष' इत्यत्र 'पशुद्वन्द्व' इत्येव सिद्धेऽश्ववडवग्रहणं

**भावबोधिनी**

करने वाला। दोनों में "प्राप्तापन्ने च द्वितीयया' पा. सू. २.२.४ से तत्पुरुष समास होता है। परवर्ती पद का स्त्रीलिङ्ग प्राप्त होता है किन्तु वार्तिक से निषेध हो जाता है। विशेष्य के अनुसार पुंलिङ्ग होता है। ] अलं जीविकायै—अलञ्जीविकः [ यहाँ "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या" इस वचन से समास होने पर प्राप्त परवल्लिङ्गता का निषेध होने से विशेष्यानुसारी पुंलिङ्ग हो जाता है। तीनों उदाहरणों में उपसर्जन का ह्रस्व होने से लघु अकार बाद में है। ] (३, गतिसमास— निष्क्रान्तः कौशाम्ब्याः—निष्कौशाम्बिः [ कौशाम्बी नगरी से निकला हुआ। यहाँ "निरादयः क्रान्ताद्यर्थे पञ्चम्या" वचन से गतिसमास है। प्राप्त परवल्लिङ्गता का निषेध होने से विशेष्य के अनुसार लिङ्ग होता है ]॥ २६॥

अश्ववडवा का वैकल्पिक एकवद्भाव [ 'विभाषा वृक्षमृग०' पा० सू० २।४।१२ में ] कहा गया है, उसमें एकवद्भाव से भिन्न में परवल्लिङ्गता प्राप्त रहने पर इस सूत्र को बनाया जा रहा है। अश्ववडव पूर्वपद के समान

मिदमारभ्यते। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च वडवा चाश्ववडवौ। अर्थातिदेशश्चायम्, न निपातनम्। तत्र द्विवचनमतन्त्रम्। वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति—अश्ववडवान्, अश्ववडवैरिति॥

**८६२. हेमन्तशिशिरावहोरात्रे च च्छन्दसि ॥ २८ ॥ (३३९९)**

'पूर्ववत्' इति वर्तते। हेमन्तशिशिरौ, अहोरात्रे—इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति। हेमन्तशिशिरावृतूनां प्रीणामि ( तै० सं० १.६.२.३ )। अहोरात्रे इदं ब्रूमः ( अथर्व० १.१६.५ )। परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्चायं न निपातनम्, तेन द्विवचनमतन्त्रम्। वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति। पूर्वपक्षाश्चितयः, अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः ( तै० सं० ३.११.४.१ )।

छन्दसीति किम्? दुःखे हेमन्तशिशिरे। अहोरात्राविमौ पुण्यौ।

**न्यासः**

तेन **द्विवचनमतन्त्रम्**—इत्यादिनाऽर्थातिदेशस्य फलं दर्शयति। निपातने हि वचनान्तरे पूर्ववल्लिङ्गता न स्यात्॥ २७॥

**हेमन्तशिशिरावहोरात्रे च च्छन्दसि॥** परवल्लिङ्गतापवादोऽयं योग इति हेमन्तशिशिरावित्यत्र नपुंसकत्वापवादः, परस्य शिशिरशब्दस्य नपुंसकत्वात्। **अहोरात्रे इति।** पुंल्लिङ्गत्वापवादोऽयम्। 'रात्रा-

**पदमञ्जरी**

प्रतिपदविधानार्थम्, तत्र प्रतिपदविधानादश्ववडवमित्येकवद्भावपक्षे इमं विधि बाधित्वा 'स नपुंसकम्' इत्येतदेव भवति। तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमप्येकवद्भाववदेव प्रतिपदविहितं भवति। यस्तु पूर्ववदित्यतिदेशः स एकवद्भावाभावपक्षे चरितार्थः, तदाह—**तत्रैकवद्भावादन्यत्रेति। न निपातनमिति।** निपातने हि पूर्ववदिति वचनमनर्थकम्, अश्ववडवावित्येव ब्रूयात्, तेन किं सिद्धं भवतीत्याह—**तत्रेति। अतन्त्रम्** अप्रधानम्, अविवक्षितमित्यर्थः। निपातने तु तद्विवक्षितं स्याद्, यथोच्चारितरूपविषयत्वान्निपातस्य॥ २७॥

**हेमन्तशिशिरावहोरात्रे चच्छन्दसि॥ हेमन्तशिशिराविति।** अत्र नपुंसकत्वं प्राप्तं शिशिरशब्दस्य नपुंसकत्वात्। केचित्तु 'हेमन्तः शिशिरोऽस्त्रियाम्' ( अमर० १.३.१८ ) इत्युभयलिङ्गं मन्यन्ते, तेषामत्र हेमन्त-

**भावबोधिनी**

लिङ्ग होता है। उदा०—अश्वश्च वडवा च—अश्वडवौ [ अश्व पुलिङ्ग है अतः समास में भी पुंल्लिङ्ग होता है। ] यह अर्थ [ पुंल्लिङ्गत्व ] का अतिदेश है निपातन नहीं। [ क्योंकि यदि निपातन इष्ट होता तो 'अश्ववडवौ' यह लघु सूत्र कह दिया जाता। ] इसमें द्विवचन अतन्त्र = अप्रधान = अविवक्षित है। अतः अन्य वचनों में भी पूर्वपद के समान पुंल्लिङ्गता होती है—अश्ववडवान्, अश्ववडवैः [ पुंलिङ्ग होने से ह्रस्व अकारान्त शब्द मानकर द्वितीया एवं तृतीया के बहुवचन में उक्त रूप होते हैं। ]॥ २७॥

'पूर्ववत्' [ पूर्ववर्त्ती पद के लिङ्ग के समान होता है ]—इसकी अनुवृत्ति होती है। 'हेमन्तशिशिरौ' तथा 'अहोरात्रे' इन दोनों शब्दों का वेदविषय में पूर्ववर्त्ती पद के समान लिङ्ग होता है। उदा०—हेमन्तशिशिरावृतूनां प्रीणामि। [ हेमन्त का पुंल्लिङ्गत्व समास में होता है। ] अहोरात्रे इदं ब्रूमः [ अहन् का नपुंसकत्व समास में भी रहता है। ] यह परवर्त्ती पद के समान लिङ्ग की प्राप्ति का अपवाद योग है। यह अर्थातिदेश है, निपातन नहीं, इसलिये द्विवचन अतन्त्र = अप्रधान अविवक्षित है। अन्य वचनों में भी पूर्ववर्त्ती पद का लिङ्ग होता है। उदा०—'पूर्वपक्षाश्चितयः, अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः [ यहाँ अहोरात्राणि' यह बहुवचन है। ]

वेदविषय में—इसका क्या फल है। दुःखे हेमन्तशिशिरे। [ यहाँ परवर्त्ती शिशिर का नपुंसक लिङ्ग हुआ है। यह लौकिक प्रयोग है। ] अहोरात्राविमौ पुण्यौ [ यह भी लौकिक प्रयोग है। 'रात्राह्नाहाः पुंसि' पा० सू० २।४।२९ से पुंलिङ्ग होने से समास में भी पुंलिङ्ग द्विवचन का रूप है। इसीलिये 'इमौ' यह लिखा गया। ]

छन्दसि लिङ्गव्यत्यय उक्तः, तस्यैवायं प्रपञ्चः ॥

**५६३. रात्राह्नाहाः पुंसि ॥ २९ ॥ (८१४)**

**कृतसमासान्तानां निर्देशः। रात्र, अह्न, अह—इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्विरात्रः। त्रिरात्रः। चतूरात्रः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। द्व्यहः। त्र्यहः।**

**न्यासः**

ह्नाहाः पुंसि' इति पुंल्लिङ्गत्वे प्राप्ते छन्दसि लिङ्गव्यत्यय उक्त इति—'व्यत्ययो बहुलम्' इत्यनेन ॥ २८ ॥

**रात्राह्नाहाः पुंसि ॥ परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोरिति।** रात्रिशब्दस्य स्त्रीलिङ्गत्वादहःशब्दस्य च नपुंसकत्वात्। **द्विरात्र इति** द्वयो रात्र्योः समाहारः। 'तद्धितार्थ' इत्यादिना समाहारे द्विगुः। 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यच्समासान्तः। अत्र हि 'अच्प्रत्यन्वपूर्वात् सामलोम्नः' इत्यतोऽजित्यनुवर्त्तते। **पूर्वाह्ण इति।** अह्नः पूर्वमिति विगृह्य 'पूर्वापर' इत्यादिना समासः, 'राजाहःसखिभ्यष्टच्' इति टच्, 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः, 'अह्नोऽदन्तात्' इति णत्वम्। **द्व्यह इति।** पूर्ववत् समाहारे दिगुः। पूर्ववत्

**पदमञ्जरी**

शिशिरावित्यनर्थकम्। **अहोरात्रे इति।** अत्र 'रात्राह्नाहाः पुंसि' इति पुंस्त्वं प्राप्तम्। **लिङ्गव्यत्यय उक्त इति।** 'व्यत्ययो बहुलम्' इत्यनेन ॥ २८ ॥

**रात्राह्नाहाः पुंसि ॥ इत्येते पुंसि भाष्यन्ते इति।** केचिदाहुः—रात्रादीनामेवानेन पुंस्त्वं विधीयते, तदन्तस्य तु परवल्लिङ्गमित्येव सिद्धमिति। एवं तु समाहारे 'स नपुंसकम्' इत्येतदेव स्यात्, परवल्लिङ्गापवादत्वात्तस्य, तस्माद्रात्राद्यन्तस्य समासस्यैवेदं लिङ्गविधानं युक्तम्। एवं हि समाहारेऽपि परत्वादिदमेव प्रवर्त्तते। **इत्येते पुंसि भाष्यन्ते** इत्यत्र त्वेतदन्ता इत्यर्थो द्रष्टव्यः। **त्रिरात्र इति।** समाहारे द्विगुः, 'अहःसर्वैकदेश' इत्यच् समासान्तः। **पूर्वाह्ण इति।** अह्नः पूर्वो भागः, एकदेशिसमासः। 'राजाहःसखिभ्यष्टच्', 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः, 'अह्नोऽदन्तात्' इति णत्वम्। **द्व्यह इति।** 'न संख्यादेः समाहारे' इत्यह्नादेशाभावः, 'अह्नष्टखोरेव' इति टिलोपः।

**भावबोधिनी**

वेद में लिङ्ग का व्यत्यय कहा गया है, उसी का यह प्रपञ्च=विस्तार है ॥ २८ ॥

किये गये समास वाले शब्दों का निर्देश है। रात्र, अह्न और अह—ये शब्द पुंलिङ्ग में कहे गये हैं। परवर्त्ती पद के लिङ्ग के समान लिङ्ग होने से स्त्रीलिंग और नपुंसक लिङ्ग की प्राप्ति रहने पर यह वचन आरम्भ किया जा रहा है। उदा०—द्विरात्रः [ द्वयोः रात्र्योः समाहारः इस विग्रह में द्विगु समास करनेपर 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' पा० सू० ५।४।८७ सूत्र से समासान्त 'अच्' प्रत्यय करने पर भसंज्ञा 'इ' का लोप करने पर 'द्विरात्र' बनता है। प्रस्तुत सूत्र पुलिङ्ग करता है। ] त्रिरात्रः [ तिसृणां रात्रीणां समाहारः। शेष प्रक्रिया पूर्ववत् ] चतूरात्रः [ चतसृणां रात्रीणां समाहारः ] यहाँ भी प्रक्रिया पूर्ववत् ही है—चतुर्+रात्र में रेफ का लोप और पूर्व 'उ' कार का दीर्घ होता है। पूर्वाह्णः [अह्नः पूर्वम्—यह विग्रह है। 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' पा० सू० २।२।१ से समास, पूर्वनिपात, 'राजाहः सखिभ्यष्टच्' पा. सू. ५।४।९१ से टच्=अ प्रत्यय, 'अह्नोऽह्न एतेभ्यः' पा. सू. ५।४।२८ से अहन् का 'अह्न' आदेश तथा 'अह्नोऽदन्तात्' पा. सू. ८।४।७ से णत्व होता है।] अपराह्णः [अह्नः अपरम्—यह विग्रह है। प्रक्रिया पूर्ववत्।] मध्याह्नः [अह्नः मध्यम्—यह विग्रह है। प्रक्रिया पूर्ववत् णत्व' का निमित्त न होने से णत्व नहीं होता है। ] द्व्यहः। [ द्वयोः अह्नोः समाहारः—द्विगु समास है। यहाँ 'न संख्यादेः समाहारे' पा० सू० ५।४।८९ से निषेध होने के कारण 'अह्न' आदेश नहीं होता है। 'टच् प्रत्यय' और 'अह्नष्टखोरेव' पा० सू० ६।४।१४५ से अन्=टि का लोप हो जाता है। ] त्र्यहः। [ तिसृणां रात्रीणां समाहारः—यह विग्रह है। प्रक्रिया पूर्ववत् है। ]

※ अनुवाकादयः पुंसीति वक्तव्यम् ※ ( म० भा० २.४.२९ वा० १ ) । अनुवाकः । शंयुवाकः ( आश्व० श्रौ० १.१०.११ ) सूक्तवाकः ( ऋ० १०.८८.७ ) ॥

**८६४. अपथं नपुंसकम् ॥ ३० ॥ (८१९)**

**अपथशब्दो नपुंसकलिङ्गो भवति । अपथमिदम् । अपथानि गाहते मूढः ।**

**इह कस्मान्न भवति—अपथो देशः, अपथा नगरी ? तत्पुरुष इति वर्त्तते ॥**

**न्यासः**

टच् । 'न संख्यादेः समाहारे' इति प्रतिषेधादह्नादेशो न भवति । 'अह्नष्टखोरेव' इति टिलोपः । **अनुवाकादय इति** । केचिदाहुः—बहुव्रीहिरयम्, अनुक्रान्तो वाकोऽनयानेन वाऽनुवाकः । स्त्रीलिङ्गे नपुंसकलिङ्गे च प्राप्ते वचनम् । अन्ये च मन्यन्ते—योऽयं भावे घञ् स सामर्थ्यात् पुंल्लिङ्गः । तस्य हि नपुंसके भावे क्तोऽपवादः, स्त्रियाञ्च क्तिन् । तेनासौ सामर्थ्यात् पुंस्येवावतिष्ठते । यस्त्वकर्त्तरि कारके विधीयते स पुंसि नपुंसके च वर्त्तते; बाधकाभावात् । स्त्रियान्तु न भवति; यतः 'स्त्रियां क्तिन्' इत्यकर्त्तरि च कारके विधीयते, स विशेषविहितो घञं बाधते । इह च वचेः 'अकर्त्तरि च कारके संज्ञायाम्' इति घञ् विहितः । अनूच्यते यत् पदं तदनुवाकः । 'कुगतिप्रादयः' इति समासः । अस्मिन् पक्षे नपुंसके प्राप्ते वचनम् ॥ २९ ॥

**अपथं नपुंसकम् ॥ अपथमिति** । 'पथो विभाषा' इति यदा समासान्तप्रतिषेधो नास्ति तदा 'ऋक्पूरब्धूः-पथामानक्षे' इत्यकारः समासान्तः । समासान्तनिर्देशाद् यदा समासान्तो नास्ति तदा पुंल्लिङ्गतैव भवति—अपन्था इति ॥ ३० ॥

**पदमञ्जरी**

**अनुवाकादयः पुंसीति** । वाक्यविशेषस्य ताः संज्ञाः कर्मणि घञन्ता इति नपुंसकत्वे प्राप्ते वचनम् ॥ २९ ॥

**अपथं नपुंसकम्** ॥ 'पथः संख्याव्ययादेः' ( वा० १६१ ) इत्यस्यापरकालभावित्वादयमारम्भः । **अपथमिति** । 'पथो विभाषा' इति यदा समासान्तप्रतिषेधो न भवति तदा 'ऋक्पूरब्धूः' इत्यकारः समासान्तः । समासान्तनिर्देशाच्च तदभावपक्षे पुंस्त्वमेव भवति—अपन्था इति । **तत्पुरुष इति वर्तत इति** । एतदर्थमेव 'स नपुंसकम्' इत्यस्यानन्तरं न कृतम् ॥ ३० ॥

**भावबोधिनी**

* अनुवाक आदि शब्द पुंलिङ्ग में कहने चाहिये । * अनुवाकः [ अनु उच्यते यत् पदं तद्—इस अर्थ में घञ् प्रत्ययान्त 'वाक्' के साथ 'अनु' का समास 'कुगतिप्रादयः' पा० सू० २।२।१८ से होता है । पुंलिङ्गत्व और नपुंसकलिङ्गत्व दोनों की प्राप्ति में केवल पुंलिङ्गत्व का विधान है । यह वाक्य-विशेष की संज्ञा है । ] शंयुवाकः । सूक्तवाकः । [ ये भी वाक्यविशेष की ही संज्ञायें हैं । नपुंसकत्व प्राप्त है । पुंलिङ्गत्व होता है । ] ॥ २९ ॥

अपथशब्द नपुंसक लिङ्ग होता है । उदा०—अपथम् इदम्, अपथानि गाहते मूढः । [ यहाँ न पन्थाः इस विग्रह में नञ्समास करने पर 'पथो विभाषा' पा० सू० ५।४।७२ से जब समासान्त प्रत्यय 'अ' का निषेध नहीं होता है तब यह सूत्र नपुंसकत्व करता है । जब समासान्त प्रत्यय नहीं होता है तब पुंलिङ्ग ही रहता है—अपन्थाः ] । यहाँ क्यों नहीं होता है—अपथो देशः, अपथा नगरी ? इसमें 'तत्पुरुष' इसकी अनुवृत्ति होती है । [ इन उदाहरणों में अविद्यमानः पन्थाः यस्य तादृशदेशः यह बहुव्रीहि है । अतः यह सूत्र लागू नहीं होता है । ] ॥ ३० ॥

५६५. अर्धर्चाः पुंसि च ॥ ३१ ॥ (८१६)

**अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते । अर्धर्चः** (तै० सं० ६.३.११.३), **अर्धर्चम्** (तै० सं० २.५.७.४) । **गोमयः** (ऋ० १०.६२.२), **गोमयम्** (शत० १२.९.२.३) ।

**शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते, यथा—पद्मशङ्खशब्दौ निधिवचनौ पुंल्लिङ्गौ, जलजे उभयलिङ्गौ । भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्याभिधेयवल्लिङ्गम् । सैन्धवशब्दो लवणे उभयलिङ्गः, यौगिकस्याभिधेयवल्लिङ्गम् । सारशब्द उत्कर्षे पुंल्लिङ्गः, न्यायादनपेते** (२.१.३८) **नपुंसकम्—नैतत्सारमिति । धर्म इत्यपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम्—'तानि धर्माणि प्रथमान्यासन्'** (ऋ० १.१६४.४३) ।

**न्यासः**

**अर्द्धर्चाः पुंसि च ॥** अर्द्धर्चा इति बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह **अर्द्धर्चादय इत्यादि ।**

**शब्दरूपाश्रया चेयमिति ।** शब्दरूपमाश्रयो यस्याः सा तथोक्ता । शब्दरूपमाश्रित्यार्थमनपेक्ष्य द्विलिङ्गतेयं विधीयत इत्यर्थः । क्रियाशब्दस्याभिधेयवल्लिङ्गमिति भूतं कुण्डम्, भूता शाटी, भूतो घट इति । यौगिकस्याभिधेयवल्लिङ्गमिति लवणं **शाकम्**, लवणा यवागूः लवणः सूप इति । लवणेन संसृष्टमिति 'संसृष्टे' इति ठक्, तस्य 'लवणाल्लुक्' इति लुक् । अत एव तद्धितार्थयोगे भूतत्वाद् यौगिकोऽत्र लवणशब्दः । **सारशब्द उत्कर्षे पुंल्लिङ्ग इति ।** यथा—चन्दनसार इति । **अपूर्वे इति ।** अपूर्वशब्दोऽयं धर्माधर्मयोर्वर्त्तते । **तत्साधन इति ।**

**पदमञ्जरी**

**अर्धर्चाः पुंसि च ॥** साहचर्याच्छत्रिन्यायेन कार्षापणादीनामप्यर्धर्चशब्देन ग्रहणमित्याह—**अर्धर्चादय इति ।** बहुवचनमत्र प्रमाणम् । **शब्दरूपाश्रया चेयं द्विलिङ्गतेति ।** अस्मिञ्छब्दरूपे लिङ्गद्वयं भवतीत्येतावदत्र विवक्षितम्, न पुनरस्य शब्दस्य यावानर्थस्तत्र सर्वत्र लिङ्गद्वयं भवतीत्येवमपीत्यर्थः । किमेवं सति सिद्धं भवतीत्याह - **क्वचिदिति ।** अर्थभेदेन व्यवस्थयापि भवल्लिङ्गद्वयं तत्रैव शब्दे संप्रवृत्तमिति भावः । अत्रोदाहरणमाह—**यथेति ।** 'शङ्खः पद्मश्च विज्ञेयौ धनदस्य महानिधी' । **क्रियाशब्दस्येति ।** तद्यथा—भूतं काण्डम्, भूता शाला, भूतो घट इति । **यौगिकस्याभिधेयवल्लिङ्गमिति ।** यद्यपि लवणवृत्तेरपि सैन्धवशब्दस्य योगोऽपि निमित्तम्, तथापि रूढिशक्तिरपि तत्र निमित्तम् । अतो यौगिकस्येति केवलयोगनिमित्तस्येत्यर्थः । अभिधेयवल्लिङ्गमिति, यथा—सिन्धौ भवं सैन्धवं जलम्, सैन्धवो मत्स्यः, सैन्धवी शफरीति **उत्कर्षे पुंल्लिङ्ग इति ।** चन्दनसारः, खदिरसार इति । धर्म **इत्यपूर्वे पुंल्लिग इति ।** यागादिक्रियाजन्यः स्वर्गादिफलानुगुणः कर्तर्युत्पन्नः

**भावबोधिनी**

अर्धर्च आदि शब्द पुंल्लिङ्ग में और नपुंसकलिङ्ग मे परिभाषित किये जाते हैं। उदा०—अर्धर्चः अर्धर्चम् [ऋचः अर्धम्—यह विग्रह, षष्ठीसमास और समासान्त प्रत्यय होने पर दोनों लिङ्ग होते हैं ।] गोमयः, गोमयम् [गोबर] ।

शब्दरूप को मानकर होनेवाली यह द्विलिङ्गता कहीं-कहीं अर्थभेद से भी निश्चित की जाती है। उदाहरणार्थ—निधि अर्थ के वाचक 'पद्म' और 'शङ्ख' शब्द पुंल्लिङ्ग हैं, 'कमल' अर्थ में उभयलिङ्ग हैं। 'भूत' शब्द पिशाच अर्थ में उभयलिङ्ग है, क्रियाशब्द का अभिधेय पदार्थ के समान लिङ्ग होता है। [ भूतः घटः, भूता शाटी, भूतम् वस्त्रम्—तीनों लिङ्ग होते हैं। ] सैन्धव शब्द लवण अर्थ में उभयलिङ्ग [ पुंल्लिङ्ग और नपुंसक लिङ्ग ] है। सिन्धौ भवम् आदि अर्थों में यौगिक सैन्धव शब्द अभिधेय के समान लिङ्गवाला होता है। [ सैन्धवं जलम्, सैन्धवः मत्स्यः, सैन्धवा मत्सी ] । 'सार' शब्द उत्कर्ष अर्थ में पुंलिङ्ग है, न्याय से अनपेत अर्थ में नपुंसक लिङ्ग होता है—नैतत् सारम् । धर्म शब्द अपूर्व अर्थ में पुंलिङ्ग है, उस अपूर्व के साधन अर्थ में नपुंसक लिङ्ग है—'तानि धर्माणि प्रथमानि आसन् ।' [ यजुः ]

अर्द्धर्च । गोमय । कषाय कार्षापण । कुतप । कपाट । शङ्ख । गूथ । यूथ । ध्वज । कबन्ध । पद्म । गृह । सरक । कंस । दिवस । यूष । अन्धकार । दण्ड । कमण्डलु । मण्ड । भूत । द्वीप । द्यूत । चक्र । धर्म । कर्मन् । मोदक । शतमान । यान । नख । नखर । चरण । पुच्छ । दाडिम । हिम । रजत । सक्तु । पिधान । सार । पात्र । घृत । सैन्धव । औषध । आढक । चषक । द्रोण । खलीन । पात्रीव । षष्टिक । वार । बाण । प्रोथ । कपित्थ । शुष्क । शील । शुल्व । सीधु । कवच । रेणु । कपट । सीकर । मुसल । सुवर्ण । यूप । चमस । वर्ण । क्षीर । कर्ष[1] । आकाश । अष्टापद । मङ्गल । निधन । निर्यास । जृम्भ । वृत्त । पुस्त । क्ष्वेडित । शृङ्ग । शृङ्खल । मधु । मूल । मूलक । शराव । शाल । वप्र । विमान । मुख । प्रग्रीव । शूल । वज्र । कर्पट । शिखर । कल्क । नाट । मस्तक । वलय । कुसुम । तृण । पङ्क । कुण्डल । किरीट । अर्बुद । अङ्कुश । तिमिर । आश्रम । भूषण । इल्कस । मुकुल । वसन्त । तडाग । पिटक । विटङ्क । माष । कोश ।

न्यासः

अदृष्टोपार्जनं प्रति यस्याङ्गभावः स तत्साधनमित्यर्थः, स पुनर्यागादिः । कर्मशब्दो[2] नकारान्त एवोभयलिङ्ग

पदमञ्जरी

संस्कारविशेषः = अपूर्वम् । भाट्टास्तु अपूर्वसाधने यागादावेव धर्मशब्दं पुंल्लिङ्गं मन्यन्ते—'चोदनालक्षणोऽर्थो धर्मः,' ( जै० सू० १.१.२ ) 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति । शाबरेऽप्युक्तम्—'यो यागमनु-

भावबोधिनी

[ अर्धर्चादि गण में पठित शब्द— ] अर्धर्च = ऋचा का आधा । गोमय = गोबर । कषाय = कसैला । कार्षापण = सिक्का । कुतप = कुप्पा । कपाट = किवाड़ । शंख = शंख । गूथ = विष्ठा । यूथ = समूह । ध्वज = ध्वजा । कबन्ध = धड़ । पद्म = कमल, निधि । गृह = घर । सरक = झील । कंस = कासा । दिवस = दिन । यूष = जूस । अन्धकार = अंधेरा । दण्ड = डण्डा । कमण्डलु = कमण्डलु । मण्ड = मांड़ । भूत = पिशाच । द्वीप = द्वीप । द्यूत = जुआ । चक्र = पहिया । धर्म = अपूर्व, और उसका साधन । कर्मन् = काम । मोदक = लड्डू । शतमान = ( मृग्य ) । यान = सवारी । नख = नाखून । नखर = नाखून । चरण = पैर । पुच्छ = पूँछ । दाडिम = अनार । हिम = बर्फ । रजत = चाँदी । सक्तु = सत्तू । पिधान = ढकना । सार = सारांश । पात्र = वर्तन । घृत = घी । सैन्धव = नमक, सिन्धु में पैदा वाला । औषध = दवा । आढक = ढैया । चषक = गिलास । द्रोण = प्राचीन काल की एक नाप । खलीन = लगाम । पात्रीव = (पात्रीय = यज्ञीयपात्र) । षष्टिक = साठ । वार = दिन । वाण = वाण । प्रोथ = घोड़े की नाक । कपित्थ = कैथा । शुष्क = सूखा हुआ । शील = स्वभाव । शुल्व = रस्सी, यज्ञीय कार्य । सीधु = शराब । कवच = कवच । रेणु = धूलि । कपट = छल । सीकर = जलबिन्दु । मूसल = मूसल । सुवर्ण = सोना । यूप = खूँटा । चमस = लकड़ी का चम्मच । वर्ण = रंग । क्षीर = दूध । कर्ष = सोने का सिक्का । आकाश = आकाश । अष्टापद = आठ पैरों वाला कीड़ा । मङ्गल = कल्याण । निधन = मृत्यु । निर्यास = निकालना । जृम्भ = जमुँहाई । वृत्त = आचरण । पुस्त = पुस्तक, कलाकारी । क्ष्वेडित = फेनिल । । शृङ्ग = शिखर, सींग । शृङ्खल = सीकड़ी । मधु = शहद । मूल = जड़ । मूलक = मूली । शराव = कटोरी । शाल = वृक्ष-विशेष । वप्र = हाथी । विमान = विमान । मुख = मुँह । प्रग्रीव = प्रकृष्ट ग्रीवा । शूल = शूल । वज्र = वज्र । कर्पट = कपड़ा । शिखर = चोटी । कल्क = चिपचिपा तल । नाट = नृत्य । मस्तक = माथा । वलय = कंगन । कुसुम = फूल । तृण = तिनका । पंक = कीचड़ । कुण्डल = कुंडल । किरीट = मुकुट । अर्बुद = खरब । अंकुश = अंकुश । तिमिर = अँधेरा । आश्रम = आश्रम । भूषण = गहना । इल्कस = [मृग्य] । मुकुल = बउर, मञ्जरी ।

---

१. 'करीष, यष्टक, निष्क'—इत्यधिकः पाठः क्वचित् दृश्यते ।

२—१. 'धर्मशब्दो नकारान्त एवोभयलिङ्गः । धर्म धर्मा च'—इति क्वचित् पाठान्तरम् ।

**फलक। दिन। दैवत। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चषाल। खण्ड। दर। विटप। रण। बल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पुर। राष्ट्र। विश्व। अम्बर। कुट्टिम। मण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। देह। उद्यान। उद्योग। स्नेह। स्वर। सङ्गम। निष्क। क्षेम। शूक। छत्त्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुष्। मान। तङ्क। वितङ्क। मव। सहस्र। ओदन। प्रवाल। शकट। अपराह्ण। नीड। शकल। अर्धर्चादिः[1] ॥**

**न्यासः**

इति कर्म कर्मा चेति ॥ ३१ ॥

**पदमञ्जरी**

तिष्ठति तं धार्मिक इत्याचक्षते' इति ॥ ३१ ॥

**भावबोधिनी**

वसन्त = वसन्त। तडाग = तालाब। पिटक = पिटारा। विटंक = कपोतपाली। माष = उड़द। कोश = खजाना। फलक = फलक। दिन = दिन। दैवत = देवता। पिनाक = धनुष। समर = युद्ध। स्थाणु = ठूंठा। अनीक = सेना। उपवास = समीप में रहना। शाक = हरी सब्जी। कर्पास = कपास का पेड़। चषाल = यज्ञीयस्थल विशेष। खण्ड = टुकड़ा। दर = जगह। विटप = शाखा। रण = युद्ध। बल = सेना, शक्ति। मल = दूषण। मृणाल = कमलनाल। हस्त = हाथ। सूत्र = सूत, धागा। ताण्डव = नृत्यविशेष। गाण्डीव = अर्जुन का धनुष। मण्डप = मण्डप। पटह = ढोल। सौध = चूना। पार्श्व = समीप। शरीर = शरीर। फल = फल। छल = जालसाजी। पुर = शहर। राष्ट्र = राष्ट्र। विश्व = संसार। अम्बर = वस्त्र, आकाश। कुट्टिम = बनायी गई पक्की फर्श। मण्डल = समूह। ककुद = बैल आदि का डील। तोमर = शस्त्रविशेष। तोरण = बन्दनवार। मञ्चक = मचान। पुंख = बाण के पीछे का अंश। मध्य = बीच। बाल = बालक, केश। वल्मीक = दीमक। वर्ष = वर्ष, बरसात। वस्त्र = कपड़ा। देह = शरीर। उद्यान = बगीचा। उद्योग = उद्योग। स्नेह = स्नेह, तेल। स्वर = स्वर, ध्वनि। संगम = मिलन। निष्क = सिक्का। क्षेम = रक्षा करना। शूक = चूसना। छत्त्र = छाता। पवित्र = शुद्ध। यौवन = जवानी। पानक = पिया जानेवाला रस आदि। मूषिक = चूहा। वल्कल = छाल। कुञ्ज = कुञ्ज। विहार = विहार। लोहित = लाल। विषाण = सींग। भवन = घर। अरण्य = जंगल। पुलिन = नदी का किनारा। दृढ = मजबूत। आसन = बैठने का पदार्थ विशेष। ऐरावत = हाथी। शूर्प = सूप। तीर्थ = तीर्थ। लोमश = लोमयुक्त। तमाल = वृक्ष विशेष। लोह = लोहा। दण्डक = सीधा। शपथ = शपथ। प्रतिसर = नौकर। दारु = लकड़ी। धनुष् = धनुष। मान = मान, नाप, तौल। तङ्क = परेशान। वितङ्क = धनी। मव = बन्धन। सहस्र = हजार। ओदन = चावल। प्रवाल = मूँगा; नव-पल्लव। शकट = गाड़ी। अपराह्ण = अपराह्ण। नीड = घोसला। शकल = खण्ड। ये अर्धर्च आदि हैं॥ ३१ ॥

---

१. कुणप। मुण्ड। पूत। मरु। कंप। लोमन्। लिङ्ग। सीर। क्षत। ऋण। कडार। वर्ण। पूर्ण। पणव। विशाल। वुस्त। पुस्तक। पल्लव। निगड। खल। स्थूल। शार। नाल। प्रवर। कटक। कण्टक। छाल। कुमुद। पुराण। जाल। स्कन्ध। ललाट। कुङ्कुम। कुशल। विडङ्ग। पिण्याक। आर्द्र। हल। कटक। योध। बिम्ब। कुक्कुट। कुडप। खण्डल। पञ्चक। वसु। उद्यम। स्तन। स्तेन। क्षत्र। कलह। पालक। हल। वर्चस्क। कूर्च। तण्डक। तण्डुल-इत्येतेऽपि शब्दाः पुस्तकान्तरे दृश्यन्ते ॥

## ५६६. इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ ३२ ॥ (३५०)

आदेशः = कथनम्, अन्वादेशः = अनुकथनम्। **इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्तृतीयादौ विभक्तौ परतः। आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। अस्मै छात्राय कम्बलं देहि, अथो अस्मै शाटकमपि देहि। छात्रस्य शोभनं शीलम्, अथो अस्य प्रभूतं स्वम्।**

**अशादेशवचनं साकच्कार्थम्** (म० भा०)**। इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्।**

न्यासः

**इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥** आदेशः कथनमिति। प्रथमतः प्रतिपादनम्, शब्देन। **अन्वादेशोऽनुकथनमिति।** पश्चात्प्रतिपादनम्। तच्च यादृशमिहाभिप्रेतं तादृशं पश्चाद्वक्ष्यति। **आभ्यां छात्राभ्यामित्यादि।** आदेश एषः। **अथो आभ्यामित्याद्यन्वादेश एषः।** अथोशब्देनात्रान्वादेश उच्यते।

ननु च त्यदाद्यत्वे कृते हलि लोपे चाथो आभ्यामित्यादिरूपं सिध्यत्येव, तस्मादनुदात्तमेव केवलं विधेयम्, आदेशवचनं त्वनर्थकमित्यत आह—**आदेशवचनमित्यादि।** 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच्प्रत्यये कृते सत्यपि 'अनाप्यकः' इत्यधिकारादिद्रूपस्य लोपो नास्तीत्यसत्यादेशवचने रूपं न सिध्यति। ननु च 'हलि लोपः' इत्यनेन हलादाविद्रूपस्य लोपेऽनेनाजादौ यथा स्यादित्येवमर्थं कस्मान्न भवति ? नैतदस्ति; सामर्थ्याद्धि हलादावेव भवितव्यम्, तत्र स्मैभावादिषु कृतेषु। तस्मात् साकच्कार्थमादेशवचनम्। साकच्कार्थे चास्मिन्नारब्धे शित्करणं सर्वादेशार्थम्; अन्यथा ह्यलोऽन्त्यस्य स्यात्। प्रयोजनाभावान्न भविष्यतीति चेत् ? न; अकारस्य त्वकारवचनं दीर्घादेशनिवृत्त्यर्थं विज्ञायते। अथानुदात्तवचनं किमर्थम्, यावता 'ऊडिदम्पदा-

पदमञ्जरी

**इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ अन्वादेशोऽनुकथनमिति।** शब्दार्थकथनमेतत् यादृशस्त्वत्राभिप्रेतस्तादृशं पश्चाद्वक्ष्यति। **आभ्यां छात्राभ्यामिति।** आदेश एषः। **अथो आभ्यामिति।** एषोऽन्वादेशः। अथोशब्देन चात्रान्वादेशोऽभिव्यज्यते।

ननु तृतीयादावयमादेशस्तत्र च टायामोसि चैनादेशो वक्ष्यते,अन्याः सर्वा हलादयः, तत्र हलिलोपेनैवाभ्यामित्यादिरूपं सिद्धम्, नार्थ आदेशवचनेन, तत्राह—**आदेशवचनमिति।** अज्ञाताद्यर्थविवक्षायामकचि कृते 'हलि लोपः' इत्यत्र 'अनाप्यकः' इत्यतोऽक इत्यधिकारादिद्रूपलोपो न स्यात्, सत्यपि च तस्मिन्नाभ्यामित्यादि रूपं न सिद्ध्येत्; तस्मात्साकच्कार्थमादेशवचनम्। साकच्कार्थे चास्मिन् शित्करणं सर्वादेशार्थम्, न वान्त्यस्य विकारवचनानर्थक्यात्। यदि ह्ययमन्त्यस्य विकारः स्याद्वचनमिदमनर्थकं स्यात्; त्यदाद्यत्वेनैव सिद्धेः। अर्थवद्वादेशप्रतिषेधार्थम्। अन्त्यस्यापि विकारवचनमर्थवदेव, येऽन्य आदेशा आभ्यामित्यादौ दीर्घादयस्ते मा भूवन्नित्यकारस्याप्यकारवचनं स्यात्, यथा—'मो राजि समः क्वौ' इति मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्। ननु च कृतेऽप्यकचि अनेनादेशे सत्याभ्यामित्यादिरूपस्य साधारण्यादज्ञाताद्यर्थगतिः प्रकरणाधीना।

भावबोधिनी

आदेशः = कहना। अन्वादेशः = बाद में कहना। अन्वादेश = पीछे से दुबारा कथन के विषयभूत 'इदम्' शब्द का अनुदात्त अश्' आदेश हो जाता है तृतीया आदि विभक्तियों के परे रहने पर। उदा०—आभ्यां छात्राभ्यां रात्रिः अधीता [ इन दोनों छात्रों ने रात पढ़ी = रातभर पढ़ा— यह आदेश वाक्य है ] अथो आभ्याम् अहः अपि अधीतम् [तथा इन दोनों छात्रों ने दिन भी = दिन भर भी पढ़ा— यह अन्वादेश है। यहाँ 'इदम्' का 'अश्' आदेश अनुदात्त होकर दीर्घ आदि करने पर रूप बना है। ] अस्मै छात्राय कम्बलं देहि [ इस छात्र को कम्बल दीजिये—आदेश वाक्य है ] अथो अस्मै शाटकम् अपि देहि। [ इसी छात्र को साड़ी भी दीजिये। यह अन्वादेश है। आदेश होकर 'अस्मै' रूप बना है। ] अस्य छात्रस्य शोभनं शीलम्। [ इस छात्र का अच्छा स्वभाव है-आदेश वाक्य है। ] अथो अस्य प्रभूतं स्वम् [ इसके पास पर्याप्त धन है। यह अन्वादेश है। यहाँ भी 'इदम्' का 'अश्' आदेश होता है। ]

यह 'अश्' आदेश अकच्विशिष्ट के लिये है—इमकाभ्यां छात्राभ्यां रात्रिरधीता। [ इन दो छात्रों ने रात भर

**नेह पश्चादुच्चारणमात्रमन्वादेशः, किं तर्हि ? एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः । तेनेह न भवति—देवदत्तं भोजय, इमं च यज्ञदत्तम्** (म० भा० ) **इति ॥**

## ५६७. एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ ३३ ॥ (१९६२)

**न्यासः**

द्यष्पुम्रैद्युभ्यः' इति विभक्तेरुदात्तत्वे कृते 'अनुदात्तं पदमेकवर्जम्' इति प्रकृतेरनुदात्तत्वं भविष्यति ? नैतदस्ति; सविभक्त्यर्थमनुदात्तवचनम्, सविभक्तिकस्यानुदात्तत्वं यथा स्यात् । तेन सर्वानुदात्तमेवाभ्यामिति पदमन्वादेशे भवति ! यदि पश्चादुच्चारणमात्रमन्वादेशस्तदेह कस्मान्न भवति--देवदत्तं भोजय, इमञ्च यज्ञदत्तमिति ? अस्ति ह्यत्राप्यन्वादेशः, ततश्च 'द्वितीयाटौस्स्वेनः' इत्येनादेशः प्राप्नोतीत्यत आह--**नेह पश्चादुच्चारणमात्र-मित्यादि । तेनेह न भवतीति** । न ह्यत्रैकस्याभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनम्, किं तर्हि ? अभिधेयान्तरस्य । तथा हि पूर्वं देवदत्तस्य प्रतिपादनम्, उत्तरकालं यज्ञदत्तस्य । कथं पुनरयं विशेषो लभ्यते, यावता पश्चादुच्चारणमात्रेऽन्वादेशशब्दः प्रसिद्धः; न च सामान्यशब्दः शब्दान्तरसन्निधानादिक-मन्तरेण विशेषेऽवतिष्ठते ? नैष दोषः; यस्मात् 'विभाषा सेना' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थित-विभाषा विज्ञायते । तेनैवंविधविषय एवान्वादेशोऽत्र ग्रहीतव्यः, नान्वादेशमात्रम् । तस्माद्विशिष्टस्यान्वादेशस्य ग्रहणं युक्तमिति भावः । यदपि च वक्ष्यति तत्र--'यत्र किञ्चिद्विधाय' इत्यादि, तदपोममेव न्यायं हृदि कृत्वेति बोद्धव्यम् ॥ ३२ ॥

**एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ अथो अत्रेति** । 'सप्तम्यास्त्रल्' । **अथो अत इति** । 'पञ्चम्यास्तसिल्' । **पुनर्वचनमनुदात्तार्थमिति** । 'एतदोऽश्' इति यः पाञ्चमिकोऽशादेशः स उदात्तः स्यात् । अनुदात्तश्चेष्यत इत्यनु-

**पदमञ्जरी**

यद्येवम्, अनुत्पत्तिरेवाकचोऽस्तु, प्रकरणादिनैवाज्ञाताद्यर्थः प्रतिपत्स्यते, अतोऽनुदात्तत्वमेव विधेयम्, नादेशः ? उच्यते--असत्यादेशे प्रकरणादिकमन्तरेणाकचैव कश्चिदज्ञातादिकं प्रतिपादयेत्, मैवं प्रतिपादयेदित्यादेश-वचनम् । उत्तरार्थं च । अनुदात्तवचनं किमर्थम्, यावता 'ऊडिदम्पदादि' इति विभक्तेरुदात्तत्वं शेषनिघातेनैव सिद्धम् । अनुदात्तवचनं विभक्त्यन्तस्यानुदात्तार्थम्, शेषनिघातेन हि प्रकृतेरेवानुदात्तत्वं सिद्ध्यति । कथं पुनरिदम-स्तृतीयादावशादेशो भवति, स चानुदात्त इत्यनेन विभक्त्यन्तस्यानुदात्तत्वं विधातुं शक्यम् ? नानेन विभक्त्यन्त-स्यानुदात्तत्वं विधीयते, किं त्वनेन प्रकृत्तेरनुदात्तत्वे कृते 'ऊडिदम्' इत्यत्रान्तोदात्तादित्यधिकारादसति विभक्ते-रुदात्तत्वे 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वादाभ्यामित्यादि पदं कृत्स्नमेवानुदात्तं भवति । यद्यन्वादेशोऽनुकथनम्, इहापि प्राप्नोति– देवदत्तं भोजय, इमं च यज्ञदत्तमिति, अस्ति ह्यत्रान्वादेशः, तत्र 'द्वितीयाटौस्स्वेनः' इत्येनादेशः प्राप्नोति ? इत्यत आह—**नेहेति** । **एकस्यैवाभिधेयस्येत्यादि** । तत्रैवान्वादेशशब्दः प्रसिद्धतर इति भावः ॥३२॥

**एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ पुनर्वचनमनुदात्तार्थमिति** । पाञ्चमिकोऽशादेश उदात्तः स्याद्, अनु-दात्तश्चेष्यते इत्यनुदात्तार्थं पुनर्वचनम् । त्रतसोरिति वचनं निमित्तभावार्थम्; अन्यथा **'त्रतसौ चानुदात्तौ'**

**भावबोधिनी**

पढ़ा ] अथो आभ्याम् अहः अपि अधीतम् । [ इन दोनों ने दिन भर भी पढ़ा । यहाँ अकच्‌विशिष्ट इदम् का 'अश्' आदेश हुआ है । अतः अन्वादेश वाक्य में 'अकच्' का श्रवण नहीं होता है । ]

यहाँ बाद में उच्चारण करना मात्र अन्वादेश नहीं है, तो क्या ? एक ही पदार्थ जिसका प्रतिपादन किया जा चुका है, उसी का पुनः प्रतिपादन अन्वादेश है । अतः इस उदाहरण में 'अश्' नहीं होता है—देवदत्तं भोजय, इमं च यज्ञदत्तं च । [देवदत्त को खिलाओ, इसको और यज्ञदत्त को खिलाओ । यहाँ बाद में अन्य अभिधेय = यज्ञदत्त का प्रतिपादन है] ॥३२॥

'अन्वादेशे' [ अन्वादेश के विषय में ] तथा 'अनुदात्तः' इनकी अनुवृत्ति होती है । अन्वादेश के विषयभूत एतद् शब्द का अनुदात्त 'अश्' आदेश 'त्र' और 'तस्' परे रहते होता है । और ये 'त्र' तथा 'तस्' प्रत्यय भी अनुदात्त हो

'अन्वादेशे' अनुदात्तः' इति वर्तते। एतदोऽन्वादेशविषयस्य अशादेशो भवति अनुदात्तस्त्रतसोः परतः। तौ चापि त्रतसावनुदात्तौ भवतः। एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे। एतस्माच्छात्राच्छन्दोऽधीष्व, अथो अतो व्याकरणमप्यधीष्व। सर्वानुदात्तं पदं भवति। 'एतदोऽश्' [ ५।३।२ ] इत्यशादेशे लब्धे पुनर्वचनमनुदात्तार्थम्।

**५६८. द्वितीयाटौस्स्वेनः ॥ ३४ ॥ (३५१)**

'अन्वादेशे', 'अनुदात्तः' इति वर्तते। द्वितीया, टा, ओस्- इत्येतेषु परत इदमेतदोरन्वादेशविषययोरेन-

**न्यासः**

दात्तार्थं वचनम्। अथ त्रतसोरिति किमर्थम्, यावता 'त्रतसौ चानुदात्तौ' इति वचनात् तयोरेव निमित्तभावो विज्ञास्यते? नैतदस्ति; अन्वाचयोऽपि विज्ञायेत, यथा—'कर्त्तुः क्यङ् सलोपश्च' इति। अत्राविशेषेण क्यङ् भवति। तथात्राविशेषेण तावदशादेशो भवति। यत्र तु त्रतसौ दृश्येते तत्र तावनुदात्तौ भवतः, तस्मात् तावन्निमित्तभावार्थं त्रतसोरिति वक्तव्यम्। अथ त्रतसोरनुदात्तत्वं किमर्थम्, यावता लित्स्वर एव तयोरनुदात्तत्वं करिष्यति? नैतदस्ति; न ह्यत्र लित्स्वरोऽस्ति, अनुदात्तस्यादेशस्य विधानात्। ननु च लित्स्वरे कृत आदेशस्वरः क्रियते; यद्येवम्, लित्स्वरापवाद आदेशस्वरो विज्ञायेत, न चापवादविषयमुत्सर्गोऽभिनिविशते? तस्माद् यथा गोष्पदप्रमित्यत्र लिति पूर्वमनुदात्तभावो नास्तीति प्रत्ययस्वर एव भवति, तथेहापि स्यादिति त्रतसोरनुदात्तार्थं वचनम्। ततश्चैतदपि सर्वमनुदात्तं पदं भवति। ताविति वक्तव्ये त्रतसोरिति वचनं स्पष्टार्थम्। गोष्पदप्रमिति। 'यावति विन्दजीवोः'। 'चर्मोदयोः पूरेः'। 'वर्षप्रमाण ऊलोपश्चान्यतरस्याम्' इति णमुल् ऊलोपश्च ॥ ३३ ॥

**द्वितीयाटौस्स्वेनः ॥ इदमेतदोरित्यादि**। ननु चानन्तरत्वादेतद एवात्रानुवृत्तिः प्राप्नोति, नेदमः; व्यवहितत्वादित्यत आह—**मण्डूकप्लुतिन्यायेनेत्यादि। एकमेवेदं विधानमिति**। अयं दण्ड इत्यनेन दण्डस्य सत्तोप-

**पदमञ्जरी**

इत्यन्वाचयो विज्ञायेत-यत्र त्रतसौ पश्यसि तत्र तावनुदात्ताविति। किमर्थं पुनस्त्रतसोरनुदात्तत्वमिष्यते, यावताऽत्रात इत्यादौ त्रतसोः कृतयोः प्रकृतेर्लित्स्वरे कृते शेषनिघातेन प्रत्ययानुदात्तत्वे सत्यशनुदात्तः करिष्यते? यद्येवं लभ्यते, कृतं स्यात्; तत्तु न लभ्यम्। इह हि त्रतसोः कृतयोर्लित्स्वरश्च प्राप्नोति, अनेन चानुदात्तोऽशादेशः, तत्र 'येन नाप्राप्तिन्यायेन' ( व्या० परि० ४२ ) अपवादत्वान्नित्यत्वाच्चानुदात्तेऽशादेशे कृते तद्विधानसामर्थ्यादपवादस्य लित्स्वरस्याप्रवृत्तावुत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात्, यथा-गोष्पदप्रमित्यत्र णमुल ऊलोपेन सह विधानाल्लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति। तस्मात् **'त्रतसौ चानुदात्तौ'** इति वक्तव्यम् ॥ ३३ ॥

**द्वितीयाटौस्स्वेनः ॥** अनन्तरत्वादेतद एवैनादेशः प्राप्नोति, इदमोऽपीष्यते, तदिदमो ग्रहणं कर्त्तव्यम्? न कर्त्तव्यम् 'इदमोऽन्वादेशे' इत्यत इदम इत्यनुवर्तिष्यते, एतदस्त्रतसोरित्यत्रापि संबन्धात्तस्यापि त्रतसोरादेश-

**भावबोधिनी**

जाते हैं। उदा० - एतस्मिन् ग्रामे सुखं वसामः। [ हम इस गांव में सुख से रहते हैं—यह आदेश वाक्य है। ] अथो अत्र युक्ता अधीमहे [ यहाँ सलग्न होकर पढ़ते भी हैं। यह अन्वादेश वाक्य है। एतद् का 'अश्' आदेश 'त्रल्' प्रत्यय परे रहते होने से 'अत्र' यह रूप होता है। अन्यथा 'एतत्र' यह रूप बनता। ] एतस्मात् छात्रात् छन्दोऽधीष्व। [ इस छात्र से वेद पढ़ो—आदेशवाक्य] अथो अतो व्याकरणमपि अधीष्व [ इससे व्याकरण भी पढ़ लो—अन्वादेश। यहाँ पञ्चम्यर्थ में तसिल् प्रत्यय करने पर 'एतद्' का 'अश्' आदेश होने से 'अतः' यह रूप बना है। ] यहाँ पद सर्वानुदात्त होता है। 'एतदोऽश्' पा० सू० ५।३।५ से 'अश्' आदेश के प्राप्त रहने पर पुनः यह वचन=सूत्र [ सम्पूर्ण पद का ] अनुदात्त करने के लिये है। [ भाव यह है कि केवल 'अश्' आदेश तो पञ्चम अध्याय वाले 'एतदोऽश्' सूत्र से ही सम्भव था, पुनः यहाँ नवीन सूत्र बनाने का प्रयोजन सम्पूर्ण पद का अनुदात्त आदेश करना है। ] ॥ ३३ ॥

'अन्वादेशे' तथा 'अनुदात्तः' इन दो की अनुवृत्ति होती है। द्वितीया विभक्ति के तीन प्रत्ययों, 'टा' तथा 'ओस्' इन [ पाँच प्रत्ययों ] के परे रहने पर अन्वादेश के विषयभूत 'इदम्' और 'एतद्' का 'एन' आदेश अनुदात्त होता है।

**शब्द आदेशो भवति अनुदात्तः। इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिः। इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय। अनेन छात्त्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम्। अनयोश्छात्त्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्।**

**एतदः खल्वपि—एतं छात्त्रं छन्दोऽध्यापय, अथो एनं व्याकरणमप्यध्यापय। एतेन छात्त्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम्। एतयोश्छात्त्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्।**

*** एनदिति नपुंसकैकवचने वक्तव्यम् * ( म० भा० २.४.३४ वा० १ )। प्रक्षालयैनत्। परिवर्त्तयैनत्।**

**इह कस्मान्न भवति—अयं दण्डो हरानेन। एतमातं ङितं विद्यादिति? यत्र किञ्चिद् विधाय वाक्यान्त-**

**न्यासः**

लक्षणमात्रं कृत्वा 'हरानेन' इत्यनेनैव हरणक्रियां प्रति दण्डस्य करणभावो निर्दिश्यत इत्येकं विधानम्। 'एतमातं ङितं विद्यात्' इत्यत्रापि 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः' इतीषदाद्यर्थस्याकारस्य निर्देशमात्रं कृत्वा 'एतमातं ङितं विद्यात्' इत्यनेन वेदनक्रियां प्रत्याकारमात्रस्य कर्मभाव एव विधीयत इत्येकमेव विधानम्॥३४॥

**पदमञ्जरी**

प्रसङ्गस्तत्राह—**इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिरिति**। इदमप्यत्र वक्तव्यम्—इदमो हप्रत्ययेन बाधितत्वात्त्र-लोऽसम्भवात्त्रतसोरित्यत्रासम्बन्ध इति। यदि परमनुवृत्तिसामर्थ्यात्तस्याप्यादेशेन भाव्यम्, न चासति त्रलि तद्विधानमुपपद्यत इति त्रलः सत्ता परिकल्प्यते? तदपि न, उत्तरार्थमप्यनुवृत्तिसम्भवादिति। **एनदिति नपुंसकैक-वचने वक्तव्यमिति**। एनादेशे कृते 'अतोऽम्' इत्यम्भावे सत्येनमिति प्राप्नोत्यत एनदादेशो वक्तव्यः। यद्येवम्, अयमेव सर्वत्रास्तु, नार्थ एनादेशेन, कथम्-एनम् एनौ एनान्, एनेन, एनयोरिति? त्यदाद्यत्वे कृते भविष्यति, नपुंसकैकवचने तु नित्यत्वात् 'स्वमोर्नपुंसकात्' इति लुकि कृते एनदिति स्यादिति सिद्धम्, इह त्वेनं श्रित इति द्वितीयासमासे यद्यप्येनादेशोऽप्येनदादेशः, उभाभ्यामपि न भाव्यम्, कथम्? 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' (व्या० परि० १२८), तस्मादेतच्छ्रित इति भवति। **एकमेव विधानमिति**। 'अयं दण्डः' इत्यनेन दण्डस्य सत्तामात्रमुपलक्ष्यते, न तु किञ्चिद्विधीयते। एवमीषदर्थ इत्यादिना आकारस्य स्वरूपमात्रं निर्दिश्यते, न तु किञ्चिद्विधीयते॥ ३४॥

**भावबोधिनी**

[ 'इदमोऽन्वादेशे' पा० सू० २।४।३२ से ] मण्डूकप्लुति न्याय से 'इदम्' इसकी अनुवृत्ति होती है। [ अर्थात् मध्यवर्त्ती सूत्र में 'इदम्' की अनुवृत्ति न होकर, इसमें होने के लिये, मण्डूकप्लुति न्याय से मानी जाती है।] उदा०—इमं छात्रं छन्दः अध्यापय, [ इस छात्र को वेद पढ़ाओ—आदेश वाक्य है। ] अथो एनं व्याकरणम् अध्यापय [ इसको व्याकरण पढ़ाओ—अन्वादेश वाक्य है। 'इदम्' का 'एन' आदेश 'अम्' प्रत्यय = द्वितीया एकवचन परे रहते होता है। ] अनेन छात्रेण रात्रिरधीता। [ इस छात्र ने रात = रातभर पढ़ लिया।] अथो एनेन अहरपि अधीतम्। [ इसने दिन = दिनभर भी पढ़ लिया। यहाँ अन्वादेशवाक्य में 'एन' आदेश 'टा' = इन प्रत्यय परे रहते होता है। ] अनयोश्छात्रयोः शोभनं शीलम् [ इन दोनों छात्रों का अच्छा स्वभाव है। ] अथो एनयोः प्रभूतं स्वम् [ और इन दोनों के पास प्रचुर धन है। ]

'एतद्' का भी [ एन आदेश होता है ]—'एतं छात्रं छन्दोऽध्यापय' [ इस छात्र को वेद पढ़ाओ ] 'अथो एनं व्याकरणम् अध्यापय'। [ अब इसे व्याकरण पढ़ाओ। यहाँ एतद् का 'एन' आदेश करके द्वितीया एकवचन का रूप है। ] 'एतेन छात्रेण रात्रिः अधीता' [ इस छात्र ने रात भर पढ़ा। ] 'अथो एनेन अहः अपि अधीतम्'। [ और इसने दिन भर भी पढ़ा। ] 'एतयोः छात्रयोः शोभनं शीलम्'। [ इन दोनों छात्रों का स्वभाव अच्छा है।] 'अथो एनयोः प्रभूतं स्वम्। [ और इन दोनों के पास प्रचुर धन भी है। ]

[ पहले कह चुकने के बाद उसी के लिये कुछ कहने को अन्वादेश कहा जाता है। अतः उपर्युक्त वाक्यों में प्रथम में प्रयुक्त 'इदम्' तथा 'एतद्' का 'एन' आदेश द्वितीय वाक्य में किया गया है, यही अन्वादेश है। ]

* [ अन्वादेश में 'इदम् और एतद् का ] नपुंसक एकवचन में 'एनत्' यह आदेश कहना चाहिये। *

रेण पुनरन्यदुपदिश्यते सोऽन्वादेशः । इह तु वस्तुनिर्देशमात्रं कृत्वा एकमेव विधानम् ॥

**९६९. आर्धधातुके ॥ ३५ ॥ (२४३२)**

'आर्धधातुके' इत्यधिकारोऽयम्, **'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः'** ( २.४.५८ ) **इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्धधातुके वेदितव्यम् । वक्ष्यति—'हनो वध लिङि'** ( १.४.४२ ), **वध्यात् । आर्धधातुक**

**न्यासः**

**आर्धधातुके ॥ वध्यादिति** । आशिषि लिङ् । 'लिङाशिषि' इत्यार्धधातुकसंज्ञा । **हन्यादिति** । 'विधिनिमन्त्रण' इत्यादिना लिङ् । **विषयसप्तमी चेयमिति** । यदि परसप्तमी स्यात् तदा भव्यमित्यादि न सिद्धयति । तथा हि—हलन्तत्वादस्त्यादीनाम् 'ऋहलोर्ण्यत्' इति ण्यति कृते तस्मिन् परतः 'अस्तेर्भूः', 'अजेर्व्यघञपोः' 'चक्षिङः ख्याञ्' इत्येते आदेशाः स्युः । तत्र द्वयोर्वृद्धौ कृतायां तृतीयस्य युकि कृते भाव्यं प्रवेयमाख्याय्यमित्यनिष्टं रूपं स्यात् । विषयसप्तम्यां त्वस्यामार्द्धधातुकत्वे विवक्षिते प्रागेव प्रत्ययोत्पत्तेरादेशाः स्युः । ततोऽजन्तत्वाद् 'अचो यत्' इति यति 'ईद् यति' इतीत्त्वे कृते सर्वेषां गुणेऽस्त्यादेशस्य 'धातोस्तन्निमित्तस्यैव' इत्यवादेशे च भव्यं प्रवेयमाख्येयमिति सिद्धयति । तस्माद् विषयसप्तमीयम्, न परसप्तमी । कथं पुनर्विषयसप्तमीयं लभ्यते, यावता 'तस्मिन्निति

**पदमञ्जरी**

**आर्धधातुके ॥ वध्यादिति** । आशिषि लिङ्, 'लिङाशिषि' इत्यार्धधातुकसंज्ञा । **हन्यादिति** । विध्यादिलिङ् । **विषयसप्तमी चेयमिति** । सामान्यनिर्देशोऽयम् । तत्र व्यापित्वान्नित्यत्वाच्च न तेन सह देशकालकृतं पौर्वापर्यं सम्भवति, तस्माद्विषयसप्तमी । यदि तु व्यक्तिनिर्देशेन परसप्तमी स्यात्, भव्यमित्यादि न स्यात् । तथा हि—हलन्तत्वादस्त्यादीनाम् 'ऋहलोर्ण्यद्' इति ण्यति कृते तत्र परत आदेशैर्भाव्यम् । तत्र द्वयोर्वृद्धौ कृतायां तृतीयस्य च युकि—भाव्यम्, प्रवैयम्, आख्याय्यमिति प्रसज्येत । इह च 'ब्रुवो वचिः' ब्रुवोऽजन्तत्वाद्यति कृते वच्यादेशे च वच्यमिति प्राप्नोति, विषयसप्तम्यां तु नैष दोष इत्याह—**तेनेति । यथाप्राप्तमिति** । यो यतः प्राप्नोति स ततो

**भावबोधिनी**

[ इदं कुण्डम् आनय - यह कुण्ड लाओ । ] 'प्रक्षालय एनत्' । [ इसे धोकर साफ करो ] 'परिवर्त्तय एनत्' । [ इसे बदल दो । कुण्ड नपुंसकलिङ्ग है अतः यहाँ 'इदम्' का अन्वादेश 'एनत्' होता है । ]

यहाँ [ एन आदेश ] क्यों नहीं होता है—अयं दण्डः, हर अनेन ? [ यह डंडा है, इसके द्वारा पशु आदि को ले जाओ । ] 'एतम् आतं ङितं विद्यात्' ? [ इस 'आ' को ङित् समझो । ] जहाँ कुछ विधान करके दूसरे वाक्य से पुनः कुछ कहा जाता है वह अन्वादेश होता है । इन दोनों वाक्यों में तो वस्तुमात्र का निर्देश करके एक ही विधान किया गया है ।

[ 'अयं दण्डः' इस वाक्य से दण्ड की सत्ता मात्र का ज्ञान कराया जाता है, कोई विधान नहीं किया जाता है । 'हर अनेन' इस वाक्य से हरण क्रिया के प्रति दण्ड के करणभाव का निर्देश किया जाता है । इस लिये एक ही विधान है । 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः' यहाँ ईषदादि अर्थ वाले अकार का केवल निर्देश करके 'एतमातं ङितं विद्यात्' इससे वेदन क्रिया के प्रति आकारमात्र के कर्मत्व का ही विधान किया जाता है, अतः एक ही विधान है ।

जहाँ आदेश = कथन और अन्वादेश = अनुकथन होता है वहीं यह आदेश किया जाता है अतः प्रकृत में संभव नहीं है । ] ॥ ३४ ॥

'आर्धधातुक में यह अधिकार 'ण्यक्षत्रियार्षञितः' [ २.४.५७ ] इस सूत्र तक चलता है । यहाँ से आगे जिन्हें कहेंगे उन्हें आर्धधातुक के विषय में समझना चाहिये । आगे कहा जायगा—'लिङ् परे रहते हन का वध आदेश होता है' [ ३.४.११ ] उदा०—वध्यात् । [ हन् धातु से आशीर्लिङ् हन् + लिङ् = तिप् यासुट् = यास् आगम, 'लिङाशिषि' [ ३.४.११६ ] सूत्र से आर्धधातुक संज्ञा हो जाने से हन् का वध आदेश करने पर 'वध + यास् + ति' इकार सकार अकार का लोप हो जाने पर 'वध्यात्' बनता है । ] आर्धधातुक के विषय में—इस कथन का क्या फल है ? हन्यात् । [ यह विधिलिङ् का रूप है । यहाँ आर्धधातुक संज्ञा नहीं होती है अतः 'वध' आदेश नहीं होता है । ] यहाँ सूत्र में विषय अर्थ

**इति किम् ? हन्यात् । विषयसप्तमी चेयं न परसप्तमी । तेनार्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद् यथाप्राप्तं प्रत्यया भवन्ति—भव्यम्, प्रवेयम्, आख्येयम् ॥**

## ५७०. अदो जग्धिर्ल्यप्ति किति ॥ ३६ ॥ ( ३०८० )

**अदो जग्धिरादेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये । प्रजग्ध्य । विजग्ध्य । जग्धः ।**

**न्यासः**

निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानात् परसप्तम्येव न्याय्या, न विषयसप्तमी ? नैतदस्ति, 'आर्धधातुके' इति सामान्यनिर्देशात्, न च सामान्ये पौर्वापर्यमस्ति । बुद्ध्या पौर्वापर्यमस्तीति चेत् ? नैवम्, एवं हि गौरवं स्यात् । अथ वा–'अचो यत्' इत्यज्ग्रहणं ज्ञापकम्–विषयसप्तमीयमिति । **पश्चाद् यथाप्राप्तमित्यादि ।** आदेशेषु कृतेषूत्तरकालं यो यतः प्राप्नोति स ततो भवतीत्यर्थः ॥ ३५ ॥

**अदो जग्धिर्ल्यप्ति किति ।। प्रजग्ध्येति ।** 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा । 'कुगतिप्रादयः' इति समासः । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । **जग्ध इति ।** 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः । 'झलां जश् झशि' इति जश्त्वम्—धकारस्य दकारः । 'झरो झरि सवर्णे' इति लोपः । अथेह 'इदितो नुम् धातोः' इति नुम्

**पदमञ्जरी**

भवतीत्यर्थः । 'असिद्धवदत्राभात्' इत्यस्य भावाभावव्यवस्थार्थम् । अत्र चाङ्गाधिकारे च द्विरार्धधातुकाधिकारः क्रियते । यदि ह्येतेऽप्यादेशास्तत्रैव विधीरेयन्, जक्षतुः, अधिजगे, अध्यगीष्ट, बभूव, विव्यतुरिति घसाद्यादेशानामसिद्धत्वादुपधालोपाल्लोपे त्ववुग्यणो न स्युः । यदि त्वतोलोपादयोऽप्यत्र विधीयेरन्, गतः, गतवानित्यनुनासिकलोपस्यासिद्धत्वात् 'अतो लोपः' स्यादित्येषा दिक् ॥ ३५ ॥

**अदो जग्धिर्ल्यप्ति किति ॥** 'ल्यप्' इति पृथक् पदं लुप्तसप्तमीकम् । **इह पदद्वयापेक्षं समासमपेक्षमाणो** ल्यब्बहिरङ्गः, क्त्वाप्रत्ययमात्रापेक्षस्तु जग्ध्यादेशोऽन्तरङ्गः, तत्र क्त्वावस्थायामेव जग्धौ कृते प्रजग्ध्येति सिद्धम्, नार्थो ल्यब्ग्रहणेन । एवं तर्हि ल्यब्विषयेऽप्यन्तरङ्गत्वात्ति कितीत्येव सिद्धे जग्धौ ल्यबिति यदुच्यते तज्ज्ञापयति–

**भावबोधिनी**

में सप्तमी है [—आर्धधातुक के विषय में ], परसप्तमी नहीं है । इसके फलस्वरूप आर्धधातुक की विवक्षा में [ धातु के ] आदेश कर लेने पर बाद में यथाप्राप्त प्रत्यय होते हैं—भव्यम् [ अस्' धातु से आर्धधातुक प्रत्यय की विवक्षा में ही 'अस्तेर्भूः' २।४।५२ से 'अस्' का 'भू' आदेश करके 'यत्' प्रत्यय और गुण अवादेश करने पर रूप बनता है । ] प्रवेयम् [ 'अज्' धातु से आर्धधातुक प्रत्यय की विवक्षा में ही 'अजेर्व्यघञपोः' [ २।४।५६ ] सूत्र से 'वि' आदेश पहले हो जाने पर 'यत्' प्रत्यय, गुण, आदेश करने पर रूप बनता है । ] आख्येयम् । [ आङ् पूर्वक 'चक्षिङ्' धातु से आर्धधातुकविवक्षा में पहले 'चक्षिङः ख्याञ्' २।४।५४ सूत्र से 'ख्या' आदेश करने के बाद अजन्त मान कर यत्' प्रत्यय, आख्या + य, 'ईद्यति' सूत्र से 'आ' का 'ई' आदेश और 'ई' का 'ए' गुण करने पर 'आख्येयम्' रूप बनता है । यहाँ तीनों धातुओं से भाव अर्थ में प्रत्यय है । ] ।। ३५ ।।

'अद्' धातु का 'जग्धि' यह आदेश 'ल्यप्' परे रहते और तकारादि कित् प्रत्यय परे रहते होता है । [ यहाँ 'ल्यप्' यह लुप्तसप्तमीक स्वतन्त्र पद है । अतः 'ल्यप् परे रहते, यह अर्थ है । 'ति किति' यह अलग विशेष्यविशेषण है । ] उदाहरण—प्रजग्ध्य [ प्र पूर्वक अद् धातु से क्त्वा करने पर समास हो जाने से क्त्वा का ल्यप् हो जाता है तब प्रस्तुत सूत्र से 'अद्' का 'जग्धि' आदेश होता है । इसमें इकार उच्चारणार्थ होने से लुप्त हो जाता है—प्रजग्ध्य । अच्छी तरह खाकर ] विजग्ध्य [ वि अद् + क्त्वा, उपपद-समास क्त्वा का ल्यप्, अद् का जग्धि आदेश ]। जग्धः [ अद् + क्त = त, 'अद्' का 'जग्धि' आदेश, इकारलोप करने पर जग्ध् + त, 'झषस्तथोर्धोऽधः' इस सूत्र से 'त' का 'ध' जग्ध् + ध, 'झरो झरि सवर्णे' इस सूत्र से प्रथम 'ध्' का लोप होने के कारण एक ही 'ध्' का श्रवण होता है—जग्धः ।

**जग्धवान् । इकार उच्चारणार्थः, नानुबन्धः, तेन नुम्न भवति । एवं वच्यादीनामपि ।**

**इह कस्मान्न भवति – अन्नम् ? 'अन्नाणणः' ( ४.४.८५ ) इति निपातनात् ।**

**जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।**
**ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥ ( म० भा० २।४।३६ )**

**न्यासः**

कस्मान्न भवतीत्यत आह—**इकार उच्चारणार्थ इति ।** यथा—'अद भक्षणे' इत्यत्राकार उच्चारणार्थः, तथेहापीकारो वेदितव्यः । अथ ल्यब्ग्रहणं किमर्थम्, ति कितीत्येव सिद्धम् ? न सिध्यति, यस्मात् क्त्वाप्रत्ययस्य परत्वाल्लचबादेशः प्राप्नोति, नैतदस्ति, अन्तरङ्गत्वाज्जग्ध्यादेशेन भवितव्यम् । अन्तरङ्गत्वन्तु तस्यैकपदाश्रयत्वात् । ल्यबादेशस्य तु बहिरङ्गत्वम्, समासाश्रयत्वात्, समासस्य चानेकपदाश्रयत्वात् । एवं तर्हि—

जग्धौ सिद्धेऽन्तरङ्गत्वात् ति किति यल्ल्यबुच्यते ।
( तज् ) ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥ इति ।( म० भा २।४३६ )

तेन दधातेः, जहातेश्च संपूर्वाद्विपूर्वाच्च क्त्वाप्रत्यये कृते 'दघतिस्यतिमास्थामित्ति किति' इत्यतस्ति कितीत्यनुवर्त्तमाने 'दधातेर्हिः' 'जहातेश्च क्त्वि' इति हिरादेशो ल्यबादेशं बाधित्वा प्राप्तः । अस्मादेव ज्ञापकाल्ल्यपा बाधितत्वान्न भवति--संधाय, विहायेति । एवं निर्दाय दुर्दायेति 'दो दद् घोः' इति ददादेशो न भवति । प्रस्थायेत्यत्र

**पदमञ्जरी**

अन्तरङ्गाणामपि विधीनां [हिप्रभृतीनां] ल्यपा भवति बाधनम् (पुरु० परि० ५४) इति । विधाय, विहाय, प्रदाय, प्रखाय, प्रखन्य, प्रस्थाय, प्रकम्य, आपृच्छच, प्रदीव्य, प्रपठ्येत्येषु विधिषु 'दधातेर्हिः' 'जहातेश्च क्त्वि' 'दो दद् घोः' 'जनसनखनां सञ्झलोः' 'द्यतिस्यतिमास्थामित्ति किति' 'अनुनासिकस्य क्विझलोः क्ङिति' 'च्छ्वोः शूडनुनासिके च' 'आर्धधातुकस्येड्वलादेः' इत्येते विधयः क्त्वावस्थायामेव प्राप्ता बहिरङ्गेन ल्यपा बाध्यन्ते ।

**भावबोधिनी**

खाया--यह अर्थ है । ] जग्धवान् [ अद्+क्तवतु का रूप है । प्रक्रिया पूर्वोक्त है । ]

[ 'जग्धि' इसमें ] 'इ' उच्चारण के लिये है, अनुबन्ध नहीं है । इसलिये इदित् नहीं माना जाता है । ] अतः नुम् [ 'इदितो नुम् धातोः' सूत्र से ] नहीं होता है । इसी प्रकार 'वचि' आदि का भी 'इ' केवल उच्चारणार्थ है, [ अनुबन्ध नहीं है ] ।

यहाँ [ अद् का जग्धि आदेश ] क्यों नहीं होता है--अन्नम् ? [ क्योंकि अद् + क्त का रूप है । ] 'अन्नाणणः' (पा. सू. ४।४।८५) यह सूत्र निर्देश होने से निपातन के कारण नहीं होता है। [ भाव यह है कि पाणिनि ने 'अन्न' शब्द को मानकर 'ण' प्रत्यय-विधान किया है अतः यहाँ 'जग्धि' आदेश नहीं करना चाहिये । ]

[ उपपद समास करने पर ही 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इस सूत्र से क्त्वा का ल्यप् होता है । इस प्रकार दो पदों की अपेक्षा रखने वाला ल्यप् आदेश 'जग्धि' आदेश की अपेक्षा बहिरंग है क्योंकि 'जग्धि' को केवल 'क्त्वा' प्रत्यय की अपेक्षा होती है । अतः क्त्वा प्रत्यय के समय ही 'जग्धि' आदेश हो जायगा, 'प्रजग्ध्य' आदि रूप बन जायेंगे, इस सूत्र में 'ल्यप्' इसके ग्रहण की कोई आवश्यकता नहीं है ? इस प्रकार की शंका का समाधान करने के लिये भाष्य में उल्लिखित कारिका यहाँ भी उद्धृत की गयी है--- ]

'कित् 'त्' प्रत्यय पर रहते अन्तरंग होने से अद का जग्धि आदेश सिद्ध रहने पर जो 'ल्यप् परे रहते' यह कहा जाता है वह--अन्तरंग विधियों का भी [बहिरंग] ल्यप् से बाध होता है--[ अन्तरंगानपि विधीन् बहिरंगो ल्यप् बाधते--] को ज्ञापित करता है ।'

तीति किम् ? अद्यते । कितीति किम् ? अत्तव्यम् ॥

**न्यासः**

'द्यतिस्यतिमास्थामित्ति किति' इतीत्वं न भवति। प्रखन्य प्रखायेति 'जनसनखनां सञ्झलोः' इति नित्यमात्त्वं न भवति, 'ये विभाषा' इति विभाषैव भवति। तत्र हि 'विड्वनोरनुनासिकस्यात्' इत्यत आद्ग्रहणमनुवर्त्तते। प्रक्रम्य इति 'क्रमश्च क्त्वि' इति दीर्घत्वं न भवति। तत्र हि 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घग्रहणम्, 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यतो झल्ग्रहणं क्ङिति चानुवर्त्तते। आपृछ्च्येति 'च्छ्वोः शूडनुनासिके च' इति शकारो न भवति। प्रदीव्येत्यत्रानेनैव सूत्रेणोठ् न भवति। 'हलि च' इति दीर्घत्वम्। प्रपठय्येत्यत्र 'आर्द्धधातुकस्य' इतीड् न भवति॥ ३६॥

**पदमञ्जरी**

एष एवार्थः श्लोकान्तरेण **भाष्ये** कथितः—**जग्धिविधिर्ल्यपि यत्तदकरणम्**। अकरणं निष्प्रयोजनमित्यर्थः। **सिद्धमदस्ति कितीति विधानात्**। अदो = जग्धिविधानमित्यर्थः। ज्ञापकार्थं ल्यपि जग्धिविधानमित्याह—'**हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि।**' ल्यब्भरतीति, ल्यबादेशो हरति = व्यपनयति, बाधते इत्यर्थः। 'उ' इति निपातोऽवधारणे। तदेवास्य प्रयोजनमित्यर्थः॥ ३६॥

**भावबोधिनी**

[ अतः 'जग्धि' इस अन्तरंग आदेश के पहले ही ल्यप् हो जाता है तब 'कित् त्' प्रत्यय परे न रहने से जग्धि आदेश संभव नहीं है। इसलिये ल्यप् का ग्रहण किया गया है। ल्यप् परे भी 'जग्धि' आदेश होता ही है। इससे सभी लक्ष्य सिद्ध हो जाते हैं। ]

तकारादि प्रत्यय परे रहते [ ही यह जग्धि आदेश होता है ]—इसका क्या फल है ? अद्यते। [ अद् + लट् = त, कर्म अर्थ में यक् करने पर अद् + य + ते कित् आर्धधातुक परे होने पर भी तकारादि नहीं है। अतः यह आदेश नहीं होता है। ] ककार की इत्संज्ञा वाला प्रत्यय परे रहते—इसका क्या फल है ? अत्तव्यम्। [ अद् + तव्यत् यहाँ तकारादि तो है किन्तु कित् नहीं है। अतः यह आदेश नहीं होता है। ]

**विमर्श**—प्रस्तुत सूत्र के ल्यप्-ग्रहण की सार्थकता सिद्ध करने के लिये भाष्योक्त कारिका यहाँ प्रस्तुत है। भाष्यकार ने इस विषय में व्याघ्रभूति की यह कारिका भी उद्धृत की है—

"जग्धिविधिर्ल्यपि यत्तदकस्मात्सिद्धमदस्ति कितीति विधानात्।
हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि॥ [ म० भा० २।४।३६ ]

ऊपर कारिका की जो व्याख्या की गयी है, वही आशय इस कारिका का भी है। परन्तु काशिका में उद्धृत कारिका की व्याख्या करने की अपेक्षा न्यासकार ने भी इसे उद्धृत कर दिया है। अतः संभव है न्यासकार इसे मूल नहीं मानते हों। इस कारिका से यही ज्ञापित होता है कि ल्यप् बहिरंग होकर भी अन्तरंग शास्त्रों का बाध करके पहले होता है। फलतः क्त्वानिमित्तक कार्य नहीं होते हैं। इसलिये—'सन्धाय' आदि में 'दधातेर्हि' सूत्र से 'हि' आदेश, 'विहाय' आदि में 'जहातेश्च क्त्वि' सूत्र से 'हि' आदेश नहीं होता है। 'निर्दाय' आदि में 'दो दद् घोः' से 'दत्' आदेश, 'प्रस्थाय' आदि में 'द्यतिस्यतिमास्थामित्ति किति' से आ का ई, 'प्रखन्य,प्रखाय आदि में 'जनसनखनां सञ्झलोः' से नित्य आत्व न होकर 'ये विभाषा' सूत्र से वैकल्पिक होता है। 'प्रक्रम्य' आदि में 'क्रमश्च क्त्वि' से दीर्घ नहीं होता है। 'आपृच्छ्य' आदि में 'च्छ्वोः शूडनुनासिके च' इससे 'श्' नहीं होता है, 'प्रदीव्य' आदि में 'च्छ्वोः' इसी सूत्र से ऊठ् न होकर 'हलि च' से दीर्घ होता है। 'प्रपठ्य' आदि में 'आर्धधातुकस्येड्वलादेः' इससे इट् नहीं होता है इसका निष्कर्ष सिद्धान्तकौमुदी में लिखा है—"अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' जग्धिविधौ ल्यब्ग्रहणात्। तेन—हित्व-दत्त्वाऽऽत्त्वेत्त्वदीर्घत्वशूडिटो ल्यपि न।" 'वा ल्यपि' ६।४।४८ पर सि० कौ०॥ ३६॥

## ५७१. लुङ्सनोर्घस्लृ ॥ ३७ ॥ (२४२७)

**लुङि सनि च परतोऽदो घस्लृ आदेशो भवति । लृदित्करणमङर्थम् । लुङि—अघसत् । अघसताम् । अघसन् । सनि–जिघत्सति । जिघत्सतः । जिघत्सन्ति ।**

**❀ घस्लृभावेऽच्युपसंख्यानम् ❀ ( म० भा० २.४.३७ वा० १) । प्रात्तीति प्रघसः ॥**

## ५७२. घञपोश्च ॥ ३८ ॥ (३२३६)

**घञि अपि च परतोऽदो घस्लृ आदेशो भवति । घासः । प्रघसः । 'उपसर्गेऽदः' ( ३.३.५९ ) इत्यप् ॥**

**न्यासः**

**लुङ्सनोर्घस्लृ** ॥ **अघसदिति** । लृदित्त्वात् पुषादिसूत्रेण च्लेरङादेशः । **जिघत्सतीति** 'सः स्यार्द्धधातुके' इति सकारस्य तकारः ।

**घस्लृभावेऽच्युपसंख्यानमिति** । घस्लृभावे कर्त्तव्येऽचि तस्योपसंख्यानम् = प्रतिपादनं कर्त्तव्यमित्यर्थः । तत्रेदं प्रतिपादनम्—उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन घस्लृभावोऽच्यपि भवति । **प्रघस इति ।** पचाद्यच् ॥ ३७ ॥

**घञपोश्च** ॥ **घास इति** भावे घञ् । **प्रघस इति** 'उपसर्गेऽदः' इत्यप् । लुङ्सन्घञप्सु 'घस्लृ' इत्येकयोगे कर्त्तव्ये योगविभागो वैचित्र्यार्थः ॥ ३८ ॥

**पदमञ्जरी**

**लुङ्सनोर्घस्लृ** ॥ ननु 'सृघस्यदः क्मरच्' इति वचनाद् घसिः प्रकृत्यन्तरमस्ति ? सत्यम्, अदेरात्सीद् अत्सिषतीत्यनिष्टं रूपं मा भूदिति योगारम्भः । **प्रात्तीति प्रघस इति** । पचाद्यच् । अस्यापि सूत्रवदेव प्रयोजनम् ॥ ३७॥३८ ॥

**भावबोधिनी**

लुङ् तथा सन् परे रहते 'अद्' का 'घस्लृ' आदेश होता है । 'घस्लृ' को 'लृ' की इत्संज्ञावाला करना [ 'पुषादि-द्युतादि' सूत्र से च्लि का ] 'अङ्' करने के लिये है । लुङ् परे रहते का उदा० अघसत् । [ अद्+लुङ्=तिप्, प्रकृत सूत्र से 'घस्लृ' आदेश, 'लृ' की इत्संज्ञालोप, हलादि हो जाने से 'अट्' आगम—अघस्+ति, 'च्लि' का 'अङ्' आदेश, 'इतश्च' से इकार का लोप करने पर 'अघस त्' बनता है । ] अघसताम् । [ यह लुङ् प्रथम पुरुष द्विवचन का रूप है । 'तस्' का 'ताम्' आदेश होता है । शेष प्रक्रिया पूर्ववत् है । ] अघसन् । [ यह बहुवचन का रूप है । अद् का घस्लृ करने पर अघस् + झि - अन्ति, अङ्, 'अघसन्ति' इ का लोप और 'त्' का संयोगान्तलोप होता है । ] सन् परे रहते का उदा०—जिघत्सति । [ अत्तुम् इच्छति—इस अर्थ में अद् + सन् घस्लृ आदेश घस् + स, 'सन्यङोः' सूत्र से धातु का द्वित्व, अभ्यास-सम्बन्धी कार्य हो जाने पर जघस् + स, 'सन्यतः' सूत्र से अभ्यास 'अ' का 'इ' तथा 'सस्यार्धधातुके' सूत्र से प्रथम 'स्' का 'त्' करने पर 'जिघत्स' बना है । इसी से लट् लकार प्रथमपुरुष एकवचन का रूप है । द्विवचन और बहुवचन के रूप आगे हैं— ] जिघत्सतः, जिघत्सन्ति ।

*घस्लृभाव करने पर अच् परे रहते भी यह आदेश कहना चाहिये । *उदा०—प्रात्तीति प्रघसः । [ प्रपूर्वक 'अद्' धातु से कर्ता अर्थ में 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' सूत्र से 'अच्' प्रत्यय करने पर प्रस्तुत वार्तिक से 'घस्लृ' आदेश होने से यह रूप बना है प्रघस् + अ । ] ॥ ३७ ॥

घञ् तथा अप् प्रत्यय परे रहते भी 'अद्' का घस्लृ आदेश होता है । उदा०—घासः ['अद्' धातु से भाव अर्थ में घञ्=अ प्रत्यय करने पर प्रस्तुत सूत्र से घस्लृ आदेश हो जाता है—घस् + अ, जित् होने से उपधा की वृद्धि होती है । ]

## ५७३. बहुलं छन्दसि ॥ ३९ ॥ (३३९८)

**छन्दसि विषये बहुलमदो घस्लृ आदेशो भवति। घस्तान्नूनम् ( वा० सं० २१.४३ )। सग्धिश्च[1] मे ( वा० सं० १८.९ )। न च भवति-- आत्तामद्य मध्यतो मेद उद्भृतम् ( वा० सं० ११.४३ )।**

**अन्यतरस्यांग्रहणमेव कस्मान्न क्रियते, तदेवोत्तरार्थमपि भविष्यति ? कार्यान्तरार्थं बहुलग्रहणम्। घस्तामित्यत्रोपधालोपो न भवति ॥**

### न्यासः

**बहुलं छन्दसि ॥ घस्तामिति।** लङ्, तसस्ताम्, आदादिकत्वाच्छपो लुक्। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः। अथ वा लुङ्युदाहरणमेतत्। 'मन्त्रे घसह्वर' इत्यादिना च्लेर्लुक्। **सग्धिरिति।** स्त्रियां क्तिन्। 'घसिभसोर्हलि च' इत्युपधालोपः। 'झलो झलि' इति सकारलोपः। अथ तु सिचोऽनेन लोपो विधीयते तदा च्छान्दसो वर्णलोपो द्रष्टव्यः--यथा इष्कर्त्तारमध्वर इति। पूर्ववत् तकारस्य धकारः। धकारस्य जश्त्वम्। समाना ग्धिरिति 'पूर्वापरप्रथम' इत्यादिना समासः, 'समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु' इति सभावः। **आत्तामिति।** 'झलो झलि' इति सिचो लोपः। तसस्ताम्। 'खरि च' इति दकारस्य तकारः। अथ वा लङ्युदाहरणमेतत्। अथ बहुलग्रहणं किमर्थम्, 'अन्यतरस्यांग्रहणमेव कस्मान्न क्रियते इत्युक्ते कः पुनरेवं सति गुणे भवतीति पर्यनुयोगमाशङ्क्याह--**तदेवोत्तरार्थमपि भविष्यतीति।** एतेनेहान्यतरस्यांग्रहणे सत्युत्तरसूत्रेऽन्यतरस्यांग्रहणं न कर्त्तव्यं

### पदमञ्जरी

**बहुलं छन्दसि ॥ घस्तामिति।** लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। **सग्धिरिति।** 'घसिभसोः' इत्युपधालोपः, 'झलो झलि', समाना ग्धिरिति 'समानस्य छन्दसि' इति सभावः। **अन्यतरस्यांग्रहणमेव कस्मान्न क्रियत इति।** कः पुनरेवं सति गुण इत्याह--**तदेवेति**। प्रकृत्यन्तरस्य सद्भावादस्य प्रयोजनं मृग्यम् ॥ ३९ ॥

### भावबोधिनी

प्रघसः [ यहाँ 'प्र' उपसर्गपूर्वक 'अद्' से ] 'उपसर्गेऽदः' सूत्र से 'अप्' [ प्रत्यय करने पर प्रस्तुत सूत्र से 'घस्लृ' आदेश होता है। प्रघस् + अ, 'प्रघसः' ] होता है ॥ ३८ ॥

वेदविषय में बहुलरूप से अद् का घस्लृ होता है। उदा० घस्ताम् नूनम् [ अद् + लुङ् तस्-ताम्, अद् का घस्लृ आदेश, घस् + च्लि + ताम्' 'मन्त्रे घसह्वर'' इत्यादि सूत्र से 'च्लि' का लुक्, 'बहुलं छन्दस्यमाङ्योगेऽपि' इसके अनुसार अट् का अभाव--घस्ताम् + नूनम् में अनुस्वार तथा परसवर्ण हो जाने से 'घस्तान्नूनम्' यह बना है।

न्यासकार ने इसे लङ् का भी रूप माना है और अदादिगणीय होने से शप् का लुक् किया है। ]

और यह आदेश नहीं भी होता है--आत्तामद्य मध्यतो मेद उद्भृतम्'। [ अद् · लुङ् तस् ताम्, आट् आगम, शेष पूर्ववत्। यहाँ 'घस्लृ' नहीं होता है। ]

[ 'बहुलम्' के स्थान पर ] 'अन्यतरस्याम्' इसका ही ग्रहण क्यों नहीं कर दिया जाता, और यही अगले सूत्र के लिये भी हो जायगा ? [ ये दो लाभ हैं। इसका उत्तर दे रहे हैं--] अन्य कार्य के लिये 'बहुल' का ग्रहण है। 'घस्ताम्' इसमें [ 'घसिभसोर्हलि च' इस सूत्र से प्राप्त ] उपधा का लोप [ बहुलग्रहण के बल से ] नहीं होता है ॥ ३९ ॥

---

१. 'सग्धिः स्त्री सहभोजनम्' ( अमरकोशः २।९।५५ )।

**५७४. लिट्यन्यतरस्याम् ॥ ४० ॥ (२४२४)**

**लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति । जघास, जक्षतुः, जक्षुः । आद, आदतु, आदुः ॥**

**५७५. वेञो वयिः ॥ ४१ ॥ (२४११)**

**'लिट्यन्यतरस्याम्' इति वर्त्तते । वेञो वयिरादेशो भवति अन्यतरस्यां लिटि परतः । इकार उच्चार-**

**न्यासः**

भवतीतीमं गुणं दर्शयति । तर्हीहैवान्यतरस्यांग्रहणमुत्तरसूत्रेऽनुवर्त्तिष्यते । यदि पुनरुत्तरसूत्रे बहुलग्रहणमनुवर्तेत तदा किं स्यात् ? अन्यदपि किञ्चित् कार्यं भवतीत्याशङ्क्येत । क्वचिदन्यदेवेत्येषोऽप्यर्थो हि बहुलग्रहणस्याभीष्ट एव । **घस्तामित्यत्रोपधालोपो न भवतीति** । 'घसिभसोर्हलि च' इति प्राप्तः । स बहुलग्रहणान्न भवति ॥ ३९ ॥

**लिट्यन्यतरस्याम् ॥ लिटि परत इति ।** ननु च 'आर्धधातुके' इति वर्त्तते, 'आर्धधातुके' इति च विषयसप्तमीयमित्युक्तम्, तदयुक्तं लिटि परत इति वचनम् ? नेदमयुक्तम्, आर्धधातुकशब्दस्यार्धधातुकत्वमनेकप्रत्ययसाधारणं सामान्यमर्थः, तेन च पौर्वापर्यं न सम्भवति । तद्धि देशतो वा भवति कालतो वा, सामान्यस्य चादेशत्वात् कालत्वान्नित्यत्वाच्च तेन सह देशकृतं कालकृतञ्च पौर्वापर्यं नोपपद्यते, अतो युक्ता 'आर्धधातुके' इति विषयसप्तमी । इह तु 'लिटि' इत्यार्धधातुक उपात्तः, सम्भवति चानेन पौर्वापर्यम् । किञ्च—लिटि परभूते घस्लृ-आदेशे विधीयमाने न किञ्चिदनिष्टमापद्यते । तस्मात् परसप्तम्येवैषा युक्ता । **जक्षतुरिति** । 'गमहन' इत्यादिनोपधालोपः, 'शासिवसिघसीनाञ्च' इति षत्वम्, 'खरि च' इति चर्त्वम् । **आद, आदतुः, आदुरिति** । 'अत आदेः' इत्यभ्यासस्य दीर्घः । ननु च 'घस्लृ अदने' इत्येतस्य जघास, जक्षतुः, जक्षुरिति भविष्यति, 'अद भक्षणे' इत्यस्य आद, आदतुः, आदुरिति, अस्ति घसिः प्रकृत्यन्तरम्, 'सृघस्यदः क्मरच्' इति क्मरज्विधानात्, तत् कथमिह लिटि विकल्पविधानम् ? घसेः प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थम् । तेन तस्य सार्वधातुक आर्धधातुके च यत्र लिङ्गं नास्ति वचनञ्च, तत्र प्रयोगो न भवति ॥ ४० ॥

**वेञो वयिः ॥ इकार उच्चारणार्थ इति ।** नानुबन्धः । तेन नुम् न भवतीति भावः । **उवायेति** । 'लिट्य-**

**पदमञ्जरी**

**लिट्यन्यतरस्याम् ॥** प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थमिदम् । तेन यत्र लिङ्गं वचनं वा नास्ति, तत्र तस्य प्रयोगो न भवति । तत्र लृदित्करणं लुङि प्रयोगस्य लिङ्गम्, घसिश्च सान्तेष्विव्यनुदात्तपाठो वलादावार्द्ध-

**भावबोधिनी**

लिट् परे रहते 'अद्' का विकल्प से 'घस्लृ' आदेश होता है । [ अद् + लिट् = तिप्, 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' सूत्र से तिप् आदि के णल् आदि नौ आदेश होते है' । प्रस्तुत सूत्र विकल्प से घस्लृ आदेश करता है अतः दो रूप होते है—यही लिखते हैं— ] उदा० जघास [ अद् + लिट् = तिप् = णल् = अ, विकल्प से घस्लृ आदेश, द्वित्व, घस् + अ, हलादिशेष, घघस् + अ, जस्त्व तथा उपधा की वृद्धि करने पर जघास यह बनता है । ] जक्षतुः, जक्षुः । [ अद् + लिट् = तस् = अतुस्, द्वित्व तथा अभ्याससम्बन्धी कार्य करने पर जघस् + अतुस् । यहाँ 'गमहनजनखन = घसां लोपः क्ङित्यनङि' सूत्र से उपधा का लोप करने पर जघ्स् + अतुस्, ''शासिवसिघसीनां च' सूत्र से 'स्' का 'ष्' तथा 'खरि च' सूत्र से 'घ्' का चर्त्व 'क्' करने पर 'जक्ष् + अतुस्' यहाँ क् + ष् संयोग में 'क्ष्' होने पर और स् का रुत्व विसर्ग करने पर 'जक्षतुः' बना है । बहुवचन में अद् + लिट् = झि = उस्, तथा 'घस्' आदेश आदि सभी पूर्वोक्त प्रक्रिया होती है । यह 'घस्लृ' वैकल्पिक है अतः पक्ष में 'अद्' को मानकर भी रूप बनते हैं—] आद, आदतुः, आदुः । [ अद् + लिट् = तिप् = णल् = अ, द्वित्वादि करने पर एकवचन, द्विवचन तथा बहुवचन के रूप हैं ] ॥ ४० ॥

'लिट् परे रहते विकल्प होता है'—इसकी अनुवृत्ति होती है । लिट् परे रहते 'वेञ्' धातु का 'वयि' आदेश

**णार्थः। उवाय, ऊयतुः, ऊयुः। पक्षे--ऊवतुः, ऊवुः। 'लिटि वयो यः' ( ६.१.३८ ) इति यकारस्य सम्प्रसारणं प्रतिषिध्यते। 'वश्चास्यान्यतरस्यां किति' ( ६.१.३९ ) इति वकारो विधीयते। ववौ ववतुः, ववुः। 'वेञः' ( ६. १ ४० ) इति संप्रसारणं न भवति॥**

**न्यासः**

भ्यासस्योभयेषाम्' इति संप्रसारणम्। ऊयतुः, ऊयुरित्यत्रापि ग्रह्यादिसूत्रेण संप्रसारणम्। अथ यकारस्य संप्रसारणं कस्मान्न भवतीत्याह—**लिटि वयो य इत्यादि। वेञ इति संप्रसारणं न भवतीति।** वच्यादिसूत्रेण प्राप्तम् 'वेञः' इति प्रतिषेधान्न भवति। तत्र हि 'न संप्रसारणे संप्रसारणम्' इत्यतो नेति वर्त्तते। उवाय इत्यादि रूपं वयेरात्मनेपदित्वान्न सिद्ध्यतीति सूत्रारम्भः॥ ४१॥

**पदमञ्जरी**

धातुके, 'सृघस्यदः क्मरच्' इति वचनं क्मरचि। भूवादौ परस्मैपदिषु पाठात्परस्मैपदे प्रयोगः॥ ४०॥४१॥

**भावबोधिनी**

विकल्प से होता है। [ आदेश का ] 'इ' उच्चारणार्थ है। [ अनुबन्ध नहीं है। अतः 'इदितो नुम् धातोः' सूत्र से नुम् नहीं होता है। ] उदा०—उवाय, ऊयतुः, ऊयुः। पक्ष में--[ उवाय ], ऊवतुः, ऊवुः ये रूप होते हैं। [ वेञ् + लिट् = तिप् = णल् = अ, 'वे' का 'वय्' करने पर वय् + अ, द्वित्व और हलादिशेष करने पर ववय् + अ, 'लिट्यभ्यासस्योभयेषाम्' इससे अभ्यास [ प्रथम ] व् का सम्प्रसारण 'उ' तथा 'अ' का पूर्वरूप करने पर उवय् + अ, यहाँ उपधावृद्धि करने पर 'उवाय' यह रूप बनता है। जब 'वे' का 'वय्' आदेश नहीं होता है तब भी यही 'उवाय' रूप बनता है—वे + णल् अ, द्वित्व वे वे + अ, अभ्यास के 'व' का सम्प्रसारण तथा 'इ' का पूर्वरूप करने पर उवे + अ, "अचो ञ्णिति" सूत्र से 'ए' की 'ऐ' वृद्धि करने पर उवै + अ, यहाँ 'ऐ' का आय् करने पर—उवाय ऐसा ही रूप बनता है। इसीलिये पाक्षिक रूपों में एकवचन का रूप नहीं लिखा गया। ] द्विवचन में वे + लिट् = तस् = अतुस्, 'वे' का वय् करने पर 'वय् + अतुस्' यहाँ 'ग्रहिज्यावयिव्यधि' ( ६।१।१६ ) सूत्र से 'व्' का सम्प्रसारण और 'अ' का पूर्वरूप करने पर उय् + अतुस् बनाकर द्वित्व, हलादिशेष और दीर्घ करने पर ऊय् + अतुस् = ऊयतुः बनता है। बहुवचन में ऊय् + लिट् = झि = उस् 'ऊयुः' रूप बनता है।

'वय्' आदेश करने पर 'वश्चास्यान्यतरस्याम् (६।१।३९) सूत्र से विकल्प से 'य्' का 'व्' होता है—वव् + अतुस्, प्रथम 'व्' का सम्प्रसारण, 'अ' का पूर्वरूप उव् + अतुस्, द्वित्वादि करने पर उ उव् + अतुस् दीर्घ और 'स्' का विसर्ग करने पर रूप सिद्ध होता है।

जब प्रस्तुत सूत्र 'वे' का 'वय्' आदेश नहीं करता है तब वे + लिट् = तिप् = णल् = अ यहाँ प्राप्त सम्प्रसारण का निषेध 'वेञः' (६।१।४०) सूत्र से होता है। तब 'आदेच उपदेशेऽशिति' सूत्र से 'ए' का आत्व करने पर 'वा + अ, द्वित्व आदि करने के बाद 'आत औ णलः' सूत्र से 'णल्' का 'औ' करने पर ववा + औ, वृद्धि—ववौ। द्विवचन में ववा + अतुस् 'आतो लोप इटि च' इससे 'आ' का लोप करने पर वव् + अतुस् = ववतुः बहुवचन में ववुः ये रूप होते है। ]

जब 'वे' का 'वय्' होता है तब 'व' के सम्प्रसारण के बाद 'य्' का भी सम्प्रसारण प्राप्त होता है उसका निषेध 'लिटि वयो यः' [ ६।१।३८ लिट् परे रहते 'वय्' के 'य्' का सम्प्रसारण नहीं होता है ] सूत्र से हो जाता है और 'वश्चास्यान्यतरस्यां किति' [ ६।१।३९ 'वय्' के 'य्' का 'व्' विकल्प से होता है कित् लिट् परे रहते ] सूत्र से 'य्' का वैकल्पिक 'व्' करने पर वव् + अतुस् मानकर प्रथम 'व' का "वेञः" सूत्र से सम्प्रसारणादि निषेध करके रूप बनते हैं।

**विमर्श**—'वेञ्' यह उभयपदी धातु है। इसके परस्मैपद लिट् में तीन प्रकार के रूप होते है क्योंकि इसमें दो आदेश वैकल्पिक हैं—(१) वेञ् का 'वय्' करने पर 'व्' का सम्प्रसारण होने पर और 'य्' का सम्प्रसारणनिषेध करके

**५७६. हनो वध लिङि ॥ ४२ ॥ (२४३३)**

**हन्तेर्धातोर्वध इत्ययमादेशो भवति लिङि परत आर्धधातुके। वध्यात्, वध्यास्ताम्, वध्यासुः। अकारान्तश्चायमादेशः, तत्राकारस्य लोपो भवति ( ६.४.४८ )। तस्य स्थानिवद्भावाद् अवधीदिति हलन्तलक्षणा वृद्धिः ( ७.२.३ ) न भवति ॥**

**५७७. लुङि च ॥ ४३ ॥ (२४३४)**

**न्यासः**

**हनो वध लिङि ॥ अकारान्तश्चायमादेश इति**। कुत एतत् ? शैलीयमाचार्यस्य यत्रेह प्रकरणे व्यञ्जनान्त आदेशः, तत्रोच्चारणार्थमिकारं करोति, यथा—जग्धिरित्यादौ। तस्मादिकारान्ताकरणादकारान्तोऽयमादेश इति विज्ञायते। **हलन्तलक्षणेति**। 'वदव्रजहलन्तस्याचः' इत्यनेन या वृद्धिर्विधीयते सा हलन्तलक्षणा ॥ ४२ ॥

**लुङि च ॥ आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूदिति**। अनेन योगविभागस्योत्तरार्थतां ...।

**पदमञ्जरी**

**हनो वध लिङि । अकारान्तश्चायमादेश इति**। कुत एतत् ? शैलीयमाचार्यस्य यत्र व्यञ्जनान्त आदेशस्तत्रेकारमुच्चारयति, यथा जग्ध्यादौ। तस्मादिकाराकरणादकारान्तोऽयमादेशः। **हलन्तलक्षणा वृद्धिर्न भवतीति**। उत्तरसूत्रेण वधादेशे कृत इति भावः ॥ ४२॥४३ ॥

**भावबोधिनी**

कित् प्रत्यय में उसका वैकल्पिक 'व्' आदेश करने पर वव्+अतुस् प्रथम 'व्' का सम्प्रसारण 'उ' करके दीर्घ आदि करने पर ऊवतुः, ऊवुः आदि रूप बनते हैं।

२) जब 'वय्' के 'य्' का 'व्' नहीं होता है तब वय्+अतुस् में 'व्' का सम्प्रसारणादि करने पर ऊयतुः, ऊयुः आदि रूप होते हैं।

(३) जब 'वेञ्' का 'वय्' आदेश नहीं होता है तब वे+लिट्=तिप् णल्=अ—यहाँ 'वेञः' ६।१।४० सूत्र से सम्प्रसारण का निषेध हो जाने पर 'ए' का आत्व करके वा+अ, णल्=अ का औ तथा द्वित्वादि करने पर ववौ, द्विवचन आदि में 'आ' का लोप करने पर वव्+अतुस्=ववतुः आदि रूप बनते हैं।

(१) स्थानिवद्भाव से ञित्त्व मानकर 'वय्' आदेशपक्ष में भी आत्मनेपद होने से—ऊये, ऊयाते।

(२) वकारादेश पक्ष में—ऊवे, ऊवाते।

(३) 'वय्' आदेशाभावपक्ष में—ववे, ववाते आदि रूप समझने चाहिये। इस विषय में विस्तृत ज्ञान के लिये सिद्धान्तकौमुदी तथा माधवीय धातुवृत्ति आदि में 'वेञ्' धातु का विचार देखा जा सकता है ॥ ४१ ॥

आर्धधातुक लिङ् परे रहते 'हन्' का 'वध' यह आदेश होता है। उदा०—वध्यात् वध्यास्ताम्, वध्यासुः [ हन्+लिङ् आशीः, तिप्, 'लिङाशिषि' (३।४।११६) से आशीर्लिङ् आर्धधातुक हो जाने से हन् का वध आदेश वध+ति, यासुट्—यास् आगम आदि करने पर रूप बनता है। बहुवचन में 'झेर्जुस्' सूत्र से 'झि' का जुस्=उस् होता है। ]

यह 'वध' आदेश अकारान्त है, इस अकार का लोप [ 'अतो लोपः' ६।४।४८ सूत्र से ] होता है। इस लुप्त 'अ' का स्थानिवद्भाव होने के कारण 'अवधीत्' यहाँ [ 'वदव्रजहलन्तस्याचः' इससे ] हलन्त मानकर होने वाली वृद्धि नहीं होती है। [अकार उच्चारणार्थ नहीं है अपि तु इत्संज्ञा और लोप होता है इसमें आचार्य पाणिनि की शैली ही प्रमाण है क्योंकि जहाँ व्यंजनान्त आदेश अभीष्ट होता है वहाँ इकार लगाया जाता है जैसा कि 'जग्धि' आदि में है।]॥ ४२ ॥

और लुङ् परे रहते भी 'हन्' का 'वध' यह आदेश होता है। उदा०—अवधीत् अवधिष्टाम् अवधिषुः। [ हन्+लुङ्=तिप्, प्रकृत सूत्र से हन् का 'वध' आदेश अट् आगम, च्लि, च्लि का सिच्=स्, इट् 'इ' का लोप, ईट् आगम—

**लुङि च परतो हनो वध इत्ययमादेशो भवति। अवधीत्, अवधिष्टाम्। अवधिषुः।**
**योगविभाग उत्तरार्थः--आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूत्॥**

**५७८. आत्मनेपदेष्वन्यतरस्याम्॥ ४४॥ (२६९६)**

**पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति। आवधिष्ट। आवधिषाताम्। आवधिषत। न च भवति--आहत। आहसाताम्। आहसत॥**

**५७९. इणो गा लुङि॥ ४५॥ (२४२८)**

**न्यासः**

दर्शयति। एकयोगे हि सति लिङोऽप्युत्तरत्रानुवृत्तेस्तत्राप्यात्मनेपदेषु विकल्पः स्यात्॥ ४३॥

**आत्मनेपदेष्वन्यतरस्याम्॥ आवधिष्टेति।** 'आङो यमहनः' इत्यात्मनेपदम्। **आवधिषतेति।** 'आत्मनेपदेष्वनतः' इत्यदादेशः। **आहतेति।** 'हनः सिच्' इति कित्त्वम्, 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपः, 'ह्रस्वादङ्गात्' इति सिचो लोपः॥ ४४॥

**इणो गा लुङि॥ अगादिति।** 'गातिस्था' इत्यादिना सिचो लुक्। **अगुरिति।** 'आतः' इति झेर्जुस्, 'उस्यपदान्तात्' इति पररूपत्वम्। **लुङीति वर्त्तमाने इत्यादि।** 'लुङि च' इत्यतो लुङ्ग्रहणेऽनुवर्तमाने यत्पुनः

**पदमञ्जरी**

**आत्मनेपदेष्वन्यतरस्याम्॥ आहसतेति।** 'आङो यमहनः' इत्यात्मनेपदम्। 'आत्मनेपदेष्वनतः,' 'हनः सिच्' इति सिचः कित्त्वात् 'अनुदात्तोपदेश' इत्यनुनासिकलोपः॥ ४४॥

**इणो गा लुङि॥ अगुरिति।** 'गातिस्था' इति सिचो लुक्, 'आतः' इति झेर्जुस्, 'उस्यपदान्तात्'।

**भावबोधिनी**

अवध + इ स् ईत्, धातु के अ का लोप, 'इट ईटि' सूत्र से सिच् का लोप सवर्णदीर्घ करने पर अवध्ईत्=अवधीत्। द्विवचन में अवध् इस् + तस्=ताम्, षत्व, ष्टुत्व करने पर अवधिष्टाम्। बहुवचन में अवध् इस् + झि, 'सिजभ्यस्तविदिभ्यश्च' (३।४।१०९) से झि का जुस्=उस्, स् का रुत्व विसर्ग, सिच् के 'स्' का 'ष'—अवधिषुः।

[ 'हनो वध लिङि लुङि च' ऐसा एक सूत्र न बना कर ] योगविभाग अर्थात् दूसरा सूत्र उत्तरवर्त्ती में अनुवृत्ति के लिये है—जिससे आत्मनेपद में लुङ् में ही विकल्प हो, लिङ् में न हो। ४३॥

पूर्ववर्ती सूत्र से नित्य वध आदेश प्राप्त रहने पर यह विकल्प कहा जा रहा है। आत्मनेपद प्रत्यय परे रहते लुङ् में हन् का 'वध' यह आदेश विकल्प से होता है। उदाहरण आवधिष्ट, आवधिषाताम्, आवधिषत। [ आङ् पूर्वक हन् धातु से 'आङो यमहनः' १।३।२८ सूत्र से आत्मनेपद होने पर प्रस्तुत सूत्र विकल्प से 'वध' आदेश करता है लुङ् में, आहन् + लुङ् = त, वध आदेश आवध+त, अट्, सिच्, इट्, आ अ वध इ स् त, धातु के अ का लोप, स् का षत्व, ष्टुत्व आ + अ दीर्घ आवधिष्ट। द्विवचन में आवधिष + आताम्। बहुवचन में आवधिष् + झि, 'आत्मनेपदेष्वनतः' इस सूत्र से झ् का 'अत्' करने पर आवधिष् अत् अ = आवधिषत। ]

और यह वध आदेश नहीं होता है [आ अ हन् + लुङ् = त, सिच्, 'हनः सिच्' सूत्र से कित् मान कर "अनुदात्तोपदेश०" इत्यादि सूत्र से 'न्' का लोप करने पर आह स् त, 'ह्रस्वादङ्गात्' सूत्र से सिच् का लोप होने पर ] आहत। [ द्विवचन आदि में सिच् लोप न होने से ] आहसाताम् आहसत—[ आदि रूप बनाते हैं। ]॥ ४४।

लुङ् परे रहते इण् धातु का 'गा' यह आदेश होता है। उदाहरण अगात्, अगाताम्, अगुः। गत्यर्थक इण् से लुङ् करने पर प्रस्तुत सूत्र 'गा' आदेश कर देता है—गा · लुङ् = ति, अट्, सिच्, इ का लोप अ गा स् + त्, "गाति-

**इणः 'गा' इत्ययमादेशो भवति लुङि परतः । अगात्, अगाताम्, अगुः । 'लुङि' इति वर्त्तमाने पुनर्लुङ्-ग्रहणम् 'आत्मनेपदेष्वन्यतरस्याम्' ( २.४.४४ ) इत्येतन्मा भूत् । इह त्वविशेषेण नित्यं च भवति । अगात् । अगायि भवता ।**

*** इणवदिक इति वक्तव्यम् * ( म० भा० २.४.४५१ ) अध्यगात् । अध्यगाताम् । अध्यगुः ॥**

## ५८०. णौ गमिरबोधने ॥ ४६ ॥ (२६०७)

**णौ परत इणोऽबोधनार्थस्य गमिरादेशो भवति । इकार उच्चारणार्थः । गमयति, गमयतः, गमयन्ति ।**

**न्यासः**

लुङ्ग्रहणं कृतं तस्यैतत्प्रयोजनम्—परस्मैपदेष्वपि यथा स्यात् । नित्यञ्चात्मनेपदेषु । एतेनैतद् दर्शयति—पूर्वकं हि लुङ्ग्रहणमात्मनेपदग्रहणेनान्यतरस्यांग्रहणेन च सम्बद्धम्, अतस्तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यात् । तथा चात्मनेपदेष्वेव विकल्पेनादेशः स्यात् । तस्मादविशेषेण, नित्यञ्च यथा स्यादित्येवमर्थं पुनर्लुङ्ग्रहणं क्रियते । **अगायीति ।** 'चिण् भावकर्मणोः' इति चिण् । 'आतो युक् चिण्कृतोः' इति युक् । 'चिणो लुक्' इति तकारस्य लुक् ।

**इणवदिक इति वक्तव्यमिति ।** यथेणो गादेशो लुङि भवति, तथा 'इक् स्मरणे' इत्यस्यापि भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'बहुलं छन्दसि' इत्यतो बहुलग्रहणमनुवर्तते मण्डूकप्लुतिन्यायेन । तेनेकोऽपि लुङि गादेशो भविष्यतीति ॥ ४५ ॥

**णौ गमिरबोधने ॥ गमयतीति ।** 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद् ह्रस्वत्वम् ॥ ४६ ।

**पदमञ्जरी**

**इणवदिक इति वक्तव्यमिति ।** यद्यस्यैवायं प्रकरणस्य शेषः स्यात् 'इणिकोर्गा लुङि—इति सूत्रन्यासः कर्तव्यः'

**भावबोधिनी**

स्याघुपाभूभ्यः सिचः परस्मैपदेषु' २।४।७७ से सिच् का लुक् करने पर—अगात् । द्विवचन में तस् का ताम् होने पर अगाताम् । बहुवचन में अगा + झि' 'आतः' ३।४।११० सूत्र से झि का जुस् = उस् करने पर—अगा + उस्, 'उस्यपदान्तात्' सूत्र से 'आ' का पररूप और 'स्' का विसर्ग करने पर—'अगुः' यह बनता है । ]

'लुङि' इसकी अनुवृत्ति रहने पर पुनः यहाँ लुङ् का ग्रहण इस लिये है कि 'आत्मनपदेषु अन्यतरस्याम्' [ आत्मनेपद प्रत्ययों में विकल्प ] यह न होने लगे । यहाँ तो अविशेषरूप से और नित्य होता है । अतः 'अगात्' [ यह परस्मैपद में हुआ है और आत्मनेपद में भी होता है—] अगायि भवता । [ इण् का गा करने भाव अर्थ में लुङ् में अ गा + लुङ् = त, च्लि का 'चिण् भावकर्मणोः' से चिण् इ, 'आतो युक् चिण् कृतोः' सूत्र से युक् = य् आगम अ गा + इ + त "चिणो लुक्" सूत्र से 'त' का लुक—अगायि । ]

*इण् के समान इक् का व्याख्यान करना चाहिये । ] [ जिस प्रकार लुङ् में 'इण' का 'गा' आदेश होता है उसी प्रकार इक् का भी 'गा' आदेश करना चाहिये । इक् स्मरण अर्थ वाली है और 'अधि' के साथ ही प्रयुक्त होती है ]* उदाहरण—अध्यगात् । [ अधि इ + लुङ्, 'इ' का 'गा' आदेश अट् आगम अधि अ गा + लुङ् तिप् सिच् और उसका लोप, 'इतश्च' से 'इ' का लोप 'अधि अगात्' यग्—अध्यगात् । अध्यगाताम्, अध्यगुः ] ॥ ४५ ॥

अबोधन - ज्ञान न करना अर्थवाली 'इण्' धातु का 'गमि' आदेश णि परे रहते होता है । इसमें इकार उच्चारण के लिये हैं । उदाहरण—गमयति, गमयतः गमयन्ति । [ इण् = इ धातु से प्रेरणार्थक णिच् करने पर 'इ' का गम् हो जाता है—गमि । इसी से लट्, तिप्, शप्, इकार का गुण ए, और ए का अय् आदेश होता है । इसका अर्थ भेजना है । यह मित् है अतः उपधाह्रस्व होने से गमयति रहता है । ]

**अबोधने इति किम् ? प्रत्याययति । इण्वदिक ( वा० १६७ ) इत्येव--अधिगमयति ॥**

**५८१. सनि च ॥ ४७ ॥ (२६१५)**

**सनि परत इणोऽबोधनार्थस्य गमिरादेशो भवति । जिगमिषति, जिगमिषतः, जिगमिषन्ति । अबोधन इत्येव-अर्थान्प्रतीषिषति । इण्वदिक इत्येव-अधिजिगमिषति । योगाविभाग उत्तरार्थः-'इङश्च' ( १.४.४८ ) इति सन्येव यथा स्यात् ॥**

**५८२. इङश्च ॥ ४८ ॥ (१६१६)**

**न्यासः**

**सनि च ॥ जिगमिषतीति ।** 'गमेरिट् परस्मैपदेषु' इतीट् । **प्रतीषिषतीति ।** 'अजादेर्द्वितीयस्य' इति 'सन्यङोः' इत्यनेन स इत्यस्य द्विर्वचनम् । 'सन्यतः' इतीत्वम् । उपसर्गेकारस्य धातोरिकारेण सह 'अकः सवर्णे दीर्घः' । 'इङश्च' इत्यादिना योगविभागस्योत्तरार्थतां दर्शयति । एकयोगे हि णेरप्युत्तरत्रानुवृत्तिः स्यात्, ततश्च तत्राप्ययमादेशः प्रसज्येत ॥ ४७ ॥

**इङश्च ॥ अधिजिगांसत इति ।** 'पूर्ववत् सनः' इत्यात्मनेपदम् । 'अज्झनगमां सनि' इति दीर्घः ॥ ४८ ॥

**पदमञ्जरी**

इत्यवक्ष्यत्, यतस्तु खलु पृथगिण्वदिक इत्याह, तेन मन्यामहे—सर्वस्य शास्त्रस्य शेषोऽयमिति । तेन 'इणो यण्' 'एतिस्तु शासु' इत्याद्यपि भवति—अधियन्ति, अधीत्येति ॥ ४५-४८ ॥

**भावबोधिनी**

अबोधन = ज्ञान करना इस अर्थ में—इसका क्या फल है ? प्रत्याययति । [ प्रति + इ + णिच् = इ, धातु की वृद्धि 'ऐ' तथा 'आय्' आदेश करने पर प्रति + आय् इ प्रत्यायि + लट् तिप्, शप्, णि = इ का गुण ए, ए का अय् आदेश—प्रत्याययति । यहाँ 'ज्ञान कराता है' यह अर्थ होने से 'गमि' आदेश नहीं होता है । ]

'इण् के समान इक् का भी गमि आदेश चाहिये ।' उदाहरण [ अधि + इक् + णिच् 'गमि' करने पर अधिगम् + इ = अधिगमि + लट् आदि करने पर ] अधिगमयति ॥ ४६ ॥

सन् प्रत्यय परे रहते भी अबोधन = ज्ञान न करना अर्थवाली 'इण' का 'गमि' आदेश होता है । उदाहरण —जिगमिषति, जिगमिषतः, जिगमिषन्ति । [ इण् = सन्, इण् का 'गमि' आदेश गम् + स, 'सन्यङोः' सूत्र से द्वित्व, हलादिशेष गगम् + स, 'कुहोश्चुः' ७।४।६२ से 'ग' का 'ज, 'सन्यतः' ७।४।७९ से अभ्यास 'अ' का 'इ 'गमेरिट् परस्मैपदेषु' इससे इट् और 'स' का 'ष् करने पर 'जिगमिष' यह सन्नन्त बनता है । 'सनाद्यन्ता धातवः' से धातु संज्ञा और लट् आदि करने पर जिगमिषति रूप बनता है । ]

अबोधन = ज्ञान न करना अर्थ में ही गमि आदेश होता है [ अतः यहाँ नहीं होता है । ] 'अर्थात् प्रतीषिषति ।' [ अर्थों को जानना चाहता है । प्रति इण् = इ । स, 'अजादेर्द्वितीयस्य' के अनुसार 'सन्यङोः' सूत्र से द्वितीय एकाच् 'स' का द्वित्व करने पर 'प्रति इ स स' 'सन्यतः' सूत्र से अभ्यास 'अ' का 'इ'—'प्रति इ सि स' धातु और उपसर्ग का सवर्णदीर्घ—'प्रतीसिस' दोनों सकारें का मूर्धन्यादेश 'प्रतीषिष' । इस सन्नन्त की धातुसंज्ञा करके लट् आदि किये जाने पर रूप बनता है । ]

'इण् के समान 'इक्' होता है' इसके अनुसार 'अधिजिगमिषति । [ अधि + इक् = इ + स, गमि आदेश करने पर अधि गम् + स, शेष प्रक्रिया जिगमिषति के समान समझनी चाहिये । ] यह योगविभाग = अतिरिक्त सूत्र बनाना उत्तरवर्ती सूत्र में अनुवृत्ति के लिये है—'इङश्च' यह सन् परे ही जिस प्रकार लागू हो [ अन्यत्र न हो सके । ] ॥ ४७ ॥

'इङ्' का सन् परे रहते 'गमि' आदेश होता है । उदा०—अधिजिगांसते अधिजिगांसेते, अधिजिगांसन्ते ।

**इङश्च सनि परतो गमिरादेशो भवति । अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते ॥**

## ५८३. गाङ् लिटि ॥ ४९ ॥ (२४५९)

**गाङादेशो भवतीङो लिटि परतः । अधिजगे, अधिजगाते, अधिजगिरे । गाङोऽनुबन्धकरणं विशेषणार्थम्, 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' ( १.२.१ ) इत्यत्रास्य ग्रहणं यथा स्यात् । न हि स्थानिवद्भावेन 'गाङ्' इति रूपं लभ्यते ॥**

### न्यासः

**गाङ् लिटि ॥ अधिजग इति ।** 'लिटस्तझयोरेशिरेच्' इत्येश् । 'आतो लोप इटि च' इत्याकारलोपः । गा इत्येतस्य द्विर्वचनम् । ननु लिटि परभूते तशब्दस्य परत्वात् प्रागेवैशादेशेन भवितव्यम्, पश्चाद् गाङादेशेन, ततश्च द्विर्वचने निमित्तेऽच्ययं गाङादेश इति 'द्विर्वचनेऽचि' इति स्थानिवद्भावादिवर्णस्य द्विर्वचनं प्राप्नोति, तत् कथं गा इत्येतस्य द्विर्वचनम् ? नैतदस्ति, यस्मात् लिण्मात्रापेक्षत्वाद् गाङादेशोऽन्तरङ्गः, लिडादेशविशेषाश्रयत्वादेशादेशो बहिरङ्गः, तस्मादन्तरङ्गत्वादेशादेशात् प्रागेव गाङादेशेन भवितव्यम्, ततश्च द्विर्वचननिमित्तेनायमच्यजादेश इति स्थानिवद्भावो न भवति, तत् कुत इवर्णस्य द्विर्वचनप्रसङ्गः ? **गाङोऽनुबन्धकरणं विशेषणार्थमिति ।** गाङ् कुटादिसूत्रे 'गाङ् कुटादिभ्यः' इत्युच्यमाने 'कै गै शब्दे' इत्यस्यापि ग्रहणं स्यात्, ततश्चागासीन्नट इत्यत्र घुमादिसूत्रेणेत्वं प्रसज्येत । अथ क्रियमाणेऽपि ङकारे 'गाङ्गतौ' इत्यस्य ग्रहणं कस्मान्न भवति ? येन हेतुना

### पदमञ्जरी

**गाङ् लिटि ।** द्विलकारकोऽयं निर्देशः—लिटि लकारादाविति । तेन प्रागेवादेशेभ्यो लावस्थायामेवादेशो भवति । किं सिद्धं भवति ? अधिजगे—'द्विर्वचनेऽचि' इति स्थानिवद्भावो न भवति । ङित्करणमनर्थकं स्थानिवद्भावादेव सिद्धमात्मनेपदमित्याशङ्क्याह—**गाङ्यनुबन्धकरणमिति । गाङिति ग्रहणं यथा स्यादिति । ननु** चैतदपि स्थानिवद्भावादेव सिद्धम्, नेत्याह—**न हीति ।** 'गाङ्कुटादिभ्यः' इति उच्यमाने 'कै गै रै शब्दे' ( धा० पा० ९१६, ९१७, ९०९ ) इणो गा लुङीत्येतयोरपि ग्रहणं प्राप्नोति, ततश्चागासीन्नटः, अगासातां ग्रामौ देवदत्तेनेत्यत्रापि घुमास्थादिसूत्रेणेत्वं प्रसज्येत ।

### भावबोधिनी

[ पढ़ना चाहता है—यह अर्थ है । अधि + इङ् + सन् प्रकृत सूत्र से 'गमि' आदेश करने पर 'अधिगम् + स, द्वित्वादि करने पर अधिजिगम् + स, 'पूर्ववत्सनः' सूत्र से आत्मनेपद होने के कारण इट् नहीं होता है और 'अज्झनगमां सनि' ६।४।१६ सूत्र से 'अ' का दीर्घ करने पर अधिजिगाम् + स, 'नश्चापदान्तस्य झलि' ८।३।२४ से 'म्' का अनुस्वार करने पर—'अधिजिगांस' इससे आत्मनेपद लट् त, और 'टि' का एत्व करने पर 'अधिजिगांसते' रूप बनता है । ] ॥ ४८ ॥

लिट् परे रहते 'इङ्' का 'गाङ' आदेश होता है । उदा०—अधिजगे, अधिजगाते, अधिजगिरे । [ अधि + इङ् + लिट, गाङ् आदेश अधि + गाङ् - गा + लिट् = त, 'लिटस्तझयोरेशिरेच्' ३।४।८१ सूत्र से 'त' का एश् करने पर अधि + गा + ए, द्वित्व, अभ्यासकार्य तथा 'कुहोश्चुः' से 'ग' का 'ज' करने पर अधिजगा + ए, 'आतो लोप इटि च' ६।४।६४ से 'आ' का लोप करने पर—अधिजगे । द्विवचन में अधिजगा + आताम् टि का एत्व करने पर—अधिजगाते । बहुवचन में 'झ' का 'इरेच्' करने पर 'आ' लोप करने पर—अधिजगिरे' रूप बनता है । ]

'गाङ्' इसका अनुबन्ध लगाना विशेषण के लिये है जिससे 'गाङ् कुटादिभ्यः' इसमें इसका ग्रहण हो सके । क्योंकि स्थानिवद्भाव से 'गाङ्' यह रूप नहीं प्राप्त होता है । [ अतः अन्य धातु का ग्रहण उसमें नहीं होता है । अतः यह अनुबन्ध विशेष उद्देश्य से है । ] ॥ ४९ ॥

**५८४. विभाषा लुङ्लृङोः ॥ ५० ॥ (२४६०)**

**लुङि लृङि च परत इङो विभाषा गाङादेशो भवति। आदेशपक्षे 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (१.२.१) इति ङित्वम्, 'घुमास्थागापाजहातिसां हलि' (६.४.६६) इतीत्वम्। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। न च भवति--अध्यैष्ट, अध्यैषाताम्, अध्यैषत। लृङि खल्वपि--अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। न च भवति--अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त॥**

### न्यासः

न भवति स हेतुर्गाङ् कुटादिसूत्रे एव दर्शितः। ननु चेङो ङितस्तत्र स्थानिवद्भावेनैव ग्रहणं भविष्यति, तत् किं ङकारेणेत्यत आह—**न हीत्यादि**। तत्र हि गाङित्येतस्य स्वरूपस्य ग्रहणम्। न च तत् स्थानिवद्भावेन लभ्यते। किं तर्हि? कार्यम्। यस्मात् 'स्थानिवदादेशः' इति कार्यातिदेशोऽयम्, न रूपातिदेशः॥ ४९॥

**विभाषा लुङ्लृङोः॥ अध्यैष्टेति**। 'आडजादीनाम्' इत्याट्। 'आटश्च' इति वृद्धिः॥ ५०॥

### पदमञ्जरी

अपर आह—यत्र सानुबन्धकात्षष्ठ्युच्चार्यते, तत्राकृतायामेवेत्सञ्ज्ञायामादेशः प्रवर्त्तते, सत्यामपि वा तस्यामनुबन्धकार्यमादेशे न भवतीत्यस्यार्थस्य ज्ञापनार्थं गाङ्यनुबन्धकरणमिति। किं प्रयोजनम्? 'चक्षिङः ख्याञ्' ङित इत्यात्मनेपदं न भवति, ञिदादेशकरणसामर्थ्यात् 'स्वरितञितः' इत्येतदेव भविष्यति। इह तर्हि 'लटः शतृशानचौ', लट इति सानुबन्धकात्षष्ठी, पचमानः, 'टितः' इत्येत्वं न भवतीति? प्रकृतानामात्मनेपदानामेत्त्वविधानादिह न भवति। इह तर्हि 'युवोरनाकौ' इत्यत्र भुज्युः, शंयुरित्यत्र मा भूदिति, अनुनासिकोकारानुबन्धौ युवू सूत्रे निर्दिष्टौ, ततश्च नन्दनः, कारकः, नन्दना, कारिका स्थानिवद्भावादुगिल्लक्षणौ ङीब्नुमौ प्राप्नुतः, अस्माज् ज्ञापकान्न भवतः। अनुनासिकयणोस्तत्र ग्रहणम्, न त्वनुनासिकोकारानुबन्धयोरिति नात्रोगित्कार्यप्रसङ्गः। इह हि 'सेर्ह्यपिच्च', सिपो हिरिति वक्तव्यम्, अपिच्चेति न वक्तव्यम्, इह च 'तुह्योस्तातङ्' इति तिप्सिपोस्तदाशिषीति सानुबन्धकात्षष्ठीमुच्चार्यादेशो विधेयः, ङित्करणं न कर्तव्यम्। इह च 'तस्थस्थमिपाम्' इति पकारो नोच्चार्यः, तेनाचिनवमित्यादौ गुणसिद्धिः, 'अणिञोरनार्षयोः, क्त्वो ल्यप्' इत्यादौ यत्र स्थान्यनुबन्धकार्यमिष्यते तत्राननुबन्धकः स्थान्युपादेयः। वाराह्या प्रकृत्येत्यादौ वृद्धिर्गुणप्रतिषेधश्च भवति। तदेवमस्य पक्षस्य मन्दत्वादनुपन्यासः॥४९॥५०॥

### भावबोधिनी

लुङ् और लृङ् परे रहते विकल्प से 'इङ्' का 'गाङ्' आदेश होता है। जब 'गाङ्' आदेश होता है उस पक्ष में 'गाङ् कुटादिभ्यः' इससे ङित् होता है, 'घुमास्थागापाजहातिसां हलि' इससे ईत्व होता है। उदा०—अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। [ अधिपूर्वक 'इङ्' + लुङ्, गाङ् = आ आदेश, अट् आगम, सिच्, अधि अ गा + स् त, 'गाङ् कुटादिभ्योऽञ्णिन्ङित्' १।२।१ से ङित् होने के कारण, 'घुमास्था' सूत्र से 'आ' का 'ई'—अधि अ गी + स् त, षत्व, ष्टुत्व, यण्—अध्यगीष्ट। द्विवचन—अध्यगीष् + आताम्। बहुवचन—अध्यगीष् + झ, "आत्मनेपदेष्वनतः" सूत्र से झ् का अत्—अध्यगीषत ]। और यह 'गाङ्' नहीं भी होता है—अध्यैष्ट, अध्यैषाताम्, अध्यैषत। [ अधि इङ् = इ + लुङ् त, आट् आगम, 'आटश्च' सूत्र से वृद्धि, सिच्, अधि + ऐ + स् त, षत्व, ष्टुत्व, 'इ' का यण् 'अध्यैष्ट'। द्विवचन—अध्यैष् + आताम्। बहुवचन—अध्यैष् + झ, झ का अत—अध्यैषत ]।

लृङ् परे भी 'गाङ्' आदेश होता है—अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। [ अधि + इङ् = इ + लृट् = त, गाङ् आदेश, अट्, 'स्यतासी लृलुटोः' से 'स्य' विकरण, ङित् मानकर 'घुमास्था०' सूत्र से 'आ' का 'ई' अधि + अगी–स्य + त, यण्, षत्व–अध्यगीष्यत। द्विवचन में—अध्यगीष्य + आताम्, 'आतो ङितः' सूत्र से 'आ' का

**५८५. णौ च संश्चङोः ॥ ५१ ॥ (२६०१)**

'इङो गाङ् विभाषा' इति वर्त्तते । **'णौ' इतीङपेक्षया परसप्तमी, 'संश्चङोः' इति च ण्यपेक्षया । णौ सन्परे चङ्परे च परत इङो विभाषा गाङादेशो भवति । अधिजिगापयिषति । न च भवति– अध्यापिपयिषति । चङि खल्वपि--अध्यजीगपत् [ न च भवति– ] अध्यापिपत् ॥**

**न्यासः**

**णौ च संश्चङोः ॥** णावितीङपेक्षयेत्यादि । णावितीयं या परसप्तमीङपेक्षया सा । **संश्चङोरितीयं** या परसप्तमी सा ण्यपेक्षयेत्यर्थः । **अधिजिगापयिषतीति** । णिच् । 'अर्तिह्री' इत्यादिना पुक्, सन्, इट्, गुणायादेशौ । **अध्यापिपयिषतीति** । 'क्रीङ्जीनां णौ' इत्यात्त्वम्, पुक्, 'अजादेर्द्वितीयस्य' इति 'पा' इत्यस्य द्विर्वचनम् । **अध्यजीगपदिति** । 'णिश्रि' इत्यादिना चङ् । 'णौ चङ्युपधाया ह्रस्वः' । 'सन्वल्लघुनि' इति सन्वद्भावात् 'सन्यतः' इतीत्त्वम् । 'दीर्घो लघोः' इति दीर्घः ॥ ५१ ॥

**पदमञ्जरी**

**णौ च संश्चङोः ॥ अध्यापिपयिषतीति** । 'क्रीङ्जीनां णौ' इत्यात्त्वम् । **अध्यजीगपदिति** । लुङि चङि 'णौ चङ्युपधाया ह्रस्वः', 'सन्वल्लघुनि', 'दीर्घो लघोः' ॥ ५१ ॥

**भावबोधिनी**

'इय्' गुण—अध्यगीष्येयताम्, 'लोपो व्योर्वलि' से 'य्' का लोप—अध्यगीष्येताम् । बहुवचन में—अध्यगीष्य + झ, 'झोऽन्तः' से 'झ्' का 'अन्त्' आदेश, 'अ' का पररूप—अध्यगीष्यन्त । ]

और यह 'गाङ्' आदेश नहीं भी होता है—अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त । [ अधि + इ + लृङ्, त, आट्, वृद्धि, स्य--अधि ऐ + स्य + त, यण्, षत्व करने पर अध्यैष्यत । द्विवचन में—अध्यैष्य + आताम्, 'आ' का 'इय्' गुण य् लोप अध्यैष्येताम् । बहुवचन में—अध्यैष्य + झ = अन्त, 'अतो गुणे' से 'अ' का पररूप—अध्यैष्यन्त । ] ॥ ५० ॥

'इङ् का गाङ् विकल्प से होता है'—इसकी अनुवृत्ति होती है । 'णौ' यह 'इङ्' की अपेक्षा सप्तमी है और 'संश्चङोः' यह सप्तमी णि की अपेक्षा । सन्परक और 'चङ्परक णि परे रहते 'इङ् का गाङ् विकल्प से होता है । [ अर्थात् जिस णि के बाद सन् और चङ् होता है ऐसा णि यदि 'इङ्' के बाद हो तो 'इङ् का विकल्प से 'गाङ्' हो जाता है । ] उदा०—अधिजिगापयिषति । और जब 'गाङ्' आदेश नहीं होता है तब अध्यापिपयिषति । चङ् परे भी 'इङ्' का "गाङ्" होता है—अध्यजीगपत् और नहीं भी होता है—अध्यापिपत् ।

[अधि + इङ् + णिच् + सन्, 'इङ्' का 'गाङ्' आदेश अधि + गा. इ = स, 'अर्तिह्री' इत्यादि सूत्र से पुक् = प् आगम, द्वित्व तथा अभ्याससम्बन्धी कार्य करने पर—अधिजिगापि + स, इट् आगम, णिच् के 'इ' का गुण, ए का अय् का आदेश, 'स्' का 'ष्'—अधिजिगापयिष + लट् = तिप्, शप् = अ, पररूप करने पर रूप बनता है—अधि-जिगापयिषति । जब 'गाङ्' नहीं होता है तब अधि इ + णिच् + स, "क्रीङ्जीनां णौ' ६।१।४८ से धातु 'इ' का 'आ' आदेश अधि + आ + स, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इससे पुक् = प् = आगम—'अधि आप् इ + स । 'अजादेर्द्वितीयस्य' के अनुसार 'सन्यङोः' से द्वितीय एकाच् 'पि' का द्वित्व—अधि आ पि पि + स, इट्, णिच् के 'इ' का गुण और 'अय्' आदेश अधि आ पि प य् इस, 'स्' का 'ष्' और यण्—अध्यापिपयिष । इस सन्नन्त को धातु मानकर लट् आदि होते है ।

अधि + इङ् + णिच् + लुङ् = त, च्लि का 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' सूत्र से चङ् आदेश अधि इ + इ + चङ् = अ + त, धातु 'इङ्' का 'गाङ्' आदेश, अट् तथा पुक् = प् आगम करने पर अधि अ गा प् इ + अ + त । 'णौ चङ्युप-

## ५८६. अस्तेर्भूः ॥ ५२ ॥ (२४७०)

**अस्तेर्धातोर्भू इत्ययमादेशो भवति आर्धधातुके । भविता । भवितुम् । भवितव्यम् ।**

**इह कस्मान्न भवति—ईहामास, ईहामासतुः, ईहामासुः ? 'कृञ्चानुप्रयुज्यते लिटि' ( ३ १.४० ) इति प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यात् । तथा चोच्यते –**

**न्यासः**

**अस्तेर्भूः ॥ ईहामासेति ।** ईहतेः 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् । 'आमः' इति लेर्लुक्, 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेर्लिट्परस्यानुप्रयोगः । **प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यादिति ।** 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्र कृञिति प्रत्याहारग्रहणम्, 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि' इति कृशब्दादारभ्य 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' इत्याकृञो ञकारात् । तेन च प्रत्याहारग्रहणेनास्तेरपि ग्रहणम्, तस्यैतदेव प्रयोजनम्—आसेत्येतदनुप्रयोगे रूपं यथा स्यादिति । यदि चास्तेरनुप्रयोगेऽपि भूभावः स्यात्, तदासेत्येतदनुप्रयोगे रूपं न स्यादिति प्रत्याहारग्रहणमनर्थकम् । ततश्च 'कृभ्वनुप्रयुज्यते लिटि' इत्येवं ब्रूयात् । तत्राप्ययमर्थः—किमिदं प्रत्याहारग्रहणमुत करोतेरित्येवं सन्देहः परिहृतो भवति, कृतञ्च प्रत्याहारग्रहणम्, तस्मात् प्रत्याहारग्रहणसामर्थ्यादनुप्रयोगेऽपि भूभावोऽस्तेर्न भवति, तथा चोच्यत इत्यादिनाऽनन्तरोक्तमेवार्थमाप्तवचनेन द्रढयति । भूरिति

**पदमञ्जरी**

**अस्तेर्भूः ॥** भवतेरेव भवितेत्यादौ सिद्धेऽस्तेरसितेत्यादिनिवृत्तये योगारम्भः ।

**अनुप्रयोगे त्विति ।** अनुप्रयोगे = विषये भुवा - भूभावेनास्तेरनिवृत्तिं मनीषिणः स्मरन्ति । कर्तुः = सूत्रकारस्य वचनात् । मनीषिणः कर्तुरिति वा ॥ ५२ ॥

**भावबोधिनी**

धायाः' से धातु की उपधा 'गा' के 'आ' का ह्रस्व अ गप् इ + अ त, 'चङि' सूत्र से द्वित्व हलादिशेष, 'कुहोश्चुः' से 'ग' का चुत्व 'ज' करने पर अधि अ ज ग प् इ अ त, 'सन्वल्लघुनि चङ्परेऽनग्लोपे' से सन्वद्भाव और 'सन्यतः' सूत्र से अभ्यास के 'अ' का इत्व 'दीर्घो लघोः' से 'इ' का दीर्घ—अधि अजीगप् इ अत । 'णेरनिटि' सूत्र से णिच् = इ का लोप, उपसर्ग 'इ' का यण्—अध्यजीगपत् । जब 'गाङ्' नहीं होता है तब अधि + इङ् + णिच् इ + चङ् = अ + लुङ् = ति, 'क्रीङ्जीनां णौ' इससे 'इ' ( धातु ) का 'आ' और पुक् आगम करने पर अधि आ प् + इ + अ + त, आट्, आगम और वृद्धि, 'अजादेर्द्वितीयस्य' के अनुसार द्वितीय एकाच् 'पि' का 'चङि' सूत्र से द्वित्व—अधि आ पि पि + अ + ति, 'णेरनिटि' से णिच् = इ का लोप, 'इ' का यण् इलोप करने पर—अध्यापिपत् रूप बनता है । ] ॥ ५१ ॥

आर्धधातुक प्रत्यय परे रहते 'अस्' का 'भू' यह आदेश होता है । उदा०—भविता, भवितुम्, भवितव्यम् । [ अस् + तुमुन्, 'भू' आदेश, इट् भू + इतुम्, गुण, अवादेश—भवितुम् । अस् + तृच् भू + तृ, इट्, ऊ का गुण, अवादेश आदि करने पर 'भवितृ' के प्रथमा एकवचन में भवितृ + सु ऋ का अनङ्, दीर्घ, सुलोप, नलोप करने पर 'भविता' बना है । अस् + तव्यत्, 'भू' आदेश, इट् गुण, अवादेश भवितव्य + सु, अम्, पूर्वरूप—भवितव्यम् । यह आदेश आर्धधातुक प्रत्यय की विपक्षा में ही हो जाता है । ऊपर केवल समझाने के लिये पहले 'अस्' लिख कर 'भू' आदेश लिखा गया है । ]

यहाँ क्यों [ 'भू' आदेश ] नहीं होता है—ईहामास, ईहामासतुः, ईहामासुः ? [ 'ईह' धातु लिट्' 'इजादेश्च गुरुमतोऽनृच्छः' सूत्र से आम्, लिट् का लुक् 'कृञ्चानुप्रयुज्यते' सूत्र से लिट् परक 'अस्' धातु का अनुप्रयोग, इसी 'अस् का 'भू' क्यों नहीं होता है,—यही प्रश्न है, ईहआम् + अस् + लिट् = तिप्, णल् = अ, धातु का द्वित्व आदि

'अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः' ॥ इति[1]॥

**५८७. ब्रुवो वचिः ॥ ५३ ॥ (२४५३)**

**ब्रुवो वचिरादेशो भवति आर्धधातुकविषये । इकार उच्चारणार्थः । वक्ता । वक्तुम् । वक्तव्यम्, स्थानिवद्भावेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदं भवति । ऊचे । वक्ष्यते ॥**

**न्यासः**

दीर्घोच्चारणं निष्ठायां ह्रस्वश्रवणं मा भूद्-भूतो भूतवानिति, अस्तेरिति श्तिपा निर्देशोऽस्यतेर्मा भूत्, नैतदस्ति, निरनुबन्धकपरिभाषयैवास्यतेर्न भविष्यति। तस्य ह्युकारोऽनुबन्धः 'उदितो वा' इति विशेषणार्थः कृतः। अस्तेस्त्वकार उच्चारणार्थः, नानुबन्धः। एवं तर्हि श्तिपा निर्देशो वैचित्र्यार्थ इत्येके। निरनुबन्धकपरिभाषायाः प्रत्ययविधिविषयत्वादित्यपरे ॥ ५२ ॥

**ब्रुवो वचिः ॥ वक्तेति** । 'चोः कुः' इति कुत्वम् । **ऊच इति** । वच्यादिसूत्रेण संप्रसारणम् ॥ ५३ ॥

**पदमञ्जरी**

**ब्रुवो वचिः ॥** ब्रुव आर्धधातुके प्रयोगनिवृत्त्यर्थं वचनम् । वक्तेत्यादिकं तु वचेरेव सिद्धम् ॥ ५३ ॥

**भावबोधिनी**

करने पर 'ईहामास' आदि बनते हैं। ] समाधान यह है कि 'कृञ्चानुप्रयुज्यते' इस सूत्र में 'कृञ्' इस प्रत्याहार-ग्रहण के सामर्थ्य से 'अस्' के ग्रहण का सामर्थ्य है। जैसा कि कहा गया है—'सूत्रकार पाणिनि के वचनसामर्थ्य से अनुप्रयोग स्थल में 'भू' आदेश द्वारा 'अस्' का बाध नहीं होता है, ऐसा मनीषी लोग कहते है, स्मरण करते है।''

**विमर्श**—'अत उत् सार्वधातुके' ६।४।११० इस सूत्र पर भाष्य में यह वचन है—

''अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः।
लोपे द्विर्वचनासिद्धिः, स्थानिवदिति चेत्कृते भवेत् द्वित्वे ॥

समस्या यह है कि ,कृञ्चानुप्रयुज्यते' यहाँ 'कृञ्' यह किस लिये है और क्या है ? उत्तर यह है कि यह अनुप्रयोग के लिये है और एक धातुमात्र नहीं अपि तु प्रत्याहार है। 'अभूततद्भावे कृभ्वस्तिप्रयोगे सम्पद्यकर्तरि' (५।४।५०) इसके 'कृ' से लेकर ''कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५।४।५८) के 'कृञ्' के 'ञ्' तक मिलकर 'कृञ्' प्रत्याहार है। इससे 'अस्' का भी ग्रहण सिद्ध है। इसका यहीं प्रयोजन है कि 'आस' ऐसा रूप अनुप्रयोग स्थल में रह सके। यदि सर्वत्र 'अस्' का भू' होने लगेगा तब तो अनुप्रयोग स्थल में 'आस' यह रूप कहीं नहीं मिल सकेगा, अतः प्रत्याहारग्रहण का क्या लाभ ? तब तो 'कृभ्वनुप्रयोगे इतना ही कह देना चाहिये था ? अतः 'कृञ्' इसको प्रत्यहार मानना ही इसमें प्रमाण है कि अनुप्रयोग में 'अस्' का 'भू' नहीं होता है। इस प्रकार 'ईहामास, ईहामासतुः' आदि ही रहते हैं। इसके अतिरिक्त 'भू' का स्वतः भी अनुप्रयोग होता ही है अतः आदेश करके मानने में तो केवल दो ही रूप होंगे, इष्ट हैं तीन के अनुप्रयोग से तीन रूप।

भूतः, भूतवान्' आदि निष्ठाप्रत्ययान्त प्रयोग में दीर्घ 'ऊ' सुनाई दे, इसलिये 'आदेश में दीर्घ 'ऊ' है। 'अस्ति' इस 'श्तिप्' प्रत्ययान्त के निर्देश के कारण 'क्षेपणार्थक 'अस्' (अस्यति) का यह 'भू' आदेश नहीं होता है यह भी समझना चाहिये ॥ ५२ ॥

आर्धधातुकविषय में 'ब्रू' का 'वचि' यह आदेश होता है। 'वचि' का इकार उच्चारणार्थ है। [अनुबन्ध नहीं है।]

---

१. श्लोकवार्त्तिककारवचनमिदम् । तत्र सम्पूर्णं वचनं त्वेवमवधेयम्—
भ्वसौ विहायाभ्यधितैष कृञ्पदं ग्रहीतुकामस्त्रितयं तदेव हि।
अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः ॥ १ ॥ इति। ( म. भा. २।४।५२ )

**५८८. चक्षिङः ख्याञ् ॥ ५४ ॥ (२४३६)**

**चक्षिङः ख्याञादेशो भवत्यार्धधातुके । आख्याता । आख्यातुम् । आख्यातव्यम् । स्थानिवद्भावेन नित्यमात्मनेपदं न भवति; ञकारानुबन्धकरणसामर्थ्यात् । आख्यास्यति । आख्यास्यते ।**

*** क्शादिरप्ययमादेश इष्यते * ( ? ) । आक्शाता । आक्शातुम् । आक्शातव्यम् ।**

**न्यासः**

**चक्षिङः ख्याञ् ॥ नित्यमात्मनेपदं न भवतीति ।** यदि हि स्यात्, ञकारानुबन्धकरणमनर्थकं स्यात् । तस्मात् कर्त्रभिप्राये क्रियाफले विवक्षित आत्मनेपदं स्यान्नान्यत्र ।

**क्शादिरपीति ।** ककारशकारयोरकार उच्चारणार्थः । क्श् ख्याञित्येवंरूप आदेशो वक्तव्यः । कथं पुनरिष्यमाणोऽप्येवंविध आदेशो लभ्यते ? पूर्वोक्तस्य बहुलग्रहणस्यानुवृत्तेः । अत एव बहुलग्रहणस्यानुवृत्तेर्वर्जनेऽसनयोश्चादेशप्रतिषेधो भवतीति व्याख्यानं कर्तव्यम् ।

**संचक्ष्या इति ।** 'ऋहलोर्ण्यत्' ।

**पदमञ्जरी**

**चक्षिङः ख्याञ् ॥** कर्त्रभिप्राये क्रियाफले आख्यास्यते, आचख्ये इत्यात्मनेपदं यथा स्यात्, तृजादौ चक्षितेत्यादि मा भूदिति च योगारम्भः । आख्यातेत्यादि 'ख्या प्रकथने' ( धा० पा० १०६० ) इत्यस्यैव सिद्धम् । अत्र यथान्यासे आकारात्पूर्वो भागः खकारयकारात्मेति स्यादाख्यातेति, ककारशकारात्मापि त्विष्यते—आक्शातेति, तदेतदाह—**क्शादिरप्ययमिति** । ककारेऽकार उच्चारणार्थः ।

अपर आह—ख्शादिरेवायमादेश इति । अत्राप्यकार उच्चारणार्थः । तत्र चर्त्वे कृते क्शातेत्यादि भवति । कथमाख्यातेति खकारयकारयोः श्रवणम् ? असिद्धकाण्डे णत्वविधानानन्तरं 'ख्शाञः शस्य यो' शस्य यत्वं विभाषा वक्तव्यम् । तत्र चर्त्वे यत्वं सिद्धमित्याख्यातेत्यादि यत्वपक्षे रूपम्, अन्यदा क्शातेति रूपम् । अवश्यं च शस्य यत्वमित्याश्रयणीयम् । इह सुप्रचष्टे सुप्रख्यः, 'आतश्चोपसर्गे' इति कः, ततो यत्वस्यासिद्धत्वात्सुप्रख्यस्य भाव

**भावबोधिनी**

वक्ता, वक्तुम्, वक्तव्यम् [ ब्रू + तृच् 'वच्' आदेश, वक् + तृ, 'चोः कुः' से 'च्' का क् 'वक्तृ' के प्रथमा एकवचन का रूप है । ब्रू + तुमुन् = वच् + तुमुन् ब्रू + तव्य, = वच् + तव्य, 'च्' का 'क्' करने पर रूप बनते हैं । ] 'ब्रूञ्' के ञित्त्व के स्थानिवद्भाव से, कर्तृगामी फल की विवक्षा में, आत्मनेपद होता है । [ ब्रू + लिट् = वच् + लिट् = त, = ए, 'वचिस्वपियजादीनाम्' सूत्र से 'व्' का सम्प्रसारण, अ का पूर्वरूप—उच् + ए, द्वित्वादि कार्य और सवर्णदीर्घ करने पर—ऊचे । ब्रू + लृ = वच् + लृट् = त, स्य, वच् + स्य + त, च् का क्, 'स' का 'ष्' क् + ष् = क्ष्, टि का एत्व—वक्ष्यते । ]

**विमर्श**—आर्धधातुक प्रत्यय के साथ 'ब्रू' का प्रयोग न हो 'वच्' का ही हो, इसके लिये यह सूत्र है । यह न होता तो 'वक्ता' आदि कैसे बन सकते ? इसका उत्तर यह है कि 'वच् परिभाषणे' यह अदादि स्वतन्त्र धातु भी है, उसके साथ प्रत्यय लगाकर ये रूप संभव हैं । अतः इस सूत्र की उपयोगिता केवल सार्वधातुक में 'ब्रू' के प्रयोग की है ॥ ५३ ॥

आर्धधातुकविषय में 'चक्षिङ्' का 'ख्याञ्' आदेश होता है । उदा०—आख्याता आख्यातुम् आख्यातव्यम् । [ आङ् पूर्वक चक्षिङ् + तृच्, 'ख्याञ्' आदेश 'आख्या + तृ' विभक्तिकार्य । आ चक्षिङ् + तुमुन्, 'ख्याञ्' आदेश 'आख्यातुम्' । आ चक्षिङ् + तव्यत्; 'ख्याञ्' आदेश—आख्यातव्यम् । [ ङित् होने से ] स्थानिवद्भाव से नित्य आत्मनेपद नहीं होता है क्योंकि आदेश [ ख्याञ् ] में ञकार अनुबन्ध लगाया गया है । [ अतः आदेश का प्रयोग उभयपदी है । ] आख्यास्यति, आख्यास्यते । [ आङ् चक्षिङ् लृट्, ख्याञ् आदेश, स्य, उभयपदी होने से 'ति' और 'त' दोनों प्रत्ययों के रूप हैं । ] * यह ख्याञ् क्श् आदिवाला भी इष्ट है । * [ भाव यह है कि 'ख्या' और 'क्शा' ये दो

**❀ वर्जने प्रतिषेधो वक्तव्य ❀ ( म० भा० २.४ ५४ वा० ९ ) । दुर्जनाः संचक्ष्याः । वर्जनीया इत्यर्थः ।**

**❀ असनयोश्च प्रतिषेधो वक्तव्यः ❀ (वा० १०) । नृ॒च॒क्षा॒ रक्षः ( अथर्व० ८.३.१० ) हिंसार्थोऽत्र धातुः । अने खल्वपि–विचक्षणः पण्डितः ।**

**❀ बहुलं संज्ञाछन्दसोरिति वक्तव्यम् ❀ ( वा० ११ ) । अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ॥**

**न्यासः**

**नृचक्षा इति** । 'सर्वधातुभ्योऽसुन्', 'अत्वसन्तस्य चाधातोः' इति दीर्घः । **विचक्षण इति** । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् ।

**बहुलमित्यादि** । संज्ञायां छन्दसि च जग्ध्यादेशादिकार्यं बहुलं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थम् ? अन्नाद्यर्थम् । अन्नादयः शब्दाः साधवो यथा स्युः । व्याख्यानन्तु तदेव बहुलग्रहणमाश्रित्य कर्तव्यम् । **अन्नमिति** । अत्रो जग्धिरादेशो न भवति, बहुलग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तेः । **वधक इति** । 'हनो वध' इत्यादिना वधादेशो लिङ्युच्यमानो हन्तेर्ण्वुल्प्रत्यये कृतेऽपि भवति । **गात्रमिति** । औणादिकः ष्ट्रन् । 'इणो गा लुङि' इति लुङ्युच्यमानो गादेशोऽत्रापि भवति । **विचक्षण इति** । चक्षिङः ख्याञादेशो न भवति ल्युटि ।

**पदमञ्जरी**

इति 'योपधाद्गुरूपोत्तमात्' इति वुञ् न भवति, अयोपधत्वात् । तस्मिन्नसति ष्यञ् भवति—सौप्रख्यमिति । तथा सुप्रख्येन निर्वृत्ते देशे भवः सौप्रख्यीयः, धन्वयोपधादिति वुञ् न भवति, 'वृद्धाच्छः' एव भवति । आख्यातः, यत्वस्यासिद्धत्वाद्यण्वत्त्वाभावात् 'संयोगादेः' इति नत्वं न भवति, 'न ध्याख्यापॄमूर्छिमदाम्' इत्यत्र ख्याग्रहणं न कर्तव्यं भवति । पुंसः ख्यानं पुंख्यानमित्यत्र यत्वस्यासिद्धत्वात् 'पुमः खय्यम्परे' इति रुविधिर्न भवति । पर्याख्यानम्, यत्वस्यासिद्धत्वाच्छकारेणानटा व्यवायात् 'कृत्यचः' इति णत्वाभावः । नटः ख्यातेत्यत्र यत्वस्यासिद्ध-

**भावबोधिनी**

प्रकार के आदेश होते हैं । कहीं-कहीं 'क्शादिः' ऐसा पाठ मिलता है, इसमें अकार उच्चारणार्थ है । अतः 'क्' व्यंजन ही लेना चाहिये । ] आक्शाता । आक्शातुम् । आक्शातव्यम् । [ आ चक्षिङ् + तृच्, 'क्शा' आदेश करने पर आ क्शा + तृ, इसी प्रकार तुमुन् तथा तव्य प्रत्ययों में भी समझना चाहिये । ]

* वर्जन अर्थ में 'ख्याञ्' आदेश का प्रतिषेध कहना चाहिये । * उदा०--दुर्जनाः संचक्ष्याः । [सम् पूर्वक चक्षिङ् + ण्यत् = संचक्ष + य ] वर्जन के योग्य—यह अर्थ है ।

*अस् और अन प्रत्ययों में भी ख्याञ् आदेश नहीं होता है । *उदाहरण—नृचक्षाः रक्षः । यहाँ हिंसा अर्थवाली धातु है । [ चक्षिङ् धातु से 'सर्वधातुभ्योऽसुन्' इससे औणादिक असुन = अस् प्रत्यय करने पर ख्याञ् आदेश का प्रतिषेध हो जाता है । चक्ष् + अस् चक्षस्, 'नृन्' के साथ समास करके 'अत्वसन्तस्य चाधातोः' सूत्र से उपधादीर्घ करने पर 'नृचक्षास्' स् का रुत्व, विसर्ग—नृचक्षाः यह प्रथमा एकवचन का रूप है । मनुष्यों को मारने वाला राक्षस—यह अर्थ है ।

कहीं कहीं 'नृचक्षाः राक्षसाः' ऐसा पाठ मिलता है, वह प्रामादिक और अप्रामाणिक है । ]

अन प्रत्यय में भी ख्याञ् नहीं होता है---विचक्षणः पण्डितः । [ विचक्षिङ् + ल्युट्, यहाँ कृत्यल्युटो बहुलम्, (पा. सू. ३।३।११३)से बाहुलकात् कर्ता अर्थ में ल्यु यु = अन हुआ है । अथवा—"अनुदात्तेतश्च हलादेः' से युच् है । विचक्ष् + अन, 'ख्याञ्' का प्रतिषेध 'न' का 'ण' करने पर विचक्षणः = पण्डितः । ] *संख्या और छन्दः = वेद में बहुलरूप से कहने चाहिये । *इसका क्या प्रयोजन है ? 'अन्न, वधक, गात्र, विचक्षण और अजिर—इनकी सिद्धि के लिये ।

**विमर्श**—भाष्य में 'बहुलं तणि' यह वार्त्तिक है । 'तणि' इससे संज्ञा और वेद दोनों को समझना चाहिये । "संज्ञा के लिये और वैदिक प्रयोगों के लिये 'अद्' आदि पूर्वोक्त धातुओं के 'जग्धि' आदि आदेश बहुल रूप से कहने

## ५८९. वा लिटि ।। ५५ ।। (२४३७)

**पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । लिटि परतश्चक्षिङः ख्याञादेशो वा भवति । आचख्यौ, आचख्यतुः, आचख्युः । न च भवति--आचचक्षे आचचक्षाते, आचचक्षिरे ।।**

### न्यासः

**अजिर**शब्दस्तु 'अजिरशिशिरशिथिर' इति किरच्प्रत्ययान्त औणादिको निपातितः । तस्यात एव निपातनाद् 'अजेर्व्यघञपोः' इति विधीयमानो वीभावो न भवति । आदिशब्देन **प्रघस** इत्यादेर्ग्रहणम् ।। ५४ ।।

**वा लिटि ।। ५५ ।।**

### पदमञ्जरी

त्वात् खरः शर्परत्वात् 'शर्परे विसर्जनीयः' इत्येष विधिर्भवति । नन्वसिद्धे शस्य यवचनेऽपि 'ख्या प्रकथने' ( धा० पा० १०६०) इत्यस्यौत्पत्तिक एव यकार इति तत्र वञादिप्रसङ्गः ? एवं तर्हि सोऽपि ख्शादिः, शस्य यवचनमपि साधारणं द्रष्टव्यम् ।

**'नृचक्षा रक्षः' (अथर्व० ८.३.१०) इति** । छान्दसः प्रयोगः । भाषायां तु नृचक्षो रक्ष इति । **विचक्षण इति** । 'अनुदात्तेतश्च हलादेः' इति युच् । **वधक इति** । अतो लोपस्य स्थानिवत्त्वाद् वृद्ध्यभावः । **गात्रमिति । ष्ट्रनि गादेशः । अजिरमिति** । 'अजिरशिशिर' (दश० उ० ८.२७) इति निपातनमनादृत्योक्तम् ।। ५४।।५५ ।।

### भावबोधिनी

चाहिये अर्थात् कहीं होते हैं और कहीं नहीं होते हैं ।" इस वचन के पाँच प्रयोजन हैं—(१) अन्नम् । अद् + क्त यहाँ 'अदो जग्धिर्ल्यप्ति किति' २।४।३६ से 'अद्' का 'जग्धि' आदेश नहीं होता है । 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' से द् त् के न् न् होने पर 'अन्नम्' बनता है । (२) वधकम् । हन् + ण्वुल्=वु=अक यहाँ 'हनो वध लिङि' ( २।४।४२ ) से लिङ् में ही 'वध' आदेश कहा गया है, वह यहाँ भी होता जाता है । (३) गात्रम् । इण् + ष्ट्रन् "इणो गा लुङि" ( २।४४५ ) से लुङ् में ही 'इण्' का 'गा' आदेश कहा गया है किन्तु यहाँ भी हो जाता है—गा + ष्ट्रन्, 'ष्' की इत्संज्ञा लोप हो जाने पर सन्धिवश होने वाला 'ट्' भी 'त्' रह जाता है गा + त्र । (४) विचक्षणः । विचक्षिङ् धातु से 'कृत्यल्युटो बहुलम्' से ल्युट् या "अनुदात्तेतश्च हलादेः" से युच् करने पर 'चक्षिङः ख्याञ्' ( २।४।५४ ) इसी प्रस्तुत सूत्र से ख्याञ् आदेश नहीं होता है । (५) अजिरम् अज् + किरच् = इर, यहाँ 'अजेर्व्यघञपोः' ( २।४.५६ ) से 'अज' का 'वी' आदेश नहीं होता है ।। ५४ ।।

पूर्ववर्ती सूत्र द्वारा [ चक्षिङ् का ख्याञ् आदेश ] नित्य प्राप्त रहने पर यह विकल्प कहा जा रहा है । लिट् [ आर्धधातुक ] परे रहते चक्षिङ् का ख्याञ् आदेश विकल्प से होता है । उदा०—आचख्यौ, आचख्यतुः, आचख्युः । [ आङ् पूर्वक चक्षिङ् + लिट्=तिप्=णल्, प्रस्तुत सूत्र से वैकल्पिक ख्याञ् आदेश आख्या + णल्, धातु का द्वित्व और अभ्यासादिकार्य करने पर आ चख्या + णल्, 'आत औ णलः' ( पा. सू. ७१।३४ ) से 'णल्' का 'औ' आदेश, वृद्धिसन्धि करने पर—आचख्यौ । आचख्या + लिट्=तस्=अतुस्, 'आतो लोप इटि च' सूत्र से धातु के 'आ' का लोप—आचख्य् + अतुस्, स् का विसर्ग करने पर आचख्यतुः । बहुवचन में आचख्या + लिट्=झि=उस्, आलोप, स् का विसर्ग—आचख्युः ] और जब चक्षिङ् का ख्याञ् नहीं होता है तब—आचचक्षे, आचचक्षाते आचचक्षिरे—होते हैं । [ आङ् उपसर्गपूर्वक चक्षिङ् धातु ङित् होने से आत्मनेपद —आ चक्ष् लिट्=त,=एश्, धातु का द्वित्वादि करने पर रूप बनता है—आचचक्षे । द्विवचन में—आचचक्ष् + आताम्, टि= आम् का एत्व करने पर—आचचक्षाते । बहुवचन में आचचक्ष् + लिट्=झ, 'लिटस्तझयोरेशिरेच्' सूत्र से 'झ' का 'इरेच्' करने पर—आचचक्षिरे । ] ।। ५५ ।।

## ५९०. अजेर्व्यघञपोः ॥ ५६ ॥ (२२९२)

**अजेर्धातोः 'वी' इत्ययमादेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा। प्रवयणीयः ( ३.१.९६ )। प्रवायकः ( ३.१.१३३ )।**

**अघञपोरिति किम् ? समाजः। उदाजः ( ३.३.१८ )। अपि तु--समजः। उदजः। 'समुदोरजः पशुषु' ( ३.३ ६९ ) इत्यप्। दीर्घोच्चारणं किम् ? प्रवीताः॥**

*** घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यम् * ( म० भा० २.४.५६ वा० १ ) समज्या ( ३.३.९९ )।**

*** वलादावार्धधातुके विकल्प इष्यते * ( ? )। प्रवेता, प्राजिता। प्रवेतुम् प्राजितुम् ( म० भा० )॥**

**न्यासः**

**अजेर्व्यघञपोः**॥ **प्रवायक इति** ण्वुल्। **प्रवयणीयमिति** अनीयर्। 'कृत्यचः' इति णत्वम्।

**घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यमिति**। घञपोः प्रतिषेधे कर्तव्ये क्यपः प्रतिषेधस्योपसंख्यानं =प्रतिपादनं कर्तव्यमित्यर्थः। क्यपः प्रतिषेधनिमित्तत्वेन प्रतिषेधं प्रति सम्बन्धित्वेन विवक्षितत्वात् क्यप इति षष्ठी। तत्रेदं प्रतिपादनम्—'संज्ञायां समजनिपतमनविद' इत्यादिना संज्ञायां गम्यमानायामजेः क्यप् विधास्यते। नियतवर्णानुपूर्वीका च संज्ञा भवति, न चादेशे कृते संज्ञा गम्यते, तस्मात् संज्ञायां विधानात् क्यपि वीभावो न भवति। **वलादावार्द्धधातुके विकल्प इष्यत इति**। कथं पुनरिष्यमाणोऽपि लभ्यते ? अजेरुदात्तत्वात्। स हीडर्थो धातुषूदात्तः

**पदमञ्जरी**

**अजेर्व्यघञपोः**॥ प्रवयणीयः, प्रवायक इत्यादौ गुणवृद्धिविषये ह्रस्वदीर्घयोरविशेषं मन्वानः पृच्छति—**दीर्घोच्चारणं किमिति**। दीर्घव्याख्यानमित्यर्थः। **घञपोः प्रतिषेधे क्यप उपसङ्ख्यानमिति**। क्यपि यः प्रतिषेधस्तस्य क्यप्सम्बन्धी भवतीति क्यप इत्युक्तम्। यस्त्वाह—अपीत्येव क्यपि सिद्धः प्रतिषेधः, कथम् ? अबिति प्रत्याहारः, अपोऽकारादारभ्या क्यपः पकाराद् इति, तस्य संवीतिरिति क्तिन्यपि प्रतिषेधः प्राप्नोति, तस्मात्संज्ञा-

**भावबोधिनी**

आर्धधातुक प्रत्यय परे रहते 'अज' धातु का 'वी' यह आदेश होता है किन्तु घञ् और अप् प्रत्ययों को छोड़कर। उदा०—प्रवयणीयः। [ प्र+अज्+अनीयर्, 'वी' आदेश—प्रवय्+अनीय, ''कृत्यचः'' सूत्र से 'न्' का 'ण्' होकर प्रवयणीयः बनता है। न्यास में 'प्रवयणीयम्' पाठ है। ] प्रवायकः। प्र+अज्+ण्वुल्—अक, 'अज्' का 'वी' आदेश, 'ई' की वृद्धि ऐ, 'आय्' आदेश—प्रवायकः। ]

घञ् और अप् को छोड़कर—इसका क्या फल है ? समाजः, उदाजः। [ सम्+अज्+घञ्=अ, उपधावृद्धि, घञ् परे होने से 'वी' आदेश नहीं होता है। उद्+अज्+घञ्। ] अप् प्रत्यय परे तो—समजः, उदजः। [ सम्+अज्+अप्, उद्+अज्+अप्। यहाँ भी 'वी' आदेश नहीं होता है। ] इनमें ''समुदोरजः पशुषु'' सूत्र से 'अप् होता है। 'वी' इसमें दीर्घ 'ई' के उच्चारण का क्या फल है—प्रवीताः। [ प्र+अज्+क्त, अज् का 'वी' आदेश करने पर रूप बना है। यदि आदेश में दीर्घ 'ई' नहीं किया जाता तो इस लक्ष्य में दीर्घश्रवण नहीं होता। किन्तु जहाँ गुण या वृद्धि करनी है वहाँ ह्रस्व या दीर्घ किसी के भी करने से कार्य सिद्ध हो जाता है। ] * घञ् तथा अप् प्रत्यय परे 'अज्' के 'वी' आदेश करने के प्रतिषेध के प्रसंग में 'क्यप्' का उपसंख्यान करना चाहिये, अर्थात् क्यप् में भी 'वी' आदेश नहीं नहीं होता है। * उदा०—समज्या। [ सम्+अज्+क्यप् 'संज्ञायां समजनिपतमनविद' सूत्र से, क्यप् 'वी' आदेश नहीं होता है। टाप्=आ करने पर रूप बनता है। ]

* वलादि आर्धधातुक प्रत्यय परे रहते विकल्प इष्ट है। अर्थात् 'अज्' तथा 'वी' दोनों के रूप होते हैं। * उदा०—प्रवेता, प्राजिता। [ प्र+अज्+तृच्, 'वी' आदेश करने पर गुणादि करने पर—प्रवेता और 'वी' न करने

## ५९१. वा यौ ॥ ५७ ॥ (३२९२)

**पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। 'यु' इति ल्युटो ग्रहणम्। यौ परभूते अजेर्वा 'वी' इत्ययमादेशो भवति। प्रवयणो दण्डः, प्राजनो दण्डः। प्रवयणमानय, प्राजनमानय ॥**

## ५९२. ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५८ ॥ (१२७६)

**ण्यादयो गोत्रप्रत्ययाः। ण्यान्तात् क्षत्रियगोत्राद् आर्षाद् ञितश्च परयोरणिञोर्यूनि लुग्भवति। ण्यन्तात्तावत्—'कुर्वादिभ्यो ण्यः' (४,१,१५१), तस्माद्यूनि इञ् (४.१.९५), तस्य लुक्। कौरव्यः पिता। कौरव्यः पुत्रः।**

**न्यासः**

पठ्यते। यदि चास्य नित्यं वीभावः स्यात्, तदा तस्योदात्तपाठोऽनर्थकः स्यात्। न हि वीभावे विहित इट् प्राप्नोति, तस्यानुदात्तत्वात् ॥ ५६ ॥

**वा यौ॥ 'यु' इति ल्युटो ग्रहणमिति।** अन्यस्यासम्भवात्। **प्रवयणो दण्ड इति।** प्राज्यतेऽनेनेति करणे ल्युट्। पूर्ववण्णत्वम् ॥ ५७॥

**ण्यक्षत्रियार्षञितो यूनि लुगणिञोः॥ ण्यादयो गोत्रप्रत्यया इति।** 'गोत्राद् यून्यस्त्रियाम् इति गोत्रप्रत्ययान्तादेव युवप्रत्ययविधानात्। **तस्माद् यूनीञिति।** 'अत इञ्' इत्यनेन। **कौरव्यशब्दस्तिकादिषु पठ्यत इति।** औरसशब्दादनन्तरम्। **क्षत्रियगोत्रस्य तत्र ग्रहणमिति।** औरसशब्देनक्षत्रियगोत्रप्रत्ययान्तेन साहचर्यात्। औरसशब्दो हि जनपदशब्दात् क्षत्रियादञिति क्षत्रियगोत्रप्रत्ययान्तः।

**पदमञ्जरी**

ग्रहणात्समज्येत्यत्र वीभावाभावः। न ह्यादेशेन संज्ञा गम्यते। **वलादावार्धधातुके वेष्यत इति।** नार्थोऽनयेष्ट्या, नापि घञपोः प्रतिषेधेन, नापि क्यप उपसङ्ख्यानेन, नापि 'वा यौ' इति सूत्रेण, एतावदस्तु—'वा लिटि', अजेर्वीत्येव, व्यवस्थितविभाषेयम्, तेन घञपोः क्यपि नैव भवति, वलादौ यौ च विकल्पः, अन्यत्र नित्यम् ॥५६-५७॥

**ण्यक्षत्रियार्षञितो यूनि लुगणिञोः॥ ण्यादयो गोत्रप्रत्यया इति।** 'गोत्राद्यून्यस्त्रियाम्' इति गोत्रप्रत्ययान्तादेव यूनि प्रत्ययविधानात्। क्षत्रियगोत्रस्य क्षत्रियादभेदोपचारात् क्षत्रियशब्देनाभिधानम्। ऋषेरपत्यमार्षम्, 'इतश्चानिञः' इति ढकि प्राप्ते शिवादिपाठादण्। ढगपीष्यते—आर्षेयं वृणीते इति। तस्माच्छुभ्रादिष्वपि पठनीयः। एवं गोत्ररूपाभ्यां क्षत्रियार्षाभ्यां प्रत्ययस्योपलक्षणाद् ण्यादयो गोत्रप्रत्यया इत्युक्तम्। **क्षत्रियादिति।** क्षत्रियगोत्रप्रत्ययान्तादित्यर्थः। **आर्षादिति।** ऋष्यभिधायिनो गोत्रप्रत्ययान्तादित्यर्थः। प्रथमानिर्दिष्टाद् ण्यन्ता-

**भावबोधिनी**

'इट्' आगम में—प्राजिता ये दो रूप होते हैं। ] प्रवेतुम्, प्राजितुम् प्र+अज्+तुमुन्, 'वी' करने पर गुण—प्रवेतुम्, न करने पर, इट् आगम—प्राजितुम् यह भाष्यकार की 'इष्टि' है। ] ॥ ५६ ॥

पूर्ववर्ती सूत्र द्वारा अज् का 'वी' आदेश नित्य प्राप्त रहते यह विकल्प कहा जा रहा है। 'यु' यह ल्युट् का ग्रहण है। 'यु=ल्युट्' परे रहते 'अज्' का 'वी' यह आदेश विकल्प से होता है। उदा० प्रवयणः दण्डः प्राजिनः दण्डः। [ प्र+अज्+ल्युट्=यु, अज् का 'वी' आदेश प्र वी+यु, यु का अन आदेश, 'ई' का गुण, ए, ए का अय् आदेश प्रवय्+अन, 'कृत्यचः' सूत्र से 'न' का ण्—प्रवयणः। पक्ष में प्र+अज्+यु=अन, सवर्णदीर्घ—प्राजनः। यहाँ करण अर्थ—प्राज्यतेऽनेन—में ल्युट् समझना चाहिए। ] प्रवयणम् आनय, प्राजनम् आनय ॥ ५७ ॥

'ण्य' आदि गोत्र [ अर्थवाले ] प्रत्यय हैं। [ क्योंकि 'गोत्राद यून्यस्त्रियाम्' यह सूत्र गोत्रप्रत्ययान्त से ही युवा अर्थ वाले प्रत्ययों का विधान करता है। ] ण्यान्त गोत्रप्रत्ययान्त, क्षत्रियगोत्रप्रत्ययान्त ऋषिवाचक गोत्रप्रत्ययान्त और ञित् से परे युवा अर्थ में विहित 'अण्' तथा 'इञ्' प्रत्ययों का लुक् [ =लोप ] होता है। क्रमशः उदा० में ( १ ) ण्यान्त गोत्रप्रत्ययान्त से लुक् के उदा०—[ कुरोः गोत्रापत्यम् इस अर्थ में ] 'कुर्वादिभ्यो ण्यः' ( पा० सू० ४.१. १५१) से ण्य प्रत्यय करने पर [ कुरु+ण्य=य, आदिवृद्धि कौरु+य, 'ओर्गुणः' सूत्र से 'उ' का गुण और 'ओ' का अव् करने पर ]

ननु च कौरव्यशब्दस्तिकादिषु पठ्यते, ततः फिञा भवितव्यम्—कौरव्यायणिरिति ? क्षत्रियगोत्रस्य तत्र ग्रहणम्, 'कुरुनादिभ्यो ण्यः'(४.१.१७२) इत्यनेन विहितस्य; इदं तु ब्राह्मणगोत्रम्, 'कुर्वादिभ्यो ण्यः' (४.१.१५१) इति ण्यः।

क्षत्रिय —'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४.१.११४) इत्यण्, तस्माद्यूनि इञ्, तस्य लुक्। श्वाफल्कः पिता। श्वाफल्कः पुत्रः।

आर्ष —ऋष्यण् (४.१.११), तस्माद्यूनि इञ्, तस्य लुक्। वासिष्ठः पिता। वासिष्ठः पुत्रः।

ञित् —'अनृष्यानन्तर्ये विदादिभ्योऽञ्' (४.१.१०४), तस्माद्यूनि इञ्, तस्य लुक्। बैदः पिता। बैदः पुत्रः। अणः खल्वपि —तिकादिभ्यः फिञ् (४.१.१५४), तस्माद्यूनि 'प्राग्दीव्यतोऽण्' (४.१.८३), तस्य लुक्। तैकायनिः पिता। तैकायनिः पुत्रः।

**न्यासः**

ऋष्यण् इति। 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यनेन।

**पदमञ्जरी**

दणोऽसम्भवाच्चरमनिर्दिष्टोऽपीञेव प्रथममुदाहृतः। **क्षत्रियगोत्रस्य तत्र ग्रहणमिति**। औरसशब्देन साहचर्यात्। स हि 'जनपदशब्दात् क्षत्रियादञ्' इत्यञन्तत्वात्क्षत्रियशब्दः। उरसशब्दः सकारोपधो जनपदवाची, तस्माद्यूनि

**भावबोधिनी**

"कौरव्यः" है। इस शब्द से ['अत इञ्' सूत्र द्वारा [ युवा अर्थ में 'इञ्' प्रत्यय होता है—कौरव्य + इञ्, इस 'इञ्' का लुक् होता है। अतः—'कौरव्यः पिता,' और 'कौरव्यः पुत्रः' यही रूप होता है।

'कौरव्य' शब्द तिकादिगण में पढ़ा जाता है, उससे तो फिञ् प्रत्यय होना चाहिये और कौरव्यायणिः बनना चाहिये ? उत्तर यह है कि उस [ 'तिकादिभ्यः फिञ् ४।१।१५४ ] में क्षत्रियगोत्र का ग्रहण है जो कि 'कुरुनादिभ्यो ण्यः' ( पा० सू० ४।१।१७० ) से किया जाता है, परन्तु प्रस्तुत उदा० में तो ब्राह्मणगोत्र का ग्रहण है—"कुर्वादिभ्यो ण्यः' ( पा० सू० ४।१।१५१ ) [ भाव यह है कि जब ब्राह्मणगोत्रप्रत्ययान्त 'कौरव्य' शब्द है तब 'अत इञ्' से इञ् होता है उसी का लुक् होता है। और जब क्षत्रियगोत्रप्रत्ययान्त 'कौरव्य' है तब उससे फिञ् होकर 'कौरव्यायणिः' यही बनता है। लुक् संभव नहीं है। तकादिगण में 'औरस' शब्द जनपदवाची क्षत्रियप्रत्ययान्त शब्द साथ में पढ़ा होने से 'कौरव्य' में भी यही समझना चाहिये। ] ( २ ) क्षत्रियवाची गोत्रप्रत्ययान्त से लुक् का उदा०—"ऋष्यन्धकवृष्णि-कुरुभ्यश्च' ( पा० सू० ) सूत्र से अण् करके 'श्वफल्कस्य गोत्रापत्यम्' अर्थ में 'श्वाफल्कः' बनता है इससे युवा अपत्य अर्थ में [ 'अत इञ्' सूत्र से ] 'इञ्' प्रत्यय होता है, इसका लुक् प्रस्तुत सूत्र से होता है। अतः श्वाफल्कः पिता और श्वाफल्कः पुत्रः यही रूप बनता है। [ श्वाफल्किः पुत्रः' ऐसा नहीं होता है। ]

(३) ऋषिवाची गोत्रप्रत्ययान्त से लुक् का उदा० 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (पा. सू. ४.१.११४) से गोत्रापत्य अर्थ में अण् होता है, अणन्त शब्द से युवा प्रत्यय अर्थ में ['अत इञ्' (पा. सू. ४.१.९५) से] इञ् होता है, उसका लुक् होता है वसिष्ठस्य गोत्रापत्यम्—वासिष्ठः पिता, वासिष्ठः पुत्रः। [वसिष्ठ+अण्, आदिवृद्धि के बाद जब युवापत्य अर्थ में इञ् होता है तब उसका लोप होने से पिता और पुत्र दोनों 'वासिष्ठ' कहे जाते हैं। ]

(४) ञित् से युवा प्रत्यय के लुक् का उदा० 'अनृष्यानन्तर्ये विदादिभ्योऽञ् ' (पा. सू. ४.१.१०४) से अञ् होता है, ['ञ्' की इत्संज्ञा होती है] ञित्प्रत्ययान्त से युवा अर्थ में इञ् होता है, उसका लुक् हो जाता है—बैदः पिता, बैदः पुत्रः। [बिदस्य गोत्रापत्यम्—इस अर्थ में अञ् प्रत्यय करने के बाद युवा अर्थ में 'बैद' से इञ् होता है, उसका लोप हो जाता है। अतः पिता और पुत्र दोनों 'बैद' होते हैं। ]

अण् का भी लोप होता है—'तिक' शब्द से 'तिकादिभ्यः फिञ्' (पा. सू. ४.१.१५४) से फिञ् होता है, [फ्= आयन्, आदिवृद्धि करने पर 'तैकायनिः' बनता है। ] इससे युवा अपत्य अर्थ में 'प्राग्दीव्यतोऽण्' (पा. सू. ४.१.८३) से अण् होता है, उसका लुक् हो जाता है। अतः तैकायनिः पिता और 'तैकायनिः पुत्रः' यही रूप होता है।

**एतेभ्य इति किम् ? 'शिवादिभ्योऽण्' (३.१.११२) तस्माद् यूनि 'अत इञ्' (४.१.९५), तस्य न लुग्भवति । कौहडः पिता । कौहडिः पुत्रः ।**

**यूनीति किम् ? वामरथ्यस्य छात्राः वामरथाः । 'कुर्वादिभ्यो ण्यः' (४.१.१५१) इति ण्यः, तस्मात् 'कण्वादिभ्यो गोत्रे' (४.२.१११) इति शैषिकोऽण् तस्य लुग् न भवति ।**

**अणिञोरिति किम् ? दाक्षेरपत्यं युवा दाक्षायणः ।**

**॥ अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ॥ म० भा० २.४.५८ वा० ३ ) । बौधिः पिता । बौधिः पुत्रः । जाबालिः पिता । जाबालिः पुत्रः । औदुम्बरिः पिता । औदुम्बरिः पुत्रः (म० भा०) । भाण्डीजङ्घिः**

**न्यासः**

**'कुर्वादिभ्यो ण्यः' इति ।** वामरथ्यशब्दं व्युत्पादयति । तस्मात् **कण्वादिभ्यो गोत्रे इति शैषिकोऽणिति ।** ननु च वामरथ्यशब्दः कुर्वादिषु पठ्यते, नकण्वादिषु, तत् कथमेवमुक्तम् ? यद्यपि न पठ्यते, तथापि कुर्वादिषु वामरथ्यस्य कण्वादिवत् स्वरवर्जमिति पाठात् कण्वादिवद्भावोऽस्ति, अत एव एवमुक्तमित्यदोषः । **दाक्षायण इति ।** 'यञिञोश्च' इति फक् ।

**अब्राह्मणगोत्रमात्रादिति ।** इह कैश्चिदुक्तम्—'अणिञोर्लुकि क्षत्रियगोत्रमात्राद् युवप्रत्ययस्योपसंख्यानम्' इति । तेषां वैश्यगोत्रान्न प्राप्नोति; तस्माद् वैश्यगोत्रादपि यथा स्यादित्येवमर्थं मात्रग्रहणम् । ब्राह्मणक्षत्त्रियवैश्यानां हि गोत्राणि सम्भवन्ति, तत्र ब्राह्मणगोत्रं वर्जयित्वाऽन्यतः सर्वस्माद्भवति । पूर्वके तु वाक्येऽतद्राजादपि क्षत्रियगोत्राद् यथा स्यादित्येवमर्थं मात्रग्रहणम् । तथा हि 'अणिञोर्लुकि तद्राजाद् युवप्रत्ययस्योपसंख्यानम्' इति

**पदमञ्जरी**

प्राग्दीव्यतीयोऽणिति । 'फेश्छ च' इति च ञच्छौ तु न भवतः, यमुन्दश्च सुयामा चेति परिगणनात् । **कण्वादिभ्यो गोत्रे इति शैषिकोऽणिति ।** वामरथस्य कण्वादिवत्स्वरवर्जमिति कुर्वादिषु पाठादिति भावः ।

**अब्राह्मणगोत्रमात्रादिति ।** अत्र भाष्ये त्रीणि वाक्यान्युपन्यस्तानि—'अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानमिति प्रथमम्, अस्योदाहरणम्—बौधिः पिता, बौधिः पुत्रः; औदुम्बरिः पुत्रः, बुधोदुम्बराभ्यां शाल्वावयवलक्षण इञ्, 'यञिञोश्च' इति फक्, तस्य लुक् । अञणिञर्थमेतद्वचनम् । शाल्वावयवेत्यत्रोदुम्बरास्तिलखिला इत्यादि संभवोदाहरणं न परिगणनमिति बुधशब्दादपीञ् भवति । 'क्षत्त्रियगोत्रमात्राद्युवप्रत्ययस्योप-

**भावबोधिनी**

ण्यान्त आदि गोत्र प्रत्ययान्त शब्दों से ही लुक् होता है, इसका क्या फल है ? 'शिवादि शब्दों से अण् होता है, उस अणन्त से युवा अपत्य अर्थ में 'अत इञ्' (पा. सू. ४.१.९५) से इञ् होता है इञ् का लुक् नहीं होता है—कौहडः पिता, कौहडिः पुत्रः ['कोहड' शब्द शिवादिगण में है । अण् करने पर आदिवृद्धि होती है । बाद में युवा अपत्य अर्थ में 'इञ्' होता है । इसका लुक् नहीं होता है । अतः पिता 'कौहडः' है और पुत्र कौहडिः । इसी लिये 'ण्य' आदि का ग्रहण है । ]

युवा अर्थ में [होने वाले प्रत्यय का लुक् होता है—] इसका ग्रहण किस लिये है ? वामरथ्यस्य छात्राः—वामरथाः । [वामरथस्य गोत्रापत्यम् इस अर्थ में] ''कुर्वादिभ्योण्यः'' (पा. सू. ४ । १ । १५१) इससे ण्य होता है—वामरथ+ण्य य, अ का लोप करने पर—वामरथ्य बना है । वामरथ्यस्य छात्राः—इस अर्थ में ''कण्वादिभ्यो गोत्रे'' (पा. सू. ४ । २ । १११) सूत्र से शैषिक अर्थ में अण् प्रत्यय होता है, इसका लुक् नहीं होता है । [क्योंकि यह युवा अर्थ में न होकर शैषिक अर्थ में है । ] अण् तथा इञ्—इन्हीं दो का लुक् होता है—इसका क्या फल है ? [दक्षस्य गोत्रापत्यम्—इस अर्थ में इञ् करके 'दाक्षि' बना है । ] दाक्षेः युवा अपत्यम्—[इस अर्थ में ''यञिञोश्च'' (पा. सू. ४.१.१०१) से फक्=आयन होने पर उसका लुक् नहीं होता है—दाक्षि+आयन, इ का लोप 'न' का 'ण' होने पर दाक्षायणः बना है । यहाँ अण् [या इञ् नहीं है । अतः लुक नहीं होता है । ]

**पिता। भाण्डीजङ्घिः पुत्रः। शाल्वावयवलक्षण इञ् (४.१.१७३) तस्मात्फक्, (४.१.१०१), तस्य लुक्। पैलादिदर्शनात् सिद्धम्॥**

**न्यासः**

कैश्चिदुक्तम्, तन्मतनिरासार्थमेतद्वाक्यमुपन्यस्तम्। **बौधिः पितेत्येवमादिना** क्षत्रियगोत्रोदाहरणानि दर्शयति। **भाण्डीजङ्घिरित्येवमादिना** वैश्यगोत्रोदाहरणम्। ब्राह्मणगोत्रप्रतिषेधादिह न भवति—दाक्षायण इति। **शाल्वावयवलक्षण इति**। क्षत्रियगोत्राधिकृत्येदमुक्तम्। भाण्डीजङ्घिरित्यत्र वैश्यगोत्रे 'अत इञ्' इत्यनेनेञेव भवतीति वेदितव्यम्। **पैलादिदर्शनात् सिद्धमिति**। पैलादेराकृतिगणत्वात् तत्रैते द्रष्टव्या इति दर्शयति॥ ५८॥

**पदमञ्जरी**

संख्यानम्' (म० भा०) इति **द्वितीयम्**। मात्रशब्दो व्याप्त्यर्थः, तद्राजादिति नियमो नास्ति—क्षत्रियगोत्रमात्रादिति। तेन जाबालशब्दादत इञोऽतद्राजादपि परस्य फको लुग् भवति—जाबालिः पिता, जाबालिः पुत्रः। **वृत्तिकारेणोपन्यस्तं तृतीयम्**। अत्रापि मात्रशब्दो व्याप्त्यर्थः। क्षत्रियादित्यपि नियमो नास्ति—अब्राह्मणगोत्रमात्रादिति, तेन वैश्यगोत्रादपि भवति। भाण्डिजङ्घकर्णखरकौ वैश्यौ, ताभ्यामत इञ्, तदन्तात्फको लुक्। व्यापकत्वाच्चेदमुपन्यस्तं **वृत्तिकारेण**॥ ५८॥

**भावबोधिनी**

* अब्राह्मणगोत्रमात्र से युव प्रत्यय के लुक् का उपसंख्यान करना चाहिये। * उदा०—बुधस्य गोत्रापत्यम्—इस अर्थ में क्षत्रिय गोत्रवाची प्रत्यय न होने पर—बुध + इञ् = बौधिः बना है। बौधेः युवा अपत्यम्—इस अर्थ में 'यञिञोश्च' (पा. सू. ४.१.१०१) सूत्र से फक् होता है, उसका लुक् हो जाता है। अतः पिता और पुत्र दोनों का 'बौधिः' कहते है। जाबालिः पिता, जाबालिः पुत्रः। [यहाँ जबालस्य गोत्रापत्यम् अर्थ में इञ् करके जाबालिः बनता है। इससे युवापत्य अर्थ में 'फक्' होता है। उसका लुक हो जाता है।] औदुम्बरिः पिता, औदुम्बरिः पुत्रः। [उदुम्बरस्य अपत्यम् इस अर्थ में इञ् करने के बाद औदम्बरि का युवा अपत्य इस अर्थ में फक् होता है उसका लुक् हो जाता है। अतः पिता और पुत्र दोनों के लिए एक सा शब्द है।] ये तीनों उदाहरण ब्राह्मणभिन्न-क्षत्रियगोत्र के हैं। अब वैश्य गोत्र के उदाहरण दिये जा रहे हैं—] भाण्डीजङ्घिः पित्रा भाण्डीजङ्घिः पुत्रः। [भाण्डीजङ्घस्य अपत्यम्—इस अर्थ 'इञ्' करने के बाद युवा अपत्य अर्थ में 'फक्' हो जाता है, उसका लुक् हो जाने से पिता और पुत्र दोनों के लिये लिए एक सा शब्द प्रयुक्त होता है। कहीं-कही ह्रस्व इकार वाला—'भाण्डिजङ्घिः रूप भी मिलता है।]

उपर्युक्त उदाहरणों में "साल्वावयव-प्रत्यग्रकलकूटाश्मकादिञ्' (पा. सू. ४।१।१७३) सूत्र से इञ् प्रत्यय होता है, उसके बाद 'यञिञोश्च' (पा. सू. ४।१।१०१) से फक् हो जाता है, उसका लुक् हो जाता है। पैलादिगण में इन शब्दों का दर्शन (पाठ) होने से (युवार्थक प्रत्यय का लुक्) सिद्ध हो जाता है। [अतः वार्त्तिक की आवश्यकता नहीं है।]

**विमर्श**—प्रस्तुत सूत्र पर भाष्य में तीन वार्त्तिक हैं-(१) "अणिञोर्लुकि तद्राजाद् युवप्रत्ययस्योपसंख्यानम्'। (२) 'अणिञोर्लुकि क्षत्रियगोत्रमात्राद् युवप्रत्ययस्योपसंख्यानम्'। (३) अब्राह्मणगोत्रमात्राद् युवप्रत्ययस्योपसंख्यानम्।" इन तीनों के अलग-अलग उदाहरण भी दिये गये हैं। परन्तु काशिकाकार ने केवल अन्तिम वार्त्तिक ही उद्धृत किया है। इसका रहस्य यह है कि मात्र शब्द व्याप्त्यर्थक है, अतः ब्राह्मणगोत्र से जो भी भिन्न हो, वह चाहे क्षत्रियगोत्र हो या वैश्यगोत्र ही—सभी से विहित युवा प्रत्यय का लुक् हो जाता है। उक्त उदाहरण में प्रथम तीन क्षत्रियगोत्र के हैं और अन्तिम वैश्य गोत्र का है।

काशिकाकार ने अपना मत यह दिया है कि आगे पैलादिगण आकृतिगण है। उसी में इन शब्दों का भी पाठ करके युवा प्रत्यय का लुक् करना संभव है। किसी अतिरिक्त वचन की कोई आवश्यकता नहीं है—पैलादिदर्शनात् सिद्धम्॥ ५८॥

## ५९३. पैलादिभ्यश्च ॥ ५९ ॥ (१०८४)

**'पैल' इत्येवमादिभ्यश्च युवप्रत्ययस्य लुग् भवति। 'पीलाया वा' (४.१ ११८) इत्यण्। तस्माद् 'अणो द्व्यचः' (४ १ १५६) इति फिञ्, तस्य लुक्। पैलः पिता। पैलः पुत्रः। अन्ये पैलादय इञन्ता, तेभ्यः 'इञः प्राचाम्' (१.४.६०) इति लुकि सिद्धेऽप्रागर्थः पाठः।**

**पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि। औदमेघि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षिति। भौलिङ्गि। औद्गाहमानि। औज्जिहानि[1] ॥ तद्राजाच्चाणः (ग० सू० २१)। आकृतिगणोऽयम् ॥**

**न्यासः**

**पैलादिभ्यश्च ॥ पीलाया वेत्यणिति।** तत्र हि 'शिवादिभ्योऽण्' इत्यतोऽण्ग्रहणानुवृत्तेः। **अन्ये पैलादय इञन्ता इति।** अत्रौदञ्चिशब्दो बाह्वादित्वादिञन्तः। बाह्वादिषु ह्युदञ्चुशब्दः पठ्यते। 'उकारोच्चारणमतन्त्रम्' धातुप्रदर्शनार्थत्वात्। उदञ्चतीति 'ऋत्विक्' इत्यादिना सूत्रेण क्विन्। उदचोऽपत्यमौदञ्चिः। निपातनाद् 'अनिदिताम्' इत्यादिना नलोपो न भवति, 'अचः' इत्यकारलोपश्च। भौलिङ्गिशब्दः शाल्वावयव इञन्तः। शेषास्तु 'अत इञ्' इतीञन्ता वेदितव्याः। शालङ्किरिति पठ्यते, स कथम्, यावता नडादिषु शलङ्कु शलङ्कञ्चेति पाठात् शालङ्कायन इति भवितव्यम्? प्रकृत्यन्तरं शलङ्कुशब्दोऽस्ति, ततोऽयमिञ् विहित इत्येके। अस्मादेव निपातनाच्छलङ्कुशब्दादिञिति विज्ञायते, तत्सन्नियोगे च शलङ्कादेश इत्यपरे। **तद्राजाच्चाण**

**पदमञ्जरी**

**पैलादिभ्यश्च ॥** पीडयतेः पचाद्यचि कपिलादिदर्शनादस्य लत्वे पीला। **अन्ये पैलादय इञन्ता इति।** तत्र बाह्वादिषु 'उदञ्चु' इति पठ्यते। उकार उच्चारणार्थः, क्विनि नोपधत्वं निपात्यते। औदञ्चिः। 'अचः' इत्यकारलोपः, 'उद ईत्' इतीत्वं च न भवति; लुप्तनकारस्य तत्र ग्रहणात्। भूलिङ्गशब्दः शाल्वावयवः। सात्यकिशब्दमपि केचित्पठन्ति, सोऽपि बाह्वादीञन्तः। सत्यकशब्दाद् 'ऋष्यन्धक' इत्यणा भाव्यम्। शेषा अत इञन्ताः। **शालङ्किरिति।** अस्मादेव निपातनाच्छलङ्कोरिञ्, शलङ्कादेशश्च। **तद्राजाच्चाण इति।** तद्राजसंज्ञका-

**भावबोधिनी**

'पैल' आदि के शब्दों से होने वाले युव प्रत्यय का लुक् हो जाता है। 'पीला' शब्द से गोत्रापत्य अर्थ में 'पीलाया वा' ( पा. सू. ४।१।११८ ) सूत्र से अण् होता है। पीला + अण् आदिवृद्धि, भसंज्ञा और आलोप करने पर 'पैलः' बनता है। ] इससे 'अणो द्व्यचः' ( पा. सू. ४।१।१५६ ) सूत्र से फिञ् होता है, उसका लुक् [ प्रस्तुत सूत्र से ] होता है। अतः पैलः पिता, तथा पैलः पुत्रः यही रूप होता है। पैलादिगण में [ द्व्यच् से ] भिन्न जो इञन्त पैलादि शब्द हैं उनसे तो अग्रिम ''इञः प्राचाम्'' ( पा. सू. २।४।६० ) सूत्र से ही युवा प्रत्यय का लुक् सिद्ध है ऐसी स्थिति में यहाँ उनका पाठ प्राग्देशीय गोत्र से भिन्न का ग्रहण कराने के लिये है।

इस गण में पठित शब्द--पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि औदमेघि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षिति। भौलिङ्गि। औद्गाहमानि। औज्जिहानि।

'तद्राजसंज्ञक अण् प्रत्यय से उत्तरवर्ती युवा प्रत्यय का लुक् होता है।' [ जैसे—अङ्गस्य अपत्यम्--इस अर्थ में ''द्व्यञ्मगधकलिङ्गसूरमसादण्' सूत्र से अण् होता है—आङ्गः। तस्य युवा अपत्यम्--इस अर्थ में 'अणो द्व्यचः' सूत्र से फिञ् होता है उसका लुक् हो जाता है। अतः पिता और पुत्र दोनों 'आङ्ग' ही कहे जाते हैं।' ] यह आकृतिगण है।

**विमर्श**--पैलादिगण में 'पैल' के अतिरिक्त सभी शब्द इञ् प्रत्ययान्त है। आगे 'इञः प्राचाम्' ( २।४।६० ) सूत्र युव प्रत्यय का लुक् करने वाला है ही। अतः यहाँ उनके पाठ का क्या प्रयोजन? इस शंका का समाधान यह है कि

१. अत्र-रागक्षति, राणि, सौमनि, ऊह्मानि—एतेऽपि शब्दाः क्वचिदुपलभ्यन्ते।

**५९४. इञः प्राचाम् ॥ ६० ॥ (१०८५)**

**गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुग् भवति । गोत्रविशेषणं प्राग्ग्रहणम्, न विकल्पार्थम् । पान्नागारेरपत्यं युवा । 'यञिञोश्च' ( ४.१.१०१ ) इति फक्, तस्य लुक् । पान्नागारिः पिता । पान्नागारिः पुत्रः । मान्थरैषणिः पिता । मान्थरैषणिः पुत्रः ।**

**प्राचामिति किम् ? दाक्षिः पिता । दाक्षायणः पुत्रः ॥**

**न्यासः**

**इति** । तद्राजसंज्ञकाच्चाण उत्तरस्य युवप्रत्ययस्य लुग् भवति । अङ्गस्यापत्यमिति 'द्व्यञ्मगध' इत्यादिनाऽण्—आङ्गः, तस्यापत्यं युवा आङ्ग एव । 'अणो द्व्यचः' इति फिञ् तस्यानेन लुक् ॥ ५९ ॥

**इञः प्राचाम्** ॥ अन्यत्र प्राग्ग्रहणं विकल्पार्थं दृष्टम्, अत इहापि विकल्पो मा विज्ञायीत्याह—**गोत्रविशेषणमित्यादि** ॥ ६० ॥

**पदमञ्जरी**

दणः परस्य युवप्रत्ययस्य लुग्भवति । 'द्व्यञ्मगध' इत्यणन्तादाङ्गशब्दात् 'अणो द्व्यचः' इति फिञो लुक् । आङ्गः पिता, आङ्गः पुत्रः । तदेवं गणवाक्यमेतदेकम्, पूर्वपठितानि त्रीणीति चत्वारि यथोत्तरमधिकविषयाणि ॥ ५९ ॥

**इञः प्राचाम्** ॥ 'प्राचामवृद्धम्' इत्यादौ प्राग्ग्रहणं विकल्पार्थम्, इह तु न तथेत्याह—**गोत्रविशेषणमिति** । युवप्रत्ययस्य लुग्विधानादर्थादाक्षिप्तं गोत्रमिति भावः । पन्नम् = प्राप्तम् अगारं येन स पन्नागारः । मन्थरा = मन्दीभूता एषणा यस्य स मन्थरैषणः ॥ ६० ॥

**भावबोधिनी**

अग्रिम सूत्र प्राग्देश के गोत्रवाले शब्दों से ही लुक् करता है । अतः उनसे भिन्न गोत्र शब्दों से युवा प्रत्यय का लुक् करने के लिये प्रस्तुत सूत्र में इञ्प्रत्ययान्त शालङ्कि, सात्यकि आदि का पाठ है ।

'तद्राजाच्चाणः' यह गण सूत्र है । और पैलादिगण आकृतिगण है । इसी आधार पर पूर्ववर्त्ती सूत्र में वृत्तिकार ने वार्तिक का खण्डन किया है ॥ ५९ ॥

गोत्र अपत्य अर्थ में जो इञ् प्रत्यय होता है, तदन्त शब्द से परे युवा प्रत्यय का लुक् होता है । यहाँ 'प्राक्' यह गोत्र का विशेषण है––प्राग्देशीय गोत्र, न कि विकल्पार्थक है । उदाहरण––पान्नागारेः अपत्यं युवा––इस अर्थ में 'पान्नागारि' इस इञ्-प्रत्ययान्त शब्द से 'यञिञोश्च' ( पा.सू. ४।१।१०१ ) सूत्र से फक् प्रत्यय होता है, उसका लुक् इस सूत्र से होता है । अतः पान्नागारिः पिता पान्नागारिः पुत्रः–– ऐसा एक ही रूप होता है । [ पन्न प्राप्त किया है अगार=गृह आदि जिसने वह पन्नागार है । पन्नागारस्य गोत्रापत्यम्––इस अर्थ में 'अत इञ्' सूत्र से इञ् होकर आदिवृद्धि करने पर––पान्नागारि बनता है । युवा अर्थ में होने वाले प्रत्यय का लुक् हो जाता है । ] मान्थरैषणिः पिता, मान्थरैषणिः पुत्रः । [ मन्थरा = मन्द हो गयी है––एषणा जिसकी वह 'मन्थरैषण' है । उसका गोत्रापत्य अर्थ में इञ् करने पर आदि वृद्धि करके––मान्थरैषणिः बनता है । पुनः युवा अर्थ में फक् होता है, उसका लुक् हो जाता है ]

प्राग्देशीय गोत्र से––इसका क्या फल है ? दाक्षिः पिता, दाक्षायणः पुत्रः । [ दक्ष यह पूर्व का न होकर पश्चिम देश का है । इससे गोत्रापत्य अर्थ में इञ् करने पर––'दाक्षिः' बनता है । पुनः युवा अपत्य अर्थ में 'यञिञोश्च' ( पा. सू. ४।१।१०१ ) से फक् होता है । इसका लुक् नहीं होता है । फ्=आयन् आदि करने पर रूप बनता है । आचार्य पाणिनि की माता इसी गोत्र की थी । इसी लिये 'दाक्षीपुत्रस्य पाणिनेः' यह प्रसिद्ध है ॥ ६० ॥

## ५९९. न तौल्वलिभ्यः ॥ ६१ ॥ (१०८६)

**अनन्तरेण प्राप्तो लुक् प्रतिषिध्यते । तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग्भवति । तौल्वलिः पिता । तौल्वलायनः पुत्रः ।**

**तौल्वलि । धारणि । रावणि । पारणि । दैलीपि । दैवलि दैवमित्रि । दैवयज्ञि । प्रावाहणि । मान्धातकि । आनुहारति । श्वाफल्कि । आनुमति । आहिंसि । आसुरि । आयुधि । नैमिषि । आसिबन्धकि । बैकि । आन्तरहाति । पौष्करसादि । वैरकि वैलकि । वैहति । वैकर्णि । कारेणुपालि । कामालि[२] ॥**

### न्यासः

**न तौल्वलिभ्यः** ॥ तौल्वल्यादिष्वान्तरहातिशब्दः पौष्करसादिशब्दश्च बाह्वादी इञन्तौ । बाह्वादिषु ह्यन्तरहच्छब्दः पुष्करसच्छब्दश्च पठ्यते; अत्रोभयपदवृद्धिश्चानुशतिकादित्वात् । शेषास्त्वत इञितीञताः ॥ ६१ ॥

### पदमञ्जरी

**न तौल्वलिभ्य** ॥ 'तुल उपमाने' (धा० पा० १५९९), औणादिको वलच् । तुल्वलः । धारयतिपारयतिभ्यां नन्द्यादिल्युः—धारणः, पारणः । देवा मित्रमस्येति देवमित्रः । देवेभ्यो योऽस्य देवयज्ञः । 'पुष पुष्टौ' (धा० पा० ७००) क्यप्, पुष्यः । विलक्षणौ कर्णावस्य विकर्णः । करेणुं पालयति करेणुपालः । 'असु क्षेपणे' (धा० पा० १२०९) कुरच्—असुरः । 'हृञ् हरणे' (धा० पा० ८९९) अनुपूर्वाल्लिटः शत्रादेशः, अनुहरत्, पुष्करे सीदतीति पुष्करसत्, बाह्वादी अनुशतिकादी च । परिशिष्टाः पारायणे द्रष्टव्याः ॥ ६१ ॥

### भावबोधिनी

अव्यवहित पूर्ववर्ती सूत्र से प्राप्त होने वाले लुक् का निषेध किया जाता है । गोत्रवाची तौल्वलि आदि शब्दों से परे 'युवा' प्रत्यय का लुक् नहीं होता है । उदा० [तुल्वलस्य गोत्रापत्य इस अर्थ में इञ् प्रत्यय और आदिवृद्धि करने पर] तौल्वलिः पिता, [तौल्वलेः युवा अपत्यम्—इस अर्थ में फक् = आयन प्रत्यय का लुक् प्राप्त है, उसका निषेध हो जाने से] तौल्वलायनः पुत्रः यह रूप होता है । इस गण में पठित शब्द—तौल्वलि । धारणि । रावणि । पारणि । दैलीपि । दैवलि । दैवमित्रि । दैवयज्ञि । प्रावाहणि । मान्धातकि । आनुहारति । श्वाफल्कि । आनुमति । आहिंसि । आसुरि । आयुधि । नैमिषि । आसिबन्धकि । बैकि । आन्तरहाति । पौष्करसादि । वैरकि । वैलकि । वैहति । वैकर्णि । कारेणुपालि । कामालि ।

**विमर्श**—इस गण में पठित शब्द इञ्प्रत्ययान्त हैं । उपमानार्थक 'तुल' धातु से औणादिक वलच् करके 'तुल्वल' बनता है । इञ् प्रत्यय और आदिवृद्धि, भसंज्ञा तथा अलोप करने पर 'तौल्वलिः शब्द बना है । इससे युवा प्रत्यय अर्थ में फक् फ् आयन् होने पर इलोप होने से 'तौल्वलायनः' यह पुत्र के अर्थ में बनता है । णिजन्त 'धृ' और 'पृ' धातुओं से ल्युट् = अन प्रत्यय, का गुण रपर, णि का लोप, न का ण करने पर—धारण, पारण शब्द बनते हैं । युवा अत्यय अर्थ में धारणायणः, पारणायणः, बनते हैं ।

पदमंजरी के अनुसार 'पुष्य' शब्द का इञ् प्रत्ययान्त रूप भी होना चाहिये—पौषि ।

अनु पूर्वक हृ धातु से शत् प्रत्यय—'अनुहरत्' से और पुष्करे तीर्थविशेष में सीदति—इस अर्थ में पुष्करसत् बनाकर 'बाह्वादिभ्यश्च' (पा. सू. ४. १. ९६) से इञ् प्रत्यय और "अनुशतिकादीनां च" (पा. सू. ७.३.२०) उभयपदवृद्धि करने से 'आनुहारति' और 'पौष्करसादि' बनते है । युवा प्रत्यय 'फक्' का लुक् न होने से आनुहारतायनः' और 'पौष्करसादायनः रूप बनते हैं ॥ ६१ ॥

---

२. अत्र-रान्धकि, आसुराहति, प्राणाहति, पौष्कि कान्दकि, दौषकगति—एते शब्दा अपि पुस्तकान्तरे दृश्यन्ते ।

## ५९६. तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ ६२ ॥ (११९३)

**'ते तद्राजाः' ( ४.१.१७२ ) 'ञ्यादयस्तद्राजा' (५.३.११९) इति वक्ष्यति, तस्य तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्त्तमानस्यास्त्रीलिङ्गस्य लुग्भवति, तेनैव चेत्तद्राजेन कृतं बहुत्वं भवति । अङ्गाः । वङ्गाः । पुण्ड्राः ।**

### न्यासः

**तद्राजस्य बहुषु तेनैवास्त्रियाम्** ॥ **बहुषु वर्त्तमानस्येति** । बहुष्वर्थेषु वर्त्तमानस्येत्यर्थः । अथ 'बहुवचने परतः' इत्येवं कस्मान्न व्याख्यायते ? अशक्यमेवं वक्तुम्, यतः संख्यावाची बहुशब्दो न बहुवचनवाची । यदि तु 'बहुवचने परतः' इत्ययमर्थोऽत्राभिमतः स्यात्, अस्त्रियामिति प्रतिषेधं न कुर्यात्, प्राप्त्यभावात् । न हि तद्राजान्तादुपन्नेन स्त्रीप्रत्ययेन व्यवहिते बहुवचने परतो लुकः प्राप्तिरस्ति । किञ्च, अत्त्रय इत्यत्र बहुवचने परतो लुकि विधीयमान उदात्तनिवृत्तिस्वरः प्रसज्येत । कथम् ? अत्त्रेरपत्यानि बहूनीति 'इतश्चानिञः' इति ढकि तस्य 'तद्धितस्य कितः' इत्यन्तोदात्तत्वे कृते बहुवचने जसि परतः 'अत्त्रिभृगुकुत्सवसिष्ठ' इत्यादिना लुकि कृते 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वं प्राप्नोति । तस्माद् बहुषु वर्त्तमानस्येत्ययमेवार्थः । बहुष्विति च तद्राजान्तस्य विशेषणम्, न तद्राजस्य; अन्यथा हि द्वन्द्वे दोषः प्रसज्येत—आङ्गश्च वाङ्गश्च सौह्मश्चाऽङ्गवसुह्मा इत्यत्र लुङ् न स्यात् न ह्यत्र तद्राजो बहुषु वर्त्तते, तदन्तस्तु वर्त्तते युगपदधिकरणवचनो हि द्वन्द्व इति कृत्वा । तद्राजान्तस्यैवेदं विशेषणम्, न तद्राजस्य ।

'तद्राजसंज्ञकस्य प्रत्ययस्य बहुषु वर्त्तमानस्यास्त्रीलिङ्गस्य लुग् भवति' इत्ययं तु **वृत्तिग्रन्थ** एवमुन्नेयः—बहुषु वर्त्तमानस्यास्त्रीलिङ्गस्य तद्राजान्तस्य यः सम्बन्धी तद्राजसंज्ञकः प्रत्ययस्तस्य तद्राजसंज्ञकस्य प्रत्ययस्य लुग्

### पदमञ्जरी

**तद्राजस्य बहुषु तेनैवास्त्रियाम्** ॥ इह बहुष्वित्यनेन जसादिबहुवचनं वा गृह्येत ? अर्थो वा ? आद्ये पक्षेऽयमर्थो भवति—जसादिषु बहुवचनेषु परतस्तद्राजस्यास्त्रीलिङ्गस्य लुगिति । द्वितीये—बहुष्वर्थेषु वर्तमानस्येति । बहुवचनशब्दे हि जसादिषु विनियुक्ते तदेकदेशेन बहुशब्देनापि जसादि शक्यं लक्षयितुम् । संज्ञानामेकदेशस्यापि प्रयोगदर्शनाद् भीमो भीमसेनः, सत्या सत्यभामेति । जसादीनां च बहुत्वाद् बहुष्विति बहुवचनोपपत्तिः । नन्वेवमपि मुख्यत्वादर्थग्रहणमेव युक्तम् ? सत्यम्; तेनैव ग्रहणादस्य पक्षस्य सम्भवः । तद्धि प्रियवाङ्गा इत्यादौ बहुवचनं परमिति लुकः प्रसक्तस्य निवृत्तये कृतम् । अर्थग्रहणे चात्र तद्राजस्य बहुत्वे वृत्त्यभावादेव लुकोऽप्रसंगः । यद्येवम्, अस्मादेव लिङ्गाद् बहुबचनस्यैव निश्चयादर्थग्रहणस्यासम्भवः ? उच्यते—अस्त्रियामिति प्रतिषेधादस्य पक्षस्य सम्भवः । तद्धयाङ्ग्य स्त्रिय इत्यादौ तद्राजस्य बहुषु वर्तमानस्य लुङ् मा भूदिति कृतम् । बहुवचनग्रहणे चात्र स्त्रीप्रत्ययेन व्यवधानादेव लुकोऽप्रसङ्गः । न चाम्बष्ठस्यापत्यानि बह्व्यः स्त्रियः 'वृद्धेत्कोसलाजादाञ् ञ्यङ्' 'यङश्चाप्' आम्बष्ठ्या इत्यत्रैकादेशस्यान्तवद्भावादव्यवधानाल्लुक्प्रसङ्गः; एकादेशस्य पूर्वविधौ स्थानिवद्भावादत्रापि चापा व्यधानात् । तदेवं लिङ्गद्वयदर्शनात्पक्षद्वयसम्भवः ।

एवमुत्तरेष्वपि योगेषु द्रष्टव्यम् । तत्राद्ये पक्षेऽतिक्रान्तोऽङ्गानत्यङ्गः, अतिगर्गः, अङ्गेभ्य आगतोऽङ्गरूप्यः, गर्गरूप्य इयादौ बहुवचनपरत्वाभावाल्लुङ् न स्यात् । न च वृत्त्यर्थे वाक्ये यच्छसादि बहुवचनं तत्रैव परतस्तस्यामेवा-

### भावबोधिनी

"ते तद्राजाः" (पा. सू. ४ । १ । १७२) और "ञ्यादयस्तद्राजाः" (पा. सू. ५ । ३ । ११९) ये आगे कहे जायेंगे । वह तद्राज प्रत्यय जो बहुवचन में विद्यमान है । स्त्रिलिंग नहीं है, उसका लुक् हो जाता है यदि वह बहुत्व उसी तद्राजसंज्ञक प्रत्यय के द्वारा किया गया हो तो । उदा० [अङ्गस्य अपत्यानि बहूनि—इस अर्थ में 'द्व्यञ्मगधकलिङ्ग" (पा. सू. ४.१.१७१) से अण् प्रत्यय होता है इससे एकवचन और द्विवचन में—आङ्गः, आङ्गौ बनते है किन्तु बहुवचन में

**सुह्माः। मगधाः (४.१.१७१) लोहध्वजाः। व्रीहिमन्तः (५.३.११२)।**

**तद्राजस्येति किम्? औपगवाः। बहुष्विति किम्? आङ्गः। 'तेनैव' ग्रहणं किम्? प्रियो वाङ्गो येषां त**

**न्यासः**

भवतीति। कथम्? तद्राजान्तस्यैवैतत् सामर्थ्यंलब्धम्। न ह्यतद्राजान्तस्य तद्राजसंज्ञकः प्रत्ययः सम्बन्धी भवति। सूत्रेऽप्यन्तग्रहणं न कृतम्, प्रत्ययग्रहणपरिभाषयैव तदन्तस्य लब्धत्वात्। तथापि प्रत्ययान्तस्य लुगुच्यमानः प्रत्ययमात्रस्यैव विज्ञायते, 'प्रत्ययस्य लुक्श्लुलुपः' इति प्रत्ययादर्शनस्यैव लुक्संज्ञाविधानात्। **तेनैव चेदिति**। तद्राजप्रत्ययान्तेनैवेत्यर्थः। **अङ्गा वङ्गा सुह्मा इति**। अङ्गस्यापत्यानि बहूनि। 'द्व्यच्मगध' इत्यादिनाऽण्, तस्य लुक्। **लोहध्वजाः, व्रीहिमन्त इति**। 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इति ञ्यप्रत्ययः, तस्य लुक्।

**औपगवा इति**। प्राग्दीव्यतोऽण्'। **प्रियवाङ्गा इति**। बहुव्रीहिः। नात्र तद्राजप्रत्ययेन बहुत्वं कृतम्, किं तर्हि? समासेन। न चासौ तद्राजप्रत्ययान्तः, ततस्तद्रास्याविहितत्वात्। यद्येवम्, द्वन्द्वोऽपि तद्राजप्रत्ययान्तो

**पदमञ्जरी**

वस्थायां लुग्लभ्यतेऽन्तरङ्गत्वादिति वाच्यम्; 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' (व्या० परि० १२८) इति वचनात्। न च लुप्तेऽपि तस्मिन्प्रत्ययलक्षणेन लुग्लभ्यः, 'न लुमताङ्गस्य' इति निषेधात्। ननु च न लुगङ्गस्य कार्यम्, किं तर्हि? तदेकदेशस्य प्रत्ययमात्रस्य, अङ्गरूप्य इत्यादौ च समर्थात्तद्धितोत्पत्तेः वृत्त्यर्थे वाक्ये यद्बहुवचनमङ्गेभ्य इत्यादि तत्रैव लुक् भविष्यति। इदं तर्हि—अत्रेरपत्यानि बहूनि 'इतश्चानिञः' इति ढक्, तस्य 'कितः' इत्यन्तोदात्तत्वम्, तस्य जसि परतः 'अत्रिभृगु' इति लुकि कृते उदात्तनिवृत्तिस्वरः प्राप्नोति, तस्माद् द्वितीयं पक्षमाश्रित्याह—**बहुषु वर्तमानस्येति**।

नन्वत्रापि पक्षे आङ्गश्च वाङ्गश्च सौह्माश्च अङ्गवङ्गसुह्माः गार्ग्यश्चवात्स्यश्च वाजयश्च गर्गवत्सवाजा इत्यादौ द्वन्द्वे लुग्न स्यात्; अत्र ह्येकैवस्मिन्नेवार्थे प्रत्यय उत्पन्नः, पूर्वत्र तु पक्षेऽन्तिमस्यापि तावत्सिद्ध्यति, बहुवचनपरत्वात्? नैष दोषः; युगपदधिकरणतायां द्वन्द्वः, तत्रैकैकस्य वर्त्तिपदस्य बह्वर्थकत्वाल्लुग्भविष्यति। नन्वेवमपि तद्धिते उत्पत्तिदशायामेकैकस्मिन्नेवार्थे उत्पन्न इति तद्राजो यो बहुषु यञ् यो बहुषु अञ् यो बहुष्वित्युच्यमानो लुङ् न स्यादेव। नन्वत्र बहुष्वित्यनेन न प्रत्ययमात्रं विशेष्यते, किं तर्हि? प्रत्ययग्रहणपरिभाषया तदन्तग्रहणे सति तदन्तं विशेष्यते—तद्राजान्तं यद्बहुषु यञन्तं यद्बहुषु अञन्तं यद्बहुष्विति। यद्येवम्, कश्यपस्यापत्यं काश्यपः, विदाद्यञ्, तस्य प्रतिकृतय इति 'इवे प्रतिकृतौ' इति कन् तस्य 'जीविकार्थे चापण्ये' इति देवपथादिषु अर्चासु पूजनार्थास्विति पाठाद्वा लुपि कृते काश्यपा इत्यञन्तस्य प्रतिकृतिबहुत्वे लुक् प्राप्नोति? नैष दोषः; 'यञञोश्च' इत्यत्र 'यस्कादिभ्यो 'गोत्रे' इत्यतो 'गोत्रे' इत्यनुवर्तते, तेन गोत्रबहुत्वे लुक् प्रतिकृतिबहुत्वे न भविष्यति। नन्वेवमप्याङ्गस्यैकस्य प्रतिकृतयो बह्व्य इति तद्राजान्तस्य बहुषु वृत्तेर्लुक्प्रसङ्गः। नह्यत्रेदमस्ति—तद्राजान्तं यदपत्यं बहुत्वे वर्तत इति। एवं तर्हि तेनैव ग्रहणमस्मिन्पक्षे न कर्तव्यमित्युक्तं तदत्रोपयोक्ष्यामहे—यस्मिन्नर्थे लुग्भावी प्रत्यय उत्पन्नस्तेनैव चेत्कृतं बहुत्वमिति। इह चापत्ये प्रत्यय उत्पन्नः प्रतिकृतिकृतं बहुत्वम्।

**भावबोधिनी**

अण् का लुक् हो जाने से वृद्धि रहित रूप ही होता है] अङ्गाः। इसी प्रकार बङ्गाः, पुण्ड्राः सुह्माः, मगधाः, लोहध्वजाः, व्रीहिमन्तः। तद्राज प्रत्यय का लुक् होता है।—इसका क्या फल है? औपगवः। [यहाँ उपगोरपत्यम् इस अर्थ में 'उपगु' से प्रत्यय है। तद्राजसंज्ञक नहीं है। अतः बहुवचन में लुक् नहीं होता है।

बहुवचन में—इसका क्या फल है? आङ्गः [यह एकवचन में है अतः प्रत्यय का लुक् नहीं होता है।] उस तद्राजसंज्ञक

**इमे प्रियवाङ्गाः (म० भा०)। अस्त्रियामिति किम्? आङ्ग्यः स्त्रियः (म० भा०)॥**

**न्यासः**

न भवतीति तत्रापि लुग् न स्यात्? नैतत् यदि द्वन्द्वोऽपि तद्राजप्रत्ययान्तो न भवति, तथापि प्रत्येकं द्वन्द्वावयवास्तद्राजप्रत्ययान्ता बह्वर्थाश्चेति तत्र भवत्येव लुक्।

न च बहुष्वित्यर्थग्रहणम्, यश्च बह्वर्थस्तत्रावश्यमेव तत्कृतेन बहुत्वेन भवितव्यम्, तत् किं तेनैवेत्यनेन? एवं मन्यते—अन्तरङ्गत्वात् तद्राजप्रत्ययोत्पत्तिवेलायां यद्बहुत्वमुपजायते तदेव यदि गृह्येत, न तु तत्पदान्तरापेक्षम्, ततश्च द्वन्द्वेषु लुग् न स्यात्। तेनैवग्रहणं तु द्वितीयोऽयं यत्न इति—यः प्रत्ययान्तस्य बहुत्वं तेनैव क्रियते, यच्च पदान्तरापेक्षेणापि तत्र सर्वत्र भवतीति। यद्येवम्, इहापि प्राप्नोति—प्रियवाङ्गा इति? नैष दोषः एवकारो ह्यत्र क्रियते। स तुल्यजातीयापेक्षयैव नियमं करोति, लोपिभिरेव यत् कृतं बहुत्वमिति। न च प्रियवाङ्गा इत्यत्र लोपिभिरेव कृतं बहुत्वम्, यस्मादत्र किञ्चिल्लोपि पदं किञ्चिदलोपि, एवञ्च नियमे सति द्वन्द्वोऽपि यत्र लोप्यलोपिनां तत्रापि न भवति—'गार्ग्यकाश्यपगालवानाम्' इति, अत्र गार्ग्यकाश्यपयोः 'यञिञोश्च' इति लोपः प्राप्नोति। गालवस्य तु ऋष्यणन्तत्वान्नास्ति लुकः प्राप्तिः। **आङ्ग्य इति**। 'टिड्ढाणञ्' इति ङीप्॥ ६२॥

**पदमञ्जरी**

यद्येवम्, आङ्गस्यापत्यानि 'अणो द्व्यचः' इति फिञ्, तस्याब्राह्मणगोत्रमात्रादिति वा तद्राजाच्चाणः' इति वा लुक्, अङ्गाः, बैदस्यापत्यानि 'अत इञ्' 'ण्यक्षत्रिय' इति लुक्, बिदाः, अत्र गोत्रे प्रत्ययः उत्पन्नो युवकृतं चात्र बहुत्वमिति लुक् न स्यात्? नैष दोषः; तेनैवेत्यस्य तज्जातीयेनैवेत्यर्थः, युवा चापत्यतया तज्जातीयो न प्रतिकृतिः। एवं च कृत्वा द्वन्द्वो यदा लोपिनामलोपिनां च भवति तदा न भवति—आङ्गदेवदत्तयज्ञदत्ताः, गार्ग्यदेवदत्तयज्ञदत्ताः। इह तु भार्गवश्च वात्स्यश्चाग्रायणश्च भृगुवत्साग्रयणा इति, यद्यपि नलोपिभिरेव कृतं बहुत्वम्, आग्रायणे नडादिफको लुगभावात्; तथाप्यपत्यतया तज्जातीयत्वमस्तीति लुग्भवत्येव। यद्येवम्, गार्ग्यश्च काश्यपश्च गालवश्च गार्ग्यकाश्यपगालवानामित्यत्र गालवे ऋष्यणो लुगभावेऽप्यपत्यतया तज्जातीयत्वाद्यञञोर्लुक्प्रसङ्गः। एवं तर्हि भृगुवत्साग्रायणेषु 'अगार्ग्यकाश्यपगालवानाम्' इति निर्देशद्वयाल्लोपिभिरपत्यप्रत्ययैः कृते बहुत्वे विकल्पः। तदेवं तद्राजान्तस्य बहुत्वे वर्तमानस्येति स्थितम्। वृत्तौ तु तद्राजसञ्ज्ञकस्य प्रत्ययस्य बहुषु वर्तमानस्येति व्यधिकरणे षष्ठ्यौ, बहुषु वर्तमानस्यास्त्रीलिङ्गस्य तद्राजान्तस्य योऽवयवः प्रत्ययस्तस्येत्यर्थः। तेनैव चेत्तद्राजेनेति। अत्रापि तद्राजान्तेनेत्यर्थः। तद्राजेत्यपि लोपिप्रत्ययोपलक्षणम्। अङ्गगर्गलोहध्वजा इत्यादावपि भवतीत्याहुः। इहाङ्गस्यापत्यानि बहून्यङ्गास्तेषामपत्यं युवा युवानौ वा आङ्गः आङ्गाविति युवसङ्क्रान्तेः प्राग्गोत्रेऽलुगचीति प्रतिषेधाल्लुगभावः, पश्चात्तु बहुत्वाभावाद्। अचीति च विषयसप्तमी, तेन युवप्रत्यये पश्चाल्लुमता लुप्तेऽपि विषयभूत एव तस्मिन् प्रागेव लुकः प्रतिषेधः, लुप्तेऽपि वा प्रत्ययलक्षणेन। नन्वचीति वचनाद्वर्णाश्रयोऽयम्, नेत्याह; अचीति प्राग्दीव्यतीयस्य प्रत्ययस्य विशेषणं प्रत्ययश्च लुकि निमित्तम्।

**आङ्ग्यः स्त्रिय इति**। इह च आङ्गी च वाङ्गश्च सौह्मश्चेति द्वन्द्वे आङ्गीतिशब्देन स्त्रीत्वयुक्तानामभिधानात्तद्गणो लुग्न भवति, आङ्गीवङ्गसुह्मा इति भवतीत्याहुः॥ ६२॥

**भावबोधिनी**

के द्वारा ही बहुत्व किया गया हो—इसका क्या लाभ है? प्रियः वाङ्गः येषां ते इमे—प्रियवाङ्गाः। [इसमें बहुव्रीहि समास से बहुत्व की प्रतीति है, तद्राज प्रत्यय के द्वारा नहीं। अतः प्रत्यय का लुक् नहीं होता है।] स्त्रीलिङ्ग में नहीं—इसका क्या लाभ है? आङ्ग्यः स्त्रियः। [यहाँ स्त्रीलिङ्ग है अतः प्रत्यय का लुक् नहीं होता है।]। ६२॥

## ५९७. यस्कादिभ्यो गोत्रे ॥ ६३ ॥ (११४६)

**'बहुषु तेनैवास्त्रियाम्' इति सर्वमनुवर्तते। 'यस्क' इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु वर्त्तमानस्यास्त्रीलिङ्गस्य लुग्भवति, तेनैव चेद् गोत्रप्रत्ययेन कृतं बहुत्वं भवति। प्रत्ययविधेश्चान्यत्र लौकिकस्य गोत्रस्य ग्रहणमित्यनन्तरापत्येऽपि लुग्भवत्येव—यस्काः। लभ्याः। बहुष्वित्येव—यास्कः। तेनैवेत्येव प्रिययास्कः। अस्त्रियामित्येव-यास्क्यः स्त्रियः।**

**गोत्रे इति किम्? यास्काश्छात्राः।**

**यस्क। लभ्य। दुह्य। अयःस्थूण। तृणकर्ण। एते पञ्च शिवादिषु पठ्यन्ते। ततः परेभ्यः षड्भ्य[1] इञ्। सदामत्त। कम्बलभार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। बकसक्थ। ततः परेभ्यश्चतुर्भ्यः 'गृष्टचादि-**

**न्यासः**

**यस्कादिभ्यो गोत्रे॥** 'अपत्यं पौत्रप्रभृति गोत्रम्' इति पारिभाषिकमेवेदं गोत्रं गृह्यते, न लौकिकमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह—**प्रत्ययविधेश्चान्यत्रेत्यादि**। एतच्चोभयगतिरिह शास्त्रे सम्भवतीति लभ्यते। लौकिके गोत्रे गृह्यमाणे शास्त्रीयमपि तत्रान्तर्भवति; प्रत्ययविधौ तु लौकिकगोत्रस्य ग्रहणं न भवतीति ज्ञापकात्। यदयम्—'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्' इत्यत्र गोत्रग्रहणं कृत्वा राजन्यग्रहणं करोति, तज् ज्ञापयति—प्रत्ययविधौ लौकिकगोत्रग्रहणं न भवतीति।

**यास्काश्छात्रा इति।** 'तस्येदम्' इत्यण्। पुष्करसच्छब्दोऽप्यत्र पठ्यते, स किमर्थः, यावता 'बह्वच इञ् प्राच्यभरतेषु' इत्येव सिध्यति? न सिध्यति; 'न गोपवनादिभ्यः' इति प्रतिषेधः प्राप्नोति। गोपवनादिषु हि कैश्चित् तौल्वल्यादयश्चेति पठ्यते, तौल्वल्यादिषु पुष्करसच्छब्दः पठ्यते, तौल्वल्यादीनाञ्च गोपवनादिषु पाठोऽस्ती-

**पदमञ्जरी**

**यस्कादिभ्यो गोत्रे॥ प्रत्ययविधेश्चान्यत्रेति।** गोत्रे यत्र प्रत्ययो विधीयते 'गोत्रे कुञ्जादिभ्यश्च्फञ्' इत्यतोऽन्यत्रेत्यर्थः। तत्र तावदपत्याधिकारे गोत्रग्रहणादेव पारिभाषिकस्य ग्रहणम्, अन्यत्र लौकिकस्येत्यत्र

**भावबोधिनी**

"बहुषु तेनैव अस्त्रियाम्' इन सभी की अनुवृत्ति होती है। 'यस्क' आदि शब्दों से परे बहुत्व अर्थ में विद्यमान, स्त्रीलिङ्ग में न होने वाले गोत्र प्रत्यय का लुक् होता है, यदि उसी गोत्र प्रत्यय के द्वारा बहुत्व अर्थ किया गया हो तो। [अपत्यपौत्रप्रभृतिगोत्रम् (पा. सू. ४.१.१६२) सूत्र से परिभाषित गोत्र का ही ग्रहण होता है लौकिक गोत्र का नहीं—यह भ्रम किसी का हो सकता है, उसका निराकरण करने के लिये लिखते है—] गोत्र में जहाँ प्रत्यय का विधान किया गया [जैसे 'गोत्रे कुञ्जादिभ्यश्च्फञ्' (पा. सू. ४.१.९८) उससे अन्यत्र लौकिक गोत्र का ग्रहण होता है, इस लिये अनन्तर [अव्यवहित] अपत्य में भी लुक् होता है, अर्थात् यहाँ शास्त्रीय और लोकप्रसिद्ध दोनों गोत्र लिये जाते हैं। उदा० यस्क शब्द से अपत्य अर्थ में जो प्रत्यय होता है, बहुवचन में इसका लुक् हो जाता है अतः—यस्काः यह रूप होता है। [एकवचन में—'यास्कः' और द्विवचन में 'यास्कौ'] 'लभ्या' इसके भी बहुवचन में प्रत्यय का लुक् है। बहुवचन में ही होता है अतः एकवचन में—'यस्कः' यही रहता है लुक् नहीं होता है। उस गोत्र प्रत्यय के द्वारा ही बहुत्व किया गया हो–इसका क्या फल है—प्रिययास्काः [प्रिय हैं यास्क - यास्कगोत्रोत्पन्न अपत्य जिसके हैं, वे—यहाँ बहुव्रीहि समास द्वारा बहुत्व की प्रतीति होती है अतः लुक् नहीं होता है।] स्त्रीलिङ्ग में नहीं—इसका क्या फल है? यास्क्यः स्त्रियः। [यहाँ यस्क गोत्रोत्पन्न स्त्रियाँ यह अर्थ होने से स्त्रीलिङ्ग है। अतः प्रत्यय का लुक् नहीं होता है।]

गोत्र में होने वाले प्रत्यय—इसका क्या फल है—यास्काश्छात्राः। [यस्कस्य इमे—इस अर्थ में 'तस्येदम्' (पा. सू. ४.३.१२०) से अण् होता है। यहाँ गोत्र अर्थ न होने से लुक् नहीं होता है।]

यस्कादिगण में पठित शब्द—यस्क। लभ्य। दुह्य। अयःस्थूण। तृणकर्ण। ये पाँच शब्द शिवादिगण में पठित

१. अत्र 'सप्तभ्यः' इति पाठान्तरम्, तदनुसारम् 'कर्णाटक' इत्येतदुत्तरं 'पर्णाडक' इत्येतदधिकं ज्ञेयम्।

**भ्यश्च' (४१.१३६) 'इति ढञ्। बस्ति[1]। कुद्रि[1]। अजबस्ति। मित्रयु। ततः परेभ्यो द्वादशभ्य इञ्। रक्षोमुख। जङ्घारथ। मन्थक। उत्कास। कदुक। मन्थक। पुष्करसत्। विषपुट। उपरिमेखल। क्रोष्टुमान्। क्रोष्टुपाद। शीर्षमाय। पुष्करसच्छब्दाद् बाह्वादिपाठादिञ्। खरपशब्दो नडादिषु पठ्यते, ततः फक्। पदक, वर्मक—एताभ्याम् अत इञ्' (४.१९२)। भलन्दनशब्दात् 'शिवादिभ्योऽण्' (४.१.११२)। भडिल। भण्डिल। भडित। भण्डित—एतेभ्यश्चतुर्भ्यः 'अश्वादिभ्यः फञ्' (४१ ११०)॥**

**५९८. यञञोश्च ॥ ६४ ॥ ( ११०८ )**

'बहुषु तेनैवास्त्रियाम्' ( २.४.६२ ) 'गोत्रे' ( २.४.६३ ) इति चानुवर्तते। **यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रिलिङ्गस्य लुग्भवति। 'गर्गादिभ्यो यञ्', ( ४.१.१०५ ) गर्गाः। वत्साः। अञः खल्वपि— 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' ( ४.१.१०४ ) विदाः, उर्वाः। बहुष्वित्येव-गार्ग्यः। बैदः। तेनैवेत्येव-**

**न्यासः**

त्ययमेव यस्कादिषु पुष्करसच्छब्दपाठो ज्ञापयति ॥ ६३ ॥

**यञञोश्च ॥ गार्ग्य इति।** 'यञश्च' इति ङीप्। 'यस्येति च' इत्यकारलोपः, 'हलस्तद्धितस्य' इति यकारस्य च। तत्र हि 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इत्यतः 'य' इत्यनुवर्त्तते, 'अल्लोपोऽनः' इत्यतो लोप

**पदमञ्जरी**

ज्ञापकं वक्ष्यामः। **पुष्करसच्छब्दस्येति।** किमर्थं पुनरयमत्र पठ्यते, यावता 'बह्वच इञः प्राच्यभरतेषु' इत्येव सिद्धं पुष्करसदः प्राच्यत्वात्, तथा चेतः प्राचामिति प्राप्तस्य लुकः प्रतिषेधाय तौल्वल्यादिषु पठितः ? एवं तर्हि गोपवनादिषु केचित्तौल्वल्यादयश्चेति पठन्ति, तौल्वल्यादिषु प्रकृतिभागा अपि गोपवनादिषु द्रष्टव्या इत्यर्थः। तेन 'न गोपवनादिभ्यः' इति निषेधे प्राप्तेऽत्रास्य पाठः। अयमेव च पाठो ज्ञापयति—गोपवनादिषु तौल्वल्यादयोऽपि पठिता इति ॥ ६३ ॥

**यञञोश्च ॥ गोत्रप्रत्ययस्य बहुषु वर्तमानस्येति।** अत्रापि व्यधिकरणे षष्ठ्यौ। बहुषु वर्तमानस्य समुदायस्य सन्बन्धी यो गोत्रप्रत्ययो यत्र अञ् च तस्येत्यर्थः। तेन द्वन्द्वेऽपि भवति—गर्गवत्सवाजाः, बिदौर्व-

**भावबोधिनी**

हैं, इनसे परे छ (सात) शब्दों से इञ् प्रत्यय होता है। सदामत्त। कम्बलभार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। वकसक्थ। इनके बाद वाले चार शब्दों से "गृष्ट्यादिभ्यश्च" (पा.सू. ४.१.१३६) से ढञ् प्रत्यय होता है। बस्ति। कुद्रि। अजबस्ति। मित्रयु। इनके बाद के बारह शब्दों से इञ् प्रत्यय होता है—रक्षोमुख। जङ्घारथ। मन्थक। उत्कास। कटुक। मन्थक। पुष्करसत्। विषपुट। उपरिमेखल। क्रोष्टुमान्। क्रोष्टुपाद। शीर्षमाय। पुष्करसत् शब्द से 'बाह्वादिभ्यश्च' सूत्र से इञ् होता है। खरप शब्द नडादिगण में पठित है। उससे फक् होता है। पदक। वर्मक—इन दो से—"अत इञ्" ( पा० सू० ४.१.९२) सूत्र से इञ् होता है। भलन्दन—शब्द से "शिवादिभ्योऽण्" (पा. सू. ४। १। ११२ ) से अण् होता है। भडिल। भण्डिल। भडित। भण्डित—इन चार शब्दों से 'अश्वादिभ्यः फञ्' (पा. सू. ४। १। ११०) से फञ् होता है। [इनसे गोत्र अर्थ में जो प्रत्यय होते हैं, बहुवचन में उनका लुक् होता है। अतः एकवचन और द्विवचन में गोत्र प्रत्यय-विशिष्ट रूप होता है, बहुवचन में उसका लुक् हो जाता है।]॥ ६३ ॥

"बहुषु तेनैवास्त्रियाम्' ( २।४।६२ ) और 'गोत्रे' ( २।४।६३ ) इनकी अनुवृत्ति होती है। गोत्र अर्थ में विहित, बहुत्व अर्थ में वर्तमान, स्त्रीलिङ्गभिन्न यञ् तथा अञ् प्रत्यय का लुक् हो जाता है। उदा०—'गर्गादिगण में पठित शब्दों से यञ् प्रत्यय होता है।' ( पा. सू. ४.१.१०५) गर्गाः वत्साः। [ गर्गस्य गोत्रापत्यम्—इस अर्थ में यञ् प्रत्यय करने पर —गर्ग + यञ्, इसके बहुवचन में प्रत्यय का लुक् होने पर 'गर्ग' इसी से जस् अस् प्रत्यय का रूप है। इसी प्रकार वत्स + यञ् से भी लुक् करने पर बहुवचन का रूप है।] "अनृष्यानन्तर्ये विदादिभ्योऽञ्' ( पा. सू. ४.१.१०४) से होने

---

१–१. बिथि। कद्र—इति वा पाठः।

**प्रियगार्ग्याः । प्रियबैदाः । अस्त्रियामित्येव-गार्ग्यः स्त्रियः । बैद्यः स्त्रियः । गोत्र इत्येव –'द्वीपादनुसमुद्रं यञ्', ( ४.३.१० ) द्वैप्याः । 'उत्सादिभ्योऽञ्', ( ४.१.८६ ) औत्साश्छात्राः ।**

***यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् * ( म० भा० २४ .४ वा० १ ) । गार्ग्यस्य कुलं गार्ग्यकुलम्, गर्गकुलं वा । गार्ग्ययोः कुलं गार्ग्यकुलम्, गर्गकुलं वा । एवं बैदस्य कुलं बैदकुलम्, बिदकुलं वा । बैदयोः कुलं बैदकुलं बिदकुलं वा ।**

**यञादीनामिति किम् ? आङ्गकुलम् । एकद्वयोरिति किम् ? गर्गाणां कुलं गर्गकुलम् ।**

**तत्पुरुष इति किम् ? गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठ्या इति किम् ? परमगार्ग्यः ( म० भा० ) ॥**

**न्यासः**

इति च । **बैद्य इति** । 'शार्ङ्गरवाद्यञो ङीन्' । **द्वैप्याः, औत्सा इति** । जातादौ शैषिकेऽर्थे यञञौ ।

**यञादीनामित्यादि** । यञादीनां बहुषु लुगुच्यमान एकत्वे द्वित्वे च प्राप्नोतीति वचनम् । एकद्वयोरिति च संख्याप्रधानोऽयं निर्देशः, यथा—'द्व्येकयोर्द्विवचनैकवचने' इति, एकत्वद्वित्वयोरिति यावत् ; अन्यथा हि बहुत्वाद्बहुवचनं स्यात् । आदिशब्देनाञादीनां बहुषु लोपिनां ग्रहणम् । व्यवस्थायाञ्चादिशब्दः । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । कर्तव्यमित्यध्याहार्यम् । तत्रेदं प्रतिपादनम्—'वा यौ' इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणमनुवर्त्तते । चकारो वात्रानुक्तसमुच्चयार्थः क्रियते । तेन यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या लुग् भवतीति । यदि वेत्यनुवर्त्तते तदा बहुष्वपि विकल्पः स्यात् । व्यवस्थितविभाषाविज्ञानान्न भविष्यतीत्यदोषः ।

**पदमञ्जरी**

भरद्वाजा इति । **गार्ग्यः स्त्रिय इति** । 'यञश्च' इति ङीप् 'हलस्तद्धितस्य' । **बैद्य इति** । 'शार्ङ्गरवाद्यञो ङीन्' ।

**एकद्वयोरिति** । एकत्वद्वित्वयोरित्यर्थः । 'संख्याया अल्पीयस्याः' इत्येकशब्दस्य पूर्वनिपातः । 'द्व्येकयोः' इति निर्देशाद् द्विशब्दस्यापि भवति । **गार्ग्ययोः कुलं गार्ग्यकुलमिति** । प्रकरणादिवशाद् द्वित्वावगतौ द्विवचनान्तस्यापि विरुद्धः समासः ॥ ६४ ॥ ६५ ॥

**भावबोधिनी**

वाले अञ् प्रत्यय का भी लुक् हो जाता है; उदा० विदाः, उर्वाः । [ विदस्य गोत्रापत्यम्, उर्वस्य गोत्रापत्यम् —इस् विग्रह में उपर्युक्त सूत्र से अञ् प्रत्यय होता है । बहुवचन में उसका लुक् हो जाता है । ] बहुवचन में ही लुक् होता है —अतः 'गार्ग्यः, वैदः [ इन एकवचन रूपों में यञ् तथा अञ् प्रत्ययों के साथ ही रूप मिलते हैं । ] 'उस तद्राजसंज्ञक प्रत्यय के द्वारा ही बहुत्व की प्रतीति होने पर ही प्रत्यय का लुक् होता है —प्रियगार्ग्याः, प्रियवैदाः । [प्रियाः गार्ग्याः येषां ते और प्रियाः वैदाः येषां ते —इन अर्थों में बहुव्रीहि है । अतः समास से बहुत्व उक्त होने के कारण प्रत्ययों का लुक् नहीं होता है । ] अस्त्रीलिङ्ग में ही लुक् होता है —गार्ग्यः स्त्रियः [ गर्गस्य गोत्रापत्यं स्त्रियः —इस विग्रह में प्रत्यय होता है । यहाँ स्त्रीलिङ्ग होने से प्रत्यय का लुक् नहीं होता है । ] वैद्यः स्त्रियः । [ यहाँ भी विदस्य गोत्रापत्यम् स्त्रियः —इस विग्रह में प्रत्यय होने से लुक् नहीं होता है । ] गोत्र अर्थ में होने पर ही लुक् होता है —'समुद्र के समीप में जो द्वीप तद्विषयक 'द्वीप' शब्द से शैषिक अर्थ में यञ् प्रत्यय होता है । ( पा. सू. ४।३।१० ) से यञ् प्रत्यय —द्वीपे भवाः —द्वैप्याः । [ द्वीप + यञ्, आदिवृद्धि, भसंज्ञा, अलोप, बहुवचन में प्रत्यय का लुक् नहीं होता है । ] औत्साः छात्राः —[ उत्सस्य इमे छात्राः —इस अर्थ में ] 'उत्स आदि से भवादि अर्थों में अञ् प्रत्यय होता है' ( पा. सू. ४।१।१८ ) से अञ् प्रत्यय होता है । [ इसका लुक् नहीं होता है । ] "एकत्व या द्वित्व में षष्ठी के साथ तत्पुरुष समास में यञ् आदि के वैकल्पिक लोप का उपसंख्यान करना चाहिये ।" उदा० गार्ग्यस्य कुलम् —इस विग्रह में षष्ठीतत्पुरुष में गोत्र प्रत्यय का वैकल्पिक लुक् करने पर—गर्गकुलम्, लुक् न करने पर —गार्ग्यकुलम्—ये रूप होते हैं । द्विवचन में—गार्ग्ययोः कुलम्—इस में भी वैकल्पिक लुक् करने पर—गर्गकुलम्, पक्ष में—गार्ग्यकुलम्—ये रूप होते हैं । इसी प्रकार—वैदस्य कुलम्—इस एकवचनान्त के समास में—बिदकुलम् और बैदकुलम्—दो रूप होते है । द्विवचनान्त के समास में भी—बैदयोः कुलम्—यहाँ भी वैकल्पिक लुक् करने पर दो रूप होते हैं—बिदकुलम्, तथा बैदकुलम् ।

**५९९. अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६५ ॥ ( ११४७ )**

**अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति । अत्रिशब्दात् 'इतश्चानिञः' ( ४.१.१२२ ) इति ढक् । इतरेभ्य ऋष्यण् ( ४ १.११४ ) । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । बहुष्वित्येव—आत्रेयः, भार्गवः । तेनैवेत्येव —प्रियात्रेयाः । प्रियभार्गवाः ।**

**अस्त्रियामिति किम् ? आत्रेय्यः स्त्रियः ॥**

**६००. बह्वच इञः प्राच्यभरतेषु ॥ ६६ ॥ ( ११४८ )**

**बह्वचः प्रातिपदिकाद् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च वर्तते, तस्य बहुषु लुग्भवति ।**

**न्यासः**

**आङ्गकुलमिति** । अत्राङ्गशब्दात् तद्राजसंज्ञकोऽण्, स च यञादिर्न भवति; तस्येह प्रकरणे यञादिभ्यः प्राङ् निर्देशात् । **उपगार्ग्यमिति** । 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावः । **परमगार्ग्य इति** । 'सन्महत्' इत्यादिना प्रथमान्तयोस्तत्पुरुषः ॥ ६४ ॥

**अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** ॥ **आत्रेय्य इति** । 'टिड्ढाणञ्' इति ङीप् ॥ ६५ ॥

**बह्वचः इञः प्राच्यभरतेषु ॥ भरता इति** । येषां भरत आद्यः संज्ञाकारी ते भरताः । **पन्नागारा** इत्यादिषू-

**पदमञ्जरी**

**बह्वच इञः प्राच्यभरतेषु** ॥ भरतापत्येषु भरतशब्दाऽभेदोपचाराद्वर्तते, यथा—'रघूणामन्वयं वक्ष्ये' ( रघु० १.९ ) इति । युधिष्ठिरार्जुनशब्दाभ्यां कुर्वणोऽपवादो बाह्वादिलक्षण इञ् । बलाकाशब्दोऽपि बाह्वादिः ।

**भावबोधिनी**

यञ् आदि का ही लुक् होता है इसका क्या फल है ? आङ्गकुलम्—[ यहाँ अण् प्रत्यय होने से वैकल्पिक लुक् नहीं होता है । ] एकवचन और द्विवचन में ही लुक् होता है—इसका क्या फल है ? गर्गाणा कुलम्—गर्गकुलम् । [ यहाँ बहुवचन का समास होने से विकल्प नहीं होता है, नित्य लुक् होने से एक ही रूप बनता है । ] तत्पुरुष का ही लुक् होता है—गार्ग्यस्य समीपम्—इस विग्रह में—उपगार्ग्यम् । [ यह अव्ययभाव है । अतः लुक् नहीं होता है । ] षष्ठी समास का—इसका क्या फल है ? परमगार्ग्यः । [ परमश्चासौ गार्ग्यः—यह कर्मधारय है । प्रथमान्त का समास है । अतः लुक् नहीं होता है । ] ॥ ६४ ॥

अत्रि, भृगु, कुत्स, वसिष्ठ, गोतम तथा अङ्गिरस्—इन शब्दों में परे गोत्रप्रत्यय का बहुवचन में लुक् हो जाता है । अत्रि शब्द से 'इतश्चानिञः' ( पा. सू. ४।१।१२२ ) सूत्र से ढक् प्रत्यय होता है । अन्य शब्दों से "ऋष्यन्धक" ( पा. सू. ४।१।११४ ) से अण् होता है । उदा० —अत्रयः [ अत्रेः गोत्रापत्यानि—इस बहुवचन में 'अत्रि' शब्द से जो ढक् प्रत्यय हुआ है, उसका लुक् हो जाता है । अतः मूल शब्द के रूप होते हैं । भृगोः गोत्रापत्यानि, कुत्सस्य गोत्रापत्यानि वसिष्ठस्य गोत्रापत्यानि, गोतमस्य गोत्रापत्यानि, अङ्गिरसः गोत्रापत्यानि—इनमें बहुवचन में किये गये अण प्रत्यय का लुक् हो जाने से मूल शब्द से ही रूप बनते हैं—] भृगवः, कुत्साः, वसिष्ठाः, गोतमाः, अङ्गिरसः । बहुवचन में ही लुक् होता है—आत्रेयः, भार्गवः ' [ अत्रेः गोत्रापत्यम्, भृगोः गोत्रापत्यम्—इस एकवचन में अत्रि + ढक्, ढ = एय, आदि-वृद्धि करने पर रूप बना है । एकवचन होने से प्रत्यय का लुक् नहीं होता है । भृगु + अण् यहाँ भी लुक् नहीं होता है । ] उस प्रत्यय के द्वारा बहुत्व की प्रतीति में ही लुक् होता है—प्रियात्रेयाः, प्रियभार्गवाः । [ प्रियाः आत्रेयाः येषां ते, प्रियाः भार्गवाः येषां ते—इन अर्थों में समास द्वारा बहुत्व प्रतीत होता है । अतः लुक् नहीं होता है । ]

स्त्रीलिङ्ग में नहीं—इसका क्या फल है ? आत्रेय्यः स्त्रियः । [ अत्रेः अपत्यानि स्त्रियः—इस विग्रह में ढक् प्रत्यय होता है । स्त्रीलिङ्ग होने से बहुवचन में प्रत्यय का लुक् नहीं होता है ] ॥ ६५ ॥

बहुत अचों वाले प्रातिपदिक से किया गया इञ् प्रत्यय जो प्राच्यगोत्र में और भरत गोत्र में विद्यमान है, उसका

**पन्नागाराः । मन्थरैषणाः ( ४.१.९५ ) । भरतेषु खल्वपि—युधिष्ठिराः । अर्जुनाः ( ४.१.९६ ) ।**

**बह्वच इति किम् ? वैकयः । पौष्पयः । प्राच्यभरतेष्विति किम् ? बालाकयः ( ४.१.९६ ) । हास्तिदासयः ( ४.१.९५ ) । भरताः प्राच्या एव, तेषां पुनर्ग्रहणं ज्ञापनार्थम्—अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवतीति, तेन 'इञः प्राचाम्' ( २.४.६० ) इति भरतानां युवप्रत्ययस्य लुग्न भवति । आर्जुनिः पिता । आर्जुनायनः ( ४.१.१०१ ) पुत्रः ॥**

**६०१. न गोपवनादिभ्यः ॥ ६७ ॥ ( ११४९ )**

**गोपवनादिभ्यः परस्य प्रत्ययस्य लुग्न भवति । बिदाद्यन्तर्गणोऽयम् । ततोऽञो ( ४.१.१०४ ) गोत्रप्रत्ययस्य 'यञञोश्च' ( २.४.६४ ) इति लुक् प्राप्तः प्रतिषिध्यते । गौपवनाः । शैग्रवाः ।**

**गोपवन । शिग्रु । बिन्दु । भाजन । अश्व । अवतान । श्यामाक । श्वापर्ण । एतावन्त एवाष्टौ**

**न्यासः**

दाहरणेषु 'अत इञ्' तस्य लुक् । **बालाकय इति ।** बाह्वादित्वादिञ् । **हास्तिदासय इति ।** 'अत इञ्' । **आर्जुनायन इति ।** 'यञिञोश्च' इति फक् । ॥ ६६ ॥

**न गोपवनादिभ्यः ॥** विदाद्यन्तर्गणोऽयमिति लुक्प्राप्तिं दर्शयति । **शैग्रवा इति ।** 'ओर्गुणः' । ननु चान्येऽपि

**पदमञ्जरी**

**भरताः प्राच्या एवेति ।** 'प्राच्यभरतेषु' इति द्वन्द्वस्तु सामान्यविशेषवाचिनोर्गोबलीवर्दन्यायेनेति भावः ॥ ६६ ॥

**न गोपवनादिभ्यः ॥ परिशिष्टानां हरितादीनां प्रमादपाठ इति ।** ननु चेह स्थाने न गोपवनादयः पठ्यन्ते, किं तर्हि ? चतुर्थ एव बिदादिषु तदुपजीवनेनैतत्प्रवर्तते । अथ चतुर्थे पाठः प्रमादज इत्युच्यते,

**भावबोधिनी**

बहुवचन में लुक् हो जाता है । उदा० पन्नागाराः । [ पन्नागारस्य गोत्रापत्यानि—इस अर्थ में किये गये इञ् प्रत्यय का लुक् हो जाता है । ] मन्थरैषणाः [ यहाँ भी बहुवचन में लुक् होता है । ] भरत गोत्र में भी लुक् होता है—युधिष्ठिराः, अर्जुनाः । [ इनसे किये गये प्रत्यय का लुक् हो जाता है । ]

बहुत अचों वाले से—इसका क्या फल है ? वैकयः, पौष्पयः । [ विकस्य गोत्रापत्यानि, पुष्पस्य गोत्रापत्यानि—इस विग्रह में इञ् प्रत्यय है । किन्तु बहुत अच वाला न होने से प्रत्यय का लुक् नहीं होता है । प्राच्य और भरत गोत्र में—इसका क्या लाभ है ? बालाकयः, हास्तिदासयः । [ बलाक शब्द से 'बह्वादिभ्यश्च' ४।१।९६ से तथा हास्तिदास से 'अतइञ्' ४।१।९५ से इञ् प्रत्यय होता है । किन्तु प्राच्य तथा भरत गोत्र न होने से लुक् नहीं होता है । ] भरत भी तो प्राच्य ही है । [ अत केवल 'प्राच्य' के ग्रहण से निर्वाह संभव था ] फिर 'भरत' का ग्रहण ज्ञापन के लिये है कि—अन्य सूत्र में 'प्राक्' के ग्रहण में भरत का ग्रहण नहीं होता है । इस कारण 'इञः प्राचाम्' ( पा. सू. २.४.६० ) इस सूत्र से भरत गोत्र वालों से युवा प्रत्यय का लुक् नहीं होता है । उदा० आर्जुनि पिता, आर्जुनायनः पुत्रः । [ अर्जुनस्य गोत्रापत्यम्—इस अर्थ में इञ् प्रत्यय करके 'आर्जुनिः' बना है । आर्जुनेः युवापत्यम्—इस अर्थ में 'आर्जुनि' शब्द से 'यञिञोश्च' ( पा. सू. ४।१।१०१ ) से फक्, फ् = आयन प्रत्यय करने पर—'आर्जुनायनः' बनता है । यहाँ प्राच्य होने पर भी भरत गोत्र होने से प्रत्यय का लुक् नहीं होता है । इसीलिये प्रस्तुत सूत्र में 'प्राच्य' और 'भरत' दोनों का ग्रहण है । ] ॥ ६६ ॥

गोपवन आदि शब्दों से परे गोत्र प्रत्यय का लुक् नहीं होता है । यह गोपवन आदि विदादिगण के अन्तर्गत हैं । उनसे 'अञ्' इस गोत्र प्रत्यय का लुक् 'यञञोश्च' ( पा. सू. ४।१।१०४ ) इससे प्राप्त होता है, उसका निषेध हो जाता है । उदा०—गौपवनाः । शैग्रवाः । [ गोपवनस्य युवापत्यानि—शिग्रोः युवापत्यानि—इस अर्थ में 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' सूत्र से अञ् प्रत्यय होने पर बहुवचन में लुक् प्राप्त है, उसका निषेध हो जाने से आदिवृद्धि, भसंज्ञा तथा अलोप आदि कार्य होने पर रूप बनते हैं । ]

**गोपवनादयः । परिशिष्टानां हरितादीनां प्रमादपाठः । ते हि चतुर्थे बिदादिषु ( ४.१.१०४ ) पठ्यन्ते । तेभ्यश्च बहुषु लुग्भवत्येव—हरिताः, किंदासा इति ॥**

## ६०२. तिककितवादिभ्यो द्वन्द्वे ॥ ६८ ॥ ( ११६० )

**तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग्भवति । तैकायनयश्च कैतवायनयश्च—'तिकादिभ्यः फिञ्' ( ४.१.१५४ ), तस्य लुक्, तिककितवाः वाङ्खरयश्च भाण्डीरथयश्च—'अत इञ्' ( ४.१.९५ ) तस्य लुक्, वङ्खरभण्डीरथाः । औपकायनाश्च लामकायनाश्च—'नडादिभ्यः फक्' ( ४.१.९९ ) तस्य लुक्, उपकलमकाः । पाफकयश्च नारकयश्च—'अत इञ्', ( ४.१.९५ ) तस्य लुक्, पफकनरकाः । वाकनखयश्च**

### न्यासः

हरितादयोऽत्र पठ्यन्ते, तत्, किमित्यवधार्यत एतावन्त एव इत्यत आह—**परिशिष्टानामित्यादि । प्रमादपाठ इति ।** अनार्षः पाठः इत्यर्थः । यदि तेषां प्रमादपाठः, एवं तर्ह्यविदादित्वादञ्प्येभ्यो न प्राप्नोतीत्यत आह—**ते हीत्यादि** । ते हि चतुर्थेऽध्याये बिदादिषु गोपवनादिभ्यः पूर्वे पठ्यन्त इति न भवत्येष दोषप्रसङ्गः । यस्त्विह गोपवनादिभ्योऽष्टभ्यः पर एषां पाठः, स प्रमादपाठ इत्युच्यते ॥ ६७ ॥

**तिककितवादिभ्यो द्वन्द्वे ॥** किमर्थं पुनस्तिककितवाभ्यां द्वाभ्यां गण उपलक्ष्यते, नैकेनेवोपलक्ष्येत ?

### पदमञ्जरी

बिदाद्यञपि तर्हि न प्राप्नोति । अथ गोपवनादिभ्यः परत्र पाठः प्रमादजः पूर्वत्र पाठ्यः—इत्युच्येत, एवमपि 'हरितादिभ्योऽञ्' इत्येष विधिर्गोपवनादीनामपि प्राप्नोति । तस्माद्यथाव्यवस्थित एव पाठे मध्ये वृत्करणं कर्तव्यम्, इह वा 'प्राक्' हरितादिभ्य इति वक्तव्यम् । यथोक्तम्—'गोपवनादिभ्यः प्रतिषेधः प्राग्घरितादिभ्यः' **वृत्तिकारस्तु** चतुर्थेऽत्र च पृथक् पाठं मन्यते ॥ ६७ ॥

**तिककितवादिभ्यो द्वन्द्वे ॥** द्वन्द्वरूपाण्येव गणे पठ्यन्ते । तिकादीनि पूर्वपदानि कितवादीन्युत्तरपदानि,

### भावबोधिनी

इस गण में पठित शब्द—गोपवन । शिग्रु । बिन्दु । भाजन । अश्व । अवतान । श्यामाक । श्वापर्ण । ये आठ ही गोपवनादि हैं । शेष 'हरित' आदि का जो पाठ है वह प्रमाद से पठित है क्योंकि वे 'हरित' आदि शब्द चतुर्थ अध्याय में 'विदादिगण' ( ४।१।१०४ ) में' पठित हैं ।, उन 'हरित' आदि से तो बहुवचन में लुक् होता ही है—हरिताः, किन्दासाः । [ हरितस्य युवापत्यानि, किन्दासस्य युवापत्यानि—इन विग्रहों में विदादिगणीय अञ् प्रत्यय करके बहुवचन में उसका लुक् होने पर ये रूप बनते हैं । ]

**विमर्श**—भाष्यकार के अनुसार विदादिगण में गोपवादि के साथ हरितादि का भी पाठ है । अतः प्रस्तुत प्रतिषेध सबके लिये है अथवा कुछ के लिये ? इसका स्पष्टीकरण करने के लिये यह वार्त्तिक पढ़ा है—''गोपवनादिभ्यः प्रतिषेध प्राग्धरितादिभ्यः' । अर्थात् यह प्रतिषेध हरितादि शब्दों से पहले पठित केवल आठ गोपवनादि शब्दों से ही समझना चाहिये । अतः हरितादि से लुक् होता ही है ॥ ६७ ॥

तिक आदि शब्दों से और कितव आदि शब्दों से द्वन्द्व समास में बहुवचन में गोत्रप्रत्यय का लुक् हो जाता है । उदा० तैकायनयश्च कैतवायनयश्च—इस विग्रह में द्वन्द्व करने पर फिञ् प्रत्यय का लुक् हो जाने से मूल शब्द—'तिककितव' बचता है इसी से बहुवचन का रूप होता है—तिककितवाः । [ 'तिक' तथा कितव शब्दों से 'तिकादिभ्यः फिञ्' ( पा. सू. ४।१।१५४ ) से फिञ् प्रत्यय, फ् का आयन् आदेश, आदिवृद्धि करने पर 'तैकायनि' 'कैतवायनि' बनाकर बहुवचन शब्दरूपों का द्वन्द्व करने पर 'फिञ् - आयनि' का लुक् हो जाने से मूल शब्दमात्र शेष रहते हैं । ] वाङ्खरयश्च भाण्डीर-

**श्वागुदपरिणद्धयश्च—'अत इञ्', ( ४.१.९५ ) तस्य लुक्, बकनखश्वगुदपरिणद्धाः। उब्जशब्दात अत इञ्, ( ४.१.९५ ), ककुभशब्दात् 'शिवादिभ्योऽण् ( ४.१.११२ ) तयोर्लुक् औब्जयश्च काकुभाश्च उब्जककुभाः। लाङ्कयश्च शान्तमुखयश्च—अत इञ्, ( ४.१.५९ ) तस्य लुक्, लङ्कशान्तमुखाः। उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्, लङ्कटशब्दादिञ्, तयोर्लुक्, औरसायनयश्च लाङ्कटयश्च उरसलङ्कटाः। भ्राष्टकयश्च—कापिष्ठलयश्च 'अत इञ्' ( ४.१.५९ ), तस्य लुक्, भ्रष्टककपिष्ठलाः। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च—'अत इञ्' ( ४.१.५९ ), तस्य लुक्, कृष्णाजिनकृष्णसुन्दराः। आग्निवेश्यश्च दासेरकयश्च— अग्निवेशशब्दाद् 'गर्गादिभ्यो यञ्' ( ४.१ १०५ ), दासेरकशब्दाद् 'अत इञ्' ( ४.१ ५९ ), तयोर्लुक्, अग्निवेशदासेरकाः॥**

**न्यासः**

नैतत्; कार्यिणा हि गण उपलक्षयितुं युक्तः, द्वन्द्वश्चात्र कार्यी, तेनैवोपलक्षयितुं युक्तः॥ ६८॥

**पदमञ्जरी**

तत्र 'तिकादिभ्यो द्वन्द्वे' इत्युच्यमाने पूर्वपदेष्वेव लुगाशङ्क्येत उत्तरपदेष्वपि यथा स्यादिति तिककितवादिभ्य इत्युक्तम्। आदिशब्दः प्रत्येकमभिसम्बध्यते, तदाह—**तिकादिभ्यः कितवादिभ्यश्चेति**॥ ६८॥

**भावबोधिनी**

यश्च—इनके द्वन्द्व में प्रत्यय लुक् होने पर बहुवचन में वङ्खरभण्डीरथाः—यह बनता है। इनमें युवापत्य अर्थ में 'अत इञ्'' ( पा. सू. ४. १. ९५) से इञ् प्रत्यय होता है उसका लुक् बहुवचन में होता है। ] औपकायनाश्च लामकायनाश्च —इस विग्रह में द्वन्द्व करने पर बहुवचन में प्रत्यय का लुक् होने से—उपकलमकाः बनता है। उपकस्य 'युवापत्यानि, लमकस्य युवापत्यानि इस विग्रह में' 'नडादिभ्यः फक्' ( पा. सू. ४.१.९९ ) से फक, फ्=आयन् होने पर रूप बनते हैं।) पाफकयश्च नारकयश्च—इस विग्रह में द्वन्द्व समास करने पर प्रत्यय का लुक् होने पर—पफकनरकाः—यह बनता है, पफकस्य युवापत्यानि, नरकस्य युवापत्यानि— इन विग्रहों में 'अत इञ्' ( पा. सू. ४.१.९५ ) से इञ् प्रत्यय, आदिवृद्धि, भसंज्ञा आदि करने पर पाफकयः, नारकयः—ये रूप बनते हैं। वाकनखयश्च श्वागुदपरिणद्धयश्च—इस विग्रह में द्वन्द्व समास में प्रत्यय का लुक् करने पर—वकनखश्वगुदपरिणद्धाः—यह रूप बनता है। इनमें वकनखस्य युवापत्यानि—इस विग्रह में 'अत इञ्' सूत्र से इञ् प्रत्यय होता है, उसका लुक् हो जाता है। उब्जस्य युवा अपत्यानि —इस विग्रह में उब्ज शब्द से 'अत इञ्' से इञ् प्रत्यय होता है।

ककुभस्य युवापत्यानि—इस अर्थ में 'शिवादिभ्योऽण्' सूत्र से अण् प्रत्यय होता है—औब्जयश्च काकुभाश्च इस विग्रह में द्वन्द्व में उन इञ् तथा अण्' प्रत्ययों का लुक् होने पर—उब्जककुभाः बनता है। लाङ्कयश्च शान्तमुखयश्च —इस द्वन्द्व में लङ्कशान्तमुखाः रूप बनता है। लङ्कस्य युवा अपत्यानि, शान्तमुखस्य युवापत्यानि इस अर्थ में 'अत इञ्' सूत्र से इञ् प्रत्यय होता है, उसका लुक् होता है। 'उरस' शब्द तिकादिगण में पठित है उससे युवापत्य अर्थ में फिञ् प्रत्यय होता है और लङ्कट शब्द से इञ् प्रत्यय होता है—औरसायनयश्च लाङ्कटयश्च इस विग्रह में द्वन्द्व समास करने पर फिञ् तथा इञ् का लुक् करने पर—'उरसलङ्कटाः' रूप बनता है। भ्राष्टयश्च कापिष्ठलयश्च—इस द्वन्द्व समास में युवा प्रत्यय का लुक् होता है—भ्रष्टककपिष्ठलाः। भ्रष्टकस्य युवापत्यानि, कपिष्ठलस्य युवापत्यानि—इस अर्थ में ''अत इञ्'' सूत्र से 'इञ् प्रत्यय होता है, उसका लुक् होता है। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च इस विग्रह में समास करने पर युवा प्रत्यय का लुक् होता है—कृष्णाजिनकृष्णसुन्दराः बनता है। कृष्णाजिनस्य युवापत्यानि कृष्णसुन्दरस्य युवापत्यानि—इस विग्रह में ''अत इञ्'' इस सूत्र से इञ् प्रत्यय हुआ है। आग्निवेश्यश्च दासेरकयश्च—इस द्वन्द्व में युवा प्रत्यय का लुक् करने पर—अग्निवेशदासेरकाः बनता है। अग्निवेशस्य युवा पत्यानि, दासेरकस्य युवा पत्यानि— इस विग्रह में अग्निवेश शब्द से ''गर्गादिभ्यो यञ्'' ( पा. सू. ४.१.१०५) से यञ् प्रत्यय [ आदिवृद्धि, भसंज्ञा अलोप करने पर आग्निवेश्यः बनता है और ] दासेरक शब्द से ''अत इञ् सूत्र से इञ् प्रत्यय [ करने पर आदिवृद्धि, भसंज्ञा, अलोप, बहुवचन का रूप ]॥ ६८॥

## ६०३. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ ६९ ॥ ( ११९१ )

**'उपक' इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति, अन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च। अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम् ( म० भा० )। एतेषां च मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते - उपकलमकाः, भ्रष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दरा इति। तेषां पूर्वेण नित्यमेव लुग्भवति। अद्वन्द्वे त्वनेन विकल्पः— उपकाः, औपकायनाः। लमकाः, लामकायनाः। भ्रष्टकाः, भ्राष्टकयः। कपिष्ठलाः, कापिष्ठलयः। कृष्णाजिनाः, कार्ष्णाजिनयः। कृष्णसुन्दराः, कार्ष्णसुन्दरय इति। परिशिष्टानां च द्वन्द्वेऽद्वन्द्वे च विकल्प इति।**

**पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ठ। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल।**

**न्यासः**

**उपकादिभ्योऽन्तरस्यामद्वन्द्वे ॥** यदि द्वन्द्वे चाद्वन्द्वे च भवत्यद्वन्द्वग्रहणं तर्हि किमर्थमित्याह—**अद्वन्द्वग्रहणमित्यादि**। द्वन्द्वग्रहणे नात्र द्वन्द्वाधिकारः सम्बध्यते—द्वन्द्वे द्वन्द्वाधिकार इति, तस्य नञा सम्बन्धे च द्वन्द्वाधिकारनिवृत्तिः प्रतीयते। अथ विषयोपग्रहणार्थमद्वन्द्वग्रहणं कस्मान्न विज्ञायते—अद्वन्द्वेऽद्वन्द्वविषय इति ? यद्ययमर्थोऽभीष्टः स्यादद्वन्द्वग्रहणं न कुर्यात् विनापि तेनार्थस्य प्रतीतेः। कथम् ? तिककितवादयोऽपीह त्रयः पठ्यन्ते—उपकलमकाः, भ्रष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दरा इति, तेषाञ्चाद्वन्द्व एवं ग्रहणं प्रयोजयति न द्वन्द्वः, पूर्वेणैव सिद्धत्वादिति। तेषां तावन्नियमेनाद्वन्द्वार्थं ग्रहणम्, तत्साहचर्यादितरेषामप्यद्वन्द्वार्थं ग्रहणं युक्तमिति निष्फलमेवाद्वन्द्वग्रहणं स्यात्। तस्माद् द्वन्द्वाधिकारनिवृत्त्यर्थमेतद्युक्तमिति। **तेषां पूर्वेण नित्यमेव लुग् भवतीति**। अन्यथा हि तिककितवादिषु तेषां पाठोऽनर्थकः स्यात्। **अद्वन्द्वे त्वनेन विकल्प इति**। प्रकृतत्वाल्लुको विज्ञेयः। तत्रोपकलमशब्दाभ्यां नडादिफग्विधानात् तस्य लुग्विकल्पः, ततः परेभ्यः प्राक् कपिष्ठलशब्दादत इञः। कपिष्ठलय—

**पदमञ्जरी**

**उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ द्वन्द्वे चाद्वन्द्वे चेति**। कथम् 'अद्वन्द्वे' इत्युच्यमाने द्वन्द्वे चाद्वन्द्वे च भवति, तदाह—**अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थमिति**। नात्र शास्त्रीयोऽधिकारः स्वरितत्वनिबन्धनो विवक्षितः, न हि पूर्वसूत्रे द्वन्द्वशब्द आसक्तस्वरितः, तस्माल्लौकिकोऽधिकारो व्यपेक्षालक्षणः। तदिह द्वन्द्वशब्देन तद्विषया व्यपेक्षाभिधीयते, तस्या नञा निषेधः—अद्वन्द्वे इति। किमुक्तं भवति ? द्वन्द्व इति नापेक्ष्यत इति, तदनपेक्षायां द्वन्द्वे चाद्वन्द्वे च भवति। 'अद्वन्द्व' इत्यस्मिन्नसति लौकिकोऽधिकारो द्वन्द्वस्य शङ्क्येत, द्वन्द्वश्चैषामेव परस्परं

**भावबोधिनी**

"उपक" आदि शब्दों से परे गोत्र प्रत्यय का बहुवचन में विकल्प से लुक् होता है, और द्वन्द्व तथा अद्वन्द्व में में होता है अर्थात् विकल्प से युवा प्रत्यय का लुक् होता है। यहाँ 'अद्वन्द्वे' इसका ग्रहण 'द्वन्द्व' इस अधिकार की निवृत्ति के लिये है। इन उपकादि के बीच में तीन द्वन्द्व तिककितवादि में पठित हैं—(१) उपकलमकाः, (२) भ्रष्ट कपिष्ठलाः, (३) कृष्णाजिनसुन्दराः। इनके युवा प्रत्यय का नित्य लुक् पूर्ववर्ती सूत्र से ही होता है, द्वन्द्व-भिन्न स्थल पर इस सूत्र से विकल्प से लुक् होता है—उपकाः उपकायनाः। [ उपकस्य युवापत्यानि—इस विग्रह में उपक शब्द से 'नडादिभ्यः फक्' सूत्र से फक् प्रत्यय होता है, उसका बहुवचन में विकल्प से लुक् होने से दो रूप बनते हैं। ] लमकाः, लामकायनाः। [ लमकस्य युवापत्यानि—इस विग्रह में पूर्ववत् फक् होकर उसका वैकल्पिक लोप होने पर दो रूप बनते हैं। ] भ्रष्टकाः, भ्राष्टकयश्च। [ भ्रष्टस्य युवाप्रत्यानि—इस अर्थ में "अत इञ्" सूत्र से "इञ्' प्रत्यय होता है, उसका लोप विकल्प से होने से दो रूप बनते हैं। ] कपिष्ठलाः, कापिष्ठलयः। [ कपिष्ठलस्य युवापत्यानि—इस अर्थ में 'इञ्' प्रत्यय, वैकल्पिक लोप। ] कृष्णाजिनाः, कार्ष्णाजिनयः। [ कृष्णाजिनस्य युवापत्यानि—इस विग्रह में 'इञ् प्रत्यय वैकल्पिक लोक होने पर दो रूप होते हैं। ] कृष्णसुन्दराः, कार्ष्णसुन्दरयः। [ कृष्णसुन्दरस्य युवापत्यानि—इस अर्थ में 'इञ्' प्रत्यय, वैकल्पिक लोप। ] शेष शब्दों का द्वन्द्व और द्वन्द्वभिन्न स्थल पर विकल्प होता है।

**कण्ठेरणि । कुषीतक । काशकृत्स्न । निदाघ । कलशीकण्ठ । दामकण्ठ । कृष्णपिङ्गल । कर्णक । पर्णक । जटिलक । वधिरक । जन्तुक । अनुलोम । अर्द्धपिङ्गलक । प्रतिलोम । प्रतान । अनभिहित[1] ॥**

**६०४. आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥ ( ११८२ )**

**आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोरणो यञश्च बहुषु लुग्भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासंख्यमगस्ति, कुण्डिनच्-इत्येतावादेशौ भवतः। अगस्तयः। कुण्डिनाः। चकारः स्वरार्थः। मध्योदात्तो हि कुण्डिनीशब्दस्तदादेशोऽपि तथा स्यात्। अगस्त्यशब्दादृष्यण् ( ४.१.११४ ), कुण्डिनशब्दाद् 'गर्गादित्वाद्यञ्'**

**न्यासः**

मयूरकर्ण—इत्येतेभ्यः शिवादिभ्योऽणः। खारीजङ्घादिभ्यः कृष्णपिङ्गलपर्यन्तेभ्योऽत इञः। अनुलोमशब्दाद् बाह्वादिञः। बाह्वादिषु हि लोमशब्द पठ्यते, स च तदन्तविधिं प्रयोजयति। अनुगतानि लोमान्यस्येत्यनुलोमा, तस्यापत्यान्यानुलोमयः, अनुलोमान इति। शेषाणामत इञः॥ ६९॥

**आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्**। यद्यपि प्रत्ययान्तात् षष्ठ्युच्चारिता, तथापि प्रत्ययस्यैव लुग् विज्ञायते, न तदन्तस्य, यस्मात् प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता, न तदन्तस्येत्यालोच्याह—**आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोरिति**। व्यधिकरणे षष्ठ्यौ। आगस्त्यकौण्डिन्ययोर्याववयवौ गोत्रप्रत्ययौ तयोरित्यर्थः। तावेव प्रत्ययौ स्वरूपेण दर्शयन्नाह—**अणो यञश्चेति**। यञो यद्यपि लुक् सिद्धस्तथापि पुनर्विधीयते कुण्डिनजादेशेन तस्य बाधा मा विज्ञायीति। **मध्योदात्तो हि कुण्डिनशब्द इति**। कुण्डमस्यास्तीति 'अत इनिठनौ' इतीनि प्रत्यये कृते प्रत्ययस्वरेण। **तदादेशोऽपि तथा स्यादिति**। स्थानिवद्भावेन मध्योदात्तः स्यात्। चित्कर-

**पदमञ्जरी**

गृह्यते, तेषां पूर्वेण नित्यं लुग्भवतीति। **भाष्ये** तु भ्राष्टकिकापिष्ठलय इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति निश्चयः॥ ६९॥

**आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्** ॥ कुण्डिनीशब्दस्य यञि 'भस्याऽढे तद्धिते' ( वा० ७३१ ) इति पुंवद्भावे 'नस्तद्धिते' इति लोपे कौण्ड्य इति प्राप्नोति, अस्मादेव निपातनात्पुंवद्भावः। असति च तस्मिन्नीकारस्य यस्येति लोपः, तस्य स्थानिवत्वादाभीयत्वेनासिद्धत्वाद्वा टिलोपाभावः। आगस्त्यकौण्डिन्येत्येतयोर्गोत्रप्रत्यययोरिति व्यधिकरणे षष्ठ्यौ, एतयोर्याववयवावित्यर्थः। तावेव स्वरूपेण दर्शयति—**अणश्च यञश्चेति**। **मध्योदात्तो हि कुण्डिनीशब्द इति**। कुण्डमस्यातीति 'अत इनिठनौ' प्रत्ययस्वरः, ङीबनुदात्तः। ननु मानुवृत्तं

**भावबोधिनी**

[ इस गण में पठित अन्य शब्द—] पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ठ। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल। कण्ठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। वधिरक। जन्तुक। अनुलोम। अर्द्धपिङ्गलक। प्रतिलोम। प्रतान। अनभिहित॥ ६९॥

"आगस्त्य तथा कौण्डिन्य के गोत्र प्रत्यय अण् तथा यञ् का बहुवचन में विकल्प से लुक् होता है और अवशिष्ट प्रकृति भाग के क्रमशः 'अगस्ति' तथा 'कुण्डिनच्' ये दो आदेश हो जाते हैं। [ अगस्त्यस्य गोत्रापत्यानि—इस अर्थ में अगस्त्य शब्द से 'ऋष्यन्धक" सूत्र से अण् प्रत्यय होता है। किन्तु बहुवचन में इसका लुक् करने पर और आगस्त्य इस प्रकृति भाग का 'अगस्ति' यह आदेश होने पर बहुवचन में ] अगस्तयः यह रूप होता है। कुण्डिनाः। [ यहाँ कुण्डिन शब्द से यञ् प्रत्यय करने पर कौण्डिन्य बनता है। बहुवचन में प्रत्यय का लुक् करके कुण्डिनच् आदेश और 'च्' क लोप करने पर 'कुण्डिनाः' रूप बनता है। ] कुण्डिनच् में 'च' अन्तोदात्त स्वर करने के लिये है। यह इसलिये हैं जिससे

---

१. चूडारक। उदङ्क। सुधायुक। अबन्धक। पदञ्जल। अनुपद। अपजग्ध। कमक। लेखाभ्र। कमन्दक। पिञ्जल। मसूरकर्ण। मदाघ। कदामत्त। दामकण्ठ—अधिकोऽयं पाठः पुस्तकान्तरे।

**( ४.१.१०५ ), तयोः 'गोत्रेऽलुगचि' ( ४.१.८९ ) इति लुकि प्रतिषिद्धे आगस्तीयाश्छात्रा इति वृद्धलक्षणश्छो ( ४२.११४ ) भवति। कौण्डिन्ये त्वणैव भवितव्यम्—'कण्वादिभ्यो गोत्रे' (४ २.१११) इति, तत्र विशेषो नास्ति—कौण्डिनाश्छात्राः ॥**

**न्यासः**

णान्मध्योदात्तत्वं न भवति। किमर्थं पुनः प्रत्ययान्तयोरेवायमादेशो न क्रियत इत्याह—**तयोरित्यादि**। यदि प्रत्ययान्तयोरेवायमादेशः स्याद् 'गोत्रेऽलुगचि' इति प्रतिषेधो न स्यात्। यस्माल्लुकोऽसौ प्रतिषेधो नादेशस्येति स्यादेवात्रादेशः, ततश्चावृद्धादणेव स्यात् एवञ्चागस्ता इत्यनिष्टं रूपं स्यात्। यद्यपि वृद्धास्यादेशः स्थानिवद्भावाद् वृद्धग्रहणेन गृह्यते तस्यथाप्यगस्तीया इति स्यात्, आगस्तीया इति न सिध्यति। न च स्थानिवद्भावो लभ्यते, वृद्धसंज्ञाया अल्विधित्वात्। इह प्रत्ययस्य तु लुकि परिशिष्टस्यादेशे विहिते 'गोत्रेऽलुगचि' इति लुकि च प्रतिषिद्धे 'वृद्धाच्छः' सिद्धो भवति। **तत्र विशेषो नास्तीति**। सत्यामपि वृद्धसंज्ञायाम् 'कण्वादिभ्यो गोत्रे' इति च्छापवादेनाणैव भवितव्यम्। तस्मादिह यदि प्रत्ययान्तस्यादेशोऽथापि प्रकृतिमात्रस्योभयथापि कौण्डिना इति भवितव्यमिति नास्ति कौण्डिन्ये विशेषः ॥ ७० ॥

**पदमञ्जरी**

लुग्ग्रहणम्, प्रत्ययान्तयोरवादेशौ स्तामत आह—**तयोरित्यादि**। यदि हि प्रत्ययान्तयोरेवादेशौ स्याताम्—'गोत्रेऽलुगचि' इति प्रतिषेधो न स्याद्, लुको ह्यसौ निषेधो नादेशस्य, ततश्चादेशे सत्यवृद्धत्वादणेव स्यात्; लुकि तु सति तस्य प्रतिषेधे तत्सन्नियोगशिष्टस्यादेशस्याप्यभावाद्वृद्धलक्षणश्छो भवति। तत्र विशेषो नास्तीति किमर्थं तर्हीदमुक्तम्—अणश्च यञश्च बहुषु लुग्भवतीति? एवं मन्यते—यदि कुण्डिनजादेशः समुदायस्य स्याद् अगस्त्यादेशोऽपि तथा स्याद्; अतोऽवश्यं लुगनुवर्त्यः, अनुवृत्तस्य च कौण्डिन्येनापि सम्बन्धः; विरोधाभावादिति ॥ ७० ॥

**भावबोधिनी**

मध्योदात्त कुण्डिनी शब्द का कुण्डिनच् आदेश भी उसी प्रकार अन्तोदात्त हो सके। [ कुण्डम् अस्ति अस्याः—इस अर्थ में 'अत इनिष्ठनौ' इस सूत्र से 'इनि' प्रत्यय करके स्त्रीलिङ्ग में ङीप् होता है। यह पित् होने से अनुदात्त है। इसके भी गोत्रप्रत्यय का लुक् हो जाता है और कुण्डिनच् आदेश होता है। ] अगस्त्य शब्द से गोत्र अर्थ में 'ऋष्यन्धक' ( पा. सू. ४।१।११४ ) से अण् प्रत्यय होता है और कुण्डिन शब्द से गोत्र अर्थ में ''गर्गादिभ्यो यञ्'' ( पा. सू. ४।१।१०५ ) से यञ् प्रत्यय होता है। इन दोनों शब्दों से 'तस्य छात्राः' इस अर्थ में 'छ' प्रत्यय विवक्षित होने पर ''गोत्रेऽलुगचि'' ( पा. सू. ४.१।८९ ) से गोत्र प्रत्ययों के लुक् का प्रतिषेध हो जाने पर 'आगस्त्य' इससे 'वृद्धसंज्ञा मानकर 'वृद्धाच्छः' ( पा. सू. ४.२.११४ ) से 'छ' प्रत्यय होता है—आगस्त्य + छ = ईय = आगस्तीयाः यह रूप होता है। 'कौण्डिन्य' शब्द से तो 'तस्य छात्राः' इस अर्थ में ''कण्वादिभ्यो गोत्रे'' ( पा. सू. ४.२।१११ ) सूत्र से अण् ही होना चाहिये, अतः इसके रूप में कोई भेद नहीं है—कौण्डिनाः छात्राः।

**विमर्श**—यहाँ समस्या यह है कि ये दोनों आदेश—अगस्ति तथा कुण्डिनच् क्या प्रत्ययान्त अर्थात् आगस्त्य और कौण्डिन्य के स्थान पर होते है अथवा केवल प्रकृतिभाग अगस्त्य तथा कुण्डिन के स्थान पर? इसका समाधान यह है कि ये दोनों आदेश केवल प्रकृति भाग के होते हैं प्रत्यय-विशिष्ट के नहीं। यदि प्रत्यय-विशिष्ट के स्थान पर ये आदेश माने जायेगें तो 'आगस्त्य' का 'अगस्ति' होगा, वृद्धसंज्ञक नहीं होगा, 'छ' नहीं हो सकेगा, अण् ही होगा और 'आगस्ताः' यह अनिष्ट रूप होने लगेगा। जब कि इष्ट है—आगस्तीयाः। 'कौण्डिन्य' शब्द से वृद्ध 'छ' का अपवाद अण् ही होता है। अतः कौण्डिन्य या कुण्डिनी किसी का भी कुण्डिनच् आदेश करने पर अण् प्रत्यय के साथ कौण्डिनाः यही रूप बनता है, कोई भेद नहीं है ॥ ७० ॥

## ६०५. सुपो धातुप्रातिपदिकयोः ।। ७१ ।। ( ६५० )

**सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग्भवति । 'तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते' ( परि० ९० ) । धातोस्तावत्—पुत्रीयति । घटीयति ( ३.१.३२ ) । प्रातिपदिकस्य—कष्टश्रितः । राजपुरुषः ( १२४६ ) ।**

**धातुप्रातिपदिकयोरिति किम् ? वृक्षः । प्लक्षः ( १.२.४५ ) ।।**

### न्यासः

**सुपो धातुप्रातिपदिकयोः** ।। **धातुप्रातिपदिकयोरिति** यदीयं सप्तमी स्यात् तदाऽयमर्थो विज्ञायेत—धातौ च प्रातिपदिके च या सन्निकृष्टा विभक्तिस्तस्या लुग् भवतीति । सन्निकृष्टत्वञ्चोपश्लेषमन्तरेण न सम्भवतीतीहापि स्याद्— वृक्षः प्लक्ष इति, अस्ति ह्यत्रापि प्रादिपदिकेन विभक्तेरुपश्लेषः । तस्मात् षष्ठीयं युक्तेति मत्वाह—**सुपो विभक्तेर्धातुसंज्ञाया इत्यादि** । कथं पुनर्विभक्तेर्धातुसंज्ञा प्रातिपदिकसंज्ञा च भवतीत्यत आह—**तदन्तर्गता इत्यादि** । नन्वेवमपि धातुप्रातिपदिकयोरेकदेशीभूता विभक्तयः स्युः, न धातुसंज्ञकाः, नापि प्रातिपदिकसंज्ञकाः ? समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इत्यदोषः । **पुत्रीयतीति** । आत्मनः पुत्रमिच्छतीति 'सुप आत्मनः क्यच्' 'क्यचि च' इतीत्वम्, 'सनाद्यन्ता धातवः' इति धातुसंज्ञा, सा च सुबन्तात् क्यज् विहित इति ससुप्कस्यैव भवतीति तेनात्र विभक्तिर्धात्वन्तर्गता भवति । **कष्टश्रित इति** । कष्टं श्रित इति 'द्वितीया श्रित' इत्यादिना समासः । कृततद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा, सापि सुबन्तानां समासो भवतीति ससुप्कस्यैव भवति । तेनात्रापि विभक्तिः प्रातिपदिकान्तर्गता भवति । वृक्षः, प्लक्ष इत्यत्राप्यप्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधात् सविभक्तिकस्य प्रातिपदिकसंज्ञा नास्तीति नास्ति विभक्तेः प्रातिपदिकान्तर्भावः ।। ७१ ।।

### पदमञ्जरी

**सुपो धातुप्रातिपदिकयोः** ।। अत्र 'सुपः' इति सप्तमीबहुवचनं न गृह्यते; 'पञ्चम्याः स्तोकादिभ्यः' इत्यादिना पञ्चम्यादीनामलुग्विधानात् । नापि कपः पकारेण प्रत्याहारः, तद्धितानां विधानसामर्थ्यात्; अन्यथा तद्धितान्तस्य प्रातिपदिकत्वात्तदवयवस्य सर्वस्यैव तद्धितस्य लुक् स्यात्, 'द्विगोर्लुगनपत्ये' इत्येतच्चानर्थकं स्यात् । अतः सुशब्दादारभ्य सुपः पकारेण प्रत्याहार इत्याह—**सुपो विभक्तेरिति** । धातुप्रातिपदिकयोरिति यदि सप्तमी स्याद् धातुप्रातिपदिकयोः परतः सुपो लुक् स्यात्—काष्ठैः पचति, शोभनैः काष्ठैरिति, तस्मात्षष्ठीयमित्याह—**सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञाया इति** । धातुः संज्ञा यस्यास्तस्या इत्यर्थः । कथं पुनर्विभक्तिर्धातुसंज्ञा प्रातिपदिकसंज्ञा वा भवति, तत्राह—**तदन्तर्गता इति** । एवमपि धातुप्रातिपदिकयोरवयवभूता विभक्तयः स्युर्न तत्संज्ञाः ? नैष दोषः; समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । धातुप्रातिपदिकयोरवयवस्य सुप इत्यपि व्याख्याने न कश्चिद्दोषः । प्रत्युत 'सुपः' इत्यस्य द्विवचनान्तेन सम्बन्धो न दुरुपपादो भवति, तथा तु न व्याख्यातमित्येव ।। ७१ ।।

### भावबोधिनी

धातु संज्ञावाली तथा प्रातिपदिकसंज्ञावाली सुप् विभक्तियों का लुक् हो जाता है । [ विभक्ति धातुसंज्ञावाली या प्रातिपदिक संज्ञावाली कैसे हो सकती है ? इसका समाधान है—] उस धातुसंज्ञा या प्रातिपदिक संज्ञा के अन्तर्गत होने से विभक्ति भी धातु तथा प्रादिपदिक के ग्रहण से गृहीत होती है । [ यद्यपि धातु या प्रातिपदिक के अन्तर्गत मान लेने पर भी यह विभक्ति धातु या प्रातिपदिक का अवयव ही बनतो है न कि धातु या प्रातिपदिक ? इसका समाधान यह है कि समुदाय के लिये प्रवृत्त होने वाले शब्द कभी-कभी अवयव के लिये भी प्रयुक्त होने लगते हैं । अतः सुप् विभक्ति भी धातुसंज्ञक या प्रातिपदिकसंज्ञक मानकर उसका लुक् सम्भव हो जाता है । ] (१) धातुसंज्ञावाली विभक्ति के लुक् का उदा०—पुत्रीयति । घटीयति । (२) प्रातिपदिक संज्ञावाली विभक्ति के लुक् का उदा०—कष्टश्रितः । राजपुरुषः ।

धातु संज्ञावाली तथा प्रातिपदिकसंज्ञावाली विभक्ति का ही लुक् होता है—इसका क्या फल है ? वृक्षः, प्लक्ष । [ यहाँ सुबन्त होने से पद संज्ञा हो जाती है अतः विभक्ति का लुक् नहीं होता है ।

**६०६. अदिप्रभृतिभ्यः शपः ॥ ७२ ॥ ( २४२३ )**

**अदिप्रभृतिभ्य उत्तरस्य शपो लुग्भवति । अत्ति । हन्ति । द्वेष्टि ॥**

**६०७. बहुलं छन्दसि ॥ ७३ ॥ ( ३४०० )**

**छन्दसि विषये शपो बहुलं लुग्भवति । अदिप्रभृतिभ्य उक्तस्ततो न भवत्यपि—'वृ॒त्रं' हंनति' ( ऋ० ८ ८९.३ ). 'अहिः शयते' ( ऋ० १.३२.५ ) । अन्येभ्यश्च भवति—'त्राध्वं नो देवाः' ( ऋ० २ २९.६ ) ॥**

**न्यासः**

**अदिप्रभृतिभ्यः शपः ॥ ७२ ॥**

**बहुलं छन्दसि ॥ त्राध्वमिति ।** 'त्रैङ्, पालने' भौवादिकः, लोट्, ध्वमादेशः 'टेरेत्वम्, सवाभ्यां वामौ' इत्यमादेशः ॥ ७३ ॥

**पदमञ्जरी**

**अदिप्रभृतिभ्यः शपः ॥** कथम् 'न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेद्, इति, तथा **भट्टिकाव्ये**—'आश्वसेयुर्निशाचराः' ( १९ . २१ ) इति, तथा 'न विश्वसेत्पूर्वविरोधितस्य' इति ? निरङ्कुशाः कवयः । अपर आह—'क्षमूष् सहने' ( धा० पा० ४४२ ) घटादिः; तत्र 'घटादयः षितः' इति सिद्धे षित्करणं ज्ञापकम्—अनित्यं गणकार्यमिति, तेनैवमादिप्रयोगोपपत्तिरिति नात्र किञ्चिदपभाषितमस्ति ॥ ७२ ॥ ७३ ॥

**भावबोधिनी**

**विमर्श**—विभक्ति की धातु संज्ञा या प्रातिपदिकसंज्ञा नहीं होती है किन्तु उनके अन्तर्गत होने से विभक्ति इस अवयव में भी समुदायसंज्ञा का व्यवहार होता है । उदा० पुत्रीयति । आत्मनः पुत्रम् इच्छति—इस अर्थ में "सुप आत्मनः क्यच्" ( पा. सू. ३.१.८ ) से क्यच् प्रत्यय, अनुबन्धलोप कर देने पर पुत्रम् + य इस समुदाय को सनाद्यन्त मानकर "सनाद्यन्ता धातव." ( पा. सू. ३.१.३२ ) से धातुसंज्ञा और उसके फलस्वरूप प्रस्तुत सूत्र से सुप् विभक्ति = 'अम्' का लुक् कर देने पर 'पुत्रय' यह बनता है । "क्यचि च" ( पा. सू. ७.४.३३ ) सूत्र से 'अ' का 'ई'—पुत्रीय । धातुसंज्ञा के कारण सुप् विभक्ति का लुक् होता है और तिङ् विभक्ति जोड़ कर पुत्रीय + ति बनता है । इसी प्रकार 'घटं करोति' इस अर्थ में 'तत्करोति, तदाचष्टे' इससे णिच्' होता है—घटम् + णिच । अनुबन्धलोप और सनाद्यन्त मानकर धातुसंज्ञा तथा सुप् विभक्ति का लुक् होने पर, भसंज्ञा अलोप, 'घटि' इससे लट् तिप्, शप्, इ का गुण तथा अयादेश करने पर—घटयति रूप बनता है ।

कष्टंश्रितः तथा राज्ञः पुरुषः यहाँ द्वितीया तत्पुरुष और षष्ठी तत्पुरुष समास करने पर "कृत्तद्धितसमासाश्च' ( पा. सू. १.२.४६ ) सूत्र से प्रातिपदिक संज्ञा कर देने पर प्रस्तुत सूत्र सुप् विभक्तियों का लुक् कर देता है—कष्टश्रित, राजन् पुरुष ( इसमें न् लोप करने के बाद ) पुनः 'सु' आदि विभक्तियाँ जोड़कर यथेष्ट रूप बनाये जाते है । ७१ ॥

'अद्' आदि [ अदादिगणीय ] धातुओं के बाद वाले शप् का लुक् हो जाता है । उदा० अत्ति । हन्ति । द्वेष्टि । [ अद् + लट् = तिप् "कर्तरि शप्" (पा० सू० ३.१.६८ ) से शप् विकरण होता है, उसका लुक् करने के बाद "खरि च" (पा० सू० ८।४।५४ से 'द्' का चर्त्व 'त्' करने पर अत् + ति अत्ति । अद् का अर्थ खाना है । हन् का अर्थ मारना और द्विष् का अर्थ द्वेष करना है । द्विष् + शप् + ति, शप् के लुक् करने के बाद ष्टुत्व तथा उपधा का गुण करने पर द्वेष्टि रूप बनता है । ] ॥ ७२ ॥

छन्दः = वेदविषय में शप् का बहुलरूप से लुक् होता है । अद् आदि जिनसे कहा गया है उनसे नहीं भी होता है—उदा० वृत्रं हनति अहिः शयसे । [ यहाँ हन् + शप् = अ + ति, शीङ् + शप् = अ + त है । शप् का लुक् नहीं होता है । ] अदादिगणीय से भिन्न धातुओं से भी लुक् हो जाता है—त्राध्वं नो देवाः । [ त्रैङ् धातु अदादिगणीय नहीं है अपितु भ्वादिगणीय है तथापि इससे परे शप् का लुक् होता है—त्रै + शप् + ध्वम्, ऐ का आत्व 'आदेच उपदेशेऽशिति" सूत्र से होता है । लोक में शप् होने से 'ऐ' का 'आय्' करने पर 'त्रायध्वम्' यह रूप होता है देवता ! हमारी रक्षा करो । ] ॥ ७३ ॥

**६०८. यङोऽचि च ॥ ७४ ॥ ( २६६० )**

**यङो लुग्भवति अचि प्रत्यये परतः। चकारेण बहुलग्रहणमनुकृष्यते, न तु छन्दसीति, तेन छन्दसि भाषायां च यङो लुग्भवति। लोलुवः। पोपुवः। सनीस्रंसः। दनीध्वंसः ( ३.१.१३४ )। बहुलग्रहणादनच्यपि भवति– शाकुनिको लालपीति। दुन्दुभिर्वावदीति ( ७.३.९४ ) ॥**

**न्यासः**

**यङोऽचि च ॥ अचि प्रत्यये परत इति।** प्रत्ययग्रहणमचीति न प्रत्याहारग्रहणमिति प्रदर्शनार्थम्। यदि हि प्रत्याहारग्रहणमभिमतं स्यात् तदाऽणीति णकारेणैव कुर्यात् न हि यङन्तादणोऽन्येऽचः परे सम्भवन्तीत्यभिप्रायः। इदमेवाज्ग्रहणं ज्ञापकम्–सर्वे धावतः पचाद्यन्तः पातिन इति। **लोलुव इति।** 'धातोरेकाचो हलादेः क्रियासमभिहारे' इति यङ्, द्विर्वचनं 'सन्यङोः' इत्येन, 'गुणो यङ्लुकोः' इति गुणः। लोलू य इति स्थिते पचाद्यच्, यङो लुक्, 'न धातुलोप' इत्यादिना गुणप्रतिषेधः। 'अचि श्नुधातु' इत्यादिनोवङ्। **सनीस्रसः। दनीध्वसं इति।** 'स्रन्सु ध्वन्सु अवस्रंसने', पूर्ववद् यङादिकार्यम। 'न लुमताङ्गस्य' इति प्रतिषेधात् प्रत्ययलक्षणेन 'अनिदिताम्' इत्यादिनाऽनुनासिकलोपो न भवति। 'नीग्वञ्चु' इत्यादिनाभ्यासस्य नीगागमः। **लालपीति, वावदीतीति।** लपेर्वदेश्च 'दसीर्घोऽकितः' इत्यभ्यासस्य दीर्घः। 'यङो वा' इतीट् ॥ ७४ ॥

**पदमञ्जरी**

**यङोऽचि च ॥ अचि प्रत्यये परत इति।** पचाद्यचीत्यर्थः। एतदेव ज्ञापकम्—सर्वधातुभ्यः पचाद्यच् भवतीति। प्रत्याहारग्रहणं तु न भवति, तथा हि सति—अणीत्येव वक्तव्यम्; अन्याजादेः प्रत्ययस्यासंभवात्। **न तु छन्दसीति।** 'हुश्नुवोः सार्वधातुके' इत्यत्र वार्त्तिकम्—'हुश्नुग्रहणमनर्थकमन्यस्याभावात्' (का० वा० ४११९)। याति वातीत्यत्र ङिङतीत्यधिकारान्न भविष्यति, यातः वातः, अचीत्यनुवर्तते। यान्ति वान्ति, ओरिति। युवन्ति रुवन्ति, अनेकाच इति वर्तते। अयुवन्, अरुवन्, अडागमोऽसिद्धः। प्रोर्णवन्ति, असंयोगपूर्वस्येति वर्तते। यङ्लुङ्निवृत्त्यर्थं तर्हि हुश्नुग्रहणम्—योयुवति, रोरुवति। यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम्, छान्दसो यङ्लुक्तत्र 'छन्दस्युभयथा' इत्यार्धधातुकत्वादेव न भविष्यति। तदेवं यङ्लुकश्छान्दसत्वमभ्युपगम्य हुश्नुग्रहणं प्रत्याख्यातं **वार्तिककारेण।** स मन्यते—चकारेणात्र 'बहुलं छन्दसि' इति सर्वमनुवर्त्तिष्यते, तेनाचि प्रत्यये परतः छन्दसि भाषायां यङो लुग् भवतीत्येकं वाक्यम्, छन्दसि बहुलमनैमित्तिको लुगिति द्वितीयम्, प्रसिद्धश्च तथा छान्दसो यङ्लुगिति। प्रयोगश्च चिरन्तनः पद्ये गद्ये च काव्याख्यायिकादौ विकटपदोपन्यासप्रधानैरपि कविभिर्न कृतो दृश्यते।

**भावबोधिनी**

अच् प्रत्यय परे रहते यङ का लुक् हो जाता है। 'च' के द्वारा पूर्ववर्त्ती 'बहुलम्' का अनुकर्षण होता है न कि कि 'छन्दसि' इसका। इस कारण वेद और लोक दोनों में यङ का लुक् हो जाता है। उदा० लोलुवः। पोपुवः। सनीस्रन्सः। दनीध्वंसः। [ पुनः पुनः अतिशयेन वा लुनाति—इस विग्रह में 'लूञ् धातु' से 'धातोरेकाचो हलादेः क्रिया-समभिहारे यङ्'' ( पा० सू० ३.१.२२ ) से यङ् प्रत्यय, ''सन्यङोः'' ( पा० सू० ६.१.९ ) से द्वित्व, ''गुणो यङ्लुकोः' ( पा० सू० ७।४।८२ ) से गुण करने पर 'लोलूय' इस अवस्था में 'नन्दिग्रहिपचादिभ्यः ल्युणिन्यचः' ( पा० सू० ३.१.१३४ ) सूत्र से से 'अच्' प्रत्यय करने पर प्रस्तुत सूत्र से यङ् का लुक् हो जाता है। चूंकि धात्ववयव का लुक् हुआ है अतः ''न धातुलोप आर्धधातुके'' ( पा० सू० १.१.४ ) से 'ऊ' के गुण का निषेध हो जाता है। अतः ''अचि श्नुधातुभ्रुवां य्वोरियङुवङौ'' ( पा० सू० ६.४.७७ ) से 'ऊ' का उवङ् = उव् करने पर 'लोलुवः' ( = बार बार काटने वाला ) यह रूप होता है। पुनः पुनः अतिशयेन पुनाति—इस अर्थ में पूञ् धातु से पूर्ववत् सारी प्रक्रिया की जाती है। पुनः पुनः अतिशयेन वा स्रन्सति, पुनः पुनः अतिशयेन वा ध्वंसति—इस विग्रह में यङ् प्रत्यय द्वित्व, अभ्यास-सम्बन्धी कार्य करने के बाद—सस्रन्स + य, दध्वंस + य यहाँ ''न लुमताङ्गस्य'' ( पा० सू० १.१.६३ ) से प्रत्ययलक्षण का प्रतिषेध हो जाता है। अतः ''अनिदितां हल उपधायाः क्ङिति'' ( पा० सू० ६.४.२४ ) से अनुनासिक न् = अनुस्वार

## ६०९ जुहोत्यादिभ्यः श्लुः ॥ ७५ ॥ ( २४८९ )

**शबनुवर्तते, न यङ्। जुहोत्यादिभ्य उत्तरस्य शपः श्लुर्भवति। लुकि प्रकृते श्लुविधानं द्विवचनार्थम् ( ६ १.१० )। जुहोति। बिभर्ति। नेनेक्ति॥**

### न्यासः

**जुहोत्यादिभ्यः** श्लुः ॥ **शबनुवर्तते, न यङिति**। शप एव स्वरितत्वप्रतिज्ञानात्। **जुहोतीति**। 'श्लो' इति द्विर्वचनम्। **बिभर्तीति**। 'उरत्' इत्यत्त्वम्। रपरत्वम्। 'भृञामित्' इतीत्त्वम्। **नेनेक्तीति**। 'णिजर् शौचपोषणयोः', निजां त्रयाणां गुणः', 'श्लौ' इति द्विर्वचनम् ॥ ७५ ॥

### पदमञ्जरी

**भाष्यकारस्तु** 'हुश्नुवोरिति वक्ष्यन्ति, एवं तर्ह्येतज्ज्ञापयति—भाषायामपि यङ्लुग्भवति' ( म० भा०- ६. ४. ८७ ) इति। तेन चेचिदीति, चेच्छिदीति, योयवीतीत्यादि सिद्धं भवति। **वृत्तिकारस्तु** मन्यते—'यदि ज्ञापकेनापि तावद्भाषायामपि यङ्लुकः प्रयोगो भवति, हन्तैवमत्रैव छन्दोग्रहणं मानुवृतत्। प्रयोगस्तु ज्ञापकाश्रयेणैव यथाभिधानं व्यवस्थास्यते' इति, अतो न भाष्यवार्त्तिकविरोधो वृत्तेः शङ्कनीयः ॥ ७४ ॥

**जुहोत्यादिभ्यः श्लुः ॥ शबनुवर्त्तते, न यङिति**। श्लाविति द्विर्वचनविधानात्। यङ्नुवृत्तौ हि श्लुना तत्र लुप्तेऽपि 'सन्यङोः' इति षष्ठ्याश्रयणाद् द्विर्वचनसिद्धेरनर्थकं तत्स्यात्। **बिभर्तीति**। 'भृञामित्' इत्यभ्या-

### भावबोधिनी

का लोप नहीं होता है। इन दोनों से 'अच्' कर देने पर 'यङ्' का लुक् हो जाता है और इससे पहले "नीग्-वञ्चु-स्रन्सु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम्" (पा. सू. ७. ४. ८४) सूत्र से नीच् = नी का आगम करने पर 'सनीस्रन्सः' 'दनीध्वंसः' ये रूप बनते हैं। ]

बहुल के ग्रहण = अनुकर्षण के कारण अनच् = अच् से भिन्न प्रत्यय परे रहते भी यङ् का लुक् होता है—शाकुनिकः लालपीति। [पुनः अतिशयेन वा लपति—इस विग्रह में लप् धातु से यङ्, द्वित्वादि कार्य। यहाँ अच् प्रत्यय परे न होने पर भी यङ् का लुक् होता है। "दीर्घोऽकितः" (पा. सू. ७. ४. ८३) से उपधा का दीर्घ हो जाने से 'लालप' होता है। "यङो वा" (पा. सू. ७.३.९४) से ईट् का आगम तथा लडादि कार्य करने पर उक्त रूप सिद्ध होता है। ] दुन्दुभिः वावदीति [पुनः-पुनः अतिशयेन वा वदति—इस विग्रह में यङ् प्रत्यय, द्वित्वादि कार्य उपधा-दीर्घ, यङ् का लुक्, ईट् का आगम करने पर रूप सिद्ध होता है। यहाँ 'अच्' यह प्रत्यय है, प्रत्याहार नहीं। ] ॥ ७४ ॥

इसमें 'शप्' इसकी अनुवृत्ति होती है, 'यङ्' इसकी नहीं। जुहोत्यादिगणीय धातुओं से परवर्ती शप् का 'श्लु' हो जाता है। यहाँ लुक् का प्रकरण रहने पर भी श्लु का विधान ["श्लौ" (पा. सू.६.१.१०) से ] द्वित्व करने के लिये है। उदा० जुहोति। बिभर्ति। नेनेक्ति।

['हु' धातु से लट् करने पर 'कर्तरि शप् (पा. सू. ३.१.६८) से शप् होता है। इस का 'श्लु' आदेश प्रकृत सूत्र से होता है। 'प्रत्ययस्य लुक्-श्लु-लुपः' (पा. सू. १. १. ६१) से लोप की श्लु संज्ञा होती है। अतः शप् का श्लु = लोप हो जाता है। परन्तु श्लु शब्द के कारण 'श्लौ' (पा. सू. ६.१.१०) सूत्र से धातु का द्वित्व होता है। हु हु + ति, अभ्यासकार्य करने पर जुहोति रूप बनता है। बिभर्ति यह 'भृञ् धातु का रूप है। भृ + लट्, शप् = श्लु, द्वित्व, "उरत्" (पा. सू. ७.४.६६) से 'ऋ' का 'अ' रपर भर् भृ + ति, हलादिशेष, 'भृञामित्" (पा. सू.७.४.७६) से अभ्यास के 'अ' का 'इ' करने पर बिभृ + ति, गुण, रपर करने पर बिभर्ति रूप बनता है। 'णिजिर् शौच-पोषणयोः' इस का 'निज = लट्, तिप्, शप् + श्लु, द्वित्व, हलादिशेष, निनिज् + ति "णिजां त्रयाणां गुणः श्लौ" (पा. सू. ७. ४. ४५) से अभ्यास का गुण तथा 'ज, का कुत्व करने पर 'नेनेक्ति' रूप बनता है। ] ॥ ७५ ॥

**६१०. बहुलं छन्दसि ॥ ७६ ॥ ( ३४०१ )**

**छन्दसि विषये बहुलं शपः श्लुर्भवति । यत्रोक्तं तत्र न भवति, अन्यत्रापि भवति । जुहोत्यादिभ्यस्तावन्न भवति — 'दाति प्रियाणि' ( ऋ० ४ ८. ३ ) 'धाति देवम्' ( ऋ० ७. १०. ३ ) । अन्येभ्यश्च भवति — पूर्णा विवष्टि ( ऋ० ७. १६. ११ ) । जनिमा विवक्ति ( ऋ० ९. ९७. ७ ) ॥**

**६११. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥ ( २२२३ )**

**लुगनुवर्त्तते, न श्लुः । गाति, स्था, घु, पा, भू — इत्येतेभ्यः परस्य सिचो लुग्भवति परस्मैपदेषु परत. । अगात् । अस्थात् । घु — अदात्, अधात् । अपात् । अभूत् ॥**

**न्यासः**

**बहुलं छन्दसि ॥ दाति धातीति ।** ददातिदधात्योः पूर्वसूत्रेण श्लौ प्राप्ते बहुलं प्रतिषिध्यते । शपो लुक् । **विवष्टीति ।** 'वश कान्तौ', अदादित्वाच्छपो लुकि प्राप्ते श्लुः, 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इत्यनुवर्तमाने 'बहुलं छन्दसि' इतीत्वम्, व्रश्चादिसूत्रेण षत्वम् । 'ष्टुना ष्टुः' इति ष्टुत्वम् । **बिभक्तीति ।** 'भज सेवायाम्', भौवादिकः, शपः श्लुः, पूर्ववदित्त्वम्, 'चोः कुः' इति कुत्वम् । **विवक्तीति** क्वचित् पाठः । स च 'वच भाषणे' इत्येतस्यादादिकस्य वेदितव्यः ॥ ७६ ॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ अगादिति ।** 'इणो गा लुङि' इति गादेशः । **अपादिति ।** 'पा पाने' । **अभूदिति ।** 'भू सुवोस्तिङि' इति गुणप्रतिषेधः ।

**पदमञ्जरी**

सस्येत्त्वम् । **नेनेक्तीति ।** 'णिजिर् शौचपोषणयोः' ( धा० पा० १०९३ ) 'णिजां त्रयाणां गुणः श्लौ' ॥ ७५ ॥ ७६ ॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ अभूदिति ।** 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । **लुगनुवर्त्तते, न श्लुरिति ।** व्याख्यानात् ।

**भावबोधिनी**

वेदविषय में बहुल रूप से शप् का श्लु होता है । जहाँ श्लु कहा गया है वहाँ नहीं भी होता है और [जहाँ नहीं कहा गया] उसमें भी होता है । हु आदि धातुओं से श्लु नहीं होता है—दाति प्रियाणि, दधाति प्रियाणि । [यहाँ 'दा' और 'धा' धातुयें जुहोत्यादिगण की हैं फिर भी शप् का श्लु नहीं होता है अतः द्वित्वादि नहीं होते हैं । ] जुहोत्यादि से भिन्न धातुओं से भी शप् का श्लु होता है—पूर्णा विवष्टि । जनिमा विवक्ति ।

[ 'वश कान्तौ' यह अदादिगणीय है । वश् + शप्+लट् में शप् का लुक् प्राप्त होता है परन्तु बहुल रूप से श्लु होता है । अतः द्वित्व, हलादिशेष 'अ' का 'इ' करने पर 'विवश् + ति' "व्रश्च भ्रस्ज" आदि सूत्र से 'श्' का 'ष्' करने पर विवष् + ति, ष्टुत्व —विवष्टि । भज् धातु भी शप् का श्लु, द्वित्वादि करने पर 'बिभक्ति' बनता है । कहीं-कहीं 'विवक्ति' यह पाठ है यह 'वच्' धातु का रूप समझना चाहिये । ] ॥ ७६ ॥

इसमें 'लुक्' इसकी अनुवृत्ति होती है, 'श्लु' इसकी नहीं । इण् = गा स्था, घु = दा, धा, पा और भू — इन धातुओं से परे सिच् प्रत्यय का लुक् होता है ( उस सिच् के बाद ) परस्मैपद प्रत्ययों के परे रहते । उदा० अगात् [ इण् + लुङ्=ति, "इणो गा लुङि" ( पा० सू० २.४.४५ ) से इण् का 'गा' आदेश, अट् आगम् अ गा + ति, च्लि और इसका सिच् करने पर अगा + सिच् + ति, प्रस्तुत सूत्र से सिच् का लुक्, "इतश्च" (पा० सू० ३.४.१०० ) से 'ति' के 'इ' का लोप करने पर — अगात् रूप बनता है । ] अस्थात् । [ स्था + लुङ् = तिप्, अट् आगम, सिच् —अस्था + सिच् + ति, सिच् लोप, इ-लोप —अस्थात् ] 'घु' यह दा तथा धा धातुओं की संज्ञा है अतः — अदात्, अधात् । [ दा + लुङ् = ति, अट्, सिच्, अदा + सिच् + ति, सिच्लोप, इलोप । धा + लुङ् = तिप्, अट्, सिच् — अधा + सिच्+ति, सिच्लोप, इलोप । ] अपात् । [ पा + लुङ् = ति, अट् सिच् + ति, सिच्लोप, इलोप — अपात् ] अभूत् । [ भू+लुङ् = सिच् + ति, अट् अभू + सिच् + ति, सिच्लोप, इलोप — अभूत् । ] ।

**॥गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्॥ ( म० भा० २. ४. ७७ वा० १ )। गायतेः पातेश्च न भवति-अगासीन्नटः ( म० भा० )। अपासीन्नृपः।**

**परस्मैपदेष्विति किम् ? अगासातां ग्रामौ देवदत्तेन॥**

**न्यासः**

**गापोर्ग्रहणे इण्पिबत्योर्ग्रहणमिति।** इणादेशस्य ग्रहणं तावद् गातीत्यत एव श्तिपा निर्देशाद् विज्ञायते। श्तिपा हि विकरणशून्य एवमर्थो निर्देशः क्रियते—लुग्विकरणस्यैव ग्रहणं यथा स्यादिति; अन्यथा हि यदि गायतेर्ग्रहणमिष्टं स्यात् तदा गा इत्येवं ब्रूयात्। एवं तर्हि 'गामादाग्रहणेष्वविशेषः' इत्युभयोरपि ग्रहणं भविष्यति, किं श्तिपा निर्देशेन ? तस्मादयमेव श्तिपा निर्देशो ज्ञापयति—इणादेशस्यैवेदं ग्रहणम्, न गायतेरिति। पाग्रहणे पिबतेरेव ग्रहणमित्येतदपि 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' (व्या० परि० ५०) इत्यनया परिभाषया विज्ञायते। **अगासीदिति।** 'कै गै शब्दे', 'यमरमनमातां सक् च' इति सगागमः। सिच्, इट् च। 'अस्तिसिचोऽपृक्ते' इतीट्। 'इट ईटि' इति सिचो लोपः। **अपासीदिति।** 'पा रक्षणे', पूर्ववत् सगादिकार्यम्।

**अगासातामिति।** कर्मण्यात्मनेपदम्। आताम्। किमर्थं पुनः सिचो लुगुच्यते, न लेरित्येवोच्येत ? अत्राप्ययमर्थः सम्पाद्यते, उत्तरसूत्रे लिग्रहणं न कर्तव्यं भवति ? नैतदस्ति; इह लेर्हि लुकि विज्ञायमाने मा हि गातामिति 'आदिः सिचोऽन्यतरस्याम्' इत्यादिः स्वरो न सिद्ध्येत्, स पुनरुदात्तः। अगुरित्यत्राप्यात इति 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्भावो न सिद्ध्यति। तस्मात् सिच एव लुग् वक्तव्यः॥ ७७॥

**पदमञ्जरी**

इण्पिबत्योर्ग्रहणमिति। इणादेशो गा इणित्युक्तः, तत्र गातीत्यादाविकस्येणो य आदेशस्तदनुकरणो गा तिपि शब्लुका निर्दिष्टः, स्थानिवद्भावात् प्रकृतिवदनुकरणं भवति ( व्या० परि० ११३ ) इति' च। तेन 'गामादाग्रहणेष्वविशेषः' इति लाक्षणिकस्यापि गारूपस्य यद्यपि ग्रहणं प्राप्तम्, तथापि गातीति निर्देशादेव तस्य निवृत्तिः। तथा 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' ( व्या० परि० ५० ) इति पिबतेरेव ग्रहणम्। **अगासीत् अपासीदिति।** 'कै गै रै शब्दे' ( धा० ९१६. ९१७. ९०९ ) 'पा रक्षणे' ( धा० पा० १०५६ ) 'यमरमनमातां सक्च' इति सगागमः, सिचश्चेट्, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि'। 'पै ओवै शोषणे' ( धा० पा० ९२०. ९२१ ) इत्यस्य लाक्षणिकं पारूपमिति ग्रहणाभावः।

**अगासातामिति।** कर्मण्यात्मनेपदम्. आताम्॥ ७७॥

**भावबोधिनी**

*गा तथा पा के ग्रहण में 'इण्' तथा पिबति आदेशवाली 'पा' का ग्रहण होता है। * अतः "गै" तथा 'पा' धातुओं का ग्रहण नहीं होता है अर्थात् इण् की आदेश भूत 'गा' तथा पान अर्थ वाली 'पा' का ग्रहण होता है अतः 'शब्द अर्थवाली 'गै' और रक्षा अर्थवाली 'पा' धातु का ग्रहण नही है। उदा० अगासीत् नटः [ गै + लुङ्=तिप्, अट् ऐ का आत्व सिच्—अगा+स्+ति, 'यमरमनमातां सक् च" ( पा० सू० ७.२.७३ ) इससे सक् = स्=का आगम, और इसी सूत्र से सिच् के पूर्व में से इट् आगम, "इतश्च" ( पा० सू० ३.२.१०० ) से इलोप 'अ गा स् + इस् = त्, "अस्तिसिचोऽपृक्ते" ( पा० सू० ७.३.९६ ) से ईट् आगम, 'अ गा स्+इस् ई + त्' यहाँ प्रस्तुत सूत्र से सिच् का लोप नहीं होता है अपि तु 'इट ईटि' ( पा० सू० ८.२.२८ ) से सिच् का लोप होता है, सवर्णदीर्घ करने पर—अगासीत् बनता है। अपासीत् नृपः। राजा ने रक्षा की। [ पा + लुङ्=तिप्, अट्, सक्, इट्, ति के इ का लोप अपा स् इ + स् + त्, ईट् आगम 'प्रस्तुत सूत्र से सिच् का लोप नहीं', 'इट ईटि' सूत्र से सिच् लोप, सवर्णदीर्घ—अपासीत्। ]

परस्मैपद प्रत्यय परे रहते—इसका क्या फल है ? देवदत्तेन ग्रामौ आगासाताम्। [ देवदत्त द्वारा दो गाँव जाये गये। यहाँ कर्मवाच्य में आत्मनेपद है। अतः सिच् का लुक् नहीं होता है। इण्=गा + लुङ्=आताम्, अट् सिच्—अगास्+आताम्। ]॥ ७७॥

## ६१२. विभाषा घ्राधेट्शाच्छासः ॥ ७८ ॥ ( २३७६ )

**घ्रा, धेट्, शा, छा, सा—इत्येतेभ्य उत्तरस्य सिचः परस्मैपदेषु विभाषा लुग्भवति । धेटः पूर्वेण प्राप्ते विभाषार्थं वचनम्, परिशिष्टानामप्राप्ते । अघ्रात्, अघ्रासीत् । अधात्, अधासीत् । अशात्, अशासीत् । अच्छात्, अच्छासीत् । असात्, असासीत् । परस्मैपदेष्वित्येव- अघ्रासातां सुमनसौ देवदत्तेन ॥**

### न्यासः

**विभाषा घ्राधेट्शाच्छासः ॥** 'घ्रा गन्धोपादाने', 'धेट पाने' 'शो तनूकरणे', 'छो छेदने', 'षोऽन्तकर्मणि'। **धेटः पूर्वेण नित्ये प्राप्त इति ।** घुसंज्ञकत्वात् । अलुक्पक्षे पूर्ववत् सगादिकार्यम् । धेटः सानुबन्धकस्य निर्देशो धाञ्परीहारार्थः । यदि कृतात्त्वो निर्दिश्येत तदा धाञोऽपि ग्रहणं स्यात् । **अघ्रासातामिति** । कर्मण्यात्मनेपदम् ॥ ७८ ॥

### पदमञ्जरी

**विभाषा घ्राधेट्शाच्छासः ॥** धेटः सानुबन्धकस्य निर्देश आत्वपरिहारार्थः । 'धा' इत्युच्यमाने प्रतिपदोक्तत्वाद्धाञ एव ग्रहणं स्यात् । ननु सत्यप्यनुबन्धोच्चारणेऽनुबन्धानामनेकान्तत्वात् 'नानुबन्धकृतमनेजन्तत्वम्' ( शा० परि० १५ ) इत्युदीचां माङ इतिवदात्वं प्राप्नोति ? सत्यम्; अयमेव निर्देशो ज्ञापयति–सानुबन्धानुकरणे नावश्यकमात्त्वमिति । तेन सूत्राद् बहिरपि वेञः, धेटः, दैप इत्यादि प्रयोगोपपत्तिः **अघ्रासातामिति** । कर्मण्यात्मनेपदम्, आताम् । **सुमनसाविति** । 'स्त्रियः सुमनसः पुष्पम्' **इत्यमरसिंहः**, 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' ( लिङ्गा० २९ ) इति **पाणिनीयं** सूत्रम् । तद्बहुत्वं प्रायिकं मन्यते, 'एका च सिकता तैलदानेऽसमर्था' ( म० भा० १. ३१. ४ ) इति भाष्ये प्रयोगात् ॥ ७८ ॥

### भावबोधिनी

घ्रा, धेट्, शा, छा, तथा सा—इन धातुओं से परे सिच् का वैकल्पिक् लोप होता है परमैपद प्रत्यय परे रहते । [ धेट् के 'ए' आत्व करने पर 'धा' रूप हो से जाने इसकी भी घुसंज्ञा हो जाती है अतः ] धेट् धातु से परे सिच् का लुक् पूर्ववर्ती सूत्र से प्राप्त रहने पर विकल्प के लिये यहाँ ग्रहण है अर्थात् यह प्राप्तविभाषा है, अन्य धातुओं से परे सिच् का लुक प्राप्त न रहने पर विधान है अर्थात् अप्राप्त-विभाषा है । उदा० अघ्रात्, अघ्रासीत् । [ घ्रा+लुङ्=तिप्, अट्, च्लि और इसका सिच् इलोप--अ घ्रा+स्+त्, सिच् का लुक् करने पर--अघ्रात् । लुक् न होने पर "यमरमनमातां सक् च" ( पा० सू० ७.२.७३ ) से सक्=स् आगम, वलादि मानकर 'इट्' आगम, "अस्तिसिचोऽपृक्ते" ( पा० सू० ७.३.९६) से ईट् आगम, " इट ईटि" ( पा० सू० ८.२.२८ ) से सिच् का लुक्, सवर्णदीर्घ—अघ्रासीत ] अधात्, अधासीत् । [ धे+लुङ् तिप्, आत्व, अट् सिच्, इलोप, अधास्+त्, विकल्प से सिच् का लुक्—अधात् । सिच् का लुक् न रहने पर पूर्ववत् सक्, ईट्, सिच् का लोप, सवर्णदीर्ण--अधासीत् । ] अशात्, अशासीत् [ 'शो तनूकरणे' धातु का रूप है । 'ओ' का आत्व करने पर 'शा' रूप मानकर पूर्ववत् सभी प्रक्रिया की जाती है । ] अच्छात्, अच्छासीत् । [ यह 'छो छेदने' का रूप है । 'ओ' का आत्व करने पर शेष प्रक्रिया पूर्ववत् होती है । ] असात्, असासीत् [ 'षोऽन्तकर्मणि' धातु का रूप है । "धात्वादेः षः सः' ( पा० सू० ६.१.६४ ) से 'ष्' का 'स्' और ओ का आ करके शेष प्रक्रिया पूर्ववत् की जातीं है । ] परस्मैपद प्रत्ययों के परे रहते ही वैकल्पिक लोप होता है [ अतः कर्मवाच्य आत्मनेपद में लोप नहीं होता है । ]—अघ्रासातां सुमनसौ देवदत्तेन । देवदत्त द्वारा दो फूल सूँघे गये । [ यहाँ कर्म अर्थ में लट् है अतः सिच् का लुक् नहीं होता है ] ।

**विमर्श**—काशिकाकार ने परस्मैपद के प्रत्युदाहरण के रूप में यह वाक्य लिखा है—अघ्रासातां सुमनसौ देवदत्तेन । परन्तु "स्त्रियः सुमनसः पुष्पम्' इस अमरकोश के अनुसार और "अप्सुमनस्समासिकता-वर्षाणां बहुत्वं च" ( पा० लिङ्गानु० २९ ) के अनुसार 'सुमनस्' शब्द सदैव स्त्रीलिङ्ग बहुवचन ही होता है । तब काशिका में द्विवचन का साधुत्व चिन्तनीय है । इसका समाधान पदमंजरीकार ने किया है कि यह बहुवचन प्रायिक है । इसीलिये भाष्यकार ने "एका च सिकता तैलदानेऽसमर्था" ऐसा प्रयोग किया है । अतः यहाँ द्विवचन का प्रयोग शुद्ध ही है ॥ ७८ ॥

**६१३. तनादिभ्यस्तथासोः ॥ ७९ ॥ ( २५४७ )**

**तनादिभ्य उत्तरस्य सिचस्तथासोः परतो विभाषा लुग्भवति । अतत, अतथाः । अतनिष्ट, अतनिष्ठाः । असात्, असाथाः । असनिष्ट, असनिष्ठाः । 'जनसनखनां सञ्झलोः' ( ६. ४. ४२ ) इत्यात्वम् । थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम्, परस्मैपदे न भवति-अतनिष्ट यूयम् ( म० भा० ) ॥**

**६१४. मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥ ८० ॥ ( ३४०२ )**

**न्यासः**

**तनादिभ्यस्तथासोः ॥ अततेति ।** 'स्वरितञितः' इत्यात्मनेपदम् । 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपः । **अतनिष्ट यूयमिति ।** मध्यमपुरुषबहुवचनान्तमेतत् ॥ ७९ ॥

**मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥** सिच इत्यनुवर्तमाने पुनर्लिग्रहणम् 'आदिः सिचोऽन्यतर-

**पदमञ्जरी**

**तनादिभ्यस्तथासोः ।** उदाहरणेषु स्वरितेत्त्वादात्मनेपदम् । **थासा साहचर्यादिति ।** यद्यपि तावदयं तशब्दो दृष्टापचारः—अस्त्यात्मनेपदमस्ति च परस्मैपदम्, अस्ति चैकवचनमस्ति च बहुवचनम् । अयं तु खलु थाःशब्दोऽदृष्टापचार आत्मनेपदमेकवचनं च, तस्यास्य कोऽन्यः सहायो भवितुमर्हति, अन्यदत आत्मनेपदादेकवचनाच्चेति भावः । **आत्मनेपदस्येति ।** उपलक्षणमेतत् । एकवचनस्येत्यपि द्रष्टव्यम् ॥ ७९ ॥

**मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।** च्लेरेवात्रग्रहणमिष्यते, न लिङादीनाम्, तदर्थं 'सिचः'

**भावबोधिनी**

तन् आदि [ तनादिगणीय ] धातुओं से परे सिच् का विकल्प से लुक् होता है, त और थास् इन दो प्रत्ययों के परे रहते । उदा० अतत, अतथाः । अतनिष्ट, अतनिष्ठाः । [ तन् + लुङ् = त, अट्, सिच्—अतन् + स् + त । सिच् का लुक् करने पर अतन् त । "अनुदात्तोपदेश-वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" ( पा. सू. ६।४।३७ ) से अनुनासिक=न् का लोप करने पर—'अतत' । जब सिच् का लुक् नहीं होता है तब इट् आगम होने से अतन् + इ स् + त, यहाँ षत्व और ष्टुत्व करने पर—'अतनिष्ट' यह दूसरा रूप होता है । ] अतथाः [ तन + लुङ् = थास् अट्, सिच्—अतन् + स् + थास्, प्रस्तुत सूत्र से सिच् लुक् होने के बाद पूर्ववत् अनुनासिक=न् का लोप और 'स्' का रु तथा विसर्ग किया जाता है—अतथाः । जब सिच् का लुक् नहीं होता है तब ] अतनिष्ठाः [ अ तन् + स् + थास्, इट्, षत्व, ष्टुत्व, स् का रुत्व विसर्ग —अतन् इ ष् ठाः । ] असात, असनिष्ट । असाथाः, असनिष्ठाः । [ अ तन् + स् + थास्, इट्, षत्व, ष्टुत्व, स् का रुत्व विसर्ग—अतन् इ ष् ठाः । ] असात, असनिष्ट । असाथाः, असनिष्ठाः । [ 'षणु दाने' का रूप है ।' धात्वादेः षः सः' ( पा. सू. ६.१.६४ ) से 'ष्' का 'स्' अतः 'ण्' का भी 'न्' हो जाता है—सन् + लुङ् + त, अट्, सिच् असन् + स् + त, सिच् का वैकल्पिक लुक् करने पर "जनसनखनां सञ्झलोः" ( पा. सू. ६.४.४२) से 'न्' का आत्व करने पर - असात ( दान दिया ) यह रूप बनता है । सिच् का लुक् न होने पर—इट् आगम असन् इ स् त, षत्व और ष्टुत्व—असनिष्ट । इसी प्रकार षण्=सन् + लुङ् = थास्, अट्, सिच् असन् + सिच् + थास् सिच् लुक्, 'न्' का आत्व, स् का रुत्वविसर्ग—असाथाः । सिच् का लुक् न होने पर असन् + स् + थास्, इट्, षत्व, ष्टुत्व, स् का रुत्व विसर्ग—असनिष्ठाः । ] इनमें "जनसनखनां सञ्झलोः" (पा. सू. ६.४.४२) से 'न्' का आत्व होता है । थास् के साहचर्य से आत्मनेपद का 'त' शब्द लिया जाता है । अतः परस्मैपद में सिच् का लुक् नहीं होता है - अतनिष्ट यूयम् । [ 'तन्' उभयपदी है । परस्मैपद मध्यम पुरुष बहुवचन में अतन् + सिच् + लुङ्=थ में "तस्थस्थमिपां तान्तन्तामः' (पा. सू. ३.४.१०१) से 'थ' का 'त' होता है । यह परस्मैपद का त है अतः सिच् लुक् न होकर इट्, षत्व और ष्टुत्व होता है—अतनिष्ट । ] ॥ ७९ ॥

मन्त्रविषय [ वैदिक प्रयोग ] में घस, ह्वर, णश, वृ, दह, आत् [ = आकारान्त ] वृच्, कृ, गमि और जनि—इन

**मन्त्रविषये घस, ह्वर, णश, वृ, दह, आत्, वृच्, कृ, गमि, जनि इत्येतेभ्य उत्तरस्य लेर्लुग्भवति। घस-- अक्षन् पितरोऽमी'मदन्त पितरः ( तै० सं० १. ८. ५. ३ )। ह्वरेति 'ह्वृ कौटिल्ये' ( धा० पा० ९३१ )--मा ह्वार्मित्रस्य त्वा। णश--धूर्तिः प्राणङ् मर्त्यस्य' ( ऋ० १. १८. ३ ) 'वृ' इति वृङ्वृञोः ( धा० पा० १५१०. १२५५ ) सामान्येन ग्रहणम्--'सु_रुचो वे_न आवः' ( वा० स० १३. ३ )। दह--मा न**

**न्यासः**

स्याम्' इत्यादेः सिच्कार्यस्य निवृत्त्यर्थम्, उत्तरार्थञ्च। **अक्षन्निति**। 'अद भक्षणे', 'लुङ्', 'लुङ्सनोर्घस्लृ' इति घस्लादेशः। ततः 'च्लि लुङि' इति च्लिः, तस्यानेन लुक्, झेरन्तादेशः, 'इतश्च' इतीकारलोपः, 'संयोगान्तस्य' इति तकारलोपः, 'गमहन' इत्यादिनोपधालोपः, 'शासिवसिघसीनाञ्च' इति षत्वम्, 'झलां जश् झशि' इति जश्त्वम्, 'खरि च' इति चर्त्वम्। ह्वरेत्यागन्तुकेनाकारेण निर्देशः। **मा ह्वरिति**। लुङ्, तिब्गुणरपरत्वानि, हल्ङ्यादिलोपः, 'न माङ्योगे' इत्यडागमाभावः। **प्राणडिति**। 'णश अदर्शने', पूर्ववल्लुङादिकार्यम्, व्रश्चादिसूत्रेण षत्वम्, 'झलां जशोऽन्ते' इति जश्त्वम्—षकारस्य डकारः, तस्य 'वावसाने' इति चर्त्वं टकारः, 'उपसर्गादसमासेऽपि' इति णत्वम्। क्वचित् **प्राणगीति पाठः**। तत्र 'क्विन्प्रत्ययस्य कुः' इत्यतः कुरित्यनुवर्त्तमाने 'नशेर्वा' इति कुत्वम्। **आवरिति**। वृञस्तिप्, गुणो रपरत्वम्, हल्ङ्यादिना सिपो लोपः। **धगिति**। 'दह भस्मीकरणे', सिप्, हल्ङ्या-

**पदमञ्जरी**

इत्युनुवर्तयन्ति—सिचो यो लिः स्थानिभूतस्तस्येति व्याचक्षते। सिचि प्रकृते लिग्रहणम् 'आदिः सिचोऽन्यतरस्याम्' इत्यादिसिच्कार्यं मा भूदिति। पूर्वत्र हि मा हि दातामिति सिच्स्वरो भवत्येव। ह्वरेति विहितगुणस्यानुकरणम्, अकारश्चागन्तुक उच्चारणार्थः। **अक्षन्निति**। 'लुङ्सनोर्घस्लृ', 'गमहन्' इत्युपधालोपः, 'शासिवसि' इति षत्वम्। **प्राणडिति**। व्रश्चादिना षत्वे जश्त्वचर्त्वे। **प्राणगिति** पाठे 'नशेर्वा' इति कुत्वम्।

**भावबोधिनी**

धातुओं के बाद आने वाले लि = च्लि का लुक् हो जाता है। (१) घस—अक्षन्नमीमदन्त पितरः। [ भक्षणार्थक अद + लुङ् "लुङ्सनोर्घस्लृ" (पा. सू. २.४.३७) से अद् का घस्लृ आदेश करने पर घस् + लुङ् + झि, अट्, "च्लि लुङि" (पा. सू. ३.१.४३) से च्लि = लि—अघस् + लि + झि इस 'च्लि' का लुक् प्रस्तुत सूत्र से होता है—अघस् + झि, "झोऽन्तः" (पा. सू. ७.१.३) से झ् का अन्त् आदेश—अघस् + अन्ति। 'इतश्च' (पा. सू. ३.४.१००) से इ का लोप, "संयोगान्तस्य लोपः" (पा. सू. ८.२.२३) से 'त्' का लोप अघस् + अन्। "गमहनजनखनघसां लोपः" (पा. सू. ६।४।९८) से उपधा अ का लोप, "शासि-वसिघसीनां च" (पा. सू. ८.३.६०) से स् का ष् अ घ् ष् + अन्। "झलां जश् झशि" (पा. सू. ८.४.५३) से 'घ्' का जश्त्व 'ग्' अग्ष् + अन्। "खरि च" (पा. सू. ८.४.५५) से 'ग्' का चर्त्व 'क्' अक्ष् + अन्। क् + ष् = क्ष् करने पर—अक्षन् यह रूप बनता है। ] (२) ह्वर–यह 'ह्वृ कौटिल्ये' का ग्रहण है—मा ह्वार्मित्रस्य त्वम्। [ ह्वृ + लुङ् = तिप्, च्लि, 'मा' के योग में अट् का निषेध—ह्वृ + च्लि + सिच् + ति। ऋ का गुण, रपर—ह्वर्ति। "इतश्च" (पा. सू.३.४.१००) से इ का लोप, 'त्' का लोप "संयोगान्तस्य लोपः" (पा. सू. ८.२.२३) से 'ह्वर्' यह बनता है। ] (३) नश्—प्राणड् = प्राणङ् मर्त्यस्य। [ 'प्र' उपसर्ग नश् + लुङ् = तिप्, अट्, च्लि, णत्व सवर्ण-दीर्घ—प्राणश् + च्लि + ति, च्लि का लुक् 'इ' लोप, त् का संयोगान्तलोप—प्राणश्। अब "व्रश्चभ्रस्ज" (पा. सू. ८.२.३६)से श्' का 'ष्' और "झलां जशोऽन्ते" (पा. सू. ८.२.३९) से 'ष्' का 'ड्' करने के बाद 'वाऽवसाने' (पा. सू. ८.४.५६) से विकल्प से चर्त्व होता है अतः प्राणट् और प्राणड् ये दो रूप होते हैं। कहीं-कहीं—प्राणक्, प्राणग् यह पाठ है। इसमें "नशेर्वा" (पा. सू. ८.२.६३) से कुत्व किया जाता है। कहीं कहीं—'प्राणङ् मर्त्यस्य' यह भी पाठ है, यह परसवर्ण-सन्धि के कारण ऐसा होता है। ] (४) वृ—इससे वृङ् तथा वृञ् दोनों का सामान्यरूप से ग्रहण होता है 'सुरुचो वेन आवः' [ 'वृ + लुङ् = सिप्, आङ् उपसर्ग अथवा आट् आगम आवृ + ति, च्लि और उसका लुक्, ऋ का गुण, रपर आवर्सि। "हल्ङ्याब्भ्यः" से सि' लोप रेफ का विसर्ग—आवः। ] (५) दह—मान आ धक्। दह् +

आ धक (ऋ० ६. ६१. १४) आदिति आकारान्तग्रहणम्--'प्रा पूरणे' (धा० पा० १०६१)। आप्रा द्यावापृथिवी अन्तरिक्षम् (ऋ० १. ११५. १)। वृच्--मा नो अस्मिन्महाधने परावर्क् भारभृद्यथा (ऋ० ८. ७५. १२)। कृ—अक्रन् कर्म कर्मकृतः (तै० स० १. ८. ३. ३)। गमि—सद्यः पुष्टिं निरुन्धानासो अग्मन् (ऋ० १. १३२. ७)। जनि—'अज्ञत वा अस्य दन्ताः' (ऐ० ब्रा० ७. १४. २ पृ० ११४८)। ब्राह्मणे प्रयोगोऽयम्। मन्त्रग्रहणं तु छन्दस उपलक्षणार्थम्॥

### न्यासः

दिना सिपो लोपः। 'दादेर्धातोर्घः' इति हस्य घः। 'एकाचो बशो भष्' इत्यादिना दकारस्य धकारः, धकारस्य जश्त्वम्—गकारः, तस्य चर्त्वम्—ककारः, अडागमस्य 'बहुलं छन्दस्यमाङ्योगेऽपि' इति निषेधः। **आप्रादिति**। 'प्रा पूरणे' इत्यस्मात् तिप्। **परावर्गिति**। वृजेस्तिप्, लघूपधगुणः, हल्ङ्यादिना लोपः। 'रात्सस्य' इति नियमात् संयोगान्तलोपाभाव। जकारस्य पूर्ववत् कुत्वं गकारः, तस्य चर्त्वं ककारः। **अक्रन्निति**। कृञो झेरन्तादेशः, संयोगान्तलोपः, यणादेशः। **अग्मन्निति**। गमेर्झेः पूर्ववदन्तादेशः। 'गमहन' इत्युपधालोपः। **अज्ञतेति**। जनेर्झस्य 'आत्मनेपदेष्वनतः' इत्यदादेशः, पूर्ववदुपधालोपः, 'स्तोः श्चुना श्चुः' इति श्चुत्वम्। क्वचिद् **अज्ञन्निति** पाठः। तत्र झिः, ततः परस्मैपदं विधेयम्। **ब्राह्मणे प्रयोगोऽयमिति**। योऽयमनन्तरं मन्त्रे जनेरुक्तः स ब्राह्मणो मन्त्रव्याख्यानग्रन्थः। मन्त्रे जनेर्लुक् च दृश्यत इति तद्विषयमुदाहरणं नोपन्यस्तम्। यदि तर्ह्यमन्त्रे लुग् भवति मन्त्रग्रहणं किमर्थमित्याह—**मन्त्रग्रहणमित्यादि**॥ ८०॥

### पदमञ्जरी

**आप्रादिति**। 'प्रा पूर्त्तौ' (धा० पा० १०६१) आङ् पूर्वः। **अज्ञतेति**। 'जनी प्रादुर्भावे' (धा० पा० ११४९), अनुदात्तेत्। बहुवचनस्य 'आत्मनेपदेष्वनतः' इत्यदादेशः, पूर्ववदुपधालोपः, श्चुत्वम्। **ब्राह्मणे प्रयोगोऽयमिति**। मन्त्रव्यतिरिक्तो वेदभागः—ब्राह्मणम्। यथाह **भगवाञ्जैमिनिः**—'यच्चोदकेषु मन्त्राख्या' इति मन्त्रलक्षणान्तरम् शेषे ब्राह्मणशब्दः' इति। **बह्वृचानां हरिश्चन्द्रब्राह्मणे** हरिश्चन्द्रं प्रति वरुणस्यैतद्वाक्यम्—'अज्ञत वा अस्य दन्ताः', (ऐ० ब्रा० ७. १४. १) इति। कथं पुनर्मन्त्रग्रहणे ब्राह्मणग्रहणं भवति? तत्राह—**मन्त्रगहणन्त्विति**। मन्त्रस्य छन्दोरूपत्वात्तेन तदुपलक्ष्यते। बाहुल्येन तु मन्त्रे दर्शनान्मन्त्रग्रहणं कृतम्॥ ८०॥

### भावबोधिनी

लुङ्=सिप्, च्लि और उसका लुक्—दह्+सि, "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" (पा. सू. ६.१.६८)से 'स्' लोप, "दादेर्धातोर्घः" (पा. सू. ८.२.३२) से ह् का 'ध्' तथा 'एकाचो बशो भष् झषन्तस्य स्ध्वोः" (पा. सू. ८.२.३७) से भष्भाव 'द्' का 'ध्' 'धघ्'। पदान्त में जश्त्व करके 'घ्' का 'ग्' तथा चर्त्व करके 'ग्' का 'क्'—धक्। "बहुलं छन्दस्यमाङ्योगेऽपि" (पा. सू. ६.४.७५) से अट् आगम का निषेध हो जाता है। (६) आत्—इससे आकारान्त का ग्रहण है—प्रा पूरण अर्थ में है। आ प्राद् द्यावापृथिवी अन्तरिक्षम्। [प्रा+लुङ्=तिप्, च्लि और उसका लुक्, 'इ' का लोप, जश्त्व करने पर 'त्' का 'द्'—प्राद्।] (७) वृच्—मा नो अस्मिन् महाधने परावर्क्। [वृज्+लुङ्=तिप्, च्लि इसका लुक्, "पुगन्तलघूपधस्य च" (पा. सू. ७.३.८६) उपधा ऋ का गुण, रपर वर्ज्+ति, इलोप, "हल्ङ्यादि" सूत्र से 'त्' लोप, 'ज्' का कुत्व करके 'ग्' और 'ग्' का चर्त्व करके 'क'—वर्क। यहाँ 'वृज्' धातु है। सूत्र में वृच् और वृत्ति में वृञ् का उल्लेख सन्धि के कारण हुआ है] (८) कृ—अक्रन् कर्म कर्मकृतः। [कृ+लुङ्=झि=अन्ति, अट् आगम, च्लि, और उसका लुक् अ कृ+अन्ति, यण् अक्रन्ति, इ लोप संयोगान्त तलोप—अक्रन्।] (९) गमि—अग्मन्। [गम्+लुङ्=झि=अन्ति, अट् आगम, च्लि, इसका लुक् अगम् अन्ति। "गमहनजन" (पा. सू. ६.४.९८) से उपधालोप, इलोप, संयोगान्त त लोप—अग्मन्।] (१०) जनि—अज्ञत वा अस्य दन्ताः। [जन्+लुङ्=झ, अट् आगम, झ का 'आत्मनेपदेष्वनतः' (पा. सू. ६.१.५) से अत आदेश अजन्+अत। "गमहनजन" सूत्र से उपधा अ का लोप अजन्+अत, 'न' का श्चुत्व ञ्, ज्+ञ्=ज्ञ करने पर अज्ञत] यह प्रयोग ब्राह्मण ग्रन्थ में है। सूत्र में 'मन्त्रे' इसका ग्रहण 'वेद' के उपलक्षणार्थ है अर्थात् मन्त्रे शब्द से मन्त्र और ब्राह्मण दोनों का ग्रहण होता है॥ ८०॥

**६१५. आमः ॥ ८१ ॥ ( २२३८ )**

**आमः परस्य लेर्लुग् भवति । ईहाँचक्रे । ऊहाँचक्रे । ईक्षांचक्रे ॥**

**६१६. अव्ययादाप्सुपः ॥ ८२ ॥ ( ४५२ )**

**न्यासः**

**आमः ॥ ईहाञ्चक्रे इति ।** 'ईह चेष्टायाम्' लिट्, 'इजादेश्च' इत्यादिनाऽऽम् । तस्य कृत्वे मकारान्तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञा, सुः, आमः स्वरादिपाठादव्ययत्वम्, 'अव्ययादाप्सुपः, इति सुलोपः, 'कृञ्च' इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः, 'आम्प्रत्ययवद्' इत्यादिनाऽऽत्मनेपदम्, तत एशादेशः, द्विर्वचनम्, अभ्यासकार्यम् । आमो मकारस्यानुस्वारः, 'अनुस्वारस्य ययि परसवर्णः' । अथेह कस्मान्न भवति—जगाम शशामेति ? अर्थवदामो ग्रहणाद्, अस्य चानर्थकत्वात् । प्रत्ययस्त्वनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यर्थवान् । इह तर्हि कस्मान्न भवत्यम रोग इति—आमेति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्', अस्य तु लाक्षणिकत्वात् ॥ ८१ ॥

**अव्ययादाप्सुपः ॥ तत्र शालायामिति ।** तच्छब्दात् सप्तम्यास्त्रल् । तस्य 'प्राग् दिशो विभक्तिः' इति

**पदमञ्जरी**

**आमः ॥ आम उत्तरस्य लेर्लुग्भवतीति ।** यद्यपि सिचा लिर्विशेषितः, तथापीह लेरित्येवानुवर्तत इति भावः । विदामक्रन्विदाङ्कुर्वन्त्वित्यत्र लुङ्लोटोर्निपातनाल्लुग्भवति । तरबादीनां चामन्तादनुत्पत्तिरेव, तस्यानभिव्यक्तपदार्थत्वात् । अयं च लुग्नाप्राप्तेषु तिबादिषु विधीयमानत्वाल्लादेशानामपवादः । तेनामन्तस्यातिङन्तत्वाच्चक्षुः कामम्, याजयाञ्चकारेत्यत्र 'तिङ्ङतिङः' इति, तस्य चानिघातः, तस्माच्च निघातः सिद्धो भवति । कथमामन्तस्य पदत्वम् ? सुबन्तत्वात् । लकारस्य कृत्वात्प्रातिपदिकत्वम् । तिङभाविनो हि लकारस्यातिङिति प्रतिषेधः, न चायं तिङभावी । सुपः श्रवणं कस्मान्न भवति ? आमः स्वरादिषु पाठादव्ययत्वात् । तद्धितेनामा साहचर्येऽपि तद्धित एव न गृह्यते, अपि तु व्याप्तेरतद्धितोऽपि । नञा तु समासप्रसङ्गः, न कारयां न हारयां 'नञ्' सुबन्तेन समस्यत इति समासः प्राप्नोति ? नैष दोषः; अभिव्यक्तपदार्थेन हि याजयाञ्चकारेति नञः सामर्थ्यम्, न त्वनभिव्यक्तपदार्थेनामन्तमात्रेण । आमन्तेभ्यो णलः प्रतिषेधः—शशाम, तताम; वृद्धौ कृतायां स्थानिवद्भावेन णलो लिग्रहणेन ग्रहणे लुक् प्राप्नोति ? अर्थवद्ग्रहणात्सिद्धम् । अर्थवत आमन्तस्य ग्रहणम्, न चैषोऽर्थवान् । एवमपि 'अम गत्यादिषु' ( धा० पा० ४६५ ), तिपो णल्, आम—अत्र प्राप्नोति, अर्थवत्त्वात् ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' ( व्या० परि० ३ ) इति अत्र न भविष्यति ॥ ८१ ॥

**अव्ययादाप्सुपः ॥ तत्र शालायामिति ।** शालाशब्दसन्निधौ स्त्रीत्वयुक्तद्रव्यगतकारकशक्त्यभिधानात्तस्या-

**भावबोधिनी**

आम् से परे 'लि' (लिट्) का लुक् होता है । उदा० ईहाञ्चक्रे । ऊहाञ्चक्रे । ईक्षाञ्चक्रे ।

[ 'ईह चेष्टायाम्' धातु से "परोक्षे लिट्" सूत्र से लिट् ईह + लिट्, "इजादेश्च गुरुमतोऽनृच्छः" ( पा. सू. ३.१.३६ ) से आम् प्रत्यय 'ईहाम्' इसको मकारान्त कृदन्त मान कर प्रातिपदिक संज्ञा और सु विभक्ति, परन्तु अव्यय होने से सु का लोप "आमः" इस प्रस्तुत सूत्र से 'लि' का लुक् करने के बाद "कृञ्चानुप्रयुज्यते लिटि" ( पा. सू. ३.१.४० ) से लिट्परक कृञ् का अनुप्रयोग ईहाम् + कृ + लिट्, "अम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" ( पा. सू. १.३.६३ ) से आत्मनेपद का "त" लिटस्तझयोरेशिरेच्" ( पा. सू. ३.४.८१ )' से ,त' का एश्–'कृ' का द्वित्व ईहाम् कृ कृ + ए, "उरत्" सूत्र से ऋ का अ रपर, हलादि शेष, 'कुहोश्चुः' सूत्र से 'क' का 'च' ईहाम् चकृ + ए, ऋ का यण् ईहाम् + चक्रे म् का अनुस्वार और "अनुस्वारस्य ययि परसवर्णः' ( पा. सू. ८.४.५८ ) से अनुस्वार का परसवर्ण 'ञ्'—ईहाञ्चक्रे । इसी प्रकार ऊह + लिट् तथा ईक्ष + लिट् में भी आम् प्रत्यय लिट् का लुक्, लिट्परक 'कृ' का अनुप्रयोग आदि सभी पूर्वोक्त कार्य करने चाहिये ] ॥ ८१ ॥

अव्यय के बाद आने वाले 'आप्' तथा 'सुप्' प्रत्ययों का लुक् हो जाता है । उदाहरण—तत्र शालायाम् यत्र

**अव्ययादुत्तरस्यापः सुपश्च लुग्भवति । तत्र शालायाम् । यत्र शालायाम् । सुपः खल्वपि—कृत्वा । हृत्वा ॥**

**न्यासः**

विभक्तिसंज्ञा, त्यदाद्यत्वम्, टाप्, 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भवः । 'तद्धितश्चासर्वविभक्तिः' इति त्रलोऽव्ययत्वम्, तत उत्पन्नस्य टापो लुक् । केन पुनरव्ययाट्टाबुत्पद्यते ? अजाद्यतष्टाबिति चेत्, न; स्त्रियां टापो विधानात्, अव्ययस्य चालिङ्गत्वात् । तस्मादव्ययाट्टापः सम्भव एव नास्तीत्यव्ययादपार्थकं टापो लुग्वचनम् ? नापार्थकम्; 'स्त्रियाम्' इति गुणिप्रधाननिर्देशः—स्त्रीत्ववति पदार्थे टाबादय इति । स्त्रीत्ववति च तस्यां शालायामित्येतस्मिन्प दार्थे तत्रेत्येतदव्ययं वर्त्तते । यद्यपि वाक्यार्थोऽत्र स्त्रीत्वम्; तथापि वाक्यार्थतयैव तस्य स्त्रीप्रत्ययो द्योत्यते, सति च स्त्रीप्रत्यये पदार्थ एव स्त्रीत्वं भवति, ततष्टापो लुग् वक्तव्यः । **कृत्वा, हृत्वेति** 'क्त्वातोसुन्कसुनः' इति क्त्वाप्रत्ययस्याव्ययत्वम्, तत उत्पन्नस्य सुपो लुक् । केन पुनरव्ययात् सुबुत्पत्तिः ? स्वादिसूत्रेणेति, चेत्, न; तत्र 'बहुषु बहुवचनम्' इत्यादिना शास्त्रान्तरेण संख्याविशेषेषु स्वादीनां नियतत्वाद्, अव्यानाञ्चासंख्यत्वात् । स्यादेतत्—यत्र संख्यास्ति तत्र 'बहुषु बहुवचनम्' इत्येवमादिना स्वादिनियमः कृतः, अव्ययेभ्यस्तु निसंख्येभ्य सामान्यविहिताः स्वादयो विद्यन्ते एवेति ? वार्त्तमेतत्; स्वादिसूत्रेण हि 'बहुषु बहुवचनम्' इत्यादिना शास्त्रान्तरेणैकवाक्यतायां स्वादीनां विधानात् । तथा हि-तत्रोक्तं संख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्यैकवाक्यतेति । एकवाक्यतायाञ्च कुतः स्वादीनां सामान्येन विधानम् । न ह्यपरं लक्षणमस्ति येन स्वादयः सामान्येन विहिताः एवं तर्ह्येतदेवाव्ययादुत्पन्नस्य सुपो लुग्वचनं ज्ञापकम् —भवन्त्यव्ययात् स्वादय इति । न ह्यनुत्पन्नस्य लुगुपपद्यते । एतदेव ज्ञापकं हृदि कृत्वोक्तम्–'अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव' इति ॥ ८२ ॥

**पदमञ्जरी**

मितिवत्तत्रेत्यत्रापि यदि स्त्रीप्रत्ययः स्यात्पदादेव स्त्रीत्वं प्रतीयेतेति व्यामोहनिवृत्त्यर्थं टापो लुग्वक्तव्यः, यथा—षट्सञ्ज्ञकेभ्यः प्रतिषेध इति भावः । **वार्त्तिककारस्त्वाह**— 'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' ( का० वा० १६३३ ) इति । **कृत्वा, हृत्वेति** । यदा 'बहुषु बहुवचनम्' इत्यादेः स्वादिविधिवाक्येनैकवाक्यता, तदा निस्सङ्ख्येभ्यो निष्कारकेभ्यश्चाव्ययेभ्योऽस्मादेव लुग्विधानाल्लिङ्गात्स्वादयो भवन्ति, भिन्नवाक्यतायामपि नियमपक्षे तुल्यजातीयस्य नियमेन व्यावृत्तिः —बहुष्वेव बहुवचनं न द्वयोरेकस्मिन्, द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु, एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु, इत्यव्ययेभ्यः स्वादीनां सम्भवः । त्रिकपक्षे तु यत्र सङ्ख्या सम्भवति तत्रैव सा वाच्यत्वेन विधीयते, अव्ययेभ्यस्तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति सर्वथाव्ययेभ्यः सुबुत्पत्तिरेषितव्या—प्रत्ययलक्षणेन पदसञ्ज्ञा यथा स्यादिति । सुबिति च सप्तमीबहुवचनस्य पकारेण प्रत्याहारः, न कपः; आपः पृथगुपादानात् ॥ ८२ ॥

**भावबोधिनी**

शालायाम् । [ उस शाला में, जिस शाला में । यहाँ शाला के विशेषण हैं 'तत्र' और 'यत्र' । 'तस्याम्' इस सप्तमी के अर्थ में 'तत्' शब्द से "सप्तम्यास्त्रल्" ( पा. सू. ५.३.१० ) से त्रल् प्रत्यय करने पर तत् + त्र 'त्यदादीनामः" सूत्र से 'अ' आदेश "अतो गुणे" सूत्र से पररूप, "अजाद्यतष्टाप्" से टाप् और "तसिलादिष्वाकृत्वसुचः" सूत्र से पुंवद्भाव, "तद्धितश्चासर्वविभक्ति" सूत्र से त्रल् की अव्यय संज्ञा, अतः इससे आने वाले टाप् =आप् का लुक् प्रस्तुत सूत्र से होता है । ]

सुप् का भी लुक् होता है—कृत्वा, हृत्वा । [ 'कृ' धातु से "समानकर्तृकयोः पूर्वकाले" ( पा. सू. ३.४.२१ ) से क्त्वा प्रत्यय होता है और "क्त्वातोसुन्कसुनः" ( पा. सू. १.१.४० ) से यह अव्ययसंज्ञक बन जाता है । अतः कृदन्त प्रातिपदिक से आने वाले सुप् प्रत्यय का लुक् प्रस्तुत सूत्र हो जाता है कृत्वा । इसी प्रकार हृ + क्त्वा = त्वा से भी लुक् होता है । करके, हरके—ये अर्थ हैं । ] ॥ ८२ ॥

### ६१७. नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ ८३ ॥ ( ६५७ )

**पूर्वेण लुक् प्राप्तः प्रतिषिध्यते । अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग्भवति, अमादेशस्तु तस्य सुपो भवत्यपञ्चम्याः । एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति । उपकुम्भं तिष्ठति । उपकुम्भं पश्य । उपमणिकं तिष्ठति । उपमणिकं पश्य ।**

**अत इति किम् ? अधिस्त्रि । अधिकुमारि । अपञ्चम्या इति किम् ? उपकुम्भादानय ॥**

**न्यासः**

**नाव्ययीभावादतोऽम् त्वपञ्चम्याः ॥ एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवतीति ।** कथम् ? इह द्वयोरर्थयोर्विधानात्, विधायके च वाक्ये द्वे एव । तत्र 'नाव्ययीभावादतः' इत्येतत् प्रतिषेधस्य विधायकमेकं वाक्यम् । 'अम् त्वपञ्चम्याः' इत्येतदमो विधायकं द्वितीयं वाक्यम्, तत्र चात इत्येतदपेक्षते । अतएव **वृत्तौ** वाक्यद्वयमुपन्यस्तम्—'अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग् भवति' इत्येकं वाक्यम्, 'अमादेशस्तु तस्य भवत्यपञ्चम्याः' इति द्वितीयम् । तत्रापञ्चम्या इत्यनेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति पञ्चम्या अमादेश एव प्रतिषिध्यते, न त्वलुक् पूर्ववाक्येन विहितः । अत एवालुकि सति पञ्चम्याः श्रवणमेव भवति । एकवाक्यतायां हि सत्यां कार्यद्वयस्यैकया पाठप्रवृत्त्या विधीयमानत्वात् कार्यद्वयस्यापञ्चम्या इति प्रतिषेधः

**पदमञ्जरी**

**नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥** किमर्थः प्रतिषेधः ? पूर्वसूत्रेण लुङ् मा भूदिति । अमत्र विधीयते, स नाप्राप्ते लुकारभ्यमाणस्तस्य बाधको भविष्यति, यत्र तर्हि प्रतिषिध्यते, पञ्चम्यास्तत्र लुक् प्राप्नोति । प्रतिषेधे तु सति तत्सामर्थ्याद् द्वे वाक्ये भवतः—नाव्ययीभावादित्येकम्, अम्त्वपञ्चम्या इति द्वितीयम् । अत्र चात इत्यपेक्ष्यते । तत्रापञ्चम्या इत्यनेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति पञ्चम्या आदेशः प्रतिषिद्ध्यते, न पूर्ववाक्यविहितः प्रतिषेधः । इममेवार्थं तुशब्देन द्योतयति—अविशेषेण प्रतिषेधः अम्त्वपञ्चम्या इति, तदेतदुक्तम्—**तस्मिन्प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवतीति ।** वाक्यभेदस्तु वृत्तावेव स्पष्टः । **उपकुम्भादिति ।** समीपभूतात्कुम्भादित्यर्थः । कुम्भस्य

**भावबोधिनी**

पूर्ववर्ती सूत्र से प्राप्त लुक् का प्रतिषेध होता है, अदन्त अव्ययीभाव से उत्तरवर्त्ती सुप् का लुक् नहीं होता है, परन्तु उस सुप् का 'अम्' आदेश होता है, पञ्चमी का 'अम्' नहीं होता है । इस 'अम्' आदेश का प्रतिषेध होने पर पञ्चमी विभक्ति का श्रवण होता ही है । उदाहरण—उपकुम्भं तिष्ठति । [ घड़े के पास बैठता है । ] उपकुम्भं पश्य । [ घट के पास देखो । ] उपमणिकं तिष्ठति । [ मणिक के पास बैठता है । ] उपमणिकं पश्य । [ मणिक के पास देखो । ]

[ कुम्भस्य समीपम्—इस विग्रह में "अव्ययं विभक्ति-समीप०" ( पा. सू. २.१.६ ) से समास और विभक्ति का लोप करने पर कुम्भ उप, उप का पूर्वनिपात – उपकुम्भ + सु, प्रस्तुत सूत्र से 'सु' का 'अम्', 'अ' का पूर्वरूप—उपकुम्भम् । ]

अकारान्त से परे सुप् का 'अम्' होता है—इसका क्या फल है ? अधिस्त्रि, अधिकुमारि । [ स्त्रियाम् अधि, कुमार्याम् अधि—इस विग्रह में सप्तमी विभक्त्यर्थ में अव्ययीभाव करने पर विभक्ति का लुक्, अधि का पूर्वनिपात, अव्ययीभाव के नपुंसके होने से ह्रस्व, अधिस्त्रि, अधिकुमारि—इनसे सु आदि विभक्तियों का 'अम्' नहीं होता है क्योंकि ये अकारान्त नहीं है । अपितु लुक् हो जाता है । ]

पञ्चमी को छोड़ कर—इसका क्या फल है ? उपकुम्भात् आनय । [ समीपवर्त्ती घड़े से लाओ, अथवा घड़े के पास से जाओ । 'यहाँ कुम्भस्य समीपात्' में समास के बाद पञ्चमी विभक्ति का योग होता है । उसका अम् आदेश नहीं होता है । ] ॥ ८३ ॥

### ६१८. तृतीयासप्तम्योर्बहुलम् ॥ ८४ ॥ ( ६५८ )

**पूर्वेण नित्यमम्भावे प्राप्ते वचनमिदम्। तृतीयासप्तम्योर्विभक्त्योर्बहुलमम्भावो भवति, अव्ययीभावे। उपकुम्भेन कृतम्, उपकुम्भं कृतम्। उपकुम्भे निधेहि, उपकुम्भं निधेहि।**

❀**सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यममिति वक्तव्यम्**❀ ( **म० भा० २. ४. ८४ वा० १** )। **सुमद्रम्। सुमगधम्। उन्मत्तगङ्गम्। लोहितगङ्गम्। एकविंशतिभारद्वाजम्** ( **म० भा०** )। **बहुलवचनात्सिद्धम्** ॥

**न्यासः**

स्यात्। पञ्चमीं वर्जयित्वैतत् कार्यद्वयं वेदितव्यम्। वाक्यभेदे त्वपञ्चम्या इत्येतत् प्रत्यासन्नममादेशमपेक्षते, न तु वाक्यान्तरविहितमलुकम्। तेनापञ्चम्या इत्यनेन सम्बध्यमानः सामान्येन विधीयमानः सन्नलुक् पञ्चमीमप्यवगाहते; तस्मात् पञ्चम्याः श्रवणमेव युक्तम्। तुशब्देनाप्ययमर्थो लभ्यते।

ननु च क्रियायाः कारकाणि भवन्ति, पूर्वपदार्थप्रधानश्चाव्ययीभाव उक्तः, पूर्वपदार्थस्य चासत्त्वभूतत्वात् क्रियामन्तरेण सम्बन्धाभावादपादानादिभावो नास्ति, तत् कुतोऽव्ययीभावात् पञ्चम्यादयो विभक्तयो भवेयुः? नैतदस्ति; पूर्वपदार्थप्राधान्येऽपि गुणभूतोत्तरपदार्थापेक्षः क्रियायोग उपपद्यते, यथा—पञ्चपूलीमानयेति। तत्र भावप्राधान्येऽपि गुणभूतद्रव्यापेक्षः क्रियासम्बन्धः। ८३ ॥

**तृतीयासप्तम्योर्बहुलम् ॥ सुमद्रमिति**। 'अव्ययं विभक्ति' इत्यादिना समृद्धावव्ययीभावः। **उन्मत्तगङ्गमिति**। 'अन्यपदार्थे च संज्ञायाम्' इत्यनेन। **एकविंशतिभारतद्वाजमिति**। 'संख्या वंश्येन' इति ॥ ८४ ॥

**पदमञ्जरी**

समीपादित्यपरे। उन्मत्तगङ्गादिरन्यपदार्थप्रधानः सत्त्ववाच्यव्ययीभावः क्रियासम्बन्धसद्भावादपादानत्वात्पञ्चम्या मुख्यमुदाहरणम् ॥ ८३ ॥

**तृतीयासप्तम्योर्बहुलम् ॥ सुमद्रमिति**। मद्राणां समृद्धिरित्यव्ययीभावः, ततः सप्तमी, तस्या, नित्यमम्भावः। **एकविंशतिभारद्वाजमिति**। एकविंशतिर्भरद्वाजा वंश्या इति 'सङ्ख्या वंश्येन' इति समासः। तत्र वर्त्तिपदार्थानां स्वार्थोपसर्जनार्वान्तराभिधायित्वाद्भारद्वाजशब्द एकत्वविशिष्टार्थान्तिरे सङ्क्रान्त इत्यत्रो लुगभावः। नेति वयम्, गर्गाणां कुलं गर्गाकुलमित्यादावपि प्रसङ्गात्। तस्माद् **भाष्यकार**-प्रयोगादत्र लुगभावः ॥ ८४ ॥

**भावबोधिनी**

पूर्ववर्ती सूत्र द्वारा नित्य अम्भाव के प्राप्त रहने पर यह सूत्र बनाया जा रहा है। अव्ययीभाव में तृतीया तथा सप्तमी विभक्तियों में बहुलरूप से 'अम्' होता है। उदाहरण उपकुम्भेन कृतम्, उपकुम्भं कृतम्। [ समीपभूत कुम्भ द्वारा किया गया, अथवा कुम्भ के समीप द्वारा किया गया। यहाँ कुम्भस्य समीपेन—इस विग्रह में समास के बाद 'उपकुम्भ' से तृतीया। 'टा' का विकल्प से अम् होने पर उपकुम्भम्, पक्ष में ''टाङसिङसामिनात्स्याः'' ( पा. सू. ७.१.१२ ) से 'टा' का 'इन' आदेश और गुण करने पर—उपकुम्भेन बनता है। ] उपकुम्भं निधेहि, उपकुम्भे निधेहि। [ घड़े के पास में रखो। कुम्भस्य समीपे—इस विग्रह में समास और विभक्ति का लुक् करने पर 'उपकुम्भ' इससे सप्तमी एक वचन में ङि = इ प्रत्यय को बहुलरूप से अम् करने पर—उपकुम्भम्, पक्ष में गुण कर देने पर—उपकुम्भे —ये दो रूप होते हैं ]।

❀ऋद्धि=सम्पन्नता, नदीसमास और संख्यावयव से परे सप्तमी का नित्य 'अम्' होता है, ऐसा कहना चाहिये।❀ उदा० (१) मद्राणां समृद्धिः—इस विग्रह में समास करके जब सप्तमी आती है तब उसका 'अम्' आदेश नित्य होता है—समद्रम् [ मद्र देश के लोगों की सम्पन्नता। ] सुमगधम्। [ मगधानां समृद्धिः—इस अर्थ में समास के बाद सप्तमी का नित्य 'अम्' होता है। ] (२) उन्मत्तगङ्गम्, [ उन्मत्त गङ्गा है जिसमें ऐसे देश में। [ उन्मत्ता गङ्गा यस्मिन् देशे—इस विग्रह में ''अन्यपदार्थे च संज्ञायाम्'' ( पा. सू. २.१.२१ ) से समास करने के बाद सप्तमी का नित्य अम् होता है। ]

## ६१९. लुटः प्रथमस्य डारौरसः ।। ८५ ।। ( २१८८ )

**लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च यथाक्रमं डा, रौ रस्-इत्येते आदेशा भवन्ति । कर्त्ता । कर्त्तारौ । कर्त्तारः । आत्मनेपदस्य--अध्येता । अध्येतारौ । अध्येतारः ।**

**न्यासः**

**लुटः प्रथमस्य डारौरसः ।। परस्मैपदस्यात्मनेपदस्य च यथाक्रमं डारौरस्–इत्येत आदेशा भवन्तीति ।** यद्येवम्, परस्मैपदेषु तिप् तस् झीत्येतत् प्रत्येकं प्रथमपुरुषसंज्ञा, आत्मनेपदेष्वपि त आतां झ इति; तत्र स्थानिनः षट्, त्रय आदेशा इति वैषम्यात् संख्यातानुदेशभावादेकैकस्य पर्यायेण सर्व आदेशाः स्युः ? नैष दोषः; आनन्तर्यतो हि व्यवस्था भविष्यति । तच्चार्थकृतमानन्तर्यम्–एकार्थस्यैकार्थः, द्व्यर्थस्य द्व्यर्थः; बह्वर्थस्य बह्वर्थ इति । **कर्त्तेति** । 'अनद्यतने लुट्', तिप्, तस्यानेकाल्त्वाड् डा इत्ययं सर्वादेशः । ननु च नानुबन्धकृतमनेकाल्त्वम्, डकारश्चानुबन्धः तत् कुतोऽनेकाल्त्वं यतः सर्वादेशः स्यात् ? नैष दोषः, न ह्यकृते सर्वादेशे 'चुटू' इतीत्संज्ञा भवति । इत्संज्ञाया अभावे चानुबन्धो न भवतीत्यनेकाल्त्वात् सर्वादेशो भवति । डित्यभस्यापि टेरिति टिलोपः । **कर्त्तारौ, कर्त्तार इति** । 'रि च' इति सकारलोपः । एवमध्येतेत्येवमादीनि रूपाणि 'इङ् अध्ययने' इत्येतस्य । अत्र परमपि

**पदमञ्जरी**

**लुटः प्रथमस्य डारौरसः ।। परस्मैपदस्यात्मनेपदस्य चेति ।** यद्येवं परस्मैपदे त्रयः प्रथमपुरुषसंज्ञकास्तिबादयः, आत्मनेपदेष्वपि त्रयस्तादय इति षट् स्थानिनस्त्रयस्य आदेशा इति वैषम्यात्संख्यातानुदेशो न प्राप्नोति । मा भूत्संख्यातानुदेशः, आन्तर्यतो व्यवस्था भविष्यति ? अर्थतश्चान्तर्यम्, एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थः । कथं पुनर्डादीनामैकार्थ्याध्यवसायः, यावता यस्तिपः स्थाने स एकार्थः, यस्तसस्स्थाने स द्व्यर्थः, यो झेः स्थाने स बह्वर्थः ? नेत्याह, प्रयोगदर्शनादप्यैकार्थ्यादिकमध्यवसातुं शक्यम् । अथ वाऽऽदेशा अपि षडेव निर्दिश्यन्ते, कथम् ? एकशेषनिदशात्, डारौरसश्च डारौरसश्चेति कृतद्वन्द्वानामेकशेषः । यदि तु डा च डा च डा, रौ च रौ च रौ, रस् च रस् च रस्, डा च रौ च रस् च डारौरस इति कृतैकशेषणां द्वन्द्वः स्यात् ? अनिष्टः संख्यातानुदेशः प्राप्नोति तिप्तसोर्डा, झितयो रौ, आतांझयो रसिति । **कर्तेति** । लुट्, तिप्, तस्य डा इत्ययं सर्वादेशः । नानुबन्धकृतमनेकाल्त्वम् । अस्तु तर्ह्यन्त्यस्यैव, तिपस्तकारेण सह टिलोपो भवति । ननु तकारान्तमङ्गं न भवति, डित्करणसामर्थ्यादनङ्गस्यापि भविष्यति, यथा--सिद्धान्तेऽभस्यापि । अथ वाऽऽनुपूर्व्यात्सिद्धम्, कथम् ? अन्त्यस्याप्ययं स्थाने भवन्नप्रत्ययः स्याद्, असत्यां प्रत्ययसंज्ञायां डकारस्येत्संज्ञा नास्ति, असत्यां चेत्संज्ञायामनेकाल्, यदानेकाल् तदा सर्वादेशः, यदा सर्वादेशस्तदा प्रत्ययः, यदा प्रत्ययस्तदेत्संज्ञा, यदेत्संज्ञा तदा लोपस्तदैकाल्, न चेदानीं प्रत्यावृत्त्यान्तादेशो भवितुमर्हति ? तदेतदानुपूर्व्यात्सिद्धम् । **कर्तारौ, कर्तार इति** । 'रि च' इति तासस्त्योर्लोपः । **अध्येतेति** । 'इङ् अध्ययने' (धा० पा० १०४६) । अथात्र डारौरस्सु

**भावबोधिनी**

लोहितगङ्गम् । [ लोहिता गङ्गा यस्मिन् देशे --इस विग्रह में समास के बाद आने वाली सप्तमी का अम् हो जाता है । ] (३) एकविंशतिभारद्वाजम् [ एकविंशतिः भारद्वाजाः यस्मिन् वंश्याः—इस अर्थ में "संख्या वंश्येन" ( पा. सू. २.१.१९ ) से समास के बाद आने वाली सप्तमी का नित्य अम् होता है । [ वास्तव में इस वार्तिक की आवश्यकता नहीं है क्योंकि सूत्र में ] 'बहुलम्' इस वचन से ही सिद्ध हो जाता है ।। ८४ ।।

लुट् के आदेशभूत प्रथमपुरुष के परस्मैपद और आत्मनेपद [ तिप्, तस्, झि तथा त, आताम्, झ ] के स्थान पर क्रमशः डा, रौ, रस् —ये तीन आदेश हो जाते हैं । उदा० कर्त्ता, कर्त्तारौ, कर्त्तारः । आत्मनेपद के—अध्येता, अध्येतारौ, अध्येतारः ।

**प्रथमस्येति किम् ? श्वः कर्त्तासि, श्वोऽध्येतासे ॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

**॥ इति द्वितीयोऽध्यायः ॥ २ ॥**

**न्यासः**

टेरेत्त्वं बाधित्वाऽन्तरङ्गत्वाड् डादय आदेशा भवन्ति। अन्तरङ्गत्वं पुनस्तेषां स्थानिमात्रापेक्षत्वात्। टेरेत्त्वं तु बहिरङ्गम्; तद्धि धातुमप्यपेक्षते, न केवलं स्थानिनम्; आ तृतीयाध्यायपरिसमाप्तेर्धातोरित्यस्याधिकृतत्वात्। 'थासः से' इति ज्ञापकम्--तिङादेशस्य टेरेत्त्वं न भवतीति। तेन कृतेष्वपि डारौरस्स्वेत्त्वं न भवति। **कर्त्तासीति।** 'तासस्त्योर्लोपः' इति सकारलोपः ॥ ८५ ॥

**॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां द्वितीयाध्यायस्य चतुर्थः पाद ॥ ४ ॥**

**पदमञ्जरी**

कृतेषु टेरेत्त्वं कस्मान्न भवति ? पूर्वमेवास्मिन्योगे स्थानिषु प्रवृत्तत्वात्। इह हि तशब्दस्य टेरेत्त्वं च प्राप्नोति, डादेशश्च; द्वयोरपि शब्दान्तरप्राप्तेरनित्यत्वात्परत्वाट्टेरेत्त्वे कृते पुन प्रसङ्गविज्ञानाड्डादेशः। एवं रौरसोरपि द्रष्टव्यम्। अथ वा—पूर्वमेव डारौरसो भवन्तु, थासः सेवचनं ज्ञापकम्—ये तिङादेशास्तेषां टेरेत्त्वं न भवतीति, अन्यथा 'थासः स' इत्येव वाच्यं स्यात्। **कर्तासीति।** 'तासस्त्योः' इति सलोपः ॥ ८५ ॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयाध्यायस्य तुरीयश्चरणः ॥ ४ ॥**

**॥ इति द्वितीयोऽध्यायः ॥ २ ॥**

**भावबोधिनी**

[ कृ + लुट् = तिप्, "स्यतासी लृलुटोः" ( पा. सू. ३.१.३३ ) से 'तास्' कृ + तास् + ति 'ति' का 'डा' आदेश, ड् की इत्संज्ञा लोप ऋ का गुण रपर कर् + तास् + आ, डित्करणसामर्थ्य से 'आस्' (टि) का लोप करने पर कर् त् आ, 'त्' का द्वित्व—कर्त्ता। द्विवचन में कृ + लुट् = तस्, तास् कृ + तास् + तस्, तस् का 'रौ' आदेश कृ + तास् + रौ, गुण, रपर—कर्तास् + रौ, "रि च" ( पा. सू. ७.४.५१ ) से 'स्' का लोप, त् का द्वित्व—कर्त्तारौ। बहुवचन में—कृ + लुट् = झि = रस्, तास्, ऋ का गुण, रपर कर्तास् + रस् "रि च" सूत्र से 'स्' का लोप, अन्तिम 'स्' का रुत्व विसर्ग, 'त' का द्वित्व—कर्त्तारः।

आत्मनेपद—अधि इङ् + लुट् = त, अधि इ + त, तास्, धातु का गुण अधि ए + तास् + त, यण्, 'त' का 'डा' 'ड्' की इत्संज्ञा लोप, डित्सामर्थ्य से टि = आस् का लोप—अध्ये त् आ—अध्येता। द्विवचन में अधि इङ् + लुट् = आताम्, तास्, धातु का गुण, 'इ' का यण्—अध्येतास् + आताम्, रौ आदेश, "रि च" सूत्र से स् का लोप—अध्येतारौ। बहुवचन में—अधिइङ् + लुट् = झ = रस्, तास्, गुण, यण्, अध्येतास् = रस्, स् का लोप, अन्तिम 'स्' का रुत्व, विसर्ग—अध्येतारः। ध्यान रखना चाहिये कि लुट् का प्रयोग अनद्यतन भविष्य काल के लिये होता हैं। ]

प्रथम पुरुष के आदेश होते हैं—इसका क्या फल है ? श्वः कर्त्तासि [ तुम कल करोगे। यहाँ मध्यम पुरुष का 'सि' है, उसका 'डा' नहीं होता है।] श्वः अध्येतासे [तुम कल पढ़ोगे। यहाँ मध्यम पुरुष का 'थास्=से' प्रत्यय है, इसका 'डा' आदेश नहीं होता है। यदि 'प्रथमस्य' यह न होता तो सभी पुरुषों में इन आदेशों की प्रवृत्ति होने लगती। ]

॥ इस प्रकार श्री जयादित्य द्वारा विरचित 'काशिका' वृत्ति में द्वितीय अध्याय का चतुर्थ पाद समाप्त हुआ ॥

**॥ इस प्रकार जयशङ्कर लाल त्रिपाठि विरचित 'भावबोधिनी' व्याख्या में काशिकावृत्ति के द्वितीय अध्याय का चतुर्थ पाद समाप्त हुआ ॥**

*** समाप्तोऽयं द्वितीयोऽध्यायः ***

# अथ तृतीयाध्याये प्रथमः पादः

६२०. प्रत्ययः ॥ १ ॥ ( १८० )

**अधिकारोऽयम् । प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते । आ पञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनु-**

**न्यासः**

**प्रत्ययः ॥ प्रत्ययशब्द संज्ञात्वेनाधिक्रियत इति ।** शास्त्रस्य लाघवार्थम् । यदि सन्प्रत्ययः, क्यचप्रत्ययः, क्यङ्प्रत्यय इत्येवमेकैकं संज्ञिनमुपादायानेकेषां भिन्नैर्वाक्यैः प्रत्ययसंज्ञा विधीयेत तदा शास्त्रस्य गौरवं स्यात्; संज्ञिनां बहुत्वात् । न हि तेषां तथाविधं सामान्यमभिन्नमस्ति यदुपादायैकेन वाक्येनानेकेषां संज्ञा विधीयेत, यथा—'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति । ननु चेदमस्ति सामान्यं सबिति, एवञ्च सूत्रं करिष्यते—'सप् प्रत्ययः' इति, सबिति प्रत्याहारग्रहणं च सनः सकारादभ्य कपः पकारेण ? नैतदस्ति; अन्येऽपि बहवः पकाराः सन्ति—'सिब्बहुलं लेटि', 'वदः सुपि क्यप् च, इत्येवमादयः, तत्र यदि प्रत्यासत्तिमाश्रित्यानन्तरः पकारः प्रत्याहारार्थं गृह्यते, तदा सिपः पकारेणैव प्रत्याहारग्रहणं विज्ञायते । अथ व्याप्तिर्गृह्यते ? तदा 'तप्तनप्तनथनाश्च' इति तनपः पकारेणैव स्यात् । स्यादेतत्—व्याप्तेरेव न्याय आश्रयितव्यः । न च तनपः पकारेण प्रत्याहारग्रहणं भविष्यति, अपि तु कप एव, 'इच एकाचोऽम् प्रत्ययवच्च' इति वचनाज्ज्ञापकात्; अन्यथा षष्ठेऽपि प्रत्ययसंज्ञाव्यापारादपार्थकमिदं स्यात् ? नैतदस्ति; असति प्रयोजने ज्ञापकं भवति, अस्ति ह्यस्य प्रयोजनम्, किं तत् ? अम्प्रत्ययप्रतिबद्धं विशिष्टमेव कार्यं यथा स्यात्, प्रत्यमात्रप्रतिबद्धं मा भूदिति नियमार्थमेतत् स्यात्, तत् कुतो वैयर्थ्यम् ? अथापि कथञ्चित् कपः पकारेणैव प्रत्याहारो लभ्येत, एवमपि प्रतिपत्तिगौरवं स्यात् । अतो लाघवार्थमधिकारेणैवेयं संज्ञा विधातुं युक्तेति मत्वाह—**प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इति ।** यद्येवम्,

**पदमञ्जरी**

**प्रत्ययः ॥** इह यदि सर्वानिन संज्ञिनः स्वरूपेण निर्दिश्य संज्ञा विधीयेत–सन् प्रत्ययः, क्यच् प्रत्ययः, क्यङ् प्रत्यय इति, ततो गौरवं स्यात् । अथ 'सप्' प्रत्यय इति सनः सशब्दादारभ्य कपः पकारेण प्रत्याहाराश्रयेणात्र वा प्रदेशान्तरे वा संज्ञा विधीयेत, तदानेकस्य पकारस्य सम्भवात्सन्देहः स्यात् । तथा हि प्रत्यासत्तिन्याये आश्रीयमाणे सिपः पकारेण स्याद्, व्याप्तौ तु 'तप्तनप्तनथनाश्च' इति तनपः । स्यादेतत्—व्याप्तिरेवाश्रयिष्यते, अथ च तनपः पकारेण प्रत्याहारो न भविष्यति; ज्ञापकात्, यदयम् 'इच एकाचोऽम्प्रत्ययवच्च' इत्यमः प्रत्ययवद्भावं शास्ति, अन्यथा षष्ठेऽपि प्रत्ययसंज्ञाव्यापारादमोऽपि स्वत एव प्रत्ययत्वात्तद्वद्भावो नातिदेश्यः स्यादिति ? तन्न; तत्र ह्यमिति द्विरावर्त्तते, ततश्चाप्रत्ययप्रतिबद्धम् 'औतोऽम्शसोः' इत्यादिविशिष्टं कार्यं यथा स्यादिति सोऽतिदेशः स्यात् । नन्वेवमपि प्रत्ययग्रहणमनर्थकम्, अम्वदिति वक्तव्यम्, अतः प्रत्ययग्रहणात्प्रत्ययप्रयुक्तमपि कार्यमतिदेश्यमिति प्रतीयते, तज्ज्ञापकमुक्तार्थस्य भविष्यति ? एवमप्यम आगमत्वात्पुगादिवदप्राप्तेः प्रत्ययत्वातिदेशः स्यात् । अस्तु वा ज्ञापकम्, एवमपि कुत एतद्व्याप्तिराश्रीयते, न पुनः प्रत्यासत्तिरिति ? किञ्च यथान्यासादगौरवं स्थितमेव, सबित्यस्याधिकस्य करणात् ? अतो गौरवातिप्रसङ्गपरिहारायाधिकारेणेयं संज्ञा विधीयते । तदाह—**प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते इति ।** 'कारके' इति तद्विशेषणमधिक्रियते, स्वादिषु कप्पर्यन्तेषु प्रकृतिरियमधिक्रियत

**भावबोधिनी**

यह अधिकार है । प्रत्यय शब्द संज्ञारूप से आगे चलता है । पाँचवें अध्याय की परिसमाप्ति तक यहाँ से आगे

**क्रमिष्यामः प्रत्ययसंज्ञास्ते वेदितव्याः, प्रकृत्युपपदोपाधिविकारागमान्वर्जयित्वा।** **वक्ष्यति--'तव्यत्तव्यानी-**

**न्यासः**

प्रतियोगं तेनोपस्थातव्यम्, तत्रासावुपस्थितः सन्नादिभिरेव सम्बध्यते, न प्रकृत्यादिभिरिति नियमहेतुर्नास्ति। अतः प्रकृत्युपपदोपाधिविकारागमानामप्येषा संज्ञा स्यात्। तत्र प्रकृतिः—'गुप्तिज्किद्भ्यः सन्', उपपदम्—'स्तम्बकर्णयो रमिजपोः', उपाधिः—'हरतेर्दृतिनाथयोः पशौ'। यद्यपि पश्वर्थस्य संज्ञायाः प्रयोजनं नास्ति, तथापि तद्वाचिनोऽस्तीति तस्य स्यादेव। विकारः—'हनस्त च', आगमः—'त्रपुजतुनोः षुक्'। प्रत्ययसंज्ञायाञ्चैषां परत्वमाद्युदात्तत्वञ्च स्यात्। यद्यपि युगपद् गुपादीनां परस्परापेक्षया सनादीनाञ्च परत्वं न सम्भवति, तथापि पर्यायेण स्यात्—कदाचित् गुपादयः परे स्युः, कदाचित् सन्नादयः, अन्यतो वा कुतश्चिद् गुपादयः परे भवेयुरित्यत आह—**प्रकृत्युपपद इत्यादि**। एतच्च न्यायप्राप्तमेवोक्तम्। कथम्? प्रकृत्युपपदोपाधयस्तावत् परकार्यसिद्धये भूतविभक्त्या पञ्चम्यादिकया निर्दिश्यन्त इति तेषां पञ्चम्यादिविभक्त्यन्तं शब्दरूपं संज्ञासंज्ञिसम्बन्धं प्रतिपत्तुमयोग्यम्। तथा हि—प्रथमान्तस्य वा सामानाधिकरण्येन संज्ञासंज्ञिसम्बन्धो भवति यत्र बुद्ध्याहितसंज्ञारूपः सोऽयमित्यभेदसम्बन्धमुपगतः संज्ञी संज्ञया सह निर्दिश्यते, यथा—'वृद्धिरादैच्' इति; षष्ठ्यन्तस्य वा यत्र संज्ञासंज्ञिनोर्भेदविवक्षायां संज्ञाशब्देन स्वरूपपदात्मकेनोपादीयमानेनोपजनितव्यतिरेकः षष्ठ्या संज्ञी निर्दिश्यते,

**पदमञ्जरी**

इतिवत्। 'प्रत्ययशब्दः संज्ञाधिक्रियते' इति वक्तव्ये संज्ञात्वेनेति वचनमनर्थभेदात्। तथा ह्ययमत्र कर्मकरत्वेनाधिकृतः, अयमत्र कर्मकरोऽधिकृतः, नार्थभेदोऽस्ति; किन्तु 'कर्मकरोऽधिकृतः' इत्युक्ते यः कर्मकरः सोऽधिकृतो रूपान्तरेणेत्यपि गम्यते, कर्मकरत्वेनेति पुनरुच्यमाने तस्यैवाकारस्याधिकृतत्वं गम्यते। अधिक्रियते = विनियुज्यते सूत्रकारेण। यान् = नादीननुक्रमिष्यामः = अनुक्रमेण विधास्यामः। सूत्रकारायमाणस्य वृत्तिकारस्यैतद्वचनम्।

यदि तर्ह्यधिकारेण संज्ञा क्रियते, प्रतियोगमुपस्थानात्प्रकृत्युपपदोपाधिविकारागमानामपि प्राप्नोति—'हरतेर्दृतिनाथयोः पशौ' हरतेरिति प्रकृतिः, दृतिनाथयोरित्युपपदम्, पशावित्युपाधिः; 'हनस्त च' इत्यादिविकारः, 'त्रपुजतुनोः षुक्' इत्यागमः। सत्यां च संज्ञायां प्रकृतिप्रत्यययोः पर्यायेण परस्परापेक्षं परत्वं स्यात्; शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य? उपपदस्यापि परत्वात् 'उपसर्जनं पूर्वम्' इत्येतद्राजपुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात्, यत्र समासाभावात् 'उपसर्जनं पूर्वम्' इत्यस्याप्रसङ्गः, तत्रोपपदस्य परत्वं स्यात्? एवं च सति भोक्तुं व्रजतीत्येवमेव नित्यं स्यान्न तु व्रजति भोक्तुमिति, उपाधेरप्यर्थस्य परत्वासम्भवेऽपि तद्वाचिनः प्रयोगानियमे प्राप्ते परश्चेति नियमः स्यात्? आद्युदात्तत्वं च यथायथं स्वरान्तरं बाधित्वा स्यात्? अङ्गसंज्ञा तु विधानप्रतिबद्धा, न चेह प्रकृत्यादयः कुतश्चिद्विधीयन्ते इति न सा प्रकृत्यादिषु परतः पूर्वस्य प्राप्नोति? ननु च प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात्प्रकृत्यादीनां संज्ञा न भविष्यति, तथा हि—हरतेर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्त्तरीन् प्रत्ययो भवतीत्येकं वाक्यम्, ते च हरत्यादयः प्रत्ययसंज्ञका इति द्वितीयम्, सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते? नैतदस्ति; सनादीनामप्यसतां संज्ञानुपपत्तेर्वाक्यभेदेनैव संज्ञा विधेया, ततश्च सनादीनामेकेन वाक्येन विधिरपरेण संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्राप्नोति? तत्राह—**प्रकृत्युपपदेत्यादि**। अयमभिप्रायः—प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्तत्वेनोपादानात्पारार्थ्यात्स्वसंस्कारं प्रति प्रयोजकत्वाभावः, यथा—यः पीठे स देवदत्त इति पीठस्य देवदत्तसंज्ञा न भवति।

**भावबोधिनी**

जिनका उल्लेख किया जायेगा उनकी 'प्रत्यय' संज्ञा समझनी चाहिये अर्थात् उन्हें प्रत्यय कहते हैं किन्तु प्रकृति, उपपद, उपाधि विकार ( = आदेश ) और आगम—इनको छोड़ कर ही प्रत्यय होते हैं। आगे कहा जायेगा—'तव्यत्तव्या-

**न्यासः**

यथा–'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति। प्रकृत्यादयस्तु परोपकारयोग्यं विभक्तिविशेषमुपादाय वर्त्तन्त इत्यशक्य एषां संज्ञासम्बन्धः कर्त्तुम्। न च संज्ञासंज्ञिसम्बन्धयोग्यविभक्त्यध्याहारे सत्येषां संज्ञा भविष्यतीति युक्तं परिकल्पयितुम्। असति हि वचनस्यावकाशेऽध्याहारो युक्तः, न तु सति। अस्ति चावकाशः सन्नादिः। अप्राधान्याच्च प्रकृत्यादीनामयुक्ता संज्ञा। प्रधाने हि कार्यसम्प्रत्ययो लोके दृष्टः, यथा—बहुषु गच्छत्सु कश्चित् पृच्छति कोऽयं याति ? स आह—राजेति। तत्र यः पृच्छति, यश्चाचष्टे—तयोरुभयोरपि प्रधाने राजनि सम्प्रत्ययो भवति। तस्मादिहापि प्रधाने सन्नादौ कार्यसम्प्रत्ययात् तस्यैव संज्ञा भविष्यति। प्राधान्यं पुनस्तस्यापूर्वस्य विधानात्। प्रकृत्यादीनां धात्वादिपाठे निर्ज्ञातस्वरूपाणां सन्नाद्यर्थोपादानादप्राधान्यम्, तत् कुतस्तेषां संज्ञा ? आगमविकारयोर्यद्यपि संज्ञासंज्ञिसंम्बन्धयोग्यतया प्रथमया निर्देशः, विधेयत्वाच्च प्राधान्यम्, तथापि न भवति संज्ञा; यस्मात्प्रत्यय इति महती संज्ञा क्रियते। तस्या एतत्प्रयोजनमन्वर्थसंज्ञा यथा स्यात्—प्रतियन्त्यनेनेनार्थानिति प्रत्ययः। न च विकारागमाभ्यां कञ्चनार्थं प्रतियन्ति। यदि तर्ह्यन्वर्थसंज्ञेयम्, 'अवेः कः' 'यावादिभ्यः कन्' इत्येवमादीनां प्रत्ययसंज्ञा न प्राप्नोति; अर्थाभावात्। द्विविधो ह्यर्थः—लौकिकः, शास्त्रीयश्च; तत्र पूर्वः पदेनैव प्रतीयते, द्वितीयस्त्वन्वयव्यतिरेकाभ्याम्; स च तेषां नास्ति, विना प्रत्ययैः प्रकृतेरेव तदर्थस्य प्रतीतेः ? नैष दोषः; यद्यपि तेषामन्वयव्यतिरेकाभ्यामर्थो न समधिगम्यते, तथाप्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यस्मादेवाप्तवचनात् समधिगम्यते। तस्मात् तैरपि स्वार्थं प्रतियन्तीति तेऽपि प्रत्यया इत्यलमतिप्रसङ्गेनेति स्थितमेतत्—प्रकृत्यादीनां

**पदमञ्जरी**

ननु सनाद्युत्पत्तिवाक्ये प्रथमे तेषां पारार्थ्यम्, न द्वितीये संज्ञासंज्ञिसम्बन्धप्रतिपादनपरे वाक्ये, ततश्च संज्ञासम्बन्धप्रतिपत्तौ सत्यां स्वार्थतापि संभवत्येव ? तन्न; द्वितीयमपि वाक्यं संज्ञाविधानपरमेवंरूपमेव—गुप्तिज्किद्भ्यः सन् प्रत्यय इति, ततश्च तत्रापि भूतविभक्त्यानिर्देशान्निमित्तत्वात्पारार्थ्यं स्थितमेव। किञ्च, योग्यविभक्त्यभावाच्च न प्रकृत्यादीनां संज्ञा, प्रथमान्तस्य षष्ठ्यन्तस्य वा संज्ञासम्बन्धः 'वृद्धिरादैच्' 'स्वं रूपं शब्दस्य' इति। न च द्वितीये वाक्ये योग्यविभक्त्यध्याहारेण संज्ञा भवितुमर्हति; योग्यविभक्तिनिर्दिष्टेषु सनादिषु चरितार्थत्वात्। उपपदसंज्ञा तु सप्तमीनिर्दिष्टस्य विधीयमाना युक्तं यद्वाक्यभेदेन योग्यविभक्त्यध्याहारेण च भवतीति। किञ्च, प्रधानेतरसन्निधौ प्रधाने कार्यसंप्रत्ययो भवति, यस्य चापूर्वविधानं तत्प्रधानम्; अतः प्रथमवाक्ये तावत्सनादीनामेव प्राधान्यम्, द्वितीयेऽपि संज्ञा संज्ञिनमपेक्षमाणा यत्पूर्ववाक्ये प्रधानतयावगतं तदेवापेक्षते, न तु पारतन्त्र्यादप्रधानमिति सिद्धमिष्टम्। एवमपि विकारागमानां प्राप्नोति ? नैष दोषः; महती संज्ञा क्रियते, अन्वर्थसंज्ञा यथा विज्ञायेत–प्रतियन्त्यनेनार्थमिति प्रत्यय इति। न च विकारागमाभ्यामर्थं प्रतियन्ति। यद्येवम्, 'अवेः कः' इत्यादीनां समासान्तानां च न स्याद्, न ह्येषामन्वयव्यतिरेकाभ्यां कश्चिदर्थोऽवधार्यते, तदभावेऽपि केवलाया एव प्रकृतेस्तदर्थावगमात्।

यदप्युच्यते -'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' ( पुरु० परि० ९० ) इति स्वार्थ एवैषामर्थ इति, तदपि कल्पनामात्रम्; अन्वयव्यतिरेकगम्यत्वादर्थवत्त्वस्य। इतरेतराश्रयत्वं च भवति—सति प्रत्ययत्वे स्वार्थे विधानम्, स्वार्थे विधानाच्चार्थवत्त्वे सति प्रत्ययसंज्ञेति। एवं तर्हि प्रयोजनाभावान्न भविष्यति ? तथा हि तेषां स्थानषष्ठ्या सम्बन्धस्यावयवसम्बन्धस्य च प्रतिपादनात्परत्वं तावन्न सम्भवति, आगमानां चानुदात्तत्वविधानादाद्युदात्तत्वस्यासम्भवः, सति तु प्रयोजने आगमस्यापि श्नमः शकारस्येत्संज्ञार्थं भवत्येव संज्ञा। अथ 'हनश्च वधः' 'नाभि नभञ्च' ( ग० सू० १०६ ) 'विराग विरङ्गञ्च' ( ग० सू० ११० ) इत्यादौ वधादीनामनेकालानामादेशानां संज्ञा कस्मान्न भवति, सम्भवति हि तेषु परत्वं प्रयोजनम् ? यद्यपि स्थानिन आदेशेन निर्वर्त्तितत्वान्न तदपेक्षं परत्वम्, शब्दान्तरापेक्षया स्यादेव परत्वम्। यथोक्तं प्राक्-गुपादिषु अर्थवत्त्वं च तेषामस्ति, विधेयत्वात्प्राधान्यं च,

यरः' ( ३. १. ९६ ) कर्त्तव्यम् । करणीयम् ।

**प्रत्ययप्रदेशाः—'प्रत्ययलोपे प्रत्ययलक्षणम्' ( १. १. ६२ ) इत्येवमादयः ॥**

**६२१. परश्च ॥ २ ॥ (१८१)**

**अयमप्यधिकारो योगे योगे उपतिष्ठते, परिभाषा वा । परश्च स भवति धातोर्वा प्रातिपदिकाद्वा यः प्रत्यय-**

**न्यासः**

प्रत्ययसंज्ञा न भवतीति । **कर्त्तव्यम्, करणीयमिति** । तव्यदादेः प्रत्ययसंज्ञायां 'यस्मात् प्रत्ययविधिः' इति तस्मिन् परतोऽङ्गसंज्ञा भवति । अथ कथं तदनन्तरं सन्नादिमतिक्रम्य व्यवहित एव तव्यदादिरुदाहृतः ? तत्राद्युदात्तादेरपि प्रत्ययसंज्ञाकार्यस्य सम्भवात् । सन्नादौ तु तन्न सम्भवति; धातुस्वरेणैव बाधितत्वात् ॥ १ ॥

**परश्च ॥ अयमप्यधिकार इति** । न केवलं प्रत्यय इत्यपिशब्दार्थः । **योगे योगे उपतिष्ठत इति** । परिभाषाया अधिकारस्य भेदं दर्शयति । परिभाषा ह्येकदेशस्थैव सर्वत्र शास्त्रे व्याप्रियते, न तु प्रतियोगमुपतिष्ठते । **परिभाषा वेति** । पक्षान्तरं दर्शयति । एकदेशस्थैव सर्वत्र शास्त्रे व्याप्रियत इत्येष परिभाषाधर्मो वृत्तौ न दर्शितः; अधिकारधर्मप्रदर्शनद्वारेणावगम्यमानत्वात् । यदि हि प्रतियोगमुपतिष्ठमाना परिभाषा कार्यसिद्धौ व्याप्रियेत तदाधिकारपरिभाषयोर्भेदो न स्यात्, तथा च तयोरिह भेदेनोपन्यासो निष्फलः स्यात् । लिङ्गवती चेयं परिभाषा, लिङ्गञ्चास्याः प्रत्ययसंज्ञैव । धातोर्वेति क्रियावाचिन्या प्रकृतेरिदमुपलक्षणम्, तेन तिङन्तमपि गृह्यते । तदपि क्रिया-प्रधानत्वात् क्रियावाचीति शक्यते व्यपदेष्टुम् । 'प्रधानेन हि व्यपदेशा भवन्ति', यथा—राजधानीति । **प्रातिपदिका-**

**पदमञ्जरी**

योग्या च विभक्तिः । अतः सर्वथा वधादिषु संज्ञानिवृत्तये यत्नः कर्त्तव्यः । **कर्त्तव्यम्, करणीयमति** । अत्र प्रत्यय-संज्ञायां धातोरङ्गसंज्ञा, अङ्गस्य गुणः । अनन्तरमपि सनादिकमतिक्रम्य व्यवहितोऽपि तव्यदादिरुदाहृतः, तत्राद्यु-दात्तादेरपि प्रत्ययकार्यस्य सम्भवात् । सनादौ तु नित्स्वरेण धातुस्वरेण च तद्बाध्यते ॥ १ ॥

**परश्च ॥ अयमप्यधिकार इति** । न केवलम् 'प्रत्यय' इत्ययमेवेत्यपिशब्दार्थः । **योगे योगे उपतिष्ठते इति** । अनेन परिभाषातोऽधिकारस्य भेदको धर्मो दर्शितः । परिभाषा हि न प्रतियोगमुपतिष्ठते, किन्त्वेकदेशस्थितैव सर्वशास्त्रे व्याप्रियते । **परश्च स भवतीत्यादि** । अनेनेहस्थाया एवास्याः परिभाषायाः प्रत्ययविधौ सर्वत्र व्यापारो दर्शितः । लिङ्गवती चेयं परिभाषा, प्रत्ययसंज्ञा च लिङ्गम् । **धातोर्वेति** । क्रियावाचिन्याः प्रकृतेस्तिङन्तादेर-प्युपलक्षणमेतत् । **प्रातिपदिकाद्वेति** । अक्रियावाचिन्याः प्रकृतेरिदमुपलक्षणम्, तेन ङ्याप्पोरपि ग्रहणम् ।

**भावबोधिनी**

नीयरः' ( पा० सू० ३.१. ९६ ) उदा० कर्त्तव्यम्, करणीयम् । [ कृ + तव्यत् = तव्य, ऋ का गुण, रपर, कृदन्त को प्राति-पदिक मान कर सु प्रत्यय और उसका 'अम्' करने पर —कर् तव्यम्, 'त्' का वैकल्पिक द्वित्व । कृ + अनीयर् = अनीय, ऋ का गुण, रपर 'न्' का ण् —करणीय, प्रातिपदिक संज्ञा सु का अम्—करणीयम् । ]

प्रत्यय संज्ञा के प्रयोगस्थल – प्रत्ययलोपे प्रत्ययलक्षणम्' ( पा० सू० १.१. ६२ ) आदि हैं ॥ १ ॥

यह भी अधिकार सभी सूत्रों में उपस्थित होता है, अथवा परिभाषा है । धातु अथवा प्रातिपदिक से परे वह रहता है जिसकी 'प्रत्यय' यह संज्ञा होती है । उदाहरण [ 'कृ' धातु से 'तव्यत्तव्यानीयरः' ( पा० सू० ३.१.९६ ) से

**संज्ञः । कर्तव्यम् । तैत्तिरीयम्** ( ४. ३. १०२ ) ।

**चकारः पुनरस्यैव समुच्चयार्थः, तेनोणादिषु परत्वं न विकल्प्यते** ।।

**न्यासः**

**द्वेति** । अक्रियाभिधायिन्याः प्रकृतेरिदमुपलक्षणम्, तेन ङ्चापावपि गृह्येते । **तैत्तिरीयमिति** । प्रोक्तार्थे 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' इति छण् । तदन्ताद् 'तदधीते तद्वेद' इत्यण् । तस्य 'प्रोक्ताल्लुक्' इति लुक् । अथ चकारः किमर्थः; यावता नात्र किञ्चित् प्रकृतमस्ति यच्चकारेण समुच्चीयते ? इत्याह—**चकारः पुनरित्यादि** । अन्यस्य समुच्चेतव्यस्याभावादस्यैव समुच्चयार्थश्चकारो विज्ञायते, तेन बहुलाधिकारेऽपि ये प्रत्यया विधीयन्ते तेष्वप्युणादिषु परत्वं न विकल्प्यते ।

किमर्थं पुनरिदमुच्यते ? परो यथा स्यात्, पूर्वो मा भूदिति । नैतदस्ति प्रयोजनम्, तथा हि—यमिच्छति पूर्वं तमाह—'विभाषा सुपो बहुच् पुरस्तात्तु' इति । मध्ये तर्हि मा भूदिति ? न; मध्ये यमिच्छति तमाह—'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति । य इदानीमतोऽन्यः प्रत्ययः सोऽन्तरेणापि वचनं पर एव भविष्यति ? नैतदस्ति; येषामेव हि प्रत्ययानां देशो नियम्यते त एव नियतदेशाः स्युः । य इदानीमतोऽन्योऽनियतदेशः स

**पदमञ्जरी**

**तैत्तिरीयमिति** । तित्तिरिणा प्रोक्तमधीते 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' 'छन्दोब्राह्मणानि च तद्विषयाणि', 'तदधीते तद्वेद', प्रोक्ताल्लुक्', ब्राह्मणकुलस्याभिधेयत्वान्नपुंसकत्वम् । **चकारः पुनरस्यैव समुच्चयार्थ इति** । अन्यस्य समुच्चेतव्यस्याभावात् । **तेनेति** । अन्यथा बहुलवचनस्य सर्वोपाधिव्यभिचारार्थत्वादुणादिषु परत्वस्यापि विकल्पः सम्भाव्येत, इह 'गुप्तिज्किद्भ्यः सन्' इत्यादौ दिग्योगलक्षणा पञ्चमी, तत्र पूर्वः पर इति वा दिक्शब्दस्याश्रवणादनियमेनाध्याहारे सत्यनियमेन प्रयोगप्रसङ्गे नियमार्थमिदम्—पर एव प्रत्ययो न पूर्व इति । 'गापोष्टक्' इत्यादौ षष्ठीनिर्देशेऽप्यानन्तर्यसम्बन्धे षष्ठीविज्ञानादानन्तर्यस्य च पूर्वत्वेऽपि भावादनियमप्रसङ्ग एवेति तत्रापि नियमार्थमेव । नैतदस्ति प्रयोजनम्, 'विभाषा सुपो बहुच् पुरस्तात्तु' इत्येतन्नियमार्थं भविष्यति—बहुजेव पुरस्ताद्भवति नान्यः प्रत्यय इति, ततश्च बहुचि पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यति, षष्ठीनिर्देशेषु

**भावबोधिनी**

प्रत्यय होना है, वह प्रस्तुत सूत्र से धातु के बाद में होता है—] कृ + तव्यत् = कर्त्तव्यम् । तैत्तिरीयम् । [ तित्तिरिणा प्रोक्तम्—इस अर्थ में "तित्तिरवरतन्तुखण्डिकोखाच्छण्" ( पा० सू० ४.३.१०२ ) से छण् प्रत्यय करना है। प्रस्तुत सूत्र के अनुसार यह बाद में होता है । मित् होने से आदि-वृद्धि होती है । छ—ईय आदेश करने पर 'तैत्तिरीय' बनता है । इससे 'तदधीते तद्वेद" ( पा० सू० ४.२.५९ ) से पुनः जो अण् होता है उसका लुक् "प्रोक्ताल्लुक्" ( पा० सू० ४.२.६४ ) से हो जाता है । अतः रूप में अन्तर नहीं आता है ]

'परः च' यह चकार पुनः इसी ( परः ) का समुच्चय करने के लिये है [ क्योंकि यहाँ कोई दूसरा समुच्चेय नहीं होता है । ] इस कारण उणादि प्रत्ययों में [ बहुलग्रहण रहने पर भी ] परत्व का विकल्प नहीं होता है ।

**विमर्श**—'परश्च' यह सूत्र यदि अधिकार माना जाय तब तो आगे प्रत्येक सूत्र में उपस्थित होगा । यही इसका परिभाषा सूत्र की अपेक्षा भेद है ।

यदि परिभाषा सूत्र माना जायेगा तो यह एक स्थान पर रहता हुआ भी सर्वत्र शास्त्र में व्यापार करता है । अतः यहीं रहते हुये सर्वत्र प्रत्यय—विधि में इसका व्यापार होता है । यह परिभाषा लिङ्गवती है और इसका लिङ्ग है प्रत्यय संज्ञा । अतः जिसकी भी प्रत्यय संज्ञा होती है वह 'पर' होता है, यह व्यवस्था हो जाती है ।

'च' का प्रयोग किसी का समुच्चय करने के लिये होता है । किन्तु यहाँ कोई समुच्चेय नही है । अतः अपना ही समुच्चय करता है । इस कारण उणादि प्रत्यय में बहुल रूप से होने पर भी वह प्रत्यय सदैव 'पर' ही होता है ।। २ ।।

**न्यासः**

कदाचित् परे, कदाचित् पूर्वे, कदाचिन्मध्ये स्यात्। तस्मात् परश्चेति वक्तव्यम् ? न वक्तव्यम्; यस्माद् धातोः प्रातिपदिकादिति च दिग्योगलक्षणेयं पञ्चमी; अन्यस्यापादानादेः पञ्चमीनिमित्तस्याभावात्। तस्मादेषैव परदिक्शब्दाध्याहारं करिष्यति ? नैतदस्ति; पूर्वदिक्शब्दाध्याहारः स्यात्, तथा च पूर्वेऽपि कदाचित् सन्नादयः स्युः। 'तस्मादित्युत्तरस्य' इत्यनया परिभाषया तर्हि व्यवस्था भविष्यति ? नैतदस्ति; यत्र पञ्चमीनिर्दिष्टात् परस्य षष्ठीनिर्देशस्य कार्यं विधीयते सोऽस्य विषयः, न च सन्नादयः षष्ठ्या निर्दिश्यन्ते, नापि तेषां सम्बन्धि कार्यं विधीयते, तेषामेव भाव्यमानत्वात्। ननु च प्रत्ययसंज्ञाकार्यं विधीयते ? नैवम्, कथं पुनरसतां तेषां शक्यं संज्ञाकार्यं विधातुम् ? किञ्च येषां प्रत्ययसंज्ञैव न विधीयते—'कणेष्ठः', 'शमेर्ढः' इत्येवमादीनाम्, तत्र का गतिः स्यात् ? न ह्येषां प्रत्ययसंज्ञेष्यते, तथा हि—कण्ठः, शण्ढ इत्यत्र प्रत्ययस्योच्यमानमिकादेशादिकार्यं न भवति। यद्येवम्, प्रत्ययस्योच्यमानं परत्वमपि न स्यात् ? परश्चेत्यधिकारसामर्थ्याद् भविष्यति। असति ह्येतस्मिन् वचने सत्यपि तस्याः परिभाषाया उपस्थाने बहुलाधिकारे विधीयमानत्वादुणादिषु परत्वं विकल्प्येत। तस्मात् कर्त्तव्यमेतत्॥ २॥

**पदमञ्जरी**

मध्यशब्दाध्याहारेण मध्येऽपि प्रसङ्ग इति चेत्, न; 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति नियमात् अकजेव प्रकृतिमध्ये भवति, नान्य इति ? नैतदेवम्; यदि तावदेवं नियमः—बहुजेव पुरस्तादकजेव मध्ये इति, ततो बहुजकचोर्नियमो न स्यात्। अथ बहुच् पुरस्तादेव अकज्मध्य एवेति, ततो देशस्यानियतत्वात्तत्र प्रत्ययान्तरं स्यादेवेति सर्वथानिष्टप्रसङ्गः। किञ्च अकजेव प्राक् टेरित्येवं नियमे प्राक् टेः प्रत्ययान्तरं मा भूत्, मध्यान्तरे तु स्यादेव; मध्यविशेषाश्रयत्वान्नियमस्य। न च 'तस्मादित्युत्तरस्य' इत्यनया परिभाषयात्र परत्वं सिद्ध्यति, यत्र हि प्रागेव सतः कस्यचित् किञ्चिद्विधीयते, यथा—पदात्परयोरपादादौ वर्त्तमानयोर्युष्मदस्मदोर्वांनावौ भवत इति, स तस्या विषयः; इह तु प्रागसन्त एव सनादयो विधीयन्ते, न तेषां सम्बन्धि किञ्चित्, प्रत्ययसंज्ञैव तेषां कार्यमिति चेत्, न; एवमपि प्रागुत्पत्तिरनिवारिता स्यात्। तथा हि—असतां सनादीनां संज्ञाविधिरनुपपन्न इत्येकेन वाक्येन सनादीनां विधिर्द्वितीयेन च तेषामेव संज्ञाविधिरित्यङ्गीकरणीयम्, ततश्च द्वितीये वाक्ये सतः कार्यमिति कृत्वा परिभाषोपस्थानेन प्राक् प्रयुक्तानां संज्ञैव केवलं न स्यादुत्पत्तिस्त्वनियतदेशैव स्यात्; प्रथमवाक्ये परिभाषानुपस्थानात्। स्यादेतत्–'गुप्तिज्किद्भ्यः सन्' इत्यादावेकैव पञ्चमी, सा चैकमेव दिक्शब्दमध्याहरेत्, तत्र पूर्वः परो वेति संशये पूर्वशब्दाध्याहारे द्वितीयस्य वाक्यस्य स्वरसभङ्गः स्यात्। गुपादिभ्यः परः सन् प्रत्ययसंज्ञो भवतीति हि तस्य स्वरसतः प्राप्तोऽर्थः, स च पूर्ववाक्ये पूर्वशब्दाध्याहारे सति भग्नः स्यात्, अतस्तत्परिरक्षणाय परशब्द एवाध्याहरिष्यते। भवतु चोत्पत्तिरनियतदेशा, पश्चात्तु सत एव परस्य यत्कृत्यप्रत्ययसंज्ञादिशास्त्रकार्यम्, तन्नान्यदेशस्य, यद्देशस्य च शास्त्रीयं कार्यं तद्देशोऽन्यदेशं निवर्त्तयिष्यति; विशेषशास्त्रान्वितत्वेन तस्यैव साधुत्वादिति ? अस्त्वेवम्, अथ येषु प्रत्ययसंज्ञैव न भवति—'शमेः खः' ( द० उ० १०.१५ ) शङ्खः, 'कणेष्ठः' ( द० उ० ५.६ ) कण्ठ इत्यादिषु, तेषु कथं परत्वम्, द्वितीयवाक्यव्यापाराभावात् ? भवतो वा कथं भवानपि हि 'यः प्रत्ययः स परः' इति प्रत्ययपूर्वकं परत्वं परिभाषते ? सत्यम्; परिभाषापक्षे न स्यात्परत्वम्, अधिकारपक्षे तु प्रत्ययत्वपूर्वकं परत्वं न भवति; किन्तु परत्वविशिष्टस्यैवोत्पन्नस्य पश्चात्प्रत्ययसंज्ञा, इह तु बहुलवचनात्प्रत्ययत्वाभावेऽपि परत्वमविरुद्धम्। एवमपि नार्थ एतेन, बहुलवचनादेव परत्वमेवात्र व्यवस्थास्यते ? एवं तर्हि प्रयोगनियमार्थमिदम्—पर एव प्रत्ययो न केवल इति; अन्यथा प्रत्ययार्थमात्रविवक्षायां केवलोऽपि प्रत्ययः प्रयुज्येत, यथा–किमस्य द्वयसम्, किमस्य मात्रमिति; यथा वा प्रकर्षविवक्षायां तरतमभावः तारतम्यमिति। ननु सर्वत्र प्रकृतिविशेषं निर्दिश्यैव प्रत्ययो विधीयते, तत्र पूर्वोक्तया नीत्या परत्वविशिष्टस्यैव विधानमिति नास्ति केवलस्य प्रयोगः ? एवमपि प्रकृत्यर्थमात्रविवक्षायां केवलायाः प्रकृतेः प्रयोगः स्यादेव, यथा—पच्,

## ६२२. आद्युदात्तश्च ।। ३ ।। (३७०८)

**अयमप्यधिकारः, परिभाषा वा । आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः । अनियतस्वरप्रत्ययप्रसङ्गेऽनेकाक्षु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमादेरुदात्तार्थम् । कर्त्तव्यम् । तैत्तिरीयम् ।।**

**न्यासः**

**आद्युदात्तश्च ।। अनियतस्वरप्रत्ययप्रसङ्ग** इत्यादिना सूत्रारम्भस्य प्रयोजनं दर्शयति । अनियतोऽव्यवस्थितः स्वरो यस्य स तथा, स चासौ प्रत्ययश्चेति कर्मधारयः, तस्य प्रसङ्गशब्देन षष्ठीसमासः । अनियतस्वरो यः प्रत्ययस्तस्य प्रसङ्गे सति वचनमिदमादेरुदात्तार्थम् । **अनियतस्वरप्रसङ्ग** इति क्वचित् पाठः । तत्रानियतशब्दस्य स्वरशब्देन विशेषणसमासं कृत्वा प्रसङ्गशब्देन षष्ठीसमासः । अनियतानामुदात्तादीनां स्वराणां प्रसङ्गे सत्यादेरुदात्तार्थं वचनम् । **अनेकाक्षु चेत्यादि** । अनेकेऽचो येषां तेऽनेकाचः । तेष्वनेकाक्षु प्रत्ययेषु देशस्यानियमे सति वचनमादेरुदात्तार्थम्—आदेरेवोदात्तत्वं यथा स्यात्, मध्येऽन्ते च मा भूदिति । ये ह्येकाचः प्रत्ययास्तत्र देशस्याभावादसत्यप्यादिग्रहणे देशस्यानियमो न सम्भवति, अतोऽनेकाक्षु चेत्युक्तम् ।

**पदमञ्जरी**

वृक्षेति । यत्र पुनरुभयं विवक्षितम्—प्रकृत्यर्थः, प्रत्ययार्थश्च, न तत्र केवलायाः प्रकृतेः प्रयोगप्रसङ्गः; न केवला प्रकृतिः प्रत्ययार्थमभिधातुं समर्थेति । लक्षणया समर्थेति चेत् ? नो खल्वारभ्यमाणायेतल्लक्षणया प्रयोगं निवारयितुमर्हति, अतः केवलप्रकृत्यर्थविवक्षायां केवला प्रकृतिर्मा प्रयोजीति सूत्रारम्भः । चशब्दश्चावधारणे, प्रत्ययः परो भवत्येव, न तु कदाचिन्न भवतीति वचनव्यक्तिः । आ पदत्वनिष्पत्तेश्चायं नियमः, निष्पन्ने तु पदे तावदेव प्रयुज्यते । अपत्याद्यर्थान्तरविवक्षायां तु तस्मादपि प्रत्ययान्तरं भवति ॥ २ ॥

**आद्युदात्तश्च** ।। इहास्वरकस्याच उच्चारणासम्भवात्सर्व एव स्वरविधिर्नियमार्थः, तत्र 'चितः' एवान्त उदात्तः, रित्येव मध्य उदात्तः, तिदेव स्वरितः, सुप्पितावेवानुदात्तौ, दूरात्सम्बुद्धावेवैकश्रुत्यमिति । स्वरान्तराणामन्यत्र नियमात् पारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यति, नास्वरकः, नाप्यन्यस्वरकः, तत्राह-**अनियतस्वरप्रत्ययप्रसङ्ग इति** । अनियतः स्वरो यस्य सोऽनियतस्वरः, स चासौ प्रत्ययश्चानियतस्वरप्रत्ययः, तस्य प्रसङ्गे प्रत्ययोऽनियतस्वरो मा भूदित्येवमर्थमित्यर्थः । **अनियतस्वरप्रसङ्ग इति** पाठे त्वनियतस्य स्वरस्य प्रसङ्ग इत्यर्थः । अयमभिप्रायः—आद्युदात्तत्वमपि 'ञ्नित्यादिर्नित्यम्' इत्यादौ नियतत्वान्न स्याद्, अन्यत्रानियमः स्यादेव यत्रायं नियमो नास्ति । किञ्च त्वदुक्ते नियमे चिदादीनामनियमः स्याद् । अतश्चितोऽन्त एव, तित्स्वरित एवेत्यादिकं तत्र तत्र नियमस्वरूपमाश्रयणीयम्, ततश्च प्रत्ययस्यानियतस्वरत्वमेव स्यात् । किञ्च, रित्येवोपोत्तमनुदात्तमित्यपि नियमेऽन्यत्रोपोत्तमनुदात्तं मा भूद् । मध्यान्तरं तु स्यादेव; मध्यविशेषाश्रयत्वान्नियमस्य । तस्माद्ये एकाचः प्रत्ययास्तेष्वनियतस्वरप्रसङ्गे वचनमिदमुदात्तार्थम् । ये पुनरनेकाचः प्रत्ययास्तेषु देशस्याप्यनियमः प्राप्नोति-कदाचिदादेः,

**भावबोधिनी**

आद्युदात्त होता है —यह भी अधिकार है अथवा परिभाषा है । जो प्रत्यय-संज्ञक होता है वह आद्युदात्त होता है । जिस प्रत्यय का स्वर व्यवस्थित नहीं है, उसके प्रसङ्ग में और अनेक अच् वाले प्रत्ययों में देश=स्थान का नियम न रहने पर यह वचन आदि का उदात्त करने के लिए है । उदाहरण —कर्त्तव्यम् । तैत्तिरीयम् ।

**विमर्श**—प्रत्यय दो प्रकार के होते हैं एक अच् वाले और अनेक अच् वाले । जो एक अच्वाला प्रत्यय है उसका स्वर नियत=व्यवस्थित नहीं होता है कि वह उदात्त, अनुदात्त और स्वरित में कौन सा हो ? तथा अनेक अच्वाले प्रत्ययों में कहाँ उदात्त हो ? कहाँ अन्य स्वर हों ? इसमें यह 'आदि' इस देश=स्थान का निर्णय करता है । इस प्रकार यह सूत्र दो कार्य करता है—(१) उदात्त ही होता है । (२) आदि का ही होता है ।। ३ ।।

**न्यासः**

अनेकाचां ह्रस्वत्यादिग्रहण आदिमध्यान्तानामनियमेन स्वरः प्रसज्येतेत्यनेकाचः प्रत्ययादेर्यथाद्युदात्तार्थं वचनं नार्थं एतेन; यस्मादादेरनुदात्तादीनां मध्यान्तयोश्चोदात्तस्य प्रसङ्ग एव नास्ति। तथा हि—यमनुदात्तमिच्छति, करोति तत्र पकारमनुबन्धम्, आह च—'अनुदात्तौ सुप्पितौ' इति; स्वरितमपि यमिच्छति, करोति तत्र तकारमनुबन्धम्, आह च—'तित् स्वरितम्' इति; एकश्रुतिं यमिच्छति तत्रैकश्रुतिग्रहणं करोति, आह च 'एकश्रुति दूरात् सम्बुद्धौ' इति; अन्तोदात्तमपि यमिच्छति, करोति तत्र चकारमनुबन्धम्, आह च—'चितोऽन्त उदात्तो भवति' इति; मध्योदात्तमपि यमिच्छति, करोति तत्र रेफमनुबन्धम्, आह—'उपोत्तमं रिति' इति; य इदानीमतोऽन्यः प्रत्ययः सोऽन्तरेणापि वचनमाद्युदात्त एव भविष्यति? नैतदस्ति; येषामेव हि स्वरो नियम्यते त एव नियतस्वराः स्युः, यस्त्वनियतस्वरः प्रत्ययस्तस्यानियमेनैव स्वरः प्रसज्येत—कदाचिदुदात्तः, कदाचित् स्वरान्तरम्। उदात्तोऽपि भवन् कदाचिदादौ, कदाचिन्मध्ये, कदाचिदन्ते स्यात्। तस्मात् कर्त्तव्यमेतत्॥ ३॥

**पदमञ्जरी**

कदाचिन्मध्यस्य, कदाचिदन्त्यस्येति। तेषु वचनमिदमुदात्तार्थम्, तत्राप्यादेरुदात्तार्थमिति। किमर्थं पुनः प्रत्ययसंज्ञासन्नियोगेनायं स्वर उच्यते, न 'ञ्नित्यादिर्नित्यम्' प्रत्ययस्य च लसार्वधातुकमनुदात्तं सुप्पितौ चेति स्वरप्रकरण एवोच्येत, एवं हि प्रकरणमभिन्नं भवति? किञ्च, द्विरानुदात्तग्रहणं द्विश्चाद्युदात्तग्रहणं न कर्त्तव्यं भवति?

स्यादेतत्—तत्र क्रियमाणे प्रत्ययग्रहणपरिभाषया तदन्तस्य स्वरः प्राप्नोति, इह तु क्रियमाणे नायं दोषो भवेद्, उत्पन्नो हि प्रत्ययस्तदाश्रयाणां तदन्तविध्यादीनां निमित्तं भवति, न तूत्पद्यमानः, न खलूत्पद्यमानो घट उदकाहरणादीनां निमित्तमवकल्पते, ततश्च 'आद्युदात्तश्च' इत्यस्य प्रतियोगमुपस्थाने सति उत्पद्यमान एव तव्यदादिराद्युदात्तो भवति, एवं तिबादिरनुदात्त इति दोषाभावः; अतः प्रत्ययसंज्ञासन्नियोगेन स्वरो विधीयत इति? तन्न; ज्ञापकात्सिद्धम्, यदयं ञ्नित्यादिरुदात्तो भवतीत्याह, तज् ज्ञापयति—प्रत्ययस्य चेत्यत्र न तदन्तविधिर्भवतीत्यनुदात्तत्वमपि तदन्तस्य न भविष्यति; धातोरन्त उदात्तो भवतीत्यादेः प्रकृतिस्वरस्य विधानसामर्थ्यात्। यत्र ह्यनुदात्तः प्रत्ययः—याति, वृक्षाभ्यामित्यादौ, तत्र प्रकृतिस्वरः श्रूयते; यातः, यान्ति, वृक्षत्वमित्यादौ सतिशिष्टेन प्रत्ययाद्युदात्तत्वेन बाध्यते। यदि च प्रत्ययान्तस्यानुदात्तत्वं स्याद् निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यात्। इदं तर्हि प्रयोजनम्—लवितव्यमित्यादौ प्रत्ययोत्पत्तिकाले एवाद्युदात्तत्वे कृते पश्चाद्भवन्निडनुदात्तो यथा स्यात्, अन्यथा लू + तव्य इति स्थिते आद्युदात्तत्वं शब्दान्तरप्राप्त्याऽनित्यम्, इट् तु स्वरभिन्नस्य प्राप्नोति, उभयोरनित्ययोः परत्वादिटि कृते तस्य प्रत्ययग्रहणेन ग्रहणे सति इट एवाद्युदात्तत्वं स्यात्? एतदपि ज्ञापकात्सिद्धम्, यदयम् 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्याह, तज्ज्ञापयति—'आगमा अनुदात्ताः' (व्या० परि० १०५) इति; अन्यथा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमित्यनर्थकं तत्स्यात्। ननु पिदर्थमेतत्स्यात्, अन्यथा चिनुयादित्यादौ पिद्भक्तो यासुडनुदात्तः स्यात्? यद्येतावत्प्रयोजनं स्याद्, यासुट् परस्मैपदेषु भवति, अपिच्च लिङ् भवतीति पित्त्वमेव प्रतिषेधेत्। अवश्यं चैतज्ज्ञापकमाश्रयणीयम्, अन्यथा प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वविधावपि लविषीयेत्यादौ लावस्थायामनच्कत्वादसति स्वरे विशेषविहितत्वात्परत्वाच्च सीयुटि कृते पश्चाल्लादेशे प्रत्ययाद्युदात्तत्वमित्यानुपूर्व्या सीयुट एव स्यात्। ज्ञापकाश्रयणे तु सीयुडनुदात्तः 'इटोऽत्' इत्यकार उदात्तो भवति। कथं भवति, यावता सीयुटि कृतेऽकारस्य विच्छिन्नमादित्वम्? नैष दोषः; यासुट उदात्तवचनं ज्ञापकम्—प्रत्ययाद्युदात्तत्वे कर्त्तव्ये आगमा अविद्यमानवद्भवन्तीति; अन्यथा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमित्यनर्थकं तत्स्यात्। किञ्च, लवितव्यमित्यादौ पूर्वमाद्युदात्तत्वे सत्यपि पश्चाद्भवन्निट् किमित्यनुदात्तो भवति शेषनिघातेन? नायं शेषनिघातस्य विषयः; स्वरविधिशेषत्वात्तस्य। यस्मिन्पदे यस्यामवस्थायां यस्याच उदात्तः स्वरितो वा विधीयते तस्मिन्पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यत इत्यर्थः। न चायं प्रकारोऽत्र सम्भवति। इह तर्हि स्तुघ्ने

## ६२३. अनुदात्तौ सुप्पितौ ॥ ४ ॥ (३७०९)

**पूर्वस्यायमपवादः। सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति। दृषदौ दृषदः। पितः खल्वपि—**

**न्यासः**

**अनुदात्तौ सुप्पितौ ॥ पूर्वस्यायमपवाद इति।** नाप्राप्ते तस्मिन्नस्यारम्भात्। सुबिति प्रत्याहारस्य ग्रहणम्, न सप्तमीबहुवचनस्य; तस्य पित्त्वादेवानुदात्तस्य सिद्धत्वात्। अत एव वृत्तौ 'सुपः' इति बहुवचनेन निर्देशः

**पदमञ्जरी**

भवा स्रौघ्नी प्रत्ययसन्नियोगेनाण उदात्तत्वे सति ङीप उदात्तनिवृत्तिस्वरः सिद्धो भवति; अन्यथा स्रौघ्न ई इति स्थिते 'प्रत्ययस्य च' इत्याद्युदात्तत्वं बाधित्वा परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्त्यभावान्न स्यात्, न वा बहिरङ्गलक्षणत्वात्। लोपो हि ङीप उत्पत्तिमपेक्षते, स्वरस्तु निरपेक्षः। अवश्यं चात्रान्तरङ्गत्वमेवाश्रयणीयम्, अन्यथा कंसेन क्रीता 'कंसाट्टिठन्' टित इति ङीप्, कंस ठ ई इति स्थिते 'ञ्नित्यादिः' इत्याद्युदात्तत्वं बाधित्वा परत्वाद्यस्येति लोपः स्यात्, ततश्च नित्स्वरे लोपेन बाधिते प्रत्ययसंज्ञासन्नियोगेन विधीयमानमाद्युदात्तत्वमकारस्य स्थितमिति तस्य लोपे ङीप उदात्तनिवृत्तिस्वरः स्यात्। ननु च ठचश्चित्करणात्पूर्वमिकादेशस्ततः प्रत्ययाद्युदात्तत्वमिति नास्त्युदात्तलोपः। इह तर्हि उत्से जाता 'उत्सादिभ्योऽञ्', ङीप्, उत्स अ ई इति स्थिते ञित्स्वरं बाधित्वा परत्वाद्यस्येति लोपे पूर्वोक्तया नीत्या ङीप उदात्तनिवृत्तिस्वरः स्यात्? नैष दोषः; नित्स्वरो हि प्रत्ययस्वरस्यापवादः, न चापवादविषय उत्सर्गोऽभिनिविशते, तत्र तावदत्र प्रत्ययाद्युदात्तत्वं भवति, अपवादं ञ्नित्स्वरं प्रतीक्ष्यत इति कुत उदात्तलोपः? इह तर्हि अत्रेरपत्यम् 'इतश्चानिञः' इति ढक्, आयन्नादिषूपदेशिवचनं स्वरसिद्धयर्थमिति प्रत्ययस्वरात्पूर्वमेयादेशः, ङीप्, आत्रेय ई इति स्थिते तद्धितस्य कित इति स्वरं बाधित्वा परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्तिस्वर ईकारस्य न प्राप्नोति। तस्मादन्तरङ्गत्वमेवाश्रयणीयम्। एवं च स्रौघ्नीत्यत्रापि अन्तरङ्गत्वादेव सिद्धमिष्टमिति नार्थ एतदर्थेन प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तवचनेन। इदं तर्हि प्रयोजनम्—गोपायति, धूपायति, उत्पत्तिसन्नियोगेनाद्युदात्तत्वे पश्चात् 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां धातोरित्यन्तोदात्तत्वं भवति। यदि तु ञ्नित्यादिर्नित्यं प्रत्ययस्य चेत्युच्येत, परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत।

[स्यादेतत्] अनुदात्तस्य तर्ह्यत्र प्रदेशे करणे किं प्रयोजनम्? स्यादेतत्क-र्यशब्दाट्टापि स्वरितत्वात् प्रागेकादेशे कृते तस्य पूर्वं प्रत्यन्तवद्भावात्तित्स्वरितश्च प्राप्नोति, परं प्रत्यादिवद्भावात्पित्स्वरश्च, परत्वात् भवति। यदि तु लसार्वधातुकमनुदात्तं सुप्पितौ चेत्युच्येत परत्वादनुदात्तत्वं स्यादिति? तन्न; तत्र हि टाबुत्पत्तेरपि प्रागेव स्वरितो भवति, सत्यपि वा टापि स्वरितैकादेशयोरुभयोरनित्ययोः परत्वात्स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति। इदं तर्हि-आम्बष्ठ्या यङश्चाप्येकादेशे कृते पित्स्वरश्च प्राप्नोति चित्स्वरश्च, परत्वाच्चित्स्वरो भवति, अन्यत्र क्रियमाणे पित्स्वरः स्यात्? अत्रापि चापश्चित्करणसामर्थ्यादेव चित्स्वरो भविष्यति। सामान्यग्रहणाविघातार्थे हि चकारे टाप्प्रकरण एवं यङश्चापं विदधीत। एवं तर्हि तदेव तस्मिन्प्रयोजनं तदन्तविधिर्मा भूदिति। यदुक्तं प्रकृतिस्वरस्य विधानसामर्थ्यादिति? तत्र आस्ते शेत इत्यादौ लसार्वधातुकमात्रस्यानुदात्तत्वे सति धातुस्वरस्य सावकाशत्वात्। प्रातिपदिकान्तोदात्तत्वमपि अग्निमान्, वायुमान्, अग्नीनामित्यादौ 'ह्रस्वनुड्भ्यां मतुप्' 'नामन्यतरस्याम्' इति स्वरसिद्धयर्थं स्यात्, अत्र ह्यन्तोदात्तादिति वर्तत इत्यलमति कर्कशेन क्षोदेन॥ ३॥

**अनुदात्तौ सुप्पितौ।** सुबिति प्रत्याहारस्येदं ग्रहणम्, न सप्तमीबहुवचनस्य; पित्त्वादेवानुदात्तत्वस्य

**भावबोधिनी**

यह पूर्ववर्ती सूत्र का अपवाद है। सुप् और पित् प्रत्यय अनुदात्त होते हैं। उदाहरण—दृषदौ, दृषदः। [ दृषद् + जस् = अस्—इनमें 'औ' तथा 'जस्' ये सुप् प्रत्यय हैं अतः अनुदात्त हो जाते हैं। ] पित् प्रत्यय भी अनुदात्त होते हैं—

**पचंति, पठंति ॥**

**६२४. गुप्तिज्किद्भ्यः सन् ॥ ५ ॥ ॥ (२३९३)**

**'गुप गोपने'** ( धा० पा० ९७१ ), **'तिज निशाने'** ( धा० पा० ९७२ )' **'कित निवासे'** ( धा० पा० ९९४ )—एतेभ्यो धातुभ्यः सन्प्रत्ययो भवति । प्रत्ययसंज्ञा चाधिकृतैव । **जुगुप्सते । तितिक्षते । चिकित्सति ।**

**न्यासः**

कृतः । प्रत्याहारग्रहणञ्चेदं सुप एव पकारेण, नान्येन; तस्यानन्यार्थत्वात् । **पचति, पठतीति** । शबत्रोदाहरणम्, न तिप्; तस्य 'तास्यनुदात्त' इत्यादिनैव सिद्धत्वात् ॥ ४ ॥

**गुप्तिज्किद्भ्यः सन्** । **प्रत्ययसंज्ञा चाधिकृतैवेति** । विस्पष्टार्थमेतत् । प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते; 'आ पञ्चमाध्यायपरिसमाप्तेः' इत्यतो वचनादेव प्रतिपाद्यस्यावगतत्वात् । ननु च सत्यपि प्रत्ययसंज्ञाया इहोपस्थाने नैव तया सनो भवितव्यम्; यतः प्रत्यय इत्यन्वर्थसंज्ञेयम्—प्रतियन्त्यनेनार्थानिति प्रत्ययः, न च सना कञ्चनार्थं प्रतियन्ति; तस्यानर्थकत्वात्, न हीह सनः कश्चनार्थो निर्दिश्यते । न चानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भविष्यन्तीति स्वार्थ एव सन् भविष्यतीति युक्तं परिकल्पयितुम्; गोपनादेः स्वार्थस्य सन्नन्तादप्रतीतेः ।

अथानर्थकस्यापि प्रत्ययाधिकारे विधानसामर्थ्यात् संज्ञा भविष्यतीति चेत् ? न; एवञ्च 'हनस्त च' 'त्रपुजतुनोः षुक्' इति विकारागमयोरपि स्यात् । नैष दोषः; अस्त्येव सनोऽर्थः, कः पुनरसौ ? निन्दादिः । यदाह—'निन्दाक्षमाव्याधिप्रतीकारेषु सनिष्यते' इति । कुतः पुनरेतदवसितम्—सनोऽर्था निन्दादय इति ? अन्वयव्यतिरेकाभ्याम् । सति हि सनि जुगुप्सत इत्यादौ तेऽर्थाः प्रतीयन्ते, असति तु सनि सत्स्वपि गुपादिषु गोपयतीत्यादौ ते न प्रतीयन्ते । तस्मादर्थवानेव सन्निति भवत्येव प्रत्ययसंज्ञा । **जुगुप्सत** इत्यार्धधातुकत्वाभावादिण् न भवति । आर्धधातुकत्वाभावस्तु सनो धातोरित्यविधानात् । 'कुहोश्चुः' इति चुत्वम्—जकारः । **तितिक्षत** इति । जकारस्य 'चोः कुः' इति कुत्वम्—गकारः । तस्य 'खरि च' इति चर्त्वम्—ककारः ।

**पदमञ्जरी**

सिद्धत्वात् । अत एव वृत्तौ 'सुपः' इति बहुवचनम् । पित एतत्तु प्रक्रमानुरोधेन बहुवचनम् । **सुपैश्च पकारेण** प्रत्याहारः, न कपः; टाबादीनां पित्करणात् । **पचतीति** । शबत्रोदाहरणम्, तिपस्त्वदुपदेशात् 'लसार्वधातुकम्' इत्येव सिद्धम् ॥ ४ ॥

**गुप्तिज्किद्भ्यः सन्** ॥ **गुप गोपने इति** । 'गुप व्याकुलत्वे,' (धा० पा० १२३४) 'गुपू रक्षणे' (धा० पा० ३९५) इत्येतयोस्तु ग्रहणं न भवति; तिजिना सह गणे पठितस्यानुदात्तेत एव गुपेरिहापि ग्रहणात् । **प्रत्ययसंज्ञा चाधिकृतैवेति** । का पुनरत्र विस्मरणाशङ्का, किन्त्वन्वर्था प्रत्ययसंज्ञा, अनर्थकस्य गुपादिसनो न स्यादित्याशङ्कानेन निवार्यते । अधिकारसामर्थ्यादनर्थकस्यापि भवतीत्यर्थः । अन्वर्थता त्वर्थवदनर्थकसम्भवेऽर्थवतो ग्रहणहेतुः । निन्दादयस्तु गुपादीनामर्था न सनः, अन्यथा गुपादीनामानर्थक्यप्रसङ्गात् । धातूनां चानेकार्थत्वं तत्र तत्र दृश्यते । प्रत्ययास्तु स्वार्थिका अपि भवन्ति समासान्तादिवत् । **जुगुप्सते इति** । धातोरित्येवमन-

**भावबोधिनी**

उदाहरण—पचति, पठति । [ पच् + लट् = तिप्, शप् = अ—यहाँ दोनों प्रत्यय 'प्' की इत्संज्ञावाले होने से अनुदात्त होते हैं । इसी प्रकार पठ् + शप् + तिप् में भी दोनों पित् होने से अनुदात्त हैं । ] ॥ ४ ॥

'गुप' गोपन = छिपाना अर्थ में है, 'तिज' निशान = तीखा करना अर्थ में है, 'कित' निवास अर्थ में है—इन धातुओं से सन् प्रत्यय होता है । और प्रत्यय संज्ञा का अधिकार है ही । [ यहाँ स्वार्थिक प्रत्यय सन् है, इच्छा अर्थ वाला नहीं । ] उदाहरण—जुगुप्सते । तितिक्षते । चिकित्सति ।

**॥ निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते, अन्यत्र यथाप्राप्तं प्रत्यया भवन्ति ॥ । गोपयति । तेजयति । संकेतयति । गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् ( म० भा० ) ।**

### न्यासः

**निन्दाक्षमेत्यादि** । कथं पुनर्निन्दादिष्विष्यमाणो लभ्यते ? वक्ष्यमाणं वाग्रहणं सर्वस्य शेषो विज्ञायते, सा च व्यवस्थितविभाषा । तेन निन्दादिषु नित्यं सन् भवति, अन्यत्र न भवति । प्रायिकञ्चैतद् व्याधिप्रतीकारग्रहणम्; क्वचिदन्यत्रापि दर्शनात् । तथा हि—'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' इति चिकित्स्यशब्दस्यार्थमन्यथा व्याख्यास्यति । अथ वा—क्षेत्रियाणि च तृणानि शस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि । अथ वा—क्षेत्रियः पारदारिकः । परदाराः परक्षेत्रम्, तत्र चिकित्स्यो निग्रहीतव्य इत्यर्थः । संशयेऽपि दृश्यते—'विचिकित्सति मे मनः' इति । यद्यप्यत्रोपसर्गसम्बन्धात् संशयः प्रतीयते, तथापि धातोरेव वाच्य इष्यते, उपसर्गस्य तु द्योत्यः । तस्मात् प्रायिकं व्याधिप्रतीकारग्रहणम् । प्रायेण हि लोके व्याधिप्रतीकारे चिकित्सतीति प्रयुज्यते । **अन्यत्रेति** । गोपनादौ । **गोपयतीति** । हेतुमण्णिच् । **तेजयति, सङ्केतयतीति** हेतुमण्णिच्, चुरादिणिज्वा; भ्वादौ चुरादौ चानयोः पाठात् ।

अथ जुगुप्सत इत्यादौ कथमात्मनेपदं सन्नन्ताद्विधीयते, न च गुपादिभ्यः प्राक् सन आत्मनेपदं पश्यामः ? इत्याह—**गुपादिष्वनुबन्धकरणमित्यादि** । आत्मनेपदं यथा स्यादिति गुपादिष्वनुबन्धोऽनुदात्तार्थः कृतः, तस्माद्

### पदमञ्जरी

भिधानादस्य सनोऽनार्द्धधातुकत्वादिडभावः । **निन्दाक्षमेति** । प्रायिकमेतदुपाधिवचनम् । तथा च 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' इत्यत्र ग्रन्थः—'अथ वा क्षेत्रियाणि तृणानि यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि, अथ वा क्षेत्रियः पारदारिकः, परदाराः परक्षेत्रम्, तत्र चिकित्स्यो निगृहीतव्यः' (५.२.९२ सूत्रे काशिका) इति । संशयेऽपि दृश्यते-तद्वचचिकित्सन्, य एवं विद्वान्विचिकित्सति, तच्छुश्रुवानृषिर्व्यचिकित्सदिति च । **अन्यत्रेति** । अर्थान्तरवृत्तेर्धात्विन्तरादित्यर्थः । एतच्च 'पूर्ववत्सनः' इत्यत्र निपुणतरमुपपादितम् । **गुपादिष्वनुबन्धकरणमात्मनेपदार्थमिति** । एतदपि तत्रैवोपपादितम् । गुपादिष्विति बहुवचनं मान्बधादिसूत्राभि-

### भावबोधिनी

॥ (१) निन्दा, (२) क्षमा और (३) व्याधि-प्रतीकार = रोग दूर करना—इन अर्थों में सन् प्रत्यय इष्ट होता है, अन्य धातुओं से यथाप्राप्त प्रत्यय होते हैं । ॥ उदाहरण—गोपयति । संकेतयति । गुप आदि में अकार अनुबन्ध आत्मनेपद के लिये हैं ।

**विमर्श**—(१) 'गुप' धातु व्याकुल होना, (२) 'गुपू' रक्षा करना और (३) 'गुप' रक्षा करना अर्थों में है । यहाँ अन्तिम धातु का ही ग्रहण है । यह सन् स्वार्थिक है । परन्तु निन्दा अर्थ की प्रतीति में ही इसका विधान है । गुप् + सन्, 'सन्यङोः' ( पा० सू० ६.१.९ ) से द्वित्व 'हलादिः शेषः' ( पा० सू० ७.४.६० ) आदि हल् शेष बचता है—गुगुप् + स, 'कुहोश्चुः' से 'ग्' का 'ज्',—जुगुप्स । ''सनाद्यन्ता धातवः' ( पा० सू० ३.१.३२ ) से धातुसंज्ञा के फलस्वरूप लट् = त, शप् आदि करने पर—'जुगुप्सते' रूप बनता है । इस 'गुप' का 'अ' अनुदात्त अनुबन्ध होने से ''अनुदात्तङित आत्मनेपदम्'' ( पा०सू० १.३.१२ ) से आत्मनेपद होता है ।

'तिज' धातु से क्षमा अर्थ में सन् होता है—तिज् + सन्, द्वित्व, अभ्यास-कार्य—तितिज + सन्, ''चोः कुः'' ( पा० सू० ८.२.३० ) से 'ज्' का 'ग्' और इस 'ग्' का 'खरि च' ( पा० सू० ८.४.५५ ) से चर्त्व करने पर 'क्' होता है—तितिक् स, ''आदेशप्रत्यययोः'' ( पा० सू० ८.३.५९ ) से 'स' का 'ष' तथा क् + ष = क्ष करने पर 'तितिक्ष' इसकी धातु संज्ञा तथा लट् आदि करने पर 'तितिक्षते' रूप बनता है । यहाँ भी अनुबन्ध अनुदात्त होने से आत्मनेपद होता है ।

## ६२९. मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥ (२३९४)

**'मान पूजायाम्' ( धा० पा० ९७३ ), 'बध बन्धने' ( धा० पा० ९७४ ) 'दान अवखण्डने'**

**न्यासः**

'अनुदात्तङितः' इत्यात्मनेपदं भवतीति भावः। ननु च कृतेऽप्यनुबन्धे न भवितव्यमेव तेभ्य आत्मनेपदेन; सना व्यवहितत्वात् ? नैतदस्ति; अनुबन्धकरणसामर्थ्याद् भविष्यति। अथ वा—'अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति' इति जुगुप्सादय एव समुदाया अनुदात्तेतः, तेनाव्यवधानेनैव तेभ्य आत्मनेपदं भविष्यति। एवं स्थिते यदत्र द्वेष्यमापद्यते तत् 'पूर्ववत् सनः' इत्यत्रोपन्यस्तमपास्तञ्च। अथ किमर्थं सनोऽकार उपदिश्यते, यावता तस्यार्धधातुके 'अतो लोपः' इति लोपेन भवितव्यम्, सार्वधातुकेऽपि शपा सहैकादेशेन, तत्र सत्यसति वाऽकारोपदेशे नास्ति कश्चिद् विशेषः ? नैतदस्ति, इह प्रतीषिषतीति प्रपूर्वादिणः सनि विहिते यद्यकारोपदेशो न स्याद् 'अजादेर्द्वितीयस्य' इति द्वितीयस्यैकाचो द्विर्वचनं विधीयमानं स इत्यस्य न स्यात्, अनच्कत्वात् सनः। अकारोपदेशे सति स इत्यस्य द्वितीयस्यैकाचो भवति। तदर्थोऽकारोपदेशः ॥ ५ ॥

**मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥** मान्बधी अनुदात्तेतौ, शेषौ स्वरितेतौ। इह दीर्घग्रहणाद् **'अचश्च'** इति परिभाषोपस्थानादचाऽभ्यासो विशिष्यत इत्यजन्तस्याभ्यासस्य दीर्घो विधीयमानो नियतं हलादिशेषमपेक्षते; विना तेनाजन्तत्वाभावात्। तस्मिंस्तु सति न किञ्चत् प्रतीक्षणीयमिति तत्समनन्तरमेव दीर्घेण भवितव्यम्, ततश्चाभ्यासस्यावर्णस्य स्थाने भवन् वचेरित्त्वस्य बाधकः स्यात्, शेषाणान्तु ह्रस्वस्य, ततश्चानिष्टं रूपं स्यादिति

**पदमञ्जरी**

प्रायम्। कितिस्तु परस्मैपदी, तथा चानन्तरमेव प्रयोगा दर्शिताः। सनो नकारः स्वरार्थः, नित्करणसामर्थ्याद्धातुस्वरो न भवति—'यत्स्तोतारं जिघांससि सखायम्' (ऋ० ७.८६.४)। विशेषणार्थश्च 'अज्झनगमां सनि' 'हनेः सः' ( द० उ० ९.२१ ) हंस इत्यत्र मा भूत्। 'स्तौतिण्योरेव षण्यभ्यासात्', सुषुपिष इन्द्रमित्यत्र मा भूत्। 'सन्यङोः' इत्यत्रापि 'लिटि धातोः' इत्यतो धातोरित्यनुवृत्तेर्यद्यपि तृणादिभ्यः सेऽप्रसङ्गः। हंसः, वत्स इत्यादौ तु स्यादेवोणादीनां व्युत्पत्तिपक्षे। अकारस्तु प्रतीषिषतीत्यत्र प्रतिपूर्वादिणः सनि विहिते 'अजादेर्द्वितीयस्य' इति शब्दस्य द्विर्वचनं यथा स्यादेवमर्थः। 'यथेष्टं नामधातूनामिति वक्तव्यम्' ( वा० ६५५ ) पुत्रीयिषिषति। अन्यत्र त्वार्द्धधातुके 'अतो लोपः' सार्वधातुके शपा सहैकादेश इति नास्ति विशेषः ॥ ५ ॥

**मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।।** अत्र मान्बधी अनुदात्तेतौ, शेषौ स्वरितेतौ। **अभ्यासस्य चेकारस्य दीर्घो भवतीति।** 'सन्यतः' इतीत्वे दीर्घो भवतीत्यर्थः। ननु विशेषविहितो दीर्घः सामान्यविहितमित्त्वं बाधित्वाऽवर्णस्यैव प्राप्नोति ? ज्ञापकात्सिद्धम्, यदयं 'दीर्घोऽकितः', इत्यत्राकित इत्याह, तज्ज्ञापयति—नाभ्यासविकारेषु बाध्यबाधकभाव इति। तद्धि यंयम्यते इत्यादौ नुकि कृते मा भूदिति। यदि चाभ्यासविकारेषु बाध्यबाधकभावः

**भावबोधिनी**

कित् धातु से व्याधि-प्रतीकार = दवा करना अर्थ में सन् प्रत्यय होता है, द्वित्व, अभ्यासकार्य करने पर—किकित्स, 'कुहोश्चुः' ( पा० सू० ७.४.६२ ) से 'क्' का 'च्' किया जाता है। यहाँ अनुबन्ध अनुदात्त नहीं है। अतः आत्मनेपद न होकर परस्मैपद होता है।

ध्यान रखना चाहिये कि वार्त्तिककार ने निन्दा, क्षमा और व्याधिप्रतीकार अर्थों में ही इन धातुओं से स्वार्थिक सन् का विधान माना है। परन्तु इस सूत्र के भाष्य में ऐसा वचन नहीं मिलता है। वृत्तिकार ने किसी अन्य स्रोत से यह नियमन लिखा है। इसी लिये पदमञ्जरीकार का कहना है कि यह उपाधिवचन = अर्थविशेष कहना प्रायिक है।

गोपयति, तेजयति, संकेतयति—इनमें प्रेरणा अर्थ में णिच् है। अन्त की दो धातुओं से चुरादिगण में पाठ होने से स्वार्थिक णिच् भी माना जा सकता है ॥ ५ ॥

'मान' पूजा अर्थ में, 'वध' बधन अर्थ में, 'दान' अवखण्डन करना अर्थ में, 'शान' अवतेजन = तीखा करना

( धा० पा० ९९५ ), 'शान अवतेजने' ( धा० पा० ९९६ ) इत्येतेभ्यो धातुभ्यः सन्प्रत्ययो भवति. अभ्यासस्य चेकारस्य दीर्घादेशो भवति । मीमांसते । बीभत्सते । दीदांसते । शीशांसते ।

उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिन्न भवत्यपि—मानयति । बाधयति । दानयति । निशानयति ।

※ अत्रापि सन्नर्थविशेष इष्यते ※ (?) । मानेर्जिज्ञासायाम् बधेर्वैरूप्ये दानेरार्जवे, शानेर्निशाने ॥

**न्यासः**

यो मन्येत तं प्रत्याह—अभ्यासस्य चेकारस्य दीर्घो भवतीति । कथं पुनरिकारस्य दीर्घो लभ्यते, यावता विशेषविधिः सामान्यविधेर्बाधको भवति, विशेषविहितश्च दीर्घः, ततोऽयं सामान्यविहितमित्त्वं बाधित्वाऽकारस्यैव प्राप्नोति ? अत एवं मन्यते—'दीर्घोऽकितः' इत्यत्र ज्ञापितमेतत् स्यात्—'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन्बाधन्ते' इति । (व्य० परि० २८) अकिद्ग्रहणस्यैतत् प्रयोजनम्, इह मा भूद्—यंयम्यते, रंरम्यते इति । यदि चाभ्यासविकारेष्वपवादैरुत्सर्गा बाध्येरन्नेवं सत्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यति, किमकित इत्यनेन ! कृतञ्च; अतस्ततो ज्ञापयति—नाभ्यासविकारेषु बाध्यबाधकभाव इति । बीभत्सते इति । 'एकाचो बशो भष्' इति बकारस्य भकारः, धकारस्य 'खरि च' इति तकारः ।

उत्तरसूत्र इत्यादि । अत्र हि सनो विधिमात्रमपेक्ष्यते वावचनेन, न त्वनन्तर एव विधिः । तेन त्रयाणामपि योगानां शेषो विज्ञायते । सर्वग्रहणं गुपादिसूत्रस्यापि शेषो विज्ञायत इति ज्ञापनार्थम्, अन्यथा ह्यनन्तरस्यैव सूत्रस्य शेषो विज्ञायेत । मानयतीति । हेतुमण्णिच्, चुरादिणिज् वा, चुरादावप्यस्य पाठात् । निशानमिति । पचाद्यच् ॥६॥

**पदमञ्जरी**

स्यात्ततो विशेषविहितत्वान्नुकि कृतेऽनजन्तत्वादेव न भविष्यति दीर्घः, किं प्रतिषेधेन ? अत एव डौढोक्यते इत्यादौ ह्रस्वत्वे कृते गुणो भवति, अन्यथा बबाधे इत्यादौ चरितार्थं ह्रस्वं पापच्यते इत्यादौ चरितार्थो दीर्घः परत्वाद् बाधेत ।

अपर आह—सूत्रोपात्त एवार्थो वृत्तिकारेणोक्त इति कथमभ्यासस्येति पदच्छेदः, अभ्यासस्य विकार अभ्यासः, स चेत्त्वमेव । तथा हि—लोपस्य तावदभावरूपत्वादादेशो विधातुमशक्यः, यदि च ह्रस्वस्य दीर्घत्वं स्यात् तद्धितनिर्देशोऽनर्थकः स्यात्, दीर्घश्रुत्या 'अचश्च' इत्युपस्थानादजन्तस्य दीर्घविधानाद्दीर्घस्य ह्रस्वस्य वा दीर्घो विशेषाभावात्तस्मादित्त्वमेव तद्धितेन प्रत्याय्यते । अथ वा सन्याहृत्य विहितस्य विकारस्य ग्रहणं तदाह—अभ्यासस्य चेकारस्येति । सर्वशेष इति । न केवलं तस्यैवापि तु पूर्वयोरपि द्वयोरित्यर्थः । तेन क्वचिन्न भवतीति । अर्थान्तरवृत्तिभ्यो धात्वन्तरेभ्य इत्यर्थः । एतच्च 'पूर्ववत्सनः' इत्यत्रोपपादितम् । मानयतीत्यादयश्चुरादिण्यन्ताः । निशान इति ण्यन्तादेव पचाद्यच् । मानेर्जिज्ञासायामिति । यद्येवम्, ज्ञानार्थवृत्तेर्मानेरुत्तरसूत्रेणैव सन् सिद्धः ? सत्यम्, दीर्घविधानार्थं वचनमिडभावार्थं च । बधेर्वैरूप्ये इति । चित्तस्य दुर्गन्धाद्यनुभवनिमित्तो विकारो वैरूप्यम् । शानेर्निशाने इति । निशानम् = तीक्ष्णीकरणम्, यत्रैवायं पठितः 'शान तेजने' इति तत्रैवेत्यर्थः ॥ ६ ॥

**भावबोधिनी**

अर्थ में है—इन चार धातुओं से सन् प्रत्यय होता है और अभ्यास के 'इ' कार का दीर्घ भी होता है । उदा० मीमांसते । बीभत्सते । दीदांसते । शीशांसते ।

अग्रिम सूत्र ( 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' ३.१.७ ) में 'वा' का ग्रहण सभी अर्थात् पूर्व के दोनों सूत्रों में भी शेष का ज्ञापन करता है इसलिये कहीं-कहीं सन् नहीं होता है, जैसे—मानयति, बाधयति, दानयति, निशानयति । [ इन में प्रेरणा अर्थ में अथवा चुरादिगणीय मानकर स्वार्थ में णिच् समझना चाहिये । ]

※ इस सूत्र में भी अर्थविशेष में ही सन् प्रत्यय इष्ट है । ※ 'मान' धातु से जिज्ञासा में, 'बध' विरूपता = दुर्गन्ध आदि के कारण चित्त का विकृत होना, 'दान' सीधा = अनुकूल होना और 'शान' निशान = तीखा करना—अर्थ में ही सन् प्रत्यय होता है ।

## ६२६. धातोः कर्मणः समानकर्तृकादिच्छायां वा ।। ७ ।। (२६०८)

**इषिकर्म यो धातुरिषिणैव समानकर्तृकः, तस्मादिच्छायामर्थे वा सन्प्रत्ययो भवति । कर्मत्वं समानकर्तृ-**

### न्यासः

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ।।** कर्तुः क्रियया व्याप्तुमिष्टतमस्य कर्मभाव उपपद्यते । नान्यथेत्यवश्यं या काचित् क्रियाऽपेक्षितव्येति । इह चान्या न श्रूयते, प्रत्ययार्थत्वेन चेच्छा सन्निधापिता, अतः सैवापेक्षितुं युक्ता; प्रत्यासत्तेर्न्यायात्, तस्मात् तयैव व्याप्यमानस्य कर्मभावो विज्ञायत इत्याह—**इषिकर्मेत्यादि ।** इषेः कर्मेति षष्ठीसमासः । प्रतियोग्यपेक्षत्वात् समानत्वस्य नियोगतः प्रतियोग्यपेक्षितव्यः, न च सूत्रे प्रतियोगी श्रूयते, तत्र पूर्वोक्तन्यायेनेषेरेव प्रतियोगित्वं विज्ञायत इत्याह—**इषिणैवेत्यादि ।** समान एकः कर्त्तास्येति बहुव्रीहिः, एककर्तृक इत्यर्थः । ननु च धातोः कर्मत्वं नोपपद्यते, तस्यार्थधर्मत्वात्, धातोश्च शब्दात्मकत्वात् । अथ करोति धातुमिच्छतीत्यादौ प्रयोगे धातोरपि कर्मता दृष्टेति चेत् ? न ब्रूमः—सर्वथा धातोः कर्मत्वं न भवतीति, किं तर्हि ? य इह सन्नुत्पत्तिनिमित्तभावेनोपात्तः समानकर्तृकः, तस्य न सम्भवतीति ब्रूमः; यस्मात् समानकर्तृकत्वं साध्यमानस्यार्थस्य भवति, कर्मत्वं तु सिद्धस्वभावस्य । अङ्गीकृत्य च समानकर्तृकत्वं धातोः कर्मत्वे दोष उक्तः, इदानीं तदपि न सम्भवत्येव । तथा हि—धातुः शब्दः क्रियायाश्च कर्त्ता

### पदमञ्जरी

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ।।** कर्मत्वसमानकर्तृकत्वयोः क्रियापेक्षत्वादिच्छायाश्च प्रत्ययार्थत्वेनापि तावच्छ्रुतत्वात्तदपेक्षे एव ते विज्ञायेते इत्याह—**इषिकर्म यो धातुरिषिणैव समानकर्तृक इति ।**

### भावबोधिनी

**विमर्श**—पूर्वसूत्र के समान यह सूत्र भी अर्थ-विशेष को मानने पर ही 'दान्' आदि चार धातुओं से सन् प्रत्यय का विधान करता है । परन्तु अर्थनियमन भाष्य में नहीं है । यह वृत्तिकार ने किसी अन्य व्याख्या-ग्रन्थ से लिया है ।

मान् + सन्, द्वित्व, हलादिशेष, अभ्यास का ह्रस्व करने पर—म मान् स । 'सन्यतः' (पा. सू. ७.४.७९) से अभ्यास के 'अ' का 'इ', प्रस्तुत सूत्र से दीर्घ, "नश्चापदान्तस्य झलि" (पा. सू. ८.३.२४) से 'न्' का अनुस्वार—मीमांस । 'सनाद्यन्ताः धातवः" (पा. सू. ३.१.३२) से धातुसंज्ञा और लट् । अनुबन्ध अनुदात्त मानने से आत्मनेपद के रूप होते हैं—मीमांसते ।

बीभत्सते । बध् + सन्, द्वित्वादिकार्य बबध् + स, 'एकाचो बशो भष्" (पा. सू. ८.२.३७) सूत्र से भष्भाव करने पर 'ब' का 'भ' बभध् + स, "खरि च" से चर्त्व करने पर 'ध्' का 'त्' अभ्यास के 'अ' का "सन्यतः" सूत्र से 'इ' तथा प्रस्तुत सूत्र से 'इ' का दीर्घ करने पर—बीभत्स । आत्मनेपद में बीभत्सते । दीदांसते । दान् + सन् द्वित्वादिकार्य अभ्यास-ह्रस्व, अ का इ—दिदान् + स, 'न्' का अनुस्वार, 'इ' का दीर्घ—दीदांस । आत्मनेपद प्रत्यय—दीदांसते । शीशांसते । शान् + सन्, द्वित्वादिकार्य शाशान् + स, अभ्यास का ह्रस्व, 'अ' का 'इ', इ का दीर्घ, 'न्' का अनुस्वार—शीशांस । आत्मनेपद प्रत्यय के योग में—शीशांसते ।

यह सन् प्रत्यय अर्थविशेष में ही होता है । अतः अन्य अर्थ में विद्यमान धातु से णिच् प्रत्यय होता है, सन् नहीं होता है ।। ६ ।।

इच्छा का कर्मभूत जो धातु, इच्छा के समान कर्तावाली है अर्थात् इच्छा का कर्ता और इच्छा की कर्म धातु = क्रिया का एक ही कर्ता है, ऐसी धातु से इच्छा अर्थ में विकल्प से सन् प्रत्यय होता है । [धातु का] कर्म होना और समानकर्तृक होना—अर्थ के माध्यम से होता है । अर्थात् धातु के अर्थ का कर्म और अर्थ का समान-कर्तृकत्व समझना

**कत्वं च धातोरर्थद्वारकम् । कर्तुमिच्छति चिकीर्षति । जिहीर्षति ।**

**धातुग्रहणं किम् ?**

**न्यासः**

भवति, न शब्दस्येत्यत आह—**कर्मत्वमित्यादि । अर्थद्वारकमिति ।** अर्थो द्वारमुपायो यस्य तदर्थद्वारकमिति । अर्थस्य कर्मत्वात् समानकर्तृकत्वाच्च तद्वचनोऽपि धातुरर्थधर्मेणोपचारात् कर्मसमानकर्तृकश्चोच्यते, यथा—'द्वन्द्वश्च प्राणितूर्य्य' इत्यत्रार्थस्य प्राण्यङ्गत्वात् तद्वचनोऽपि प्राण्यङ्गमित्युच्यत इति भावः । **चिकीर्षतीत्यत्र** च करोतेरर्थ इच्छया व्याप्यमानत्वात् समानत्वात् कर्मसमानकर्तृकश्चेषिणा; यस्माद् य एवेषेः कर्त्ता स एव तस्यापि । अतस्तद्द्वारेण करोतिरपि कर्मसमानकर्तृकश्चेति भावः । ततः सन्, 'इको झल्' इति सनः कित्त्वाद् गुणाभावः, 'अज्झनगमां सनि' इति दीर्घः, 'ऋत इद्धातोः' इतीत्त्वम्, रपरत्वम्, 'हलि च' इति दीर्घः, 'इण्कोः' इत्यनुवर्त्तमाने 'आदेशप्रत्यययोः' इति षत्वम्, द्विर्वचनम्, अभ्यासकार्यम् ।

**धातुग्रहणं किमिति ।** धातुग्रहणं ह्येवमर्थं क्रियते—गमनमिच्छतीति सुबन्तान् मा भूदिति । ननु चासत्यपि धातुग्रहणे ततः सन् भवितुं नोत्सहते; 'सुप आत्मनः क्यच्' इत्यपवादेन बाधितत्वात्, तस्मात् पारिशेष्याद्विनापि धातुग्रहणेन धातोरेव भविष्यतीत्यभिप्रायेणाह **सोपसर्गादुत्पत्तिर्मा भूदिति ।** यदोपसर्ग-

**पदमञ्जरी**

**अर्थद्वारकमिति ।** धात्वर्थस्य कर्मत्वात्समानकर्तृकत्वाच्च धातुस्तथा व्यपदिश्यते न स्वरूपेणेत्यर्थः, किं कारणम् ? असम्भवात् । यद्यपि करोतिमिच्छतीत्यादौ धातोः स्वरूपेणापि कर्मत्वसम्भवः, तथापि न तस्य स्वरूपेणार्थद्वारेण वा समानकर्तृकत्वं सम्भवति । किं चात्र श्तिपा निर्देशात्स्वरूपपरत्वम्, सन्प्रकृतेस्तु लोकव्युत्पत्त्यनुसारेणार्थपरत्वमेव, अतः सुष्ठूक्तम्—धातोरर्थद्वारकं विशेषणमिति । इच्छायाः क्रियायाः कर्मभूत इच्छयैव समानकर्तृकोऽर्थो यस्य धातोस्तस्मात् सन् भवतीत्यर्थः । **चिकीर्षति, जिहीर्षतीति ।** कृहृभ्यां सन्, 'इको झल्' इति कित्त्वम्, 'अज्झनगमां सनि' इति दीर्घः, 'ऋत इद्धातोः', 'हलि च' इति च दीर्घः, सनः षत्वम्, द्विर्वचनम्, हलादिशेषः, ह्रस्वः, 'कुहोश्चुः' इति चुत्वम्—ककारस्य चकारः, हकारस्य झकारः, 'अभ्यासे चर्च' इति जश्त्वम्—जकारः, 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लडादिः ।

**धातुग्रहणं किमिति ।** 'कर्मणः समानकर्तृकात्' इति वचनाद्वाक्यान्न भविष्यति । न ह्येतदुभयं वाक्यार्थस्य

**भावबोधिनी**

चाहिये । उदा० कर्तुम् इच्छति-इस विग्रह में—चिकीर्षति [ करना चाहता है । ] जिहीर्षति [ हर्तुम् इच्छति—इस विग्रह में बनता है । हरना चाहता है—यह अर्थ है ।]

**विमर्श**—कर्तुम् इच्छति—यहाँ इच्छा करने वाला और काम करने वाला एक ही व्यक्ति है, तथा इच्छा की कर्मभूत धातु 'कृ' है । इसलिये यह समानकर्तृक हो जाती है । सन् प्रत्यय होता है - कृ + सन्, "इको झल्" ( पा. सू. १.२.९ ) के अनुसार यह कित् हो जाता है अतः 'ऋ' का गुण न होकर "अज्झनगमां सनि" ( पा. सू. ६.४.१६ ) से ऋ का दीर्घ, "ॠत इद्धातोः" ( पा. सू. ७.१.१०० ) से ॠ का 'इ' रपर दीर्घ कीर् + स, द्वित्व, हलादिशेष, अभ्यास का ह्रस्व, "कुहोश्चुः" ( पा. सू. ७.४.६२ ) 'क' का 'च' 'चिकीर्स,' "आदेशप्रत्यययोः" ( पा. सू. ८.३.५९ ) से मूर्धन्य आदेश—चिकीर्ष ।

"सनाद्यताः धातवः" ( पा. सू. ३.१.३२ ) धातु संज्ञा, लट् आदि कार्य करने पर—चिकीर्षति । हर्तुम् इच्छति इस विग्रह में ऋ + सन् ऋ का 'इ' रपर, दीर्घ, द्वित्व, हलादिशेष, अभ्यास का ह्रस्व - हि हीर् + स, "कुहोश्चुः" ( पा. सू. ७.४.६२ ) से 'ह' का चवर्ग 'झ' झि हीर् + स, "अभ्यासे चर् च" ( पा. सू. ८.४.५४ ) से 'झ' का जश्त्व 'ज' "आदेशप्रत्यययोः" से मूर्धन्य —जिहीर्ष । धातुसंज्ञा, लडादि कार्य—जिहीर्षति ।

[ अनु० ] "धातोः" = धातु से—इसके ग्रहण का क्या प्रयोजन है ? उपसर्गसहित धातु से यह सन् प्रत्यय न

**सोपसर्गाद्दुत्पत्तिर्मा भूत—प्रकर्तुमैच्छत् प्राचिकीर्षत् ।**

**न्यासः**

विशिष्टो धात्वर्थ इषिणा व्याप्यते तदासावुपसर्गविशिष्ट एव कर्मत्वमनुभवतीति तद्द्वारेणासौ सोपसर्ग एव धातुः । कर्मेति सोपसर्गादुत्पत्तिः स्यात्, ततश्च प्राचिकीर्षदित्यत्र द्विर्वचनं क्रियमाणं सन्नन्तस्यैकाचः प्रथमस्य द्विर्वचनं भवतीति 'सन्यङोः' इति समुदायादेः प्रशब्दस्य स्यात् । लङि च सोपसर्गस्याङ्गसंज्ञायां ततः प्रागडागमः स्यात् । यदि तर्हि सोपसर्गः, कर्मधातोरुत्पत्तिर्न स्यात्, तस्याकर्मकत्वात् ? नैतदस्ति, समुदायस्य हि कर्मत्वेऽवयवा अपि कर्मत्वमनुभवन्तिः; अवयवात्मकत्वात् समुदायस्य । अभ्युपाय एव ह्यवयवकर्मता समुदायकर्मतायाः; अन्यथा यदि समुदाये कर्मण्यवयवाः कर्मभावापन्ना न भवेयुः, तदा महान्तं पुत्रमिच्छतीत्यत्र कर्मलक्षणावयवा

**पदमञ्जरी**

सम्भवति, सुबन्तादपि—पुत्रमिच्छतीत्यादौ असमानकर्तृकत्वान्न भविष्यति, यत्रापि समानकर्तृकत्वम्—गमनमिच्छति, आसनमिच्छतीत्यादौ, तत्रापि क्यज्बाधको भविष्यति । यद्यपि पुत्रमिच्छतीत्यादौ असमानकर्तृके क्यच् सावकाशः, तथापि चिकीर्षतीत्यादावसुबन्ते सावकाशं सनं सुबन्तेषु समानकर्तृकेषु परत्वाद् बाधिष्यते । यत्रापि क्यच् प्रतिषिध्यते क्यचि मान्ताव्ययप्रतिषेध इति—कर्त्तुमिच्छतीति, तत्रापि काम्यज्बाधकः । ङ्याप्प्रातिपदिकेष्वपि खट्वाकुमारीपुत्रादिषु न समानकर्तृकत्वम् । आसनशयनादौ त्वकर्मत्वम्, न हि ङ्याप्प्रातिपदिकं कर्माभिधायि, विभक्त्यभिधेयत्वात्कर्मादीनाम् । धातोरपि तर्हि न स्यात् ? अथ तत्र वस्तुतो धात्वर्थस्येच्छया व्याप्यमानत्वात् कर्मत्वम्, प्रातिपदिकादपि स्यात्, अथात्र कर्मरूपानभिधानान्न स्यात्, धातोरपि न स्यादिति समानं वचः ? एवं तर्ह्यसमानकर्तृकत्वादेवात्र न भविष्यति । शयनासनादौ हि प्रकृत्यर्थस्यैव समानकर्तृकत्वक्रियारूपत्वाद्, न प्रत्ययार्थस्याक्रियारूपस्य, 'क्रियारूपस्य सिद्धता नाम यो धर्मस्तत्र घञादयः' इति स्मरणात् । तिङन्तादपि यत एव हेतोः पाकमिच्छतीत्यत्रार्थे पचतीच्छतीति न भवति, तत एव हेतोः सन्नपि न भविष्यति । तदेवं न धातुमपहाय क्वचिदपि प्रसङ्ग इति प्रश्नः ।

**सोपसर्गादुत्पत्तिर्मा भूदिति** । अन्यथा सङ्घातस्य विशिष्टक्रियावचनत्वात्तत एव सन्स्यात्, ततश्च सन्नन्तत्वेन तस्यैव धातुत्वात्तत एव लङ्युपसर्गात् पूर्वोऽडागमः प्राप्नोति । ननु लिङ्‌च्युपसर्गस्य द्विर्वचनप्रसङ्गो दोषः शक्यो दर्शयितुम् ? सत्यम्; अट्प्रसङ्गमप्यपरं दोषं दर्शयितुं लङुदाहृतः । ननु धातुरेव विशिष्टक्रियावाची, उपसर्गस्तु सन्निधिमात्रेणोपकारको न तु कस्यचिदर्थस्याभिधानेन, यथा—भुङ्क्ते इत्यत्र भुजिरेवाभ्यवहारे वर्त्तते, आत्मनेपदं तु कर्तरि, अथ चान्तरेणात्मनेपदं नाभ्यवहारो गम्यते; तद्वदुपसर्गसन्निधाने धातुरेव विशिष्टां क्रियामाह, ततश्चार्थद्वारके कर्मत्वसमानकर्तृकत्वे अपि धातोरेव, न सङ्घातस्य, अवश्यं चैतदेवं विज्ञेयम्—धातुरेव च क्रियावाची, कथम् ? यो हि मन्यते सङ्घातः क्रियावाचीति, क्रियमाणेऽपि तस्य धातुग्रहणे योऽत्र धातुर्न तस्मादुत्पत्तिः प्राप्नोति, अकर्मत्वादसमानकर्तृत्वाच्च ? एवं मन्यते—प्रशब्दसन्निधौ तावत्प्रकर्षाख्यो विशेषो गम्यते, न च प्रकर्षमपि धातुरेवाचष्टे; प्रशब्दस्य वैयर्थ्यप्रसङ्गात्; सति चैवं समुदायस्यैव कर्मत्वम् । न ह्यसौ करोत्यर्थमात्रेण सन्तुष्यति, नापि प्रकर्षमात्रेण । न चैवं योऽत्र धातुस्तस्मादनुत्पत्तिप्रसङ्गः, तस्यापि कर्मत्वात् । तथा च कटं करोति, भीष्ममुदारं दर्शनीयमिति समुदायचिकीर्षायामपि भीष्मादिभ्यो द्वितीया भवति, तेषामपि कर्मत्वात् । नन्वेवमपि यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यते, तथा कर्मसमुदायस्याकर्मत्वात्त् समुदायादुत्पत्तिर्न भविष्यति । यत्र तर्हि समुदायस्यैव कर्मत्वं तत्र कथम्, यथा—प्रस्थातुमिच्छति प्रतिष्ठासत इति, अत्र हि तिष्ठतीति गतिनिवृत्तिः प्रतीयते, प्रशब्दासन्निधौ तु गतिः; तत्र यथा जिगमिषतीत्येकमेव कर्म तद्वदत्रापि, ततश्च समुदायादेव स्यात् ? यद्येवम्, योऽत्र धातुः कथं ततः सन्, न ह्यसौ कर्म, कर्मण इति नैषा धातुसमानाधिकरणा पञ्चमी, किं तर्हि ? षष्ठी—कर्मणोऽवयवाद्धातोरिति ? चिकीर्षतीत्यादावपि केवलस्यापि व्यपदेशिव-

**कर्मण इति किम् ? करणान्मा भूत् गमनेनेच्छति ।**

**समानकर्तृकादिति किम् ? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः । इच्छायामिति किम् ? कर्तुं जानाति ।**

**न्यासः**

द्वितीया न स्यात् । **गमनेनेच्छतीति** । करणत्वप्रदर्शनार्थं ल्युडन्तोपन्यासः । धातोरेव हि सनोऽनुत्पत्तिः प्रत्युदाहरणम् । अस्त्यत्र समानकर्तृकत्वम् । तथा हि—य एवेषेः कर्त्ता स एव गमनस्य, स ह्यात्मीयेन गमनेन करणभावमापन्ने किमपि वस्त्विच्छति । कर्मत्वन्तु गमेरर्थद्वारकं नास्तीति न भवत्यतः सन् । **देवदत्तस्य भोजनमिच्छतीति** । देवदत्तस्येति 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठी । अत्र हि भोजनस्य देवदत्तः कर्त्ता, इषेस्तु यज्ञदत्त इति समानकर्तृकत्वं नास्ति । **कर्तुं जानातीति** । इच्छाग्रहणादिह ज्ञानेऽर्थे सन्न भवति । ननु चेषिकर्मा यो धातुरिषिणैव समानकर्तृकस्तत इच्छाया वा सन् भवतीत्युक्तम् । इह च यथेच्छा प्रत्ययार्थो नास्ति तथा धातोरिषिकर्मत्वमपि, इषिणा समानकर्तृकत्वञ्च, तदयुक्तं प्रत्युदाहरणम्, अङ्गत्रयवैकल्यात् ? नैतदस्ति, सति हीच्छाग्रहणे तद्विशेषणद्वयं प्रत्यासत्तेर्लभ्यते । असति तु तस्मिन् यां काञ्चित् क्रियां प्रति धातोः कर्मत्वं विज्ञायते, प्रतियोगिमात्रापेक्षया च समानकर्तृकत्वमिति काऽत्रायुक्तता ?

**पदमञ्जरी**

द्भावेन कर्मावयवत्वम् । एवमप्यसमानकर्तृत्वान्न प्राप्नोति, धातुमात्रस्याक्रियावाचित्वात् । अतः समानकर्तृकादित्यपि षष्ठ्यर्थे पञ्चमीति व्याख्येयम् । तदेवं सङ्घातनिवृत्त्यर्थं धातुग्रहणमिति स्थितम् ।

**कर्मण इति किमिति** । जिगमिषतीत्यादौ प्रयोगे प्रत्ययवाच्याया इच्छायाः कर्मापेक्षायां प्रत्यासत्त्या प्रकृत्यर्थ एव कर्म प्रत्येष्यते । यद्यपि क्रिया करणमप्यपेक्षते, स्फुटतरा त्विच्छायाः कर्मापेक्षेति सैव प्रकृत्यर्थेन पूरयिष्यते, नार्थः कर्मग्रहणेनेति प्रश्नः । **गमनेनेच्छतीति** । अस्यां विवक्षायां गमेर्मा भूदित्यर्थः । असति हि कर्मग्रहणे सत्यामपीच्छायाः कर्मापेक्षायां यथैतद्वाक्यं भवति—गमनेनेच्छतीति, यथा सन्नपि स्यादिति भावः । **इच्छायामिति किमिति** । शब्दवैरादिसूत्रे यत् 'करणे' इति तदिहैवास्तु, अभिधानशक्तिस्वाभाव्याच्च करणविशेष इच्छायामेव सन् भविष्यति, नमस्प्रभृतिभ्यः पूजादाविव क्यजिति प्रश्नः । **कर्तुं जानातीति** । लक्षणैकशरणो नैवं प्रतिपाद्येतेति भावः ।

**भावबोधिनी**

होने लगे—प्रकर्तुम् ऐच्छत् प्राचिकीर्षत् । [ भाव यह है कि धातु से सन् प्रत्यय होता है, यह मानने से शुद्ध धातु से ही सन् होता है, उपसर्गविशिष्ट से नहीं । इसलिये प्रकर्तुम् ऐच्छत् यहाँ 'कृ' इसी से सन् और इसको मान कर होने वाले द्वित्वादिकार्य होते हैं इसके बाद उपसर्ग का योग होता है—प्राचिकीर्षत् । ] यदि 'धातु से' ऐसा न होता तो प्र कृ + स यहाँ अनेकाच् हो जाने से प्रथम एकाच् 'प्र' का द्वित्व प्रसक्त होता । और इष्ट रूप नहीं बन पाता । ]

कर्मभूत से—इसका क्या प्रयोजन है ? करणभूत धातु से न होने लगे; जैसे—गमनेन इच्छति । [ इस प्रकार की विवक्षा में करणभूत 'गम्' धातु से सन् न हो । इसके लिये 'कर्मणः' ऐसा रखा गया है ।

समान कर्तावाली एक ही कर्तावाली धातु से—इसका क्या फल है ? देवदत्तस्य भोजनम् इच्छति यज्ञदत्तः । [ देवदत्त का भोजन करना यज्ञदत्त चाहता है । यहाँ 'इच्छति' का कर्ता यज्ञदत्त है और 'भोजन' का कर्ता देवदत्त है । दोनों अलग-अलग हैं, समानकर्तृकत्व नहीं है । अतः यहाँ 'भुज्' धातु से सन् नहीं होता है । ]

इच्छा अर्थ में सन् होता है—इसका क्या फल है ? कर्तुं जानाति । [ करना जानता है । यहाँ इच्छा की प्रतीति नहीं है । अतः 'कृ' से सन् नहीं होता है । ]

**वावचनाद्वाक्यमपि भवति । 'धातोः' इति विधानादत्र सन आर्धधातुकसंज्ञा भवति, न पूर्वत्र ।**

**ॐ आशङ्कायामुपसंख्यानम् ॐ ( म० भा० ३. १. ७ वा० १२ ) । आशंके पतिष्यति कूलम्— पिपतिषति नदीकूलम् । [ इदमपि सिद्धं भवति—] श्वा मुमूर्षति ।**

**न्यासः**

**वावचनाद्वाक्यमपि भवतीति** । उत्तरसूत्र इति शेषः । इह तु 'समानकर्तृकेषु तुमुन्' इत्यत एव विधानात् कर्त्तुमिच्छतीति वाक्यं भविष्यति । नित्यत्वे हि सनस्तस्य वचनस्यानर्थक्यं स्यात् । अन्यदपि वावचन-प्रयोजनमुक्तमेव, तस्यैव समुच्चयार्थोऽपिशब्दः । **धातोरिति विधानादित्यादि** । 'आर्धधातुकं शेषः' इत्यनेन धातोरित्येवं धातुशब्दमुच्चार्य विहितस्य प्रत्ययस्यार्धधातुकसंज्ञाविधानात् इह धातोरित्येव सनो विधानमित्यार्ध-धातुकसंज्ञा भवति । **न पूर्वत्रेति** । गुपादिसूत्रे, मान्बधादिसूत्रे च सन आर्धधातुकसंज्ञा न भवति, न हि तस्य तथा विधानमस्ति ।

**आशङ्कायामुपसंख्यानमिति** । आशङ्का = सम्भावना, सा च प्रयोक्तृधर्मः । **नदीकूलं पिपतिषतीत्य-**चेतनत्वात् कूलस्येच्छा न सम्भवतीति न प्राप्नोति । **आशङ्के कूलं पतिष्यतीत्यस्मिन्** विषय एवं प्रयोगः । **श्वा मुमूर्षतीति** । पूर्ववत् कित्त्वदीर्घत्वे । 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, रपरत्वञ्च । अत्र सत्यपि चेतनत्वे जीवनस्य प्रियत्वाच्छुनो मर्तुमिच्छा न सम्भवतीति न प्राप्नोति । एष च प्रयोगः 'अहमाशङ्के मरिष्यति श्वा' इत्यत्रार्थे

**पदमञ्जरी**

**वावचनाद्वाक्यमपि भवतीति** । ननु 'समानकर्तृकेषु तुमुन्' इति तुमुन्विधानसामर्थ्यादिव वाक्यं भविष्यति, अस्ति तस्यावकाशः—चिकीर्षितुमिच्छतीति । न ह्यत्र सनः प्रसङ्गः; 'सनन्तान्न सनिष्यते' इति वक्ष्यमाणत्वात् । **धातोरिति विधानादित्यादिना** धातुग्रहणस्य प्रयोजनान्तरं दर्शयति । **न पूर्वत्रेति** । तथा च जुगुप्सते इत्यादा-विडभावः ।

**आशङ्कायामिति** । आशङ्का = सम्भावना, प्रयोक्तृधर्मः, तद्विशिष्टक्रियावचनात्स्वार्थे प्रत्ययः । **कूलं पिपतिषतीति** । कूलस्याचेतनत्वादिच्छाया असम्भवः । **श्वा मुमूर्षतीति** । शुनश्चेतनत्वेऽपि जीवितस्य प्रियत्वा-द्व्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा न भवतीति, शङ्के पतिष्यति कूलम्, शङ्के मरिष्यति श्वेत्यत्रार्थः ।

**भावबोधिनी**

[ सूत्र में ] 'वा' ऐसा कहा गया है, अतः [ सन् के विकल्प में ] वाक्य भी होता है अर्थात् सन्नन्त—चिकीर्षति तथा—कर्तुम् इच्छति—यह वाक्य इन दोनों का प्रयोग होता है । ] इस सूत्र में 'धातोः' 'धातु से' ऐसा कहकर सन् प्रत्यय किया गया है अतः यहाँ सन् की [ ''आर्धधातुकं शेषः'' पा. सू. ३.४.११४ से ] आर्धधातुक संज्ञा होती है । किन्तु पूर्व के दोनों सूत्रों में ऐसा नहीं है [ अतः वहाँ सन् आर्धधातुक नहीं होता है । इस लिये उनमें इट्, आगम नहीं होता है, किन्तु प्रस्तुत सूत्र से विधीयमान सन् को इट् आगम होता है । ]

ॐआशंका = सम्भावना में सन् का उपसंख्यान करना चाहिये । ॐआशङ्के पतिष्यति कूलम् । [ मैं संभावना करता हूँ कि नदी का तट गिरेगा ]— इस विषय में - पिपतिषति नदीकूलम् यह होता है [ नदी का तट अचेतन होता है, उसमें इच्छा होना सम्भव नहीं है अतः सूत्र से सन् की प्राप्ति नहीं है । इसलिये वार्तिक बनाया गया है । यहाँ आशंका = संभावना प्रयोक्ता में रहने वाला धर्म है। पत् + सन्, द्वित्व, अभ्यासकार्य, 'अ' का 'इ' पिपत् + स, इट्, षत्व—पिपतिष । लटादि कार्य करने पर पिपतिषति । ] श्वा मुमूर्षति । [ कुत्ता मरना चाहता है । आशंके श्वा मरिष्यति – इस विषय में मृ + सन्, कित् और ''अज्झनगमां सनि'' ( पा. सू. ६.४.१६ ) से ऋ का दीर्घ, ''उदोष्ठ्य—पूर्वस्य'' ( पा. सू. ७.१.१०२ ) से ॠ का 'उ' रपर द्वित्व, हलादिशेष, स का ष,— मुमूर्ष लट् आदि करने पर— मुमूर्षति ।

**❀ इच्छासनन्तात्प्रतिषेधो वक्तव्यः । ❀ ( म० भा० ३. १. ७ ) । चिकीर्षितुमिच्छति । विशेषणं किम् ? जुगुप्सिषते । मीमांसिषते ॥**

**शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।**

**न्यासः**

वेदितव्यः । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । कर्त्तव्य इत्यध्याहार्यम् । प्रतिपादनं तु–धातोरिति योगविभागः कर्त्तव्यः, तेनाशङ्कायामपि सन् भविष्यति ।

**इच्छासनन्तादित्यादि ।** इच्छायमर्थे यो विहितः सन् तदन्तात् सनः प्रतिषेधो व्याख्येयः । व्याख्यानं तूत्तरत्र करिष्यामः । स्वार्थे यः सन् तदन्तात् सनिष्यत एवेतीच्छाविशेषणं कृतम् । **जुगुप्सिषते इति** । 'अतो लोपः' इत्यकारलोपः ।

**शैषिकादित्यादि ।** अश्वपत्यादिभ्योऽर्थेभ्योऽदूरभव इत्येतत्पर्यन्तेभ्योऽन्यो योऽर्थः सः शेषः, तत्र भवः शैषिकः, 'अध्यात्मादिभ्यष्ठञ्' । तस्माच्छैषिकः सरूपः प्रत्ययो नेष्टः । शालायामभव इति 'वृद्धाच्छः' शालीयः शालीये भव इति पुनश्छो न भवति । विरूपस्तु भवत्येव—अहिच्छत्रे भव आहिच्छत्र, 'प्राग्दीव्यतोऽण्' आहिच्छत्रे भव आहिच्छत्रीयः—अणन्ताद् वृद्धाच्छो भवति । मतुबर्थे भवः प्रत्ययो मतुबर्थीयः, 'गर्हादिभ्यश्च' इतिच्छः, गर्हवर्थोऽस्यास्तीति मतुबर्थिकः प्रत्ययः, 'अत इनिठनौ' इति ठन् । मतुबर्थोऽस्यास्तीति मतुबर्थीयात् प्रत्ययान् मतुबर्थिकः सरूपः प्रत्ययो नेष्टः । दण्डोऽस्यास्तीति दण्डिकः, पूर्ववट् ठन्, दण्डिकोऽस्यास्तीति पुनष्ठन् न भवति ।

**पदमञ्जरी**

प्रत्याख्यानं तु—यो यदिच्छति स तस्य पूर्वरूपाणि करोति, यथा—देवदत्तः कटं चिकीर्षुः सन्नह्यति रज्जुकीलपूलादिकं चादत्ते; कूलस्यापि च पूर्वरूपाणि दृश्यन्ते, लोष्टाः शीर्यन्ते, भिदा जायन्ते । श्वानः खल्वपि मुमूर्षव एकान्तशीलाः स्थूलाक्षाश्च भवन्ति, तदिह पूर्वरूपदर्शनादिच्छाध्यारोप्यते—इच्छत्येवायं य एवमिच्छाविनाभूतानि पूर्वरूपाणि करोति । गौणमुख्यन्यायश्च क्वचिल्लक्ष्यापेक्षया नाश्रीयते, ततश्चाध्यारोपितेच्छाश्रयः प्रत्यय इति ।

**विशेषणं किमिति ।** इच्छाग्रहणं किमित्यर्थः ।

**शैषिकादिति ।** सन्प्रसङ्गादन्योऽनिष्टः प्रत्ययो वार्यते । शेषाधिकारविहितः शैषिकः, मतुबर्थे भवो मतुबर्थीयः, गहादेराकृतिगणत्वाच्छः, मतुपोऽर्थो मतुबर्थः, सोऽस्यास्तीति मतुबर्थिकः । 'अत इनिठनौ' । शैषिकप्रत्ययान्ताच्छैषिकः, सरूपप्रत्ययो नेष्टः, तद्यथा—शालायां भवो घटः शालीयः, तत्र भवमुदकम्, पुनश्छो न भवति; विरूपस्तु भवत्येव—अहिच्छत्रे भवमाहिच्छत्रम्, तत्र भवमाहिच्छत्रीयम्, अणन्ताच्छो भवति । तथा

**भावबोधिनी**

*इच्छा अर्थ में किये गये सन् प्रत्ययान्त से पुनः सन् का प्रतिषेध करना चाहिये ।* चिकीर्षितुम् इच्छति । [ यहाँ सन्नन्त चिकीर्ष से दुबारा सन् नहीं होता है । ]

'सन्नन्त' इसका 'इच्छा' यह विशेषण किसलिये है अर्थात् सन्नन्तमात्र न कह कर 'इच्छा अर्थ में होने वाला सन्, तदन्त से' इसको मानने का क्या प्रयोजन है ? जुगुप्सिषते, मीमांसिषते । [ 'जुगुप्स' तथा 'मीमांस' इनमें इच्छा अर्थ में सन् नहीं है अपितु स्वार्थिक है अतः इनसे दुबारा 'सन्' होता ही है । जुगुप्स + सन्, इट्, "अतो लोपः" (पा. सू. ६.४.४८) से अ का लोप, स का ष जुगुप्स् इष + लट् आदि का कार्य करने पर रूप बनता है । इसी प्रकार मीमांस + सन् में भी इट्, अलोप, स का ष मीमांसिषते । [ निन्दा करना चाहता है, जिज्ञासा करना चाहता है । इन के विषय में पहले 'मान् बध दान् शान्भ्यः" ( पा. सू. ३.१.६ ) सूत्र की व्याख्या में भी देखें । ]

(१) शैषिक-प्रत्ययान्त से सरूप शैषिक, (२) मतुबर्थीय से सरूप मतुबर्थिक । और (३) इच्छासन्नन्त से सन् प्रत्यय

**सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते ॥ ( म० भा० )**

**न्यासः**

विरूपस्तु भवत्येव—दण्डोऽस्यास्तीति दण्डी, दण्डिनोऽस्यां शालायां सन्तीति दण्डिमती शाला, इन्नन्तान्मतुप् भवति। **सनन्तान्न सनिष्यत इति**। 'सरूपः' इति सम्बध्यते। तत्र यद्यपि सनो रूपसारूप्यव्यभिचारो नास्ति, तथापि विशेषणसामर्थ्यादर्थसारूप्यमाश्रीयते। तेनेच्छासनन्तादिति गम्यते, पूर्वम् 'इच्छासनन्तात् प्रतिषेधो वक्तव्यः' इत्यभिधानाच्च। यस्तु निन्दादिषु गुपादिभ्यः सन्, तत इच्छासन् भवत्येव। तथा चैवं वृत्तावुदाहृतम्। एतत् सर्वं न्यायप्राप्तमेवोदाहृतम्। कथम्? निष्पन्ना हि प्रकृतिः प्रत्ययविधेर्निमित्तं भवति। न च सरूपशैषिकप्रत्ययविधानकाले तथाविधप्रत्ययान्ता निष्पन्ना प्रकृतिरस्ति, नापि सरूपमतुबर्थिकप्रत्ययविधानकाले तथाविधप्रत्ययान्ता निष्पन्ना प्रकृतिः, नापीच्छासनि विधीयमान इच्छासनन्तात् प्रकृतिर्लब्धसत्ताकास्ति; इदानीमेव हि 'तत्र भवः' इत्यादिभिर्लक्षणैः सरूपाणां शैषिकादीनां भाव्यमानत्वात्। तस्मादविद्यमानप्रकृतिकत्वात् ते यथोक्तप्रकारायाः प्रकृतेर्न सम्भवन्तीति ॥ ७ ॥

**पदमञ्जरी**

दण्डोऽस्यास्तीति दण्डिकः, 'अत इनिठनौ' सोऽस्यास्तीति पुनष्ठन्न भवति; विरूपस्तु भवत्येव—दण्डिमती सेनेति। **सनन्तान्न सनिष्यते इति**। सरूप इत्येव। सारूप्येण चात्र सादृश्यं लक्ष्यते, तच्चार्थद्वारकमिति इच्छासनन्तादिति पूर्वोक्त एवार्थो भवति, एतच्च न्यायसिद्धम्। तथा हि जातौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते, ततश्च तत्प्रवृत्तेः प्राक् तत्प्रत्ययान्तप्रकृत्यसम्भवात्तदन्तान्नास्ति तत्प्रत्ययप्रसङ्गः। इह यो ग्रामं गन्तुमिच्छति तस्य यद्यपि ग्रामो न स्वरूपेणेष्टः—ग्रामो मे स्यादिति, तथापि गम्यमानतारूपेण सोऽपीष्ट एव। ग्रामो जिगंस्यते, जिगमिषितः, जिगमिषितव्यः, सुजिगमिष इति इच्छावाचिनः सनन्तात् ग्रामे कर्मणि लादयो भवन्ति। गमिं प्रति कर्मत्वं ग्रामस्य स्पष्टमेव। अत एव ग्रामं जिगमिषति, ग्रामाय जिगमिषतीति 'गत्यर्थकर्मणि' इति द्वितीयाचतुर्थ्यौ भवतः ॥ ७ ॥

**भावबोधिनी**

इष्ट नहीं है।

**विमर्श**—"शेषे" ( पा. सू. ४.२.९२ ) इसके अन्तर्गत जो प्रत्यय आता है उसे 'शैषिक' कहते हैं। ऐसे शैषिक प्रत्यय को करने के बाद उसी से पुनः सरूप शैषिक प्रत्यय नहीं होता है किन्तु विरूप प्रत्यय तो होता ही है। जैसे—शालायां भवः—इस अर्थ में "तत्र भवः" के अन्तर्गत "वृद्धाच्छः" ( पा. सू. ४.२.११४ ) सूत्र से छ=ईय प्रत्यय करके 'शालीयः' ऐसा बनता है। पुनः 'शालीये भवः' इसी अर्थ में उक्त रूप ही रहता है। परन्तु विरूप प्रत्यय होता है; जैसे—अहिच्छत्र भवः—इस अर्थ में 'प्राग्दीव्यतोऽण्" ( पा. सू. ४.१.८१ ) से अण् प्रत्यय करके—'आहिच्छत्रः' बनता है। अब "आहिच्छत्रे भवः" इस अर्थ में अणन्त से छ=ईय होता है—आहिच्छत्रीयः। "तदस्त्यास्त्यस्मिन्निति मतुप्" ( पा. सू. ५.२.९४ ) इससे मतुप् होता है। मतुबर्थ में होने वाला मतुबर्थीय है। इस मतुबर्थीय से पुनः मतुबर्थीय प्रत्यय नहीं होता हैं। जैसे—दण्डः अस्ति अस्य—इस विग्रह में "अत इनिठनौ" ( पा. सू. ५.२.११५ ) से ठन्=इक करके 'दण्डिक' बनता है। दण्डिकः अस्ति अस्य—इस अर्थ में दुबारा ठन् नहीं होता है—दण्डिकः यही रहता है। परन्तु विरूप प्रत्यय तो होता ही है, जैसे—दण्डः अस्ति अस्य—इस विग्रह में इनि प्रत्यय करने पर 'दण्डिन्' बनता है। दण्डिनः सन्ति अस्यां शालायाम्—इस विग्रह में मतुप् प्रत्यय तो होता ही है—दण्डिमती शाला—इसमें इन्प्रत्ययान्त से मतुप् होता है।

सन् प्रत्ययान्त से सन् नहीं होता है—इसमें अर्थसारूप्य लिया जाता है। अतः जहाँ इच्छा अर्थ में सन् हो चुका है वहाँ दुबारा उस अर्थ में सन् नहीं होता है। परन्तु निन्दा क्षमा आदि अर्थों में जहाँ सन् हुआ है, उससे इच्छार्थक सन् होता ही है, जैसे—जुगुप्सिषते, मीमांसिषते ॥ ७ ॥

## ६२७. सुप आत्मनः क्यच् ॥ ८ ॥ (२६५७)

**'कर्मणः' 'इच्छायां वा' इत्यनुवर्त्तते। इषिकर्मण एषितुरात्मसंबन्धिनः सुबन्तादिच्छायामर्थे वा क्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रीयति।**

**न्यासः**

**सुप आत्मनः क्यच्** ॥ आत्मशब्दः परस्य व्यावृत्तिं कुर्वाणो यस्तत्प्रतियोगिनमर्थमाचष्टे स इह परिगृह्यते, न तु योऽन्तर्व्यापारवति पुरुषे भोक्तरि वर्त्तते; स इह गृह्यमाणोऽकिञ्चित्करः स्यात्। तथा हि—तेनेच्छा विशिष्येत, सुबन्तं वा; तत्रेच्छा तावदात्मनः, अन्यस्य न सम्भवत्येवेति तद्विशेषणता तस्या युक्ता। सुबन्तमप्येषित्राऽन्येन वा सम्बध्यमानमात्मसम्बद्धमेव भवति; उभयोरपि तयोरात्मसम्बन्धित्वात्। तस्मात् सुबन्तविशेषणत्वमपि तस्यायुक्तमिति परप्रतियोगिवचन एव गृह्यते। एवं हि परनिवृत्तिः शक्यते कर्तुम्, नान्यथा। अत्रापीच्छायाः सन्निधानात् तयैव व्याप्यमानस्य कर्मत्वं विज्ञायते, इत्याह—**इषिकर्मण इति**। आत्मग्रहणेन यदीच्छा विशिष्येत तदेहापि स्यात्—राज्ञः पुत्रमिच्छतीति। राज्ञोऽपि पुत्र इष्यमाणे सत्यात्मन एवैषितुरिच्छा भवति। तस्मात् सुबन्तमेवात्मग्रहणेन विशेषयितुं युक्तमिति मत्वाऽऽह—**एषितुरात्मसम्बन्धिन इति**। आत्मसम्बन्धित्वं तु सुबन्तस्यार्थद्वारकं वेदितव्यम्। अथैषितुरेवैतत् कुतो लभ्यते? इच्छया सन्निधीयमानयेहैषितुः सन्निधापितत्वात्। एतदपि कुतः? तेन विना तदभावात्। **पुत्रीयतीति**। 'क्यचि च' इतीत्त्वम्।

**पदमञ्जरी**

**सुप आत्मनः क्यच्** ॥ अत्रापीच्छायामित्यनुवृत्तेस्तदपेक्षमेव सुबन्तस्य कर्मत्वं विज्ञायते इत्याह—**इषिकर्मण इति**। आत्मशब्दोऽयं परव्यावृत्तिवचनः स्वशब्दपर्यायो गृह्यते, न चेतनद्रव्यवचनः। स हि गृह्यमाण इच्छया वा सम्बध्येत, सुबन्तेन वा। तत्रेच्छया सम्बन्धे कर्त्तरि षष्ठी, आत्मनः इच्छायामात्मकर्तृकायामिच्छायामात्मा चेदिच्छतीत्यर्थः स्यात्, ततश्चात्मग्रहणमनर्थकं स्यात्, सर्वैवेहेच्छाऽऽत्मकर्तृका, तस्यास्तद्धर्मत्वात्। सुबन्तसम्बन्धे तु देवदत्तस्य पुत्रमिच्छति यज्ञदत्त इत्यत्रापि प्राप्नोति, परस्यापि हीष्यमाण आत्मनः एवेष्टो भवति; तस्याप्यात्मत्वात्। अनर्थकं चात्मग्रहणं स्याद्; व्यावर्त्याभावात्। वृक्षस्य जलमिच्छति, खट्वायाः पादमिच्छतीत्यादौ यत्राचेतनार्थं किञ्चिदिष्यते तद्व्यावर्त्यमिति चेत्, न; तत्रापि चेतनस्यैव परमशेषित्वात्। सर्वमेव हि भोग्यं चेतनानामेव शेषभूतं खट्वायाः पादमिच्छतीत्यत्रापि यस्य तत् खट्वादिकमुपभोग्यं तदर्थमेव तदिष्यते, खट्वादिकं तु तस्यैव द्वारमात्रम्; अतः परव्यावृत्तिवचन एवात्मशब्दः। तदीच्छाया सम्बन्धः स्यात्, पूर्ववत् कर्त्तरि षष्ठ्यामात्मग्रहणमनर्थकं स्यात्, सर्वस्या एवेच्छाया एषितृकर्तृकत्वादिति सुबन्तेन सम्बध्यते, सुबन्तात्कर्मण इच्छायामभिधेयायां क्यज् भवति, तच्चेत्सुबन्तमात्मनः स्वस्य सम्बन्धि भवति। कस्य स्वस्येत्यपेक्षायामिच्छया एषितुः सन्निधापितत्वात् तस्यैवैषितुरात्मनः सम्बन्धि इति विज्ञायते, तदाह—**एषितुरेवात्मसम्बन्धिनः सुबन्तादीति**। न चैवमात्मनः पुत्रं चरस्य दासमिच्छतीत्यत्रापि सुबन्तस्यात्मसम्बन्धित्वात्प्रसङ्गः, नात्र यथाकथंचिदात्मसम्बन्धित्वं विवक्षितम्, किं तर्हि? इष्यमाणमेव रूपमात्मसम्बन्धित्वेन यदेष्यते तदा प्रत्ययः। **पुत्रीयतीति**। 'क्यचि च' इतीत्त्वम्।

**भावबोधिनी**

'कर्मणः' ( कर्मवाचक से ) तथा 'इच्छायां वा' ( इच्छा अर्थ में विकल्प से ) इन की अनुवृत्ति होती है। इच्छा का कर्म, इच्छा करने वाले के अपने सम्बन्धी सुबन्त से इच्छा अर्थ में विकल्प से क्यच् प्रत्यय होता है। [ जो इच्छा का कर्म हो और वह इच्छा करने वाले का अपना सम्बन्धी हो उस पदार्थ के वाचक सुबन्त से क्यच् प्रत्यय होता है। ] उदा० आत्मनः पुत्रम् इच्छति पुत्रीयति। [ अपना पुत्र चाहता है। यहाँ इच्छा का कर्म है पुत्र, यह पुत्र इच्छा करने वाले का अपना ही है। अतः उसके वाचक 'पुत्रम्' सुबन्त से क्यच् होता है—पुत्रम् + क्यच् = य, सनाद्यन्त मानकर 'सनाद्यन्ता धातवः' ( पा० सू० ३. १. ३२ ) से इसकी धातुसंज्ञा करने पर "सुपो धातुप्रातिपदिकयोः" ( पा० सू० २. ४. ७१ ) से सुप् विभक्ति ( अम् ) का लुक् करने पर पुत्र + य बनता है। "क्यचि च" ( पा० सू० ७. ४. ३३ ) से 'अ' का 'ई' करने पर 'पुत्रीय'। धातुसंज्ञा के फलस्वरूप लट् तिप्, शप् आदि करने पर—पुत्रीयति बनता है। ]

**सुब्ग्रहणं किम् ? वाक्यान्मा भूत्-महान्तं पुत्रमिच्छति ( म० भा० )। आत्मन इति किम् ?**

**न्यासः**

सुब्ग्रहणमिह प्रातिपदिकनिवृत्त्यर्थं वा स्याद् ? धातुनिवृत्त्यर्थं वा ? तत्र प्रातिपदिकनिवृत्त्यर्थं तावन्नोपपद्यते, न हि सुबन्तात् प्रत्ययोत्पत्तौ प्रातिपदिकाद्वा कश्चिद् विशेषोऽस्ति। धातुनिवृत्त्यर्थमपि न युज्यते, ततो विहितस्य सनो बाधकत्वादित्यभिप्रायेणाह—**सुब्ग्रहणं किमिति ? वाक्यान्मा भूदिति।** सुब्ग्रहणप्रयोजनमाह—असति सुब्ग्रहणे वाक्यादपि स्यात्, अतस्तन्निवृत्त्यर्थं कृतं सुब्ग्रहणम्। अथ किमिदानीं न भवितव्यमेव महापुत्रीयतीति ? भवितव्यं यदा समासे कृत एतद् वाक्यं भवति—महापुत्रमिच्छतीति, यदा त्वेतद्वाक्यं भवति—महान्तं पुत्रमिच्छतीति, तदा न भवितव्यम्। पदसमुदायोपलक्षणञ्च वाक्यग्रहणं वेदितव्यम्। तस्मात् महान्तं पुत्रमित्यतः समुदायात् प्राप्तिराशङ्क्यते, न चैतद् वाक्यम्; अपरिसमाप्त्यर्थत्वात्। किञ्च स्याद् यद्यतः स्यात् ? प्रत्ययार्थे गुणीभूतयोर्महत्पुत्रशब्दयोरसत्येकार्थीभावलक्षणेऽसामर्थ्ये समासो न स्यात्। ततश्चोत्तरपदे विधीयमानम् 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वं न स्यात्। अथ वा—प्रत्ययार्थे गुणीभूतस्य पुत्रशब्दस्य पूज्यमानताविशेषणं न स्यादिति 'सन्महत्' इत्यादिना समासो न स्यात्, तदभावादात्वमपि न स्यात्। अथ क्रियमाणे सुब्ग्रहणे कस्मादेवात्र न भवति, सुबन्तं ह्येतत् ? नैतत्; प्रत्ययग्रहणपरिभाषया यतः सुबुत्पन्नः सुब्ग्रहणे

**पदमञ्जरी**

**सुप इति किमिति।** कर्मण इति वचनात्तिङन्तादप्रसङ्गः, न हि तिङन्तं कर्म। धातोश्चाप्रसङ्गः, विशेषविहितेन सना बाधितत्वात्। ङ्याप्प्रातिपदिकादुत्पत्तावपि न कश्चिद्दोषः; 'नः क्ये' इति पदसंज्ञाविधानात्। तच्च क्रियमाणे सुब्ग्रहणे नियमार्थम्—नान्तमेव क्ये पदमिति। तदेव ङ्याप्प्रातिपदिकादुत्पत्तौ विध्यर्थं भविष्यति। नन्वसति सुब्ग्रहणे ङ्याप्प्रातिपदिकात्सुबन्ताच्चोत्पत्तव्यमविशेषात्, ततश्च 'नः क्ये' इत्येतद्यद्येवं नियमार्थमथापि विध्यर्थम्, उभयथापि दोषः; नियमार्थे हि वाच्यतीत्यादौ प्रातिपादिकात्सुबन्ताच्चोत्पत्तौ यद्यपि दोषाभावः, नकारान्तेषु प्रातिपदिकादुत्पत्तिपक्षे नलोपो न स्यात्। अथ तेषु प्रातिपदिकादुत्पत्तौ विध्यर्थम्, एवं सति वाच्यतीत्यादौ सुबन्तादुत्पत्तिपक्षे जश्त्वादिपदकार्यं स्यात्, अतः सुबन्तादेव यथा स्यात्प्रातिपदिकान्मा भूदिति नियमार्थं सुब्ग्रहणं कर्त्तव्यमेव। एवं तर्हि कर्मग्रहणाद् ङ्याप्प्रातिपदिकाप्रसङ्गः, सुबन्तमेव हि कर्माभिधायि; पञ्चकपक्षेऽपि द्योतकविभक्तेरपेक्षितत्वात्। तदेवं सुबन्तमपहाय न क्वचित्प्रसङ्ग इति मत्वा प्रश्नः।

**वाक्यादिति।** पदसमूहादित्यर्थः। **महान्तं पुत्रमिच्छतीति।** किं च स्याद्यत्र स्यात् ? प्रत्ययार्थे गुणभूतयोर्महत्पुत्रशब्दयोरसति परस्परसम्बन्धे समासो न स्यात्, तथा च तन्निबन्धनमात्वं न स्यात्। किमिदानीं न भवति—महापुत्रीयतीति ? भवति, यदैतद्वाक्यं भवति—महान्पुत्रो महापुत्रः महापुत्रमिच्छतीति। अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेवात्र न भवति ? प्रत्ययग्रहणपरिभाषया समुदायस्यासुबन्तत्वात्। किं पुनरयं कर्मणोः समुदायः ? आहोस्वित्समुदायः कर्म ? किं चातः ? यदि कर्मणोः समुदायः, न कर्मग्रहणेन गृह्यते इति समुदायादप्रसङ्गः ? अथ समुदायः कर्म, अवयवाद् द्वितीया न प्राप्नोत्यकर्मत्वात् ? एवं तर्हि कर्मणोरेवायं समुदायः, सुब्ग्रहणं तु यदत्र कर्म तस्मान्मा भूदिति। अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेव तस्मान्न स्यात्, सुबन्तमेव हि तत् ? असामर्थ्यात्। कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति। अक्रियाणे पुनः सुब्ग्रहणे नायं पदविधिर्भवति। यत्र हि पदस्यैवासाधारणं किञ्चिद्रूपमाश्रितं स पदविधिः, कर्मग्रहणं तु न पदस्यैवासाधारणम्, 'धातोः कर्मणः' इत्यपदेपि दृष्टत्वात्।

**भावबोधिनी**

सुपः ( सुबन्त से )—इस के ग्रहण का क्या प्रयोजन है ? वाक्य से क्यच् प्रत्यय न होने लगे—महान्तं पुत्रम् इच्छति। [ यहाँ 'महान्तं पुत्रम्' इस समुदाय से क्यच् रोकने के लिये 'सुपः' का ग्रहण है। ] आत्मनः ( इच्छा करने

**राज्ञः पुत्रमिच्छति । ककारः 'नः क्ये' (१.४.१५) इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थः ।**

**❀ क्यचि मान्ताव्ययप्रतिषेधो वक्तव्यः ❀ (म० भा० ३.१.८ वा० ३) । इदमिच्छति । उच्चैरिच्छति । नीचैरिच्छति ।**

**न्यासः**

सति तदादेरेव ग्रहणं भवति। न चेह वाक्यात् सुबुत्पन्नः, किं तर्हि ? अवयवात् । तेन वाक्यादुत्पत्तिर्न भवति । अवयवात् तर्हि पुत्रशब्दात् कस्मान्न भवति ? अगमकत्वात् । वृत्तिसमानार्थेन हि वाक्येन प्रत्ययान्तेन भवितव्यम् । यश्चेह महान्तं पुत्रमिच्छतीति वाक्येनार्थः प्रतीयते नासौ प्रत्ययान्तेन । तथा हि महान्तं पुत्रमिच्छतीति वाक्येनार्थः कश्चित् पुत्रमिवाचरतीत्येषोऽर्थो वाक्यार्थाद् भिन्नजातीय एव गम्यते । **राज्ञः पुत्रमिच्छतीति** । ननु च सापेक्षत्वादसामर्थ्ये सति न भविष्यति, किमात्मग्रहणेन, कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवति' इति वचनात् ? नैतत् । यदा तर्ह्यर्थात् प्रकरणाद्वाऽनपेक्षं निर्ज्ञातं भवति तदा प्राप्नोति । इह च प्राप्नोति—पापमिच्छति, अघमिच्छतीति । अत्र हि तृतीयस्य परपदस्य प्रयोगमन्तरेणापि परस्येति गम्यते, न हि कश्चिदात्मनः पापमिच्छति । **ककार इत्यादि** । असति ककारेऽस्य ग्रहणं न स्यात्; 'नः क्ये' इत्यत्र ककारानुबन्धवतो ग्रहणात् । चकारस्तदविघातार्थः । असति चकारेऽस्यैव ग्रहणं स्याद्—यस्य ककार एवैकोऽनुबन्धः । क्यङ्क्यषोस्तु द्व्यनुबन्धकयोरेकानुबन्धक इति ग्रहणं न स्यात् । चकारे तु सति क्यच्क्यङ्क्यषो द्व्यनुबन्धका भवन्तीति सामान्यग्रहणस्य विघातो

**पदमञ्जरी**

अन्ये त्वाहुः—समुदायस्यापि कर्मत्वमवयवयोश्च महत्त्वविशिष्टस्य पुत्रस्येष्यमाणत्वादिति तेषां समुदायादवयवाच्च मा भूदिति सुब्ग्रहणम् । **राज्ञः पुत्रमिच्छतीति** । नन्वसामर्थ्यादेवात्र न भविष्यति, कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति ? यत्र तर्ह्यन्तरेणापि तृतीयस्य पदस्य प्रयोगं परस्येति गम्यते तत्र मा भूत्, यथा—अघमिच्छति, व्यसनमिच्छतीति, न हि कश्चिदात्मनोऽघमिच्छति । **ककार इत्यादि** । स्यादेतत्—'नः क्ये' इत्यत्रापि मा कारि ककार इति ? यद्येवम्, सामसु साधुः सामन्यः, अत्रापि प्राप्नोति । **चकारस्तदविघातार्थ इति** । स्वरस्तु प्रत्ययस्वरेण सिद्धो धातुस्वरेण वा, अकारस्तु दृषदमिच्छति दृष्यद्यति, दृषद्यतेर्ण्वुल्, 'अतो लोपः', 'यस्य हलः', 'क्यस्य विभाषा'—दृषदकः, अत्रातो लोपस्य स्थानिवद्भावात् 'अत उपधायाः' इति वृद्धिर्मा भूत् । मृदमिच्छति मृद्यति, मृद्यतेः 'अचो यत्', अतो लोपादि पूर्ववत्—मृद्यम्, 'यतोऽनावः' इत्याद्युदात्तत्वं यथा स्यादिति । पुत्रीयतीत्यादौ च शपा सहैकादेश उदात्तो भवति ।

**क्यचि मान्ताव्ययप्रतिषेध इति** । मान्तग्रहणं प्रातिपदिकस्य विशेषणम्, न सुबन्तस्य । तेन पुत्रमिच्छतीत्यादौ क्यज् भवति, काविच्छति कानिच्छतीत्यादौ च न भवति । **उच्चैर्नीचैरिति** । अधिकरणप्रधानयोरप्यनयोराधेये यदा वृत्तिस्तदा कर्मत्वम्, गोसमानाक्षरनान्तादित्येके । गोशब्दात्समानाक्षरान्नान्ताच्च क्यज् भवतीत्येके मन्यन्ते ।

**भावबोधिनी**

वाले का अपना सम्बन्धी )—इसके ग्रहण का क्या प्रयोजन है ? राज्ञः पुत्रम् इच्छति । [ राजा के पुत्र को चाहता है । यहाँ चाहने वाला दूसरा है और पुत्र दूसरे ( राजा ) का है । अतः क्यच् नहीं होता है । ]

क्यच् में 'क्' अनुबन्ध "नः क्ये:" ( पा० सू० १. ४. १५ ) इसमें सामन्यरूप से ग्रहण कराने के लिये है । चकार उस सामान्यग्रहण के अविघात के लिये है । ]

[ भाव यह है कि क्यच् में 'क्' तथा 'च्' ये दो अनुबन्ध हैं । 'क्य' इससे सामान्य रूप से ग्रहण कराना प्रयोजन है । और यदि 'च्' अनुबन्ध नही होता केवल 'क्' एक ही अनुबन्ध हो तो जहाँ एक अनुबन्ध है उस 'क्य' का ही ग्रहण होता, क्यङ्, क्यष् का ग्रहण "नः क्ये" सूत्र में नहीं हो पाता । जब दो अनुबन्ध ( क् च् ) लगाये गये तब क्यच् के साथ-साथ क्यङ् और क्यष् इन दोनों का भी ग्रहण "न क्ये" सूत्र में हो जाता है । ]

[ अनु० ] क्यच् विषय में मकारान्त और अव्यय का प्रतिषेध कहना चाहिये, अर्थात् मकारान्त और अव्यय से क्यच् नहीं होता है । * उदा० इदमिच्छति । ( इसको चाहता है । ] उच्चैरिच्छति । [ ऊपर चाहता है । ] नीचैरिच्छति । [ नीचे चाहता है । यहाँ इदम् यह मकारान्त है और उच्चैः, नीचैः अव्यय है । अतः इनसे क्यच् नहीं होता है । ]

**❀ छन्दसि परेच्छायामिति वक्तव्यम् ❀ ( म० भा० ) । मा त्वा वृका अघायवो विदन् ( वाज० सं० ४.३४ ) ॥**

**न्यासः**

न भवति । अन्तोदात्तार्थस्तु चकारो न भवति; 'धातोः' इति तस्य सिद्धत्वात् । वक्तव्य इति व्याख्येय इत्यर्थः । व्याख्यानन्तु—वेत्यनुवर्त्तमानस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । तेन मान्ताव्ययेभ्यः क्यज् न भवति ।

**छन्दसीत्यादि** । छन्दसि परेच्छायामपि क्यज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं पुनर्यदयं क्यचि कृते 'अश्वाघस्यात्' इतीत्त्वबाधनार्थमघशब्दस्येत्वं शास्ति तज् ज्ञापयति—छन्दसि परेच्छायामपि क्यज् भवति । न हि कश्चिदात्मनोऽघमिच्छति । **अघायव** इति । ज्ञापकसूत्रेणात्त्वम्, 'क्याच्छन्दसि', इत्युप्रत्ययः, 'जसि च' इति गुणः, अवादेशः ॥ ८ ॥

**पदमञ्जरी**

अकारादयो दश समानाक्षराः; तत्र लृवर्णान्तस्य, ॠकारान्तस्य च प्रातिपदिकस्याभावादेकारात्पूर्वेषां सप्तानामचां ग्रहणम् । अस्मिन्पक्षे वाच्यतीत्यादि न सिद्ध्यति, तस्मान्नायं स्थितः पक्ष इत्याहुः । अत एवास्य वृत्तावनुपन्यासः । **परेच्छायामिति** । शेषषष्ठ्याः समासो न कर्तृषष्ठ्याः, सुबन्तद्वारकश्च परस्येच्छया सम्बन्धः, परस्य सुबन्तार्थो या इच्छा तस्यामित्यर्थः । **अघायव इति** । 'क्याच्छन्दसि' इत्युप्रत्ययः, 'अश्वाघस्यात्' इत्यात्वम् । एतदेव क्यचि परत आत्वविधानं ज्ञापकम्—छन्दसि परेच्छायामपि क्यज् भवतीति, न हि कश्चिदात्मनोऽघमिच्छति । न चाचारक्यजर्थम्, छन्दस्यघशब्दाचारे क्यचोऽदर्शनात् । अथास्मात्क्यजन्ताल्लकृत्यक्तखलर्था भवन्तः क्व भवन्ति ? यथायोग्ं भावे कर्त्तरि च, न तु कर्मणि । प्रकृत्यर्थविशिष्टाया नियतविषयाया इच्छायाः क्यजन्तेनाभिधानम्, न सा वस्त्वन्तरं विषयीकरोति, अतो जीवत्यादिवदकर्मकः क्यजन्तः । आचारक्यजन्ते तूपमानकर्मणः पुत्रादेरन्तर्भावेऽपि उपमेयस्यच्छात्रा देरनन्तर्भावात्तस्मिन्कर्मणि लादयो भवन्त्येव—पुत्रीय्यतेच्छात्रः पुत्रायितव्य इत्यादि, यथा—श्येनायते काक इति उपमानकर्तुरन्तर्भावेऽपि उपमेयकर्त्तरि लो भवति, तद्वत् । इह च माणवकं मुण्डं करोति मुण्डयति माणवकम्, मुण्डते माणवकः, मुण्डयितव्यो माणवक इति ण्यन्तो धातुमौण्ड्यगुणविशिष्टद्रव्यमात्रमन्तर्भावयितुं शक्तः, न तु माणवकादिकं विशेषमिति तस्य धातावनन्तर्भावात्तत्र लादयो भवन्ति । यद्येवम्, अनेन हेतुना क्यजन्तादपि प्राप्नोति, माणवकं नुण्डमिच्छति मुण्डीयति माणवकम्, मुण्ड्यते माणवक इति, नात्र क्यचा भवितव्यमसामर्थ्यात् ? कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति । णिजपि तर्हि न प्राप्नोति ? स्यादेतत्—नोभौ करोतियुक्तौ मौण्ड्यं माणवकश्च, न हि माणवकत्वं क्रियते, ततश्च मुण्डं करोतीत्यत्रैवार्थे मुण्डयतीति णिजुत्पद्यते । मुण्डं करोति माणवकमित्यत्र वाक्येऽपि मुण्डस्यैव कर्मत्वम्, तत्सामानाधिकरण्यात्तु माणवकाद् द्वितीयोत्पत्तिः । तदेवं माणवकादयो मौण्ड्यस्याधारविशेषप्रतिपादनार्थमुपादीयमानाः करोतियुक्ता न भवन्ति । यदा पुनरुभौ करोतियुक्तौ भवतः, न भवति तदा वृत्तिः, तद्यथा—बलीवर्द्दं करोति तं च मुण्डं करोति मुण्डयति बलीवर्द्दमिति णिज्भवति । यद्येवम्, अनेनैव हेतुना क्यजपि न प्राप्नोति । यदि चाधारत्वेनापि माणवकोऽपेक्ष्यते, पुनरपि सापेक्षता ।

**भावबोधिनी**

* वेद-विषय में दूसरे की इच्छा में भी क्यच् कहना चाहिये । * उदा० मा त्वा वृका अघायवो विदन् । [ कोई भी अपना अघ = पाप नहीं चाहता है, दूसरे का चाहता है। अतः अघम् इच्छति—इस अर्थ में अघ + क्यच् "आश्वाघस्यात्" ( पा० सू० ७. ४. ३७ ) से आत्व करने पर—अघाय । "क्याच्छन्दसि" ( पा० सू० ३. २. १७० ) से 'अ' का 'उ' करने पर—अघायु । प्रथमा बहुवचन में जस्=अस् अघायु + अस् "जसि च" ( पा० सू० ७. ३. १०९ ) से उ का गुण ओ, अव् आदेश, स् का सत्व, विसर्ग करने पर—अघायवः बनता है । ] ॥ ८ ॥

**६२८. काम्यच्च ॥ ९ ॥ ( २६६३ )**

**सुबन्तात्कर्मण आत्मेच्छायां काम्यच् प्रत्ययो भवति । आत्मनः पुत्रमिच्छति पुत्रकाम्यति । वस्त्रकाम्यति । योगविभाग उत्तरत्र क्यचोऽनुवृत्त्यर्थः । ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति ( म० भा० ) ।**

**न्यासः**

**काम्यच्च** ॥ ननु च द्वावप्येतौ क्यच्काम्यचौ सुबन्तात् कर्मण आत्मेच्छायां विधीयेते, तदेकयोग एव कथं न कृत इत्याह—**योगविभाग इत्यादि** । 'सुप आत्मनः क्यच्काम्यचौ' इत्येकयोगे सत्युत्तरत्र द्वयोरप्यनुवृत्तिः स्यात् । ननु च योगविभागेऽप्यानन्तर्य्यात् काम्यच एवानुवृत्तिः स्यात्, न क्यचः ? नैष दोषः; चकारोऽत्र क्रियते क्यचोऽनुकर्षणार्थः, क्यचोऽनुकर्षणस्यैतत्प्रयोजनम्—उत्तरसूत्रेऽनुवृत्तिर्यथा स्यात् इह प्रयोजनाभावात् । काम्यजपि कस्मान्नानुवर्त्तत इति चेत्, न; योगविभागसामर्थ्यात् । अथ 'लशक्वतद्धिते' इति ककारस्येत्संज्ञा कस्मान्न भवतीत्याह—**ककारस्येत्संज्ञेत्यादि** । ननु च लोप एव कार्यम् ? न कार्यम्, लोप इह हि वर्णस्य कार्यार्थो भवत्युप-

**पदमञ्जरी**

किञ्च, यदि न माणवकः करोतियुक्तः, कथं तत्र लकार उत्पद्यते—मुण्डयते माणवक इति ? कश्चायं न्यायो न माणवकः करोतियुक्त इति ? न ह्यसौ मौण्ड्यमात्रेण सन्तुष्यति, माणवकस्थमसौ मौण्ड्यमभिनिर्वर्त्तयति, ततश्च स्वरूपेणाक्रियमाणोऽपि माणवको मुण्डरूपेण क्रियते, इष्यते, च । तदेवं सति यदि णिज् भवति क्यजपि स्याद्, अथ क्यज् न भवति णिजपि न स्यादिति समानं वचः । एवं तर्हि मुण्डादयो गुणवचनाश्च सापेक्षाः, उच्यते च णिच्, स वचनात् सापेक्षेभ्योऽपि भविष्यति, क्यच् पुनरनपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति माणवकं मुण्डमिच्छतीत्यादौ सापेक्षेभ्यो न भविष्यतीति ? यद्यप्ययमपि णिज् गुणमात्रकरणविवक्षायां सावकाशः—मुण्डयत्ययं नापितः प्रवीणो मौण्ड्यकरण इति, तथापि तत्करोतीति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योऽपि यथा स्यादित्येवमर्थमेव ।

यद्वा—द्विविधा मुण्डादयः—धातवः, प्रातिपदिकानि च । तत्र सूत्रे धातव उपात्तास्तेभ्यः स्वभावत एव विशिष्टक्रियावचनेभ्यो णिज्भविष्यति, प्रातिपदिकानां तु विग्रह एव—माणवकं मुण्डं करोतीति । अथ वा नेदं युगपदुभयं भवति—वाक्यं च प्रत्ययश्च, ततश्च मुण्डयतीति द्रव्यमात्रं प्रतीयते, यत्र विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । अथ वा—मुण्डस्यैव शुद्धेन करोतिनाऽन्वयः, मौण्ड्यविशिष्टेन तु माणवकस्य, यथा—गां दोग्धि पय इति शुद्धस्य दुहेः पूर्वं गवाभिसम्बन्धः, पश्चात्तु गोदुहिना पयसः । क्यच्प्रत्ययस्त्वनभिधानान्न भवति । माणवकं मुण्डयतीत्युक्ते माणवकं मुण्डमिवाचरतीत्यर्थान्तरमेव प्रतीयते । तदेवमिच्छाक्यजन्ताद्भावे कर्त्तरि च लादय इति स्थितम् ॥ ८ ॥

**काम्यच्च** ॥ किमर्थो योगविभागः, न 'सुप आत्मनः क्यच्काम्यचौ' इत्येकयोग एव क्रियते, एवं हि चकारो न कर्त्तव्यो भवति ? तत्राह—**योगविभाग इत्यादि** । एकयोगे हि सति उत्तरसूत्रे द्वयोरप्यनुवृत्तिः स्यात् । ननु योगविभागेऽप्यानन्तर्यात्काम्यच एवानुवृत्तिः प्राप्नोति ? नैष दोषः; चकारोऽत्र क्रियते, स क्यचोऽनुकर्षणार्थः, तदनुकर्षणस्य चैतदेव प्रयोजनम्—उत्तरत्रानुवृत्तिर्यथा स्यात् । काम्यचस्तु योगविभागसामर्थ्यादननुवृत्तिः । **प्रयोजनाभावादिति** । अग्निकाम्यतीत्यादौ गुणनिषेधो न प्रयोजनम्, अनार्द्धधातुकत्वादेव गुणस्या-

**भावबोधिनी**

सुबन्त कर्म से अपनी इच्छा में काम्यच् प्रत्यय होता है । [ यहाँ भी पूर्व सूत्र की सभी स्थिति होनी चाहिये । ] उदा०—आत्मनः पुत्रम् इच्छति—पुत्रकाम्यति । [ अपना पुत्र चाहता है । यहाँ इच्छा का कर्म 'पुत्रम्' से काम्यच् प्रत्यय, धातुसंज्ञा विभक्ति का लुक् करने पर—पुत्रकाम्य । लट् आदि करने पर पुत्रकाम्यति । ] वस्त्रकाम्यति । [ आत्मनः वस्त्रम् इच्छति । अपना वस्त्र चाहता है । ] [ यदि समान स्थिति में दोनों प्रत्यय होते हैं तो एक सूत्र ही बनाना चाहिये था, दो सूत्र बनाने का क्या प्रयोजन ? ] दो सूत्र बनाना अग्रिम सूत्र में क्यच् की अनुवृत्ति के लिये है । [ यदि एक साथ रहते तो दोनों की अनुवृत्ति होने का प्रसंग आता । ] काम्यच्—इसके 'क्' की इत्संज्ञा का कोई प्रयोजन नहीं है ।

**( चकारादित्वाद्वा काम्यचः-उपयट्काम्यति ( म० भा० ) ॥ )**

**६२९. उपमानादाचारे ॥ १० ॥ ( २६६४ )**

**न्यासः**

देशः, श्रवणार्थो वा। कार्यं तावदिह नास्ति। तत्र यदि श्रवणार्थो न स्यादुपदेशोऽनर्थकः स्यात्। इदं तर्हि कार्यम्—अग्निकाम्यतीति गुणप्रतिषेधो यथा स्यात्? नैतत् प्रयोजनम्, सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते। धातोर्विहितश्च प्रत्ययः शेष आर्धधातुकसंज्ञो भवति, न चायं धातोर्विधीयते, किं तर्हि? सुबन्तात्। इदं तर्हि प्रयोजनम्—उपयट्काम्यतीति, वच्यादिना संप्रसारणं यथा स्यात्? नैतदपि; यस्मात् तत्र यजादिभिः किद् विशिष्यते—यजादीनां यः किदिति। कश्च यजादीनां कित्? यो यजादिभ्यो विहित; न चायं तथा विहितः। अभ्युपगम्यापि प्रयोजनं परीहारान्तमाह—**चकारादित्वादिति**। एवं मन्यते—क्रियते विन्यास एवम्, द्विचकारो निर्देशः, सुप आत्मनः क्यच्च काम्यच्चेति; स इत्संज्ञकश्चकारः ककारस्येत्संज्ञापरित्राणार्थो भविष्यतीति। अथ द्वितीयश्चकारः किमर्थः, यावता 'धातोः' इत्येवमन्तोदात्तत्वं सिद्धम्? इह पुत्रकामिष्यतीति सतिशिष्टस्वरमपि बाधित्वा चित्करणसामर्थ्यात् काम्यच एव स्वरो यथा स्यात्। **उपयट्काम्यतीति**। 'विजुपे छन्दसि' इति विच्, उपयजमिच्छतीति काम्यच्, व्रश्चादिना षत्वम्, तस्य जश्त्वं डकारः, तस्यापि 'वावसाने' इति चर्त्वं टकारः॥ ९॥

**पदमञ्जरी**

प्रसङ्गात्। 'विजुपे छन्दसि' उपयट्, उपयजयमिच्छति उपयट्काम्यतीत्यत्र न संप्रसारणं प्रयोजनम्; यजादिभिः कितो विशेषणात्—यजादिभ्यो यो विहितः किदिति। वाक्काम्यतीत्यत्रापि धातोः सरूपग्रहणे तत्प्रत्यये कार्यविज्ञानान्न संप्रसारणं प्रयोजनम्।

**चकारादित्वाद्वेति**। केचिद्व्याचक्षते—अन्तेऽस्य चकारोऽनर्थकः, धातुस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात्, स आदौ कर्त्तव्यः। अथ वा—अन्तेऽपि कृतो नियमार्थः संपद्यते—चिदेवायं व्यपदेष्टव्यो नानुबन्धान्तरेणेति। तेनान्ते कृत आदित्वफलसंपादनादादितः संपद्यत इति। अन्ये तु 'सुप आत्मनः क्यच्' 'काम्यच्च' इति द्विचकारकनिर्देशाश्रयेण चकारादित्वं वर्णयन्ति। चित्करणं तु पुत्रकामिष्यतीत्यत्र सति शिष्टमपि स्यस्वरं बाधित्वा चित्स्वर एव यथा स्यादिति॥ ९॥

**भावबोधिनी**

अतः इत्संज्ञा नहीं होती है। अथवा काम्यच् यह चकारादि है। [ सुप आत्मनः क्यच् च् काम्यच्च' ऐसा सूत्रपाठ है। इसमें 'क' से पहले 'च्' है अतः उसी की इत्संज्ञा होती है, 'क्' की नहीं। ]

**विमर्श**—उप पूर्वक 'यज्' धातु से "विजुपे छन्दसि" ( पा. सू. ३.२.७३ ) से 'विच्' प्रत्यय उसका सर्वापहारी लोप—उपयज्। "व्रश्चभ्रस्ज" ( पा. सू. ८.२.३६ ) से 'ज्' का 'ष्', जश्त्व करने पर 'ड्', "खरि च" ( पा. सू. ८.४.५५ ) से चर्त्व करने पर उपयट्। उपयजम् इच्छति इस अर्थ में काम्यच् करने पर उपयट्काम्यति बनता है।

यदि 'काम्यच्' के ककार की इत्संज्ञा होती है तो कित् परे रहने से 'यज्' का सम्प्रसारण प्रसक्त होता है। अतः 'क्' की इत्संज्ञा नहीं होती है। वास्तव में यह प्रयोग वैदिक है। वेद में दृष्टानुविधि होती है। अतः इसमें दोष के कारण 'क्' की इत्संज्ञा के अभाव की कल्पना उचित नहीं है। अतः द्विचकार निर्देश मानना ही उचित परिहार है।॥ ९॥

**क्यजनुवर्त्तते, न काम्यच् । उपमानात्कर्मणः सुबन्तादाचारेऽर्थे वा क्यच्प्रत्ययो भवति । आचारक्रियायाः प्रत्ययार्थत्वात्तदपेक्षयैवोपमानस्य कर्मता । पुत्रमिवाचरति पुत्रीयति छात्रम् । प्रावारीयति कम्बलम् ।**

**❀ अधिकरणाच्चेति वक्तव्यम् ❀ ( म० भा० ३.१.१० वा० १ ) । प्रासादीयति कुड्ये ।[1] पर्यङ्कीयति मञ्चके ॥**

**६३०. कर्त्तुः क्यङ् सलोपश्च ॥ ११ ॥ ( २६६५ )**

**'आचारे' इत्यनुवर्त्तते । उपमानात्कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ् प्रत्ययो भवति, सकारस्य च लोपो**

**न्यासः**

**उपमानादाचारे ॥ क्यजनुवर्त्तते न काम्यजिति ।** अत्र च कारणं पूर्वमुक्तम् । आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैवोपमानस्य कर्मता; पूर्ववत् प्रत्यासत्तेः ।

**अधिकरणाच्चेत्यादि ।** अधिकरणादाचारे क्यज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानन्तु—पूर्ववच्चकारकरणमनुवर्त्य तस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम् ॥ १० ॥

**कर्त्तुः क्यङ् सलोपश्च ॥** सलोपसन्नियोगेन चायं क्यङ् विधीयते । तेन यत्रैव सलोपस्तत्रैव स्यात्-पयायत इत्यादौ, इह तु न स्यात्-काकः श्येनायत इत्यादौ । एकं हीदं वाक्यम्, चकारश्च समुच्चये, तेनैतदुक्तं भवति—

**पदमञ्जरी**

**उपमानादाचारे ॥** 'कुड्ये' इत्युपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमेवेति कर्मविवक्षायामेतत्प्रयोगसम्भवाद्वचनारम्भः । **कुट्यामिति** तु युक्तः पाठः ॥ १० ॥

**कर्त्तुः क्यङ् सलोपश्च ॥ आचार इति वर्त्तत इति ।** तेन तदपेक्षमुपमानस्य कर्तृत्वं विज्ञायत इति भावः । **सलोपश्चेति ।** यद्ययं चशब्दः समुच्चयवृत्तिर्गृह्येत तदेकमेव वाक्यं स्यात्—क्यङ्सलोपौ भवत इति, ततश्च

**भावबोधिनी**

'क्यच्' इसकी अनुवृत्ति होती है, 'काम्यच्' इसकी नहीं । उपमानभूत कर्मवाची सुबन्त शब्द से आचार अर्थ में विकल्प से क्यच् प्रत्यय होता है । आचार क्रिया प्रत्यय का अर्थ है अतः इसकी अपेक्षा ही उपमान को कर्म होना चाहिये । उदा० पुत्रम् इव आचरति छात्रम्—[ छात्र के साथ पुत्र के समान आचरण करता है— ] इस विग्रह में'—पुत्रीयति छात्रम् । [ पुत्रम् + क्यच्, शेष प्रक्रिया पूर्व सूत्र की व्याख्या में देखें । यहाँ जैसा आचार पुत्र के साथ करता है वैसा ही आचार छात्र के साथ । इस प्रकार आचार की उपमानता सिद्ध है । ] प्रावारीयति कम्बलम् । [ कम्बलं प्रावारम् इव आचरति = कम्बल के साथ दुपट्टे के समान आचरण करता है । प्रावारम् + क्यच्, धातुसंज्ञा, सुप् लुकि, ''क्यचि च'' ( पा. सू. ७.४.३३ ) से 'अ' का 'इ'—प्रावारीय । लट्, तिप्, शप्—प्रावारीयति । ]

❀अधिकरण-वाची से आचार अर्थ में क्यच् होता है, ऐसा कहना चाहिये ।❀ उदा०—प्रासादीयति कुड्ये । [ कुड्य = दीवार में प्रासाद के समान व्यवहार करता है, खुश रहता है । यहाँ 'कुट्याम्' यह पाठ भाष्यसम्मत है । प्रासाद में जैसे प्रसन्न रहता है, वैसे ही कुटी में भी । अतः अधिकरणवाची 'प्रासादे' से क्यच्, प्रासादे + क्यच् 'सनाद्यन्ता धातवः'' ( पा. सू. ३.१.३२ ) प्रासाद + य, अ का ई प्रासादीय । लट् आदि कार्य—प्रासादीयति । ] पर्यङ्कीयति मञ्चके । [ मचान में पलंग के समान व्यवहार करता है । पर्यङ्के इव आचरति—इस विग्रह में अधिकरणवाची 'पर्यङ्के' से क्यच् करने पर शेष प्रक्रिया पूर्ववत् होती है । ] ॥ १० ॥

'आचारे' [ आचार अर्थ में ] इसकी अनुवृत्ति होती है । उपमानभूत कर्तृवाची सुबन्त से आचार अर्थ में विकल्प से क्यच् प्रत्यय होता है, और सकार का लोप होता है । यह सलोप अन्वाचय द्वारा कहा गया है [ समुच्चय

१. 'कुट्याम्' इति महाभाष्ये पाठः ।

**भवति। अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ् भवत्येव। श्येन इवाचरति काकः श्येनायते। कुमुदं पुष्करायते।**

**सलोपविधावपि वाग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषा भवति। ओजायते,[1] अप्सरायते (म० भा०)। पयायते, पयस्यते।**

### न्यासः

क्यङ्सलोपौ भवत इति। तथा च युगपदनयोर्विधानात् सलोपाभावे क्यङा न भवितव्यम्। युगपदनयोर्विधाने हि नान्यतराभावे कार्यमुपयुज्यते, यथा—'स्थाघ्वोरिच्च', इत्यत आह—**अन्वाचयशिष्ट इत्यादि**। एतदनेन हि। नायं समुच्चये चकारः, किं तर्हि? अन्वाचये। तत्र द्वे वाक्ये भवतः—कर्त्तुः क्यङ् भवति सर्वत्र, यत्र त्वस्ति सकारस्तत्र तस्यापि लोपः। तत्राद्येन वाक्येन सलोपमनपेक्ष्य प्राधान्येन विधीयमानः क्यङ् सलोपविधावपि प्रवर्त्तते। **श्येनायत इति**। 'अकृत्सार्वधातुकयोः' इति दीर्घः।

**सलोपविधावपि वाग्रहणं सम्बध्यत इति**। अन्यथा पयस्यत इति न सिध्येत्। **सा च व्यवस्थित-विभाषेति**। अन्यथौजसोऽप्सरसोरपि विभाषा सलोपः स्यात्। 'ओजसोप्सरसोर्नित्यं पयसस्तु विभाषया' इति यदुक्तम्, सा च व्यवस्थितविभाषा भवतीति, तदनेन विस्पष्टीकरोति। अथ हंसायते सारसायत इत्यत्र सलोपः

### पदमञ्जरी

यत्रैव सलोपस्तत्रैव क्यङपि स्याद्—ओजायत इति, इह तु न स्यात्—श्येनायते काक इति। अतोऽन्वाचये चशब्दे वाक्यभेदश्चाश्रयणीयः—अविशेषेणोपमानात्कर्तुः क्यङ् भवति, यत्र तु सकारः सम्भवति तत्र तस्य लोप इति तदिदमुक्तम्। **अन्वाचयशिष्टः सलोपस्तदसम्भवेऽपि क्यङ् भवतीति**। **श्येनायत इति** 'अकृत्सार्वधातु-कयोर्दीर्घः'।

**सलोपविधावपीति**। सलोपस्यान्वाचयशिष्टत्वेन वाक्यभेदे सत्ययमपि गुणो भवतीत्यर्थः।

अपिशब्देनैतद्दर्शयति—क्यङ्विधौ तावत्सम्बद्धयते वाक्यसंपादनाय, एवं सलोपविधावपीति। **ओजायत इति**। ओजः शब्दो वृत्तिविषये तद्वति वर्त्तते।

### भावबोधिनी

द्वारा नहीं]। अतः सलोप के न होने पर भी अकेला क्यङ् प्रत्यय होता ही है। उदा० श्येन इवाचरति काकः—श्येनायते। [कौवा बाज के समान आचरण करता है। यहाँ उपमानभूत 'श्येनः' से क्यङ् होता है—श्येनः + क्यङ्, सनाद्यन्त मान कर धातुसंज्ञा, विभक्तिलुक्—श्येन + य। "अकृत्सार्वधातुकयोः' (पा. सू. ७.४.२५) से 'अ' का दीर्घ—श्येनाय। ङित् होने से आत्मनेपद प्रत्यय होते हैं। श्येनाय + लट् = त, शप्, टि का एत्व—श्येनायते।] कुमुदं पुष्करायते। [कुमुद कमल के समान आचरण करता है। पुष्कर इव आचरति—इस विग्रह में पुष्कर + क्यङ्, पूर्ववत् सारी प्रक्रिया करने पर—पुष्करायते बनता है।]

सलोपविधि में भी 'वा' ग्रहण का सम्बन्ध होता है और वह व्यवस्थित विभाषा मानी जाती है। [अतः कहीं नित्य और कहीं विकल्प से सलोप होता है।] उदा० ओजायते, अप्सरायते [ओज इव आचरति, अप्सरा इव आचरति इस विग्रह में क्यङ् विभक्तिलुक्—ओजस् + क्यङ् अप्सरस् + क्यङ्, सलोप हो जाता है—ओज य, अप्सर य, 'अ' का दीर्घ, आत्मनेपद करने पर—ओजायते, अप्सरायते। ओजस् शब्द ओजस्वी अर्थ में है ओजस्वी के समान आचरण करता है—यह अर्थ है इनमें नित्य सलोप होता है।] पय इव आचरति—इस विग्रह में क्यङ् करने पर विकल्प से सलोप होता है—पय य, पयस्य, प्रथम में 'अ' का दीर्घ करने पर—पयाय, और द्वितीय में पयस्य बना कर आत्मनेपद प्रत्यय होते हैं—पयायते, पयस्यते।]

---

१. 'ओजायमानं यो अहिं जघान' (ऋ० २.१२.११)।

**❀ ओजसोप्सरसोर्नित्यं (म० भा० ३.१.११ वा० २) पयसस्तु विभाषया[१] ❀ ( जैनेन्द्र सू० २.१.९१ ) ।**

**सलोपविधौ च 'कर्तुः' इति स्थानषष्ठी ( १.१.४९ ) सम्पद्यते, तत्रालोऽन्त्यनियमे सति ( १.१.५२ ) 'हंसायते' 'सारसायते' इति सलोपो न भवति ।**

**❀ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः ❀ ( म० भा० ३.१.११ वा० ३ ) । अवगल्भते, अवगल्भायते । क्लीबते, क्लीबायते । होडते, होडायते ।**

**न्यासः**

कस्मान्न भवतीत्याह—**सलोपविधौ चेत्यादि** । यदि सलोपविधावपि कर्तुरित्येषा पञ्चमी स्यात् तदा हि 'अलोऽन्त्यस्य' इत्यस्यानुपस्थानाद् यत्रतत्रस्थस्य सलोपो भवन्निहापि स्यात् । न च सलोपविधौ कर्तुरित्येषा पञ्चमी, किं तर्हि ? षष्ठी । यस्मादर्थाद् विभक्तिविपरिणामो भवतीति स्थानषष्ठी सम्पद्यते । स्थानषष्ठ्याञ्च 'अलोऽन्त्यस्य' इत्युपस्थानेऽन्त्यस्यैव लोपेन भवितव्यम् । तेन हंसायत इत्यादौ न भवति लोपः ।

**आचार इत्यादि** । क्यङ्विषयोपलक्षणार्थम्; तेन क्यङपवादः क्विब् विधीयते । अत्र चावगल्भादीनामनुदात्तमकारमनुबन्धमासज्य निर्देशादवगल्भत इत्यात्मनेपदं भवति, किमर्थं पुनरवगल्भादिभ्यो विकल्पेन क्विब्

**पदमञ्जरी**

**ओजसोप्सरसोर्नित्यं पयसस्तु विभाषयेति** ( जै० सू० २.१.९१ ) । अन्यस्य तु यशःप्रभृतेर्नैव भवतीत्येके, नेति वयम् । ओजोप्सरोव्यतिरिक्तस्य सकारान्तस्योपलक्षणार्थं पयोग्रहणम् । अत एव सलोपो वा । ओजसोप्सरसोर्नित्यमिति सामान्येन वार्त्तिकम्; तेन यशायते इत्याद्यपि भवति । सलोपोऽप्सरस एवेत्ययं तु पक्षो **भाष्येऽपि** न स्थितः । **सलोपविधौ कर्तुरिति स्थानषष्ठी संपद्यते इति** । प्रत्ययविधौ यत्पञ्चम्यन्तं तदेव लोपेन सम्बन्धेऽर्थाद्विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं सम्पद्यत इत्यर्थः । **तत्रालोऽन्त्यस्येति नियमे सतीति** । सकारेण कर्तृविशेषणात्तदन्तविधिविज्ञानात्तदर्थमेव च सेति पृथक् पदं लुप्तषष्ठीकम् । क्वचित् **अलोऽन्त्यनियमे सतीति** पाठः, तत्र सूत्रैकदेशानुकरणत्वात्समासेऽपि विभक्तेर्लुगभावः, यथा—अस्यवामीयमिति ।

**आचार इत्यादि** । क्यङपवादोऽयम् । 'गल्भ धार्ष्ट्ये', ( धा० पा० ३९२ ) 'क्लीबृ अधार्ष्ट्ये' ( धा० पा० ३८१ ) 'होडृ अनादरे' ( धा० पा० २८५ )—एते पचाद्यजन्ता गृह्यन्ते, तस्य चाकारस्य वाक्येऽनुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते, तेन क्विबन्तादात्मनेपदं भवति । वावचनात्क्विपा मुक्ते क्यङ् भवति । क्विप्सन्नियोगे-

**भावबोधिनी**

❀ओजस् तथा अप्सरस् के स् का लोप नित्य होता है, पयस् के स् का लोप विकल्प से होता है ।❀ [ महाभाष्य में दो वार्त्तिक पठित हैं —( १ ) सलोपो वा । ( २ ) ओजसोऽप्सरसोर्नित्यम् ।' इस प्रकार भाष्यकार के अनुसार विकल्प का क्षेत्र व्यापक है । अतः अन्य सकारान्त शब्दों में लक्ष्यानुसार निर्णय लेना चाहिये । ]

[ सूत्र में 'कर्तुः' यह पञ्चम्यन्त है परन्तु ] सलोपविधि में 'कर्तुः' यह स्थानषष्ठी बन जाती है और उसमें "अलोऽन्त्यस्य" ( पा. सू. १.१.५२ ) यह सूत्र अन्तिम 'स्' के लोप का नियम करता है । अतः 'हंसायते' तथा 'सारसायते' इनमें अनन्त्य 'स' का लोप नहीं होता है । [ हंस इव आचरति, सारस इव आचरति —ये विग्रह हैं । ]

❀आचार अर्थ में —अवगल्भ, क्लीब तथा होड शब्दों से विकल्प से क्विप् होता है ।❀ उदा० अवगल्भते, अवगल्भायते । [ अवगल्भ इव आचरति—इस अर्थ में विकल्प से क्विप् होता है उसका सर्वापहारी लोप हो जाता है । अनुदात्त अकार की इत्संज्ञा के कारण आत्मनेपद होता है -अवगल्भते । पक्ष में क्यङ् करने पर—अवगल्भ + क्यङ्, शेष प्रक्रिया 'श्येनायते' के समान होती है । ] क्लीबते, क्लीबायते । [ क्लीब इव आचरति । क्विप् और सर्वापहारी लोप, तथा क्यङ् करने पर दोनों रूप बनते हैं । ] होडते होडायते । [ होड इव आचरति—इस अर्थ में विकल्प से क्विप्, पक्ष में क्यङ् होने से दो रूप होते हैं । ]

---

१. 'सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः' इत्युत्तरार्धमप्यत्राधिकं क्वचित् । भाष्ये तु "लोपो वा ।" इत्येवोपलभ्यते ।

**❀ सर्वप्रातिपदिकेभ्य इत्येके ❀ ( म० भा० ३.१.११ वा० ४ )। अश्व इवाचरति अश्वायते। गर्दभायते । अश्वति । गर्दभति ॥**

**न्यासः**

विधीयते, यावता 'अवगल्भ आधृष्टे', क्लीबृ मदे, 'हुड्होड़ गतौ' इत्यात्मनेपदिनः, तत्रैतेभ्यो यदा लकारस्तदावगल्भत इत्यादि भविष्यति, यदा तु कृतमुत्पाद्याचं प्रातिपदिकानि कृत्वा क्यङुत्पाद्यते तदावगल्भायत इति भविष्यति ? इदं प्रयोजनं विकल्पेन क्विब्विधानस्य—अवगल्भाञ्चक्र इति 'कास्प्रत्ययादाममन्त्र' इत्याम् यथा स्यात् । अन्यथा ह्यप्रत्ययान्तात् प्रत्ययान्ताद्धातोरामुच्यमानो न स्यात् ।

**सर्वप्रातिपदिकेभ्य इति** । तैरप्यवगल्भाद्यनुकर्षणं कर्त्तव्यम्—अनुबन्धासञ्जनार्थम् । इह चाचारे क्विब् वेत्यपेक्ष्यते । तेन सर्वप्रातिपदिकेभ्य आचार एव क्विब् भवतीति वाक्यं निष्पद्यते । अथ किमर्थं ककारपकारौ क्विपोऽनुबन्धावासज्येते, यावता ककारस्य गुणप्रतिषेधः प्रयोजनम्, न चेह गुणप्राप्तिरस्ति ? क्विपो धातोरित्य-विधानात् सार्वधातुकत्वाभावात् । सार्वधातुकार्धधातुकयोर्हि गुण उच्यते । पकारस्य चानुदात्तत्वं प्रयोजनम्, तच्च क्विपो न सम्भवति; अनच्कत्वात्, सर्वलोपित्वाच्च 'वेरपृक्तस्य' इति । तर्हि द्वावेतौ सामान्यग्रहणाविघातार्थौ, न; अन्यतरेणैव सामान्यग्रहणाविघातस्य सिद्धत्वात् । अन्यथा विज्विटोरपि तदर्थोऽनुबन्धः कर्त्तव्यः स्यादिति चिन्त्यमेतत् ॥ ११ ॥

**पदमञ्जरी**

नानुनासिकत्वप्रतिज्ञानात् क्यङ्पक्षे इत्संज्ञा न भवति । किमर्थं पुनरिदम्, यावता गल्भादयो धातव एवानु-दात्तेतः पठ्यन्ते, तेभ्यो गल्भत इत्यादि सिद्धयति, एतेभ्य एव पचाद्यजन्तेभ्यः क्यङि: अवगल्भायते इत्यादि, यद्यपि धाष्टर्चादावर्थे गल्भादयः पठ्यन्ते, तथाप्यनेकार्थत्वाद्धातूनाम् अवगल्भ इवाचरतीत्यत्रार्थेऽपि त एव वर्त्तिष्यन्ते ? सत्यम्; अवगल्भांचक्रे इत्यादौ प्रत्ययान्तत्वादाम्यथा स्यादित्येवमर्थं क्विब् विधीयते ।

अथ यदा धातुभ्य एव लिङ् विधीयते तदा कथं भवितव्यम् ? अवजगल्भे, विचिक्लीबे, विजुहोडे इति । अन्ये तु—धातुभ्य एव क्विब् विधीयते इति वदन्त एतानि रूपाणि न सम्भवन्तीत्याहुः, तदयुक्तम्; भाष्य-विरोधात् । **भाष्यकारस्तावत्**सर्वप्रातिपदिकेभ्य इत्यनेन सिद्धिमाशङ्कते—न तर्हीदानीमित्यादिना । न हि धातुग्रहणे सति सिद्धिशङ्कोपपद्यते । **वार्तिककारोऽपि** 'सर्वप्रातिपदिकेभ्यः' इति वदन् गल्भादिष्वपि प्रातिपदिक-ग्रहणमेव मन्यते । न केवलं गल्भादिभ्य एव, अपि तर्हि सर्वेभ्य एव प्रातिपदिकेभ्य इति हि तस्यार्थः । 'सर्वप्रातिपदिकेभ्यः' इत्यत्र 'सर्वेभ्यः' इति वक्तव्ये प्रातिपदिकग्रहणात् प्रातिपदिकादेव क्विब् विधीयते, न

**भावबोधिनी**

**विमर्श**—गल्भ अधाष्ट्यें, क्लीबृ अधाष्ट्यें होड अनादरे—ऐसा धातुपाठ हैं। ये आत्मनेपदी है। अतः क्विप् के अभाव में भी—अवगल्भते, क्लीबते होडते—रूप संभव हैं। और क्यङ् सामान्यरूप से हो ही जाता है; तब इस वचन की क्या आवश्यकता ? समाधान यह है कि लट् लकार के रूप में कोई अन्तर न होने पर भी लिट् लकार में—'अवगल्भाञ्चक्रे' आदि में ''कास्प्रत्ययादाममन्त्रे' ( पा. सू. ३.१.३५ ) इससे क्विपप्रत्ययान्त मान कर 'आम्' प्रत्यय करना इस क्विप्विधान का फल है। यदि यह क्विप् नहीं किया जायेगा तो अप्रत्ययान्त होने से आम् नहीं हो सकेगा और इष्टरूप नहीं बन सकेंगे।

[अनु०] ❀सभी प्रातिपदिकों से आचार अर्थ में विकल्प से क्विप् होता है—ऐसा कुछ आचार्य कहते हैं। ❀ उदा० अश्व इव आचरति—इस विग्रह में—अश्वायते। घोड़े के समान आचरण करता है। गर्दभायते। [ गदर्भ इव आचरति—इस विग्रह में बनता है। ] गधा के समान आचरण करता है। [ ये क्यङ् करने पर बनते हैं। क्विप् करने पर ] अश्वति। गर्दभति। [ अश्व + क्विप्, सर्वापहारी लोप, धातुसंज्ञा, विभक्ति लुक्, लट् आदि करने पर रूप बनते हैं। ] ॥ ११ ॥

## ६३१ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १२ ॥ ( २६६७ )

**'भृश' इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुविभवत्यर्थे क्यङ् प्रत्ययो भवति, हलन्तानां च लोपः। 'अच्वेः' इति प्रत्येकमभिसम्बध्यते।**

**किमर्थं पुनरिदमुच्यते, यावता भवतियोगे च्विर्विधीयते तेनोक्तार्थत्वाच्च्व्यन्तेभ्यो न क्यङ् भविष्यति**

**न्यासः**

**भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥** भुवीति। भवनं भूः, सम्पदादित्वाद् भावे क्विप्। इह हल्ग्रहणेन यथासम्भवं भृशादयो विशिष्यन्ते, विशेषणेन च तदन्तविधिर्भवतीत्याह—**हलन्तानाञ्चेत्यादि**। इहापि पूर्ववद-न्वाचयशिष्टो हलो लोपः, तेन तदभावेऽपि क्यङ् भवत्येव। हलो लोपविधौ भृशादिभ्य इति स्थानषष्ठी सम्पद्यते, अर्थाद् विभक्तिविपरिणामात्। तत्र 'अलोऽन्त्यस्य' इति नियमे सति भृशायत इत्यादावहलन्त्यस्य हलो लोपो न भवति। ननु च भृशादीनां बहुत्वात् तत्सम्बन्धेनाच्विभ्य इति बहुवचनेन भवितव्यम्, तत्कथमच्वेरित्येकवचनेन निर्देश इत्याह—**अच्वेरित्यादि**। भृशादच्वेः, शीघ्रादच्वेरिति प्रत्येकमभिसम्बध्यते। तस्मादेकवचनं न्याय्यम्।

**किमर्थं पुनरित्यादि**। अच्वेरित्यधिकृत्य प्रश्नः। कस्मान्न कर्त्तव्यमित्याह—**यावतेत्यादि**। 'अभूत-तद्भाव' इत्यादिना भवतिप्रयोगे च्विर्विधीयते। तत्र तेनैवोक्तार्थत्वाच्च्व्यन्तेभ्यः क्यङ् न भविष्यति, 'उक्तार्थानामप्रयोगः' इति कृत्वा। ननु चानुप्रयोगं बाधित्वा क्यङ् स्यात्? नैतदस्ति; अनवकाशा हि विधयो बाधका भवन्ति, सावकाशश्च क्यङ्। क्व? अच्व्यन्ता ये भृशादयस्तत्र; अच्व्यन्तात् च्वेर्विकल्पेन विधानात्। तत्राच्वे-

**पदमञ्जरी**

सुबन्तात्; तेन पदत्वाभावादश्वतीति 'अतो गुणे' इति शपा पररूपं भवति, विधुरविशब्दाभ्यां क्विपि शपि गुणे 'एङः पदान्तादति' इति न भवति। विधवति, रवयति, राजनतीति नलोपो न भवति। वाचतीत्यादौ तु कुत्वजश्त्वादि न भवति। येऽपि सर्वप्रातिपदिकेभ्यः क्विपमिच्छन्ति, तैरपि गल्भाद्यनुक्रमणं कर्त्तव्यमात्मने-पदार्थाननुबन्धानासंक्ष्यामीति ॥ ११ ॥

**भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥** लोपविधौ 'भृशादिभ्यः' इति पञ्चमी स्थानषष्ठ्या विरिणम्यते, हला च भृशादयो विशेष्यन्ते, तत्र तदन्तविधौ सति हलन्तानां लोपो विधीयमानो भृशायते इत्यादावहलन्तेन भवति, तदाह—**हलन्तानां च लोप इति**! एवं च स्पष्टमेव प्रतीयते—अन्वाचये चशब्द इति। सन्नियोगे हि विज्ञायमानेऽहलन्तानां पाठोऽनर्थकः स्यात्। **अच्वेरिति प्रत्येकमभिसम्बध्यते इति**। तेनैकवचनमुपपद्यते इति भावः। **किमर्थं पुनरिदमुच्यते इति**। 'अच्वे' इत्येतदधिकृत्य प्रश्नः। **तेनेति**। अनुप्रयुज्यमानेन भवतिनेत्यर्थः। न च भवतेरनुप्रयोगं बाधित्वा क्यङ् भवितुमर्हति, अच्व्यन्तेषु सावकाशत्वात्। किञ्च, भवतेरभावे च्वेरपि निवृत्ति-प्रसङ्गः, तद्योगे तस्य विधानात्। कथं तर्हि डाजन्तात्क्यष् भवति, यावता डाजपि भवतियोगे विधीयते? अत्र

**भावबोधिनी**

अच्विप्रत्ययान्त 'भृश' आदि प्रातिपदिकों से भू = होना अर्थ में क्यङ् प्रत्यय होता है और हलन्त शब्दों के अन्तिम हल् का लोप हो जाता है। 'अच्वेः' [ अच्विप्रत्ययान्त ] इसका सम्बन्ध प्रत्येक प्रातिपदिक के साथ होता है।

शंका—'अच्वेः' यह क्यों कहा जा रहा है, क्योंकि भवति = होना के योग में 'च्वि' का विधान किया जा रहा है अतः 'च्वि' से ही 'भवति' का अर्थ उक्त हो जाता है, इसलिये च्व्यन्त से क्यङ् नहीं होगा? समाधान—च्विप्रत्ययान्त के सदृश का ज्ञान कराने के लिये 'च्वि' प्रतिषेध किया जा रहा है। [ 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इस

**(म० भा०) ? तत्सदृशप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते । अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ्प्रत्ययः । अभृशो भृशो भवति भृशायते । शीघ्रायते ।**

**भृश । शीघ्र । मन्द । चपल । पण्डित । उत्सुक । उन्मनस् । अभिमनस् । सुमनस् । दुर्मनस् । रहस् । रेहस् । शश्वत् । बृहत् । वेहत् । नृषत् । शुधि । अधर । ओजस् । वर्चस्[1] । भृशादिः ।**

**अच्वेरिति किम् ? भृशीभवति ॥**

**न्यासः**

रित्यनुवर्त्तमाने च्व्यन्तेषूभयप्रसङ्गे परत्वादनुप्रयोगेणैव भवितव्यम्, अत एवाह—**तत्सदृशेत्यादि** । 'नञिवयुक्तमन्यत्सदृशाधिकरणे' । तथा ह्यर्थ इति च्व्यन्तसदृशा भृशादयः कथं नाम प्रतीयेरन्नित्येवमर्थोऽच्वेरिति प्रतिषेधः । तत्सादृश्यं च्व्यन्तस्याभूततद्भावविषयत्वात् अर्थकृतमेवाश्रीयते, न शब्दादिकृतमित्याह—**अभूततद्भावविषयेभ्य इत्यादि** । इह भृशादिषु कैश्चिन्मनस्प्रभृतयः सोपसर्गाः पठ्यन्ते, तेभ्यः सोपसर्गेभ्य एव प्रत्ययः स्यात् । ततश्चोदमनायतेति सोपसर्गस्याङ्गसंज्ञात्वादुपसर्गात् प्रागडागमः स्यात् । सुमनाय्य गत इत्यत्र सोपसर्गस्य क्त्वान्तेऽनुप्रवेशात् तद्व्यतिरिक्त उपसर्गो नास्तीति समासो न स्यात्, ततश्च ल्यब्न स्यात् ? नैतदस्ति; यथैव हि प्रकर्त्तुमैच्छदिति सोपसर्गस्यापि कर्मत्वे धातुग्रहणेनोपसर्गान्निष्कृष्य धातुमात्रात् प्रत्ययो भवति, तथेहापि भविष्यति । ननु तत्र धातुग्रहणमस्तीति चेत् ? इहापि सुब्ग्रहणमनुवर्त्तत इति हेतुः । सुमनस् इत्यादीनि सुबन्तसमुदायानि । तेन सुबन्तसमुदायात् क्यङ् । लङ् कस्मान्न भवति ? उच्यते—लङ्विधावपि धातुग्रहणमनुवर्त्तते । अथ 'लोप' इत्यनुवर्त्तमाने पुनर्लोपग्रहणं किमर्थम् ? सकारनिवृत्त्यर्थम् । पूर्वकं लोपग्रहणं सकारेण सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्, ततश्च तस्यानन्तस्यापि लोपः प्रसज्येत; इतरथा हि तदनुवृत्तिरपार्थिका स्यात् ॥ १२ ॥

**पदमञ्जरी**

परिहारं वक्ष्यति—कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव ज्ञापकमिति । **तत्सदृशप्रतिपत्त्यर्थं तर्हीति ।** नञिवयुक्तन्यायेन च्व्यन्तसदृशा भृशादयः कथन्नाम प्रतीयेरन्निति च्व्यन्तपर्युदासः क्रियते, सादृश्यं चाभूततद्भावविषयत्वेनेत्याह—**अभूततद्भावविषयेभ्यो भृशादिभ्य इत्यादि** । **भृशायते इत्यादि** । अजन्तानाम् 'अकृत्सार्वधातुकयोः' इति दीर्घः, हलन्तानां तु लोपः—असुमनाः सुमना भवति सुमनायते, दुर्मनायते इत्यादि ।

**भृशोभवतीति** । इदानीमेवोक्तम्—नास्त्यत्र प्रसङ्गः इति, तस्मादच्व्यर्थविषयं प्रत्युदाहरणं प्रदर्शनीयम्—क्व दिवा भृशा भवन्तीति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व प्रदेशे भवन्तीत्यर्थः । इह मनःशब्द सोपसर्गः

**भावबोधिनी**

न्याय के अनुसार नञ्युक्त तद्भिन्न-तत्सदृश का बोधक होता है अतः च्व्यन्तसदृश भृश आदि की प्रतीति के लिये यह प्रतिषेध है । ] अभूत-तद्भाव विषय वाले भृश आदि प्रातिपदिकों से क्यङ् प्रत्यय होता है । [ जो जैसा नहीं है, वह वैसा प्रतीत हो तो च्वि प्रत्यय होता है । अतः यहाँ भी यह प्रतीति रहने पर ही क्यङ् प्रत्यय होता है । ] उदा०—अभृशः भृशः भवति—इस विग्रह में—भृशायते । [भृशः + क्यङ्, धातुसंज्ञा, विभक्तिलुक् 'अकृत्सार्वधातुकयोः' (पा० सू० ७. ४. २५) से 'अ' का दीर्घ—भृशाय, ङित् होने से आत्मनेपद होता है—भृशायते जो अधिक नहीं है वह अधिक होता है । शीघ्रायते—[ अशीघ्रः शीघ्रः भवति—इस अर्थ में क्यङ् होता है । ] जो शीघ्रकारी नहीं है वह शीघ्रकारी हो रहा है ।

भृशादिगण में पठित शब्द—भृश, शीघ्र, मन्द, चपल, पण्डित, उत्सुक, उन्मनस्, अभिमनस्, सुमनस्, दुर्मनस्, रहस्, रेहस्, शश्वत्, बृहत्, वेहत्, नृषत्, शुधि, अधर, ओजस्, वर्चस् ये भृशादि हैं ।

अच्व्यन्त से होता है—इसका क्या फल है—भृशीभवति । [ अभृशः भृशः भवति—इस अर्थ में "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" ( पा० सू० ५. ४. ५० ) से च्वि होता है, सर्वापहारी लोप, 'अ' का ई भृशी + लट् आदि करने पर—भृशीभवति । इसमें क्यङ् नहीं होता है ॥ १२ ॥

१. विमनस् । रमन् । हन् । रीहन् । शुचिस् । अरजस्—एतेऽधिका अन्यत्र ।

**पदमञ्जरी**

पठ्यते—सुमनस्, दुर्मनस्, अभिमनस्, उन्मनस्; अत्र किं सोपसर्गात्सङ्घातात्प्रत्ययो भवति ? आहोस्विदुपसर्गरहितान्मनःशब्दादेव ? इति विचारः, तदर्थं च किमुपसर्गाः प्रकृत्यर्थविशेषणं सुमनःशब्दाद् दुर्मनःशब्दादिति ? उत प्रत्ययार्थविशेषणम्—सुभवतौ, दुर्भवतौ, अभिभवतौ, उद्भवताविति ? कथं पुनर्मनःशब्देन सह पठित उपसर्गे प्रत्ययार्थविशेषणमाशङ्क्यते, तद्विशेषणत्वे हि प्राग्भवतेः पठ्येत ? नैष शक्यः प्राग्भवतेः पठितुम्, एवं हि सर्वेभ्य एव भृशादिभ्य उपसर्गविशिष्ट एव भवत्यर्थे प्रत्ययः स्याद्, मनःशब्दादेव च विशिष्टेऽर्थे इत्यत इत्येवमर्थो मनःशब्देन सह पाठः स्यात्। तत्र यदा मनःशब्देन स्वादीनां बहुव्रीहिस्तदा प्रकृत्यर्थविशेषणं ते भवन्ति; यदा त्वसमस्ता एव तदा प्रत्ययार्थविशेषणम्। मनःशब्दश्च वृत्तिविषये तद्वति वर्त्तते मनस्वी सुष्ठु भवतीत्यादावर्थे क्यङ् प्रत्ययः। प्राप्त्यर्थस्य वा भवतेः 'आ धृषाद्वा' ( धा० पा० पृ० २६६ ) इति विकल्पितणिचोऽत्र विषये ग्रहणम्, तेन मनः कर्म शोभनं प्राप्नोतीत्यादिरर्थो भवति। तत्राद्ये पक्षेऽडाड्ल्यब्द्विर्वचनेषु दोषः, अट्—स्वमनायत, दुरमनायत। आट्—अभ्यमनायत, उदमनायत। उपसर्गस्यापि क्यङन्ते धातावन्तर्भावात्ततः पूर्वमडाटौ प्राप्नुतः, परौ चेष्येते। ल्यप्—सुमनाय्य, अभिमनाय्य, उपसर्गस्य क्त्वान्तेऽनुप्रवेशात्तद्व्यतिरिक्तपदाभावादसति समासे ल्यपोऽभावात्सुमनायित्वेति स्यात्। द्विर्वचनम्-क्यङन्तात्सनि कृते उपसर्गस्य सनन्तेऽनुप्रवेशात्तस्य द्विर्वचने सति सुसुमनायिषते अबिभिमनायिषते इति स्याद्, सुमिमनायिषते अभिमिमनायिषत इति चेष्यते ? नैष दोषः, चुरादौ 'संग्राम युद्धे' (धा० पा० १९२२) इति पठ्यते, स न पाठ्यः; संग्रामशब्दाद् युद्धवाचिनः 'तत् करोति तदाचष्टे' ( वा० २००, २०१ ) इत्येव णिचः सिद्धत्वात्। पाठ्यमानस्तु ज्ञापयति—सोपसर्गात्सङ्घाताद्धातुसंज्ञानिमित्तकप्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते, परिशिष्टादेव तु प्रत्यय इति। संग्रामशब्दो हि सोपसर्गः संघात एव चुरादावपि पठ्यते, न तूपसर्गसदृशावयवं शब्दान्तरम्। तथा च 'वा पदान्तस्य' इति परसवर्णविकल्पो भवति, अन्यथा स न स्यात्। स एवमर्थः पठ्यते असंग्रामयत शूरः, संग्रामयित्वा, सिसंग्रामयिषत इत्यादि रूपं यथा स्यादिति, ततश्चोक्तस्यार्थस्य ज्ञापकः। नियमार्थो वा—धातुसंज्ञाहेतुः प्रत्ययः सोपसर्गाद्यदि भवति संग्रामशब्दादेवेति। ननु चात्रानुदात्तेदयं संग्रामयतिरिष्यते, ततश्चात्मनेपदार्थमनुबन्धमासंक्ष्यामीति पाठः स्यादिति कथं ज्ञापको नियमार्थो वा भवेत् ? स्यादेतत्—अनुबन्धासञ्जनार्थे हि पाठे 'ग्राम युद्धे' इत्येव पठितव्यम्, संशब्दस्तु द्योतकः प्रयोगदर्शनादेव लभ्यते इङ्किोरिवाधिः, नियमार्थस्तु सं[illegible]मेति पाठ इति। एवमपि यथा इङ्किोरधेः पूर्वमाण् न भवति, तथाऽस्यापि न स्यात्, तस्माद् द्वितीयः पक्ष आश्रीयते। यद्येवम्, तथा श्येनायत इति आचारार्थस्य क्यङोक्तत्वादाङः प्रयोगो न भवति तथा स्वादीनामपि न स्यात्। तद्विशिष्ट एवार्थे क्यङो विधानाद् युक्तमेकोपसर्गेण विशिष्टार्थे क्यङुत्पद्यत इति तस्य तेनाभिधानम्, इह पुनरनेकेन। तत्रमनायत इत्युक्ते संदेहः स्यात् सुभवतौ दुर्भवतौ वेति ? तत्रासंदेहार्थमुपसर्गाः प्रयोक्तव्यः। अयं तर्हि दोषः—मनःशब्दात्क्यङि कृते मनायत इत्यस्य तिङन्तस्य स्वादेरतिङन्तादुत्तरस्य निघातः प्राप्नोति। पक्षान्तरे तु सुमनायत इत्यादि तिङन्तं संपद्यते इति तद्व्यतिरिक्ताभावान्निघाताभावः। एवं तर्हि भृशादिषूपसर्गस्य पराङ्गवद्भावं वक्ष्यामि 'सुबामन्त्रिते' इत्यस्यानन्तरं भृशादिषूपसर्ग इति। इहापि तर्हि प्राप्नोति—अभिभृशायते सुभृशायत इति ? यदि नेष्यते 'मनस्युपसर्गे' इति वक्ष्यामि, मनःशब्दे परत उपसर्गस्तस्यैव परस्य मनःशब्दस्याङ्गवद्भवति स्वरे कर्त्तव्ये इति। एवं च देवदत्तः सुमनायत इत्यादौ उपसर्गस्यापि 'तिङ्ङतिङः' इति निघातो भवति। योऽप्याह—सुमनःशब्दात्प्रत्यये विधित्सित उपसर्गाः पृथक् क्रियते, परिशिष्टादेव प्रत्यय इति, तेनापि स्वरे पराङ्गवद्भावो वक्तव्य एव। तदेवं प्रत्ययार्थविशेषणं स्वादयः, मनःशब्दादेव केवलात्प्रत्यय इति स्थितम्। यदि तु सामान्येन ज्ञापकमिष्यते सङ्घातात्प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते इति, नात्रैव, तथा 'प्रभौ परिवृढः' इत्यत्र वक्ष्यते—परिवृढमाचष्टे इति णिचि क्त्वाप्रत्यये कृते परिवृढय्येति ल्यब् भवतीति, ततो ज्ञापकान्तरं मृग्यम्। क्षन्तव्यं च किंचिदुद्ग्रन्थाभिधानं सूरिभिरित्युपरम्यते॥ १२॥

**६३२. लोहितादिडाज्भ्यः क्यष् ॥ १३ ॥ (२६६८)**

**लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति । लोहितायति, लोहितायते । डाजन्तेभ्यः— पटपटायति, पटपटायते । लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि, यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव, अपरिपठितेभ्यस्तु क्यषेव भवति । वर्मायति, वर्मायते । निद्रायति, निद्रायते । करुणायति । करुणायते ।**

**न्यासः**

**लोहितादिडाज्भ्यः क्यष् ॥ लोहितायते इति** । 'वा क्यषः' इत्यात्मनेपदम् । **पटपटायते इति** । पटच्छब्दाद् 'अव्यक्तानुकरणात्' इति डाच् । 'डाचि बहुलं द्वे' इति द्विर्वचनं डाचः प्रागेव भवति; डाचीत्यस्य हि विषयसप्तमीत्वात् । डाचि कृते टिलोपः । द्विर्वचने योऽच्छब्दस्तदवयवस्य तकारस्य 'नित्यमाम्रेडिते डाचि' इति पररूपम्—पकारः । **लोहितडाज्भ्यः क्यष्वचनमित्यादि** । लोहितादिसूत्रेण यदेतत् क्यषो विधानं तल्लोहिताद्, डाजन्तेभ्यश्चेत्यर्थः । ननु चान्यान्यपि नीलादिशब्दरूपाणि लोहितादिषु पठ्यन्ते, अतस्तेभ्योऽपि क्यषा भवितव्यमित्याह—**भृशादिष्वित्यादि** । लोहितशब्दादितराणि यानि तानि भृशादिषु द्रष्टव्यानि । यस्त्विह तेषां पाठः, स प्रमादतः । अर्वाक्कालभावित्वादनार्ष इत्यभिप्रायः । यदि तर्हि भृशादिष्वितराणि पठ्यन्ते, एवमादिशब्दस्यानर्थक्यम्, न हि किञ्चिदस्ति यत् तेनोपादीयेत ? अत आह—**यानीत्यादि** । यानि प्रमादाल्लोहितादिषु पठ्यन्ते तेषां भृशादिषु पाठो वेदितव्यः, न त्वपरिपठितानां वर्मादीनाम् । अतस्तेषामादिग्रहणेन ग्रहणे सति क्यषेव भवति । **वर्मायत इति** । 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः, 'अकृत्सार्वधातुकयोः' इति दीर्घः । निद्रादयोऽत्र शब्दाः पठ्यन्ते, ते यद्यपि धर्ममात्रवचनास्तथापि क्यष्वृत्तिविषये तद्वति द्रव्ये वर्त्तन्ते; शब्दशक्तिस्वाभाव्यात् । **निद्रायत इति ।**

**पदमञ्जरी**

**लोहितादिडाज्भ्यः क्यष् । पटपटायतीति** । अव्यक्तानुकरणादिति डाचि विवक्षिते 'डाचि बहुलं द्वे भवतः' ( वा० ८८८ ) इति द्विर्वचनम्, ततो डाप् पटत्पटा इति स्थिते 'नित्यमाम्रेडिते डाचि' इति पटच्छब्दस्य यस्तकारो यश्च परः पकारस्तयोः पररूपं पकारः, 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' ( वा० १८८ ) इति वार्त्तिकम्, तदेतत्पठिताभिप्रायं न पुनरनेनादिग्रहणं प्रत्याख्यायत इत्याह—**यानि पठ्यन्ते इति** । निद्राकरुणाकृपाशब्दा वृत्तिविषये तद्वति वर्त्तन्ते, अनिद्रो निद्रावान् भवति, अकरुणः करुणावान् भवति, अकृपः कृपावान् भवतीत्यत्रार्थे प्रत्ययः । **अपरिपठितेभ्यस्तु क्यषेव भवतीत्यस्योपपादनम् । आकृतिगणश्चायमिति** । कुत इत्यत

**भावबोधिनी**

लोहित आदि शब्दों से और डाच्प्रत्ययान्त शब्दों से भवति = होना अर्थ में क्यष् प्रत्यय होता है । उदा० लोहितायति, लोहितायते । [ अलोहितः लोहितः भवति—इस अर्थ में प्रस्तुत सूत्र से क्यष् प्रत्यय—लोहितः + क्यष्, सनाद्यन्त मानकर धातुसंज्ञा, विभक्तिलुक्, अ का दीर्घ,—लोहिताय । "वा क्यषः" ( पा० सू० १. ३. ९० ) से विकल्प से परस्मैपद होता है, पक्ष में आत्मनेपद होता है । अतः दो रूप होते हैं । ] डाच्प्रत्ययान्त से—पटपटायति, पटपटायते । [ पटत्-इति करोति—इस अर्थ में "अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच्" ( पा० सू० ५. ४. ४७ ) इससे डाच् की विवक्षा में "डाचि विवक्षिते द्वे बहुलम्" से द्वित्व—पटत् पटत् डाच् = आ, "नित्यमाम्रेडिते डाचि' इससे पूर्ववर्ती पटत् के 'त्' का और उत्तरवर्ती पटत् के 'प्' का पररूप करने पर एक पकार—पट पटत् आ, डित् होने से टि का लोप—पट पट् आ । इस डाजन्त से क्यष् और "वा क्यषः" सूत्र से विकल्प से परस्मैपद करने के कारण दो रूप होते हैं—पटपटायति, पटपटायते । [पट पट ऐसी आवाज करता है । ]

❀ लोहित और डाजन्त शब्दों से क्यष् होता है, भृशादि में और जो दूसरे शब्द लोहितादि में पठित हैं, उनसे क्यङ् ही होता है, जो परिपठित नहीं हैं, उनसे क्यष् ही होता है । ❀ वर्मायति, वर्मायते । [ अवर्मा वर्मा भवति—विग्रह में क्यष्, धातुसंज्ञा, विभक्ति लुक्, वर्मन् य, 'नलोपः प्रातिपदिकान्तस्य' से नलोप, "अकृत्सार्वधातुकयोः" सूत्र से दीर्घ—वर्माय, विकल्प से परस्मैपद, पक्ष में आत्मनेपद । ] निद्रायति, निद्रायते । [ अनिद्रः निद्रावान् भवति—इस अर्थ में क्यष्, धातु संज्ञा, विभक्ति-लुक्, विकल्प से परस्मैपद । ] करुणायति, करुणायते । [ अकरुणः करुणावान्

**कृपायति, कृपायते । आकृतिगणोऽयम् । तथा च ककारः सामान्यग्रहणार्थोऽनुबध्यते—'नः क्ये' ( १.४.१५ ) इति । न हि पठितानां मध्ये नकारान्तः शब्दोऽस्ति । कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव वचनं ज्ञापकम् । 'अच्वेः' इत्यनुवृत्तेरभूततद्भावे क्यष् विज्ञायते ।**

**लोहित । नील । हरित । पीत । मद्र । फेन । मन्द । लोहितादिः ॥**

**न्यासः**

अनिद्रावान् निद्रावान् भवतीत्यर्थः । कथं पुनरपरिपठितानां लोहितादित्वं भवतीत्याह—**आकृतिगणश्चायमिति** । कथमेतज्ज्ञायत इत्याह—**तथा चेत्यादि** । क्येति सामान्यग्रहणार्थमित्याह—**नः क्ये इति** । तत्रैतत् स्यात् । परिपठितानां मध्ये यो नकारान्तस्तस्य पदसंज्ञार्थः ककारोऽनुबध्यत इत्याह—**न हीत्यादि** । कथं पुनः क्यषा योगे डाज् भवति, यावता 'कृभ्वस्तियोगे' इत्यनुवृत्तेः करोत्यादियोगे डाज् विधीयते, न क्यषा ? इत्याह—**कृभ्वस्तिभिरेवेत्यादि** । यदेतद् डाजन्तेभ्यः क्यषो विधानमेतदेव ज्ञापयति—यथा कृभ्वस्तिभिर्योगे डाज् भवति तथा क्यषापीति । अन्यथा डाज्ग्रहणमनर्थकं यदि क्यषा योगे डाज् न स्यात् । ननु च यदा भवतियोगे डाज् भवति तदा तदन्तात् क्यष् भविष्यति, तत्कुत आनर्थक्यम् ? नैतत्; न हीदानीं क्यष् भवितुमर्हति, भुवो भवतिनैवोक्तार्थत्वात् । **अच्वेरित्यनुवृत्तेरभूततद्भावे क्यष्विज्ञायत इति** । नञिवयुक्त-न्यायेनेति भावः । यथैव हि पूर्वसूत्रेऽच्वेरिति प्रतिषेधादमुना न्यायेनाभूततद्भावविषये क्यङ् विधीयते, तथेहापि क्यषिति ॥ १३ ॥

**पदमञ्जरी**

आह—**तथा चेति** । क्व पुनः सामान्यग्रहणार्थः ककारः ? क्यच्व्योश्चेति । 'आपत्यस्य' इति वर्त्तते, न चायमापत्यादिष्यते । इह तर्हि 'क्यस्य विभाषा' ? 'हलः' इति वर्त्तते, न चायं हलन्तादिष्यते । इह तर्हि 'क्याच्छन्दसि' ? एतद्याच्छन्दसीति वक्तव्यम्–भुरण्युस्तुरण्युरिति, कण्ड्वादियगन्तादपि यथा स्यादिति । 'वा क्यषः' इत्येतद्वा यादित्येवास्तु । न चैवम् 'पाशादिभ्यो यः' पाश्या, अत्र प्रसङ्गः ? सामान्यविहितानान्तिङां नियमार्थं प्रकरणम् । न च पाशादियात्परस्मैपदमात्मनेपदं वा प्राप्तमस्ति । अथाप्याचारक्विबन्तात्सम्भवेत् ? एवमपि 'वा यषः' इत्येवास्तु तत्राह—**नः क्ये इति** । ककारमनुबन्धमासञ्जतः **सूत्रकारस्याप्याकृतिगणत्वमभिप्रेतमित्याह—न हीति** । **भाष्ये** त्वादिग्रहणप्रत्याख्यानपरमेव वार्त्तिकं व्याख्यातम् । ककारोऽपि प्रत्याख्यातः । कथं पुनः पटपटायतीति क्यष्योगे डाज् भवति, यावता कृभ्वस्तियोगे स विधीयते ? तत्राह—**कृभ्वस्तिभिरिवेत्यादि** । भवत्यर्थे क्यष् विधीयते, स भवतिप्रयोगे न भवति, तेनैवोक्तत्वात्तस्यार्थस्य । अतो भवतेरप्रयोग एव क्यषा भवितव्यम् । यदि च क्यषा योगे डाज् न स्याड्डाजन्तात् क्यष्विधानमनुपपन्नं स्यादिति भावः ।

**भावबोधिनी**

भवति—इस अर्थ में क्यष् होता है । शेष प्रक्रिया पूर्ववत् । ] कृपायति, कृपायते । [ अकृपः, कृपावान् भवति—इस अर्थ में क्यष् प्रत्यय, विकल्प से परस्मैपद । ]

[ अपठित शब्दों का ग्रहण कैसे होता है ? ] यह लोहितादिगण आकृतिगण है । [ अतः अपठित शब्दों से भी क्यष् हो जाता । ] और इस प्रकार 'क्य' इस सामान्यग्रहण के लिये 'क' अनुबन्ध है—''नः क्ये'' ( पा. सू. १.४.१५ ) [ क्योंकि पठित शब्दों के बीच में कोई भी नकारान्त शब्द नहीं है । [ अतः पदसंज्ञाप्रयोजनार्थ 'क्' अनुबन्ध की आवश्यकता नहीं है । वही व्यर्थ होकर ज्ञापित करता है कि यह आकृतिगण है । अतः अपठित शब्दों में नकारान्त की पदसंज्ञा सिद्ध करने के लिये 'क्' अनुबन्ध चरितार्थ है । ] कृ, भू, अस् के समान क्यष् के भी योग में डाच् प्रत्यय होता है—इसमें यह सूत्र ज्ञापक है । [ चूँकि यह सूत्र डाच्प्रत्ययान्त से क्यष् का विधान करता है अतः जैसे—कृ, भू, अस् के योग में क्यष् होता है वैसे ही क्यष् के योग में भी डाच् होता है । ''अच्वेः' [ अच्व्यन्त से ] इसकी अनुवृत्ति के कारण अभूत-तद्भाव में क्यष् का ज्ञान किया जाता है । [ नञ् तद्भिन्न, तत्सदृश का बोधक होता है । अतः यहाँ अभूततद्भाव अर्थ की प्रतीति हो जाती है । ]

लोहितादिगण में पठित शब्द—लोहित । नील । हरित । पीत । मद्र । फेन । मन्द । ये लोहितादि हैं ॥ १३ ॥

**६३३. कष्टाय क्रमणे ॥ १४ ॥ (२६७०)**

**क्यङनुवर्त्तते न क्यष् । कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽर्थेऽनार्जवे क्यङ् प्रत्ययो भवति । कष्टाय कर्मणे क्रामति कष्टायते ।**

**अत्यल्पमिदमुच्यते (म० भा) ।**

**ॐ सत्त्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ॐ (म० भा० ३.१.१४ वा० १) । कण्व-**

**न्यासः**

**कष्टाय क्रमणे ॥ क्यङनुवर्त्तते, न क्यषिति** । क्यङ एव स्वरितत्वात् । 'चतुर्थीसमर्थात्' इति कष्टायेति निर्देशादेव चतुर्थी समर्थविभक्तिर्लभ्यते, अतस्तत्समर्थात् प्रत्ययो विज्ञायते । क्रमणशब्दोऽयमस्ति पादविहरणे, अस्ति चानार्जवे; तत्र क्रमण इत्यविशेषाभिधाने पादविहरणे प्रत्ययो मा विज्ञायीति विशेषणमुपात्तम् । जिह्मम्, पापम्, अनार्जवमित्यनर्थान्तरम् । ततोऽनार्जव इत्यनेन क्रमेण विशेषिते सत्यनार्जवलक्षणं यत्क्रमणं तत्रैव प्रत्ययो विज्ञायते, न क्रमणमात्रे । एतच्च 'धातोः कर्मणः' इत्यादेः सूत्राद्वाग्रहणस्यानुवर्त्तमानस्य व्यवस्थितविभाषात्वाल्लभ्यते । 'कष्टाय क्रमणे' इति तादर्थ्ये चतुर्थी । **कष्टायत इति** । कष्टाय क्रमणमनार्जवं करोतीत्यर्थः ।

**अत्यल्पमिदमुच्यत इति** । सर्वलक्ष्यासंग्रहात् । कथं तर्हि वक्तव्यमित्याह—**सत्त्रकक्षेत्यादि** । अस्मिन्

**पदमञ्जरी**

अथ किमर्थम् 'वा क्यष' इति सूत्रमारभ्यते न क्यष् चेति चकारोऽत्र कर्तव्यः, लोहितादिभ्यः क्यष् भवति चकारात् क्यङ् च, तत्र क्यङ्पक्षे आत्मनेपदम्, क्यष्पक्षे परस्मैपदमिति सिद्धमिष्टम् ? अहो सूक्ष्मदर्शी देवानांप्रियः, यदिदमपि न दृष्टम्—'क्यङ्मानिनोश्च' इति । इह तर्हि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' ( व्या० परि० २९ ) इति लोहिनीशब्दादप्ययं क्यष् भवति, सति चैवं क्यङन्तादात्मनेपदं क्यषन्तात्परस्मैपदमिति विज्ञायमाने आत्मनेपदपक्षे 'क्यङ्मानिनोश्च' इति पुंवद्भावे सति अलोहिनी भवति लोहितायत इति प्राप्नोति, अद्य पुनः क्यषन्तादात्मनेपदे विकल्पिते लोहिनीयते लोहिनीयतीतीष्टं सिद्ध्यतीति **स्पष्ट** एव फलभेदः ॥ १३ ॥

**कष्टाय क्रमणे ॥ चतुर्थीसमर्थादिति** । सङ्गतार्थः = समर्थः, 'चतुर्थ्या समर्थ' इति तृतीयासमासः । प्रत्ययार्थेन क्रमणेन सह सङ्गतार्थत्वं यस्य चतुर्थीकृतं तस्मादित्यर्थः । एतच्च 'कष्टाय' इति निर्देशादेव लभ्यते । क्रमणशब्दस्य पादविहरणे प्रसिद्धत्वात्तत्रैव प्रत्ययो मा विज्ञायीत्याह—**क्रमणेऽर्थेऽनार्जव इति** । अनार्जवं **कौटिल्यम्**, इह त्वनार्जवशब्दोऽनाकरणरूपे क्रमणे पर्यवस्यत्यर्थात् । किं पुनः क्रमणम् ? उत्साहः, यथा व्याकरणाध्ययनाय क्रमते उत्सहत इत्यर्थ इति व्याख्यातम् । **कष्टाय कर्मणे क्रमत इति** । 'कृच्छ्रगहनयोः कषः' इतिः कृच्छ्र इडभावः, कृच्छ्रम् = दुःखम् । इह तु तत्कारणं पापं कर्म, कृच्छ्रं पापं कर्म कर्तुमुत्सहत इत्यर्थः । 'वृत्तिसर्ग' इत्यात्मनेपदम् । प्रायेण तु परस्मैपदं पठ्यते, तत्र पापं कर्म कर्तुकामः कुटिलमाचरतीत्यर्थः, अनुत्साहत्वात्परस्मैपदम् ।

**अत्यल्पमिदमुच्यत इति** । सर्वलक्ष्यासंग्रहात् । कथं तर्हि वक्तव्यमित्याह—**सत्त्रकक्षेत्यादि** । अस्मिन्पक्षे द्वितीयान्तेभ्यः प्रत्ययः; चिकीर्षां प्रति कर्मत्वात् । **कण्वचिकीर्षायामिति** । प्रकृतिप्रत्ययसमुदायस्यायमर्थनिर्देशः ।

**भावबोधिनी**

क्यङ् की अनुवृत्ति होती है, क्यष् की नहीं । चतुर्थीसमर्थ 'कष्टाय' शब्द से क्रमण = अनार्जव = कुटिलता अर्थ में क्यङ् प्रत्यय होता है । उदा० कष्टाय कर्मणे क्रमते —इस विग्रह में-कष्टायते । [कष्टकारक काम में उत्साहित होता है —यह अर्थ है । कष्टाय + क्यङ्, धातुसंज्ञा विभक्तिलुक्, कष्ट + य, अ का दीर्घ—"अकृत्सार्वधातुकयोः" (पा. सू. ७.४.२५) से—कष्टाय । ङित् होने से आत्मनेपद प्रत्यय —कष्टायते ।]

यह अत्यल्प कहा गया है—

ॐ सत्र, कष्ट, कक्ष, कृच्छ्र तथा गहन— इन शब्दों से कण्व = पाप कर्म करने की इच्छा में क्यङ् होता है । ॐ कण्वचिकीर्षा = पाप कर्म करने की इच्छा, उस इच्छा अर्थ में सत्रादि शब्दों से क्यङ् प्रत्यय होता है । सत्रायते [ सत्रं

**चिकीर्षा = पापचिकीर्षा, तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति । सत्त्रायते । कष्टायते । कक्षायते । कृच्छ्रायते । गह्नायते ।**

**कण्वचिकीर्षायामिति किम् ? अजः कष्टं क्रामति (म० भा०)**

**६३४. कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः ॥ १५ ॥ (२६७१)**

**रोमन्थशब्दात्तपःशब्दाच्च कर्मणो यथाक्रमं वर्त्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति । रोमन्थं वर्त्तयति रोमन्थायते गौः ।**

**❀ हनुचलन इति वक्तव्यम् ❀ (म० भा० ३.१.१५ वा० १) । इह मा भूत्-कीटो रोमन्थं वर्त्तयति ।**

**न्यासः**

न्यासान्तरे यद्यपि समर्थविभक्तिनिर्देशो नास्ति, तथापि सुबधिकारात् तत्समर्थयोग्या विभक्तिरध्याहर्त्तव्या । सत्त्रं चिकीर्षतीति **सत्त्रायते**, पापं कर्तुमिच्छतीत्यर्थः ।

**अजः कष्टं क्रामतीति** । क्रमिरत्र पादविहरणे । कष्टमिति कर्मपदमेतत् । कष्टं देशं गहनं क्रामतीत्यर्थः । अथ वा—कष्टमिति क्रियाविशेषणमेतत् । अजः कष्टं यथा भवति तथा सञ्चरतीत्यर्थः । क्रियाविशेषणपक्षेऽपि कष्टमिति द्वितीयान्तमेतत् । प्रतिपादितं हि 'करणे च स्तोकाल्प' इत्यादौ सूत्रे—क्रियाविशेषणानां कर्मतेति । तेनात्र सूत्रे प्रत्युदाहरणे द्वितीयान्तस्य कष्टशब्दस्य निर्देशः । मूलोदाहरणेष्वपि द्वितीया समर्थविभक्तिरध्याहर्त्तव्येति विज्ञायते ॥ १४ ॥

**कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ कर्मण** इति पञ्चमी; रोमन्थतपोभ्यां पञ्चम्यन्ताभ्यां सामानाधिकरण्यात् । सत्यपि ताभ्यां सामानाधिकरण्ये द्विवचनं न भवति, प्रत्येकं वाक्यपरिसमाप्तेः । **वर्त्तिचरोरिति** । वर्त्तनं वर्त्तिः, ण्यन्तात् स्त्रियां क्तिन् । ननु च क्तिना न भवितव्यम्, 'ण्यासश्रन्थो युच्' इति युचा बाधितत्वात् । अस्मादेव निपातनात् क्तिन् भविष्यतीत्यदोषः । चरणं चरिति सम्पदादित्वात् क्विप् ।

**हनुचलन इत्यादि** । अभ्यवहृतस्य यत् पुनरुद्गीर्य चर्वणं तद् हनुचलनम् । अत्रार्थे रोमन्थशब्दात् क्यङ् भवतीत्येतदर्थरूपं व्याख्येयम् । व्याख्यानं तु वाग्रहणमनुवर्त्त्य तद्व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । वाग्रहणं त्ववश्यमनुवर्तयितव्यम्, रोमन्थं वर्त्तयतीति वाक्यं यथा स्यात् । **कीटो रोमन्थं वर्त्तयतीति** । उद्गीर्णं बहिर्नि-

**पदमञ्जरी**

कण्वम् = पापम् । सत्त्रादयो हि वृत्तिविषये पापपर्यायास्तेभ्यश्चिकीर्षायां प्रत्ययः, पापं चिकीर्षतीत्यस्वपदेन विग्रहः । **अजः कष्टं क्रामतीति** । क्रमिरत्र पादविहरणे वर्तते, कष्टं गहनदेशं क्रामति गच्छतीत्यर्थः ॥ १४ ॥

**कर्मणो रोमन्थतपोभ्यां वर्तिचरोः** ॥ 'कर्मणः' इति पञ्चमी, रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात् । प्रत्येकसम्बन्धात्त्वेकवचनम् । **वर्त्तीति** । ण्यन्ताद् वृतेः 'ण्यासश्रन्थो युच्' इति । युचि प्राप्तेऽस्मादेव निपातनात् क्तिन् । युजपि भवति—वर्तना । चरणं चर् संपादित्वाद्भावे क्विप् । **हनुचलन इति** । हनुचलनसहचरितं चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं तत्रेत्यर्थः । **कीटो रोमन्थं वर्तयतीति** । अवगीर्णमपादानप्रदेशान्निःसृतं रोमन्थाख्यं द्रव्यं वर्तयति =

**भावबोधिनी**

चिकीर्षति—इस अर्थ में ] । कष्टायते [ कष्टं चिकीर्षति - इस अर्थ में ] । कक्षायते [ कक्षं चिकीर्षति—इस अर्थ में ] । कृच्छ्रायते [ कृच्छ्रं चिकीर्षति - इस अर्थ में ] गह्नायते [ गहनं चिकीर्षति—इस अर्थ में ] । कण्वचिकीर्षा = पाप कर्म करने की इच्छा में—इसका क्या फल है ? अजः कष्टं क्रामति । [ बकरा कष्ट से चलता है । यहाँ पाप-चिकीर्षा नहीं है । अतः क्यङ् नहीं होता है ] ॥ १४ ॥

कर्मभूत 'रोमन्थ' शब्द और 'तपः' शब्द से क्रमशः 'वर्ति' तथा 'चर्'—इन अर्थों में क्यङ् प्रत्यय होता है । उदा० रोमन्थं + क्यङ्, धातु संज्ञा, विभक्तिलुक्, अ का दीर्घ—रोमन्थाय । ङित् होने से आत्मनेपद - रोमन्थायते गौः । [ गाय जुगाली करती है । ]

❀ हनु = ठोड़ी चलना प्रतीत होने पर ही होता है—ऐसा कहना चाहिये । ❀ यहाँ पर न हो—कीटः रोमन्थं वर्तयति । [ कीड़ा अपने अपादान प्रदेश से निःसृत द्रव्य = मल की गुलिका [ गोली ] बनाता है । ]

**❀ तपसः परस्मैपदं च ❀ (म० भा० ३.१.१५ वा० ३)। तपश्चरति तपस्यति ॥**

**६३५ बाष्पोष्मभ्यामुद्वमने ॥ १६ ॥ ( २६७२ )**

**'कर्मणः' इति वर्त्तते। बाष्पशब्दादूष्मशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् प्रत्ययो भवति। बाष्पमुद्वमति बाष्पायते। ऊष्मायते।**

**❀ फेनाच्चेति वक्तव्यम् ❀ ( म० भा० ३.१.१६ वा० १ )। फेनमुद्वमति फेनायते।**

**६३६ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १७ ॥ ( २६७३ )**

**शब्द, वैर, कलह, अभ्र, कण्व, मेघ—इत्येतेभ्यः करणे = करोत्यर्थे क्यङ् प्रत्ययो भवति। शब्दं करोति**

**न्यासः**

रस्तमवगीर्णं वा पृष्ठान्तेन निर्गतं रोमन्थाख्यं द्रव्यं वर्तयति, गुटिकां करोतीत्यर्थः। तेनात्र हनुचलनं न विद्यते। मूलोदाहरणे तु विद्यत एव, तथा हि रोमन्थायत इति। अभ्यवहृतं पुनराकृष्य चर्वयतीत्यर्थः। तच्चर्वणं हनुचलनात्मकमेव।

अन्ये तु हनुचलने प्रत्ययमन्यथा प्रतिपादयन्ति। अस्ति चायं रोमन्थशब्दः क्रियापदार्थको यो रोमन्थ-शब्दात् प्रातिपदिकाद्धात्वर्थ इत्यादिना णिचमुत्पाद्य घञन्तो व्युत्पाद्यते, स ह्यभ्यवहृतस्य द्रव्यस्य पुनराकृष्य यच्चर्वणं तत्र वर्त्तते। अस्ति च द्रव्यवचनोऽयं य उद्गीर्णमवगीर्णं वा रोमन्थक्रियाविशिष्टं द्रव्यमाह। तत्र यः क्रियावचनस्तस्येदं ग्रहणम्, यतो द्रव्येऽप्ययं वर्त्तमानः क्रियाद्वारेणैव वर्त्तते। अतो द्रव्ये गौणः, क्रियायां मुख्यः; गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः। तेन क्रियावचनादेव भवति, न द्रव्यवचनादिति।

**तपसः परस्मैपदं चेति**। वक्तव्यमित्यपेक्षते। ङित्त्वादात्मनेपदे प्राप्ते परस्मैपदं वक्तव्यम् = व्याख्येयम्। व्याख्यानं तु 'अनुदात्तङितः' इति सूत्रे 'नपुंसकमनपुंसकेन' इत्यादेः सूत्रान्मण्डूकप्लुतिन्यायेनानुवर्त्तमानस्या-न्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम्। तेन तपसः क्यङन्तादात्मनेपदं न भवति। तदभावात् 'शेषात्कर्त्तरि परस्मैपदम्' इति परस्मैपदमेव भवति ॥ १५ ॥

**बाष्पोष्मभ्यामुद्वमने ॥ फेनाच्चेति वक्तव्यमिति**। फेनशब्दाद्वमनेऽर्थे वर्त्तमानात् क्यङ् भवतीत्येतदर्थरूपं व्याख्येयम्। व्याख्यानं तु—तु 'भृशादिभ्यः' इत्यतः सूत्राच्चकारमनुक्तसमुच्चयार्थमनुवर्त्त्य कर्त्तव्यम् ॥ १६ ॥

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥** करणशब्देनात्र क्रियोच्यते, न साधकतमम्। यस्मात् 'कर्मणः' इत्यधिकाराच्छब्दादिभ्यः कर्मभ्य एव प्रत्ययेन भवितव्यम्। तत्र यदि साधकतमे प्रत्ययः स्यात् प्रकृतिप्रत्ययाव-सम्बद्धौ स्याताम्, क्रियापेक्षत्वाच्च कर्मत्वस्य क्रियाया अभावे कर्मत्वं न स्यात्। तस्मात् क्रियावचन एव करणशब्दं निश्चित्याह—**करणे करोत्यर्थ इति**।

**पदमञ्जरी**

वृत्तं करोति, गुलिकां करोतीत्यर्थः। नात्र हनुचलनमस्ति। **तपसः परस्मैपदं चेति**। एवं च 'नमोवरिवः'

**भावबोधिनी**

❀ और तपस् शब्द से क्यङ् के साथ परस्मैपद होता है। ❀ उदा० तपः चरति—तपस्यति। [ तपस्या करता है। तपस् + क्यङ्, ] ॥ १५ ॥

'कर्मणः' [ कर्मवाचक से ] इसकी अनुवृत्ति होती है। कर्मभूत वाष्पशब्द तथा ऊष्म शब्दों से 'उद्वमन' [ = ऊपर निकालना ] अर्थ में क्यङ् प्रत्यय होता है। उदा० वाष्पम् उद्वमति—वाष्पायते। [ भाप को ऊपर फेंकता है। वाष्पम् + क्यङ्, प्रक्रिया पूर्ववत् ] ऊष्मायते [ ऊष्माणम् उद्वमति। गरम हवा आदि को ऊपर फेंकता है। ]

❀ फेन शब्द से भी कहना चाहिये। ❀ फेनम् उद्वमति—[ फेना ऊपर निकालता है। ] फेनायते ॥ १६ ॥

शब्द, वैर, कलह, अभ्र, कण्व, तथा मेघ—इन शब्दों से 'करण = करता है'—इस अर्थ में क्यङ् प्रत्यय होता है।

**शब्दायते । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते ।**

**❀ सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम् ❀ ( म० भा० ३.१.१७ वा० २,३ ) । सुदिनायते । दुर्दिनायते । नीहारायते ।**

**❀ अटाट्टाशीकाकोटापोटासोटाकष्टाग्रहणं कर्तव्यम्[1] ❀ ( म० भा० ३.१.१७ वा० १ ) । अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । कष्टायते ।**

### न्यासः

**सुदिनेत्यादि** । सुदिनादिभ्यः कर्मभ्यः करणे = करोत्यर्थे क्यङ्प्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयम् । व्याख्यानं तु—इहापि तमेवानुक्तसमुच्चयार्थं चकारमनुवर्त्य कर्तव्यम् । अत एवानुक्तसमुच्चयार्थाच्चकारादटादीनामपि ग्रहणम् । तेनाटायत इत्याद्यपि सिद्धं भवति ।

**अटाट्टेत्यादि** । अटादीनां ग्रहणमुपादानमित्यर्थः । अयञ्च 'तत्करोति' इति णिचि प्राप्त आरम्भः; सोऽपीष्यते—शब्दयति, वैरयतीति । तस्मादेतदर्थापि चकारानुवृत्तिर्वेदितव्या ॥ १७ ॥

### पदमञ्जरी

आदिसूत्रे तपःशब्दः पठितव्यस्तथा तु न कृतमित्येव । इह 'तपस्यते लोकं जिगीषुरग्नेः' ? इति छान्दसत्वादात्मनेपदम् ॥ १५ ॥ १६ ॥ १७ ॥

### भावबोधिनी

उदा० शब्दं करोति—शब्दायते । [शब्दम् + क्यङ् धातुसंज्ञा, विभक्ति लुक्, अ का दीर्घ-शब्दाय । ङित् होने से आत्मनेपद—शब्दायते । शब्द करता है । ] वैरायते [ वैरं करोति—इस अर्थ में वैरम् + क्यङ्, प्रक्रिया पूर्ववत्, वैर करता है । ] कलहायते [ कलहं करोति—इस अर्थ में कलहम् + क्यङ्, कलह करता है । ] अभ्रायते । [ अभ्रं करोति—इस अर्थ में—अभ्रम् + क्यङ्, बादल करता है = बनाता है । ] कण्वायते । [ कण्वं करोति —इस अर्थ में कण्वम् + क्यङ्, पाप करता है । ] मेघायते । [ मेघं करोति—इस अर्थ में मेघम् + क्यङ्, बादल बनाता है । ]

❀ सुदिन, दुर्दिन और नीहार—इन शब्दों से भी क्यङ् कहना चाहिये ।❀ उदा० सुदिनायते । [ सुदिनं करोति—इस अर्थ में—सुदिनम् + क्यङ् धातुसंज्ञा, विभक्तिलुक्, अ का दीर्घ, शेष पूर्ववत्, अच्छा दिन करता है । ] दुर्दिनायते । [ दुर्दिनं करोति —इस अर्थ में क्यङ् । दुर्दिन करता है । ] नीहारायते । [ नीहारं करोति—इस अर्थ में क्यङ् होता है । ]

❀ अटा, अट्टा, शीका, कोटा, पोटा, सोटा तथा कष्टा—इनका भी ग्रहण करना चाहिये ।❀ उदा० अटायते । [ अटां करोति इस अर्थ में अटाम् + क्यङ्, पर्यटन करता है । ] अट्टायते । [ अट्टां करोति, अट्टालिका बनाता है । ] शीकायते । [ शीकां करोति—इस अर्थ में । शीका = गीला ] कोटायते । [ कोटां करोति—इस अर्थ में, कोटा—यह किला अथवा झोपड़ी अर्थ में हो सकता है । ] पोटायते । [ पोटां करोति—इस अर्थ में, पोटा = हिजड़ी ] सोटायते । [ सोटां करोति—इस अर्थ में है, सोटा का अर्थ अस्पष्ट है । ] कष्टायते । [कष्टां करोति—इस अर्थ में है । कष्टा= कष्टकारिणी । ]

**विमर्श**—भाष्य में आदि में प्रदर्शित वार्त्तिक काशिका में अन्त में दिया गया है । अन्त के दो वार्त्तिकों को मिला कर यहाँ एक वार्त्तिक के रूप में दिया गया है ॥ १७ ॥

---

१. 'अट्टाटाशीकाकोटापोटासोटासृष्टाधृष्टापृष्टाग्रहणं कर्तव्यम्' इति पाठा० । भाष्ये तु—'अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्' इति पाठः ।

## ६३७. सुखादिभ्यः कर्तृवेदनायाम् ॥ १८ ॥ ( २६७४ )

**कर्मग्रहणमनुवर्त्तते । 'सुख'—इत्येवमादिभ्यः कर्मभ्यो वेदनायामर्थेऽनुभवे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत्कर्तुः सम्बन्धीनि सुखादीनि भवन्ति । सुखं वेदयते सुखायते । दुःखायते ।**

**कर्तृग्रहणं किम् ? सुखं वेदयति प्रसाधको देवदत्तस्य ( म० भा० ) ।**

**सुख । दुःख । तृप्र । गहन । कृच्छ्र । अस्र । अलीक । प्रतीप । करुण । कृपण । सोढ । सुखादिः ॥**

**न्यासः**

**सुखादिभ्यः कर्तृवेदनायाम् ॥ वेदनायामर्थेऽनुभव इति ।** प्रत्यक्षेण वस्तुन उपलब्धिः = अनुभवः । ननु च वेदनाशब्द उपलब्धिमात्रवचनो लोके दृष्टः, तत्कथमेष विशेषो लभ्यते ? यथा लभ्यते तथोत्तरसूत्रे प्रतिपादयिष्यामः । कर्त्ता कारकम्, कारकञ्च क्रियापेक्षं क्रियाया एव भवति । वेदना चेह क्रिया श्रूयते, नान्या । तस्मात् तस्या एव कर्त्ता विज्ञायते । तस्याश्च यो वेदयिता स एव विज्ञायते । तस्मादविशेषाभिधानेऽपि वेदयितरि कर्तरि वर्तमानः कर्तृशब्दो गृह्यत इति—**वेदयितुश्चेत् कर्तु**रित्यादि । एतेन कर्तृग्रहणेन सुखादयो विशिष्यन्ते, न तु वेदनेति दर्शयति । यदि कर्तृग्रहणेन वेदना विशिष्येत—कर्तुः सम्बन्धिनी चेद्वेदना भवतीति, तदेहापि स्याद्—देवदत्तस्य सुखं वेदयति प्रसाधक इति । प्रसाधकस्यापि सम्बन्धिनी वेदना भवत्येव, तथा हि सोऽपि तस्याः कर्त्ता । यथैव हि प्रसाध्यः सुखं वेदयते तथा प्रसाधकोऽपि । एतावांस्तु विशेषः—एकः प्रत्यक्षेण वेदयते, अपरश्चानुमानेन; सर्वथा हि तदकर्तृकत्वे वेदयत इत्येतन्न स्यात्, न ह्यकर्त्ता वेदयत इत्युच्यते । तस्मात् सुखादीनामेव कर्तृग्रहणं विशेषणं युक्तमिति भावः । ननु च सुखादिविशेषणत्वेऽपि स एव दोषः, यस्मात् प्रसाधकस्यापि जन्यजनकभावलक्षणेन सम्बन्धेन सुखादयः सम्बन्धिनो भवन्ति ? नैतत्; सर्वत्रैव हि कर्तृसम्बन्धिनः सुखादयः, क्रियते चेदं कर्तृग्रहणम् । अतः कर्तृग्रहणसामर्थ्याद् विशिष्टो यः कर्त्ता सुखादीनामाश्रयः समवायिकारणं स एव गृह्यते । तेनाश्रयाश्रयिभावेन सम्बन्धेन कर्तृसम्बन्धिभ्यः सुखादिभ्यः प्रत्ययो विज्ञायते । न च प्रसाधकः सुखादीनां समवायिकारणम्,

**पदमञ्जरी**

**सुखादिभ्यः कर्तृवेदनायाम् ॥ वेदनायामिति ।** 'विद चेतनाख्याननिवासेषु' ( धा० पा० १७०८ ) इत्यस्माच्चुरादिण्यन्ताद्भावे 'ण्यासश्रन्थो युच्', 'घट्टिवन्दिविदिभ्यश्च' (वा० ३१५ ), इत्यौपसंख्यानिको वा । **वेदनायामर्थेऽनुभव इति ।** प्रत्यक्षज्ञानम् = अनुभवः । यद्यपि वेदनाशब्दो ज्ञानमात्रवचनस्तथापि कर्तृग्रहणेन सुखादीनि विशेष्यन्ते, कर्तृगतानां च सुखादीनां वेदनाऽनुभवरूपैवेति मत्वैवमुक्तम् । क्रियापेक्षं कर्तृत्वं वेदनासंनिधानात्तदपेक्षमेव विज्ञायते । कर्त्रा च सुखादीनि विशेष्यन्ते न वेदनाः, व्यभिचाराभावात् । सर्वैव हि वेदना वेदयितुरेव भवति, तदेतदाह—**वेदयितुश्चेत्कर्तुः सुखादीनि भवन्तीति ।** आश्रयाश्रयिभावलक्षणश्च सम्बन्धः, न जन्यजनकभावलक्षणः । एवं च कर्तृग्रहणं लुप्तषष्ठीकं पृथक्पदम् । **वेदयत इति ।** 'आ कुस्मादात्मनेपदी'

**भावबोधिनी**

कर्मग्रहण की अनुवृत्ति होती है । 'सुख' आदि कर्मवाचकों से वेदना = अनुभव अर्थ में क्यङ् प्रत्यय होता है, यदि वे सुख आदि वेदयिता कर्ता से सम्बद्ध हों तो । [ भाव यह है कि सुखादि जिसके हों, वही अनुभव करने वाला भी हो, दूसरे का सुख हो और अनुभव करने वाला दूसरा हो तो यह प्रत्यय नहीं होता है । ] उदा० सुखं वेदयते—सुखायते । [ सुख का अनुभव करता है । ] दुःखायते [ दुःखं वेदयते—इस विग्रह में दुःखम् + क्यङ्, धातुसंज्ञा, विभक्ति लुक्, आत्मनेपद आदि सभी पूर्वोक्त कार्य होते हैं । दुःख का अनुभव करता है । ]

कर्तृ का ग्रहण किसलिये है [ अर्थात् जानने वाले कर्ता का ही सुखादि हो—इसका क्या फल है ? ] सुखं वेदयति प्रसाधकः देवदत्तस्य [ प्रसाधक = तैल मालिश आदि सेवा करने वाला नौकर देवदत्त के सुख = प्रसन्नता को जानता है । यहाँ सुख देवदत्त का है और जाननेवाला प्रसाधक है । अतः यह प्रत्यय नहीं होता है ।

सुखादिगण में पठित शब्द—सुख । दुःख । तृप्त । गहन । कृच्छ्र । अस्र [ = आँसू ] । अलीक [ असत्य ] । प्रतीप [ उलटा ] । करुण । कृपण । सोढ [ सहन किया गया । ] ये सुखादि हैं ॥ १८ ॥

**६३८. नमोवरिवश्चित्रङः क्यच् ॥ १९ ॥ (२६७९)**

**'करणे' इति वर्त्तते। नमस्, वरिवस्, चित्रङ्-इत्येतेभ्यो वा क्यच्प्रत्ययो भवति, करणविशेषे पूजादौ। 'नमसः पूजायाम्'-नमस्यति देवान्। 'वरिवसः परिचर्यायाम्'-वरिवस्यति गुरून्। 'चित्रङ् आश्चर्ये'-चित्रीयते। ङकार आत्मनेपदार्थः ॥**

**न्यासः**

किं तर्हि? निमित्तकारणम्। सुखादिसमवायिकारणस्य कर्त्तुर्ये सुखादय आश्रयाश्रयिभावेन सम्बन्धिनस्ते प्रत्यक्षेणोपलभ्यन्ते। तेन तदुपलब्धिरनुभवस्वभावा भवतीति युक्तमुक्तम्—वेदनायामर्थेऽनुभव इति। यदि तर्हि कर्तृग्रहणेन सुखादयो विशिष्यन्ते, न वेदना, ततश्च कर्तृवेदनायामिति षष्ठीसमासो न प्राप्नोति, असामर्थ्यात्? सौत्रत्वान् निर्देशस्य सत्यप्यसामर्थ्ये समासो भविष्यतीत्यदोषः। अथ वा—असमास एव, षष्ठ्यास्त्वश्रवणम्; 'सुपां सुलुक्' इति लुप्तत्वात् ॥ १८ ॥

**नमोवरिवश्चित्रङः क्यच् ॥ करणविशेष पूजादाविति।** आदिशब्देन परिचर्याश्चर्ययोग्रहणम्। नमस इत्यादिनाऽनन्तरस्योक्तार्थस्य विषयविभागं दर्शयति। एष चार्थो यद्यपि करण इति करणसामान्यमनुवर्त्तते, तथाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते विनापि वचनेन, यथा—पचादीनां विक्लेदादिषु वृत्तिः, बहुव्रीहेश्च मत्वर्थे। **नमस्यति देवानिति।** ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति, अतस्तद्योगे 'नमःस्वस्ति' इत्यादिना चतुर्थ्या भवितव्यम्? नैतदस्ति; 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यर्थवतो नमःशब्दस्य तत्र ग्रहणात्, इह च तस्यानर्थकत्वात्। सत्यपि चार्थवत्त्वे प्रत्ययार्थे गुणीभूतस्य पदान्तरेण सम्बद्धस्य कर्त्तुमशक्यत्वात्। अथ वा—'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयैव भवति। उपपदसम्बन्धनिरपेक्षत्वात् कारकविभक्तेर्बलीयस्त्वम्। उपपदविभक्तेस्तु पदान्तरसापेक्षत्वाद् दुर्बलत्वम्। **नमस्यतीति** नमस्कारं करोतीत्यर्थः। **वरिवस्यतीति** परिचरतीत्यर्थः। **चित्रीयत इति** विस्मापयत इत्यर्थः ॥ १९ ॥

**पदमञ्जरी**

( धा० पा० १६७२ ) इत्यधिकारे वेदिः पठितः। एवं च प्रत्युदाहरणे परस्मैपदपाठः प्रमादजः। प्रसाधकः = अभ्यङ्गादेः कर्ता, संप्रसाध्यमानस्य नेत्रविकारादिना सुखमनुमानतो जानाति ॥

**नमोवरिवश्चित्रङः क्यच् ॥ करणविशेषे पूजादाविति।** 'करणे' इति सामान्यानुवृत्तावप्यभिधानशक्तिस्वाभाव्याद्विशेष उपलभ्यत इति भावः। **नमस्यति देवानिति।** 'नमःस्वस्तिस्वाहा' इति चतुर्थी न भवति, प्रत्ययार्थे गुणीभूतस्य नमःशब्दस्य निष्कृष्य सम्बन्धाभावात्। अथ वा—नमस्यति नमस्कारेण पूजयतीत्यर्थः। तत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' ( चान्द्र० परि० ६९ ) इति द्वितीयैव भवति। एवं च नमस्करोति देवानित्यादावपि द्वितीयैव भवति। **परिचर्यायामिति।** परिचर्या = शुश्रूषा। **चित्रीयते इति।** 'अवयवकृतं लिङ्गं समुदायस्य विशेषकं भवतीति' ( हे० परि० १०७ ) क्यजन्तादात्मनेपदं भवति, 'क्यचि च' इतीत्वम्। एतदर्थमेव च शब्दवैरादिसूत्रे चित्रशब्दो न पठितः। **चित्रीयत इति।** विस्मयत इत्यर्थ इत्येके। विस्मापयत इत्यर्थ इत्यन्ये। तथा च **भट्टिकाव्ये** मायामृगं प्रकृत्य भवति 'ततश्चित्रीयमाणोऽसौ' ( भट्टि ५.४८ ) इति ॥ १९ ॥

**भावबोधिनी**

"करणे" [ = करता है ] इसकी अनुवृत्ति होती है। नमस्, वरिवस् तथा चित्रङ् इन प्रातिपदिकों से [विकल्प से] क्यच् प्रत्यय होता है, करणविशेष = पूजा आदि अर्थ रहने पर। 'नमस् शब्द से पूजा अर्थ में क्यच् होता है'—उदा० नमस्यति देवान्। [ नमस् + क्यच्, नमस्कार = पूजा करता है - यह अर्थ है। ] 'वरिवस् शब्द से परिचर्या = सेवा अर्थ में क्यच् प्रत्यय होता है। उदा० वरिवस्यति गुरून्। [ वरिवस् शब्द से क्यच् होता है। देवों की सेवा करता है। ] 'चित्रङ् शब्द से आश्चर्य अर्थ में क्यच् होता है।" उदा० चित्रीयते। [ चित्रङ् + क्यच्, आश्चर्य करता है अथवा कराता है। ] ङकार आत्मनेपद के लिये है। [ ङित् होने से "अनुदात्तङित आत्मनेपदम्" ( पा० सू० १. ३. १२ ) से आत्मनेपद हो जाता है। ] ॥ १९ ॥

६३९. पुच्छभाण्डचीवराण्णिङ् ॥ २० ॥ (२६७६)

'करणे' इति वर्तते । पुच्छ, भाण्ड, चीवर-इत्येतेभ्यो णिङ् प्रत्ययो भवति, करणविशेषे ।

❀ पुच्छादुदसने पर्यसने वा ❀ (?) । उत्पुच्छयते । परिपुच्छयते ।

❀ भाण्डात्समाचयने ❀ (?) । सम्भाण्डयते ।

❀ चीवरादर्जने परिधाने वा ❀ (?) । सञ्चीवरयते भिक्षुः । ङकार आत्मनेपदार्थः । णकारः सामान्यग्रहणार्थः-'णेरनिटि' (६.४.५१) इति ॥

६४०. मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ २१ ॥ (२६७७)

मुण्ड, मिश्र, श्लक्ष्ण, लवण, व्रत, वस्त्र, हल, कृत, तूस्त—इत्येतेभ्यः करणे णिच् प्रत्ययो भवति । मुण्डं

**न्यासः**

पुच्छभाण्डचीवराण्णिङ् ॥ पुच्छादित्यादि । उदसनम् = ऊर्ध्वक्षेपणम्, पर्यसनम् परितः क्षेपणम् । यदोदसने प्रत्ययस्तदा तस्य द्योतनार्थ उच्छब्दः प्रयुज्यते-उत्पुच्छयत इति । यदा पर्यसने प्रत्ययस्तदा परिशब्दः—परिपुच्छयत इति । 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावात् टिलोपः । समाचयनम् = राशीकरणम् । अर्जनम् = अलब्धस्य लाभः । परिधानम् = आच्छादनम् ॥ २० ॥

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यनेन

**पदमञ्जरी**

पुच्छभाण्डचीवराण्णिङ् ॥ पुच्छादुदसने पर्यसने वेति । उदसनम् = उत्क्षेपणम् । पर्यसनम् = परितः क्षेपणम् । उत्पुच्छयत इति । ननु यथाऽऽचारे क्यङि विहिते आङः प्रयोगो न भवति, तत्कस्य हेतोः ? आङ्विशिष्टस्यैव चरत्यर्थस्य क्यङाभिधानात्, तद्वदिहाप्युत्क्षेपणे णिङो विधानादुदः प्रयोगो न प्राप्नोतीति ? अस्त्यत्र विशेषः—पर्यसनेऽप्ययं विधीयते । तत्रोदसनं द्योतयितुमुच्छब्दः, पर्यसनं द्योतयितुं परिशब्दश्च प्रयोक्तव्यः । समाचयनम् = राशीकरणम्, अर्जनम् = द्रव्यलाभोपायः, याच्ञादि । ङकारः आत्मनेपदार्थ इति । तेनोत्तरसूत्रे पुच्छादयो न शक्याः पठितुमिति भावः ॥ २० ॥

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ किमर्थमिदम्, न प्रातिपदिकाद्धात्वर्थ इत्येव

**भावबोधिनी**

'करणे' ( करता है-अर्थ में )—इसकी अनुवृत्ति होती है । पुच्छ, भाण्ड तथा चीवर—इन शब्दों से णिङ् प्रत्यय होता है करणविशेष [ = करना विशेष ] अर्थ में । [ अब अर्थ विशेष स्पष्ट करते हैं । ]

❀ पुच्छ शब्द से ऊपर उठाना और इधर-उधर करना अर्थ में णिङ् होता है ।* उदा० उत्पुच्छयते, परिपुच्छयते । [ उत्पुच्छ + णिङ्, परिपुच्छ + णिङ्, "णाविष्ठवद्वत् कार्यं प्रातिपदिकस्य" से इष्ठवद्भाव के कारण टि=अ का लोप हो जाता है—उत्पुच्छ् + इ, परिपुच्छ् इ धातुसंज्ञा, ङित् होने से आत्मनेपद प्रत्यय होते हैं । ( पूँछ उठती है । पूँछ चारों तरफ घुमाती है—ये अर्थ है । )

❀ भाण्ड शब्द से समाचयन=एकत्रित करना अर्थ में णिङ् होता है ।❀ सम्भाण्डयते । [ सम्भाण्ड + णिङ्, इष्ठवद्भाव के कारण अलोप, धातु संज्ञा आत्मनेपद । पात्रों को एकत्रित करता है ]

❀ चीवर शब्द से अर्जन = अलब्ध को प्राप्त करना तथा परिधान = पहिनना अर्थ में णिङ् होता है । उदा० सञ्चीवरयते भिक्षुः । [ सञ्चीर + णिङ्, प्रक्रिया पूर्ववत् होती है । भिक्षु चीवर प्राप्त करता है, या पहनता है । ] ङकार अनुबन्ध आत्मनेपद के लिये है । णकार का ग्रहण "णेरनिटि" ( पा. सू. ६.४.५१ ) आदि सामान्यरूप से ग्रहण कराने के लिये है ॥ २० ॥

मुण्ड, मिश्र, श्लक्ष्ण, लवण, व्रत, वस्त्र, हल, कृत, तूस्त—इन शब्दों से 'करण = करना' अर्थ में णिच् प्रत्यय

**करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रताद्भोजने तन्निवृत्तौ च—पयो व्रतयति। वृषलान्नं व्रतयति। वस्त्रात्समाच्छादने—संवस्त्रयति। हलिं गृह्णाति हलयति। कलिं गृह्णाति कलयति। हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्—अजहलत्, अचकलत् ( म० भा० )।**

**न्यासः**

मुण्डादिभ्यः सिद्धो णिच्। अयञ्च तस्यैव प्रपञ्चः। यद्यपि तस्य तत्करोतीत्यादिः प्रपञ्च उक्तः, तथापीह मन्दबुद्धीनामनुग्रहाय पुनरुच्यते। **तन्निवृत्तौ चेति**। भोजननिवृत्तौ। **पयो व्रतयतीति** पयो भुङ्क्त इत्यर्थः। **वृषलान्नं व्रतयतीति** वृषलान्नं न भुङ्क्त इत्यर्थः। **हलिं गृह्णाति हलयति, कलिं गृह्णाति कलयतीति**। ननु चेह हलकलशब्दयोः सूत्र उपादानम्, तत् किं हलिकलिशब्दाभ्यां वाक्यं क्रियत इति यो देशयेत् तं प्रत्याह—**हलिकल्योरित्यादि**। एतेनैतद्दर्शयति—सूत्रेऽपि हलिकल्योरेव ग्रहणम्, तयोस्त्वत्वनिपातनं कृतम्, 'सन्वल्लघुनि' इत्यादिना सन्वद्भावो मा भूदिति। अतो युक्तं हलिकल्योर्ग्रहणम्। तथा हि—नात्र णिज् दुर्लभः, गणसूत्रेणैव सिद्धत्वात्। केवलं प्रपञ्चार्थमिदमुच्यते। स च प्रपञ्चो हलिकल्योरपि ग्रहण उपपद्यत एव।

अयन्तु विशेषः—अकारान्तयोर्ग्रहणे सतीकारान्ताभ्यामपि गणसूत्रेणैव णिच् प्राप्नोति, तत्र कृते सतीष्ठवद्भावेन टिलोपः प्राप्नोति, 'अचो ञ्णिति' इति वृद्धिश्च, उभयोरपि तयोरनित्यत्वम्। तथा हि, टिलोपस्य सत्यपि कृताकृतप्रसङ्गित्वे शब्दान्तरप्राप्त्याऽनित्यत्वम्। तथा हि, कृतायां वृद्धावैकारस्य प्राप्नोति, अकृतायान्त्विकारस्य; वृद्धेस्तु टिलोपे सत्यप्राप्त्याऽनित्यम्। अप्राप्तिस्त्वनजन्तत्वात्। उभयोरनित्ययोः परत्वाद् वृद्धिः, तस्यां कृतायां टिलोपः, तत्राप्यग्लोप्यङ्गं न भवति। तथा च सति 'सन्वल्लघुनि' इति सन्वद्भावेऽभ्यासस्येत्त्वे 'दीर्घो लघोः' इति दीर्घत्वे

**पदमञ्जरी**

सिद्धम्; न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः क्रियते, राजानमतिक्रान्तवानत्यरराजदित्यपि दर्शनात्? मुण्डं करोति माणवकमित्यादौ सापेक्षेभ्योऽपि णिज् यथा स्यादित्येवमर्थं प्रपञ्चार्थं वा। 'हलिकल्योरत्वमदन्तत्वनिपातनार्थम्, ( कात्या० वा० १७४७ ) अन्यथा हलि इ कलि इ इति स्थिते 'अचो ञ्णिति' इति वृद्धिः प्राप्नोति, 'णाविष्ठवत्' ( वा० ८१३ ) इति टिलोपश्च; तत्र लोपः शब्दान्तरप्राप्त्याऽनित्यः, वृद्धिस्तु टिलोपे कृतेऽप्राप्तेरित्युभयोरनित्ययोः परत्वाद् वृद्धौ कृतायामैकारस्य लोपस्तत्राग्लोप्यङ्गं भवतीति 'सन्वल्लघुनि' इति सन्वद्भावः स्यात्, 'दीर्घो लघोः' इति दीर्घश्च, अत्वनिपातने तु यद्यपि परत्वाद् वृद्धिस्तथाप्यगेव लुप्यते इति सन्वद्भावो न भवति, तदाह—**हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति**। उपलक्षणमेतत्, 'दीर्घो लघोः'

**भावबोधिनी**

होता है। उदा० (१) मुण्डं करोति-मुण्डयति। [ मुण्डन करता है, बाल काटता है। मुण्डम् + णिच्, धातु संज्ञा, विभक्तिलुक, इष्ठवद्भाव, टिलोप, मुण्डि + लट्, तिप्, शप् अ, गुण, अय् आदेश—मुण्डयति। ] (२) मिश्रयति [ मिश्रं करोति, मिलाता है। मिश्रम + णिच्। ] (३) श्लक्ष्णयति [ श्लक्ष्णं करोति, चिकना करता है। ] (४) लवणयति। [ लवणं करोति—नमकीन करता है। ] (५) ॐ व्रत शब्द से भोजन करना और भोजन छोड़ना इन अर्थों में यह प्रत्यय होता है। ॐ उदा० पयः व्रतयति। [ दूध पीता है। व्रतं करोति—इस अर्थ में व्रतम् + णिच्। ] वृषलान्नं व्रतयति [ शूद्र के अन्न को छोड़ता है। ] (६) ★ वस्त्र शब्द से 'समाच्छादन = अच्छी तरह ओढ़ना' अर्थ में णिच् होता है। ॐ उदा० संवस्त्रयति। [ वस्त्र ओढ़ता है; या वस्त्र से ढकता है। ]

हलिं गृह्णाति—हलयति। [ हल पकड़ता है, चलाता है। ] कलिं गृह्णाति—कलयति। [ कलि = युद्ध करता है। ] [ सूत्र में हल तथा कल ये अकारान्त हैं और यहाँ इकारान्त, इसका क्या प्रयोजन है? ] हलि तथा कलि—इनका अदन्तत्व निपातित किया गया है जो सन्वद्भाव के प्रतिषेध के लिये है अर्थात् णिच् करने पर 'अ' का लोप होने से "सन्वल्लघुनि चङ्परेऽनग्लोपे" ( पा. सू. ७.४.९३ ) इस सूत्र से सन्वद्भाव नहीं होता है। उदा० अजहलत्, अचकलत्।

**कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति केशान्। विशदीकरोतीत्यर्थः॥**

## ६४१. धातोरेकाचो हलादेः क्रियासमभिहारे यङ्॥ २२॥ (२६२९)

**एकाज् यो धातुर्हलादिः क्रियासमभिहारे वर्तते तस्माद्यङ् प्रत्ययो भवति।**

**न्यासः**

च अचीकलत्, अजीहलदित्यनिष्टं रूपं प्रसज्येत। हलिकलिशब्दयोस्तु कृतात्त्वयोर्ग्रहणे सति यद्यपि परत्वाद् वृद्धिर्भवति, तथापि सत्यामपि तस्यामगेव लुप्यत इत्यग्लोप्यङ्गं भवति। ततश्च सन्वद्भावाभावाद् अचकलद्, अजहलदितीष्टं रूपं सिध्यति। तत्र ययोर्ग्रहणे सतीष्टं सिध्यति तयोरेव ग्रहणम्, न तु ययोर्ग्रहणेऽनिष्टं प्राप्नोति। न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता॥ २१॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्॥ एकाजिति।** बहुव्रीहिरयं न तत्पुरुषः; 'हलादेः' इति विशेषणात्। **क्रियासमभिहारे वर्तत इति।** एतेन क्रियासमभिहारस्य प्रकृतिविशेषणत्वं दर्शयति। **तस्माद् यङ्प्रत्ययो भवतीति।** क्व? 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' (पुरु० परि० ९०) इति तत्रैव क्रियासमभिहारे। विप्रकीर्णानामेकत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारः। स च क्रियाणामुत्पन्नापवर्गिणीनां सहानवस्थानादेकेन च

**पदमञ्जरी**

इति दीर्घाभावार्थं च। 'दीर्घो लघोः' इत्यत्राप्यनग्लोप इति वर्त्तते। एवं च बलिपटुप्रभृतिभ्यो णिचि अबीबलत्, अपीपटदिति भवति, न त्वबबलत् अपपटदिति। 'सत्यापपाश' ( ३.१.२५ ) इत्यत्र मुण्डादयः पठितव्यास्तथा तु न कृतमित्येव॥ २१॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्॥** 'हलादेः' इति विशेषणादेकाच इति बहुव्रीहिः। **क्रियासमभिहारे वर्त्तत इति।** समभिह्रियमाणायां क्रियायां हि वर्त्तत इत्यर्थः। अनेन समभिहारस्य प्रकृतिविशेषणत्वं दर्शयति। क्रिया हि धातुवाच्या। समभिहारविशिष्टापि क्रियैव भवति, अतः प्रकृतिविशेषणत्वमेव युक्तम्, यथा अतिशयेन शुक्लोऽपि शुक्ल एवेत्यतिशयानं प्रकृत्यर्थस्तद्वत्। **तस्माद्यङ् प्रत्ययो भवतीति।** क्व? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति' ( पुरु० परि० ९० ) तत्रैव। समभिहारे द्योत्ये प्रकृत्यर्थसमभिह्रियमाणत्वद्योतनायेत्यर्थः, यथा प्रकृत्यर्थस्यातिशयद्योतनाय तरबादयस्तद्वत्। इह विप्रकीर्णानां पदार्थानां मूर्त्तानामेककालानामेकत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारः, तथा–पूलादीनाम्। धातुवाच्या तु क्रियैकैव। यद्यपि

**भावबोधिनी**

**विमर्श**—हलि, कलि में अकारान्त निपातित करके हल + णिच्, कल + णिच्—इनमें इष्ठवद्भाव करके 'अ' का लोप होता है। हल् + लुङ् = तिप्, च्लि का चङ् करने पर "चङि" ( पा. सू. ६.१.११ ) से धातु का द्वित्व तथा अभ्यासकार्य होता है। सन्वद्भाव न होने से 'अ' का इ, तथा दीर्घ आदि कार्य नहीं होते हैं। यहाँ 'हलि' 'कलि' शब्द मानने पर णिच् करने पर वृद्धि और लोप में परत्वात् वृद्धि करने पर 'ऐ' होता है, इसका लोप होने पर यह 'अग्लोपी नहीं माना जा सकता। सन्वद्भाव होने लगेगा और—अजीहलत्, अचीकलत् रूप बनने लगेगें। परन्तु जब अदन्तत्व निपातित किया जाता है तब हल + णिच् यहाँ वृद्धि करने पर भी 'आ' ही आता है, इसका लोप करने पर यह अग्लोपी होता है। सन्वद्भाव नहीं होता है। अजहलत्, अचकलत्—ये ही रूप बनते हैं। इसी के लिये अदन्तत्व निपातन किया गया है।

[ अनु० ] कृतं गृह्णाति—कृतयति। [ किये हुये को लेता है। कृतम् + णिच् ]। तूस्तानि विहन्ति—वितूस्तयति केशान्। [ बालों को अलग-अलग करता है। ]॥ २१॥

एक अच्वाली जो धातु क्रिया-समभिहार अर्थ में वर्तमान, उससे यङ् प्रत्यय होता है।

**पौनःपुन्यं भृशार्थो वा=क्रियासमभिहारः। पुनः पुनः पचति पापच्यते। यायज्यते। भृशं ज्वलति जाज्वल्यते। देदीप्यते।**

**न्यासः**

धातुनाऽनेकस्याः क्रियाया युगपदनभिधानान्न सम्भवतीति गौणं समभिहारं दर्शयितुमाह—**पौनःपुन्यमित्यादि**। उभयमपि ह्येतत् समभिहारसादृश्यादुपचारेण समभिहारे व्यपदेशमासादयति। यथा द्रव्याणां समाहृतानां द्रव्यान्तरैरव्यपेतानां समाहारो भवति, तथा क्रियाणामपि क्रियान्तरैरव्यपेतानामेतदुभयं भवतीति सादृश्यम्। क्रिया च द्विप्रकारा-प्रधाना, अप्रधाना च। तत्र प्रधानक्रिया विक्लेदनादिः, गुणक्रिया चाधिश्रयणादिः। तत्र यः फलान्तं पाकमवसाय्य क्रियान्तरमनारभ्य पुनः पाकमेवारभते स प्रधानक्रियां समभिहरति, तासां पौनःपुन्यं समभिहारः। यस्त्वधिश्रयणादीरेव क्रियाः क्रियान्तरैरव्यपेताः साकल्येन करोति स गुणक्रियाः समभिहरति, तासां भृशार्थता समभिहारः। फलातिरेको वा भृशार्थता। तथा हि—यो ज्वलनफलमवाप्य ज्वलति, दीप्यते वा, स जाज्वल्यते देदीप्यत इति चोच्यते। **पापच्यत इति**। 'सन्यङोः' इति द्विर्वचनम्, 'दीर्घोऽकितः' इति दीर्घः। अत्र 'क्रियासमभिहारे द्वे भवतः' इति द्वित्वं न भवति; क्रियासमभिहारे विधीयमानस्य यङः स्वयमेव तदभिव्यक्तौ सामर्थ्यात्। यस्तु 'क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः' इति लोड् वक्ष्यते स क्रियासमभिहारव्यक्तौ स्वयमशक्त इत्यपेक्षते द्विर्वचनम्। न ह्यसौ क्रियासमभिहारे विधीयते, किं तर्हि ? कर्मादिषु; 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति वचनात्। तेन तस्य प्रयोगे द्विर्वचनं भवत्येव—लुनीहि लुनीहीत्येवायं लुनाति। **देदीप्यत इति**। 'गुणो यङ्लुकोः' इति गुणः।

**पदमञ्जरी**

'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' ( धा० पा० ११०७ ) इत्यनेकार्थो दिविः पठ्यते, तथापि न युगपदनेकार्थमाचष्टे, किं तर्हि ? प्रयोगभेदेन। यद्यपि चाश्रयभेदाद्विषयभेदाच्च भिद्यते पाकः—अन्य एव हि देवदत्तकर्तृकः पाकः, अन्य एव चान्यकर्तृकः, अन्यश्चौदनस्य पाकोऽन्य एव तैलादीनाम्; तथापि धातुना निवृत्तभेदैव सा प्रत्यय्यते। अत एव भवद्भिरास्यत इत्यादौ बहुवचनं न भवति। न खलु कर्तृभेदः क्रियाव्यक्तिभेदेन व्याप्तः, एकफलावच्छिन्नामेकामेव क्रियां कुर्वत्स्वपि बहुषु पचन्तीति दर्शनात्। तदेवं धातुवाच्या समूहरूपा प्रधानक्रियैकैवेति समभिहाराभावः। अधिश्रयणादीनां तु गुणक्रियाणां युगपदेकधातुवाच्यत्वेऽपि क्रमजन्यत्वादुत्पन्नापवर्गित्वेन युगपदवस्थानाभावादमूर्त्तत्वाच्च समभिहाराभावः। तदेवं मुख्यस्य समभिहारस्य धात्वर्थविषयेऽसम्भवाद् गौणो गृह्यते, तद्दर्शयति—**पौनःपुन्यं भृशार्थो वेति**। द्रव्याणां द्रव्यान्तरैरव्यपेतानां समभिहारो भवति, तथा क्रियाणामपि क्रियान्तरैरव्यपेतानामेतदुभयं भवति। तत्र प्रधानक्रियाणां पौनःपुन्यं समभिहारः, पुनः पुनरनुष्ठीयमानविषयं हि तत्। प्रधानक्रियैव च पुनः पुनरनुष्ठीयते। अवयवक्रियाणां तु भृशार्थता समभिहारः, बुद्धिगोचरानेकसकलावयवक्रियाविषया हि सा। **पापच्यत इति**। 'दीर्घोऽकितः' इति दीर्घः। **देदीप्यत इति**। 'गुणो यङ्लुकोः' यङैव समभिहारस्य द्योतितत्वात्। 'क्रियासमभिहारे द्वे भवतः' इति वा 'नित्यवीप्सयोः' इति

**भावबोधिनी**

पुनः पुनः होना अथवा बहुत होना-क्रियासमभिहार है। उदा० पुनः पुनः अतिशयेन वा पचति-पापच्यते। [बार-बार अथवा बहुत अधिक पकाता है—इस अर्थ में पच् + यङ्, "सन्यङोः" ( पा. सू. ६.१.९ ) से द्वित्व, हलादिशेष, "दीर्घोऽकितः" इस सूत्र से अभ्यास का दीर्घ—पापच्य + लट् त, शप्, टि का एत्व—पापच्यते। ] यायज्यते—पुनः पुनः अतिशयेन वा यजति—इस विग्रह में यज् + यङ्, शेष प्रकिया पूर्ववत्। ] भृशं ज्वलति—जाज्वल्यते। [ बहुत अधिक जलता है इस अर्थ में ज्वल् + यङ्, द्वित्व, आदि हल् शेष अन्य का लोप जज्वल् य, अभ्यास का दीर्घ—जाज्वल्य + लट् त, शप्, टि का एत्व। ] देदीप्यते [ पुनः पुनः अतिशयेन वा दीप्यते—इस में दीप् + यङ्, द्वित्व आदि कार्य करने पर रूप बनता है। ]

**धातोरिति किम् ? सोपसर्गाद्रुत्पत्तिर्मा भूत्–भृशं प्राटति (म० भा०) । एकाच इति किम् ? भृशं जागर्ति । हलादेरिति किम् ? भृशमीक्षते (म० भा०) ।**

**न्यासः**

**भृशं प्राटतीति** । असति धातुग्रहणे, एकाज् यः शब्दो हलादिः क्रियासमभिहारे वर्त्तते तस्माद्यङ्प्रत्ययो भवतीत्येष सूत्रार्थः स्यात् । ततश्च प्रपूर्वादटतेर्यङ् प्रसज्येत; प्रपूर्वस्याटतेर्यः समुदायस्तस्य यथोक्तविशेषणविशिष्टत्वात् । धातुग्रहणे सत्येष प्रसङ्गो न भवति । न ह्ययं धातुः, किं तर्हि ? धातूपसर्गसमुदायः । **जागर्त्तीति** । अदादित्वाच्छपो लुक् । अथ क्रियाग्रहणं किमर्थम्, न समभिहार इत्येवोच्येत ? नैवम्; साधनसमभिहारेऽपि स्यात् । नैतदस्ति, प्रकृतिविशेषणं ह्येतत् । न च प्रकृतेः साधनसमभिहारे वृत्तिः सम्भवति । अपि च 'करणे' इति वर्त्तते, तेन समभिहारो विशेषयिष्यते—करणसम्बन्धी चेत् समभिहारः, तत् कुतः साधनसमभिहारे प्रसङ्गः ? इदं तर्हि प्रयोजनम्—क्रियामात्रसमभिहारे यथा स्यात्; अन्यथा प्रधाने कार्यसंप्रत्ययात् प्रधानक्रियासमभिहार एव स्यात्, न गुणक्रियासमभिहारे ।

**पदमञ्जरी**

द्विर्वचनं न भवति । **धातोरिति किमिति** । अन्यस्य क्रियासमभिहारे वृत्त्यसंभवात्प्रश्नः । **भृशं प्राटतति** । अत्र धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात्ततो यङ् स्यात्, ततश्चोपसर्गस्य द्विर्वचनं स्यात् । यदि सोपसर्गसंघातस्यैव क्रियासमभिहारे वृत्तिः, प्रपापच्यत इत्यादौ यङ् न प्राप्नोति ? योऽत्र धातुः स न क्रियासमभिहारे, यश्च क्रियासमभिहारे न स धातुरिति । तस्माद्धातुरेव समभिहारविशिष्टक्रियावाची, उपसर्गास्तु सन्निधिमात्रेणोपकारकः । ततश्च संघातात्प्राप्त्यभावान्नार्थो धातुग्रहणेन । यत्र तर्हि संघातेनैव विशिष्टा क्रियोच्यते—प्रतेष्ठीयत इति, अत्र हि केवलस्तिष्ठतिर्गतिनिवृत्तिवचनः, प्रपूर्वेण तु संघातेन गतिक्रियैवोच्यते, यथा—जङ्गम्यत इति ? अत्राप्यनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतौ तन्निवृत्तौ च वर्त्तते, उपसर्गस्तु सन्निधिमात्रेणोपकारक इति धातोरुत्पत्तिरविरुद्धा, तस्मादार्धधातुकसंज्ञार्थमेव धातुग्रहणम् । तेन 'ब्रुवो वचिः' इत्यादि भवति । आनुषङ्गिकी त्वधातुनिवृत्तिः ।

अथ कथं यङन्तादात्मनेपदं भवति ? कथं च न स्यात् ? ङितो धातोरात्मनेपदमुच्यते, यश्चात्र धातुर्न स ङित्, न ह्ययं समुदायस्यानुबन्धः । यश्च ङित्प्रत्ययो नासौ धातुः । यत्र च 'अवयवे कृतं लिङ्गमचरितार्थं' ( हे० न्य० १०७ ) तत्र समुदायस्य विशेषकं भवति, अयं ङकारस्तु बेभिद्यत इत्यादौ गुणनिषेधादौ चरितार्थः ? कश्चिदाह—क्रियासमभिहारे यङित्यकारोऽत्र प्रश्लिष्यते, स चानुदात्तोऽनुनासिकः प्रतिज्ञायते, तत्रानुदात्तत्वमवयवेऽचरितार्थं समुदायस्य विशेषकं भवति, 'अनुदात्तेतश्च हलादेः' इत्येतच्च न भवति 'जुचङ्क्रम्यदन्द्रम्य' इत्यत्र चङ्क्रम्यदन्द्रम्यग्रहणाल्लिङ्गादिति, स वक्तव्यः । अथ कथं ऋतेरोयङन्तादात्मनेपदं भवति, सोऽपि हि ङकारो गुणनिवृत्तौ चरितार्थ इति ? स चेद् ब्रूयात्तस्याप्यादित इकार ईकारो वा अनुदात्तः प्रश्लिष्यत इति, प्रतिब्रूयादेनम्—इकारे नुम्प्रसज्येत, ईकारे 'श्वीदितो निष्ठायाम्' इतीण्निषेधः स्यादिति ? नैष दोषः; नुम्विधौ 'गोः पादान्ते' इत्यतोऽन्तग्रहणमनुवर्तते, तेनान्ते इकार इत्सञ्ज्ञको येषां तेषां नुम् । 'श्वीदितो निष्ठायाम्' इत्यत्राप्येकाच इति वर्तते ? सत्यम्; प्रतिविहितमायुष्मता, मुधा पुनरयं प्रयासः; तथा हि—अनुदात्तङितः' इत्यत्र न धातुग्रहणमस्ति, ततः किम् ? इदं ततो भवति—प्रत्ययमेव ङितमाश्रित्यात्मनेपदं सिद्धं भवति । न चैवमशिश्रियद्,

**भावबोधिनी**

'धातु से यङ् होता है' इसका क्या प्रयोजन है ? उपसर्गसहित धातु से यङ् न हो—भृशं प्राटति । [ यहाँ 'प्र' उपसर्गसहित अट् धातु से यङ् नहीं होता है । ] एक अच्वाली धातु से—इसका क्या फल है ? भृशं जागर्ति । [ 'जागृ' धातु दो = अनेक अचोंवाली है, अतः इससे यङ् नहीं होता है । ] हलादि धातु से—इसका क्या फल है ? भृशम् ईक्षते । [ यहाँ अजादि धातु है । अतः इससे यङ् नहीं होता है । ]

**❀ सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थम् ❀ ( म० भा० ३.१.२२ वा० ४ )।**
**सोसूच्यते । सोसूत्र्यते । गोमूत्र्यते । अटाटचते । अरार्यते । अशाश्यते । प्रोर्णोनूयते ।**

**न्यासः**

**सूचीत्यादि** । 'सूच पैशुन्ये', 'सूत्र अवमोचने', मूत्र प्रस्रवणे', 'अट गतौ', 'ऋ गतौ' 'अश भोजने,' 'ऊर्णुञ् आच्छादने'—आसां प्रकृतीनां यङ्विधौ ग्रहणं कर्त्तव्यम्, तच्च पूर्वस्यैव चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यते, किमर्थं पुनरासां प्रकृतीनां ग्रहणमित्याह—**अनेकाजहलाद्यर्थमिति** । अनेकाज् अहलादिरर्थः प्रयोजनं यस्य तत्तथोक्तम् । सूच्यादीनां तिसृणां चुरादिणिजन्तानामनेकार्थं ग्रहणम्, ऊर्णोतिस्त्वनेकाजर्थमहलाद्यर्थञ्च, शेषाणां तु अहलाद्यर्थमेव । **सोसूच्यते इति** । 'णेरनिटि' इति णिलोपः, पूर्ववदभ्यासस्य गुणः । **अटाट्यते इति** । 'अजादेर्द्वितीयस्य' इति ट्यशब्दस्य द्विर्वचनम्, हलादिः शेषः, दीर्घश्च । **अरार्यते इति** । 'यङि च' इति गुणः । द्वितीयस्यैकाचोर्यशब्दस्य द्विर्वचनम् । 'न न्द्राः संयोगादयः' इति तु नास्ति, 'यकारपरस्य रेफस्य प्रतिषेधः' इति वचनात् । **अशाश्यत इति** । द्वितीयस्यैकाचः 'श्य' इत्यस्य द्विर्वचनम् । **प्रोर्णुनूयत इति** । अत्रापि नुशब्दस्य

**पदमञ्जरी**

अवोचदित्यादौ चङङ्भ्यामपि प्रसङ्गः, प्रागेव विकरणेभ्यः अनुदात्तङितः' इत्येतत्प्रकरणं प्रवर्त्तते; अन्यथा 'वर्तते' इत्यादौ विकरणव्यवधानान्नियमो न स्यात् । यथा च प्रागेव विकरणेभ्यो नियमः प्रवर्त्तते, प्रवृत्ते तु नियमे विकरण इति तथा तत्रैव प्रतिपादितमित्यलमियता ।

**सूचिसूत्रीत्यादि** । सूच्यादिभ्यो यङ् वक्तव्यः, किमर्थम् ? सूच्यादीनामनेकाजर्थम्, अशादीनामहलाद्यर्थम्, ऊर्णोतिस्त्वनेकाजर्थमहलाद्यर्थं च । **सोसूच्यत इति** । 'सूच पैशुन्ये' ( धा० पा० १८७३ ), 'सूत्र अवमोचने' (धा० पा० १९०८), 'मूत्र प्रस्रवणे' (धा० पा० १९०९) चुरादिण्यन्ताः । अत्र णिलोपोऽपि यङ आर्धधातुकत्वे प्रयोजनम् । **अटाट्यते** । 'अट पट गतौ' (धा०पा० २९५, २९६), 'अजादेर्द्वितीयस्य' इति **ट्यशब्दस्य द्विर्वचनम्** । **अरार्यते इति** । 'ऋ गतौ' (धा० पा० १०९८) 'गुणोऽर्त्तिसंयोगाद्योः' 'यङि च' इति गुणः, 'न न्द्राः संयोगादयः' इत्यत्र 'यदा रपरस्य प्रतिषेध' इति वचनाद्रेफस्य द्विर्वचनम् । **अशाश्यते इति** । अश्नोतेरशेश्च ग्रहणमित्यागमः । **प्रोर्णोनूयते**

**भावबोधिनी**

❀ सूचि, सूत्रि, मूत्रि, अटि, अर्ति, अश् तथा ऊर्णोति—इन धातुओं का यङ्विधि में ग्रहण होता है अनेकाच् तथा अहलादि का ग्रहण कराने के लिये । अर्थात् ये धातुएँ न एकाच् हैं और न हलादि, अतः इनसे अप्राप्ति की दशा में यङ् विधान के लिये यह वार्त्तिक है । * उदा० सोसूच्यते । [ पुनः पुनः अतिशयेन वा सूचयति—इस अर्थ में 'सूच पैशुन्ये' इस चुरादिगणीय णिजन्त धातु से यङ् होता है, "णेरनिटि" ( पा. सू. ६.४.५१ ) से णि—लोप, द्वित्व हलादिशेष—सुसूच्य, 'गुणो यङ्लुकोः' ( पा. सू. ७.४.८२ ) से अभ्यास का गुण—सोसूच्य + लट् । यह अनेक अचों वाली धातु है अतः षोपदेश न होने से इसका 'स' आदेश नहीं है । अतः 'आदेशप्रत्यययोः' की प्रवृत्ति नहीं होती है ] सोसूत्र्यते । [ पुनः पुनः अतिशयेन वा सूत्रयति—इस विग्रह में णिजन्त सूत्रि + यङ् ] गोमूत्र्यते । [ पुनः पुनः अतिशयेन वा मूत्रयति—इस विग्रह में मूत्रि + यङ् ये तीन अनेकाच् धातुयें हैं अप्राप्त यङ् का विधान किया जाता है । ] अटाट्यते । [ पुनः पुनः अतिशयेन वा अटति इस अर्थ में—अट् + यङ्, "अजादेर्द्वितीयस्य" ( पा. सू. ६.१.२ ) से द्वितीय एकाच् 'ट्य' का द्वित्व, हलादिशेष, दीर्घ—अटाट्य । ] बार बार चलता है । [ अरार्यते । [ पुनः पुनः अतिशयेन वा ऋच्छति—इस अर्थ में ऋ + यङ् "यङि च" ( पा. सू. ७.४.३० ) से गुण, रपर—अर्य, "अजादेर्द्वितीयस्य से द्वितीय एकाच् 'र्य' का द्वित्व, हलादिशेष अ र र्य, "दीर्घोऽकितः" से अभ्यास का दीर्घ करने पर—अरार्य + लट् । बार-बार जाता है । ] अशाश्यते । [ पुनः पुनः अतिशयेन वा अश्नाति—इस विग्रह में अश् + य, द्वितीय एकाच् 'श्य' का द्वित्व, हलादिशेष, अभ्यासदीर्घ—अशाश्य + लट् । बार बार खाता है । ] प्रोर्णोनूयते [ पुनः पुनः अतिशयेन वा ऊर्णौति—इस अर्थ में अर्णु + यङ्, 'नु' शब्द का द्वित्व, अभ्यासगुण प्र उर् नोनूय = प्रोर्णोनूय + लट् । बार बार आच्छादित करता है । ]

**भृशं शोभते, भृशं रोचते ( म० भा० ) इत्यत्र नेष्यते; अनभिधानात् ।**

## ६४२. नित्यं कौटिल्ये गतौ ॥ २३ ॥ (२६३४)

**गतिवचनाद्धातोः कौटिल्ये गम्यमाने नित्यं यङ् प्रत्ययो भवति । कुटिलं क्रामति चङ्क्रम्यते । दन्द्रम्यते ।**

### न्यासः

द्विर्वचनम् । रेफस्तु न द्विरुच्यते, तथैव प्रतिषेधात् । **भृशं रोचते, भृशं शोभत इत्यत्र नेष्यत इति ।** तदर्थं वेत्यनुवृत्तस्य व्यवस्थितविभाषात्वं व्याख्येयम् ॥ २२ ॥

**नित्यं कौटिल्ये गतौ ॥** धातोरित्येव । **गताविति** प्रकृतिविशेषणमेतत् । गतौ वर्त्तमानाद्धातोरित्यर्थः । अमुमेवार्थं पर्यायान्तरेणाचष्टे—**गतिवचनाद्धातोरिति । चंक्रम्यते, दंद्रम्यत इति ।** 'क्रमु पादविक्षेपे' 'द्रम हम्म मीमृ गतौ', 'नुगतोऽनुनासिकान्तस्य' इति नुगागमः । योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयन् चंक्रम्यते दंद्रम्यत इति चोच्यते । अथ नित्यग्रहणं किमर्थकम्, यावताऽनभिधानादेवात्र वाक्यं न भविष्यति ? न हि चङ्क्रम्यत इति वृत्तेरथं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम् । तथा हि कुटिलं क्रामतीति वाक्यात् संशयो भवति –किं गतिकौटिल्यम् ? उत मनःकौटिल्यमिति ? चंक्रम्यत इति वृत्तौ त्वसंशयं

### पदमञ्जरी

**इति ।** 'ऊर्णुञ् आच्छादने' (धा०पा० १०३९) नोपधोऽयम्, आष्टमिकं तु णत्वम्, तस्यासिद्धत्वान्नुशब्दस्य द्विर्वचनम् । ननु 'पूर्वत्रासिद्धयीमद्विर्वचने' ( जै० परि० ७० ) ? स्यादेतत्—आष्टमिकं तु द्विर्वचनमभिप्रेत्य तदुच्यते, यथा चौजढदित्यत्र ढत्वादीनामसिद्धत्वाद्ढत इत्येतद् द्विरुच्यते इति ? तन्न; एवं हि षुपिभूतो द्विरुच्यत इति वक्ष्यमाणं व्याहन्येत । एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इत्येतदनित्यम्, 'उभौ साभ्यासस्य' इति लिङ्गात्; अन्यथा 'अनितेः' इति णत्वे कृते तस्य सिद्धत्वाण्णिशब्दस्य द्विर्वचने सति सिद्धं स्यात्प्राणिणिषतीति । इह कस्मान्न भवति–लुनीहि लुनीहीत्येवायं लुनातीति ? भवत्येव । लोलूयत इति लोट् तर्हि न प्राप्नोति यङा बाधितत्वात्, अन्तरङ्गो यङ् क्रियासमभिहारमात्रापेक्षत्वात्; लोट् तु बहिरङ्गः, क्रियाभेदाश्रये धातुसम्बन्धे भावकर्मकर्तृषु च विधानात् । सावकाशश्च लोट्, कोऽवकाशः ? अनेकाजहलादिश्च—जागृहि जागृहीत्येवायं जागर्त्ति, ईक्षस्वेक्षस्वेत्येवायमीक्षत इति । एवं तर्हि वेत्यनुवृत्तेः पक्षे यङ, यदा न यङ् तदा लोड् भविष्यति । यङोऽकारोऽटाटचते इत्यादौ द्विर्वचनार्थः ॥ २२ ॥

**नित्यं कौटिल्ये गतौ ॥** 'धातोः' इति वर्त्तते, गताविति तस्य विशेषणम्, गतौ वर्त्तमानाद्धातोरिति । **कौटिल्ये इति ।** संनिधानाद् गतिविषयमेव कौटिल्यं गम्यते । **चक्रम्यते, दन्द्रम्यत इति** 'क्रमु पादविक्षेपे', ( धा० पा० ४७३ ) 'द्रम मीमृ गतौ' ( धा० पा० ४६६, ४६८ ) 'नुगतोऽनुनासिकान्तस्य,' योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयन्नेवमुच्यने ।

### भावबोधिनी

भृशं शोभते, भृशं रोचते—इनमें यङ् इष्ट नहीं है क्योंकि अभिधान नहीं है । ॥ २२ ॥

गत्यर्थक धातुओं से, गति की कुटिलता = टेढ़ापन प्रतीत होने पर नित्य यङ् प्रत्यय होता है । उदाहरण—कुटिलं क्रामति—चङ्क्रम्यते । [ क्रमु पादविक्षेपार्थक है, क्रम् + यङ् द्वित्व, अभ्यासकार्य, ''कुहोश्चुः'' ( पा० सू० ७.४.६२ ) 'क' का 'च्'—चक्रम्य ''नुगतोऽनुनासिकान्तस्य'' ( पा० सू० ७.४.८५ ) से अभ्यास को नुक् = न् आगम् अनुस्वार परसवर्ण करने पर—चङ्क्रम्य + लट् । टेढ़ा मेढ़ा चलता है । ] दन्द्रम्यते । [ पुनः पुनः अतिशयेन वा द्रमति—इस अर्थ में गत्यर्थक द्रम + यङ्, द्वित्व, हलादिशेष दद्रम्य, नुक् = न् आगम्, अनुस्वार परसवर्ण—दन्द्रम्य + लट् । टेढ़ा मेढ़ा चलता है । ]

**नित्यग्रहणं विषयनियमार्थम्—गतिवचनान्नित्यं कौटिल्य एव भवति, न तु क्रियासमभिहारे। भृशं क्रामति ॥**

### ६४३. लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥ २४ ॥ (२६३५)

**लुप् सद, चर, जप, जभ, दह, दश, गॄ–इत्येतेभ्यो भावगर्हायाम् = धात्वर्थगर्हायां यङ् प्रत्ययो भवति।**

**न्यासः**

गतिकौटिल्यमेव गम्यते, इत्याह—**नित्यग्रहणमित्यादि**। गतिकौटिल्यं विषयः। तत्र यङो नियमोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। **गतिवचनादित्यादिना** नियमस्य प्रयोजनं दर्शयति। **न त्वित्यादिना** तद्व्यवच्छेद्यम्। नित्यम् = सर्वकालं गतिवचनात् कौटिल्य एव भवति, न तु कदाचित् क्रियासमभिहारे। तेन **भृशं क्रामतीति** क्रियासमभिहारे पूर्वेण प्राप्तो यङ् न भवति ॥ २३ ॥

**लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्**॥ 'लुप्लृ छेदने', 'षद्लृ विशरणगत्यवसादनेषु', 'अभ्र वभ्र चर-गत्यर्थाः', 'जप जल्प व्यक्तायां वाचि' 'जभ जृभी गात्रविनामे', 'दह भस्मीकरणे', 'दंश दंशने', 'गॄ निगरणे'। **धात्वर्थगर्हायामित्यनेन** भावगर्हायामित्यस्यार्थमाह। **गर्हितं लुम्पतीति**। गर्हितमिति क्रियाविशेषणमेतत्। तेन

**पदमञ्जरी**

नित्यग्रहणमनर्थकम्, अनभिधानादेव वाक्यं न भविष्यति, न हि चंक्रम्यत इति वृत्तेरर्थं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम्; संशयो हि वाक्याद्भवति—किं गतिकौटिल्यम्? उत वक्रहृदयत्वनिबन्धनं जिह्माचरण-मिति? वृत्तौ तु गतिकौटिल्यमेव नियतं गम्यते, कौटिल्यमात्रप्रतिपादने च वाक्यं निवारयितुमशक्यमनिष्टं चात आह—**नित्यग्रहणं विषयनियमार्थमिति**। गतिकौटिल्यं विषयः; तत्रैव यङ् यथा स्यादित्येवमर्थमित्यर्थः, तदाह—**गतिवचनान्नित्यं कौटिल्य एव भवतीति**। व्यवच्छेद्यं दर्शयति—**न तु क्रियासमभिहार इति**। ननु यथा 'वडवाया वृषे वाच्ये' इत्यपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, यथा वा 'ञीतः क्त' भूते प्राप्तस्ततोऽपकृष्य वर्त्तमाने विधीयते, एवमत्रापि धातुमात्रात्क्रियासमभिहारे यङ् विहितः, गतिवचनात् तु कौटिल्य इति? तक्रकौडिन्यन्या-येनैव बाधः सिद्धः। यथा वा विवक्षितार्थानभिधानाद्वाक्यं न भवति तथा समभिहारानवगमादत्र प्रत्ययो न भविष्यति। अथैवमपि वचनापेक्षा? वाक्यनिवृत्तावपि वचनमपेक्षस्व! तदेतन्नित्यग्रहणं चिन्त्यप्रयोजनम् ॥२३॥

**लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्**॥ 'लुप्लृ च्छेदने', ( धा० पा० १४३१ ) 'षद्लृ विशरण-गत्यवसादनेषु' ( धा० पा० १४२७ )। 'आङः सादः पद्यर्थे' ( धा० पा० १८३१ ) इत्यस्य तु चौरादिकणिजन्तस्य एकाच इत्यस्यानुवृत्तेरग्रहणम्। 'चर गत्यर्थः', ( धा० पा० ५५९ ) 'जप जल्प व्यक्तायां वाचि', ( धा० पा० ३९७, ३९८ ) 'जभी जृभी गात्रविनामे', ( धा० पा० ३८८, ३८९ ) 'दह भस्मीकरणे', ( धा० पा० ९९१ ) 'दन्श दशने' ( धा० पा० ९८९ )। अनुनासिकलोपनिर्देशो यङ्लुक्यप्यनुनासिकलोपार्थः—दन्दशीतीति। 'गॄ निगरणे' ( धा० पा० १४१० ) तुदादिः, 'गॄ शब्दे' ( धा० पा० १४९८ ) क्र्यादिः, तत्राकारान्तविकरणेन साहचर्यादाद्यस्य ग्रहणमित्येके। द्वयोरपीत्यपरे। **धात्वर्थगर्हायामिति**। भावशब्दो धात्वर्थे वर्त्तत इति दर्शयति।

**भावबोधिनी**

नित्यम्—इसका ग्रहण विषय का नियम करने के लिये है—गमनार्थक धातु से नित्य कुटिलता अर्थ में ही यङ् होता है, क्रियासमभिहार में नहीं। अतः—भृशं क्रामति। [ यहाँ पूर्व सूत्र से यङ् नहीं होता है। ] ॥ २३ ॥

लुप, सद, चर, जप, जभ, दह, दश और गॄ—इन धातुओं से भावगर्हा=धात्वर्थ की गर्हा=निन्दा में यङ्

**गर्हितं लुम्पति लोलुप्यते। एवम्—सासद्यते। चञ्चूर्यते। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। निजेगिल्यते।**

**भावगर्हायामिति किम्? साधु जपति। भावग्रहणं किम्? साधनगर्हायां मा भूत् मन्त्रं जपति वृषलः।**

**न्यासः**

भावगर्हात्र गम्यते। गर्हितत्वं छेदनस्य निरर्थकत्वात्, दोषदुष्टत्वाच्च। एवमुत्तरत्रापि गर्हितत्वं वेदितव्यम्। **चञ्चूर्यते इति**। 'चरफलोश्च' इति नुक्। 'उत्परस्यातः' इत्युत्त्वम्, 'हलि च' इति दीर्घः। **जञ्जप्यते इति**। 'जपजभ' इत्यादिना नुक्। दंशेरनुनासिकलोपं कृत्वा निर्देशो ज्ञापयति—यङ्लुक्यप्यनुनासिकलोपो भवतीति—दंदशीति। **निजेगिल्यते इति**। 'ऋत इद्धातोः' इतीत्त्वम्, रपरत्वम्, द्विर्वचनम्। गिर्यशब्दस्य रेफयकारयोस्तु हलादिशेषेण निवृत्तिः, पूर्ववद् गुणः, 'ग्रो यङि' इति लत्वम्।

**साधु जपतीति**। नात्र धात्वर्थस्य गर्हा, किं तर्हि? प्रशंसा। **मन्त्रं जपति वृषल इति**। अत्र साधनस्य

**पदमञ्जरी**

**गर्हितमिति** क्रियाविशेषणम्, तेन भावगर्हाऽत्र गम्यते। गर्हितत्वं तु छेदनस्य, निषिद्धतृणादिविषयत्वात्, 'लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः' (मनु० ४.७१) इति। एवमुत्तरत्रापि यथासम्भवं गर्हितत्वं भेदेन द्रष्टव्यम्। **चञ्चूर्यते इति**। 'चरफलोश्च' इति नुक्, 'उत्परस्यातः', 'हलि च' इति दीर्घः। **जञ्जप्यते इत्यादौ** 'जपजभदहदशभञ्जपशां च' इति नुक्। **निजेगिल्यत इति**। 'ऋत इद्धातोः', रपरत्वम्, द्विर्वचनम्, अभ्यासस्य गुणः, जेगिर्य इति स्थिते 'ग्रो यङि' इति लत्वं च प्राप्नोति, 'हलि च' इति दीर्घश्च, तत्र दीर्घस्यासिद्धत्वाल्लत्वे कृते विहतनिमित्तत्वाद् दीर्घाभावः। अन्ये तु 'न मु ने' इत्यत्र नेति योगविभागेनासिद्धत्वं बाधित्वा दीर्घे कृते लत्वमिच्छन्ति, नात्राप्तवाक्यमस्ति।

**गर्हायामिति किमिति**। भावस्येत्येव तद्धर्मविशेषो लप्स्यते इति प्रश्नः। धर्मविशेषानुपादाने प्रशंसायामपि स्यादित्याह—**साधु जपतीति**। **जपति वृषलो मन्त्रमिति**। अत्र स्वरवर्णादिभ्रेषाभावाद्भावगर्हा नास्ति।

**भावबोधिनी**

प्रत्यय होता है। उदाहरण गर्हितं लुम्पति—लोलुप्यते। [ लुप् + यङ् द्वित्वादि कार्य, अभ्यास का गुण—लोलुप्य + लट्। खराब काटता है। ] इसी प्रकार—सासद्यते। [ गर्हितं सीदति, सद + यङ्। खराब ढंग से बैठता है। ] चञ्चूर्यते। [ गर्हितं चरति—इस अर्थ में—चर् + यङ्, द्वित्व हलादिशेष—चचर्य। "चरफलोश्च" ( पा० सू० ७.४.८७ ) से नुक् = न् आगम, 'न' का अनुस्वार, परसवर्ण ञ्—चञ्चर्य। "उत्परस्यातः" ( पा० सू० ७.४.८८ ) से 'अ' का 'उ', "हलि च" ( पा० सू० ८.२.७७ ) से दीर्घ—चञ्चूर्य + लट्। गलत चलता है। ] जञ्जप्यते। [ गर्हितं जपति—इस अर्थ में जप + यङ्, द्वित्वादिकार्य के "जप-जभ-दह-दशभञ्ज-पशाम्" ( पा० सू० ७.४.८५ ) से नुक् = न् आगम, अनुस्वार परसवर्ण ञ्—जञ्जप्य + लट्, खराब जपता है। ] जञ्जभ्यते। 'जभी गात्रविनामे' का रूप है—गर्हितं जभते—इस अर्थ में यङ्—जभ् + यङ्, द्वित्वादि कार्य "जपजभ" इत्यादि सूत्र से नुक् = न् आगम, अनुस्वार परसवर्ण—जञ्जभ्य + लट्। बुरी तरह शरीर को टेढ़ा करता है। ] दन्दह्यते। [ गर्हितं दहति—इस अर्थ में दह + यङ्, द्वित्वादि कार्य, ददह्य, "जप-जभदह" सूत्र से नुक् = न्, अनुस्वार परसवर्ण—दन्दह्य + लट्। बुरा जलाता है। ] दन्दश्यते। [ गर्हितं दशति—इस अर्थ में दश् + यङ्, सब प्रक्रिया पूर्ववत्। बुरे ढंग से काटता है। ] निजेगिल्यते। गर्हितं गिरति या गिलति—इस अर्थ में 'गॄ' + यङ्, "ऋत इद्धातोः" ( पा० सू० ७.१.१०० ) से 'ऋ' का 'इ' रपर—गिर्य, द्वित्व, हलादिशेष, "कुहोश्चुः" ग का ज, अभ्यास का गुण जेगिर्य, "ग्रो यङि" ( पा० सू० ८.२.२० ) से रेफ का ल्, नि उपसर्ग—निजेगिल्य + लट्। बुरे ढंग से खाता है। ]

भावगर्हा = धात्वर्थ की निन्दा में—इसका क्या प्रयोजन है? साधु जपति। [ अच्छा जप करता है। यहाँ निन्दा नहीं, प्रशंसा प्रतीत हो रही है अतः यङ् नहीं होता है। ] भाव का ग्रहण विषय का नियम करने के लिये है? साधन = होने पर न हो—मन्त्रं जपति वृषलः। ] शूद्र मन्त्र जपता है। यहाँ वृषल = साधन कर्तृकारक है। उसका जाप करना

**नित्यग्रहणं विषयनियमार्थमनुवर्त्तते-एतेभ्यो नित्यं भावगर्हायामेव भवति, न तु क्रियासमभिहारे । भृशं लुम्पति॥**

**६४४. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥ २५ ॥ (२५६३)**

**सत्यादिभ्यश्चूर्णपर्यन्तेभ्यः, चुरादिभ्यश्च णिच् प्रत्ययो भवति । सत्यमाचष्टे सत्यापयति ।**

*** अर्थवेदसत्यानामापुग्वक्तव्यः * ( म० भा० ३.१.२५ वा० १ ) अर्थमाचष्टे अर्थापयति— वेदापयति । आपुग्वचनसामर्थ्याट्टिलोपो न भवति ( म० भा० ) । पाशाद्विमोचने— विपाशयति । रूपाद्दर्शने—रूपयति ।**

**न्यासः**

वृषलस्य गर्हा गम्यते; वृषलस्य = शूद्रस्य वैदिकमन्त्रजाप्यं प्रत्यनधिकारात् ॥ २४ ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ॥ चुरादिभ्योऽन्येषामिह ग्रहणं प्रपञ्चार्थम्; 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति सिद्धत्वात् ।

**अथर्ववेदेत्यादि** । वक्तव्यशब्दस्य व्याख्येयमित्यर्थः । व्याख्यानं तु—प्रातिपदिकाद्धात्वर्थे बहुलमिति कार्यान्तरविधानार्थाद् बहुलग्रहणादेषां णिच्सन्नियोगेनापुग् भवतीति । सत्यशब्दस्य तु 'सत्याप' इत्यत एव निपातनादापुग् भवतीति वेदितव्यम् । **विपाशयतीति** । पाशं विमोचयतीत्यर्थः । **निरूपयतीति** । रूपं पश्यती-

**पदमञ्जरी**

वैदिकमन्त्रजपं प्रति शूद्रस्यानधिकारात्तु साधनभावे गर्हितः, यस्य खल्वीदृशी गतिः—'शूद्रस्य वेदमुपशृण्वतस्त्र-पुजतुभ्यां श्रोत्रप्रतिपूरणम् उच्चारणे जिह्वाच्छेदः, धारणे शरीरभेदः' इति नासौ जपितुमर्हति । **नित्यग्रहणमित्यादि** । पूर्ववदेतद्व्याख्येयम् ॥ २४ ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्योणिच्** ॥ सत्यापेत्यकार उच्चारणार्थः । **सत्यमाचष्ट इति** । ननु भाष्ये सत्यस्य कृञ्यापुक्, सत्यशब्दात्कृञि करोत्यर्थे णिज्भवति आपुक्च, सत्यं करोति सत्यापयतीत्युक्तम् ? सत्यम्; कृञ्ग्रहणमनार्षम्, प्रदर्शनार्थो वा करोतिर्द्रष्टव्य इति मन्यते ।

**आपुग्वक्तव्य इति** । आपुग्वचनसामर्थ्याट्टिलोपो न भवति । क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते । अथ कथं पुनः शब्दापयेदिति ? छन्दोवदृषयः कुर्वन्ति । एतेन प्रक्षालापयेदिति **गृह्यप्रयोगो व्याख्यातः** । **पाशाद्विमोचने इति** । प्रायिकोऽयमर्थनिर्देशः; अन्यत्रापि भवति; अन्यथा विपाशतीति विशब्दस्य प्रयोगो

**भावबोधिनी**

कारक की निन्दा प्रतीत है । अतः कर्ता की निन्दा है, धात्वर्थ क्रिया की नहीं । यङ् नहीं होता है । ]

[ इस सूत्र में भी 'नित्यम्' का सम्बन्ध है उस ] 'नित्यम्' का ग्रहण विषय का नियम करने के लिये अनुवृत्त होता है—इन लुप आदि आठ धातुओं से नित्य भावगर्हा में ही यङ् होता है, क्रिया-समभिहार में नहीं । भृशं लुम्पति । इस अर्थ में यङ् नहीं होता है । ] ॥ २४ ॥

"सत्याप, पाश, रूप, वीणा, तूल, श्लोक, सेना, लोम, त्वच, वर्म, वर्ण, और चूर्ण—पर्यन्त धातुओं से तथा चुरादिगण में पठित धातुओं से णिच् प्रत्यय होता है । [ इनमें सत्याप आदि से विभिन्न अर्थों में और चुरादिगणीय से स्वार्थ में णिच् होता है । ] उदाहरण—सत्यम् आचष्टे—सत्यापयति । [ सत्याप + णिच् = इ, सनाद्यन्त मान कर धातुसंज्ञा लट्, गुण, अय् आदेश—सत्यापयति । [ भाष्य में सत्यं करोति—यह अर्थ लिखा गया है । ]

* अर्थ, वेद तथा सत्य —इनसे णिच् पर रहते आपुक् का आगम कहना चाहिये । * उदाहरण—अर्थम् आचष्टे—इस विग्रह में अर्थम् + णिच् धातुसंज्ञा, विभक्तिलुक्, आपुक् = आप् का आगम—अर्थाप् + इ + लट् आदि करने पर—अर्थापयति । ] वेदम् आचष्टे—इसमें—वेदापयति । [ वेदम् + णिच्, विभक्ति लुक्, आपुक् आगम,—वेदापि + लट् ] आपुक्—इस वचन के सामर्थ्य के टिलोप नहीं होता है । [ अन्यथा टिलोप के बाद जितना इष्ट होता उतना ही आगम किया जाता । ] 'पाश' शब्द से विमोचन अर्थ में णिच् होता है—विपाशयति । [ पाशं विमोचयति, बन्धन छुड़वाता है, यह अर्थ है । ] 'रूप' शब्द से दर्शन अर्थ में णिच्—रूपयति [ रूपं पश्यति अथवा दर्शयति, रूप देखता है या दिखाता

**वीणयोपगायति=उपवीणयति । तूलेनानुकुष्णाति=अनुतूलयति । श्लोकैरुपस्तौति=उपश्लोकयति । सेनयाऽभियाति= अभिषेणयति । लोमान्यनुमार्ष्टि=अनुलोमयति । त्वचं गृह्णाति=त्वचयति । अकारान्तस्त्वचशब्दः । वर्मणा संनह्यति=संवर्मयति । वर्णं गृह्णाति=वर्णयति । चूर्णैरवध्वंसयति=अवचूर्णयति ।**

**चुरादिभ्यः स्वार्थे—चोरयति । चिन्तयति । स्वाभाविकत्वादर्थाभिधानस्य यथास्वम्=यथायथं प्रत्ययार्था निर्दिश्यन्ते ॥**

**न्यासः**

त्यर्थः । **अभिषेणयतीति** । 'उपसर्गात्' इत्यादिना षत्वम् । **त्वचयतीति** । ननु च त्वच्शब्दो हलन्तः, तस्मात् णिचि 'णाविष्ठवत्' इतीष्ठवद्भावाट्टिलोपे प्राप्ते तत्र 'प्रकृत्यैकाच्' इति प्रकृतिवद्भावे कृते 'अत उपधायाः' इति वृद्धिः प्राप्नोति, तत् कथं त्वचयतीति हि भवितव्यमित्याह—**अकारान्तोऽयं त्वचशब्द इति** । शब्दान्तरमेवेदमकारान्तं त्वच्शब्दसमानार्थम् । अत एव त्वच इत्यकारान्तस्य सूत्रे निर्देशः, तस्याकारस्य लोपे कृते स्थानिवद्भावाद् वृद्धिर्न भवति । **चुरादिभ्यः स्वार्थे इति** । स्तेयादौ । ननु च नेह सूत्र आख्यानादयोऽर्था उपात्ताः, तत् कथं ते लभ्यन्ते ? अलब्धाश्च कथं निर्दिश्यन्ते ? इत्याह—**स्वाभाविकत्वादित्यादि** । शब्दानामर्थाभिधानं स्वाभाविकम्, न तु वाचनिकम्; तस्याशक्यत्वादिति प्रागेवोक्तम् । तस्मात् स्वभावत एव यो यस्यार्थस्याभिधायकः स सूत्रानुपात्तोऽप्यर्थो युक्त एव निर्देष्टुम् । **यथायथमिति** । यो यस्यात्मीय इत्यर्थः ॥ २५ ॥

**पदमञ्जरी**

न स्यात्, विशब्दविशिष्टस्यैव मोचनस्य ण्यर्थत्वात्, यथाचारक्यच्याङः प्रयोगो न भवति । एवमुपवीणयतीत्यादावपि द्रष्टव्यम् । तूलम्=तृणाग्रं तेनानुकृष्णाति=अनुघट्टयतीत्यर्थः । **अनुगृह्णातीति** तु पाठे न समीचीनोऽर्थः । **अभिषेणयतीति** । 'उपसर्गात् सुनोति' इत्यादिना षत्वम् । **अकारान्तस्त्वचशब्द इति** । 'त्वच संवरणे' (धा० पा० १३०१) इत्यस्माद्धातोः 'पुंसि संज्ञायाम्' इति घः । **अवध्वंसयतीति** । विकिरतीत्यर्थः । 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे सत्यस्यापुग्विधानार्थं वचनमन्येषां प्रपञ्चार्थम् । मालिन्यो ह्युपश्लोकयन्तीत्यादौ सापेक्षेभ्यो यथा स्यादित्येवमर्थं वा । कथं पुनर्विमोचनादिरर्थोऽनिर्दिष्टो लभ्यत इत्यत आह—**स्वाभाविकत्वादिति । प्रत्ययार्थो निर्दिश्यत इति** । सूत्रकारेणानिर्दिष्टोऽपि प्रत्ययार्थो व्याख्याकारैर्निर्दिश्यत इत्यर्थः ॥२५॥

**भावबोधिनी**

है । ] वीणया उपगायति—उपवीणयति । [ वीणा से गाता है । उपवीणा + णिच्, इष्ठवद्भाव के कारण आलोप करके गुण अयादेश—उपवीणयति । ] तूलेन अनुकुष्णाति—अनुतूलयति । [ रुई से कान का मैल आदि निकालता है । अनुतूल + णिच् । ] श्लोकैः उपस्तौति—उपश्लोकयति । [ श्लोकों से स्तुति करता है । उपश्लोक + णिच् ] सेनया अभियाति—अभिषेणयति । [सेना के साथ आक्रमण करता है । सेना + णिच्, आलोप करने पर सेनि + लट् तिप् शप् गुण, अय् आदेश—सेनयति, 'अति' के साथ योग करने पर "उपसर्गात् सुनोति-सुवतिस्यतिस्तौति-स्तोभति-स्था—सेनय—सेधसिचसञ्जसञ्जाम्" ( पा. सू. ८.३.६५ ) से षत्व करने पर 'न' का भी 'ण' हो जाने से—अभिषेणयति । ] लोमानि अनुमार्ष्टि—अनुलोमयति । [ रोम साफ करता है । अनुलोम + णिच् । ] त्वचं गृह्णाति—त्वचयति । [ यहाँ चकारान्त त्वच् नहीं है अपि तु अकारान्त एक दूसरा ही शब्द है । [ त्वच=दालचीनी एक मसाला होता है । उसको पकड़ता है, लेता है । त्वचम् + णिच्, अलोप—त्वचि + लट् । ] वर्मणा सन्नह्यति—संवर्मयति । [ कवच के साथ तैयार होता है । संवर्म + णिच् ] वर्णं गृह्णाति—वर्णयति । [ रंग पकड़ता है । वर्ण + णिच् ] । चूर्णैः अवध्वंसयति—अवचूर्णयति । [ चूर्ण से किसी वस्तु को नष्ट करता है । अवचूर्ण + णिच् ] ।

चुरादिगणीय धातुओं से स्वार्थ में णिच् होता है चोरयति । [ 'चुर्' धातु का अर्थ चुराना है । चुर् + णिच्, उपधागुण, धातुसंज्ञा लट् आदि करने पर चोरि+अ+ति, गुण, अयादेश चोरयति । चिन्तयति [ स्मरण करता है । "चिति स्मृत्याम्" धातु के 'इ' की इत्संज्ञा होने से "इदितो नुम् धातोः" ( पा. सू. ७.१.५८ ) से नुम् अनुस्वार परसवर्ण—चिन्त् + णिच् ] [ शंका यह है कि पहले आख्यान, विमोचन आदि विशेष अर्थ कहे गये हैं परन्तु सूत्र में कोई उल्लेख नहीं है । अतः इनकी प्रामाणिकता क्या है ? ] अर्थ का अभिधान स्वाभाविक है अतः जिसका जो अर्थ होता है, उसका वैसा उल्लेख किया गया है । [ अतः वह पूर्वोक्त अर्थसंकेत अप्रामाणिक नहीं है । ] ॥ २५ ॥

## ६४५. हेतुमति च ।। २६ ।। (२५७६)

**हेतुः स्वतन्त्रस्य (कर्तुः) प्रयोजकः, तदीयो व्यापारः प्रेषणादिलक्षणो हेतुमान्, तस्मिन्नभिधेये धातोर्णिच् प्रत्ययो भवति । कटं कारयति । आदेनं पाचयति ।**

### न्यासः

**हेतुमति च ॥** फलसाधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति तस्य यदीह ग्रहणं स्यादिहापि णिच् स्यात् —अध्ययनेन वसतीति । तस्मात् पारिभाषिकस्य हेतोर्ग्रहणमिति दर्शयितुमाह—**हेतुः स्वतन्त्रस्य प्रयोजक इति** । स पुनर्यस्य 'तत्प्रयोजको हेतुश्च' इति हेतुसंज्ञा विहिता । कुतः पुनरेतदवगम्यते ? हेतुमद्ग्रहणात्, पूर्वसूत्रे चुरादिग्रहणाच्च । इह हि 'करणे' इति वर्त्तते, धात्वधिकाराच्च धातोः करणे क्रियायां णिच्प्रत्ययेन भवितव्यम् । यदि च लौकिकस्य हेतोर्ग्रहणं स्याद् 'हेतुमति' इति करणविशेषणं न कुर्यात्; व्यावर्त्त्याभावात्— सर्वैव हि क्रिया हेतुमतीति, पूर्वसूत्रे च चुरादिग्रहणं न कुर्यात्, चुरादयोऽपि धातव एव । तदर्थश्च क्रियालक्षण एव । 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णेभ्यश्च णिच्' इत्येकयोगं कुर्यात् । एवं हि चकाराद्धातोः प्रकृतत्वात् करणे प्रत्ययो भविष्यतीति विज्ञास्यते । सोऽयमेकयोगेनैव सिद्धे यत् पृथग्योगमारभते, पूर्वसूत्रे च चुरादिग्रहणं करोति, ततोऽवसीयते पारिभाषिकस्य हेतोर्ग्रहणमिति । **तदीय इति** । तत्सम्बन्धी क्रियात्मको व्यापारः । कः पुनरसावित्यत आह—**प्रेषणेत्यादि** । भृत्यादेर्निकृष्टस्य क्वचिदर्थे नियोजनम् = आदेशः, प्रेषणम् । गुर्वादेराराध्यस्य सत्कारपूर्वव्यापारणम् = अध्येषणम् । आदिशब्देन तत्समर्थाचरणस्य । एतत् प्रेषणादिकं लक्षणं स्वभावो यस्य स तथोक्तः । ननु च चत्वारोऽत्र हेतुमन्तः सम्भवन्ति—प्रयोज्यव्यापारोऽधिश्रयणादिः, सर्वसाधनसाध्यश्च प्रधानक्रिया विक्लेदादिः, प्रयोजकव्यापारश्च प्रेषणाध्येषणादिः । चतुर्णामपि ह्येषां हेतुना सह सम्बन्धोऽस्ति । तत्र प्रथमस्य तदधिष्ठितस्य प्रवर्त्तनात्, तदभिप्रायसम्पादनाच्च । द्वितीयस्य सम्बन्धाय हेतोः प्रवृत्तेः । तृतीयस्य

### पदमञ्जरी

**हेतुमति च ॥** लोके फलसाधनयोग्यः पदार्थो हेतुरित्युच्यते, तस्य ग्रहणे अध्ययनेन वसतीत्यत्रापि प्रसज्येत, हेतुमद्ग्रहणं चानर्थकं स्यात्, कथम् ? 'करणे' इति वर्त्तते, तस्य विशेषणं हेतुमतीति, करणं क्रिया, सर्वैव च क्रिया हेतुमतीति किं विशेषणोपादानेन ? ननु शब्दोपात्ते हेतौ यथा स्यादित्येवमर्थमेतत्स्याद्यथा 'समस्तृतीयायुक्तात्' इत्यत्र श्रूयमाणायां तृतीयायामात्मनेपदं यथा स्यात्तदर्थयोगमात्रे मा भूदित्येवमर्थं तृतीयायुक्तग्रहणम् । एवं तर्ह्यसति विरोधे 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तमिति' ( व्या० परि० ६ ) 'तत्प्रयोजको हेतुश्च' इति यस्य संज्ञा विहिता तस्यैव पारिभाषिकस्य ग्रहणमिति मत्वाऽऽह—**हेतुः स्वतन्त्रस्य कर्त्तुः प्रयोजक इति । तदीयो व्यापार इति** । प्रवर्त्तना । तस्यास्त्ववान्तरभेदमाह—**प्रेषणाध्येषणादिलक्षण इति** । भृत्यादेर्निकृष्टस्य प्रवर्त्तना = प्रेषणम्, आज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्त्तना = अध्येषणम्, प्रार्थनेत्यर्थः । आदिशब्देन तत्स्थमर्थाचरणं गृह्यते, तच्च बहुधा भिद्यते—अनुमतिः, उपदेशः, अनुग्रह इति । तत्र यस्यानुमतिमन्तरेणार्थो न निर्वर्त्तते तस्य राजादेरनुमत्या प्रयोजकत्वम्, वैद्यादेस्तु 'मुस्तापर्पटकं पिबेज्ज्वरितः' इत्याद्युपदेशेन प्रवर्त्तकत्वम्, यः पुनः

### भावबोधिनी

हेतु = स्वतन्त्र कर्ता का प्रयोजक होता है, उसका प्रेषणादिरूप [ प्रेरित करना आदि व्यापार हेतुमान् [ हेतुरूप कर्त्तावाला ] होता है, उसके वाच्य रहने पर ( मूल ) धातु से णिच् होता है। उदा० कटं कारयति । [ चटाई बनवाता है। कटं करोति–, तं प्रेरयति—-इस विग्रह में' 'कृ' + णिच्, ऋ की वृद्धि, रपर —कारि, ''सनाद्यन्ता धातवः'' ( पा. सू. ३. .३२ ) से धातुसंज्ञा, लट् तिप्—कारि + ति, शप् = अ, 'इ' का गुण, 'ए' का 'अय्' आदेश—कारयति ।] ओदनं पाचयति । [ चावल पकवाता है । कश्चित् ओदनं पचति तं प्रेरयति —इस विग्रह में पच् + णिच् उपधा की वृद्धि — पाचि । धातुसंज्ञा लट् आदि पूर्वोक्त कार्य करने पर—पाचयति । ]

**न्यासः**

तत्प्रवर्त्तितेन प्रयोज्येनाधिश्रयणादिक्रियां कुर्वाणेन साधनात्। चतुर्थस्य तु तन्निर्वर्त्तितत्वात् तत्र च समवायात्। तत्र 'करणे' इत्यधिकारादयुक्तं प्रयोज्यस्य ग्रहणम्, इतरेषामेव ग्रहणं क्रियात्मकत्वात् सर्वेषां न्याय्यम्, तत् कस्मात् प्रयोजकव्यापार एव गृह्यते? सत्यपि सर्वेषां क्रियात्मकत्वे तदग्रहणस्यैव न्याय्यत्वात्। तथा हि—हेतुरिति कारकविशेषस्यैषा संज्ञा, कारकञ्च क्रियानिमित्तम्, तच्च तस्य निमित्तं भवति यद् यस्मिन् सत्येव भवति; असति तु तस्मिन् न भवत्येव। न च प्रयोज्यव्यापारः प्रयोजके सत्येव भवति; विनापि तेनार्थित्वादेव प्रयोज्यस्याधिश्रयणादिव्यापारस्य सम्भवात्। सत्यपि च तस्मिन् प्रयुक्तस्यापि स्वार्थमपश्यतः प्रयोज्यस्याप्रवृत्तेः। तस्मात् प्रयोज्यस्य व्यापारं प्रति प्रयोजकस्य कारकत्वाभावाद्धेतुत्वं नास्तीति न स हेतुमान्। एतेन विक्लेदनादिरपि प्रधानक्रियाविशेषो हेतुमान्न भवतीति वेदितव्यम्। भवतु नाम तौ प्रति कथञ्चित् तस्य हेतुत्वम्, तथापि न तयोर्हेतुमत्त्वं युक्तम्; यस्माद्—

**पदमञ्जरी**

केनचिज्जिघांसितं पलायमानं निरुणद्धि, निरुद्धश्च हन्यते, तत्र निरोद्धा हन्तुरनुग्रहं करोतीत्यनुग्रहेण तस्य प्रवर्त्तकत्वम्। सर्वश्चायं विशेषः प्रकरणादिगम्यः। सर्वत्रानुगतं प्रवर्त्तमानमेव तु णिजर्थः। ननु यथा पितृमानित्युक्ते यं प्रति पितृत्वं स एव गम्यते तथात्रापि यं प्रति हेतुत्वं स एव हेतुमानिति युक्तम्, कञ्च प्रति हेतुत्वम्? 'तत्प्रयोजकम्' इति वचनात्कर्त्तारं प्रतीति प्राप्तं 'कारके' इत्यधिकारात्क्रियापेक्षत्वाच्च कारकभावस्य यस्मिन्व्यापारे प्रयोजकरूपेणोपयुज्यते तमेव प्रति, स च प्रयोज्यव्यापारोऽधिश्रयणादिः सर्वसाधनसाध्यो विक्लित्यादिर्वेति तयोरेव हेतुमत्त्वं युक्तम्, न पुनः प्रयोजकव्यापारस्य। न हि तत्रासौ प्रयोजकरूपेणोपयुज्यते, किं तर्हि? कर्तृरूपेण, यथा काष्ठस्य पाकापेक्षं करणत्वं न तु ज्वलनापेक्षम्, तदपेक्षं तु कर्तृत्वमेव? उच्यते—णिचः प्रकृतिभूतेन धातुनैवाभिधीयते सोऽर्थस्तेन फलाभावात्तत्र णिज्न भविष्यति। ननु पचतीत्युक्ते न ज्ञायते—किं स्वयमेव पचति? उतान्येन प्रवर्त्तितः? इत्यतोऽन्येन प्रवर्त्तितस्येयं प्रवृत्तिरिति द्योतनाय णिज् भवतु? एवं तर्हि हेतोरिति वक्तव्यम्, 'करणे' इत्येव, हेतोः करणे व्यापारे अभिधेये णिज् भवतीत्यर्थः। तथा तु न कृतम्। का गतिरिदानीं सूत्रस्य? अभिधानस्वाभाव्यमत्र हेतुः, स्वभावतो हि णिच् प्रत्ययः प्रयोजकव्यापारमाचष्टे। तेन पाकाद्यपेक्षया यो लब्धहेतुव्यपदेशः स हेतुत्वेनोपलक्षितो यस्यास्तीत्येवं प्रयोजकव्यापार एव मतुपोच्यते। अत्र द्वौ पक्षौ सम्भवतः—हेतुमतीति प्रकृत्यर्थनिर्द्देशः—हेतुमति यो धातुर्वर्तत इति, प्रत्ययार्थो वा—हेतुमति करणेऽभिधेये णिज् भवतीति।

ननु पचति पाचयतीति च व्यक्तमर्थान्तरं गम्यते, तत्कथमस्य प्रकृत्यर्थत्वं शङ्क्यते? उच्यते—इह हि कः पचेः प्रधानार्थः? यासौ तण्डुलानां विक्लित्तिः, अधिश्रयणादीनां तु तादर्थ्यात्तदवच्छेदेन पच्यर्थता। यो हि पानार्थमुदकमाहरति, विक्रयार्थं च काष्ठान्याहरति, शीतं चापनेतुमग्निं समिन्धे नासौ पचतीत्युच्यते, तत्कस्य हेतोः? विक्लित्तिं प्रति तादर्थ्याभावात् तदवच्छेदाभावाच्च। अतस्तादर्थ्यादेवाधिश्रयणादीनां पच्यर्थता, तद्वत्प्रयोजकव्यापारोऽपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यति। णिच्प्रत्ययस्तु द्योतकः, तथा च योऽप्येकान्ते तूष्णीमासीनो भक्तबीजबलीवर्द्दैः प्रतिविधत्ते, स उच्यते—पञ्चभिर्हलैः कृषतीति। तदेवं पक्षद्वयसम्भवे यद्याद्यः पक्ष आश्रीयते ततो यथा प्रकृत्यभिहिते णिज् भवति, एवमुक्तप्रेषितादिशब्दाभिहितेऽपि स्याद्—उक्तः करोति, प्रेषितः करोतीति, हेतुमद्विषयत्वात्करोत्यर्थस्य, प्रत्ययार्थपक्षे तूक्तार्थत्वाण्णिजभावः? नैष दोषः; प्रयोजकव्यापारस्य द्योतनाय णिज्विधीयते तस्य स्वशब्देन द्योतितत्वाद् द्योत्याभावान्न भविष्यति। इह तर्हि पाचयत्योदनं देवदत्तो यज्ञदत्तेन, द्वयोः कर्त्रोर्लेनाभिधानं प्राप्नोति, धातुवाच्यव्यापारे हि कर्तरि लो भवति, पचिना च प्रयोजकव्यापारोऽप्यभिधीयते, प्रत्ययस्तु द्योतक इति धातुवाच्यव्यापारत्वसाम्यात् कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं

**न्यासः**

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥

इति वचनाद् भूमादिविशिष्टस्यार्थस्य सत्तायां मतुबादयः प्रत्यया विधीयन्ते, इह च नित्ययोगादन्ये भूमादयोऽर्था न सम्भवन्ति; अप्रतीतेः। न हि यथा गोमानित्यत्र बहुत्वं प्रतीयते, यथा च ककुदावर्त्तीत्यत्र च निन्दा, यथा च रूपवानित्यत्र प्रशंसा, यथा चोदरिणी कन्येत्यत्रातिशयः, तथा 'हेतुमति' इत्यत्र। संसर्गोऽपीह न सम्भाव्यते—संसर्गो हि संयोगः, स च द्रव्ययोरेव परस्परं सम्भवति, यथा—दण्डीत्यत्र दण्डपुरुषयोः। न च व्यापारो द्रव्यम्, अतो नास्ति केनचित् संसर्गः। तस्मान्नित्ययोगे एवायं मत्वर्थीयः, यथा—क्षीरिणो वृक्षा इति। न च प्रयोज्यव्यापारस्याधिश्रयणादेर्विक्लेदादेश्च हेतुना नित्ययोगोऽस्ति; उपरतेऽपि तस्मिन् प्रयोक्तरि तयोः सम्भवात्। सत्यपि तस्मिन् विरोधिसन्निधानात्, असम्भवाच्च। न चान्यतरासन्निधाने सम्बन्धो युज्यते; तस्य द्विष्ठत्वादिति। न तौ हेतुमन्तौ। प्रेषणादेस्तु प्रयोजको भवति निमित्तम्; तेन विना तदसम्भवात्, सति च तस्मिंस्तत् सम्भवात्; अतस्तं प्रति कारकत्वं तस्योपपद्यते। तेन तस्य हेतुसंज्ञा। नित्ययोगेऽपि मतुपो निमित्त-

**पदमञ्जरी**

प्राप्नोति-पाचयतो देवदत्तयज्ञदत्ताविति। प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्य ण्यर्थस्य प्राधान्यात्तस्य कर्त्तरि लकारः। इह च गमितो ग्रामं देवदत्तो यज्ञदत्तेनेति प्रयोजकव्यापारस्यापि गमिवाच्यत्वादव्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थानां कर्त्तरि क्तः प्राप्नोति, प्रयोज्यस्य तु कर्मत्वात्तत्रैवेष्यते। उक्तं हि 'ण्यन्ते कर्तुश्च कर्मणः' इति। इह च व्यतिच्छेदयन्ते, व्यतिभेदयन्ते—अव्यतिरिक्तो हिंसार्थ इति कृत्वा प्रयोजकव्यापारव्यतिहारविवक्षायामपि 'न गतिहिंसार्थेभ्यः' इति प्रतिषेधः प्राप्नोति।

तदेवमाद्ये पक्षे दोषदर्शनाद् द्वितीयं पक्षमाश्रित्याह—**तस्मिन्नभिधेय इति**। किं चान्वयव्यतिरेकाभ्यां शब्दार्थावसायः। न च पचति पठति गच्छतीत्यादावन्तरेण णिचं क्वचिदपि प्रयोजकव्यापारोऽवसीयते, उत्पन्ने तु णिचि प्रतीयते, अतस्तदर्थत्वमेव युक्तम्। पञ्चभिर्हलैः कृषतीत्यत्र त्वनेकार्थत्वाद्धातूनां कृषिरेव प्रतिविधानेऽपि वर्त्तत इति युक्तम्, न पुनस्तद्दर्शनेन सर्वत्र प्रकृत्यर्थत्वम्। नन्वत्रापि पक्षे पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र ण्यर्थस्य प्राधान्यात्तेन व्याप्यमानस्य प्रयोज्यस्य कर्मसञ्ज्ञा प्राप्नोति? गतिबुद्धिप्रत्यवसानार्थेति नियमान्न भविष्यति। इह तर्हि ग्रामं गमयति, ग्रामाय गमयतीति व्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थकर्मणि' इति द्वितीयाचतुर्थ्यौ न प्राप्नुतः? नैष दोषः; ग्रामोऽत्र गमेरेव कर्म, ग्रामकर्मकं गमनं कुर्विति प्रैषार्थः। इह तर्हि एधोदकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थे इति 'कृञः प्रतियत्ने' इति षष्ठी न प्राप्नोति, सुट् तु करोतिधातुमात्राश्रयत्वाण्णिजुत्पत्तावपि तस्य रूपस्य भावात्सिद्धयति? अत्राप्येधोदककर्मके करोत्यर्थे प्रयुज्यते इति षष्ठी भविष्यति। इह तर्हि अभिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति 'उपसर्गात्सुनोति' इति षत्वं न प्राप्नोति? अथात्राप्यभिषवं कुर्वित्युपसर्गविशिष्टे प्रकृत्यर्थे प्रयुक्तिरिति सिद्धं षत्वम्, यदा तु ण्यन्तेनैवोपसर्गस्य संबन्धस्तदा षत्वं भवति न वेति चिन्त्यम्। इह तर्हि भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्त्तरि कृद्योगलक्षणा षष्ठी न प्राप्नोति, अप्रधानत्वात्? तृतीयावद्भविष्यति, तद्यथा—पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्त्तर्यप्रधानेऽपि तृतीया भवति व्याप्तेस्तथा षष्ठ्यपि भविष्यति। अथेह कथं णिज् भवति—भिक्षा वासयन्ति, कारीषोग्निरध्यापयतीति? कथं च न स्यात्? अचेतनत्वात्, चेतनावत एतद्भवति—प्रेषणम्, अध्येषणमिति? नैष दोषः; नावश्यं स एव वासं प्रयोजयति य आह—उष्यतामिति, योऽपि तूष्णीमासीनस्तत्समर्थमाचरति सोऽपि वासं प्रयुङ्क्ते, भिक्षाश्च प्रचुराश्च व्यञ्जनवत्यश्च लभ्यमाना वासं प्रयुञ्जते। तथा कारीषोऽग्निर्निर्वात एकान्ते सुप्रज्वलितः शीतकृतमध्ययनविरोधिनमुपद्रवमपनयन् अध्ययनेऽनुकूलो भवति। तत्र यथा—अनुमतिरुपदेशोऽनुग्रहः—इत्येतेषु णिज् भवति तथाऽत्रापि भविष्यति। यद्यप्यनुमत्यादिषु प्रयोज्यव्यापारोद्देशेन प्रवृत्तिः, इह तु न तथा; तथाप्यनुकूलाचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते। इह कश्चित्कञ्चिदाह—पृच्छतु मां भवान्, अनुयुङ्क्तां मां भवानिति, तत्र प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजक इति तद्व्यापारे णिच् प्राप्नोति,

**❀ तत्करोतीत्युपसंख्यानं सूत्रयतीत्याद्यर्थम् ❀ ( म० भा० ३.१.२६ वा० ७ ) सूत्रं करोति—सूत्रयति ।**

**न्यासः**

मस्त्येव; उत्पत्तेः प्रभृत्या विनाशात्, प्रेषणादेर्व्यापारस्य हेतौ समवायात् । तस्मात् स एव हेतुमानिति तस्यैव ग्रहणं न्याय्यम् । **तस्मिन्नभिधेय इति** । प्रत्ययेन वाच्ये । एतेन प्रत्ययार्थविशेषणं हेतुमद्ग्रहणं न प्रकृत्यर्थविशेषणमिति दर्शयति । तेन प्रकृत्यर्थविशेषणपक्षे ये दोषास्ते तत्पक्षानङ्गीकारेणैव निरस्ताः । येऽपि प्रत्ययार्थविशेषणपक्षे दोषाः सम्भाव्यन्ते, ते **भाष्ये** एवोद्भाविताः, परिहृताश्च । इह त्वतिग्रन्थविस्तरभयान्न लिखिताः ।

अथेह कथं णिज्भवति —भिक्षा वासयति, कारीषोऽग्निरध्यापयतीति ? कथञ्च न स्यात् ? अचेतनत्वात्, चेतनावतो ह्येतद् भवति प्रेषणमध्येषणं वा ? नैष दोषः; उक्तं ह्येतत्–'आदिग्रहणेन तत्समर्थाचरणस्य ग्रहणम्' इति । तच्छब्देन यत्र वसनादौ प्रयोज्यो नियुज्यते तत्सम्बध्यते तत्र वासादौ । ये समर्थाः = योग्याः, अनुकूलास्तृप्तिविशेषादयस्तेषामाचरणं सम्पादनम् = तत्समर्थाचरणम्, तदपि प्रयोजकव्यापार एव । भिक्षा हि प्रचुरतरव्यञ्जनवत्यो लभ्यमाना रसनानुकूलं तृप्तिविशेषमुपजनयन्त्येव । कारीषोऽग्निरपि निर्वातप्रदेशेषु सुप्रज्वलितोऽध्ययनविरोधिनं शीतादिकृतमुपद्रवमुपशमयन्नध्ययनानुकूलं सामर्थ्यमादधाति । अतस्तयोरपि युक्तं प्रयोजकत्वम् ।

**तत्करोतीत्यादि** । तदिति कर्मपदम् । एतत् करोतीत्यर्थनिर्देशः । तदिति कर्मणः प्रातिपदिकात् करोतीत्यस्मिन्नर्थे णिच उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः । किमर्थमित्याह—**सूत्रयतीत्याद्यर्थमिति** । तत्रेदं प्रतिपादनम् —चुरादौ 'प्रातिपदिकाद्धात्वर्थे' इत्यस्य 'तत्करोति' इत्ययं प्रपञ्चः पठ्यते । तेन सूत्रादिभ्यः प्रातिपदि-

**पदमञ्जरी**

एकविषयत्वाच्च णिचो लोडादीनां च पर्यायप्रसङ्गः ? नैष दोषः, कर्त्तुः प्रयोजको हेतुरित्युक्तम्, प्रयोज्यश्चात्र न कर्त्ता । न ह्यसौ सम्प्रति पृच्छति तूष्णीमास्ते तस्य निर्व्यापारत्वाद् कारकत्वमेव नास्ति कुतस्तद्विशेषः कर्तृत्वम् ? कर्तृत्वमेव हि तस्य विधीयते प्रश्नक्रियायां कर्त्ता भवेति, यथा—राजा भव युध्यस्वेति राजत्वमेव विधीयते तत्र तदेवं प्रयोज्योऽकर्तेति प्रयोजकोऽपि न हेतुः, किमिदानीं पूर्वमेव कर्त्तुः सतः प्रयोजको हेतुः ? यद्येवम्, व्यर्था प्रयुक्तिः । अथाप्युपरतिशङ्कया क्वचित्प्रयुक्तेरर्थवत्त्वं तथापि यत्राप्रवृत्तो बलादिना प्रवर्त्यते तत्र णिज् न प्राप्नोति ? न ब्रूमः—प्रवृत्तिप्रवर्त्तन एव णिजिति, किन्तु प्रवर्त्तितोऽपि प्रयोज्यो यत्र प्रवर्त्तत एव, न तु निवर्त्तते तत्र णिज् भवति । अनुवर्त्तमाना प्रयुक्तिः प्रयोज्यप्रवृत्तौ हेतुः, न मध्ये विच्छिन्ना । अतः प्रयोज्यप्रवृत्तिवेलायामपि बुद्धौ विपरिवर्त्तमाना सैव प्रवृत्तिहेतुस्तस्यामेव च दशायां णिज्वाच्या भवति । तदेवं प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्णिजर्थः, केवला तु लोडर्थ इति विवेकः । उक्तं च—

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड् विधीयते ।
सक्रियस्य यदा प्रैषस्तदा स विषयो णिचः ॥ ( वा० प० ३.७.१२६ ) इति ।

किञ्च —प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः, अनियतकर्तृका तु प्रयुक्तिर्णिजर्थः ।

**तत्करोतीत्युपसंख्यानमिति** । तदिति कर्मपरमेतत्, तेन द्वितीयान्तात्प्रत्ययः करोतीत्यत्र प्रकृत्यर्थमात्रं विवक्षितं न प्रत्ययार्थः, तेन ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च लो भवति । **सूत्रं करोति सूत्रयतीति** । इह व्याकरणस्य सूत्रं करोतीति वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते, तत्र व्यपदेशिवद्भावेन व्यतिरेकनिबन्धना षष्ठी, वृत्तौ तु व्याकरणं सूत्रयतीति प्रत्ययार्थभूतकरोत्यर्थाभिधायी सूत्रशब्दः सम्पद्यते । उक्तं हि

**भावबोधिनी**

❀ सूत्रयति आदि की सिद्धि के लिये 'तत् करोति = उसको करता है' इस अर्थ में णिच् कहना चाहिये । ❀ उदा० सूत्रं करोति—सूत्रयति । [ सूत्र बनाता है । सूत्रम् + णिच्, धातुसंज्ञा विभक्तिलुक्, इष्ठवद्भाव के कारण अलोपादि करने पर—सूत्रि + लट् ] ।

**❀ आख्यानात्कृतस्तदाचष्टे इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ❀** ( म० भा० ३.१.२६ वा० ८)। **आख्यानात्कृदन्ताण्णिज्वक्तव्यः, तदाचष्टे इत्येतस्मिन्नर्थे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च**

**न्यासः**

केभ्यः कर्मभ्यः करोत्यर्थे णिज् भवतीति। **'आख्यानात् कृतः'** **इत्यादिकं** वाक्यम् **आख्यानात् कृदन्तादित्यादिना** व्याचष्टे। आख्यायत इत्याख्यानम्। यत् किञ्चिदाख्यायते तत् सर्वं राजागमनादिकमपीहाख्यानमभिप्रेतम्, न तु संज्ञाभूतमेव कंसवधादिकम्। तस्य यो वाचकः शब्दः सोऽप्यभिधानेऽभिधेयोपचारादाख्यानमित्युच्यते। कृदिति प्रत्ययग्रहणम्, प्रत्ययग्रहणे च तदन्तविधिर्भवतीत्याह - **कृदन्तादित्यादि**। **वक्तव्य इति** व्याख्येय इत्यर्थः। **तदिति** कर्मपदमेतत्। **आचष्ट** इति प्रत्ययार्थः। **कृल्लुगिति**। येन कृता तदन्तमाख्यानमुच्यते तस्य लुग् भवतीत्यनेन वक्ष्यमाणेन सम्बन्धः। **प्रकृतिप्रत्यापत्तिरिति**। यासौ प्रकृतिः प्रत्ययमुत्पादितवती साऽविकृतार्थेनैव रूपेणावतिष्ठत इत्यर्थः। **प्रकृतिवच्च कारकमिति**। चकारो भिन्नक्रमः कारकस्यानन्तरं द्रष्टव्यः। कार्यशब्दश्चात्राध्याहार्यः। तेनायमर्थो भवति—कृतो या प्रकृतिर्हन्यादिस्तस्या यथा कार्यमडागमादि, तथा ण्यन्ताया अपि भवतीति। किञ्च कारकञ्च प्रकृतिवद्भवतीति ? कृतः प्रकृतेर्यादृशं कारकमभूत् ण्यन्ताया अपि प्रकृतेस्तादृशमेव भवतीति। तत्रेदं व्याख्यानम्—चुरादौ 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति पठ्यते, 'तत् करोति' इत्यादिकञ्च तस्यैव प्रपञ्चः। बहुलं तत्राधिकविधानार्थमिति सर्वमेतद् यथोक्तं भविष्यतीति। एवमुत्तरत्रापि व्याख्यानं कर्त्तव्यम्। किमर्थं पुनः कार्यशब्दमध्याहृत्य कार्यातिदेशो वर्ण्यते ? आख्यानावयवभूतायाः प्रकृतेरडागमादिकार्यं यथा स्यात्। अन्यथा हि यदि प्रकृतिवच्च कारकं भवतीति कारकातिदेशे एव क्रियेत तदा 'कृद्ग्रहणेन गतिकारकपूर्वस्यापि ग्रहणम्' इति कंसवधादिभ्यो णिचि कृतेऽङ्गसंज्ञा नामधातुत्वञ्च तेषामेव स्यात्, ततश्चाड्द्विर्वचने तेषामेव स्याताम्। किञ्च—धातोः स्वरूपग्रहणे तत्प्रत्यये तत् कार्यं विज्ञायेत, कंसवधशब्दाच्च णिचि विहिते तत्वकुत्वे न स्याताम्, ततश्च कंसमघातयद् राजानमजीगमदित्यादि न सिध्येत्। कार्यातिदेशे यद्यपि समुदायेभ्यः कंसवधादिभ्यो णिच् विहितः, तथापि कृतो या प्रकृतिर्हन्यादिस्तस्याः केवलाया अकृदन्ताया यथाऽडागमादिकार्यं

**पदमञ्जरी**

'परार्थाभिधानं वृत्तिः' इति। तेन सत्त्वभावो निवृत्त इति सूत्रव्याकरणयोरभिसम्बन्धो निवर्त्तते। अस्ति च व्याकरणस्य करोतिना सामर्थ्यमिति द्वितीया भवति। यदि तु व्याकरणं सूत्रं करोतीति वाक्ये एव सामानाधिकरण्यं तदा माणवकं मुण्डयतीतिवद् व्याकरणं सूत्रयतीत्ययत्नसिद्धम्। 'सूत्र अवमोचने' ( धा० पा० १९०८ ) 'मूत्र प्रस्रवणे' ( धा० पा० १९०९ ) इति चुरादौ पाठादेव सूत्रयतीति सिध्यति। अनेकार्थत्वाच्चार्थान्तरेऽपि भविष्यति। गणपाठसिद्ध एव त्वर्थ उपसंख्यानेनापि प्रदर्शितः।

**आख्यानादिति** वाक्यं व्याचष्टे—**आख्यानात्कृदन्तादिति**। आख्यायत इत्याख्यानम्, 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। यत्किञ्चिदाख्यायते तत्सर्वं राजागमनादिकमप्याख्यानमिहाभिप्रेतम्, न कंसवधनलोपाख्यानादिकमेव संज्ञाभूतम्। **कृदन्तादिति** 'कृद्ग्रहणेन गतिकारकपूर्वस्यापि ग्रहणमिति' ( व्या० परि० १२६ ) कंसवधराजागमनसूर्योद्गमनादेरपि कृदन्तत्वम्। **प्रकृतिप्रत्यापत्तिरिति**। कृतो या प्रकृतिः सा विकारपरित्यागेन स्वेनैव रूपेणावतिष्ठत इत्यर्थः। **प्रकृतिवच्च कारकमिति**। यत्तत्र कृदन्ते संनिहितं कारकं तत्प्रकृति-

**भावबोधिनी**

❀ आख्यान = इतिवृत्त वाचक कृदन्त शब्द से "तद् आचष्टे' = उसे कहता है' इस अर्थ में णिच् प्रत्यय होता है, कृत् प्रत्यय का लुक् हो जाता है ( कृत् प्रत्यय की ) प्रकृति अपने मूलरूप को पुनः प्राप्त कर लेती है, तथा कारक अपने मूलरूप में ही रहता है। ❀ आख्यानवाची कृदन्त से णिच् प्रत्यय कहना चाहिये—'उसको कहता है—' इस अर्थ में कृत्प्रत्यय का लुक् होता है, प्रकृति अपने मूलरूप को प्राप्त कर लेती है, और कारक प्रकृतिवत् रहता है। उदा० कंसवधम्

**कारकं भवति । कंसवधमाचष्टे–कंसं घातयति । बलिबन्धमाचष्टे–बलिं बन्धयति ।**

**न्यासः**

भवति, तथा कृदन्तताया अपि णिचि विहिते भवतीति न भवत्येष दोषः। तस्मात् कार्यमतिदिश्यते। **कंसं घातयतीति** । हन्तेर्भावे 'हनश्च वधः' इत्यप्प्रत्ययः,त तत्सन्नियोगेन वधादेशः । हननं वधः, कंसस्य वध इति षष्ठीसमासः । कंसवधशब्दाण्णिच्, अपो लुक् । प्रकृतेः प्रत्यापत्तिः वधादेशपरित्यागेन हन्तेः स्वरूपेणावस्थानम् । 'अत उपधायाः' इति वृद्धिः, 'हो हन्तेर्ञ्णिन्नेषु' इति हकारस्य घकारः, 'हनस्तोऽचिण्णलोः' इति तत्वम् । कारकञ्च कंसवध इत्यस्याः प्रकृतेर्यादृशमासीत् तादृशमेव भवति, कर्म च कारकं कंस आसीत् । तथा च कृद्योगलक्षणायाः कर्मषष्ठ्याः कंसवध इति समासः । स कंस आख्यानक्रियायामप्यतिदेशात् कर्मैव भवति । असत्यतिदेशे, आख्यानक्रियायाः कंसवधशब्दस्तदर्थो वा कर्म स्यात्; तयोरेव तथा व्याप्यमानत्वात् । कंसस्त्वाख्यानक्रियायामुज्झितव्यापार एवेति कर्मभावं न प्रतिपद्येत । तस्मात् कारकातिदेशः । **बलिं बन्धयतीति ।**

**पदमञ्जरी**

वद्भवति । कृत्प्रकृतेः शुद्धे णिचि यादृशं भवति तादृशमस्यापि ण्यन्तस्य भवतीत्यर्थः । **कंसं घातयतीति** । हन्तेः 'हनश्च वधः' इत्यप् प्रत्ययो वधादेशश्च । हननम् = वधः, कंसस्य वध इति कर्मणि षष्ठ्या समासः, ततो णिच्, कृतो लुक्, प्रकृतेः प्रत्यापत्तिर्वधादेशपरित्यागेन हन्तिरूपेणावस्थानम् । यद्यप्यत्र 'सन्नियोगशिष्टानामन्यतराभावादुभयोरप्यभावः' ( व्या० परि० ४८ ) इत्येव वधादेशनिवृत्तिः सिद्ध्यति; तथापि पुष्येण योगं जानाति; पुष्येण योजयतीत्यत्र कुत्वस्यासन्नियोगशिष्टत्वात्तन्निवृत्तिर्न सिद्ध्यतीति प्रकृतिप्रत्यापत्तिवचनम् । अथ कथं कंसमघातयत्, राजानमजीगमत्, यावता कंसवधराजागमनशब्दाभ्यां णिचि विहितेऽङ्गसंज्ञा नामधातुत्वं च तयोरेव स्याताम्, ततश्चाड्द्विर्वचने अपि तयोरेव स्याताम् ? नैष दोषः; 'प्रकृतिवच्च कारकम्' इत्युक्तम् । कृत्प्रकृतेश्च शुद्धे णिचि विहिते कंसादिकारकं कीदृशं भवति ? धातावनन्तर्भूतं द्वितीयाद्यन्तम्, तेनात्रापि तादृशेनैव रूपेण भवितव्यम् । तेन राजानमागमयतीत्यत्र नलोपाभावोऽप्युपपन्नो भवति । एवमपि कंसं घातयतीत्यत्र 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्, 'हनस्तो चिण्णलोः' इति तत्वं च न प्राप्नोति, किं कारणम् ? धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते । एवं तर्हि प्रकृतिवच्च कारकमिति चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः, कार्यशब्दश्चाध्याहार्यः । एतदुक्तं भवति—कृत्प्रकृतिर्हन्त्यादिः, तस्याः शुद्धे णिचि यादृशं रूपं भवति तथाऽस्यापि ण्यन्तस्य भवति, कार्यं च तद्वदेव भवतीति । एतेनाड्द्विर्वचने अपि व्याख्याते । **बलिबन्धमिति** । बन्धनम् =

**भावबोधिनी**

आचष्टे—कसं घातयति । [ कंसवध का आख्यान कहता है, यहाँ आख्यान-वाचक कृदन्त 'कंसवध' से णिच् होता है, 'वध' शब्द की मूल प्रकृति 'हन्' हो जाती है और 'अप्' इस कृत् प्रत्यय का लोप हो जाता है—हन् + णिच् "हनश्च वधः" (पा. सू. ३.३.७६) से 'हन्' का 'वध' आदेश होता है और अप् प्रत्यय होता है । अब इन दोनों की निवृत्ति हो जाती है । ] हन् + इ—में "अत उपधायाः' सूत्र से उपधा की वृद्धि तथा "हो हन्तेर्ञ्णिन्नेषु" ( पा. सू. ७.३.५४ ) से 'ह' का 'घ' आदेश, "हनस्तोऽचिण्णलोः" ( पा. सू. ७.३.३२ ) से 'न्' का 'त्' आदेश—घाति बनाकर लट् तिप् आदि करने पर—घातयति । कंसस्य वधः कंसवधः तम्—यहाँ कर्म कारक था अतः णिजन्त के साथ कारक प्रकृतिवत् ही रहता है अर्थात् कर्म ही रहता है—कसं घातयति । कारकातिदेश न करने पर 'कंस' में षष्ठी प्रसक्त होती । ] बलिबन्धम् आचष्टे—इस अर्थ में—बलिं बन्धयति । [ बलिबन्ध आख्यान को कहता है । यहाँ आख्यानवाचक कृदन्त—बलिबन्ध + णिच्, भाव में विहित घञ् प्रत्यय का लुक्, बन्धि + लट् आदि कार्य—बन्धयति । कारक को प्रकृतिवत् कर्म रूप में अतिदिष्ट कर देने पर—बलिं बन्धयति । ]

**राजागमनमाचष्टे—राजानमागमयति ( म० भा० ) ।**

**❀ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ❀** ( म० भा० ३. १ २६ वा० ११ ) ।

**न्यासः**

बन्धनं बन्धः, भावे घञ् । शेषं समासादिकं पूर्ववद्यथायोगम् । **राजानमागमयतीति** । आगतिः = आगमनम् । भावे ल्युट् । राज्ञ आगमनमिति कर्त्तरि कृद्योगलक्षणायाः षष्ठ्याः समासः । शेषं कृल्लुगादिकं यथायोगं पूर्ववत् । अथ राजानमिति कथं द्वितीया, यावता राजागमनमित्यस्याः कृदन्तायाः प्रकृते राजा कर्त्तासीत्, तत्र 'प्रकृतिवच्च कारकम्' इत्यातिदेशाण् णिचि विहिते कर्तृत्वेनैव भवितव्यम्, ततश्च ल्युटो लुकि कृते प्रत्ययलक्षणेन 'कर्तृकर्मणोः कृति' इति षष्ठ्यैव भवितव्यम् ? अथ 'न लोकाव्यय' इति षष्ठीनिषेधः; एवं तर्हि तृतीया प्राप्नोति ? नैष दोषः; 'गतिबुद्धि' इत्यादिना गमेर्गत्यर्थत्वाद्राज्ञोऽत्र कर्मसंज्ञा । तेन द्वितीयैव न्याय्या ।

अन्ये त्वस्यैव चोद्यस्य परिहारार्थं कारकातिदेशमन्यथा वर्णयन्ति—नैवं विज्ञायते प्रकृतेरिव प्रकृतिवत्, प्रकृतेर्यत् कार्यमिष्टं तत् णिजन्तस्यैव भवतीति; न ह्यत्र 'तत्र तस्येव' इति वतिः, किं तर्हि ? 'तेन तुल्यम्' इत्यादिना । तस्मादेवं विज्ञायते—प्रकृत्या तुल्यं वर्त्तत इति प्रकृतिवदिति । प्रकृतिशब्देनेह णिचो या प्रकृतिः कंसवध इत्यादिः सा विवक्षिता । तस्याश्चाख्यानक्रियया व्याप्यमानत्वात् कर्मत्वम् । अतः प्रकृतिवच्च कारकं भवतीत्यस्यायमर्थः—यथा णिच्प्रकृतेराख्यानभूतायाः कर्मत्वं तथा कारकस्यापीति, तेन कर्तुः कर्मत्वं सिद्धं भवति । यद्येवम्, पुष्ययोगं जानाति पुष्येण योजयतीत्यत्रापि कर्मत्वं पुष्यस्य स्यात् ? नैतदस्ति; यतः प्रकृतिवच्च कारकं भवतीत्युच्यते, न च पुष्यस्य कारकत्वं भवति; सहयोगे तृतीयाविधानात् पुष्येण सह चन्द्रमसो यो योगस्तं जानाति पुष्येण योजयतीति ।

**आङ्लोपश्चेत्यादि** । मर्यादावाची य आङ् तस्य लोपो वक्तव्यः । चकारात् पूर्वोक्तञ्च णिजादिकार्यम् । **काला-**

**पदमञ्जरी**

बन्धः, पूर्ववत्कर्मणि षष्ठ्याः समासः । शेषं पूर्ववत् । **राजागमनमिति** । अत्र कर्तरि षष्ठ्याः समासः । **राजानमागमयतीति** । अत्र कृत्प्रकृतौ राजा कर्ता, तस्य गमेः शुद्धे णिचि 'गतिबुद्धि' इत्यादिना कर्मसंज्ञा भवतीत्यस्मिन्नप्यौपसंख्यानिके णिचि तथैव कर्मसंज्ञा भवति । इह तु देवदत्तः पाकमाचष्टे इति णिचि विहिते देवदत्तेन पाचयतीति भवति । न हि देवदत्तस्य शुद्धे णिचि कर्मसंज्ञाऽस्ति; गत्यर्थादीनामेवेति नियमात्, इह तु मृगरमणमाचष्टे मृगान् रमयतीति यदा प्रतिपाद्यस्य दर्शनार्थमाख्यानं तदा णिजिष्यते, नान्यदा । तत्र यदाऽरण्यस्थो रममाणान्मृगान्प्रतिपाद्यमाचष्टे—एतस्मिन्नवकाशे एवं मृगा रमन्त इति, तदा तस्य प्रतिपाद्यदर्शनार्था प्रवृत्तिरिति णिज् भवति । यदा तु ग्रामे मृगरमणमाचष्टे तदा तत्र मृगाणामसम्भवान्न तद्दर्शनार्था प्रवृत्तिरिति मृगरमणमाचष्ट इति वाक्यमेव भवति । एतच्च मृगरमणादिविषयमेव, राजागमनादौ त्वन्यदापि भवति ।

**आङ्लोप इति** । अत्राख्यानादिति न स सम्बद्धचते, मर्यादायां य आकारस्तस्य लोपो भवति । कृल्लुगि-

**भावबोधिनी**

राजागमनम् आचष्टे—राजानम् आगमयति [ राजागमन को कहता है—इस अर्थ में—राजागमन + णिच्, कृत् ल्युट् प्रत्यय का लुक्, धातुरूप प्रकृति अपने मूल रूप को प्राप्त करती है—आगम् + णिच्—आगमि । धातुसंज्ञा के फलस्वरूप लटादि करने पर—आगमयति । कारक का प्रकृतिवद् अतिदेश करने पर कर्म—राजानम् आगमयति । [ यदि कारक को प्रकृतिवत् न किया जाता तो राज्ञः आगमनम् यहाँ कर्ता में विहित षष्ठी प्रस्तुत स्थल पर भी होने लगती । उसको रोककर कर्मकारक का अतिदेश आवश्यक है । ]

❀ काल के अत्यन्त संयोग में मर्यादा की प्रतीति में ( कृदन्त से णिच् होता है, 'तद् आचष्टे' = उसको कहता है' इस अर्थ में ) और आङ् का लोप होता है [ कृत् प्रत्यय का लुक् होता है प्रकृति मूलरूप को पुनः प्राप्त करती है और

**आरात्रिविवासमाचष्टे रात्रिं विवासयति।**

**॥ चित्रीकरणे प्रापि ॥ ( म० भा० ३.१.२६ वा० १२ ) उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते—सूर्यमुद्गमयति।**

**न्यासः**

**त्यन्तसंयोग इति**। कृत्स्नस्य कालस्य व्याप्तिः=कालात्यन्तसंयोगः, तस्मिन् गम्यमाने। **आरात्रिविवासमाचष्ट इति**। विवसनं विवासः; भावे घञ्। रात्रेर्विवास इति षष्ठीसमासः। पश्चात्, 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावसमासः। रात्रिशब्दश्चेह रात्रिसहचरितासु क्रियासु वर्त्तते, वसिरपि विपूर्वोऽतिक्रमे। तेनायमर्थो भवति—अस्तमयनात् प्रभृति याः प्रवृत्ताः क्रियास्ता यावदतिक्रान्ता रात्रिः साकल्येन कथयतीति। 'प्रकृतिवच्च कारकम्' इत्यतिदेशात् कृल्लक्षणायां कर्त्तरि षष्ठ्यां प्राप्तायां रात्रौ कर्मणि द्वितीया भवति। अतिक्रमणे हि रात्रिः कर्त्री। कर्मत्वञ्च तस्याः पूर्ववद् गत्यादिसूत्रेण।

**चित्रीकरणे प्रापीति**। चित्रीकरणम्=आश्चर्यम्। प्रापीति सप्तम्या धात्वर्थो निर्दिश्यते। प्राप्त्यर्थविषयं यच्चित्रीकरणं तत् प्राप्तिकृतमित्यर्थः, तस्मिन् गम्यमाने णिच्। कृल्लुगादिकञ्च पूर्ववत्। उज्जयिन्या माहिष्मती विदूरदेश इति तावतो देशस्याल्पकालेनातिक्रमणमाश्चर्यम्। **सूर्योद्गमनमिति**। कर्त्तरि कृद्योगलक्षणायाः षष्ठ्याः समासः। सूर्य उद्गमने कर्त्ता। **सम्भावयते इति** प्राप्नोतीत्यर्थः। 'भू प्राप्तावात्मनेपदी' चुरादौ पठ्यते, तस्येदं रूपम्। **सूर्यमुद्गमयतीति**। सूर्योद्गमनशब्दाण्णिच्, ल्युटो लुक्। 'प्रकृतिवच्च कारकम्' इत्यतिदेशात् पूर्ववत्

**पदमञ्जरी**

त्यादि पूर्ववत्। **आरात्रिविवास इति**। विवसनम्=विवासः; अतिक्रमणम्, रात्रेर्विवासो रात्रिविवासः, कर्त्तरि षष्ठ्याः समासः, ततः 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः। यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीत्यर्थः। वसेरकर्मकत्वाद् 'गतिबुद्धि' इत्यादिना रात्रेः कर्मसंज्ञा हेतुमण्णिचि भवति, तद्वदस्मिन्नपि णिचि भवति—**रात्रिं विवासयतीति**।

**चित्रीकरण प्रापीति**। तदित्येव। चित्रीकरणम्=आश्चर्यकरणम्। प्रापि=प्राप्नोत्यर्थे चित्रीकरणे गम्यमाने तत्प्राप्नोतीत्यस्मिन्नर्थे णिच् भवति, कृल्लुगित्यादि पूर्ववत्। **सम्भावयते इति**। 'भू प्राप्तावात्मनेपदी' ( धा० पा० १८४४), उज्जयिन्या माहिष्मती विदूरे देश इति तावतो देशस्य प्रागुदयादतिक्रमणमाश्चर्यम्। **सूर्यमुद्गमयतीति**।

**भावबोधिनी**

कारक भी प्रकृतिवत् हो जाता है। उदा० आरात्रि-विवासम् आचष्टे—इस अर्थ में—रात्रिं विवासयति। [ जब तक रात बीतती है तब तक कथा कहता रहता है—यह अर्थ है। विवसनम् = विवासः=अतिक्रमणम्, रात्रेर्विवासः—रात्रिविवासः = रात का बीतना। 'आङ् शब्द के साथ मर्यादा अर्थ में अव्ययीभाव समास ''आङ् मर्यादाभिविध्योः'' ( पा. सू. २.१.१३ ) से आरात्रिविवासम्। णिच् करने पर 'आङ्' का लुक्, कृत् प्रत्यय घञ् का लुक् धातु का मूलरूप—विवस्+णिच् = इ, उपधावृद्धि विवासि+लट् तिप् शप् गुण - विवासयति। कारक का प्रकृतिरूप में कर्म में अतिदेश—रात्रिं विवासयति। जब तक रात रहती है तब तक कथायें कहता है। ]

चित्रीकरण = आश्चर्य करना प्रतीत होने पर 'तत् प्राप्नोति' [ उसे प्राप्त करता है। ] इस अर्थ में कृदन्त से णिच् कहना चाहिये [ और कृत् प्रत्यय का लुक्, प्रकृति धातुरूप प्राप्त करती है और कारक प्रकृतिवत् होता है। ] उदाहरण—उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते—इस अर्थ में—सूर्यम्उद्गमयति। [ उज्जयिनी से चला हुआ माहिष्मती नगरी में सूर्योदय प्राप्त करता है, अर्थात् इतनी दूर अल्पकाल में रात भर में ही सूर्योदय से पहले पार कर प्रातःकाल माहिष्मती में पहुँच जाता है। यह आश्चर्य का विषय है, यह अभिप्रायहै। सूर्योद्गमन+णिच्, कृत् प्रत्यय ल्युट् = अन का लोप, उद्गम्+णिच्+इ, धातुसंज्ञा के फलस्वरूप लट् तिप् शप्, गुण अय्, आदेश—उदगमयति। कारक कर्ता में होने वाली षष्ठी प्रकृतिवत् = कर्म कारकत्व को प्राप्त करती है—सूर्यम् उद्गमयति। सम्भावयते = प्राप्त करता है, क्योंकि ''भू प्राप्तावात्मनेपदी' यह विधान है। ]

**❀ नक्षत्रयोगे ज्ञि ❀ ( म० भा० ३.१.२६ वा० १३ ) । पुष्ययोगं जानाति—पुष्येण योजयति । मघाभि-योजयति**[1] ॥

**न्यासः**

कर्त्तरि षष्ठ्यां प्राप्तायां तस्य कर्मसंज्ञकत्वाद् द्वितीया । कर्मसंज्ञा तु पूर्ववत् ।

**नक्षत्रयोगे ज्ञीति** । नक्षत्रयोगे यत्र प्रातिपदिकं वर्त्तते तस्मान्नक्षत्रयोगवाचिनो णिच् । कृल्लुगादिकं यथायोगं पूर्ववत् । ज्ञीति सप्तम्या धात्वर्थो निर्दिश्यते, तेन जानात्यर्थे णिज् भवति । पुष्येण करणभूतेन चन्द्रमसो योगः पुष्ययोगस्तस्माण्णिच्, घञ्, कृतो लुक्, प्रकृतिप्रत्यापत्तिः । 'प्रकृतिवच्च कारकम्' इत्यतिदेशाज्

**पदमञ्जरी**

'प्रकृतिवच्च कारकम्' इति सूर्यशब्दस्य पृथक्करणम् । संग्रामयतेरेव सोपसर्गादिति न्यायादुच्छब्दस्यापि पृथक्-करणम् । अत्रापि सूर्यस्य हेतुमण्णिचि कर्मत्वादस्मिन्नपि णिचि कर्मत्वम् ।

**नक्षत्रयोगे ज्ञीति** । तदित्येव । ज्ञि = जानात्यर्थे नक्षत्रयोगे यत्कृदन्तं वर्त्तते तस्मात्तज्जानातीत्यस्मिन्नर्थे णिज् भवति, कृल्लुगित्यादि पूर्ववत् । **पुष्ययोगमिति** । पुष्येण चन्द्रमसो योगः पुष्ययोगः, पुष्येणेति कर्तरि तृतीया, 'उभयप्राप्तौ कर्मणि' इति नियमात् षष्ठी न भवति । **चन्द्रमस इति** । नियमेन गम्यमानत्वादुभयप्राप्तिः, पुष्यो हि चन्द्रमसं युनक्ति=सम्बध्नाति, तत्र युजेर्गत्यादिष्वनन्तर्भावादणौ कर्त्तुः पुष्यस्य शुद्धे णिचि कर्तृत्वमेवेत्यस्मिन्नपि णिचि कर्तृत्वात्तृतीया भवति । **पुष्येण योजयतीति** । लकारस्तु प्रधान एव कर्त्तरि भवति, यथा शुद्धे णिचि । तर्त्तर्हीदं बहु वक्तव्यम्?वक्तव्यम्, इह तावत्सूर्यमुद्गमयतीति यो यस्य प्रवर्त्त्यः स तस्याभिप्रायं निर्वर्त्तयति । गन्तुश्चा-यमभिप्रायः—माहिष्मत्यां सूर्योद्गमनं सम्भावयेयमिति, तं च सूर्यो निर्वर्त्तयति, एतदेव प्रवर्त्त्यस्य प्रवर्त्त्यत्वं यदुत प्रवर्त्तयितुरभिप्रायसम्पादनम् । न हि कश्चित्परोऽनुगृहीतव्य इति प्रवर्त्तन्ते सर्व इमे स्वभूत्यर्थम् । ये ताव-देते गुरून् शुश्रूषन्ते, तेऽपीह—प्रीतो गुरुरध्यापयिष्यति परत्र चाभ्युदेष्याम इति प्रवर्त्तन्ते । दासाश्चापि—भक्तं च लप्स्यामहे, परिभाषाश्च न नो भविष्यन्तीति प्रवर्द्धन्ते । 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्' ( अमरः १. ५. १४ ), । शिल्पिनोऽपि—मित्राणि च नो भविष्यन्ति वेतनं च लप्स्यामह इति प्रवर्त्तन्ते । यद्यप्यत्र सर्वत्र तत्तदुद्देशेन प्रवृत्तिः, सूर्ये तु न; तथाप्यभिप्रायसंपत्तिमात्रेण प्रयोज्यप्रयोजकभावाध्यारोपेण णिज् भवि-ष्यति । इह च कंसं घातयतीति—ये तावदेते कंसघातानुकारिणां नटानां व्याख्यानोपाध्यायास्ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृशेनैव वासुदेवेन घातयन्ति, येऽपि चित्रं व्याचक्षते—अयं मथुराप्रासादः; अयं कंसः, अयं भगवान्वासुदेवः प्रविष्टः, एताः कंसकर्षिण्यो रज्जवः, एते उद्गूर्णा निपातिताश्च प्रहाराः, अयं हतः कंसः,

**भावबोधिनी**

❀ नक्षत्र योग में 'जानाति' = जानता है—इस अर्थ में कृदन्त से णिच् होता है, कृत् प्रत्यय का लुक् होता है, धातु प्रकृतिरूप को प्राप्त करती है, और कारक अपने प्रकृतिभूत मूल रूप [ करणत्व ] को प्राप्त करता है । * पुष्ययोगं जानाति—इस अर्थ में 'पुष्ययोग' इससे णिच् होता है, घञ् कृत् प्रत्यय का लुक्, धातु का मूल रूप होना युज् + णिच्, उपधागुण, धातुसंज्ञा लट् आदि कार्य—योजयति । कारक प्रकृतिरूप करणत्व को प्राप्त करता है—पुष्येण । [ यहाँ पुष्य इस करणभूत के साथ चन्द्रमा का योग, उसको जानता है, यह अर्थ है । ] मघायोगं जानाति—इस अर्थ में कृदन्त योग + णिच्, कृत् प्रत्यय का लुक्, धातु का मूलरूप—युज् + इ, उपधागुण योजि—धातुसंज्ञा के फलस्वरूप लट् आदि करने पर —योजयति ] [ मघाभिः चन्द्रमसः योगः—'मघायोगः' इसमें करण कारक का अतिदेश होता है अतः तृतीया है । ] ॥ २६ ॥

---

१. 'आख्यानात् लुग् न भवति, नलोपाख्यानमाचष्टे, आख्यानमाचष्टे, वाक्यमेतद् भवति । तादृगर्थायं च प्रवृत्तौ लुगादि भवति, मृगरमणमाचष्टे, मृगान् रमयति, रममाणान् मृगान् अस्मै दर्शनार्थं कथयति । दृगर्थे इत्येव—ग्रामे मृगरमणमा-चष्टे'—अधिकोऽयं पाठः क्वचित् पुस्तके ।

## ६४६. कण्ड्वादिभ्यो यक् ॥ २७ ॥ (२६७८)

**न्यासः**

ज्ञानक्रियायामकारकस्यापि पुष्यस्य करणत्वमिति करणे तृतीया। यदा तु पुष्येण सह चन्द्रमसो योग इत्यर्थो विवक्ष्यते, तदा कारकातिदेशस्य विषयो न भवति; पुष्यस्याकारकत्वात्। पुष्येणेति तृतीया सहार्थ एव वेदितव्या ॥ २६ ॥

**कण्ड्वादिभ्यो यक्** ॥ किं पुनरिमे कण्ड्वादयो धातवः ? उत प्रातिपदिकानि ? तत्र यदि धातवः, यकि कृते कण्डूरिति न सिध्यति, कण्डूयेति प्राप्नोति; ननु च वेत्यनुवर्त्तिष्यते, तत्र यदा यङ् नास्ति तदा कण्डूरिति भविष्यति ? नैतदस्ति; नहि धातोः सुब्विभक्तिरुत्पत्तुमुत्सहते; तस्याः प्रातिपदिकाद् विधानात्। स्यादेतत्— 'यगन्तादन्येभ्योऽपि' इति क्विपि कृते अतो लोपे वलि यकारलोपे च कण्डूरिति भविष्यति ? असदेतत्; कर्त्तरि क्विब् विधीयते, कण्डूरिति च वेदनामात्रमुच्यते, न कर्त्ता; तथापि सम्पदादेराकृतिगणत्वाद् भावे क्विपं विधाय कण्डूरिति व्युत्पाद्यते। एवमपि मन्तुः, वल्गुरिति न सिध्येत्। यदि तावद्वेत्यनुवृत्त्या मन्तुवल्गुशब्दाभ्यां पक्षे यग् न भवति तदा विभक्तिस्ताभ्यां नोपपद्येत, तथा च मन्तु, वल्गु इत्यविभक्तिकं रूपं स्यात्। अथापि ताभ्यां

**पदमञ्जरी**

अयमाकृष्ट इति, तेऽपि चित्रगतं कंसं तादृशेनैव वासुदेवेन घातयन्ति, चित्रेऽपि हि तद्बुद्धिरेव पश्यताम्। एतेन चित्रलेखका व्याख्याताः। येऽपि ग्रन्थं वाचयन्तः कंसवधमाचक्षते काथिका नाम, तेऽप्युत्पत्तिप्रभृत्या विनाशात् कंसादीन् वर्णयन्ति, तेऽपि वर्ण्यमानाः श्रोतॄणां बुद्धिस्थाः प्रत्यक्षवद्भवन्ति। चित्तमपि तेषां तदात्मकमिव भवति, अत एव व्याश्रिताश्च भवन्ति। नानापक्षसमाश्रयः = व्याश्रयः। केचित्कंसभक्ताः, केचिद्वासुदेवभक्ताः। वर्णान्यत्वं खल्वपि पुष्यन्ति—केचिद्रक्तमुखाः केचित्कालमुखाः। त्रैकाल्यमपि लोके लक्ष्यते, कथायां वाच्यमानायां हि वक्तारो भवन्ति – गच्छ हन्यते कंसः, गच्छ घानिष्यते कंसः, किं गतेन—हतः कंसः ! इति। तदेवं काथिकोऽपि बुद्धिस्थेन वासुदेवेन घातयति, श्रोतापि ॥

शब्दोपहितरूपाँश्च बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ ( वा० प० ३ ७.५ )

एवं राजानमागमयतीत्यादावपि यथासम्भवं द्रष्टव्यम् ॥ २६ ॥

**कण्ड्वादिभ्यो यक्** ॥ यदीमे कण्ड्वादयो धातव एव स्युस्ततो वाग्रहणमनुवर्तते वा ? न वा ? अनुवृत्तौ यगभावपक्षे लडादिषु सत्सु कण्डवतीत्याद्यनिष्टं प्रसज्येत, कण्डूरित्यादि च न स्यात्; धातोः सुबभावात्। क्विबन्तात्सुप्सम्भवेऽपि कण्डूरिति न वेदनामात्रं गम्यते; कर्तरि क्विपो विधानात् ? संपदादित्वाद्भावे क्विब् भविष्यति। एवमपि कण्ड्वौ कण्ड्वः, 'अचि श्नुधातु' इत्युवङ् प्राप्नोति, कण्ड्वा, कण्ड्वे 'नोङ्धात्वोः' इति विभक्तेरुदात्तनिषेधः स्यात्, मन्तुवल्गुरित्यत्र च तुक् प्रसङ्गः ? अथ नानुवर्त्तते, कण्डूरिति न सिध्यति, यगन्तात् सम्पदादित्वाद्भावे क्विप्यल्लोपयलोपयोः कृतयोर्भविष्यति ? न चैवमल्लोपस्य स्थानिवत्त्वादुवङ्, 'क्वौ लुप्तं न स्थानिवत्' ( जै० परि० ४७ ) इति वचनात्। ननु च क्वौ विधिं प्रति स प्रतिषेधः, अन्यथा लवमाचक्षाणो लौरित्यत्र क्वौ लुप्तस्य णेः स्थानिवत्त्वाभावेऽपि णौ कृतस्य टिलोपस्य स्थानिवत्त्वादूठ् न स्यात्, अतोऽत्र स्थानिवत्त्वे सत्युवङ् स्यादेव ? छस्तु 'च्छ्वोः शूड्' इत्यूठ् करिष्यते। न चोठ्यपि कर्तव्ये स्थानिवत्त्वम्; तस्य क्वौ विधित्वाद् आदिष्टादचः पूर्वत्वाच्च, अत एवोठि कृते पुनरुवङोऽप्रसङ्गः। एवमपि कण्ड्वौ, कण्ड्वः, कण्ड्वे—धातुविधिः प्राप्नोति, मन्तुर्वल्गुरिति च न सिद्ध्यति, यकि दीर्घे कृते मन्तूर्वल्गूरिति स्यात्। अथ प्रातिपदिकान्येव ? तत्रापि वाग्रहणाननुवृत्तौ स एव दोषो यो धातुपक्षे। अनुवर्त्ततां तर्हि वाग्रहणम्,

**'कण्डूञ्' इत्येवमादिभ्यो यक् प्रत्ययो भवति। द्विविधाः कण्ड्वादयः—धातवः, प्रातिपदिकानि च। तत्र धात्वधिकाराद्धातुभ्य एव प्रत्ययो विधीयते, न तु प्रातिपदिकेभ्यः। तथा च-गुणप्रतिषेधार्थः ककारोऽनुबध्यते।**

**धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।**

**न्यासः**

यकं विधाय क्विप् क्रियते? एवमपि मन्तूर्वल्गूरित्यनिष्टं रूपं स्यात्। अवश्यं हि यकि कृते 'अकृत्सार्वधातुकयोः' इति दीर्घत्वेन भवितव्यम्। अथ प्रातिपदिकानि कण्ड्वादयस्तदा यकः ककारोऽनर्थकः स्यात्, स हि 'सार्वधातुकार्धधातुकयोः' इति प्राप्तस्य गुणस्य 'क्ङिति च' इति प्रतिषेधो यथा स्यादित्येवमर्थं क्रियते। प्रातिपदिकत्वे तेषामेतद् प्रयोजनं नोपपद्यते, न हि प्रातिपदिकाद्विहितः प्रत्यय आर्धधातुकसंज्ञां लभत इति यो देशयेत्, तं प्रत्याह—**द्विविधा इत्यादि**। तत्रेति निर्धारणे सप्तमी। तेषु धातुप्रातिपदिकेषु मध्ये ये धातवः कण्ड्वादयस्तेभ्यो यक्। **धात्वधिकारादि**त्यत्रैवोपपत्तिः। एतमेवार्थं द्रढयितुमाह—**तथा चेत्यादि**। यत एवं धातुभ्यः प्रत्ययो विधीयते; धात्वधिकारात्, न प्रातिपदिकेभ्यः। एवञ्च कृत्वा यकः ककारोऽनुबध्यते गुणप्रतिषेधार्थम्। यदि तु प्रातिपदिकेभ्यो यक् स्यात् तस्यानार्धधातुकत्वाद् गुणस्य प्राप्तिरेव नास्ति, तत्प्रतिषेधार्थं ककारानुबन्धकरणमनर्थकं स्यात्।

**धातुप्रकरणाद्धातुरिति**। प्रत्ययमुत्पादयतीति शेषः। 'धातोरेकाचः' इत्यतो धातुग्रहणमनुवर्त्तते। तेन धातुरेव कण्ड्वादिशब्दः प्रत्ययमुत्पादयति, न प्रातिपदिकम्। **कस्येत्यादि**। यच्चेदं ककारानुबन्धासञ्जनम्, अतोऽपि हेतोरेव धातुः प्रत्ययमुत्पादयति; अन्यथा ककारानुबन्धकरणं पूर्वोक्तया रीत्या निरर्थकमेव स्यात्। अत एव धातुभूतेभ्यः कण्ड्वादिभ्यो यग्विधानात् ककारानुबन्धासञ्जनाच्च तेषां धातुत्वं विज्ञायते। न ह्यधातुभूतेभ्यो यग्विधानमुपपद्यते, नापि ककारानुबन्धकरणम्; प्रयोजनाभावात्। अथ प्रातिपदिकत्वं कण्ड्वादीनां कथमवसीयते?

**पदमञ्जरी**

सन्तु च प्रातिपदिकान्येव तत्राप्ययमर्थः—ककारो नानुबन्धव्यो भवति अनार्द्धधातुकत्वादेव गुणो न भविष्यति? नैवं शक्यम्; इह हि सुख्यति, दुःख्यति, मगध्यतीत्यतो लोपो न स्याद्; अनार्धधातुकत्वादेव। न च व्यञ्जनान्त एव शक्यः पठितुम्, यगभावपक्षेऽपि तथा प्रयोगप्रसङ्गादत उभये कण्ड्वादय इत्याह—**द्विविधाः कण्ड्वादय इति। धातुभ्य एव प्रत्ययो विधीयत इति**। नित्यमिति भावः। तेन पक्षे कण्डवतीत्यादि न भवति। **न तु प्रातिपदिकेभ्य इति**। तेन कण्ड्वौ, कण्ड्वः, मन्तुरित्यादिप्रयोगसिद्धिः। न चास्मिन्नपि पक्षे यगन्तात्सम्पदादिक्विब्विधीयते तदा पूर्वोक्तदोषानुषङ्गः, किं कारणम्? दृशिग्रहणादेतेभ्यः क्विब् स्याद्, न चैतेभ्य इदानीं क्विब् दृश्यते। पूर्वत्र तु पक्षे कण्डूरित्यादिसिद्धयर्थमेव क्विब् द्रष्टव्यः।

कथं पुनर्ज्ञायते-उभये कण्ड्वादय इति? तच्छ्लोकेन दर्शयति—**धातुप्रकरणादिति**। अनुवृत्तेन धातुग्रहणेन विशेषणात्ककारासञ्जनाच्च धातुत्वमेषाभिमतमिति विज्ञायत इत्यर्थः। यतस्तु खल्वयमाचार्यः क्वचिद्दीर्घ-

**भावबोधिनी**

'कण्डूञ्' आदि शब्दों से यक् प्रत्यय होता है। कण्डूञ्—आदि दो प्रकार के हैं—धातु और प्रातिपदिक। इनमें धातु का अधिकार होने से धातु से ही प्रत्यय होते हैं न कि प्रातिपदिक से। इसी लिये गुण का प्रतिषेध करने के लिये यक् में ककार अनुबन्ध लगाया गया है।

धातु का प्रकरण होने से तथा [ "किति च" सूत्र से गुणनिषेधार्थ ] ककार अनुबन्ध के कारण 'कण्डूञ्' आदि

**आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥ ( म० भा० ३.१.२७ )**

**कण्डूञ्　कण्डूयति । कण्डूयते । ञित्वात् 'कर्त्रभिप्राये क्रियाफले' ( १.३.७२ ) इत्यात्मनेपदम् ।**

**कण्डूञ् । मन्तु । हृणीङ् । वल्गु । अस्मनस् । महीङ् । लेट् । लोट् । इरस् । इरज् । इरञ् । द्रवस् । मेधा । कुषुभ । मगध । तन्तस् । पम्पस् । सुख । दुःख । सपर । अरर । भिषज् । भिष्णज् । इषुध । चरण । भुरण ।**

**न्यासः**

इत्याह-**आह चायमित्यादि** । चकारो हेतौ । यद्येते धातव एव स्युस्ततो यकि कृते 'अकृत्' इति दीर्घत्वस्य सिद्धत्वात् कण्डूञ्, हृणीङ्, महीङिति दीर्घं नोच्चारयेत्, उच्चारयति च दीर्घम्, अतोऽवसीयते—**धातुर्विभाषित इति** । धातुत्वमेषां विकल्पितमित्यर्थः । ननु च पक्षे यत्र यङ् नास्ति तत्रायगन्तेभ्यः क्विबादौ प्रत्यय उत्पन्ने कण्डूः, कण्डूतिः कण्डूतः, कण्डूतवानिति दीर्घस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घोच्चारणं स्यात् । तत् कुत-स्तस्यानर्थक्यम् ! कथं पुनरयगन्तेभ्यः क्विबादयो भवन्ति, यकः पाक्षिकत्वात्, तदपि कुतः ? वेत्यनुवृत्तेः, नैतत्; नित्यत्वादस्य विधेः । नित्यत्वन्तु वाग्रहणस्य निवर्त्तितत्वात् । कुतः पुनस्तन्निवृत्तिरवसीयते ? 'आयादयः' इत्यादेः सूत्रारम्भात् । यद्यत्र वेत्यनुवृत्तिस्तदोत्तरत्राप्यनुवर्त्तनादायादयो वा भविष्यन्तीत्येतन्नारभेत । न च तदनारम्भे सार्वधातुकेऽप्यायादयो विकल्पेन प्राप्नुवन्ति; वाग्रहणस्य व्यवस्थितविभाषात्वात् । तस्मादायादय इत्यादेरारम्भाद्वाग्रहणनिवृत्तिरवसीयत इति नित्यं यका भवितव्यम्, ततश्च यद्येषां पक्षे प्रातिपदिकत्वं न स्याद् दीर्घोच्चारणमनर्थकं स्यात् । तस्माद् दीर्घोच्चारणसमर्थ्यात् प्रातिपदिकत्वमेषामस्तीतयेकान्त एष पक्षः । तत्र धातुपक्षे कण्डूयत इत्यादयः सिध्यन्ति, प्रातिपदिकपक्षे त्वसति यकि कण्डूर्मन्तुल्गुरित्यादयः । मगध इत्यादयो

**पदमञ्जरी**

मुच्चारयति—कण्डूञ् हृणीञ् महीङिति, ततो मन्ये—धातुर्विभाषित इति । धातुत्वमेषां विभाषितमिति मन्य इत्यर्थः ।

अथ कण्ड्वादीनार्थनिर्देशः । कण्डूञ् गात्रविकर्षणे । मन्तु अपराधे । हृणीङ् रोषे । वल्गु पूजामाधुर्ययोः । अस्मनस् उपतापे । महीङ् वृद्धिपूजनयोः । लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने । इरस इरज् इरञ् ईर्ष्यायाम् । द्रवस् परिचरणे । मेधा आशुग्रहणे । कुषुभ क्षेपे । मगध परिवेष्टने । तन्तस् पम्पस् दुःखे । सुख दुःख तत्क्रियायाम् । सपर पूजायाम् । अरर आराकर्मणि । भिषज् चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण

**भावबोधिनी**

को धातु कहा गया है । और इसको दीर्घ कहा गया है अतः ऐसा समझता हूँ कि इनका धातुत्व विकल्प से है अर्थात् ये प्रातिपदिक और धातु दोनों है । [यक् करने पर "अकृत्सार्वधातुकयोः' पा. सू. ७.४.२५ से दीर्घ होना सिद्ध ही था, पुनः इनमें जो दीर्घोच्चारण किया गया है, वह इनका वैकल्पिक धातुत्व सिद्ध करता है, अर्थात् ये धातु और प्रातिपदिक दोनों हैं । ]

कण्डूञ्—कण्डूयति, कण्डूयते । 'ञ्' की इत्संज्ञा के कारण "स्वरितञितः कर्मभिप्राये क्रियाफले' पा. सू. १.३.७२ से आत्मनेपद होता है । [ क्रियाफल कर्तृगामी न होने पर परस्मैपद भी होता है । खुजलाता है —यह अर्थ है । ]

कण्ड्वादिगण में पठित शब्द—कण्डूञ् [ =शरीर खुजलाना ] । मन्तु [ अपराध करना ] । हृणीङ् [ रोष करना ] । वल्गु [ पूजा करना मधुर होना ] । अस्मनस् [ उपतप्त होना ] । महीङ् [ बढ़ना और पूजा करना ] । लेट्, लोट्, [ धूर्त होना, पूर्व होना और सोना ] । इरस्, इरज् [ ईर्ष्या करना ] । द्रवस् [ परिचरण ] । मेधा [ शीघ्र समझना ] । कुसुम [ क्षेप = निन्दा ] । मगध [ लपेटना ] । तन्तस्, पम्पस् [ दुःख करना ] । सुख [ सुख करना ] । दुःख [ दुख करना, ] । सपर [ पूजा करना ] अरर [ आराकर्म में, आरा = प्रतोद, तत्करणक कर्म ] भिषज् [ चिकित्सा करना ] । भिष्णज् [ उपसेवा करना ] इषुध [ शर धारण करना ] । चरण, भुरण [ चलना ] चुरण [ चलना और

**चुरण । तुरण । भुरण । गद्गद । एला । केला । खेला । लिट् । लोट्[1] ।**

**६४७. गुपूधूपविच्छिपणिपनिभ्य आयः ॥ २८ ॥ (२३०३)**

**'गुपू रक्षणे' ( धा० पा० ३९५ ), 'धूप संतापे' ( धा० पा० ३९६ ), 'विच्छ गतौ' ( धा० पा० १४२४ ), 'पण व्यवहारे स्तुतौ च' ( धा० पा० ४३९ ), 'पन च' इत्येतेभ्यो धातुभ्य आयप्रत्ययो भवति । गोपायति । धूपायति । विच्छायति । पणायति । पनायति । स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयति, न व्यवहारार्थः । शतस्य पणते । सहस्रस्य पणते । अनुबन्धश्च केवले चरितार्थः, तेनायप्रत्ययान्तान्नात्मनेपदं भवति ॥**

**न्यासः**

येऽकारान्ताः कण्ड्वादिषु पठचन्ते तेषाम् 'अतो लोपः' इत्यकारलोपः—मगध्यति, सुख्यति, दुःख्यति । लेट्लोटौ शब्दौ पठचेते, तयोः स्वरूपेणैव ग्रहणम्, न तु प्रत्ययत्वेन, कण्ड्वादिभिः स्वरूपशब्दैः साहचर्य्यात् ॥ २७ ॥

**गुपूधूपविच्छिपणिपनिभ्य आयः ॥ स्तुत्यर्थेनेत्यादि** । 'पण व्यवहारे स्तुतौ च', 'पन च' इत्यनयाऽऽनुपूर्व्या गणे पाठः । तत्र 'पन च' इत्यत्र स्तुतावित्यनुवर्त्तते, न व्यवहारार्थः, तेन पणिर्व्यवहारार्थः, स्तुत्यर्थश्च, पनिः स्तुत्यर्थ एव । तदिह स्तुत्यर्थेन पणिना साहचर्यात् पनेरपि स्तुत्यर्थ एव गृह्यते । तेनासौ स्तुतावेव वर्त्तमानः प्रत्ययमुत्पादयति, न तु व्यवहारे । **शतस्येति** । 'व्यवहृपणोः समर्थयो' इति कर्मणि षष्ठी । अत्र पणायतीत्यत्रात्मनेपदं कस्मान्न भवति, यावता पणिरयमनुदात्तेत् पठ्यते ? तत्र 'अनुदात्तङितः' इति यथा केवलादात्मनेपदं भवति तथाप्रत्ययान्तादपि तेन भवितव्यमित्यत आह—**अनुबन्ध इत्यादि** । यो हि तस्यानुबन्धः स आयप्रत्ययरहिते

**पदमञ्जरी**

भुरण गतौ । चुरण चौर्ये च । तुरण त्वरायाम् । भुरण धारणपोषणयोः । गद्गद वाक्स्खलने । एला केला खेला विलासे । लिट् अल्पार्थे कुत्सायां च । लोट् दीप्तौ ॥ २७ ॥

**गुपूधूपविच्छिपणिपनिभ्य आयः ॥ विच्छायतीति** । विच्छिरयं तुदादौ पठ्यते, तत्सामर्थ्यादायप्रत्ययान्तादपि शविकरणो भवति, न तु शप्, यथा—जुगुप्सते इत्यात्मनेपदम्, तेन विच्छायन्ती विच्छायतीति 'आच्छीनद्योर्नुम्' इति नुम्विकल्पो भवति । अन्ये तु सार्वधातुकेऽप्यायप्रत्ययस्यैव तुदादिपाठसामर्थ्येन विकल्पमाहुः । **स्तुत्यर्थेनेति । भट्टिकाव्ये** तु व्यवहारार्थादप्यायः—'न चोपलेभे वणिजां पणायान्' (भट्टि ३.२७) इति । **अनुबन्धः केवलेऽचरितार्थ इति** । अवयवेष्वचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति, यथा—गुपादीनामनुदात्तत्वमिति

**भावबोधिनी**

चुराना ] । तुरण [ शीघ्रता करना ] । भुरण [ धारण और पोषण करना ] । गद्गद [ वाणी स्खलित होना ] । एला, केला, खेला [ विलास, खेलना ] । लिट् [ थोड़ा होना, कुत्सा होना ] । लोट् [ दीप्त होना ] ।

[ सिद्धान्तकौमुदी आदि अन्य ग्रन्थों में कुछ अन्य शब्द भी इस गण में पठित हैं ] ॥ २७ ॥

(१) 'रक्षा अर्थ में गुपू', (२) 'सन्ताप अर्थ में धूप,' (३) 'गमन अर्थ में विच्छ', (४) 'व्यवहार तथा स्तुति अर्थ में पण' और (५) 'स्तुति अर्थ में पन'—इन पाँच धातुओं से 'आय' प्रत्यय ( स्वार्थ में ) होता है । उदा० गोपायति । [ रक्षा करता है । गुपू के अनुबन्ध 'ऊ' की इत्संज्ञा, लोप आय प्रत्यय उपधा का गुण—गोपाय । "सनाद्यन्ता धातवः" ( पा. सू. ३.१.३२ ) से धातुसंज्ञा, लट्=तिप्, शप्=अ, अ का पररूप—गोपायति । ] धूपायति । [ सन्तप्त करता है । धूप+आय, शेष सारी प्रक्रिया पूर्ववत् । ] विच्छायति । [ जाता है । विच्छ+आय ] पणायति । [ स्तुति करता है । पण+आय ] पनायति । [ स्तुति करता है । पन+आय ] । स्तुति अर्थवाले 'पन' धातु के साहचर्य के कारण केवल स्तुति अर्थ वाले 'पण' से यह प्रत्यय होता है, व्यवहार अर्थ वाले से नहीं । [ अतः इनमें नहीं होता है—] शतस्य पणते, सहस्रस्य पणते । [ सौ का व्यवहार करता है, हजार का व्यवहार करता है । ] केवल [ मूल धातु ] में अनुबन्ध चरितार्थ हो चुका है, आत्मनेपद का विधान करा चुका है, अतः आय-प्रत्ययान्त से आत्मनेपद नहीं होता है । [ आयप्रत्ययान्त को अलग धातु मान लिया जाता है । ] ॥ २८ ॥

---

१. असुञ् । हृणीञ् । रूषय । पुरण । अत्रैते शब्दाः पुस्तकान्तरेऽधिकाः ।

## ६४८. ऋतेरीयङ् ॥ २९ ॥ (२४२२)

**ऋतिः सौत्रो धातुर्घृणायां वर्त्तते, तत ईयङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। ऋतीयते, ऋतीयेते। ऋतीयन्ते। 'ऋतेश्छङ्' इति सिद्धे ईयङ्वचनं ज्ञापनार्थम्-धातुविहितानां प्रत्ययानामायन्नादयो न भवन्तीति॥**

### न्यासः

पणतौ चरितार्थः = कृतात्मनेपदकार्यः, तेनायप्रत्ययान्तादात्मनेपदं न भवति; तस्य धात्वन्तरत्वात् ॥ २८ ॥

**ऋतेरीयङ्॥ सौत्र इति।** सूत्रे परिपठितत्वात्। सूत्रे भवः सौत्रः। **घृणायां वर्त्तत इति।** घृणा = जुगुप्सा। तस्यामयं स्वभावत एव वर्त्तते। अथ कस्मादीयङुच्यते, न च्छङित्येवोच्येत, तस्येयादेशे ऋतीयत इति सिध्यति ? न सिध्यति; परत्वादिडागमे कृते सत्यप्रत्ययादित्वादीयादेशो न स्यात्। ननु चान्तरङ्गत्वादीयादेश एव भविष्यति, अन्तरङ्गत्वन्तु तस्यायन्नादिषु 'उपदेशिवद्वचनमिष्टस्वर सिद्धचर्थम्' इति वचनात्; एवं तर्ह्येतज्ज्ञापयति—**धातुप्रत्ययानामायन्नादयो न भवन्तीति**। तेन शमेर्ढप्रत्यये कृते शण्ढ इत्येवमादयः सिद्धा भवन्ति। अथ वा—स्वरविधावुपदेशिवद्भावः स्वरसिद्धचर्थमिति वचनात्। तेन नास्त्यन्तरङ्गतेति परत्वादिडागमः स्यात्, तस्मादीयङ् विधीयते ॥ २९ ॥

### पदमञ्जरी

भावः। ये तु व्यवहारार्थादप्यायमिच्छन्ति तेषामपि पणिष्यते पाणयिष्यतीत्यादावनुबन्धः केवले चरितार्थः ॥ २८ ॥

**ऋतेरीयङ्॥ सौत्र इति।** अस्मिन्नेव सूत्रे उच्चरित इत्यर्थः। **घृणायां वर्त्तत इति।** नात्र कृपायां घृणाशब्दः, किं तर्हि ? जुगुप्सायाम्; 'घृणा जुगुप्साकृपयोः' ( ना० र० मा० ४३७ ) इति वचनात्। जुगुप्सा = निन्दा, बीभत्सेत्यर्थः। ऋतीयाशब्दो बीभत्सापर्यायो निघण्टुषु पठितः। अथ कस्मादीयङुच्यते, न छङ् वोच्यते, तस्य ईयादेशे कृते ऋतीयत इति सिद्धम्, परत्वादिडागमे कृते सत्यप्रत्ययादित्वादीयादेशो न स्यादिति चेत् ? न; अन्तरङ्गत्वात्, आयन्नदिषूपदेशिवद्वचनं स्वरसिद्धचर्थमिति वचनादन्तरङ्गत्वम्। ज्ञापनार्थं तु, एतज्ज्ञापयति—धातुप्रत्ययानामायन्नादयो न भवन्तीति, तेन 'कणेष्ठः' इत्यत्रेकादेशो न भवति। क्वचित्तु वृत्तावेवं पठ्यते—'ऋतेश्छङ्' इत्येव सिद्धे ईयङ्वचनं ज्ञापकम्—धातुविहितानामायन्नादयो न भवन्तीति। अत्र ब्रूमः—'द्विवचनविभज्योपपदे तरप्छसुनौ' इत्येव सिद्धे ईयसुन्वचनं ज्ञापकं प्रातिपदिकप्रत्ययानामायन्नादयो न भवन्तीति। उच्यन्ते चायन्नादयस्ते वचनादुभयेषामपि स्युः, तस्मादृतेश्छङित्यादि **वृत्तौ** न पठनीयमिति ॥ २९ ॥

### भावबोधिनी

ऋति' यह सौत्र धातु [ इसी सूत्र में पठित धातु ] 'घृणा' अर्थ में है। इससे ईयङ् प्रत्यय [ स्वार्थ में ] होता है। 'ङ' कार अनुबन्ध [ 'अनुदात्तङित आत्मनेपदम्' से ] आतमनेपद करने के लिये है। उदा० ऋतीते, ऋतीयेते, ऋतीयन्ते। [ घृणा करता है। ऋत् + ईयङ्, अनुबन्धलोप, आतमनेपद एकवचन में ऋतीय + लट् = त, शप् = अ, टि' का एत्व। द्विवचन में—ऋतीय + आताम्, आ का इय गुण, टि = आम् का एत्व। बहुवचन में ऋतीय + झ = अन्त, टि = अ का ए। ] 'ऋत् का छङ् होता है' इससे भी सूत्र बनना संभव था। [ क्योंकि छ का ईय कर दिया जाता ] फिर भी 'इयङ्' का विधान करना ज्ञापन के लिये है—'धातु से विहित प्रत्ययों केस्थान पर 'आयन्' आदि आदेश नहीं होते हैं'। [ इसी लिये उणादि में विहित 'ठ' 'ढ' आदि में भी ये आदेश नही होते हैं ] ॥ २९ ॥

## ६४९. कमेर्णिङ् ॥ ३० ॥ (२३१०)

**कमेर्धातोर्णिङ्प्रत्ययो भवति । णकारो वृद्ध्यर्थः । ङकार आत्मनेपदार्थः । कामयते, कामयेते, कामयन्ते ॥**

### न्यासः

**कमेर्णिङ् ॥ णकारो वृद्ध्यर्थ इति ।** 'अत उपधायाः' इति वृद्धिर्यथा स्यात् । यद्येवम्, किमर्थं 'न कम्यमिचमाम्' इति कमेर्मित्संज्ञा प्रतिषिध्यते 'मितां ह्रस्वः' इति ह्रस्वो मा भूदिति ? नैतदस्ति; णित्करणसामर्थ्यादेव तन्न भविष्यति; अन्यथा णित्करणमनर्थकं स्यात् । नानर्थकम् ? 'णेरनिटि' इति सामान्यग्रहणार्थत्वात् । यदा च 'आयादय आर्धधातुके वा' इति णिङ् नास्ति, तदा हेतुमण्णिचि ह्रस्वत्वं मा भूदिति मित्संज्ञा प्रतिषिध्यते ॥ ३० ॥

### पदमञ्जरी

**कमेर्णिङ् ॥** इह णिङो णकारः 'णेरनिटि' इति विशेषणे चरितार्थो ङकारोऽप्यात्मनेपदार्थ इत्युभयोश्चरितार्थयोः प्रतिषेधबलीयस्त्वात् 'अत उपधायाः' इति वृद्धेः 'क्ङिति च' इति प्रतिषेधः प्राप्नोति, ज्ञापकात्सिद्धम्, यदयम् 'न कम्यमिचमाम्' ( भ्वादि० ८१७ ) इति कमेर्मित्संज्ञायां प्रतिषेधं शास्ति, तज् ज्ञापयति—भवत्यत्र वृद्धिरिति, तस्य हि प्रयोजनम्—'मितां ह्रस्वः' इति ह्रस्वो मा भूदिति । यदि चात्र वृद्धिर्न स्याद् ह्रस्व एवोपधेति कृत्वा मित्संज्ञाप्रतिषेधोऽनर्थकस्स्यात् । नैतदस्ति ज्ञापकम्, यदा णिङन्ताद्धेतुमण्णिच् क्रियते तदा णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वो मा भूदित्येवमर्थमेतत्स्यात्, न च णिजपेक्षाया अपि वृद्धेर्णिङमेव ङितमपेक्ष्य प्रतिषेधः । किं कारणम् ? ङितीति निमित्तसप्तमी । ननु च न णिङन्तस्य णिचि वृद्ध्या भवितव्यम्; णिङा व्यवहितत्वात्, णिलोपे कृते स्थानिवद्भावाद्व्यवधानमेव । यदा तर्हि णिजन्ताच्चिण्णमुलौ भवतस्तदा 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत्येष विधिर्मा भूदित्येवमर्थो मित्संज्ञाप्रतिषेधः स्यात् । किं पुनः कारणम् ? तत्र 'दीर्घोऽन्यतरस्याम्' इत्युच्यते न प्रकृतो ह्रस्व एव विकल्प्येत, एवं हि कमेर्मित्संज्ञाप्रतिषेधो न कर्त्तव्यो भवति । कथम् ? यदा णिङि वृद्धिर्नास्ति तदा ह्रस्व एवोपधेति सत्यपि ह्रस्वविकल्पे नैवानिष्टप्रसङ्गः, अशमि अशामीत्यादि च सिद्धम् ? नैवं शक्यम्; यदा शमिप्रभृतिभ्यो णिजन्तेभ्यो द्वितीयो णिच् क्रियते तदा न स्यात् । यश्च णमुल्परो णिज् द्वितीयः, न तस्मिन् प्रथमेन णिचा व्यवहितत्वात् । यस्मिंश्च मिदङ्गं प्रथमे णिचि, नासौ चिण्णमुल्परः, द्वितीयेन व्यवहितत्वात् । णिलोपेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव । 'दीर्घोऽन्यतरस्याम्' इत्युच्यमाने पुनरत्रापि भवति, दीर्घविधिं प्रति स्थानिवद्भावनिषेधात् । तथा शमिप्रभृतिभ्यो यङन्तेभ्यो णिच्यल्लोपयलोपयोरल्लोपस्य स्थानिवद्भावादसत्यां वृद्धौ चिण्णमुलोः कृतयोरशंशमि, अशंशामि, शंशमम्, शंशाममिति न स्यात् । दीर्घः पुनर्विकल्प्यमानोऽत्रापि भवति; तद्विधौ स्थानिवद्भावप्रतिषेधात् । तथा 'हेडृ अनादरे' ( धा० पा० २८४ ) घटादिः, 'एच इग्घ्रस्वादेशे', हिडयति, तत्र चिण्णमुलोः कृतयोर्ह्रस्वे विकल्प्यमाने अहिडि, अहेडीति स्यात्; दीर्घे तु पुनरहिडि, अहीडीति भवति । तस्माद्दीर्घ एव विकल्पनीयः, ततश्च मित्संज्ञाप्रतिषेधोऽपि तन्निवृत्तये वक्तव्यः । तथा 'आयादय आर्द्धधातुके वा' इति णिङभावे णिचि सति वृद्धौ कृतायाम् 'मितां ह्रस्वः' इति ह्रस्वो मा भूदित्येवमर्थोऽपि मित्संज्ञाप्रतिषेधो वक्तव्य एवेत्यज्ञापकमेतत् । एवं तर्ह्यस्थानेऽयं यत्नः क्रियते, नैवात्र प्रतिषेधः प्राप्नोति, किं कारणम् ? इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, न चैषा इग्लक्षणा वृद्धिरित्यलमति कर्कशप्रक्रियातर्कानुसरणेन ॥ ३० ॥

### भावबोधिनी

'कमु कान्तौ' इस धातु से णिङ् प्रत्यय होता है । णकार अनुबन्ध [ उपधा की ] वृद्धि के लिये है, ङकार आत्मनेपद के लिये है । उदा० कामयते, कामयेते, कामयन्ते । [ कम् + णिङ् = इ, 'अत उपधायाः' ( पा. सू. ७.२.११६ ) से उपधा की वृद्धि—कामि + लट् = त, शप् = अ, 'इ' का गुण ऐ, अय् आदेश—कामय् + अ + त, टि का एत्व द्विवचन में कामय् अ + आताम्, आ का इय्, गुण, यलोप, टि = आम् का एत्व, बहुवचन में—कामय् झ + का = अन्त, टि + अ का एत्व ] ॥ ३० ॥

**६५०. आयादय आर्द्धधातुके वा ।। ३१ ।। (२३०५)**

**आर्द्धधातुकविषये = आर्द्धधातुकविवक्षायामायादयः प्रत्यया वा भवन्ति । गोप्ता, गोपायिता । अर्तिता, ऋतीयिता । कामिता, कामयिता ।**

**न्यासः**

**आयादय आर्द्धधातुके वा ।। आर्धधातुकविषय** इत्येतेनार्धधातुक इत्यस्य विषयसप्तमीत्वं दर्शयति । आर्धधातुकविषयत्वं तु तद्विवक्षायां सत्यां बुद्धिस्थे तस्मिन् सम्भवति, नान्यथेत्याह—**आर्धधातुकविवक्षायामिति ।** केन पुनरभिसन्धिना विषयसप्तमीत्वमाश्रीयत इति ? एवं मन्यते—परसप्तम्यामुत्पत्तिर्वा विकल्प्यते ? निवृत्तिर्वा ? यद्युत्पत्तिस्तदा गुपेः स्त्रियां क्तिनि विहिते तत्र यदायप्रत्ययो नोत्पद्यते तदा कामं गुप्तिरितीष्टं सिध्यति । यदा तूत्पद्यते, तदातो लोपे वलि लोपे च कृते गोपातिरित्यनिष्टमापद्येत, गोपायेतीष्टं न सिध्यति । अथ

**पदमञ्जरी**

**आयादय आर्द्धधातुके वा ।।** 'आर्द्धधातुके' इति परसप्तम्यामायादिविधिभिरेकवाक्यता स्यात्, भिन्नवाक्यतायामयमर्थो भवति—गुपादिभ्य आर्द्धधातुके परतो वाऽऽयप्रत्ययो भवति, एवमुत्तरत्रापि, ततश्चार्द्धधातुके एव विकल्पेनायादयः स्युः, सार्वधातुके नैव स्युः ? नैष दोषः, पृथगारम्भाद्यदि ह्यार्द्धधातुक एवायादीनामुत्पत्तिः स्यात्ततो गुपादिभिः संयुज्यैव निर्दिशेत्—गुपादिभ्य आर्द्धधातुके वेति, एवं हि आयादय इति न वक्तव्यं भवति । पृथक् तं निर्दिशति, तेन मन्यामहे—व्यापारभेदेनैकवाक्यतेति । ततश्चायमर्थो भवति—गुपादिभ्यो नित्यमायादयो भवन्त्यार्द्धधातुके वेति । एवमपि गुपादेर्यदार्द्धधातुकं प्राप्तं तत्र ततो विहिते विकरणविकल्पे नायादयः स्युः; ततश्च स्त्रीभावविवक्षायां गुपेरप्रत्ययान्तत्वाभावात् क्तिनि कृते यदायप्रत्ययो न भवति तदा गुप्तिरिति काममिष्टं सिद्ध्यति । यदा तु भवति तदाऽल्लोपयलोपयोर्गोपातिरित्यनिष्टं प्राप्नोति, गोपायेति चेष्टं न सिद्ध्यति । भिन्नवाक्यतायामायाद्यन्ताद्यदार्द्धधातुकं प्राप्तं तत्र ततो विहिते आयादयो वा भवन्तीत्यर्थः स्यात् । तत्र चायाद्यन्ताद्यदार्द्धधातुकमिति वदता तेषामुत्पत्तिस्तावदङ्गीकृता । न चोत्पन्नानामुत्पत्तिविकल्पः शक्यते कर्तुमिति लोकन्यायेन निवृत्तिविकल्पो भवति । ततश्चायप्रत्ययान्तात् स्त्रीभावविवक्षायामप्रत्ययादित्यकारे कृते निवृत्त्यभावपक्षे गोपायेति काममिष्टं सिद्ध्यति । निवृत्तिपक्षे तु गोपेत्यनिष्टं प्राप्नोति, गुप्तिरिति चेष्टं न सिद्ध्यति । लिटि च निवृत्त्यभावपक्षे गोपायाञ्चकारेति काममिष्टं सिद्ध्यति, निवृत्तिपक्षे तु यदि लिटि परतो निवृत्तिस्तथापि प्रत्ययलक्षणेन कास्प्रत्ययादित्यामा भवितव्यम्, अथाप्यामि कृते निवृत्तिस्तथापि तस्यैव श्रवणं प्राप्नोतीति सर्वथा गोपांचकारेत्यनिष्टं प्राप्नोतीति, जुगोपेति चेष्टं न सिद्ध्यति । तस्माद् दुष्ट एवायं परसप्तमोपक्ष इति मत्वाह—**आर्द्धधातुके विषय इति ।** कोऽर्थः ? इत्याह—**आर्द्धधातुकविवक्षायामिति ।** आर्धधातुकमिहोत्पादयिष्यामीति

**भावबोधिनी**

आर्द्धधातुक-विषय में = आर्द्धधातुक प्रत्यय की विवक्षा [ विधान करने की इच्छा ] में आय् आदि प्रत्यय विकल्प से होते हैं। उदा० गोप्ता, गोपायिता । [ 'गुप्' से लुट् की विवक्षा में वैकल्पिक 'आय' प्रत्यय— गुप् + आय, उपधा का गुण, गोपाय + लुट्, तिप्, 'स्यतासी ऌलुटोः' ( पा. सू. ३.१.३३ ) से 'तास्' प्रत्यय, इट् का आगम—गोपायम्+इ तास्+ति, 'लुटः प्रथमस्य डारौरसः' ( पा. सू. २.४.८५ ) से डा = आ आदेश, डित्वात् टि + आस् का लोप—गोपायिता । जब 'आय' नहीं होता है तब "स्वरतिसूतिसूयतिधूञूदितो वा" ( पा. सू. ७.२.४४ ) से वैकल्पिक इट् हो जाता है। अतः इट्रहित— गोप् त् आ रूप बनता है। इट् होने पर—गोपिता । यह रूप काशिकाकार ने नहीं लिखा है। ] अर्तिता, ऋतीयिता । [ ऋत् + लुट् विवक्षा में विकल्प से ईयङ्—ऋतीय् + लुट्, त, डा आ, तास्, इट् आगम — ऋतीय+इ + तास् + आ, टि = आस् का लोप —ऋतीयिता । 'ईयङ्' न होने पर ऋत् + इ तास् + आ में ऋ का गुण रपर करने पर—अर्त् इत् आ ] कामिता, कामयिता । [ कम् + लुट् विवक्षा में विकल्प से 'णिङ् = इ' उपधा की वृद्धि— कामि + लुट्, त=डा=आ, तास् इट्, इ का गुण, अय् आदेश, टि=आस् का लोप—कामय् इ त् आ ] णिङ् न होने पर

**नित्यप्रत्ययप्रसङ्गे तदुत्पत्तिरार्द्धधातुकविषये विकल्प्यते, तत्र यथायथं प्रत्यया भवन्ति—गुप्तिः। गोपाया ॥**

## ६७१. सनाद्यन्ता धातवः ॥ ३२ ॥ (२३०४)

**सन् आदिर्येषां ते सनादयः, सनादयोऽन्ते येषां ते सनाद्यन्ताः। सनाद्यन्ताः समुदाया धातुसंज्ञा भवन्ति।**

**न्यासः**

निवृत्तिस्तदा गुपेरायप्रत्ययान्ताद् 'अ प्रत्ययात्' इत्यकारे कृते तत्र परतो यदा निवृत्तिर्न भवति तदा कामं गोपायेतीष्टं सिध्यति। यदा तु भवति तदा गोपेत्यनिष्टं प्राप्नोति। गुप्तिरिति सत्यामसत्यां वा निवृत्ताविष्टं न सिध्यति, विषयसप्तम्यां तूत्पत्तौ विकल्पितायामुत्पत्स्यते। आर्धधातुकमिति आर्धधातुकविवक्षायामादावेव विकल्पः। तत्रानुत्पत्तिपक्षे स्त्रियां क्तिनि विहिते गुप्तरिति सिध्यति, उत्पत्तिपक्षे गोपायेति। न च गोपातिरित्यनिष्टमपि; आयप्रत्ययान्तात् क्तिनोऽभावात्। नापि गोपेत्यनिष्टमापद्यते, आयप्रत्ययस्यानुत्पत्तेः। **नित्यप्रत्ययप्रसङ्गे इति**। पूर्वकैस्त्रिभिः सूत्रैर्नित्यमायादिषु प्राप्तेष्वित्यर्थः। **तदुत्पत्ताविल्यादि**। तेषामायादीनामार्धधातुकविषय उत्पत्तिर्विकल्प्यते, न तूत्पन्नानां निवृत्तिः। यदि हि निवृत्तिर्विकल्प्येत तदार्धधातुके विषयभूते सत्यायप्रत्यये निवृत्ते प्रत्ययलक्षणेन 'अ प्रत्ययात्' इत्यकारप्रत्यये विहिते विषयसप्तम्यामपि गोपेत्यनिष्टं स्यादित्यभिप्रायः। **यथायथमिति**। यो यतः प्राप्नोति स पश्चादुत्पत्तिविकल्पादुत्तरकालं ततो भवतीत्यर्थः ॥ ३१ ॥

**सनाद्यन्ता धातवः ॥ सनादयोऽन्ते येषामिति** वाक्यविशेषेण बहुव्रीहिं दर्शयति। गमकत्वेन हि व्यधिकरणानामपि बहुव्रीहिर्भवत्येव, यथा—कण्ठेकालः, उरसिलोमेति। आदिशब्देन क्यजादीनां णिङ्पर्यन्तानां ग्रहणम्। **समुदाया इति**। प्रकृतिप्रत्ययसमुदायाः। एतेन तद्गुणसंविज्ञानबहुव्रीहिं दर्शयति; अन्यथा सनाद्युपलक्षितानां प्रकृतीनामेव धातुसंज्ञा विधीयेत। **धातुसंज्ञका इति**। धातुः संज्ञा येषां ते धातुसंज्ञकाः। धातुशब्दश्चात्र

**पदमञ्जरी**

बुद्धौ सत्यामित्यर्थः। विषयसप्तमीपक्षेऽपि भिन्नवाक्यतायामार्द्धधातुके विधित्सिते आयादयो भवन्तीत्युक्ते, कुतो विधित्सिते ? इत्यपेक्षायामायाद्यन्तस्यापि धातुत्वात्तत इति गम्यते, ततश्च निवृत्तिपक्ष एवाश्रित इति स एव दोषो यं पूर्वमवोचाम। तस्मादेकवाक्यतयोत्पत्तिविकल्प इत्याह—**नित्यप्रत्ययप्रसङ्गे तदुत्पत्तिरार्द्धधातुकविषये विकल्प्यत इति**। किमेवं सति सिद्धं भवतीत्याह—**तत्रेति** ॥ ३१ ॥

**सनाद्यन्ता धातवः ॥ सनादयोऽन्ते येषामिति**। अन्तशब्दः समीपवचनः, वैयधिकरण्येऽपि गमकत्वाद् बहुव्रीहिः। अथ वा—वृत्तावर्थमात्रं दर्शितम्, सूत्रे त्ववयववाचिनोऽन्तशब्दस्य समानाधिकरणस्यैव बहुव्रीहिः। सनादयोऽन्तावयवा येषां समुदायानामित्यनेन तद्गुणसंविज्ञानो बहुव्रीहिरिति दर्शयति। **धातुसंज्ञा इति**। धातुशब्दोऽत्र स्वरूपपदार्थः, न भूवादिपदार्थकः; तावतीनां संज्ञानां विधाने प्रयोजनाभावात्। 'सुप्तिङन्तम्'

**भावबोधिनी**

कम् + इ ता ]। पूर्ववर्ती तीन सूत्रों से आय, ईयङ् णिङ् इन ] नित्य प्रत्ययों के प्रसङ्ग में, आर्धधातुक के विषय में उन प्रत्ययों की उत्पत्ति विकल्प से होती है, इनमें जिससे जो प्राप्त होता है वह उत्पत्तिविकल्प के बाद होता है—गुप्तिः। गोपाया।

**विमर्श**—"आयादय आर्धधातुके वा' इस में 'आर्धधातुके' यह विषय अर्थ में सप्तमी है, पर अर्थ में नहीं। और विषय विवक्षित माना जाता है। इस लिये आय् आदि करने के बाद जो प्रत्यय होता है वह भी होता है—जैसे 'गोपाय' यहाँ "अ प्रत्ययात्" (पा. सू. ३.३.१०२) से 'अ' करने पर 'गोपाया' बनता है। और क्तिन् प्रत्यय केवल 'गुप्' से भी होता है—गुप्तिः ॥ ३१ ॥

सन् है आदि में जिनके वे सनादि हैं। सनादि हैं अन्त में जिनके वे शब्द सनाद्यन्त हैं। सनाद्यन्त शब्द-समुदाय को धातुसंज्ञा होती है। पदसंज्ञा-विधायक 'सुप्तिङन्तं पदम्' (पा. सू. १.४.१४) इस सूत्र में 'अन्त' के ग्रहणरूप

**प्रत्ययग्रहणपरिभाषैव पदसंज्ञायामन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिहान्तवचनेन प्रतिप्रसूयते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति ॥**

**न्यासः**

स्वरूपपदार्थकः, न भूवादिपदार्थकः, अन्यथा भूवादयः सनाद्यन्तानां संज्ञाः स्युः, तच्चायुक्तम्, न हि तावतीनां संज्ञानां करणे किञ्चित् प्रयोजनमस्ति। आवर्त्तिन्यश्च संज्ञा भवन्ति। न हि भूवादीनामेव सर्वेषामावृत्तिः क्वचिच्छास्त्रेऽस्तीति न तत्पदार्थको धातुशब्दः। इह हि संज्ञाविधौ सनादीनां प्रत्ययानां ग्रहणम्। 'सुप्तिङन्तं पदम्' इत्यत्र चान्तग्रहणेन ज्ञापितमेतत्-'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्येति' एषा परिभाषा संज्ञाविधौ प्रत्ययग्रहणे प्रतिषिद्धा। तत्रासत्यन्तग्रहणे तदन्तविधिर्न स्यात्, इष्यते च, अतस्तदर्थमन्तग्रहणं कृतम्, तत्रानेनान्तग्रहणेनापूर्व एव तदन्तविधिः क्रियत इति मन्यमानो यो देशयेत् तं प्रत्याह—यदि तर्हि सनाद्यन्तानामियं संज्ञा विधीयते तदा देवदत्तः प्राचिकीर्षदित्यत्र देवदत्तस्य सोपसर्गस्य च संज्ञा प्रसज्येतेति। अत आह—**प्रत्ययग्रहणपरिभाषैवेत्यादि**। न ह्यनेनान्तग्रहणेनापूर्व एव तदन्तविधिः क्रियते, किं तर्हि? पदसंज्ञाविधावन्तग्रहणेन प्रतिषिद्धा सती प्रत्ययग्रहणपरिभाषैव पुनरिह प्रतिप्रसूयते। कृतप्रवृत्तिविघाता सती पुनः प्रवर्त्तत इत्यर्थः।

**पदमञ्जरी**

इत्यत्रान्तग्रहणज्ञापिता 'संज्ञाविधौ प्रत्ययग्रहणे प्रत्ययग्रहणपरिभाषा न प्रवर्तते' ( पुरु० परि० २८ ) इति, ततश्चासत्यन्तग्रहणे तदन्तविधिर्न स्यादित्यत्रान्तग्रहणं कृतम्। एवं स्थिते यद्यपूर्व एवानेन तदन्तविधिः क्रियते, ततो देवदत्तश्चिकीर्षतीत्यत्र देवदत्तादेः समुदायस्य संज्ञा प्रसज्येतेति मत्वाह—**प्रत्ययग्रहणपरिभाषैवेत्यादि**। अपूर्वविधौ गौरवम्, प्रतिप्रसवे तु यत्नस्य लाघवं भवतीति भावः। 'भूवादयः' इत्यस्यानन्तरं सनाद्यान्ताश्चेत्युच्यमाने सनादीनामियत्तापरिच्छेदो न स्यात्। एवं तर्हि 'सङन्ताश्च' इत्युच्यताम्, सङिति प्रत्याहारः सनः सशब्दारभ्या णिङो ङकारात्। एवमपि सन्देहस्स्यात्, चङादिष्वपि ङकारस्य भावात्। एवं तर्हि 'सनाद्यन्ताः' इत्यस्यानन्तरम् 'भूवादयश्च' इति वक्तव्यम्। स्यादेतत्—एवमुच्यमाने सनाद्यन्तशब्दवद् भूवादिशब्दोऽपि प्रकृतापेक्षः स्यात्ततश्चानुक्रान्तानां गुपादीनामेव स्यादिति ? एवमपि भूवादिग्रहणमनर्थकं गुपादयश्चेति वक्तव्यम्।

**भावबोधिनी**

लिङ्ग=प्रमाण से प्रतिषिद्ध हो जाने वाली 'प्रत्यय के ग्रहण में तदन्त का ग्रहण होता है' यह परिभाषा इस प्रस्तुत सूत्र में अन्तग्रहण के कारण प्रतिप्रसूत होती है। उदा० चिकीर्षति, पुत्रीयति, पुत्रकाम्यति।

**विमर्श**—भाव यह है कि 'प्रत्ययग्रहणे तदन्तस्य ग्रहणम्' इस परिभाषा के रहने पर सनाद्यन्त का ही ग्रहण हो जाता पुनः इस 'अन्त' ग्रहण करने का क्या लाभ ? इसका उत्तर यह है कि 'सुप्तिङन्तं पदम्' इस पद-संज्ञा-विधायक में 'अन्त' का ग्रहण होने से यह परिभाषा प्रतिषिद्ध होती है कि—"संज्ञाविधि में प्रत्ययग्रहण में तदन्त का ग्रहण होता है।" अतः तदन्तग्रहण सम्भव नहीं होने के कारण 'सुप्तिङन्तं पदम्' में 'अन्त' ग्रहण चरितार्थ है। अतः उसी से उक्त परिभाषा का प्रतिषेध हो चुका है। यहाँ 'अन्त' ग्रहण से उसी का प्रतिप्रसव हो रहा है। प्रत्यय-ग्रहण में तदन्त-ग्रहण नहीं होता है। अतः यह अपूर्वविधि नहीं है। अतः गौरव की सम्भावना नहीं है।

सन् आदि १२ प्रत्ययों का संग्रह इस कारिका में है—

स न्क्यच् काम्यच् क्यङ् क्यषोऽथा चारक्विब् णिज्यङौतथा।
यगाय ईयङ्णिङ् णिचेति द्वादशामी सनादयः॥

उदाहरण—चिकीर्षति। कर्तुम् इच्छति- इस विग्रह में कृ+सन् इत्यादि प्रक्रिया का विवेचन "धातोः कर्मणः समानकर्तृकादिच्छायां वा' ( पा. सू. ३.१.७ ) में जा चुकी है। वहीं देखें। पुत्रीयति—आत्मनः पुत्रम् इच्छति—इस विग्रह में पुत्रम्+क्यच् अन्य प्रक्रिया का विवेचन "सुप आत्मनः क्यच्" ( पा. सू. ३.१.८ ) इस सूत्र की व्याख्या में जा चुकी है। पुत्रकाम्यति। आत्मनः पुत्रम् इच्छति—इस विग्रह में, अन्य प्रक्रिया का विवेचन 'काम्यच्च' ( पा. सू. ३.१.९ ) सूत्र की व्याख्या में किया जा चुका है॥ ३२॥

## ६५२. स्यतासी लृलुटोः ॥ ३३ ॥ (२१८६)

**लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेव, तस्मिन् लुटि च परतो धातोर्यथासंख्यं स्यतासी प्रत्ययौ भवतः। करिष्यति। अकरिष्यत्। श्वः कर्ता।**

**न्यासः**

ततश्च यतः सनादयो विहितास्तदादेरेव समुदायस्य संज्ञा भवति, न शब्दान्तरादेरिति भावः। अथ 'भूवादयो धातवः' इत्यस्यानन्तरम् 'सनाद्यन्ताश्च' इति कस्मान्नोक्तम्, एवं हि धातुग्रहणं द्विर्न कर्त्तव्यं भवति? नैवं शक्यम्, एवं हि क्रियमाणे सनादिनामियत्तापरिच्छेदो न स्यात्। इह तु क्रियमाणे णिङ्पर्यन्तानां ग्रहणं विज्ञायते। तर्हि 'सनाद्यन्ता धातवः' इत्यस्यानन्तरं 'भूवादयश्च' इति कस्मान्नोक्तम्? एतदपि न; एवं हि क्रियमाणे सनाद्यन्तस्यानुक्रान्तापेक्षित्वाद् भूवादीनामप्यनुक्रान्तापेक्षित्वं स्यात्, ततश्चानुक्रान्तानामेव गुपादीनां धातुसंज्ञा स्यात्, नान्येषां भूवादीनाम्। अथ भूवादीनामनुक्रान्तापेक्षा न भवति सनादीनामपि न स्यात्, ततश्च सनादयः कप्पर्य्यन्ता गृह्येरन्निति सन्देहः स्यात्। तस्माद् यथान्यासमेव न्याय्यम् ॥ ३२ ॥

**स्यतासी लृलुटोः** ॥ इह द्वे लृरूपे—एकं लृटः सम्बन्धि, द्वितीयं लृङः। द्वयोरपि तयोर्ग्रहणम्; इष्टत्वात्, विशेषानुपादानाच्च। ततश्चैते द्वे तृतीयश्च लुडिति त्रीणि निमित्तानि भवन्ति। निमित्तिनौ तु द्वौ स्यतासी इति वैषम्यम्। अतः संख्यातानुदेशो न स्यादिति यो देशयेत्, तं प्रत्याह—**लृरूपमित्यादि**। टकारङकारयोरनुबन्धयोः परित्यागेन तत्कृतस्य भेदस्याभावाल् लृरूपं लृङ्लृटोः सामान्यमेकमेवेति निमित्तयोरपि द्वित्वम्। तेन संख्यातानुदेशो न विरुध्यत इत्यभिप्रायः। अत एवाह—**प्रथासत्प्रमिति**। **करिष्यतीति**। 'लृट् शेषे च' इति लृट्, 'ऋद्धनोः स्ये' इतीट्। **अकरिष्यदिति**। लृङ्, अडागमः, 'इतश्च' इतीकारलोपः। **कर्त्तेति**।

**पदमञ्जरी**

नानर्थकम्; भुवो वादयो भूवादय इत्येवमर्थमेव स्याद्। भूवादिपाठ इदानीं किमर्थः स्याद्? अन्तर्गणकार्यार्थः, अनुबन्धासञ्जनार्थश्च। येषां तर्हि तदुभयं न संभवति भूरणिप्रभृतीनां तेषां पाठः किमर्थः? अलमतिनिर्बन्धेन ॥ ३२ ॥

**स्यतासी लृलुटोः** ॥ इह यद्यपि 'लृ' इत्यनुकरणमुच्चारितमेकमेव, तथापि तस्य प्रतिपाद्यभूतमनुकार्यं भिद्यते—लृट्, लृङ् इति। यत्र च प्रतिपाद्यानां संख्यासाम्यं तत्र संख्यातानुदेशः, न तूच्चारितरूपसाम्ये; अन्यथा परस्मैपदानामित्येकं णलादयस्तु नवेति वैषम्यान्न स्यात्। तथा डारौरसः प्रथमस्येत्यत्रापि न स्यात्। तदेवम् 'लृ' इत्यस्य द्वे प्रतिपाद्ये, लुटिति चापरमिति त्रीणि निमित्तानि निमित्तिनौ तु द्वाविति वैषम्यात्संख्यातानुदेशो न प्राप्नोतीत्यत्राह—**लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेवेति**। नात्र प्रतिपाद्यं भिद्यते यत्तदुभयानुगतमुत्सृष्टानुबन्धम् 'लृ' इति सामान्यरूपं तदनुक्रियते। एतच्च लृलुटोरिति द्विवचननिर्देशादवसीयते, तत्र यथानुकरणे न भेदस्तथानुकार्येऽपीत्यर्थः। **करिष्यतीति**। 'ऋद्धनोः स्ये' इतीट्। **श्वः कर्त्तेतिः**। 'श्वः' इत्यस्योपन्यास-

**भावबोधिनी**

( ट् और ङ ) अनुबन्धों से रहित 'लृ' सामान्य एक ही है उस लृ ( लृट् तथा लृङ् ) के परे रहते और लुट् के परे रहते धातु से क्रमशः 'स्य' तथा 'तासि' ये दो प्रत्यय होते हैं अर्थात् लृट् लृङ् परे रहते 'स्य' और लुट् परे रहते 'तासि'। उदाहरण—करिष्यति। अकरिष्यत्। [ कृ + लृट् = ति, स्य, इट्, ऋ का गुण, रपर कर् इ + स्य + ति, मूर्धन्य आदेश —करिष्यति। कृ + लृङ् = ति, अट् आगम, स्य, इट्, ऋ का गुण, रपर अ कर् इ स्य ति। 'इतश्च' ( पा. सू. पा. ३.४.१०० ) से ति' के 'इ' का लोप, स् का मूर्धन्य—अकरिष्यत्। ] श्वः कर्ता। [ कल करेगा।

**इदित्करणमनुनासिकलोपप्रतिबन्धार्थम्** ( ६. ४. २४ ) । **मन्ता । संगन्ता** ॥

**न्यासः**

'अनद्यतने लुट्', 'लुटः प्रथमस्य' इत्यादिना तिपो डादेशः, टिलोपः। **इदित्करणमित्यादि**। इच्चासावित् इत्संज्ञकश्चेतीदित्, तस्य करणमिदित्करणम्। इकारस्येत्संज्ञकस्य करणमित्यर्थः। अथवा–इदिद् यस्य तासेः स इदित् तासिः, तस्य करणमिदित्करणमित्संज्ञकेकारस्य तासेः करणमित्यर्थः। **अनुनासिकलोपप्रतिबन्धार्थमिति**। असति तु तस्मिन् 'अनिदिताम्' इत्यनुनासिकलोपः स्यात्। अतस्तस्य प्रतिबन्धः=प्रवृत्तिविघातो यथा स्यादित्येवमर्थमिदित्करणम्। **मन्तेति**। 'मन ज्ञाने', 'मनु अवबोधने' इति वा। 'अनुदात्तङितः' इत्यात्मनेपदम्। **संगन्तेति**। अत्रापि संपूर्वाद् गमेः 'समो गमि' इत्यादिना अत्रोभयत्रापि टिलोपे कृते ङित्वादात्मनेपदमाश्रित्यानुनासिकलोपः प्राप्नोति, स इदित्करणेन प्रतिषिध्यते। यदि तर्हि तासेरिदित्करणमनुनासिकलोपप्रतिबन्धार्थम्, एवं सति 'इदितो नुम् धातोः' इत्यत्र यद्वक्ष्यति–'तासिसिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते' इति तद्विरुध्यते ? नास्ति विरोधः, भिन्नकर्तृकत्वात्। इदं हि **जयादित्यवचनम्**, तत् **पुनर्वामनस्य**। **वामनवृत्तौ** तु तासिसिचोरिकार उच्चारणार्थो नानुबन्धः पठ्यते, तेन विरोधो नाशङ्कनीयः। केन पुनरभिसन्धिना **जयादित्यस्तासेरिकारस्यानुनासिकलोपप्रतिबन्धार्थतां** कृतवान् ? **वामनस्तू**च्चारणार्थताम् ? येनाभिसन्धिना स तावच्छ्रूयताम्–आभाच्छास्त्रीयमसिद्धत्वमनित्यम्, अनित्यत्वन्तु तस्य तत्रैव प्रतिपादयिष्यते **जया-**

**पदमञ्जरी**

स्तृजन्यशङ्कानिवृत्त्यर्थः। **इदित्करणमिति**। इत्संज्ञकस्येकारस्य करणमित्यर्थः। **अनुनासिकलोपप्रतिषेधार्थमिति**। अन्यथा मन्तास् आ इति स्थिते टिलोपे कृते नकार उपधेत्यात्मनेपदे ङिति परतः 'अनिदिताम्' इति नलोप प्राप्नोति, तस्य 'अनिदिताम्' इतीदित्वनिबन्धनः प्रतिषेधो यथा स्यादित्यर्थः। **मन्ता, सङ्गन्तेति**। कोऽर्थः ? मन्तेत्येतत्पदं सङ्गन्तं भविष्यतीत्यर्थः, न तु सङ्गन्तेत्येतदुदाहरणम्; अनोपधत्वात्। अनुस्वारपरसवर्णयोः कृतयोरपि तयोरसिद्धत्वादनोपध एव।

अन्ये त्वाहुः–यद्यसिद्धत्वात्सङ्गन्तेत्येतदनुदाहरणम्, मन्तेत्येतदपि उदाहरणं न भवति, अत्रापि टिलोपस्याभीयस्यासिद्धत्वाद् मन्तास् आ इति स्थिते नकार उपधा न भवतीति।

यदि मतम्–'आ भाच्छास्त्रीयमसिद्धत्वमनित्यम्' ( जै० परि० ६९ ) 'श्नसोरल्लोपः' इति तपरकरणात् ? तद्धयास्तामासन्नित्यादौ मा भूदित्येवमर्थम्, तत्राटोऽसिद्धत्वादेव लोपो न भविष्यति, किं तन्निवृत्त्यर्थेन तपरत्वेन ? तज्ज्ञापयति—असिद्धत्वमनित्यमिति। तेन देभतुर्देभुरित्यत्र 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनाम्' ( वा० १९ ) इति लिटः कित्त्वान्नलोपे तस्यासिद्धत्वाभावादेत्वाभ्यासलोपौ भवतः तदत्र टिलोपस्यासिद्धत्वान्मन्त् आ इति स्थिते उपधैव नकार इत्युदाहरणमिति। यद्येवम्, पूर्वत्रासिद्धीयमसिद्धत्वमप्यनित्यम् 'न मु ने' इत्यत्र नेति योग-

**भावबोधिनी**

अनद्यतन भविष्य में लुट् होता है—"अनद्यतने लुट्" ( पा. सू. ३.३.१५ )। कृ+लुट् = तिप् = डा = आ, तास्— कृ+तास्+आ, ऋ का गुण, रपर, टि=आस् का लोप—कर्त् आ। ] 'तासि' में 'इ' का इत् करना अनुनासिक लोप के प्रतिषेध के लिये है—मन्ता, संगन्ता। [ मन्+लुट्=त=डा=आ, 'तासि' के इ का लोप मन् तास्+आ— इस अवस्था में आत्मनेपद ङित् परे रहते 'अनिदितां हल उपधायाः क्ङिति' ( पा. सू.६.४.२४ ) से न् लोप प्राप्त है किन्तु इदित् होने से नहीं होता है। यदि 'तासि' में 'इ' की इत्संज्ञा न होती तो 'न्' लोप हो जाता और इष्ट प्रयोग नहीं बन पाता। यही स्थिति इसमें भी है—सम् गम्+लुट्, "समो गमृच्छिभ्याम्" ( पा. सू. १.३.२९ ) से आत्मनेपद सम् गम्+त = डा = आ, तासि, इ का लोप सम् गम् तास् आ यहाँ भी अनुनासिक 'म्' लोप प्राप्त होता है किन्तु 'इ' की इत्संज्ञा के कारण नहीं होता है। दोनों मकारों का अनुस्वार और परसवण कर देने पर तथा टि= आस् का लोप करने पर रूप बनता है—सङ्गन्ता। इस पर विवाद पदमंजरी में देखें। ] ॥ ३३ ॥

**न्यासः**

**दित्येन**। आभाच्छास्त्रीयस्य टिलोपस्यासिद्धत्वमिह नास्ति। अनित्यत्वादित्यभिप्रेत्य तासेरिकारस्यानुनासिकलोपे प्रतिबन्धार्थतोक्ता। **वामनेन** त्वसिद्धत्वमिहास्त्येवेति मन्यमानेनोच्चारणार्थतोक्ता। न हि टिलोपस्यासिद्धत्वे सत्यनुनासिकलोपः प्राप्नोति। तदयुक्ता तत्प्रतिबन्धार्थतेकारस्य। यथैव हि **गोनर्दीय आचार्यः** सन्निपातलक्षण-परिभाषाया उपस्थानमाश्रित्यातिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैर्ब्राह्मणकुलैरिति भवितव्यमित्याह; अन्ये त्वनित्यत्वादस्याः परिभाषाया अनुपस्थानमाश्रित्यातिजरसं ब्राह्मणकुलमतिजरसैरिति भवितव्यमित्याहुः, तथेदमपि प्रयोजनद्वयमाभाच्छास्त्रीयस्यास्तित्वञ्चाश्रित्य **वृत्तिकारा**वुक्तवन्ताविति वेदितव्यम्।

अन्ये चाचक्षते—प्राग् भादसिद्धाधिकार इतीमं पक्षमाश्रित्येकारस्यानुनासिकलोपप्रतिबन्धार्थतोक्ता। सह तेनासिद्धाधिकार इत्याश्रित्योच्चारणार्थतेति। एतच्चाशक्यं विज्ञातुम्; प्राग् भादसिद्धाधिकार इत्यस्य पक्षस्य **जयादित्यवामनाभ्याम**नाश्रितत्वात्। अनाश्रितत्वं तु तत्रैव वृत्तावभिव्यक्तमिति तत एवावगन्तव्यम्। एते च स्वादयो येन नाप्राप्तिन्यायेनान्तरङ्गत्वाच्च सर्वेषां यगादीनामपवादाः; अन्तरङ्गत्वं तु तेषां लावस्थायामेव विधानात्॥ ३३॥

**पदमञ्जरी**

विभागात्, तथा चैकादेशस्वरोऽन्तरङ्गः सिद्धो भवति, सिज्लोप एकादेशे सिद्धो भवति, निष्ठादेशः षत्वादिषु सिद्धो भवति, द्विर्वचनविषये च पूर्वत्रासिद्धीयं न भवति, ततश्चानुस्वारपरसवर्णयोः सिद्धत्वात् सङ्गन्त्येत-दप्युदाहरणमेवेति।

अन्ये तु संहन्तेति पठन्ति, हन्तेः 'भावकर्मणोः' इत्यात्मनेपदम्, तत्र सम्पूर्वस्य पाठे प्रयोजनं मृग्यम्। एवं तावज्जयादित्येनासिद्धत्वमनित्यमाश्रित्य 'तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थम्' इत्युक्तम्। **वामनस्तु** टिलोपस्य सिद्धत्वादेव नलोपो न भविष्यतीति मन्यमानः 'इदितो०' इत्यत्र वक्ष्यति—'तासि सिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते' इति। यदि तु तासेरिकारोऽनुबन्धः स्यात्ततो नुम्विधौ धातोस्तासेर्मा भूदित्येवमर्थं स्यात्, ततश्च धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति तस्याभिप्रायः। **जयादित्यस्तु** 'नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्धयर्थम्' इति वचनमेव शरणमशिश्रयत्।

इह विकरणाः केचन लकारोपादानेन विधीयन्ते, यथा—स्यादयः, ते किं लावस्थायामेव भवन्ति? उताहो आदेशेषु कृतेषु? यदि लावस्थायामेव, ततस्तास्यनुदात्तेदित्यत्र यद्वक्ष्यते—तासेः परस्य लसार्वधातुकस्यानु-दात्तवचनं ज्ञापकम्, 'सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते' इत्यस्यार्थस्येति, तन्नोपपद्यते; लावस्थायामेव तासौ कृते तस्य च प्रत्ययाद्युदात्तत्वे पश्चाल्लादेशेषु क्रियमाणेषु तेषामेव स्वरः सतिशिष्टो भवति, ततश्चानुदात्तवचनमप्राप्तविधिरेव स्यात्। तत्र को दोषः? चिनुतः, चिन्वन्ति; क्रीणीतः, क्रीणन्ति, सतिशिष्टो विकरणस्वर एव प्राप्नोति, द्वितीये तु पक्षे पूर्वं तिबादयः पश्चात्तासिरिति तस्यैव स्वरः सतिशिष्टः, ततश्च निघातस्वरेणैव सार्वधातुकानुदात्तत्वे सिद्धे तासिग्रहणं क्रियमाणमुक्तार्थस्य ज्ञापकं सम्पद्यते। अस्तु तर्हि तथा। यद्येवम्, धातुमात्रात्सार्वधातुकमात्रे भावकर्मणोर्यक्, कर्त्तरि तु शब्विधीयत इति यक्शपावुत्सर्गौ तेष्वेवार्थेषु धातुमात्रात्सार्वधातुकविशेषे स्यादय इति तेऽपवादाः? तथा दिवादेर्धातुविशेषात्कर्तरि श्यनादयः शपोऽपवादाः, तत्र देविष्यति तनिष्यतीत्यादावुभयप्रसङ्गेऽपवादविप्रतिषेधात् श्यनादयः स्युः? पक्षान्तरे त्वन्तरङ्गाः स्यादय एव सिद्ध्यन्ति? नैष दोषः; 'दिवादिभ्यः श्यन्' इत्यादिषु स्यादिषु स्यादयोऽनुवर्त्तिष्यन्ते—दिवादिभ्यः श्यन् भवति, लृलुटोस्तु स्यतासी भवतो दिवादिभ्य इति। एवं सर्वत्र। एतेनैतदपि निरस्तं यत्खल्विदमाशंक्यते—परेण लावस्थायां विधीयमानाः स्यादयः किमिति सार्वधातुकोत्पत्तिं प्रतीक्षन्त इति, कथम्? उत्तरत्रानुवृत्तेरेव, सार्वधातुके यग्भवति, भावकर्मणोर्लृलुटोस्तु स्यतासी भवतः सार्वधातुके। एवं सिजादिष्वपि द्रष्टव्यम्। तदेवमादेशेषु कृतेषु स्यादय इति स्थितम्॥ ३३॥

## ६९३. सिब्बहुलं लेटि ॥ ३४ ॥ (३४२९)

**धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः । जोषिषत्** (ऋ० २.३५.१) **। तारिषत्** (ऋ० १.२५.१२) **। मन्दिषत् ।**

**न च भवति—पदाति[1] विद्युत्** (ऋ० ७ २५.१) **। (प्रजापतिः) उदधिं च्यावयाति** तै० सं० ३.५.५.५ **॥**

**न्यासः**

**सिब्बहुलं लेटि ॥ जोषिषदिति** । 'जुषी प्रीतिसेवनयोः,' लिङर्थे लेट् । सिप इकार उच्चारणार्थः, पकारः स्वरार्थः, 'लेटोऽडाटौ' इत्यट् । 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः, 'आर्धधातुकस्येड् वलादेः' इतीट्, लघूपधगुणः, 'आदेशप्रत्यययोः' इति षत्वम् । **तारिषदिति** । 'तॄ प्लवनतरणयोः' 'सार्वधातुकार्धधातुकयोः' इति गुणः, 'व्यत्ययो बहुलम्' इति वर्णव्यत्ययेन धात्वकारस्याकारः । शेषं पूर्ववत् । **मन्दिषदिति** । 'मदि स्तुतिमोदन-स्वप्नगतिषु', 'इदितो नुम् धातोः' इति नुम् । **पदातीति** । 'पद गतौ', दिवादिरनुदात्तेत्, व्यत्ययेन परस्मैपदम्, शप् प्रत्ययश्च, अटा सह सवर्णदीर्घत्वम् । तिप इकारलोपोऽत्र न भवति; तद्विधौ 'वैतोऽन्यत्र' इत्यतो वेत्यनुवृत्तेः । **च्यावयातीति** । 'च्युङ् छ्युङ् ज्युङ् झ्युङ् प्रुङ् प्लुङ् गतौ' । हेतुमण्णिच् । सिपः पित्करणं बोभूयिषातामित्यत्रो-

**पदमञ्जरी**

**सिब्बहुलं लेटि ॥ जोषिषन्मन्दिषदिति** । 'जुषी प्रीतिसेवनयोः' ( धा० पा० १२८८ ) 'मदि स्तुतिमोद-स्वप्नगतिषु' ( धा० पा० १३ ), अनुदात्तौ, व्यत्ययेन परस्मैपदम्, सिच इट्, 'लेटोऽडाटौ' इति तिपोऽट्, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः, तत्र च वेति वर्तते । **तारिषदिति** । 'तॄ प्लवनतरणयोः' (धा० पा० ९६९) छन्दसि णिद्वक्तव्यः' ( कात्या० वा० १९७४ ), इति वचनाद्वृद्धिः, अमीषां भविता भाविषदिति यथा । 'सिब्बहुलं' छान्दसो वा दीर्घः । **पतातीति** । 'शल हुल पत्लृ गतौ' ( धा० पा० ८४३-८४५ ) 'लेटोऽडाटौ' इत्याट् शपा सहैका-देशः । **च्यावयातीति** । 'च्युङ् प्रुङ् प्लुङ् गतौ' ( धा० पा० ९५५, ९५७, ९५८ ) ण्यन्तः । इहावयासिषीष्ठा इति

**भावबोधिनी**

लेट् परे रहते धातु से सिप् प्रत्यय बहुल रूप से होता है । उदाहरण—जोषिषत् । तारिषत् । मन्दिषत् ।

[ 'जुषी प्रीतिसेवनयोः, इससे "लिङर्थे लेट्" ( पा. सू. ३.४.७ ) से लेट् जुष् + लेट् = तिप्, प्रस्तुत सूत्र से 'सिप्' इकार पकार की इत्संज्ञा लोप करने पर 'स्' जुष् + स् + ति, "लेटोऽडाटौ" ( पा. सू. ३.४.९४ ) से अट् का आगम, "आर्धधातुकस्येड् वलादेः" ( पा. सू. ७.२.३५ ) से इट् का आगम—जुष् + इ स् + अ ति, "इतश्च" ( पा. सू. ३.४.१०० ) से इ का लोप "पुगन्तलघूपधस्य च" ( पा. सू. ७.३ ८६ ) से उपधा का गुण, "आदेश-प्रत्यययोः" ( पा. सू. ८.३.५९ ) से 'स्' का 'ष्' करने पर जोषिषत् बनता है । यहाँ लिङ् का अर्थ है—प्रीति करे या सेवन करे । तारिषत्—'तॄ प्लवनतरणयोः' धातु है लिङ् के अर्थ में लेट् तॄ + लेट् = तिप्, सिप्, अट् तॄ + स् + अ + ति, "सार्वधातुकार्धधातुकयोः" ( पा. सू. ७.३.८४ ) से ऋ का गुण, रपर–इट्, तर् इ स् अति । "व्यत्ययो बहुलम्" सूत्र से 'अ' का आ'—यह न्यासकार ने लिखा है किन्तु भाष्य में णित् मान कर वृद्धि की गयी है—'सिप् बहलं छन्दसि णित्' । इ का लोप, स् का ष्—तारिषत् । 'मदि स्तुति-मोदन-स्वप्नगतिषु' धातु है, इदित् होने से "इदितो नुम् धातोः" ( पा. सू. ७.१.५८ ) से नुम्, अनुस्वार तथा परसवर्ण, लिङर्थ में लेट्—मन्द् + लेट् = तिप् सिप्, अट्, इट्, मन्द् + इ स् + अ + ति, इलोप, स् का ष्—मन्दिषत् । ]

[ बहुलम्—कथन के कारण ] नहीं भी होता है—पदाति विद्युत् । [ कहीं 'पताति' ऐसा भी पाठ है 'पद् गतौ' इस पद से लेट्, व्यत्ययेन परस्मैपद और शप् विकरण—पद् अ + ति, "लेटोऽडाटौ" ( पा. सू. ३.४.९४ ) से आट्, सवर्णदीर्घ—पदाति । यहाँ सिप् नहीं होता है । 'पताति' में 'पत्ल् गतौ' इस पत् से लेट् है । ] उदधिं च्यावयाति । 'च्युङ् गतौ' इस 'च्यु' धातु से प्रेरणा अर्थ में 'हेतुमति च" ( पा. सू. ३.१.२६ ) से णिच्, उ की वृद्धि आय आदेश—च्यावि + लेट् = ति, शप्, आट्, इ का गुण ए का अय्—च्यावय् अ + आ + ति, सवर्ण-दीर्घ—च्यावयाति । यहाँ भी बहुल के कारण सिप् नहीं होता है । ] ॥ ३४ ॥

---

१. पतातीति मुद्रितपुस्तके पाठः । तत्र 'पत्लृ गतौ' इत्यस्माल्लेट् ।

## ६५४. कास्प्रत्ययादाममन्त्रे लिटि ॥ ३५ ॥ (२३०६)

**'कासृ शब्दकुत्सायाम्' ( धा० पा० ६२३ ) ततः प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययो भवति लिटि परतोऽमन्त्रविषये । कासाञ्चक्रे । प्रत्ययान्तेभ्यः—लोलूयाञ्चक्रे ।**

**न्यासः**

दात्तनिवृत्तिस्वरेणोदात्तत्वे प्राप्तेऽनुदात्तार्थम् । यङन्ताद् बोभूयशब्दाल्लेट आत्मनेपदम्, त, टेरेत्वम् । 'एत ऐ' 'लेटोऽडाटौ' इत्याट् 'तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इति सार्वधातुकस्यानुदात्तत्वं पित्करणसामर्थ्यादन्तरङ्गोऽपि सिप्स्वरं प्रतीक्षते । तेन कृते तस्मिन् सिप इडागमः । स चागमानुदात्तत्वेनानुदात्तः । 'अतो लोपः' इति यङोऽकारस्योदात्तस्य लोपः । उदात्तत्वन्तु तस्य धातुस्वरेण च । 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वे प्राप्ते पित्करणादनुदात्तत्वमिटो भवति ॥ ३४ ॥

**कास्प्रत्ययादाममन्त्रे लिटि** । प्रत्ययग्रहणेनेह सन्नादीनां प्रत्ययानां ग्रहणम् । तत्र 'प्रत्ययग्रहणे यस्मात्' इति परिभाषया 'येन विधिस्तदन्तस्य' इति वा तदन्तविधिर्विज्ञायते । धात्वधिकाराच्च प्रत्ययग्रहणेनेह धातवो विशिष्यन्त इत्याह—**प्रत्ययान्तेभ्यो धातुभ्य इति** । आम् प्रत्ययो भवतीति हलन्तपक्षमाश्रित्योक्तम् । अदन्तपक्षे त्वामः प्रत्ययो भवतीत्येवं वक्तव्यम्, तच्च नोक्तम्; वक्ष्यमाणादामोऽमित्त्वमदन्तत्वादित्यत एवावगम्यमानत्वात् । 'अमन्त्रे' इति विषयसप्तमीयम्, न परसप्तमी, तेन मन्त्रप्रतिषेधाद् भाषायां ब्राह्मणे च विषयेऽयं विधिर्विज्ञायते । ब्राह्मणो नाम मन्त्राणामेव व्याख्यानग्रन्थः । ननु च नञिवयुक्तन्यायेन ब्राह्मण एव भवितव्यम्, न भाषायाम् ? नैतत्; यदि भाषायामपि न स्याद् ब्राह्मण इत्येवं ब्रूयात् । **कासाञ्चक्रे इति** । 'आमः' इति लेर्लुक् । लिटः कृत्त्वाल्लुप्ते तस्मिन् 'कृत्तद्धितसमासाश्च' इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा, सुः, स्वरादिपाठात् 'तद्धितश्चासर्वविभक्तिः' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वाऽव्ययसंज्ञायां सोर्लुक । अथ 'हल्ङ्याब्भ्यः' इत्येनेनात्र सोर्लोपो भविष्यति, किमत्राव्ययसंज्ञया । **लोलूयाञ्चक इति** । लोलूयशब्दाद् यङन्तादाम् ।

**पदमञ्जरी**

यातेरवपूर्वाल्लिङि बहुलवचनात्सिप्, थासः सीयुट्, इट । 'एकाच उपदेशेऽनुदात्तात्' इति तु प्रतिषेधो न भवति; सिपा व्यवधानात् ॥ ३४ ॥

**कास्प्रत्ययादाममन्त्रे लिटि ॥ आम् प्रत्ययो भवतीति** । हलन्तपक्षे एतदुक्तम्, अदन्तपक्षे त्वामः प्रत्ययो भवतीति वक्तव्यम् । **अमन्त्रविषय इति** । मन्त्रविषयश्चेत्प्रयोगो न भवतीत्यर्थः । ऋग्यजुःसामलक्षणो मन्त्रम्, तत्रैवाभियुक्तैर्मन्त्रशब्दस्य प्रयोगात् । आथर्वणा अपि मन्त्रा ऋग्यजुष एवान्तर्भवन्ति । तान्त्रिकेषु मन्त्रशब्दप्रयोगो मन्त्रवदुपचारात् । छन्दसीति नोक्तम्, ब्राह्मणेऽपि यथा स्यात्—'अथ ह शुनःशेप ईक्षांचक्रे ( ऐ० ब्रा० ३३.४ ) 'ते ह तदन्तर्वेद्यासाञ्चक्रिरे अविज्ञातानि च दर्शयाञ्चकार' । ) **कासाञ्चक इति** । आमन्तस्य पदत्वम् 'आमः'

**भावबोधिनी**

'कासृ शब्दकुत्सायाम्' खांसना अर्थ में कास् धातु है इससे और प्रत्ययान्त धातुओं से लिट् परे रहते हैं आम् प्रत्यय होता है, मन्त्रविषय में नहीं होता है । उदाहरण—कासाञ्चक्रे । [ वह खांसा । ] लोलूयाञ्चक्रे । [ उसने बार-बार काटा । ] मन्त्रविषय में नहीं होता है—इसका क्या प्रयोजन है ? कृष्णो नोनाव । [ यहाँ यङ्लुगन्त 'नु' धातु से लिट् परे आम् नहीं होता है क्योंकि यह मन्त्रघटक है । कासाञ्चक्रे की प्रक्रिया—कास्+लिट्, प्रस्तुत सूत्र से 'आम्' करने पर 'आमः' ( पा. सू. २.४.८१ ) से लिट् का लुक्, प्रत्ययलक्षण से प्रातिपदिक संज्ञा, अव्यय होने से सुलोप, पुनः प्रत्ययलक्षण से पद संज्ञा, "कृञ्चानुप्रयुज्यते लिटि" ( पा. सू. ३.१.४० ) से लिट्परक कृञ् का अनुप्रयोग—कासाम् कृ + लिट् + त, एश्, 'कृ' का द्विलादि कार्य और अभ्यास कार्य करने पर कासाम् चकृ + ए, म् का अनुस्वार परसवर्ण ऋ का यण्—कासाञ्चक्रे । पौनःपुन्य अर्थ में 'लो लूय' + लिट् इस यङ् प्रत्ययान्त धातु से आम् करके शेष सारी प्रक्रिया पूर्ववत् की जाती है—लोलूयाञ्चक्रे । ]

अमन्त्र इति किम् ? 'कृण्णो नो'नाव' ( ऋ० १. ७९. २ )॥

❀ कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम् ❀ ( म० भा० ३. १, ३५ वा० ३ )। चकासाञ्चकार। चुलुम्पाञ्चकार। दरिद्राञ्चकार॥

### न्यासः

**नोनावेति**। 'णु स्तुतौ', 'णो नः' इति नत्वम्, यङ्, नोनूयत इति स्थिते 'यङोऽचि च' इति यङो लुक्, लिट्, तिप्, 'परस्मैपदानाम्' इति णल्, वृद्धिः। अत्र प्रत्ययलक्षणेन प्रत्ययान्तादाम् स्यात्, अमन्त्र इति वचनान्न भवति।

**कास्यनेकाच इत्यादि**। प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्त्तव्यमित्यर्थः। किमर्थमित्याह—**चुलुम्पाद्यर्थमिति**। यथान्यासं हि क इत्यस्मात् प्रजापतिवाचिनो विष्णुवाचिनोऽशब्दादाचारक्विपि तदन्तादप्याम् प्रसज्येत, चकासृप्रभृतिभ्योऽप्रत्ययान्तेभ्यश्च न स्यात्, तस्मादिदं न्यासान्तरं द्रष्टव्यम्। अन्ये तु प्रत्ययग्रहणस्यानेकाजुपलक्षणान्न कर्त्तव्यमेतदिति मन्यन्ते, एतच्चायुक्तम्; न हि प्रत्ययग्रहणमनेकाजुपलक्षणार्थमुपपद्यते, एकाचामपि प्रत्ययान्तानां धातूनां विद्यमानत्वात्। यथा त्वेतन्न्यासान्तरं प्रत्याख्येयं भवेत् तथोत्तरत्र दर्शयिष्यामः। **चकासाञ्चकार**, **दरिद्राञ्चकारेति**। 'चकासृ दीप्तौ' 'दरिद्रा दुर्गतौ'। **चुलुम्पाञ्चकारेति**। चुलुम्पतेर्धातुष्वपरिपठितस्यापि कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति **कात्यायनवचनप्रामाण्यात्** धातुत्वं वेदितव्यम्।

### पदमञ्जरी

इत्यत्रोपपादितम्। **नोनावेति**। नौतेर्यङ्लुगन्तात्प्रत्ययलक्षणेन प्राप्त आम् न भवति। **कास्यनेकाच इति वक्तव्यमिति**। यथान्यासे हि कशब्दादशब्दाद्वागादिभ्यश्चाचारक्विबन्तेभ्य एकाज्भ्योऽपि प्रत्ययान्तत्वादाम्-प्रसङ्गः चुलुम्पादिभ्यश्चाप्रत्ययान्तत्वादप्रसङ्गः; अतोऽव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यमित्यर्थः। तत्र कशब्दस्य णलि 'अचो ञ्णिति' इति वृद्धौ 'आत औ णलः' चकौ, अन्यत्र 'अतो लोपः' चकतुः, चकुः; अशब्दस्य णलि रूपम्—औ इति, अन्यत्र 'अत आदेः' इति दीर्घत्वे 'आतो लोप इटि च' अतुः, उः। **चकासांचकारेति**। 'चकासृ दीप्तौ' ( धा० पा० १०७४ )। **दरिद्राञ्चकारेति**। 'आत औ णलः' इत्यत्र ओकारे विधातव्ये औकारविधानं दरिद्रातेरार्द्धधातुकलोप इत्याकारलोपेऽप्यौकारस्य श्रवणार्थम्, तेन ददरिद्रावित्यपि भवतीत्याहुः। **चुलुम्पाञ्चकारेति**। चुलुम्पतिर्वार्त्तिककारवचनात्साधुः।

### भावबोधिनी

❀ कास् धातु तथा अनेक अचों वाली धातु से 'आम्' कहना चाहिये-- चुलुम्प आदि में आम् करने के लिये। अर्थात् प्रत्यय हटाकर 'अनेकाच्' रखना चाहिये। ❀ उदाहरण—चकासाञ्चकार। चुलुम्पाञ्चकार। दरिद्राञ्चकार। [ 'चकासृ दीप्तौ' यह अनेकाच् है। आम् प्रत्यय होता है—चकास्+लिट् आम्, लिट्परक कृ का अनुप्रयोग—चकास् आम् कृ + लिट् = तिप् = णल् = अ, द्वित्वादि प्रक्रिया करने पर चकासाम् चकृ+अ, अ की वृद्धि रपर, म् का अनुस्वार परसवर्ण—चकासाञ्चकार।

'चुलुम्प' ऐसी धातु पाणिनि ने नहीं पढ़ी है। अतः यहाँ वार्तिककार के कथनानुसार इसे भी धातु मान कर आम् करना चाहिये चुलुम्प्+आम्+लिट्, शेष प्रक्रिया पूर्ववत् ]

'दरिद्रा दुर्गतौ' यह अदादिगण—पठित है। इससे भी आम् प्रत्यय करके पूर्वोक्त सब प्रक्रिया करनी चाहिये। ]

का० तृ० ३५

**आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा।**
**आश्चकासोर्विधानाच्च पररूपं कतन्तवत् ॥**

**न्यासः**

अथामो मकारस्य 'हलन्त्यम्' इतीत्संज्ञा कस्मान्न भवतीत्याह—**आमोऽमित्त्वमित्यादि**। मकार इद् यस्य सोऽयं मित्, न मिदमित्, तस्य भावोऽमित्त्वम्। कथममित्त्वमित्याह—**अदन्तत्वादित्यादि**। मकारान्तत्वे हि सति मकारस्येत्संज्ञा स्यात्। न चास्य मकारान्तत्वम्, किं तर्हि? अदन्तत्वम्। तेनाकार एव 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञामनुभवन् मकारेस्येत्संज्ञां प्रतिबध्नाति। यथा चामोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा। गुणाभावोऽपि हि विदेर्विदाञ्चकारेत्यत्राकारान्तत्वादेव भवति। अथाकारान्तत्वे सत्यतो लोपे तस्याः 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावादिकार उपधा न भवति, तेन लघूपधगुणो न भवति। अदन्तत्वं तु विदेः 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यनेनाम्प्रत्ययसन्नियोगेनाकारान्तत्वनिपातनात्। अभ्युपेत्यामो मकारान्तत्वममित्त्वं प्रतिपादयितुमाह—**आश्चकासोर्विधानाच्चेति**। आमोऽमित्त्वमिति प्रकृतेन सम्बन्धः, 'दयायासश्च'

**पदमञ्जरी**

आमो मकारस्य 'हलन्त्यम्' इतीत्संज्ञा कस्मान्न भवतीत्याह—**आमोऽमित्त्वमिति**। कारयाञ्चकारेत्यादौ प्रयोगे य आम्शब्दस्तस्यामित्त्वं मकार इत्संज्ञको यस्य नास्ति सोऽमित् तस्य भावः अमित्त्वम्। कुत इत्याह? **अदन्तत्वादिति**। अद् अन्ते=समीपे यस्य सोऽदन्तः, सूत्रे विधानवेलायां समीपेऽकारवत्त्वादित्यर्थः। तेनैतन्न चोदनीयम्—आम् चेत्कथमदन्तः, अथादन्तः कथमामिति। सूत्रे विधीयमानस्यैव वा प्रत्ययस्योपलक्षणमाम इति। **अगुणत्वं विदेस्तथेति**। विदाञ्चकारेत्यत्र विदेरामि गुणाभावोऽपि तथा, अदन्तत्वादेवेत्यर्थः। अदन्तत्वादित्येतत्प्रसङ्गेन चेदमिहोक्तम्, 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यत्र तु वक्तव्यम्। तत्र हि विदेरकारान्तत्वमाम्प्रत्ययसन्नियोगेन निपात्यते, तत्रातो लोपस्य स्थानिवत्त्वाद् गुणो न भवति। न पुनः 'विद ज्ञाने' ( धा० पा० १०६४ ) इत्यकारो विवक्षित इत्युच्यते; वेत्तीत्यादौ श्रवणप्रसङ्गात्। अभ्युपेत्यापि मकारान्तत्वमित्संज्ञाभावमाह—**आस्कासोराम्विधानाच्चेति**। आमोऽमित्त्वमित्यनुषङ्गः, सति हि मित्त्वे आस्कासोराम् भवन्नप्यचामन्त्यात्परः स्यात्, तथा च सवर्णदीर्घत्वे सत्यकिञ्चित्करः स्यात्। अतः 'दयायासश्च' कास्प्रत्ययादिति आस्कासोराम्विधानादप्यामोऽमित्त्वमवसीयते इत्यर्थः। **आस्चकासोर्विधानाच्च इत्यन्ये** पठन्ति, तदयुक्तम्; न हि सूत्रे चकास

**भावबोधिनी**

आम का 'म्' इत्संज्ञक नहीं है, क्योंकि यह [ आम ] अकारान्त है। तथा 'विदाञ्चकार' इसमें 'आम' परे रहते गुण का अभाव भी आम के अकारान्त होने से ही होता है। [ लुप्त अकार के स्थानिवद्भाव के कारण 'विद' धातु की उपधा में 'इ' नहीं मिलता है अतः गुण सम्भव नहीं है। ] 'आस्' और 'कास्' धातु से आम् का विधान करने से भी 'म्' इत्संज्ञक नहीं होता है। [ यदि 'म' यह अकारान्त है तो 'आममन्त्रे' यह न होकर सवर्णदीर्घ करने पर 'आमामन्त्रे' होना चाहिये थे ? ] यहाँ 'कतन्त' [ कत+अन्त ] के समान पररूप समझना चाहिये।

**विमर्श**—सूत्रकार ने 'कास' धातु और प्रत्ययान्त धातु से लिट् परे 'आम्' का विधान किया है। परन्तु वार्तिककार प्रत्ययान्त को हटाकर अनेकाच् धातु से 'आम्' मानते हैं। चूँकि प्रत्ययान्त भी अनेकाच् हो जाता है अतः मूल रूप से अनेकाच् और प्रत्यययोग से अनेकाच् बनने वाली दोनों प्रकार की धातुओं से 'आम्' हो जाता है।

'आम' के विषय में विचारणीय यह है कि यह अकारान्त=आम् है अथवा अकारान्त=आम? समाधान यह है कि 'आम्' के 'म्' की इत्संज्ञा नहीं होती है क्योंकि यह प्रत्यय अकारान्त है। [ अतः अन्त में 'म्' न होने से 'हलन्त्यम्' की प्रवृत्ति नहीं होती है। ] तथा आम् प्रत्यय के सन्नियोग से 'विद' यह अकारान्त होता है अतः विदाञ्चकार' में गुण नहीं होता है। किन्तु मूल अकेली 'विद' अकारान्त नहीं है। अतः आम के अभावपक्ष में अदन्त न होने से गुण हो जाता है—विवेद। यदि 'आम्' का 'म्' इत् होता तो लोप करने पर मित् होने से 'मिदचोऽन्त्यात् परः' (पा. सू. १.१.४७)

## ६५५. इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥ (२२३७)

**इजादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितः, तस्माच्च लिटि परत आम्प्रत्ययो भवति। 'ईह चेष्टायाम्'**

**न्यासः**

इत्यास आमो विधानात्। कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्युपसंख्यानाच्चकासेः। आदिग्रहणेन हि चकासेरपि ग्रहणम्। मकारस्येत्संज्ञयैतत् प्रयोजनम्—अचोऽन्त्यात् परो यथा स्यादिति। यदि चामोऽमित्त्वं स्यात्, तदाऽऽस्च-कासोरामो विधानमनर्थकं स्यात्। न हि तयोरचोऽन्त्यात् पर आमि भवत्यभवति वा कश्चिद् विशेषः। उभयथा हि 'अकः सवर्णे' इति दीर्घत्वे तदेव रूपं स्यात्, तदेतदाश्चकासोरामो विधानं कथमर्थवद्भवति ? यद्यमित्त्वमामो भवति नान्यथा। न ह्यन्यत् किञ्चित्प्रयोजनमस्तीति प्रयोजनाभावादित्संज्ञा न भविष्यति। आश्चकासोर्विधान-सामर्थ्यात् सवर्णदीर्घत्वमिह न भविष्यति। 'मिदचोऽन्त्यात् परः' इति परिभाषा वा नोपस्थास्यत इत्येतच्च नाशङ्कनीयं लक्ष्यविरोधमनिच्छता। एवं ह्यनिष्टं रूपं स्यात्। न चानिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता। यदि तर्ह्यामोऽदन्तत्वमेवं सत्याममन्त्र इति निर्देशो नोपपद्यते, सवर्णदीर्घत्वे 'आमामन्त्रे' इति भवितव्यमित्याह— **पररूपं कतन्तवदिति**। यथा 'सर्वत्र लोहितादिकतन्तेभ्यः' इत्यत्र पररूपं तथेहापीति न भवति निर्देशा-नुपपत्तिः ॥ ३५ ॥

**इजादेश्च गुरुमतोऽनृच्छः ॥ यजादेरिति**। इच् आदिर्यस्येति बहुव्रीहिः। 'इच्' इति प्रत्याहारग्रहणम्।

**पदमञ्जरी**

आम्विधानमस्ति। यदपि कास्यनेकाज्ग्रहणं तदपि चुलुम्पादौ सावकाशम्। नन्वदन्तत्वपक्षे आमामन्त्र इति निर्देश्यं स्यात्तत्राह— **पररूपं कतन्तवदिति**। यथा 'सर्वत्र लोहितादिकतन्तेभ्यः' इत्यत्र पररूपम्, एवमत्रापि निपात-नात्पररूपमित्युक्तं भवति ॥ ३५ ॥

**इजादेश्च गुरुमतोऽनृच्छः ॥ ऋच्छतिवर्जित इति**। ऋच्छतिना त्यक्तः तद्रूपरहित इत्यर्थः। ऋच्छतेरन्य

**भावबोधिनी**

के अनुसार आम अच् से परे होता। फलतः 'आस्' में 'दयायासश्च' ( पा सू. ३. १. ३७ ) से और 'कास्' में 'कास्प्रत्ययादाम्' इस प्रस्तुत सूत्र से 'आम्' प्रत्यय का कोई फल नहीं दिखाई देता है क्योंकि 'आस्' में 'आ आस्' तथा 'कास्' में 'का आ स्' ऐसा होने पर सवर्णदीर्घ करके पुनः 'आस्' तथा 'कास्' यही रूप होता है। अतः मित् मानने पर कोई फल न होने से वह विधान व्यर्थ होकर यह ज्ञापित करता है कि 'आम' का 'म्' इत् नहीं होता है, तब 'मिद-चोऽन्त्यात् परः' का विषय नहीं होता है। धातु के बाद ही आता है—आस्+आम्, कास्+आम्—आसाञ्चक्रे, कासाञ्चक्रे रूप बनते हैं अब प्रश्न है कि यदि यह अकारान्त है तो 'कासप्रत्ययादाममन्त्रे' यह न होकर सवर्णदीर्घ होने पर 'कास् प्रत्ययादामामन्त्रे' ऐसा होना चाहिये था ? उत्तर यह है कि यहाँ उसी प्रकार पररूप है जिस प्रकार 'कतन्त' में। 'सर्वत्र लोहितादिकतन्तेभ्यः' ( पा. सू. ४.१.१८ ) यहाँ—कत है अन्त में जिनके—ऐसे विग्रह में समास होने से—कत + अन्त = कतान्त होना चाहिये था, परन्तु पररूप किया गया है 'अतः उसी प्रकार यहाँ भी आम + अमन्त्रे में सवर्णदीर्घ न होकर पररूप हुआ है—'आममन्त्रे'। यह श्लोक भाष्य में नहीं है ॥ ३५ ॥

इच् प्रत्याहार का वर्ण है आदि में जिसके ऐसी इजादि जो धातु गुरु वर्ण वाली है अर्थात् इच् जो आदि में वह गुरु होना चाहिये, उससे लिट् परे रहते 'आम्' प्रत्यय होता है किन्तु 'ऋच्छ' को छोड़ कर। [ संयोग पूर्व होने से यह भी गुरुमान इजादि है किन्तु इससे आम् नहीं होता है। ] उदा०—'ईह चेष्टायाम्' [ करचरणादिव्यापार रूप अर्थ में

**( धा० पा० ६३२ ), 'ऊह वितर्के' ( धा० पा० ६४८ ) । ईहाञ्चक्रे, ऊहाञ्चक्रे ।**

**इजादेरिति किम्? ततक्ष, ररक्ष। गुरुमत इति किम्? इयज, उवप। अनृच्छ इति किम्?**

**न्यासः**

गुरुरस्यास्तीति गुरुमान्। **ऋच्छतिवर्जितः** ऋच्छिना त्यक्तः। तद्रूपरहित इत्यर्थः। **ईहाञ्चक्र इति**। 'ईह चेष्टायाम्'। **ऊहाञ्चक्र इति**। 'ऊह वितर्के'।

**ततक्ष, ररक्षेति**। 'तक्षू त्वक्षू तनूकरणे', 'रक्ष पालने'। **इयज। उवपेति**। यजिवप्योरुत्तमे णलि 'णलुत्तमो वा' इति णित्वाभावपक्षे वृद्ध्यभावाद् गुरुमत्ताभावः। केचित् इयेष, उवोषेति प्रत्युदाहरन्ति। 'इषु इच्छायाम्' 'उष दाहे', णलि लघूपधगुणः, द्विर्वचनम्, 'अभ्यासस्यासवर्णे' इतीयङुवङौ। ननु च गुणे कृत एतावपि गुरुमन्तौ भवत इति भवितव्यमेवामात्र? न भवितव्यम्; 'सन्निपातलक्षणो विधिरनिमित्तं तदविघातस्य' इति लिट्सन्निपातो गुरुमत्ताया हेतुः। गुरुमत्ता च 'आमः' इति लिटमेव विहन्ति। अथ वा—गुरुमत इति नित्ययोगे

**पदमञ्जरी**

इति यावत्। **इयज, उवपेति**। यजिवप्योरुत्तमे णलि 'णलुत्तमो वा' इति णित्वाभावपक्षे वृद्ध्यभावाद् गुरूपोत्तमत्वाभावः। अथ थलि प्रत्युदाहरणम्—इयजिथ, इयष्ठ; उवपिथ, उवप्थेति। नन्वत्र सन्निपात-परिभाषयैव न भविष्यति, लिट्सन्निपातजं हि अभ्यासस्य संप्रसारणं तद्विघातकस्यामो निमित्तं न भवति, आमि हि सति लेर्लुका भवितव्यमिति लिट्सन्निपातमसौ विहन्यात्? इदं तर्हि प्रत्युदाहरणम्—इयेषेति, न ह्यत्र लिट्सन्निपातजमिजादित्वम्। अथ क्रियमाणेऽपि गुरुमद्ग्रहणे कस्मादेवात्र न भवति, यावता गुणे कृते गुरुमानेष भवति? एवमीषतुरित्यादावपि सवर्णदीर्घत्वे कृते गुरुमानेव भवति? सत्यम्; सति गुरुमद्ग्रहणे सन्निपातपरिभाषयैवात्राप्याम् न भवति, लिडानन्तर्यहेतुकत्वाद् गुरुमत्तायाः। अथ वा 'गुरुमतः' इति नित्ययोगे मतुप्, नित्यं यस्य गुरुणाभिसम्बन्धः। यद्येवम्, 'उछी विवासे' (धा० पा० २१६) व्युच्छाञ्चकार, 'उछ उञ्छे' (धा० पा० १२९४) उच्छाञ्चकार आगमनिमित्ता चास्य गुरुमत्ता, तस्मादाम् न प्राप्नोति? ज्ञापकात्सिद्धम्, यदयमनृच्छ इत्याह, तज्ज्ञापयति—भवत्येवञ्जातीयके आमिति। स तर्हि ज्ञापकार्थमृच्छतिप्रतिषेधो वक्तव्यो भवति।

ननु चाम्निवृत्त्यर्थ एवासौ कर्तव्यः, नार्थ आम्निवृत्त्यर्थेन? ज्ञापकात्सिद्धम्, यदयम् 'ऋच्छत्यॄताम्' इति लिटि परतो गुणं शास्ति, तज्ज्ञापयति—नास्मादाम् भवतीति। न च तत्रर्छतीत्यर्तेश्तिपा निर्देशः; 'ऋच्छति ॠ ऋताम्' इत्यर्तेरपि स्वरूपेणैव प्रश्लेषात्। प्रश्लेषे बहुवचनमत्र प्रमाणम्। अर्तेश्च लिटि गुणविधाने प्रयोजनं तत्रैव वक्ष्यामः। तस्मादृच्छतेर्गुणविधानं ज्ञापकमेव। तस्मादाम्न भवतीति स एषोऽनृच्छ इति प्रतिषेधो ज्ञापकार्थ एव कर्तव्यः स्यात्। एवं तर्हि लिटीति विहितविशेषणम्—इजादेर्गुरुमतो यो लिड्विहितस्तत्रेति। तेन लिड्निमित्ता यस्य गुरुमत्ता तस्माच्च न भविष्यति, आगमनिमित्ता यस्य गुरुमत्ता तस्माच्च भविष्यति। 'अनृच्छ' इति प्रतिषेधस्तु क्रियताम्, मा वा कारि। क्वचित्तु **गुरुमत इति किम्, इयेष उवोषेति** पठ्यते, तत्र उवोषेत्युदाहरणमयुक्तम्, 'उषविदजागृभ्यः' इति विकल्पविधानमनवकाशं स्यात्।

**भावबोधिनी**

'ईह' धातु है।] 'ऊह वितर्के' [वितर्क अर्थ में ऊह धातु है।] इनके इजादि गुरुमान होने से आम् होता है—ईह + आम् + लिट्। ऊह + आम् + लिट्। 'आमः' से लिट् का लुक् होता है और "कृञ्चानुप्रयुज्यते लिटि" (पा. सू. ३.१.४०) से लिट्परक 'कृ' का अनुप्रयोग—ईहाम् + कृ + लिट्, ऊहाम् + कृ + लिट्, आत्मनेपद प्रत्यय, द्वित्व, अभ्यासकार्य करने पर रूप बनते हैं।

'इजादि' मानने का क्या फल है? ततक्ष, ररक्ष। ['तक्ष' और 'रक्ष' ये संयोगपूर्व गुरुमान हैं किन्तु इजादि नहीं है अतः आम् नहीं होता है।] गुरुमान् हो,—इसका क्या फल है?—इयज, उवप। [यज और वप—ये इजादि

आनर्च्छ, आनर्च्छतुः, आनर्च्छुः।

❀ ऊर्णोतेश्च प्रतिषेधो वक्तव्यः ❀ ( म० भा० ३. १. ३६ वा० १ )। प्रोर्णुनाव। अथ वा—

**वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।**
**आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्॥** ( म० भा० ३. १. ३६ )

**न्यासः**

मतुप्, तेन नित्यं यस्य गुरुणा सह योगस्ततो भवितव्यम्, न चेषेरुषेश्च नित्यं गुरुणा सह योगः। यद्येवम्, 'उछी विवासे'—उच्छाञ्चकारेत्यत्र तुकि कृते न प्राप्नोति ? नैष दोषः; ऋच्छिप्रतिषेधो हि ज्ञापयति—आगमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीति।

**आनर्च्छेति**। 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु', 'छे च' इति तुक्, 'ऋच्छत्यॄताम्' इति गुणः, द्विर्वचनम्, हलादिशेषः, 'अत आदेः' इति दीर्घः, 'तस्मान्नुड् द्विहलः' इति नुट्। ननु च 'ऋच्छत्यॄताम्' इति ऋच्छतेरनन्तरे लिटि गुणवचनं ज्ञापकम्—ऋच्छेराम् न भवति। सति हि तस्मिन् लिट आनन्तर्य्यं विहन्येत, तदपार्थकः प्रतिषेधः ? नैतदस्ति; वचनसामर्थ्याद् व्यवधानेऽपि गुणः स्यात्। असति च तस्मिन्नागमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीत्येतज् ज्ञापितं न स्यात्। तस्मादनृच्छ इति प्रतिषेधः कर्तव्यः।

**ऊर्णोतेरित्यादि**। इजादित्वाद् गुरुमत्त्वाच्च प्राप्नोत्याम्। तस्मात् प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः। व्याख्यानं तु—वक्ष्यमाणस्यान्यतरस्यांग्रहणस्य सिंहावलोकितन्यायेनानुवर्त्तितस्य व्यवस्थितविभाषात्वविज्ञानात् कर्त्तव्यम्। **प्रोर्णुनावेति**। 'अजादेर्द्वितीयस्य' इति 'नु' इत्यस्य द्विर्वचनम्। रेफस्तु न द्विरुच्यते; 'न न्द्राः संयोगादयः' इति प्रतिषेधात्।

**अथ वेत्यादि**। 'णु स्तुतौ'। 'तेन तुल्यं वर्त्तते' इति नुवत्, तस्य भावो नुवद्भाव इति। नौतिना तुल्यं वर्त्तत इत्यर्थः। किं पुनस्तस्य प्रयोजनम्, येनासौ तथा वाच्यः ? इत्याह—**यङ्प्रसिद्धिः प्रयोजनमिति**। नुवद्भावे

**पदमञ्जरी**

**प्रोर्णुनावेति**। 'अजादेर्द्वितीयस्य' 'न न्द्राः संयोगादयः' इति नुशब्दस्य द्विर्वचनं कार्यान्तरसिद्ध्यर्थम्, अवश्यमूर्णोतेर्णुवद्भावो वाच्यः, तेनैवामोऽपि प्रतिषेधः सिद्ध इत्याह—**अथ वा वाच्य इति**। तत्र यङि भावातिदेशः, आमिटोस्त्वभावातिदेशः; नौतेस्तयोरभावात्। इडुपग्रहः = इट्प्रतिषेधः, 'विभाषा गुणे' इति पञ्चमी। फलस्य चात्र हेतुत्वं यथा—अध्ययनेन वसतीति। एकाच इति वर्तमाने 'श्र्युकः किति' इति य इट्प्रतिषेधः ततोऽपि हेतोर्णुवद्भावो वाच्य इत्यर्थः। उदाहरणानि—प्रोर्णोनूयते, प्रोर्णुनाव, प्रोर्णुतः, प्रोर्णुतवानिति॥ ३६॥

**भावबोधिनी**

हैं किन्तु गुरुमान् नहीं हैं अतः आम् नहीं होता है। ] 'ऋच्छ' से नहीं होता है, इसका क्या फल है ? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। [ 'ऋच्छ' से आम् नहीं होता है। अतः ऋच्छ + लिट् = तिप् = णल् = अ, "ऋच्छत्यॄताम्" ( पा. सू. ७.४.११ ) से ऋ का गुण, रपर—अर्च्छ। द्वित्व, हलादिशेष अ अर्च्छ + अ, "अत आदे." ( पा. सू. ७.४.७० ) से अभ्यास का दीर्घ, "तस्मान्नुडचि द्विहलः" ( पा. सू. ७.४.७१ ) से दीर्घ के बाद नुट् = न् का आगम आन् अर्च्छ् अ = आनर्च्छ। ]

❀ 'ऊर्णुञ्' से 'आम्' का प्रतिषेध कहना चाहिये। ❀ प्रोर्णुनाव। [ ऊर्णु + लिट् आम् न होने पर "अजादेर्द्वितीयस्य" से 'नु' शब्द का द्वित्व होता है—उर् नुनु + लिट् = तिप् = णल् = अ, णित् मानकर 'उ' की वृद्धि, 'आव्' आदेश उर् नु नाव् अ, 'प्र' उपसर्ग का योग, गुण, णत्व—'प्रोर्णुनाव'। ]

[ उपर्युक्त वार्तिक के खण्डन के लिये भाष्य में यह श्लोक है— ] अथवा -

'ऊर्णु' को नुवत् [ =नु के समान ] कहना चाहिये। किस लिये ? (१) यङ् प्रत्यय की प्रसिद्धि प्रयोजन है अर्थात् जैसे 'नु' इस एकाच हलादि से यङ् होता है, उसी प्रकार इस [ ऊर्णु ] से भी यङ् होना चाहिये। और (२) 'आम्' के प्रतिषेध लिये भी 'नु' के समान कहना चाहिये। [ 'नु' मान लेने पर इजादि गुरुमान् नहीं रहने से

## ६५६. दयायासश्च ॥ ३७ ॥ (२३२४)

**'दय दानगतिरक्षणेषु' ( धा० पा० ४८१ ), 'अय गतौ' ( धा० पा० ४७४ ),'आस उपवेशने' ( धा० पा० १०२२ )—इत्येतेभ्यश्च लिटि परत आम्प्रत्ययो भवति । दयाञ्चक्रे । पलायाञ्चक्रे । आसाञ्चक्रे ।**

## ६५७. उषविदजागृभ्योऽन्यतरस्याम् ॥ ३८ ॥ (२३४१)

**'उष दाहे' (धा० पा० ६९६), 'विद ज्ञाने' (धा० पा० १०६५), 'जागृ निद्राक्षये' (धा० पा० १०७३)—**

**न्यासः**

सति यथा नौतेः 'धातोरेकाचः' इति यङ् भवति—नोनूयत इति, एवमूर्णोतेरपि—प्रोर्णोनूयते इति। **आमश्च प्रतिषेधार्थमिति**। नुवद्भाव वाच्य इत्यपेक्ष्यते। तस्मिन् सति यथा नौतेरनिजादित्वाद् गुरुमत्ताभावाच्चाम् न भवति, तथोर्णोतेरपि—प्रोर्णुनावेति। **एकाचश्चेडुपग्रहादिति**। 'नुवद्भावो वाच्यः' इति सम्बध्यते। कर्मणि 'ल्यब्लोपे' इति पञ्चमी, यथा—प्रासादात् प्रेक्षते, आसनात् प्रेक्षत इति। इडुपग्रह इति इट्प्रतिषेधः। एतदुक्तं भवति—'एकाचः' इत्यनुवर्त्तमाने 'श्र्युकः किति' इति य इडुपग्रहः क्रियते तदुद्दिश्य प्रयोजनमूर्णोतेर्नुवद्भावो वाच्य इति। तेन यथा नौतेः 'श्र्युकः किति' इतीट्प्रतिषेधः—नुतः, नुतवानिति, तथोर्णोतेरपि—प्रोर्णुतः, प्रोर्णुतवानिति।

अथ वा—इडुपग्रहादिति हेतावियं पञ्चमी, यथा—'तदशिष्यं संज्ञाप्रमाणत्वात्' इति। एकाचो यत इडुपग्रहो विधीयते तस्मात् प्रयोजनाद्धेतोरूर्णोतेर्नुवद्भावो वाच्य इत्यर्थः। अथ 'इजादेश्च' इति किमर्थश्चकारः? अनुक्तसमुच्चायार्थः, तेन 'कास्यनेकाचः' इति वक्तव्यं न भवति। यथान्यासेऽपि चकारेण चकासाञ्चकारेत्यादेः सिद्धत्वात्। ननु च यदीदं नोच्येत, तदा प्रत्ययान्तोऽपि यो धातुरेकाच् ततोऽपि प्रसज्येत? यदि नेष्यते, तदा वक्ष्यमाणमन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषात्वमङ्गीकर्त्तव्यम् ॥ ३६ ॥

**दयायासश्च** ॥ **पलायाञ्चक्रे इति**। परापूर्वस्यायतेः 'उपसर्गस्यायतौ' इति लत्वम् ॥ ३७ ॥

**उषविदजागृभ्योऽन्यतरस्याम्** ॥ उषजागृभ्यां परस्मैपदिभ्यां साहचर्याद् विदेरपि परस्मैपदिनो ज्ञानार्थस्य

**पदमञ्जरी**

**दयायासश्च** ॥ दयायासः सर्वेऽप्यनुदात्तेतः। **पलायाञ्चक्रे इति**। 'उपसर्गस्यायतौ' इत्युपसर्गस्य लत्वम् ॥ ३७ ॥

**उषविदजागृभ्योऽन्यतरस्याम्**। **विद ज्ञाने इति**। सत्ताविचारणार्थयोस्त्वात्मनेपदिनोर्लाभार्थस्य चोभय-

**भावबोधिनी**

आम् प्रत्यय नहीं होता है। (३) 'एकाच्' मान कर ( "श्र्युकः किति" पा० सू० ७.२.११ से ) इट् का उपग्रह = प्रतिषेध करने के लिये—ये तीन प्रयोजन हैं। [ अतः वार्त्तिक के न रहने पर भी 'आम्' नहीं हो सकता। ] ॥ ३६ ॥

'दय' यह दान, गति और रक्षा अर्थ में है, 'अय' यह गमन अर्थ में है, 'आस्' यह बैठना अर्थ में हैं—इन तीन धातुओं से लिट् परे रहते 'आम्' प्रत्यय होता है। उदाहरण—दयाञ्चक्रे। आसाञ्चक्रे। [ दय + लिट्, आम्, दयाम् + लिट्, लिट् का लुक्, लिट्परक कृ का अनुप्रयोग दयाम् कृ + लिट् = त = एश्, द्वित्वादि कार्य करने पर—दयाञ्चक्रे। 'अय' इसके साथ 'परा' उपसर्ग के योग में "उपसर्गस्यायतौ" ( पा० सू० ८.२.१९ ) इससे रेफ का लत्व करने पर पला अय + आम् + कृ + लिट्, शेष द्वित्वादि करने पर रूप बनता है। आसाम् + लिट्, कृ का अनुप्रयोग करने पर 'आसाञ्चक्रे' यह बनता है ] ॥ ३७ ॥

'उष' दाह ( जलाना ) अर्थ में है, 'विद' ज्ञान अर्थ में है, 'जागृ' निद्रा की समाप्ति=जगाना अर्थ में है—इन

**एतेभ्यो लिटि परतोऽन्यतरस्यामाम् प्रत्ययो भवति। ओषाञ्चकार, उवोष। विदाञ्चकार, विवेद। जागराञ्चकार, जजागार। विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति॥**

**६५८. भीह्रीभृहुवां श्लुवच्च॥ ३९॥ (१४९१)**

'ञिभी भये' ( धा० पा० १०८५ ), 'ह्री लज्जायाम्' ( धा० पा० १०८६ ) डुभृञ् धारणपोषणयोः' ( धा० पा० १०८८ ), 'हु दानादनयोः' ( धा० पा० १०८४ )—**इत्येतेभ्यो लिटि परत आम्प्रत्ययो भवत्यन्यतरस्याम्, श्लाविव चास्मिन्कार्यं भवति। किं पुनस्तद्? द्वित्वमित्त्वं च। बिभयाञ्चकार, बिभाय।**

**न्यासः**

ग्रहणम्, न तु सत्ताविचारणार्थयोरात्मनेपदिनोः, नापि लाभार्थस्योभयपदिनः; जागर्त्तिनाऽऽदादिकेन वा साहचर्याद्विदेरादादिकस्यैव ग्रहणमित्याह—**विद ज्ञाने इति**। विवेदेत्यत्रादन्तत्वाभावाद् गुणो भवत्येव। आम्सन्नियोगेन विदेरदन्तत्वं विज्ञायते, तेन तत्रैव गुणाभावो नान्यत्रेति। अत आह—**विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवतीति**॥ ३८॥

**भीह्रीभृहुवां श्लुवच्च॥ भीह्रीभृहुवामिति** पञ्चम्यर्थे षष्ठी। सुपां सुपो भवन्तीति। **श्लुवदिति**। श्लाविव श्लुवत्, 'तत्र तस्येव' इति सप्तमीसमर्थाद्वतिः। कार्यातिदेशश्चायम्। अत एवाह—**श्लुवच्चास्मिन् कार्यं भवतीति। द्वित्वमित्त्वञ्चेति**। 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इतीत्त्वम्। असति ह्यतिदेशे लिडाश्रयं

**पदमञ्जरी**

पदिनो ग्रहणं न भवति, परस्मैपदिभ्यामुषिजागृभ्यां जागर्तिनाऽऽदादिकेन साहचर्यादिति भावः। **विवेदेति**। आम्प्रत्ययसन्नियोगेनादन्तत्वप्रतिज्ञानादत्र गुणो भवत्येव। अत एवाह—**विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवतीति**॥ ३८॥

**भीह्रीभृहुवां श्लुवच्च॥** श्लुवत्कार्यापेक्षया सूत्रे षष्ठी, सन्नियोगशिष्टत्वाच्चाम् प्रत्ययोऽपि तेभ्य एव विज्ञायते। **द्वित्वेत्त्वे इति**। 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इतीत्त्वम्, तत्र 'श्लौ' इति वर्तते। 'न लुमताङ्गस्य'

**भावबोधिनी**

तीन धातुओं से लिट् परे रहते विकल्प से 'आम्' प्रत्यय होता है। [ अतः दो दो रूप बनते है। ] उदाहरण—ओषाञ्चकार, उवोष। विदाञ्चकार, विवेद। जागराञ्चकार, जजागार। 'विद' धातु को अकारान्त माना गया है अतः आम् परे रहते [ उपधा के इ का ] गुण नहीं होता है। [ क्योंकि 'अ' के स्थानिवद्भाव से उपधा में 'इ' नहीं मिल पाता है। ] [ उष् + लिट्, आम् करने पर उपधागुण लिट् का लुक्, लिट्परक 'कृ' का अनुप्रयोग ओषाम् कृ + लिट् = तिप् = णल् = अ, धातु का द्वित्वादि करने पर ओषाम् चकृ + अ ऋ की वृद्धि, रपर, 'म्' का अनुस्वार परसवर्ण—ओषाञ्चकार। आम् न होने पर—उष + लिट् तिप् णल्=अ, द्वित्व, हलादिशेष—उ उष् + अ, उपधा का गुण—उ ओष् + अ, "अभ्यासस्यासवर्णे ( पा० सू० ६.४.७८ ) से 'उ' का 'उवङ् आदेश अनुबन्धलोप—उव् ओष् अ=उवोष। विद् + लिट्, आम्, विदाम् + लिट्, यह 'विद' आम के योग में अदन्त मानी जाती है अतः उपधा में 'इ' नहीं मिल पाता है क्योंकि स्थानिवद्भाव से 'अ' आ जाता है। प्रक्रिया पूर्ववत्। जागृ + लिट् आम्, ऋ का गुण रपर—जागराम् + लिट्, शेष प्रक्रिया पूर्ववत्। आम् न होने पर जागृ + लिट्=तिप्=णल्=अ, "लिटि धातोरनभ्यासस्य" ( पा० सू० ६.१.८ ) से प्रथम एकाच् 'जा' का द्वित्व, ह्रस्व जजागृ + अ, ऋ की वृद्धि, रपर—जजागार। ]॥ ३८॥

'ञि भी' यह भय अर्थ में है, 'ह्री' लज्जा अर्थ में, 'डुभृञ्' धारण और पोषण अर्थों में, 'हु' देना और लेना अर्थों में है—इन चार धातुओं से लिट् परे रहते विकल्प से आम् प्रत्यय होता है और इसमें 'श्लु' के समान कार्य होता है। वह कौन सा कार्य है? द्वित्व तथा इत्व। उदा०—बिभयाञ्चकार, बिभाय। [ 'ञि भी' में "आदिर्ञिटुडवः" ( पा. सू. १.३.५ ) से 'ञि' की इत्संज्ञालोप करने के बाद—भी + लिट् वैकल्पिक आम् और श्लुवत् कार्य भी + आम् + लिट् "श्लौ" ( पा. सू. ६.१.१० ) से धातु का द्वित्व, अभ्यासकार्य, ह्रस्व बिभी + आम् + लिट्, 'ई' का गुण, अयादेश—बिभय् आम् + लिट्, लिट् लुक्, लिट्परक 'कृ' का अनुप्रयोग—धातु का द्वित्व तथा अभ्यास कार्य—बिभयाञ्चकृ + अ, ऋ की वृद्धि, रपर—बिभयाञ्चकार। आम् न होने पर भी + लिट्, द्वित्व और अभ्यासकार्य करने

**जिह्रयाञ्चकार, जिह्राय । बिभराञ्चकार, बभार । जुहवाञ्चकार, जुहाव ॥**

**६५९. कृञ्चानुप्रयुज्यते लिटि ॥ ४० ॥ ( २२३९ )**

**आम्प्रत्ययस्य पश्चात्कृञनुप्रयुज्यते लिटि परतः । 'कृञ्' इति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते,**

**न्यासः**

द्विर्वचनमामा व्यवधाने न स्याद् । इत्वमपि नैव स्यात्, तद्विधौ हि 'णिजां त्रयाणां गुणः श्लौ' इत्यतः श्लावित्यनुवर्त्तते । तस्मात् तस्योभयस्य सिद्धये 'श्लुवच्च' इत्यतिदेशः ॥ ३९ ॥

**कृञ्चानुप्रयुज्यते लिटि ॥ अनुप्रयुज्यत इति ।** अनु-प्रशब्दौ प्रत्येकं प्रथमान्ते पदे । 'युज्यते' इत्यात्मनेपदे प्रथमपुरुषैकवचनान्तम् पदम् । **आम्प्रत्ययस्येति ।** आम् प्रत्ययो यस्मादिति बहुव्रीहिः । पश्चादित्यनेनानुशब्दस्यार्थमाचक्षाणः प्राक् प्रयोगं निराकरोति । सावधारणफलत्वाच्च सर्ववाक्यानामाम्प्रत्ययस्यैव पश्चात् कृञ् प्रयुज्यते—इत्यवधारणमिहाश्रितम्, तेन व्यवधाने प्रयोगो निराकृतो भवति । न हि व्यवधाने कृञनुप्रयुज्यमान आम्प्रत्ययस्यैवानुप्रयुक्तो भवति, अपि तु शब्दान्तरस्यापि । **लिटि परत** इत्यनेन प्रत्ययान्तरे परे प्रयोगाभावमाह । ननु च 'आमः' इति लिटो लुका भवितव्यम्, तत् कथं लिटि परतः कृञनुप्रयुज्यते ? नैष दोषः; न ह्ययमत्रार्थः—लक्षणान्तरेण यो विहितो लिट् तत्र परतोऽनुप्रयुज्यते कृञिति, किं तर्हि ? अनेनैव सूत्रेण विधीयमाने लिटि परतः कृञनुप्रयुज्यत इति, लिट्परः कृञनुप्रयुज्यत इति यावत् । ननु च कृञित्युच्यते, पाचयामासेति भवतेरस्तेश्चानुप्रयोगो न सिध्यतीत्याह—**कृञिति प्रत्याहारेणेत्यादि ।** 'अभूततद्भावे कृभ्वस्तियोगे' इतीमं कृशब्दं गृहीत्वा

**पदमञ्जरी**

इति गुणप्रतिषेधस्तु न भवति, किं कारणम् ? 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यस्याः प्राप्तेरयं प्रतिषेधः । श्रूयमाणत्वादामः[1] ॥ ३९ ॥

**कृञ्चानुप्रयुज्यते लिटि ॥** अनुप्रयुज्यत इत्यनुशब्दः पश्चादर्थे । तत्र कस्य पश्चादित्यपेक्षायामामः प्रकृतत्वात्तस्यैवेति विज्ञायत इत्याह—**आम्प्रत्ययस्येति ।** योऽयमाम्प्रत्ययो विहितः—कर्मधारयोऽयम्, न तु बहुव्रीहिः—आम्प्रत्ययो यस्मात्सोऽयमाम्प्रत्ययस्तस्येति । तथा हि सत्याम्प्रत्ययवदितिवदामः प्रत्ययस्य प्रकृत्युपलक्षणत्वाद्धातोरामश्च मध्ये कृञः प्रयोग उक्तः स्यात् । **पश्चात्कृञनुप्रयुज्यत इति ।** पश्चाच्छब्दसन्निधावनुशब्दोऽयमनुवादः । **लिटि परत इति ।** लिटि परतः स्थितो यः कृञ् सोऽनुप्रयुज्यत इत्यर्थः । सूत्रेऽपि लिटीति नानुप्रयोगस्य निमित्तनिर्देशः, किं तर्हि ? 'परोक्षे लिट्' इत्यनेन विहिते लिटि परभूते यः कृञ् सोऽनुप्रयुज्यत इति वचनव्यक्तिः । चकारेत्यादिपदमनुप्रयुज्यत इति यावत् । **कृञिति प्रत्याहारेणेति ।** 'कृभ्वस्तियोगे' इति कृशब्दा-

**भावबोधिनी**

पर बिभाय । ह्री + आम् + लिट्, श्लुवत् मानने से 'ह्री' का द्वित्व, हलादिशेष चुत्व करने पर 'ह्' का 'झ' जश्त्व करने पर झ का ज—जिह्री + आम् + लिट्, 'ई' का गुण, ए का अय् आदेश—जिह्रय् आम् + लिट् लिट्परक कृ का अनुप्रयोग आदि सारी प्रक्रिया पूर्ववत् की जाती है । आम् न करने पर ह्री + लिट् = तिप् = णल् = अ, द्वित्व, अभ्यासकार्य जिह्री+अ, 'ई' की वृद्धि, ए, ऐ' का' आय्' आदेश—जिह्राय । डु भृञ्—इसमें 'डु' तथा 'ञ्' की इत्संज्ञा लोप के बाद भृ + लिट्, आम् और श्लुवद्भाव से द्वित्व, अभ्यासकार्य ''भृञामित्'' ( पा० सू० ७.४.७६ ) से अभ्यास का इत्व–बिभृ+आम्, ऋ का गुण, रपर—बिभराम् + लिट् लिट् लुक्, लिट्परक 'कृ' का अनुप्रयोग आदि सारी प्रक्रिया पूर्ववत् होती है । आम् न होने पर भृ+लिट्, द्वित्वादि करने के बाद, ऋका गुण अ, रपर, हलादि शेष जश्त्व—बभृ+अ, णित् होने से ऋ की वृद्धि रपर—बभार । हु+आम्, श्लुवत् होने से द्वित्व, अभ्यास कार्य, ह का चुत्व और जश्त्व, 'उ' का गुण, अव् आदेश जुहव् आम्+लिट्, लिट् परक 'कृ' का अनुप्रयोग आदि होता है । आम् न होने पर हु+लिट्, द्वित्व और अभ्यास कार्य के बाद 'उ' की वृद्धि औ, 'आव्' आदेश—जुहाव । ] ॥ ३९ ॥

आम् प्रत्यय होता है जिससे उसके बाद लिट् परे रहते 'कृ' का अनुप्रयोग होता है 'कृञ् यह प्रत्याहार का ग्रहण है ।

---

१. 'न चात्रासौ प्राप्तिः' इति वाक्यशेषः ।

**तत्सामर्थ्यादस्तेर्भूभावः ( २.४.५२ ) न भवति । पाचयाञ्चकार । पाचयाम्बभूव । पाचयामास ॥**

**न्यासः**

'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' इति ञकारेण प्रत्याहारग्रहणमेतत् । तेन प्रत्याहारग्रहणेन कृभ्वस्तयस्त्रयो गृह्यन्ते । तत्र च त्रयाणामप्यन्तर्भावादित्यदोषः । एवमप्यस्तेरनुप्रयोगो न सिध्यति, यस्माद् 'अस्तेर्भूः' इति भूभावेन भवितव्यमित्याह—**तत्सामर्थ्यादिति** । प्रत्याहारेण कृभ्वस्तीनां ग्रहणसामर्थ्यादस्तेर्भूभावो न भवति । तेषां प्रत्याहारग्रहणस्यैतत् प्रयोजनम्—अस्तेरनुप्रयोगो यथा स्यात् । यद्यस्तेरनुप्रयोगस्य भूभावः स्यात् निष्फलं प्रत्याहारग्रहणं स्यात्, 'कृभ्वनुप्रयुज्यते लिटि' इत्येवं ब्रूयात् । तत्राप्ययमर्थः—किमिदं करोतेर्ग्रहणम् ? उत प्रत्याहारस्य ? इति सन्देहः परिहृतो भवति । यदि तर्हि कृञिति प्रत्याहारग्रहणम्, एवं सति 'अभिविधौ सम्पदा च' इति सम्पदानुप्रयोगः प्राप्नोति; तस्य प्रत्याहारेऽन्तर्भूतत्वाद् ? नैष दोषः; 'सनाद्यन्ता धातवः' इत्यतो धातुग्रहणमनुवर्त्तते, तेन च कृञ् विशिष्यते—कृञ् यो धातुरिति, न च सम्पदेत्ययं धातुः, किं तर्हि ? धातूपसर्गसमुदायः; तस्मान्नानुप्रयुज्यते ।

**पाचयाम्बभूवेति** । पचेर्ण्यन्तादाम् । 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति णेरयादेशः । 'भवतेरः' इत्यभ्यासस्यात्त्वम् । 'भुवो वुग् लुङ्लिटोः' इति बुगागमः ।

**पदमञ्जरी**

दारभ्य 'कृञो द्वितीय' इत्या कृञो ञकारात्प्रत्याहारः । अत्र च प्रमाणमाम्प्रत्यय इत्यत्र कृञ्ग्रहणम् । यदि ह्यत्र स्वरूपग्रहणं स्यात्तदान्यस्यानुप्रयोगस्याभावादनर्थकं तत्र कृञ्ग्रहणं स्यात् । अत एव विपर्ययोऽपि न भवति—तत्र प्रत्याहारग्रहणम्, इह स्वरूपग्रहणमिति; न ह्यत्र स्वरूपमात्रग्रहणे तत्र कृभ्वस्तीनामनुप्रयोगत्वानुवाद उपपद्यते । **तत्सामर्थ्यादिति** । प्रत्याहारग्रहणसामर्थ्यादित्यर्थः । **अस्तेर्भूभावो न भवतीति** । अन्यथाऽसन्देहार्थं 'कृभ्वनुप्रयुज्यते लिटि' इत्येव ब्रूयादिति भावः । तत्र एषि इटि च रूपे विप्रतिपन्ना उभयत्र 'ह एति'—ईक्षामाह इति केचित् । अन्ये तु तासिसाहचर्यादिट्येव हत्वमिति । अपरे तु साहचर्यादेव सार्वधातुक एवेति हत्वमित्युभयत्र ईक्षामास इति रूपमिति स्थिताः ।

इहामन्तमेतदनभिव्यक्तपदार्थकम्, नास्माद्भावकर्मकर्तृविशेषः पुरुषविशेषः संख्याविशेषो वा गम्यते, केवलं पूर्वापरीभूतानद्यतनकालं परोक्षे साधनादिविशेषाकाङ्क्षं क्रियारूपमर्थमाह—तत्रावश्यं तदाकाङ्क्षनिवृत्तये विशेषवाचिपदमनुप्रयोक्तव्यम्, तस्मादनुप्रयुज्यत इत्यंशो न विधातव्यः ? इदं तर्हि प्रयोजनम्—कृभ्वस्तीनामेव यथा स्याद्धात्वन्तरस्य मा भूत् । कस्य पुनः प्राप्नोति ? सामान्यवचनस्यानुप्रयुज्येत–कारयां पपाचेति । विशेषवचनस्य वा, तत्रापि सोऽनुप्रयुज्येत–उषामुवोष, विदांविवेद, जागराञ्जजागारेति । तत्समानार्थो वा—उषान्ददाहे तीत्यादि । अर्थान्तरवचनो वा–उषाम्पपाचेति । प्रथमे पक्षे यावदपेक्षमेव नानुप्रयुक्तं स्यादधिकोऽप्यर्थो गम्येत पाकादिविशेषो नाम, द्वितीयतृतीययोस्त्वनुप्रयोगेणैव सकलार्थावगतेरासप्रयोगो व्यर्थः स्यात्, चतुर्थे

**भावबोधिनी**

[ 'अभूततद्भावे कृभ्वस्तियोगे' (पा. सू.५।४।५०) से लेकर 'कृञो द्वितीयतृतीय–शम्बबीजात् कृषौ' ( पा. सू. ५।४।५८ , के ञ् तक प्रत्याहार 'कृञ्' है । ] अतः कृ, भू, अस्—इन तीनों का ग्रहण होता है, इसी के सामर्थ्य से 'अस्' का 'भू' आदेश नहीं होता है । उदा० पाचयाञ्चकार । पाचयाम्बभूव । पाचयामास [ णिजन्त पच् + णिच्, उपधावृद्धि-पाचि—इस अनेकाच् णिजन्त से लिट् में आम् प्रत्यय होता है—पाचि + आम् + लिट् 'इ' का गुण, अय् आदेश—पाचयाम् + लिट्, 'कृ' के अनुप्रयोग में पाचयाम् कृ + लिट् = तिप् = णल् = अ, 'कृ' का द्वित्वादि करने पर—पाचयाञ्चकार बनता है । 'भू' के अनुप्रयोग में—पाचयाम् भू + लिट् = तिप् = णल् = अ, भू का द्वित्वादि करने पर—पाचयाम्बभूव । 'अस्' के अनुप्रयोग में— पाचयाम् अस् + लिट्, शेष प्रक्रिया पूर्ववत् करने पर—पाचयामास ] ॥ ४० ॥

**न्यासः**

किमर्थं पुनरिदमुच्यते, यावताऽमन्तमिदम् अनभिव्यक्तक्रियापदार्थकम्। अतो हि क्रियाकालमात्रस्याभिव्यक्तिर्भवति, न साधनपुरुषसंख्यानाम्। न हि विना तिङन्तपदेन तासामभिव्यक्तिर्भवति। तस्मादपरिसमाप्त्यर्थत्वादेवामन्तस्यानुप्रयोगो भविष्यति? कृभ्वस्तीनामनुप्रयोगो यथा स्यात्, पचादीनां मा भूद्। पचादीनामिति चेत्, न; पचादीनां विशेषवाचित्वादनुप्रयोगस्यानुपपत्तेः। विशेषवाची ह्यनुप्रयुज्यमानः सामान्यवाचिनो ह्यामन्तस्यानुप्रयुज्यते? विशेषवाचिनो वा? तत्र न तावत् सामान्यवाचिन आमन्तस्य विशेषवाच्यनुप्रयोगमर्हति, तस्यासम्भवात्। कृभ्वस्तयो हि सामान्यवाचिनः; न च तेभ्यः केनचिदाम् विहितः। विशेषवाचिनोऽप्यामन्तस्य विशेषवाची समानार्थोऽनुप्रयुज्येत? भिन्नार्थो वा? तत्र समानार्थस्तावन्नानुप्रयुज्यते; उक्तार्थत्वात्। तस्मिंश्चानुप्रयोक्तुमिष्ट आमन्तस्य सकलक्रियाकालाद्यर्थाभिव्यक्तिर्भवति। सामार्थ्यात् स एवानुप्रयोक्तव्यो यत्र सर्वाभिव्यक्तिर्भवति। तत्र किमामन्तेन समानार्थेन पूर्वेण? भिन्नार्थोऽपि नानुप्रयोगमर्हति; तदार्थानभिव्यक्तेः। अनुप्रयोगो ह्यामन्तस्यार्थस्याभिव्यक्तये क्रियते, न चात्यन्तभिन्नार्थेनामन्तवाच्यस्यार्थस्य सम्बन्धिनः साधनादयः शक्यन्तेऽभिव्यङ्क्तुम्। सामान्यवाचिना तु शक्यन्तेऽभिव्यङ्क्तुम्। विशेषसन्निधौ हि सामान्यशब्दस्य विशेषेऽवस्थानादामन्तस्य सन्निधौ सामान्यशब्दाः कृभ्वस्तयोऽनुप्रयुज्यमानास्तद्वाच्य एवार्थविशेषे वर्त्तन्ते, तस्मा-

**पदमञ्जरी**

त्वर्थान्तरगत एव विशेषो गम्येत, न त्वामवगतः, तद्गतविशेषाभिधानाय त्वामनुप्रयोगव्यसनम्। अतएव प्रत्याहारान्तर्भूतस्यापि सम्पद्यतेरनुप्रयोगो न भवति, अन्यथा तस्यापि स्यात्। 'सनाद्यन्ता धातवः' इत्यतो धात्वधिकाराद्वा धातूपसर्गसमुदायस्य न भविष्यति। एवमपि योऽत्र धातुस्तस्य प्राप्नोति, तस्मात्सामान्यवचनस्य वा सामान्यवचनं वानुप्रयोक्ष्यते। एवं हि सामान्यस्य सन्निहिते एव विशेषे पर्यवसानात्तद्गतसाधनादिविशेषाभिधानमामन्तर्गतविशेषभिधानमेव संवर्त्तते। तथा भ्वस्त्योरनुप्रयुज्यमानयोरामन्तवशेन सकर्मकत्वं भवति — 'तस्यातपत्रं बिभराम्बभूवे', 'अहं किल व्यपेक्षामास' इति, तदुपपद्यते, तेन द्वयोः सहप्रयोगः। यदि तु सामान्यवचन एव प्रयुज्येत; क्रियाविशेषो न गम्येत, आमन्यस्यैवानभिव्यक्तिः। तस्मात्कृञ्चेत्ययमप्यंशो न विधेयः। इदं तर्हि प्रयोजनं लिट्परस्यैव यथा स्यात्, प्रत्ययान्तरपरस्य मा भूत्। किंपरस्य पुनः प्राप्नोति? कृत्परस्य। न कृत्परस्यानुप्रयोक्ष्यमाणपुरुषविशेषाभिव्यक्तिः। लिटि तु विरुद्धकालतैव लृलुटोरपि। लिङादिष्वपि विध्याद्यर्थान्तरप्रतीतिप्रसङ्गः, लुङि भूतमात्रं गम्येत नानद्यतनविशेषः, लटि न पारोक्ष्यं गम्येत।

ननु च यथानुप्रयोगे प्रकृतिवाच्यस्य सामान्यस्यामन्तर्वाच्ये विशेषे पर्यवसानम्, एवं प्रत्ययवाच्यस्याप्यामन्तर्वाच्येऽनद्यतने परोक्षे च विशेषे पर्यवसानाद्युज्यत एव लुङोऽनुप्रयोगः, तथा 'हशश्वतोर्लङ् च' इति लिडर्थ एव लङ् विधीयते, लङन्तस्यानुप्रयोगः प्राप्नोति? नैष दोषः; एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यति। कोऽर्थः? यया प्रकृत्या प्रयोगः प्रारभ्यते तयैव समापनीयः, यथा खादिरे बध्नाति पालाशे बध्नातीति यूपद्रव्यविकल्पे खादिरेण प्रयोगे प्रारब्धे दैवान्मानुषाद्वा कस्माच्चिदपराधात्खादिरापचारे मुख्ये पलाशे लभ्यमानेऽपि तत्परित्यागेनालभ्यमानस्यापि खादिरस्य प्रतिनिधिना बादरादिना प्रयोगः परिसमाप्यते। एवं हि प्रारब्धः प्रयोगः परिसमापितो भवति। द्रव्यान्तरोपादाने तु प्रयोगान्तरं स्याद्; द्रव्यभेदे क्रियाभेदात्। प्रतिनिधिस्तु मुख्यबुद्ध्यैवोपादीयते; तदवयवानां तत्र भूयसां सम्भवात्। तथेहाप्यामन्तेन लिट्प्रयोगः प्रारब्धोऽपरिसमाप्तः साकाङ्क्षः, तस्याकाङ्क्षापूरणेन स एव प्रयोगोऽनुप्रयोगेण परिसमाप्यमानो युक्तं यल्लिट्परस्यैवानुप्रयोगेण परिसमाप्यते, तस्मान्नास्ति प्रत्ययान्तरपरस्यानुप्रयोगप्रसङ्गः। तस्माल्लिटीत्ययमप्यंशो न विधातव्यः। इदं तर्हि प्रयोजनम्–अनुप्रयोगः = पश्चात्प्रयोगो यथा स्यात्–ईक्षांचक्रे, चक्रेईक्षामिति मा भूत्। व्यवहितनिवृत्त्यर्थं च–ईक्षां देवदत्तश्चक्रे। कथं व्यवहितनिवृत्तिः?

६६०. विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ ४१ ॥ ( २४६५ )

**'विदाङ् कुर्वन्तु' इत्येतदन्यतरस्यां निपात्यते । किं पुनरिह निपात्यते ? विदेर्लोट्याम्प्रत्ययः, गुणाभावः, लोटो लुक्, कृञश्च लोट्परस्यानुप्रयोगः । अत्र भवन्तो विदांकुर्वन्तु, विदन्तु । इतिकरणः प्रदर्शनार्थः । न केवलं प्रथमपुरुषबहुवचनम्, किं तर्हि ? सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते—विदाङ्करोतु, विदांकुरुतात्, विदांकुरुताम्, विदांकुरु, विदांकुरुतमित्यादि ॥**

**न्यासः**

देषामेव कृभ्वस्तीनामनुप्रयोगो भविष्यतीति नारब्धव्यमिदम् ? नैतदस्ति; यथैव हि कृभ्वस्तयः क्रियासामान्यवचनाः, एवं विद्यतिरपीति तस्याप्यनुप्रयोगः स्यात् । तस्मात् तन्निवृत्त्यर्थमिदमारब्धम् । व्यवहितप्रयोगनिवृत्त्यर्थञ्च, पाचयां देवदत्तश्चकारेति मा भूत् । व्यवहितप्रयोगनिवृत्तिस्त्ववधारणविशेषाल्लभ्यते । अवधारणं तु सर्ववाक्यानां व्यवच्छेदफलत्वात् सावधारणफलत्वाच्चाकारस्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते । विपर्ययनिवृत्त्यर्थश्चारब्धव्यः, विपर्ययनिवृत्तिस्त्वनोः पश्चादर्थत्वाल्लभ्यते ॥ ४० ॥

**विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ विदेर्लोट्याम्प्रत्यय इति ।** विदेर्लिट्याम् विहितो लोटि प्राप्नोतीत्यतोऽपि निपात्यते । आममाश्रित्य लघूपधगुणः प्राप्नोतीति तदभावश्च । 'आमः' इति लेर्लुग् विधीयमानो लोटो न सिध्यतीत्यतो लोटो लुक् । लिट्परस्य कृञोऽनुप्रयोग उक्तो लोट्परस्य न प्राप्नोति, सोऽपि निपात्यत इति सर्वत्र सम्बन्धनीयम् । **कुर्वन्त्विति ।** बहुवचनम्, झेरन्तादेशः, 'एरुः', विकरणमाश्रित्य धातोर्गुणः, 'अत उत् सार्वधातुके' इत्युत्त्वम्, विकरणस्य यणादेशः । **इतिकरण इत्यादि ।** लोड्वचनानामुपलक्षणार्थत्वे सतीतिकरणस्य यदिष्टं तद्दर्शयितुमाह—**न केवलमित्यादि । कुरुतामिति ।** 'तस्थस्' इत्यादिना तसस्ताम् । **कुर्विति ।** 'सेर्ह्यपिच्च' इति हिः, 'उतश्च प्रत्ययात्' इत्यादिना हेर्लुक् । **कुरुतमिति ।** तसस्तम् ॥ ४१ ॥

**पदमञ्जरी**

आमपेक्षया पश्चाद्भावस्य तत्रैव मुख्यत्वात् । तदेवं पूर्वनिवृत्तिर्व्यवहितनिवृत्तिश्च प्रयोजनमिति स्थितम् । इह तु—'तान्ह राजा मदयामेव चकारेति **बह्वृचब्राह्मणे** (ऐ० ब्रा० २६.१, पृ० ९०१) व्यवहितप्रयोगश्छान्दसः । कथं **भट्टिकाव्ये** 'उक्षां प्रचक्रे नगरस्य मार्गान्, ( ३.५ ) बिभयां प्रचकारासौ' इति ? कथं वा 'तं पातयां प्रथममास', 'प्रभ्रंशयां यो नहुषं चकार' इति ? **वार्तिककारः** पृच्छ्यताम्, यः पठति—'विपर्यासनिवृत्त्यर्थं वाच्यम्, व्यवहितनिवृत्त्यर्थं च' इति ! ॥ ४० ॥

**विदांकुर्वन्त्वित्यन्यतरस्याम् ॥** इहोत्तरत्र चानुप्रयोगानुसारेण आमन्ते लकार उन्नेयः । **विदेर्लोट्याम्प्रत्यय इति ।** निपात्यत इत्यनुषङ्गः, तथा गुणाभावश्चेत्यत्र । एवं लोटो लुगित्यत्र, तथा कृञश्च लोट्परस्यानुप्रयोग इत्यत्र । सर्वमेतदप्राप्तमिति निपात्यते । **इतिकरणः प्रदर्शनार्थ इति ।** सर्वेषां लोड्वचनानामुपलक्षणार्थ इत्यर्थः । किमेवं सति सिद्धं भवतीत्याह—**न केवलमिति ।** प्रचुरप्रयोगत्वात्तु सूत्रे बहुवचनं पठितम् । कश्चित्तु **भाष्यवार्तिककारा**नुक्तत्वादुपलक्षणत्वं नेच्छति, स इतिकरणस्य प्रयोजनं ब्रवीतु ॥ ४१ ॥

**भावबोधिनी**

'विदाङ्कुर्वन्तु' यह विकल्प से निपातित होता है । यहाँ क्या निपातित होता है ? 'विद' इस धातु से लोट् परे रहते आम् प्रत्यय, गुण का अभाव और लोट्परक 'कृ' का अनुप्रयोग । उदा० ( अत्रभवन्तो ) विदाङ्कुर्वन्तु, विदन्तु । [ विद् आम् + कृ + लोट् = झि, झ का अन्त आदेश—विदाम् कृ + अन्ति 'तनादिकृञ्भ्यः उ' ( पा. सू. ३. १. ७९ ) से 'उ' विकरण, इसे मान कर ऋ का गुण, रपर-विदाम कर् उ + अन्ति, 'अत उत् सार्वधातुके' ( पा. सू. ६.४.११० ) से 'अ' का 'उ' 'इको यणचि' सूत्र से विकरण 'उ' का यण् 'व्' 'एरुः' (पा. सू. ३.४.८६) से 'अन्ति' के 'इ' का 'उ' आदेश विदाम् कुर्वन्तु, म् का अनुस्वार तथा परसवर्ण करने पर—विदाङ्कुर्वन्तु रूप बनता है । पक्ष में 'विदन्तु' यह भी होता है । ]

सूत्र में 'इति' लगाना प्रदर्शनार्थ है । [ क्या प्रदर्शनार्थ ? ] केवल प्रथम पुरुष बहुवचन ही नहीं होता है । तो क्या होता है ? लोट् के सभी वचनों [ तथा पुरुषों ] का अनुप्रयोग होता है—एकवचन विदाङ्करोतु, विदाङ्कुरुतात्, द्विवचन—विदाङ्कुरुताम् । मध्यम पुरुष एकवचन—विदाङ्कुरु, द्विवचन—विदाङ्कुरुतम्—आदि सभी रूप होते हैं ॥ ४१ ॥

**६६१. अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयांक्रियाद्विदाम-क्रन्निति च्छन्दसि ॥ ४२ ॥ ( ३४०३ )**

'अभ्युत्सादयाम्' इत्येवमादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते। सदिजनिरमीणां ण्यन्तानां लुङ्याम्प्रत्ययो निपात्यते। चिनोतेरपि तत्रैवाम्प्रत्ययो द्विर्वचनं कुत्वं च। अकरिति चतुर्भिरपि प्रत्येकमनुप्रयोगः सम्बध्यते। पावयाङ्क्रियादिति--पवतेः पुनातेर्वा ण्यन्तस्य लिङ्याम् निपात्यते, क्रियादिति चास्यानुप्रयोगः। विदामक्रन्निति—विदेर्लुङ्याम् निपात्यते, गुणाभावश्च, अक्रन्निति चास्यानुप्रयोगः। अभ्युत्सादयामकः ( मै० स० १.६.५ )। अभ्युदसीषददिति भाषायाम्। प्रजनयामकः ( मै० सं० १.६.१० )।

**न्यासः**

**अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयांक्रियाद्विदामक्रन्निति च्छन्दसि ॥ अभ्युत्सादयामिति।** 'कुगतिप्रादयः' इति समासे कृत एकमेवेदं प्रथमान्तम्। एवं प्रजनयामित्येतदपि। शेषाण्यप्यामन्तानि प्रथमान्तान्येव। **अकरिति।** करोतेर्लुङ्। प्रथमपुरुषैकवचनान्तम्। **अक्रन्निति।** प्रथमपुरुषबहुवचनान्तम्। **सदिजनिरमीणामिति।** 'षद्लृ विशरणगत्यवसादनेषु', 'जनी प्रादुर्भावे' 'रमु क्रीडायाम्'। **ण्यन्तानामिति।** हेतुमण्णिजन्तानाम्। **पवतेरिति।** 'पूङ् पवने'। **पुनातेरिति।** 'पूञ् पवने'। **लिङ्याम् निपात्यते इति।** लिटि विहितत्वाल्लिङि न प्राप्नोति, ततो निपात्यते। **अस्येति।** पुनातेः पवतेर्वा ण्यन्तस्य। **लुङ्याम् निपात्यत इति।** पूर्ववन्न प्राप्नोतीति कृत्वा। **विदेरपि गुणाभावश्चेति।** 'पुगन्तलघूपधस्य' इति गुणः प्राप्नोति, अतस्तदभावो निपात्यते। **अभ्युत्सादयामिति।** पूर्ववण्णेरयादेशः। लुङो लुक्। **अकरिति।** करोतेर्लुङ्, अडागमः, तिप्, च्लिः, तस्य 'मन्त्रे घसह्वर' इति लुक्, गुणः, रपरत्वम्, 'हल्ङ्याब्भ्य' इति तिलोपः, रेफस्य विसर्जनीयः। **अभ्युदसीषददिति।** 'णिश्रि' इत्यादिना चङ्, 'णौ चङ्युपधायाः' इति ह्रस्वः, 'चङि' इति द्विर्वचनम्, हलादि-

**पदमञ्जरी**

**अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयांक्रियाद्विदामक्रन्नितिच्छन्दसि ॥ अकरिति।** कृञो लुङि सिपि च्लेः 'मन्त्रे घस' इत्यादिना लुक्, सिपो हल्ङ्यादिलोपः। **अक्रन्निति।** तत्रैव बहुवचनं झिः। **क्रियादिति।** तस्यैवाशिषि लिङ्, 'लिङाशिषि' इत्यार्द्धधातुकत्वाद्विकरणाभावः, 'रिङ्शय' इति रिङ्। **द्विर्वचनं चेति।** चकारात्कुत्वं च। **अभ्युदसीषददिति।** सदेर्ण्यन्ताल्लुङि चङ्युपधाया ह्रस्वः, 'चङि' इति द्विर्वचनम्।

**भावबोधिनी**

अभ्युत्सादयाम्, प्रजनयाम्, चिकयाम्, तथा रमयाम्--ये चार वेदविषय में विकल्प से निपातित होते हैं। सदि, जनि तथा रमि--इन णिजन्तों के लुङ् परे रहते 'आम्' प्रत्यय निपातित होता है। 'चि' धातु से भी उसी लुङ् में आम् प्रत्यय होता है, द्वित्व होता है और कुत्व होता है। 'अकः' इसका सभी चारों में प्रत्येक के साथ अनुप्रयोग होता है। पावयाङ्क्रियात्--यह 'पुङ् पवने' अथवा 'पूञ् पवने' इस ण्यन्त के लिङ् में 'आम्' प्रत्यय निपातित होता है, 'क्रियात्' इसका अनुप्रयोग होता है। विदामक्रन्--यहाँ लुङ् में आम् प्रत्यय और गुण का अभाव निपातित होता है और 'अक्रन्' इसका अनुप्रयोग होता है। उदाहरण - अभ्युत्सादयामकः [ 'षद्लृ' यह विशरण, गति और अवसादन अर्थों में हैं। इससे णिच् करने पर - सादि। 'अभि' और 'उत्' उपसर्गों का योग, यण्—अभ्युत्—सादि + लुङ्, आम् प्रत्यय 'इ' का गुण, अय् आदेश—अभ्युत्सादयाम् + लुङ् "आमः" ( पा० सू० २.४.८१ ) से लुङ् का लोप, लुङ् परक कृ का अनुप्रयोग प्रथम पुरुष एकवचन में च्लि--अभ्युत्सादयाम् कृ + च्लि + ति, अट् आगम, "मन्त्रे घसह्वर०" ( पा० सू० २.४.८० ) से च्लि का लुक्, ऋ का गुण, रपर--अभ्युत्सादयाम् अकर्, तिलोप रेफ का विसर्ग--'अभ्युत्सादयामकः'। ] भाषा = लौकिक संस्कृत में--'अभ्युत्सीषदत्' यह होता है। [ अभ्युत् सादि+लुङ्, अट् आगम च्लि का चङ् करने पर "णौ चङ्युपधायाः ह्रस्वः" ( पा० सू० ७.४.१ ) से ह्रस्व "चङि', ( पा० सू० ६.१.११ ) से धातु का द्वित्व, अभ्यासकार्य, "णेरनिटि" ( पा० सू० ६.४.५१ ) णि का लोप अभ्युत् अ स सद् + अ + ति, सन्वद्भाव के कारण 'सन्यतः" ( पा. सू. ७.४.७९ ) से 'अ' का 'इ', "दीर्घो लघोः" ( पा० सू० ७.४.९४ ) से दीर्घ, "आदेश-प्रत्यययोः" ( पा० सू० ८.३.५९ ) से षत्व--अभ्युत् असीषद् + अत्--अभ्युदसीषदत्। ]

**प्राजीजनदिति भाषायाम्। चिकयामकः। अचैषीदिति भाषायाम्। रमयामकः (काठक सं० ७.७)। अरीरमदिति भाषायाम्। पावयांक्रियात् ( मै० सं० २.१.३ )। पाव्यादिति भाषायाम्। विदामक्रन ( मै० सं० १.४.७, तै० ब्रा० १.३ १०.३ )। अवेदिषुरिति भाषायाम्। [ इतिकरणः[1] प्रयोगदर्शनार्थः ]॥**

**न्यासः**

शेषः, 'सन्वल्लघुनि' इति सन्वद्भावे सतीत्त्वम्, 'दीर्घो लघोः' इति दीर्घः। एषा प्रक्रिया यथायोगमुत्तरत्रापि वेदितव्या।

**प्रजनयामिति**। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद् ह्रस्वत्वम्। **चिकयामिति**। ककारोऽप्यत्र निपात्यते। गुणायादेशौ। **अचैषीदिति**। 'अस्तिसिचोऽपृक्ते' इतीट्, सिचि वृद्धिः। **रमयामिति**। 'मितां ह्रस्वः'। **पावयामिति**। 'आमः' इति लिङो लुक्। **क्रियादिति**। कृञ आशिषि लिङ्, तिप्, 'इतश्च' इतीकारलोपः, यासुट्, 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः, 'स्कोः संयोगाद्योरन्ते च' इति सलोपः। **पाव्यादिति**। पूर्ववल्लिङ्, 'लिङाशिषि' इत्यार्द्धधातुकत्वाच्छपोऽभावः, 'णेरनिटि' इति णिलोपः। **विदामिति**। विदेर्लुङ्, आम्, गुणाभावः, लुङो लुक्। **अक्रन्निति**। कृञो लुङ्, च्लिः, झेरन्तादेशः, इतश्च' इतीकारलोपः, संयोगान्तलोपः, च्लेः 'मन्त्रे घसह्वर' इति लुक्, अट्, यणादेशः। **अवेदिषुरिति**। सिच इट्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्। **इतिकरणः प्रयोगदर्शनार्थ इति**। अन्येऽप्येवंजातीयाश्छन्दसि वेदितव्या इत्यर्थः॥ ४२॥

**पदमञ्जरी**

'हलादिः शेषः', 'सन्वल्लघुनि' इतीत्त्वम्, 'दीर्घो लघोः'। **भाषायामिति**। अन्यतरस्यामित्यनुवृत्तेश्छन्दस्यपि यथादर्शनं भवत्येव। भाषायां त्वेतदेव रूपमिति अभ्युदसीषददिति भाषायामित्युक्तम्॥ ४२॥

**भावबोधिनी**

प्रजनयामकः। [ प्र पूर्वक णिजन्त जनि + लुङ्, आम्, लुङ् का लुक्, कृ परक लुङ् का अनुप्रयोग, प्रजनि + आम् + कृ + लुङ्, 'इ' का गुण, अयादेश प्रजनयाम् कृ + लुङ्, शेष प्रक्रिया पूर्ववत् करने पर––प्रजनयामकः। ] लोक में–– ''प्राजीजनत्' यह बनता है। [ प्र जनि + लुङ् च्लिका चङ् आदि पूर्वोक्त सभी कार्य करने पर प्राजीजनत् बनता है। ]

चिकयामकः। [ 'चि' इससे आम् प्रत्यय धातु का द्वित्व चि चि + आम्, च का क निपातित होने पर, इ का गुण अय् आदेश––चिकय् आम् + लुङ्, शेष प्रक्रिया पूर्ववत्। ] लौकिक संस्कृत में––अचैषीत्, [ चि + लुङ्, अट्, च्लि, सिच्,=स्, अट्, अचि + स् + ति, इ का लोप ''अस्तिसिचोऽपृक्ते'' ( पा० सू० ७.३.९६ ) से ईट् का आगम, ''सिचि वृद्धिः परस्मैपदेषु'' ( पा० सू० ७.२.१ ) से 'इ' की वृद्धि, 'स्' का 'ष्'––अचैषीत्। ]

रमयामकः। [ णिजन्त रमि + आम् + लुङ्, उपधा वृद्धि करने के बाद ''मितां ह्रस्वः'' ( पा० सू० ६.४.९२ ) उपधा का ह्रस्व हुआ है। 'इ' का गुण अय् आदेश ( रमयाम् + लुङ्, 'कृ' का अनुप्रयोग, शेष प्रक्रिया पूर्ववत्–– रमयामकः। ] लौकिक संस्कृत में––अरीरमत्। [ रम् + णिच् + लुङ्, उपधावृद्धि और उपधाह्रस्व, अट् आगम, च्लि का चङ्, द्वित्व आदि शेष कार्य करने पर––अरीरमत् रूप बनता है। ] पावयाङ्क्रियात्। [ पावि + लिङ् आम्, गुण, अयादेश, 'कृ' का अनुप्रयोग––पावयाम् + कृ लिङ् ( आशीः ) = तिप्, ''यासुट् परस्मैपदेषूदात्तो ङिच्च'' ( पा० सू० ३.४.१०३ ) से यासुट् आगम, ''रिङ् शयक्लिङ्क्षु'' ( पा० सू० ७.४.२८ ) से 'ऋ' का 'रिङ्' आदेश––पावयाम् + क्रि + यास् + ति, 'इ' का लोप ''स्कोः संयोगाद्योरन्ते च'' ( पा० सू० ८.२.२९ ) से 'स्' का लोप––पावयाङ्क्यात्, लौकिक संस्कृत में 'पाव्यात्' बनता है। [ णिजन्त—पावि + लुङ् आशीः = तिप्, यासुट् णिलोप, इलोप, सुलोप—पाव्यात्। ] विदामक्रन्। [ विद् + आम् + लुङ्='कृ' का अनुप्रयोग—विदाम् कृ + लुङ्=झि, च्लि तथा उसका चङ् और द्वित्व आदि करने पर विदाम् + य कृ + अन्ति, इलोप, संयोगान्त त् लोप—विदामक्रन्। ] लौकिक संस्कृत में— अवेदिषुः बनता है। [ विद् + णिच् + लुङ्=झि, उपधागुण, अट् आगम, च्लि, सिच्––अवेद् + स्—झि वलादिलक्षण इट्, ''सिजभ्यस्तविदिभ्यश्च'' ( पा० सू० ४.४.१०९ ) से झि का जुस्,=उस्, स्, का ष् अवेदिष् + उस्, स् का रुत्व विसर्ग—अवेदिषुः। ] 'इति' ( छन्दसि )—यह लगाना प्रयोग-दर्शनार्थ है अर्थात् ऐसे और भी प्रयोग वेद में होते हैं, ऐसा समझाने के लिये 'इति' का प्रयोग है॥ ४२॥

---

१. मुदितपुस्तकेष्वदृष्टोऽप्ययं पाठो न्यासस्वारस्येनेह स्थापितः।

## ६६२. च्लि लुङि ॥ ४३ ॥ ( २२२१ )

**धातोश्च्लिः प्रत्ययो भवति लुङि परतः । इकार उच्चारणार्थः, चकारः स्वरार्थः ( ६.१.६३ ) । अस्य सिजादीनादेशान्वक्ष्यति, तत्रैवोदाहरिष्यामः ॥**

### न्यासः

**च्लि लुङि ॥ इकार उच्चारणार्थ इति** । उच्चारणमेवास्यार्थो नान्यत् किञ्चित् प्रयोजनमित्यर्थः । एतेनेत्संज्ञाकार्यं न भवतीति दर्शयति । **चकारः स्वरार्थ इति** । 'चितः' इत्यन्तोदात्तत्वं यथा स्यात् । अथ 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' इत्यत्रेकारः सामान्यग्रहणार्थः, चकारस्तदविघातार्थः कस्मान्न विज्ञायते? एवं मन्यते—मन्त्रे घसादिभ्यो नैवान्यो लिरस्ति यस्य सामान्यग्रहणार्थोऽयमिकारः स्यात्, तस्मिंश्चासति सामान्यग्रहणार्थे तदविघातार्थतापि चकारस्य नोपपद्यते । 'आमः' इत्यत्र तर्हीकारचकारौ कस्मान्न सामान्यग्रहणाविघातार्थौ भवतः, तत्र हि मन्त्रेघसादिसूत्राल्लेरित्यनुवर्त्तते, तत्रेकारचकारयोरभावे 'निरनुबन्धकग्रहणे न

### पदमञ्जरी

**च्लि लुङि ॥ इकार उच्चारणार्थ इति** । चकारलकारसंयोगस्य केवलस्योच्चारयितुमशक्यत्वात् । न त्वयमनुबन्धः, प्रयोजनाभावात् । **चकारः स्वरार्थ इति** । एतदुत्तरसूत्रे वक्ष्यामः । **अस्य सिजादीनादेशान्वक्ष्यतीति** । यद्येवम्, किमर्थोऽयमुपदिश्यते, यावता श्रवणार्थो वा भवत्युपदेशः? कार्यार्थो वा? न चायं च्लिः क्वचिच्छ्रूयते, नापि क्विबादीनामिवाश्रीयमाणस्यैवास्य किञ्चित्कार्यं दृश्यते, तस्मात् सिचमेवोत्सृज्य तस्यापवादाः क्सादयो विधीयेरन्? नैवं शङ्क्यम्, एवं हि 'मन्त्रे घस' इत्यादिसूत्रे बहूनां ग्रहणं कर्तव्यं स्याद्—गम्यर्थमङो ग्रहणम्, आकारान्तेषु धेटोन्तर्भावात्तदर्थं च चङो ग्रहणम्, तस्य हि 'विभाषा धेट्श्व्योः' इति चङ्, धात्वन्तरार्थं सिचो ग्रहणम्, यदि जनेः—'दीपजन' इति विहितस्य चिणो लुक् छन्दसि दृश्यते ततस्तस्यापि; तान्येतानि त्रीणि चत्वारि वा ग्रहणानि भवन्ति । च्ल्युत्सर्गे पुनः सर्वेषां स्थानिभूतस्य तस्यैवैकस्य ग्रहणम् । ननु च क्रियमाणेऽप्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति—'च्लि लुङि' 'च्लेः सिच्', 'मन्त्रे घस' आदिसूत्रे च यदेतल्लेरिति । एवं तर्हि यदेतद् 'गातिस्थाघुपाभूभ्यः सिचः' इति च्लेरिति वक्ष्यामि, तदेव च मन्त्रेघसादिसूत्रेऽप्यनुवर्तिष्यते, तल्लाघवं भवति । यदि लेरित्युच्यते, किं ल्यवस्थायामेव लुकं करिष्यति? उताहो आदेशेषु कृतेषु स्थानिवद्भावेन? यदि ल्यवस्थायामेव लुक्; अगुः, अस्थुः—'सिजभ्यस्तविदिभ्यश्च' इति जुस् न प्राप्नोति? मा भूत् 'सिज्' इत्येवम्, 'आतः' इत्येवं भविष्यति? तत्रापि सिज्ग्रहणमनुवर्त्तते । सिज्ग्रहणं निवर्तिष्यते? यदि निवर्तते, अभूवन्नित्यत्रापि प्राप्नोति । केन? 'सिजभ्यस्त' इति । नेत्याह; इदानीमेव ह्युक्तम्—ल्यवस्थायामेव लुगिति ।

तदेवम् 'आतः' इत्यत्र 'ङितः' इत्येवानुवर्त्तते, न 'सिचः' इति, लङ्यपि तथैव स्यात् । धेटश्च 'विभाषा धेट्' 'लङः शाकटायनस्यैव' इति नियमाद्विकल्पो भविष्यति । एवमपि मा हि गाताम्, मा हि स्थाताम्, 'आदिः सिचोऽन्यतरस्याम्' इत्येव स्वरो न प्राप्नोति । अथादेशेषु कृतेषु ततो 'विभाषा घ्राधेट्' इत्यत्रापि तथैव स्यात्, धेटश्च 'विभाषा धेट्श्व्योः' इति चङपि विकल्पितः । तत्र यथा सिचा लुगलुकौ, तथाऽधात् अधाताम् अधुः, अधासीत् अधासिष्टां आधासिषुरिति सिद्धमिष्टम्; चङोऽपि लुगभावपक्षे अदधत्, अदधताम्, अदधन् इति सिद्धम्, लुक्पक्षे तु प्रत्ययलक्षणेन द्विर्वचनेऽदधादित्यपि चतुर्थं रूपं प्राप्नोति? न चङो लुकि द्विर्वचनम्; 'न लुमताङ्गस्य' इति प्रतिषेधात् । बहुवचने तर्हि चङो लुकि अधानित्यनिष्टं रूपं प्राप्नोति, त्रैशब्द्यमेव चेष्यते—अधुः अधासिषुः,

### भावबोधिनी

लुङ् परे रहते धातु से 'च्लि' प्रत्यय होता है । इसका 'इ' केवल उच्चारण के लिये है और 'च्' [ "चितः" ( पा. सू. ६.१.१६३ ) से अन्तोदात्त ] स्वर करने के लिये है । इस 'च्लि' के सिच् आदि आदेश आगे कहे जायेंगे, वहीं पर इसके उदाहरण दिये जायेंगे ॥ ४३ ॥

**न्यासः**

सानुबन्धकस्य' इति तस्यैव ग्रहणं स्यात्, न लिङ्लिटोः ? नैतदस्ति; अत्र मा भूल्लिग्रहणानुवृत्तिः, अविशेषेणापि प्रत्ययमात्रस्य लुग् भविष्यति, नैवं सति किञ्चिदनिष्टमापद्यते । न हि सोऽस्ति प्रत्ययो यस्य लुकि सति किञ्चिदनिष्टं भवेत् । सत्यामपि लिग्रहणानुवृत्तौ न दोषः, अनेकस्मिन् ग्राह्ये सति सामान्यग्रहणं भवति, न चामः परस्यानेकं ग्राह्यमस्ति । न हि क्वचिदामः परो लिटोऽन्यः प्रयोगोऽस्ति, तस्मादन्याभावाल्लिट एव ग्रहणम् । तत्र नार्थः सामान्यग्रहणार्थेनैकारेण, नापि तदविघातार्थेन चकारेण । ननु च पावयाङ्क्रियादित्यत्रान्योऽपि लिरस्ति ? नैतदस्ति; निपातनादेव तत् सिद्धम् । तच्चावश्यं निपातनमाश्रयितव्यम्; अन्यथा क्रियमाणेऽपीकारे तदविघातार्थे च चकारे अभ्युत्सादयामिति न सिद्ध्येत् । तस्मात् पूर्वोक्तमेव प्रयोजनं न्याय्यम् । यथोत्तरार्थश्चकारस्तथोत्तरत्र प्रतिपादयिष्यामः ।

अथ किमर्थं च्लिप्रत्ययमासज्य तस्य सिजादय आदिश्यन्ते, न सिचमेवोत्सर्गं विधाय तस्य क्सादय आदेशा विधीयेरन्निति ? नैवं शक्यम्; एवं हि 'शल इगुपधादनिटः क्सः' इत्यत्र च्लेरभावादनिड्ग्रहणं धातोर्विशेषणं विज्ञायेत—धातोरनिट इति । तथा च गुहेर्न सिध्येद्—अघुक्षदिति । तस्य हि ऊदित्त्वात् स्वरत्यादिना विकल्पे-

**पदमञ्जरी**

अदधन्निति ? ननु च चङोऽपि लुकि आत इति जुस् भविष्यति, यथा सिचः ? नैतदस्ति; सिज्ग्रहणं तत्रानुवर्त्तते । निवर्तिष्यते सिज्ग्रहणम् ? यदि निवर्तते, 'आतः' इत्येतद्धेटश्चङो लुकि विध्यर्थत्वसम्भवान्नियमार्थं न स्यात्, ततश्चाभूवन्नित्यत्र प्रत्ययलक्षणेन सिच इति जुस् प्राप्नोति, इदानीमेव ह्युक्तं कृतेष्वादेशेषु लुगिति ? एवं तर्हि यदेतत्सिजभ्यस्तेति, एनत् 'च्ल्यभ्यस्त' इति वक्ष्यामि । किं कृतं भवति ? लुङ्लुक्यपि च्ल्यभ्यस्तेति जुस् सिद्धो भवति, 'आतः' इत्यत्रापि सिज्ग्रहणानुवृत्तेर्नियमादभूवन्नित्यत्र जुसभावश्च सिद्धो भवति । कृतेष्वादेशेषु लुगिति सिज्लक्षणः स्वरः सिद्धो भवति । यदि च्ल्यभ्यस्तेत्युच्यते, च्ल्यङ्चङ्क्षु दोषः—अधुक्षन्, अवोचन्, अपीपचन्न-त्रापि जुस् प्राप्नोति । तस्मात्सिजभ्यस्तेत्येव वक्तव्यम् । 'आतः' इत्यत्रापि सिज्ग्रहणमेवानुवर्त्तनीयम्—नियमो यथा स्याद्विधिर्मा भूदिति । ततश्च तदेव स्थितम्—बहुवचनेऽधानिति प्राप्नोतीति । यदा च धेटश्चङो लुक् क्रियते तदा न केवलं बहुवचने, सर्वेष्वेव वचनेषु सिज्लक्षणस्वराभावात्स्वरे चातुःशब्द्यप्रसङ्गः । तस्माद् 'गातिस्थाघुपा' इत्यत्र सिच इत्येव वक्तव्यम्, ततश्च तदेव स्थितम्—तान्येव त्रीणि ग्रहणानीति ।

प्रत्युताक्रियमाणे उत्सर्गे मन्त्रेघसादिसूत्रे द्वयोरेव ग्रहणम्, कथम् ? धेटो जनेश्च चङ्चिणौ विकल्पितौ तत्र यानि लुक उदाहरणानि, सिच एव तानि भविष्यन्ति । को न्वत्र विशेषः ? अयमस्ति विशेषः—सिचो लुकि 'आदिः सिचोन्यतरस्याम्' इत्यनेन स्वरेण भवितव्यम्, चङ्चिणोस्तु नेति । तस्माद् द्वयोरपि पक्षयोस्त्रीणि ग्रहणानि, नार्थश्चोत्सर्गेण ? तदुच्यते—असति ह्युत्सर्गे 'मन्त्रेघस' इत्यत्र येभ्यः सिचो लुक् क्रियते तेषाम् 'आदिः सिचोऽन्यतरस्याम्' इत्येष स्वरः प्राप्नोति । सति त्वस्मिंल्लेरिति तदवस्थायामेव लुग्विधानात् सिजभावात् यथायथं स्वरः सिद्धो भवति । तथाऽऽकारान्ते सिचो लुकि क्रियमणे 'सिजभ्यस्त' 'आतः' इति जुस् प्राप्नोति, लेस्तु लुक्यन्तर्भाव एव भवति । तस्मादुत्सर्गः कर्त्तव्यः । तथा 'शल इगुपधा-दनिटः क्सः' इत्यत्रानिट इति लेर्विशेषणं यथा स्याद् । असति पुनश्च्ल्युत्सर्गे तस्यैव तद्विशेषणं भवति धातोः, न विद्यते यस्मात्परस्येडिति, तत्र च लुङादेशानां सार्वधातुकत्वात्सम्प्रतिपन्नमनिट्त्वमव्यभिचारादविशेषण-मिति प्रत्ययान्तरगतं तदाश्रयणीयम्—न विद्यते प्रत्ययान्तरस्य यस्मात्परस्येडिति । ततो गुहेर्न स्यात्—अघुक्षदिति, विद्यते ह्यस्मात्परस्य गूहितेत्यादाविट् स्वरत्यादिसूत्रेण विकल्पितम् । अथापि पाक्षिकेणेडभावेना-निडिति व्यपदिश्येत ? नित्यं क्सः प्राप्नोति, ह्युत्सर्गे पुनरनिड् इति तस्यैव विशेषणं भवति । स च कदाचिद-

## ६६३. च्लेः सिच् ॥ ४४ ॥ ( २२२२ )

**च्लेः सिजादेशो भवति । इकार उच्चारणार्थः, चकारः स्वरार्थः । अकार्षीत् । अहार्षीत् । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च द्विश्चकारोऽनुबद्ध्यते ।**

**न्यासः**

नेड्विधानान्नास्त्यनिट्त्वम् । च्लौ सत्यनिड्ग्रहणेन स एव विशिष्यते—च्लेरनिट इति । गुहेश्च परस्य च्लेर्विभाषितेट्त्वाद् यदेण् नास्ति तदा च्लेरनिट्त्वात् क्सः सिद्धो भवति ॥ ४३ ॥

**च्लेः सिच् ॥ इकार उच्चारणार्थं इति ।** एतेनेहोच्चारणादन्यप्रयोजनं नास्तीति दर्शयन्नित्संज्ञाया अभावमाह । ननु चासतीकारेऽनुबन्धे 'अनिदिताम्' इत्यनेनामंस्तेत्यत्रानुनासिकलोपः प्राप्नोति, ततस्तत्प्रतिषेधार्थोऽयमित्संज्ञकः कस्मान्न भवति ? एवं मन्यते–असत्यपीकारेऽनुबन्धेनैव सिजन्तस्यानुनासिकलोपेन भवितव्यम्; 'हनः सिच्' इति कित्करणाज्ज्ञापकात् । तथा हि हन्तेः कित्करणस्यैतत प्रयोजनम्—आहतेत्यत्रानुनासिकलोपो यथा स्याद् । यदि सिजन्तस्यानुनासिकलोपः स्याद् हन्तेः सिचः कित्करणमनर्थकं स्यात् । **चकारः स्वरार्थं इति ।** अन्तोदात्तार्थः । ननु च सिचोऽनच्कत्वाच्चकारस्य स्वरार्थता नोपपद्यते ? इटि कृते साच्को भवतीत्यदोषः । नन्वेवमपि लुङ्यत्राडागमस्योदात्तत्वे सतिशिष्टस्वरेणाद्युदात्तत्वेन भवितव्यम्, किमर्थश्चकारः ? यत्र तर्हि 'न माङ्योगे' इत्यडागमः प्रतिषिध्यते तत्र चकारस्य स्वरार्थता भविष्यति । ननु तत्रापि 'तिङ्ङतिङः' इति निघातेन भवितव्यम् ? तर्हि यत्र 'हि च' इति निघातः प्रतिषिध्यते—मा हि लावीदित्यादौ, तत्र स्वरार्थो भविष्यति । ननु च च्लेस्तत्र स्थानिवद्भावादेव चित्स्वरो भविष्यतीति किमादेशे चकारोऽनुबध्यते ? इत्याह—**आगमानुदात्तत्वं हीत्यादि ।** यासुट उदात्तवचनेनागमानुदात्त्वं ज्ञापयिष्यते । तच्च नाप्राप्ते स्वरान्तरे विधीयते ।

**पदमञ्जरी**

निट्, कदाचित्सेट् । यदानिट् तदा क्सः, यदा सेट् तदा सिजिति सिद्धमिष्टम्—अघुक्षत्, अगुहीदिति । तस्माच्च्ल्युत्सर्गः कर्तव्य इति । स्थानित्वेन विधानं कर्त्तव्यमित्यर्थः ॥ ४३ ॥

**च्लेः सिच् ॥ इकार उच्चारणार्थ इति ।** न त्वनुबन्धः । यद्येवम्, असंस्तेत्यत्र सिजन्तस्याङ्गस्यात्मनेपदं ङितमपेक्ष्य 'अनिदिताम्' इति नलोपः प्राप्नोति ? ज्ञापकात्सिद्धम्, यदयम् 'हनः सिच्' इति हन्तेः परस्य सिचः कित्त्वं शास्ति, तज् ज्ञापयति—न सिजन्तस्योपधालोपो भवतीति । यथा चैतज्ज्ञापकं तथा तत्रैवोक्तमिति तत्रैवावधार्यम् । **चकारः स्वरार्थः इति ।** अन्तोदात्तार्थः । ननु सिचोऽनच्कत्वात् कथं चकारः स्वरार्थः, इटि कृते साच्को भवति ? एवमपि प्रत्ययस्वरेण सिद्धम् । न सिद्धयति, नाप्राप्ते स्वरान्तरे विधीयमानमागमानुदात्तत्वं प्रत्ययस्वरं बाधेत ? एवं तर्हि च्लेश्चित्त्वात्स्थानिवद्भावाच्चित्स्वरो भविष्यति, तत्राह—**आगमानुदात्तत्वं हीति । चित्स्वरमपि बाधेतेति ।** स्थानिवद्भावकृतम् । ननु च यदि मा हि लावीदित्यत्रागमानुदात्तत्वं

**भावबोधिनी**

'च्लि' का 'सिच्' आदेश होता है । इसका 'इ' कार उच्चारण के लिये है । और चकार [ "चितः" सूत्र से अन्तोदात्त ] स्वर के लिये है । उदा० अकार्षीत् । अहार्षीत् । कृ + लुङ् = तिप्, अट् आगम—अकृ + ति, "च्लि लुङि" इस पूर्ववर्ती सूत्र से 'च्लि' प्रत्यय, इसका सिच् आदेश प्रस्तुत सूत्र से, अनुबन्धों का लोप—अकृ + स् + ति, 'इ' का लोप "इतश्च" ( पा. सू. ३.४.१०० ) से, "अस्ति—सिचोऽपृक्ते" ( पा. सू. ७.३.९६ ) से ईट् आगम—अ कृ स् त् "सिचि वृद्धिः परस्मैपदेषु" ( पा. सू. ७.२.१ ) से ऋ की वृद्धि, रपर, "आदेश-प्रत्यययोः" ( पा. सू. ८.३.५९ ) से 'स्' का 'ष्'—अकार्—ष् ईत् । इसी प्रकार हृ + लुङ् में भी सारी प्रक्रिया करने पर—अहार्षीत् यह बनता है । ]

आगम का अनुदात्तत्व प्रत्यय स्वर के समान चित् स्वर का भी बाध कर लेगा, इसलिये स्थानी 'च्लि' तथा आदेश 'सिच्' दोनों में चकार अनुबन्ध लगाया गया है ।

**न्यासः**

तथा हि—ये प्रकृतिभक्ता आगमा अडानुक्प्रभृतयस्तेषां प्रकृतिस्वरः प्राप्नोति, ये च प्रत्ययभक्ता इडादयस्तेषां प्रत्ययस्वरः; तस्मादागमानुदात्तत्वं सर्वस्य स्वरान्तरस्य बाधकम्। ततश्चैव तद् यथा प्रत्ययस्वरं बाधते तथा चित्स्वरमपि स्थानिवद्भावकृतं बाधेत। तस्मादादेशेऽपि चकारोऽनुबध्यते। हि-शब्दो यस्मादर्थे, इति-शब्दस्तस्मादर्थे। यस्मादेवं चित्स्वरमपि बाधेत तस्मात् स्थानिन्यादेशेऽपि द्विश्चकारोऽनुबध्यते। ननु च मा हि लावीदित्यादावागमानुदात्तत्वं यदि स्याच् च्लेश्चित्करणमनर्थकं स्यात्, प्रयोजनाभावात्; तस्माच् च्लेश्चित्करणसामर्थ्यादागमानुदात्तत्वेन चित्स्वरो न बाधिष्यते—इत्यपार्थकं सिचश्चित्करणम्? नापार्थकम्; पक्षे सार्थकत्वात्। कथम्? इह हि यथा व्यक्तिपदार्थपक्षमाश्रित्य 'सरूपाणामेकशेषः' इत्येतत् सूत्रमारब्धम्, तथा व्यक्तिपदार्थपक्षमाश्रित्य द्विश्चकारोऽनुबध्यते। व्यक्तौ हि पदार्थे यथा चित्स्वरलक्षणं प्रतिलक्ष्यं प्रवर्त्तते तथागमानुदात्तत्वज्ञापकमपि यासुट उदात्तवचनम्। ततश्च मा हि लावीदित्यत्रागमानुदात्तत्वं तेन ज्ञापितमेव। तथा च—यथेह चित्स्वरो भवति तथागमानुदात्तत्वेनापि भवितव्यम्; अन्यथा ह्येतद्विषयस्य ज्ञापकस्य वैयर्थ्यं स्यात्। न च द्वयोरप्यनुदात्तयोर्यौगपद्यं सम्भवतीति पर्यायः स्यात्। तत्र पक्षे स्थानिनश्चकारस्य सार्थकत्वात् कुतो वैयर्थ्यप्रसङ्गः? तस्माद् द्विश्चकारोऽनुबद्धः। अन्यथा ह्येकस्मिन् पक्षे सावकाशश्चित्स्वरः पक्षान्तर आगमानुदात्तत्वेन बाध्येत। द्विरनुबध्यमाने तु चकारे यद्यपि पक्षेऽनुदात्तोऽभिनिर्वर्त्तते, तथाप्यभिनिर्वृत्ते, तस्मिन् द्विश्चकारानुबन्धकरणसामर्थ्यात् पुनश्चित्स्वरोऽभिनिर्वर्त्तते, अतो न दोषः।

**पदमञ्जरी**

स्यात्, च्लेश्चित्करणमनर्थकं स्यात्? एवं मन्यते—च्लेश्चकारो मन्त्रैघसादिसूत्रे सामान्यग्रहणे चरितार्थः; अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्, न लिटः, ततश्च 'आमः' इत्यत्र निरनुबन्धकस्य लेरसम्भवाल्लेरिति नानुवर्तेत, ततश्च परत्वादन्तरङ्गत्वाच्च तिबादिषु कृतेषु पश्चाल्लुकि कारयामित्यस्य प्रत्ययलक्षणेन तिङन्तत्वाद् देवदत्तः कारयाञ्चकारेति तस्य च निघातः [1]तस्माच्चानिघातः, स्यात्। तस्मादाम इत्यत्र लेरित्यनुवर्त्तनीयम्। तस्य च तत्रानुवृत्तिः पूर्वत्र सामान्यग्रहणे सत्युपपद्यते। तस्माच्च्लेश्चकारस्य चरितार्थत्वात्स्थानिवद्भावात्प्राप्तं चित्स्वरमपि बाधेतेतिसम्भावने लिङ्, सम्भाव्येत बाधनमित्यर्थः। अनुबन्धान्तरेणापि सामान्यग्रहणसिद्धे चकारानुरोधेन चित्स्वर एव भविष्यतीति शक्यते वक्तुमिति भावः।

**भावबोधिनी**

**विमर्श**—समस्या यह है कि 'सिच्' में 'इ' तथा 'च्' दोनों अनुबन्ध हैं। इनमें चित् मान कर कोई कार्य करना सम्भव नहीं है क्योंकि केवल 'स्' व्यंजन शेष बचता है उसे "चितः" सूत्र से अन्तोदात्त करने का प्रश्न ही नहीं उठता है। यदि यह कहा जाय कि वलादिलक्षण इट् आगम करने पर 'इस्' यहाँ स्वर करना सम्भव है, तो ऐसा भी कहना ठीक नहीं हैं, क्योंकि प्रत्यय आद्युनुदात्त होते हैं' इसी नियम से काम चल जायगा। अतः चित् करना व्यर्थ है। परन्तु ऐसा कहना संभव नहीं है क्योंकि अन्य स्वर की अवश्यकर्तृक प्राप्ति में किया जाने वाला आगम का अनुदात्तत्व प्रत्यय स्वर का बाध कर लेता है, अर्थात् "यासुट्परस्मैपदेषूदात्तो ङिच्च" (पा. सू. ३.४.१०३) यहाँ यासुट् आगम का उदात्तत्वविधान यह ज्ञापित करता है कि अन्यत्र आगम अनुदात्त रहता है। अतः यहाँ भी 'इट्' आगम का अनुदात्तत्व प्रत्यय के उदात्तत्व का बाध कर लेगा। अतः यह भी फल नहीं है। यदि यह कहें कि 'च्लि' भी चित् है उसी का चित्त्व स्थानिवद्भाव से 'सिच्' में आ जायगा, इसलिये चित् करना व्यर्थ है? इस शंका का समाधान यह है कि 'इट्' आगम का अनुदात्त स्वर जैसे प्रत्यय स्वर का बाध कर लेता है वैसे ही स्थानिवद्भाव से प्राप्त चित्त्व को मान कर होने वाले अन्तोदात्तत्व का भी बाध कर लेगा। यही सोच कर पाणिनि ने 'च्लि' तथा 'सिच्'—इन स्थानी तथा आदेश दोनों में चित्करण किया है।

---

१. 'तस्मात्परस्य च' इति पाठोऽपेक्ष्यते।

**※ स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः ※ ( मा० भा० ( ३.१.४४ वा० ६ )। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् ( ३.१.४५ )। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अत्राप्सीत्, अतार्प्सीत् अतृपत् ( ३.१.५५ )। अद्राप्सीत्, अदार्प्सीत्, अदृपत्॥**

**न्यासः**

**स्पृशमृशेत्यादि।** स्पृशिमृशिकृषिभ्यः 'शल इगुपधादनिटः क्सः' इति क्से प्राप्ते, तृपिदृपिभ्यां पुषादित्वादङि प्राप्ते सिज्वा वक्तव्यः=व्याख्येयः। तत्रेदं व्याख्यानम्—क्सविधौ 'विदांकुर्वन्त्वित्यन्यतरस्याम्' इत्यतो मण्डूकप्लुतिन्यायेनान्यतरस्यांग्रहणमनुवर्त्तते, पुषादिसूत्रेऽपि 'आत्मनेपदेषु' इत्यतः। सा च व्यवस्थितविभाषितोभयत एव विज्ञायते। तेन स्पृशिमृशिकृषिभ्यो विकल्पेन क्सो भविष्यति, अन्येभ्यस्तु नित्यम्। तृपिदृपिभ्यामन्यतरस्यामङ् च भविष्यति, अन्येभ्यस्तु पुषादिभ्यो नित्यमेव। तेन यस्मिन् पक्षे क्साङोरभावस्तस्मिन् पक्षे सामान्यविहितः सिजेव भवति। **अस्पृक्षदिति।** 'स्पृश संस्पर्शे', क्सः, व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम्, 'आदेशप्रत्यययोः' इति षत्वम्। **अस्प्राक्षीदिति।** 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यमागमः, 'वदव्रज' इत्यादिना वृद्धिः, ऋकारस्य यणादेशः। **अस्पार्क्षीदिति।** सिच। यदाऽमागमो नास्ति तदा ऋकारस्यैव वृद्धिः। एवम् 'मृश आमर्शने', 'कृष विलेखने-' इत्येतयोरपि रूपद्वयं वेदितव्यम्। **अतृपदिति।** 'तृप प्रीणने'। **अत्राप्सीद्, अतार्प्सीदिति।** पूर्ववत्। एवं 'दृप हर्षणमोचनयोः' इत्यस्यापि रूपत्रयं वेदितव्यम्॥ ४४॥

**पदमञ्जरी**

**स्पृशमृशेति।** 'स्पृश स्पर्शने' ( धा० पा० १४२२ ), 'मृश आमर्शने' ( धा० पा० १४२५ ), 'कृष विलेखने' ( धा० पा० १२८६ )—इत्येतेभ्य क्से प्राप्ते, तृप प्रीणने' ( धा० पा० ११९५ )', 'दृप हर्षविमोचनयोः' ( धा० पा० ११९६ )'—आभ्यां पुषादित्वादङि प्राप्ते सिजपि पक्षेऽभ्यनुज्ञायते। **अस्पृक्षदिति।** व्रश्चादिषत्वे 'षढोः कः सि' इति कत्वम्। **अस्प्राक्षीदिति।** 'अनुदात्तस्य चर्दुपधस्य च' इति पक्षे अमागमः, ऋकारस्य यण्, 'वदव्रज' इत्यादिनाकारस्य वृद्धिः, अमभावपक्षे ऋकारस्यैव वृद्धिः। एवमुत्तरत्रापि॥ ४४॥

**भावबोधिनी**

※ स्पृश, मृश, कृष, तृप और दृप—इन धातुओं के च्लि को सिच् होता है विकल्प से। ※ उदा० स्पृश—अस्प्राक्षीत् अस्पार्क्षीत्, अस्पृक्षत्। मृश्—अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। कृष्—अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। तृप्—अत्राप्सीत्, अतार्प्सीत्, अतृपत्। दृप्—अद्राप्सीत्, अदार्प्सीत्, अदृपत्।

[ स्पृश् + लुङ् = तिप्, अट्, 'च्लि' और इसका विकल्प से सिच्—अ स्पृश् + स् + ति, "इतश्च" सूत्र से 'इ' का लोप, "अस्तिसिचोऽपृक्ते" ( पा. सू. ७.३.९६ ) ईट् का आगम, "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ( पा. सू. ६.१.५९ ) से 'अम्' आगम विकल्प से, मित् होने से "मिदचोऽन्त्यात् परः" ( पा. सू. १.१.४ ) से अन्त्य अच् के बाद 'अम्' आता है—अ स्पृ अ श् + स् + ईत्। "इको यणचि" से ऋ का यण् र्, "वदव्रजहलन्तस्याचः" ( पा सू. ७.३.२ ) से वृद्धि—अस्प्राश् + स् ई त्, "व्रश्चभ्रस्जसृज्" ( पा. सू. ८.२.३ ) से 'श्' का 'ष्' 'षढोः कः सि" सूत्र से 'ष्' का 'क' "आदेशप्रत्यययोः" ( पा. सू. ८.३.५९ ) से 'स्' का 'ष्'—अस्प्राक् + ष् ई त्। क् + ष् = क्ष् अस्प्राक्षीत्। जब 'अम्' नहीं होता है तब अस्पृश् + स् ईत्—में 'ऋ' की वृद्धि, रपर करने पर—अस्पार्श् + स् ईत्, 'क्ष्' करने की प्रक्रिया पूर्ववत् ही—अस्पार्क्षीत्। जब सिच् नहीं होता है तब अग्रिम सूत्र "शल इगुपध" ( ३.१.४५ ) से च्लि का क्स = स करने पर—अस्पृश् + स त्, 'क्ष' करने की प्रक्रिया पूर्ववत् ही है—अस्पृक्षत्। यहाँ अम् आगम और सिच् आदेश ये दोनों विकल्प से होते हैं, अतः तीन रूप होते हैं। यही स्थिति वार्तिकोक्त सभी धातुओं के रूपों में है। अतः मृश्, से भी सिच् और 'अम्' के विकल्प से तीन रूप बनते हैं। इसकी भी सब प्रक्रिया 'स्पृश्' के समान ही होती है—( १ ) सिच् तथा अम् करने पर—अम्राक्षीत्, ( २ ) अम् न करने पर—अमार्क्षीत्, ( ३ ) सिच् न करने पर क्स करने पर—अमृक्षत्। इसी प्रकार 'कृष्' के भी तीन रूप होते हैं। इसमें 'ष्' स्वतः है अतः 'व्रश्च' सूत्र के अतिरिक्त सभी सूत्रों का कार्य होता है—( १ ) सिच् तथा अम् करने पर—अक्राक्षीत्, ( २ ) अम् न करने पर अकार्क्षीत्,

## ६६४. शल इगुपधादनिटः क्सः ॥ ४५ ॥ ( २३३६ )

**शलन्तो यो धातुरिगुपधस्तस्मात्परस्य च्लेरनिटः क्स आदेशो भवति । दुह—अधुक्षत् । लिह—अलिक्षत् ।**

**शल इति किम् ? अभैत्सीत् । अच्छैत्सीत् । इगुपधादिति किम् ? अधाक्षीत् । अनिट इति किम् ? अकोषीत् । अमोषीत् ॥**

**न्यासः**

**शल इगुपधादनिटः क्सः ॥ अधुक्षदिति ।** 'दुह प्रपूरणे', 'दादेर्धातोर्घः', 'एकाचो वशो भष्' इत्यनेन दकारस्य भष्भावेन धकारः, धकारस्य 'खरि च' इति चर्त्वम्—ककारः । **अलिक्षदिति ।** 'लिह आस्वादने', 'हो ढः' इति ढत्वम्, पूर्ववत् षत्वकत्वे । **अधाक्षीदिति ।** 'दह भस्मीकरणे', पूर्ववड् ढत्वकत्वषत्वभष्भावचर्त्वानि । **अकोषीदिति ।** 'कुष निष्कर्षे', लघूपधगुणः ॥ ४५ ॥

**पदमञ्जरी**

**शल इगुपधादनिटः क्सः ॥ शलन्तो यो धातुरिगुपध इति ।** ननु च्लेर्गुणनिमित्तत्वादकृत एव क्से लावस्थायामेव गुणः प्राप्नोति, ततश्चेगुपधादिति विशेषणं न प्रकल्प्यते ? नैष दोषः; विशेषणसामर्थ्यात्प्रागेव गुणात् क्सो भविष्यति । ननु च कृतेऽपि गुणे भूतपूर्वगत्या विहितविशेषणाश्रयणेन वा क्सो भविष्यति, कित्करणमिदानीं किमर्थं स्यात् ? 'क्सस्याचि' इति विशेषणार्थम् । 'सस्याचि' इत्युच्यमाने पुनर्वदिहनिकमिकषिभ्यः से वत्सौ वत्साः—अत्रापि प्राप्नोति ? 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' ( है० परि० १०३ ) इत्यनर्थकत्वान्न भविष्यति । एवमपि वृञ्छणादिषु तृणादिभ्यः से प्रसङ्गः—तृणान्यस्मिन्देशे सन्ति तृणसौ तृणसा इति ? नैतदेवम्; 'घोर्लोपो लेटि वा' इति प्रकरणे— धातुप्रत्ययानां ग्रहणम्, किं च 'लुग्वादुहदिह' इत्यत्रापि 'क्सस्याचि' इत्यतः क्सस्येति वर्त्तते, तेन दुहादिषु यस्य सम्भवः, पूर्वसूत्रेऽपि तस्यैव ग्रहणं भविष्यति । तदेवं कित्करणसामर्थ्याद् गुणो न भवतीति स्थितम् । **च्लेरनिट इति ।** यद्यपि च्लेः सिजादिभिरादेशैर्भवितव्यमिति क्वचिदप्यश्रवणान्न सेट्त्वमनिट्त्वं वा, तथापि दुह्+ल इति स्थिते क्सस्यायं विषय इति सिचा न भाव्यम् । क्सोऽपि तावन्न भवति, यावदस्यानिट्त्वं न ज्ञातम्, तत्र लकारस्यैवेटः प्राप्तौ तन्निषेधात्सेट्त्वमनिट्त्वं च निरूप्यते इति विशेषणोपपत्तिः । **अधुक्षदित्यादि ।** 'दादेर्धातोर्घः', 'एकाचो वशो भष' । **अलिक्षदिति ।** 'लिह् आस्वादने' ( धा० पा० १०१६ )

**भावबोधिनी**

( ३ ) च्लि का सिच् न होने पर 'क्स' होने पर—अकृक्षत् । 'तृप्' में भी तीन रूप होते हैं—( १ ) सिच् तथा अम् करने पर अ तृ अ प् स् ईत्, यण् और वृद्धि करने पर—अत्राप्सीत् । ( २ ) अम् न होने पर 'ऋ' की वृद्धि—अतार्प्सीत् । ( ३ ) च्लि का सिच् न होने पर "पुषादिद्युताद्यॢदितः परस्मैपदेषु" ( पा. सू. ३.१.५५ ) से 'अङ्' होता है—अ तृ प् + अ + त् । ] इसी प्रकार 'दृप्' के भी तीन रूप होते हैं—( १ ) सिच् तथा अम् करने पर—अद्राप्सीत्, ( २ ) अम् न करने पर—अदार्प्सीत् । ( ३ ) सिच् न करने पर च्लि का अङ्—अदृप् + अ + त् = अदृपत् । ] ॥ ४४ ॥

शलन्त [ शल् प्रत्याहार का वर्ण है अन्त में जिसके ], इगुपध [ इक् है उपधा में जिसके ] अनिट् [ इट् नहीं होता है जिसको ] ऐसी जो धातु है उससे परे 'च्लि' का 'क्स' आदेश होता है । उदाहरण-अधुक्षत् । [ दुह + लुङ्, तिप्, अट्, च्लि—अ दुह् + च्लि + ति, प्रस्तुत सूत्र से च्लि का क्स=स और 'इ' का लोप कर देने पर—अदुह् + स + त् । "दादेर्धातोर्घः" ( पा० सू० २.२.३२ ) सूत्र से 'ह्' का 'घ' तथा "एकाचो वशो भष् झषन्तस्य स्ध्वोः" ( पा० सू० २.२.३७ से भष्भाव करके 'द' का 'ध'—अधुघ् + सत्, "खरि च" सूत्र से 'घ' का चर्त्व करने पर 'क्' अधुक् + स त, "आदेशप्रत्यययोः" से 'स' का 'ष्', क् + ष=क्ष करने पर—अधुक्षत् बनता है । लिह् + लुङ् तिप्, अट् च्लि—अलिह्—च्लि + ति, च्लि का क्स= स, इ का लोप, हो ढः" ( पा० सू० ८.२.३१ ) से 'ह्' का 'ढ्' अ लिढ् + स् त् । "षढोः कः सि" से 'ढ्' का 'क्' "आदेशप्रत्यययोः" से 'स्' का 'ष्', अलिक् + ष त, क्षत्व करने पर अलिक्षत् । ]

शलन्त हो—इसका क्या प्रयोजन है ? अभैत्सीत् अच्छैत्सीत् । [ भिदिर् तथा छिदिर् धातुओं के अन्त में 'शल्' प्रत्याहार का कोई वर्ण नहीं है अतः 'क्स' न होकर 'सिच' ही होता है । ] इक् प्रत्याहार का वर्ण उपधा में हो जिसके—इसका क्या प्रयोजन है ? अधाक्षीत् । [ यह 'दह' धातु का लुङ् का रूप है । इसकी उपधा में 'इक्' नहीं है । अतः 'क्स न होकर सिच् होता है । ] अनिट् [ इट् न होने वाली ]—इसका क्या प्रयोजन है ? अकोषीत् । अमोषीत् ।

## ६६७. श्लिष आलिङ्गने ॥ ४६ ॥ ( २७१४ )

**श्लिषेः ( धा० पा० ११८७ ) धातोरालिङ्गनक्रियावचनात् परस्य च्लेः क्स आदेशो भवति। आलिङ्गनम् = उपगूहनम्, परिष्वङ्गः। अत्र नियमार्थमेतत्। आश्लिक्षत्कन्यां देवदत्तः ( म० भा० )।**

**आलिङ्गन इति किम् ? समाश्लिषज्जतुकाष्ठम् ॥**

**न्यासः**

**श्लिष आलिङ्गने ॥ अत्रेति** । आलिङ्गने । **नियमार्थमेतदिति** । पूर्वेण सिद्धे सत्यारम्भात् । **अश्लिक्षदिति** । पूर्ववत् कत्वम् ।

**समाश्लिषज्जतु काष्ठमिति** । पुषादित्वादङ् । प्रत्यासत्तिरत्र नैरन्तर्यलक्षणा श्लिषेरर्थः, न त्वालिङ्गनम् । यद्ययं पुषादौ पठ्यते, कथमिदं नियमार्थम्, सिद्धे सत्यारम्भो नियमाय भवति, न च पूर्वेण क्सः सिद्धः, अङा बाधितत्वात् ? एवं मन्यते—'श्लिषः' इति योगविभागः कर्त्तव्यः । किमर्थम् ? अङ्बाधनार्थम्—क्स एव भवति, नाङ् । ततः 'आलिङ्गने' इति किमर्थम् ? नियमार्थम्—आलिङ्गन एव क्सो भवति, अन्यत्राङेवेति । यद्येवम्, 'श्लिषः' इत्येवं योगविभागो यथाङं बाधते तथा 'चिण्भावकर्मणोः' इति चिणमपि बाधेत—उपाश्लेषि कन्या

**पदमञ्जरी**

'हो ढः' । 'भिदिर् विदारणे' ( धा० पा० १४३९ ) 'छिदिर् द्वैधीकरणे', ( धा० पा० १४४० ) 'कुष निष्कर्षे' ( धा० पा० १५१८ ) 'मुष स्तेये' ( धा० पा० १५३० ) ॥ ४५ ॥

**श्लिष आलिङ्गने ॥ श्लिषेर्धातोरिति** । **'श्लिष आलिङ्गने'** ( धा० पा० ११८६ ) इत्यस्य, न तु 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' ( धा० पा० ७०१-७०४ ) इत्यस्य; आलिङ्गने वृत्त्यभावाद्, अनिट इति चाधिकारात्सानुबन्धकत्वाच्च । **अत्र नियमार्थमेतदिति** । ननु श्लिषिरयं पुषादिः, तथा च प्रत्युदाहरणे अङ् भवति, ततश्च पुषादिपाठात्प्राप्तमङं बाधित्वाऽऽलिङ्गने क्सो यथा स्यादित्येवं विधिसम्भवान्नियमो नोपपद्यते । अस्तु विधिः, एवमप्यालिङ्गने क्सः, अन्यत्राङिति सिद्धमिष्टम् ? सत्यम्; सिद्धं परस्मैपदे, आत्मनेपदे त्वङभावादालिङ्गनेऽनालिङ्गने च पूर्वेण क्सः प्राप्नोति, इष्यते च तत्राप्यालिङ्गने क्सोऽन्यत्र सिच्, तच्च नियमे सत्युपपद्यते । स च नियमो नोपपद्यते; विधेयभावात् ? योगविभागात्सिद्धम्—'श्लिषः इत्यको योगः श्लिषश्च क्सो भवति । किमर्थमिदम् ? पुषाद्यङो बाधनार्थम् । यथैव तर्ह्यङं बाधते तथा चिणमपि बाधेत—समाश्लेषि कन्या देवदत्तेनेति ? 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' ( व्या० परि० ९ ) इति तत्रालिङ्गनेऽनालिङ्गने च श्लिषः

**भावबोधिनी**

[कुष् मुष् ये शलन्त और इगुपध है किन्तु अनिट् नहीं अपितु सेट् है अतः इनसे भी 'च्लि' का 'क्स' न होकर 'सिच्' ही होता है । ] ॥ ४५ ॥

आलिङ्गन क्रियावाची 'श्लिष' धातु से परे च्लि का 'क्स' आदेश होता है । आलिङ्गन=उपगूहन, परिष्वङ्ग । [ जब एक के अवयवों को दूसरा अपने अवयवों में लेता है तब आलिङ्गन कहा जाता है वहीं पर यह 'क्स' करता है । ] इसमें 'क्स' करना नियमार्थ है । [ भाव यह है कि श्लिष धातु शलन्त, इगुपध अनिट है । अतः पूर्वसूत्र से 'क्स' सम्भव रहने पर पुनः यहाँ विधान करना इस नियम के लिये है कि—केवल आलिङ्गन अर्थ में 'च्लि का 'क्स' होता है । अन्यत्र 'अङ्' ही होता है । अतः ] उदाहरण—आश्लिक्षत् कन्यां देवदत्तः [ आङ् पूर्वक श्लिष् + लुङ्=तिप्, अट्, च्लि का क्स=स—आ श्लिष् + स ति, इलोप, 'ष्' का 'क्' आ श्लिक् सत्, 'स' का 'ष' क् + ष=क्ष —आश्लिक्षत् । देवदत्त ने कन्या का आलिङ्गन किया । ]

आलिङ्गन अर्थ में ही क्स होता है—इसका क्या फल है ? समाश्लिषत् जतुकाष्ठम् । [ लाख और लकड़ी परस्पर मिल=जुड़ गये । यहाँ 'क्स' नहीं होता है । "पुषादि द्युतादि०" से च्लि का अङ् होता है—समाश्लिष् + अ + त् । ] ॥ ४६ ॥

**६६६. न दृशः ॥ ४७ ॥ ( २४०७ )**

**पूर्वेण क्सः प्राप्तः ( ३.१.४५ ) प्रतिषिध्यते । दृशेर्धातोः परस्य च्लेः क्सादेशो न भवति । अस्मिन्प्रतिषिद्धे 'इरितो वा' ( ३.१.५७ ) इत्यङ्सिचौ भवतः । अदर्शत्, अद्राक्षीत् ॥**

**न्यासः**

देवदत्तेनेति ? नैतदस्ति; 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इत्ययमङं बाधते, न चिणम्। अथ वा—चिण्भावकर्मणोः' इत्यत्र 'चिण् ते पदः' इत्यतश्चिणित्यनुवर्त्तमाने पुनश्चिण्ग्रहणस्यैतत्प्रयोजनम्—चिणेव यथा स्यात्, यदन्यत् प्राप्नोति, तन्मा भूदिति । अथ 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' इत्येतस्य श्लिषो ग्रहणं कस्मान्न भवति ? आलिङ्गने तस्य वृत्त्यसम्भवात्, 'अनिटः' इत्यधिकाराच्च, अस्य सेट्त्वात् ॥ ४६ ॥

**न दृशः ॥ अदर्शदिति** । अङ् । 'ऋदृशोऽङि गुणः' इति गुणः । **अद्राक्षीदिति** । 'सृजिदृशोर्झल्यमकिति' इत्यमागमः । 'वदव्रज' इत्यादिना वृद्धिः, पूर्ववत् षत्वकत्वे ॥ ४७ ॥

**पदमञ्जरी**

क्सो भवति । इदमिदानीं किमर्थम् ? नियमार्थम्—आलिङ्गन एव, नान्यत्र । योगविभागसामर्थ्याद्या च यावती च क्सस्य प्राप्तिः सा सर्वा नियम्यते, न त्वनन्तरस्य विधिर्वा भवतीति । श्लिष इति या प्राप्तिः, अङ्बाधनार्था सैव । एवमपि नियमो नोपपद्यते, कथम् ? श्लिष इत्येतदङ्बाधनार्थम् । न च तदत्यन्तायाङं बाधितुं प्रभवति; पुषादिपाठसामर्थ्यात्, ततश्चाङ्क्सयोः सर्वत्र विकल्पे प्राप्ते, द्वितीयो योग;—आलिङ्गने क्स एव नित्यं यथा स्यान्मा कदाचिदङ् भूदित्येवमर्थः स्यात्, किं तर्ह्युच्यते – नियमो नोपपद्यते इति ! ननु तत्रभवतापि मुखान्तरेण नियम एवोक्तः ? एतावांस्तु विशेषः—मया प्रत्ययनियम उक्तः—आलिङ्गन एव क्स इति, त्वया पुनरर्थनियमः—आलिङ्गने क्स एवेति, सर्वथा नियमान्न मुच्यामहे । तत्र लक्ष्यानुरोधाद्विधेयविभक्तिनिर्देशेन प्रधानत्वाद्वा प्रत्यय-नियम एव भविष्यति ॥ ४६ ॥

**न दृशः ॥ पूर्वेणेति** । 'शल इगुपधात्' इत्यनेन । **अङ्सिचौ भवत इति** । परस्मैपदेष्वन्यत्र सिजेव । **अदर्शदिति** । 'ऋदृशोऽङि गुणः' । **अद्राक्षीदिति** । 'सृजिदृशोर्झल्यमकिति' । अथ 'च्लेः सिच्' इत्यस्यानन्तरं क्सस्य बाधनार्थं सिजेव कस्मान्न विहितः, इरित्त्वसामर्थ्यादङपि भविष्यति ? सत्यम्; तत्रापि 'दृशश्च' ( का० वा० ११०८ ) इति चकारः कर्त्तव्य इति लाघवे नास्ति विशेषः ॥ ४७ ॥

**भावबोधिनी**

पूर्ववर्ती सूत्र से ( च्लि का ) 'क्स' प्राप्त होता है उसका प्रतिषेध होता है । 'दृश्' धातु से परे 'च्लि' का 'क्स' आदेश नहीं होता है । इस 'क्स' का प्रतिषेध हो जाने पर "इरितो वा" ( पा. सू. ३.१.५७ ) से 'च्लि' के 'अङ्' और 'सिच्' होते है । उदा० अदर्शत्, अद्राक्षीत् [ दृशिर् = दृश् + लुङ् = तिप्, अट्, च्लि, पूर्व सूत्र से 'क्स' आदेश प्राप्त होता है उसका प्रतिषेध प्रस्तुत सूत्र से करने के बाद 'इर्' की इत्संज्ञा के कारण 'इरितो वा' से विकल्प से 'अङ्' होता है अ दृश् + अ + त् "ऋदृशोऽङि गुणः" ( पा. सू. ७.४.१६ ) से 'ऋ' का गुण, रपर—अदर्शत् । 'अङ्' न होने पर सिच् = स्, "अस्तिसिचोऽपृक्ते" ( पा. सू. ७.३.९६ ) से ईट्—अदृश् + स् ई त्, "सृजदृशोर्झल्यमकिति" ( पा. सू. ६.१.५८ ) से अम् आगम, मित् होने से अन्त्य अच् ऋ के बाद अ दृ अ श् + स् ई त्, 'ऋ' का यण् 'र्' "वदव्रजहलन्त-स्याचः" ( पा. सू. ७.२.३ ) से वृद्धि, "व्रश्चभ्रस्ज" सूत्र से 'श्' का 'ष्' "षढोः कः सि" से 'ष्' का 'क्' अद्राक्सीत् । "आदेशप्रत्यययोः" से 'स्' का 'ष्', क् + ष् क्ष्—अद्राक्षीत् । ] ॥ ४७ ॥

**६६७. णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ४८ ॥ ( २३१२ )**

**सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः, श्रि, द्रु, स्रु—इत्येतेभ्यश्च परस्य च्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेधार्थः, चकारः 'चङि' ( ६ १ १ ११ ) इति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्।**

**कर्तरीति किम्? अकारयिषातां कटौ देवदत्तेन।**

**न्यासः**

**णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्॥ चकारो विशेषणार्थ इति।** 'चङि' इत्यत्राङीत्युच्यमाने 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यनेनापि विहितेऽङि द्विर्वचनं स्यात्। **अचीकरत्, अजीहरदिति।** 'चङि' इति द्विर्वचनं कृहृशब्दयोः, उरत्त्वम्, रपरत्वम्, 'कुहोश्चुः' इति चुत्वम्—ककारस्य चकारः, हकारस्यापि झकारः, 'अभ्यासे चर्च' इति झकारस्य जकारः। शेषमभ्युदसीषददित्यनुसारेण वेदितव्यम्। **अशिश्रियदित्यादि।** 'श्रिञ् सेवायाम्', 'दु द्रु गतौ', 'स्रु गतौ, 'अचि श्नुधातु' इत्यादिना यथायोगमियङुवङौ। **अकारयिषातामिति।** कर्मणि द्विवचनम्, आताम्, इड्गुणायादेशषत्वानि।

**पदमञ्जरी**

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ्॥ चकारो विशेषणार्थ इति।** 'चङि' इत्यत्र 'अङि' इत्युच्यमाने 'अस्यतिवक्तिख्यातिभ्योऽङ्' 'षिद्भिदादिभ्योऽङ्' अत्रापि प्राप्नोति। यदि पुनरयं ङो विधीयते चकारः शक्योऽकर्तुम्। चिन्त्यं प्रयोजनमस्य। **अशिश्रियदित्यादि।** अत्र चङि धातुरङ्गं चङन्तं तु तिपि तत्र चङाश्रयस्य गुणस्य क्ङितीति प्रतिषेधः। चङन्तस्य तु तिपमपेक्ष्य लघूपधगुणः प्राप्नोति। न च तस्यापि चङमेव ङितमपेक्ष्य प्रतिषेधः, किं कारणम्, क्ङितीति निमित्तसप्तमी? नैष दोषः; अन्तरङ्गावियङुवङौ अन्तर्भुतचङपेक्षत्वात्, बहिरङ्गो गुणो बहिर्भूततिबपेक्षत्वात्। **अकारयिषातामिति।** ण्यन्तात्कर्मणि लुङ्, द्विवचनम्, आताम्।

**भावबोधिनी**

च्लि के सिच् आदेश का अपवाद 'चङ्' किया जा रहा है। ण्यन्त धातुओं से और श्रि, द्रु, स्रु—इन तीन धातुओं से परे 'च्लि' का 'चङ्' आदेश होता है, कर्तृवाची लुङ् के परे रहते। ङकार यह अनुबन्ध गुण और वृद्धि के प्रतिषेध के लिये है, चकार यह "चङि" ( पा. सू. ६.१.११ ) इस विशेषण के लिये है। [ यदि चङ् न करके अङ् किया जाता तो उक्त सूत्र "अङि" इस रूप में होता और "अस्यतिवक्तिख्यातिभ्योऽङ्" ( पा. सू. ३.१.५२ ) से किये जाने वाले 'अङ्' परे रहते भी द्वित्व प्रसक्त होता, उसे रोकने के लिये 'चङ्' परे ही करने के लिये यह 'चकार' लगाया गया। ] उदा०—अचीकरत्। अजीहरत्। [ ये ण्यन्त के उदाहरण हैं। ] अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। [ कृ + णिच् + लुङ्=तिप्, अट्, च्लि का 'चङ्' करने पर—अ कृ इ + अ + ति, "णेरनिटि" ( पा. सू. ६.४.५१ ) से णि का लोप, "चङि" सूत्र से 'कृ' का द्वित्व, अ कृ कृ + अ + ति, "उरत्" ( पा. सू. ७।४।६६ ) सूत्र से ऋ का अ, रपर, हलादिशेष, "कुहोश्चुः" ( पा. सू. ७.४.६२ ) से 'क' का चवर्ग—अ च कृ + अ ति, णित् को मान कर ऋ की वृद्धि, रपर, उपधा का ह्रस्व, 'इ' का लोप—अ च कर् अत्। सन्वद्भाव करने पर 'सन्यतः' सूत्र से 'अ' का 'इ' "दीर्घो लघोः" से दीर्घ करने पर—अचीकरत् बनता है। अजीहरत् में—हृ + णि=इ + लुङ्=ति, अट्, च्लि का चङ्—अ हृ इ + अ + ति, द्वित्व आदि कार्य करने पर अ ह हृ + अ ति, "कुहोश्चुः" ७.४.६ से 'ह' का 'झ' "अभ्यासे चर्च" ( पा. सू. ८.४.५४ ) से झ का ज, सन्वद्भाव, अ का इ, दीर्घ—अजीहरत्। अशिश्रियत। श्रि + लुङ्= ति, अट्, च्लि का चङ् द्वित्व, हलादिशेष—अ शि श्रि + अति, "इतश्च" से इ का लोप, "अचिश्नु-धातुभ्रुवां य्वोरियङुवङौ" ( पा सू. ६.४.७७ ) से 'इ' का इयङ् करने पर—अ शि श्र् इय् अत्। द्रु + लुङ् यहाँ भी द्वित्वादि करने के बाद 'उ' का 'उवङ्' होता है—अ दु द्र् उ व् + अ + त्। स्रु + लुङ्—यहाँ भी केवल 'उ' का 'उवङ्' और सारी प्रक्रिया पूर्ववत् होती है। ]

कर्ता अर्थ वाले प्रत्यय में हो—इसका क्या फल है? अकारयिषातां कटौ देवदत्तेन। [ देवदत्त द्वारा दो चटाइयाँ बनाई गयीं। यहाँ कर्मवाच्य=अर्थ है। अतः चङ् न होकर सिच्=स् होता है। ]

✻ कमेरुपसंख्यानम् ✻ ( म० भा० ३.१.४८ वा० १ )। 'आयादय आर्द्धधातुके वा' ( ३.१.३१ ) इति यदा णिङ् नास्ति तदैतदुपसङ्ख्यानम् । अचकमत । णिङ्पक्षे सन्वद्भावः—अचीकमत ।

नाकमिष्टं सुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः[1] ॥ ( म० भा० ३.१४८ )

६६८. विभाषा धेट्श्व्योः ॥ ४९ ॥ ( २३७५ )

'धेट् पाने', धा० पा० ९०३ ) 'टुओश्वि गतिवृद्ध्योः ( धा० पा० १०११ )—एताभ्यामुत्तरस्य च्लेर्विभाषा चङादेशो भवति। धेटस्तावत् अदधत्। सिचपक्षे 'विभाषा घ्राधेट्शाच्छासः' ( २.४.७८ ) इति

न्यासः

**कमेरुपसंख्यानमिति**। ननु 'कमेर्णिङ्' इति णिङि कृते ण्यन्तत्वादेव कमेश्चङ् सिद्धः, तत् कथमुपसंख्यायत इत्याह—**आयादय इत्यादि**। **अचकमतेति**। अनुदात्तेत्त्वादात्मनेपदम्, पूर्ववदभ्यासस्य कुत्वम्। **णिङ्भावपक्षे सन्वद्भाव इति**। न त्वणिङ्पक्ष इति दर्शयति; यस्मात् 'सन्वल्लघुनि चङ्परे' इत्यस्य चङ् परो यस्माण्णेः स चङ्परो णिः, तस्मिन् परतो यदङ्गं तस्याभ्यासस्य सन्वत् कार्यं भवतीत्येषोऽर्थः, न चायमर्थो णिङभावपक्षे सम्भवति ॥ ४८ ॥

**विभाषा धेट्श्व्योः** ॥ **अदधदिति**। 'आतो लोप इटि च' इत्याकारलोपः। पूर्ववदभ्यासस्य जश्त्वं

पदमञ्जरी

**कमेरुसङ्ख्यानमिति**। ननु कमेर्णिङ् विहितः, **न च** प्रकृत्यन्तरं कमिः सम्भवति, णिङन्तात्तु सूत्रेणैव सिद्धं तत्राह—**आयादय आर्द्धधातुके वेति यदा णिङ् नास्तीति**। **णिङ्पक्षे सन्वद्भाव इति**। सन्वत्सूत्रे चङ्परो णिरित्याश्रयणात्। तत्र हि 'सन्वल्लघुनि चङि' इति वक्तव्ये परग्रहणं बहुव्रीह्यर्थम्, तत्र णिरन्यपदार्थः, अन्यस्यासम्भवात् ॥ ४८ ॥

**विभाषा धेट्श्व्योः** ॥ **अङोऽप्यत्र विकल्प इति**। 'जॄस्तम्भु' इत्यादिना। **अश्वदिति**। 'श्वयतेरः'।

भावबोधिनी

✻ कम् से च्लि के चङ् का उपसंख्यान करना चाहिये। ✻ "आयादय आर्द्धधातुके वा" ( पा सू. ३.१.३१ ) इसके अनुसार जब णिङ् नहीं होता है [ तब ण्यन्त न होने से ] यह उपसंख्यान है। उदा० अचकमत। [ 'कम' धातु से "कमेर्णिङ्" ( पा. सू. ३.१.३० ) से णिङ् होता है वह "आयादय आर्द्धधातुके वा ( ३.१.३१ ) के अनुसार विकल्प से होता है। अभावपक्ष में ण्यन्त न होने से यह सूत्र च्लि का चङ् करता है—कम् + लुङ् = त, अट्, च्लि = चङ् अ कम् + चङ् = अ + त, "चङि" सूत्र से द्वित्व, हलादिशेष अभ्यासकार्य—अ चकम् अत। ] जब "कमेर्णिङ्" सूत्र से णिङ् होता है उस पक्ष में सन्वद्भाव—अचीकमत। [ कम् + णि = इ + लुङ् = त, अट्, उपधावृद्धि, अ काम् इ + त, च्लि का चङ् प्रस्तुत सूत्र से, "चङि" सूत्र से द्वित्व, हलादिशेष, अभ्यासकार्य "णेर निटि" ( पा. सू. ६.४,५१ ) से णिलोप —अ च कम् अ त। "सन्वल्लघुनि यङ्परेऽनग्लोपे" ( पा. सू. ७.४.९३ ) से सन्वद्भाव के कारण 'अ' का 'इ' "दीर्घो लघोः" ( पा. सू. ७.४.९५ ) से दीर्घ करने पर—अचीकमत। ]

[ कम् धातु के लुङ् लकार प्रथम पुरुष एकवचन में क्या रूप होता है—ऐसा पूछे जाने पर जो 'अचकमत' ऐसा उत्तर देते हैं वे ] घोड़ों से युक्त रथों से स्वर्ग प्रस्थान करते हैं और जो 'अचीकमत' ऐसा उत्तर देते हैं वे पैदल [ पत्काषी ] ही जाते हैं ॥ ४८ ॥

'धेट्' धातु पीना अर्थ में हैं, 'टु ओश्वि' यह गति और वृद्धि अर्थ में है—इन दोनों के बाद आने वाले च्लि का विकल्प से चङ् होता है। उदाहरण धेट् का पहले—अदधत्। [ धे + लुङ्, तिप्, अट्, "आदेच उपदेशेऽशिति" ( पा० सू० ६.१.४५ ) से 'ए' का 'आ' आदेश—अधा + ति, च्लि का विकल्प से चङ्=अ प्रस्तुत सूत्र द्वारा, "चङि" सूत्र से द्वित्व, अभ्यासकार्य—अदधा + अ + ति, "आतो लोप इटि च" से 'आ' का लोप, "इतश्च" से इ का लोप—अ द ध् अ त। ] जब चङ् नहीं होता है [ तब सिच् और "विभाषा घ्राधेट्शाच्छासः" ( पा० सू० २.४.७८ ) से सिच् का

---

१. अचीकमतभाषिण इति अचकमतेति प्रयोक्तव्ये अचीकमतेति प्रयुञ्जाना इत्यर्थः।

**लुक् । अधात्, अधासीत् । श्वयतेः खल्वपि-अशिश्वियत् । अङ्प्यत्र विकल्प्यते—अश्वत्, अश्वयीत् । कर्तरीत्येव—अधिषातां गावौ वत्सेन ॥**

**६६९. गुपेश्छन्दसि ॥ ५० ॥ ( ३४०४ )**

**गुपेः परस्य च्लेश्छन्दसि विषये विभाषा चङादेशो भवति । यत्रायप्रत्ययो नास्ति तत्रायं विधिः । इमान्नो मित्रावरुणौ गृहानजूगुपतम् _युवम् ( मै० १. ५. १४ ); अगौप्तम् अगोपिष्टम्,**

**न्यासः**

दकारः । **अधासीदिति** । लुङ्, सिच्, 'यमरमनमातां सक् च' इतीट्, प्रकृतेश्च सगागमः, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः । **अशिश्वियदिति** । पूर्ववदियङ् । **अङ्प्यत्र विकल्प्यत इति** । 'जॄस्तम्भु' इत्यादिसूत्रेण । **अश्वदिति** । 'श्वयतेरः' इत्यत्वम्, 'अतो गुणे' पररूपत्वम् । **अश्वयीदिति** । 'ह्म्यन्तक्षणश्वस' इत्यादिना वृद्धिप्रतिषेधे कृते गुणेऽयादेशः । **अधिषातामिति** । कर्मणि द्विवचनम्, आताम्, 'स्थाघ्वोरिच्च' इति कित्त्वमित्त्वञ्च ॥ ४९ ॥

**गुपेश्छन्दसि ॥ यत्रायप्रत्ययो नास्ति तत्रायं विधिरिति** । अनायप्रत्ययान्तस्योपादानात् । आय-प्रत्ययान्तस्य धात्वन्तरत्वात् । **अजूगुपतमिति** । 'गुपू रक्षणे', लुङ्, द्विर्वचनम्, थस्, 'तस्थस्थ' इत्यादिना तम्, 'तुजादीनां दीर्घोऽभ्यासस्य' इति दीर्घः । **अगौप्तमिति** । 'झलो झलि' इति सिचो लोपः, तस्यासिद्धत्वाद्

**पदमञ्जरी**

**अश्वयीदिति** । 'ह्म्यन्त' इत्यादिना सिचि वृद्धेः प्रतिषेधाद् गुणः । **अधिषातामिति** । कर्मणि द्विवचनम्, आताम् । 'स्थाघ्वोरिच्च' इति कित्त्वेत्त्वे ॥ ४९ ॥

**गुपेश्छन्दसि ॥ यस्मादायप्रत्ययो नास्ति तत्रायं विधिरिति** । सूत्रे केवलस्योच्चारणाद् 'गुप गोपने' ( धा० पा० ९७० ) 'गुप व्याकुलत्वे' ( धा० पा० १२३४ ) इत्यनयोस्तु ग्रहणं न भवति; छन्दसि दृष्टानुविधानात् । दर्शने तु तयोरपि ग्रहणम् । **अजूगुपतमिति** । 'गुपू रक्षणे' ( धा० पा० ३९५ ) 'तस्थस्थमिपाम्' इति थसस्तम्,

**भावबोधिनी**

वैकल्पिक लुक्—अ धा + त् । [ जब लुक् नहीं होता है तब "यमरमनमातां सक्च" ( पा० सू० ७.२.७३ ) से 'सक्' का आगम और सिच् के लिये 'इट्' 'त्' के लिये ईट्' का आगम—अधा सक् + इट् सिच् + ईट्+त् अनुबन्धों का और सिच् का लोप कर देने पर—] अधासीत् यह तीसरा रूप बनता है ।

'श्वि' धातु से भी—अशिश्वियत् । [ श्वि + लुङ्=तिप्, अट्, च्लि, इसका चङ्, धातु का द्वित्व, हलादिशेष—अ शि श्वि + अ त् "अचि श्नुधातु भ्रुवां य्वोरियङुवङौ" सूत्र से 'इ' का इयङ् करने पर—अशि श्व्, इय् अ त् । ] जब चङ् नहीं होता है तब जॄ स्तम्भुम्रुचुम्लुचु ग्रुचु ग्लुचु ग्लुञ्च श्विभ्यश्च" ( पा० सू० ३.१.५८ ) से च्लि का विकल्प से 'अङ्' आदेश होता है—अ श्वि + अ (ङ्) + त् [ "श्वयतेरः" सूत्र से अकारान्त आदेश और 'अ' का पररूप करने पर— ] अश्वत् । [ जब अङ् नहीं होता है तब सिच्—अ श्वि + स् त्, इट् तथा ईट् और सिच् का लुक्, दीर्घ करने पर—अश्वि + ईत्, सिच्निमित्तक प्राप्त वृद्धि का "ह्म्यन्तक्षण-श्वस-जागृणिश्व्येदिताम्" ( पा० सू० ७.२.५ ) से निषेध होने पर 'इ' का गुण और ए का अय् आदेश—अश्व् अय् ईत्= ] अश्वयीत् ये तीन रूप बनते हैं ।

प्रस्तुत सूत्र से चङ् आदेश केवल कर्तृवाच्य में होता है अतः कर्मवाच्य में सिच् का रूप ही होता है—अधिषातां गावौ वत्सेन । [ बछड़े के द्वारा गायों ( के दूध ) को पिया गया । धे = धा + लुङ् ( कर्म में ) द्विवचन में आताम्, अट्, च्लि का सिच्—अ धा स् आताम् "स्थाघ्वोरिच्च" सूत्र से कित्व और 'आ' का इत्व—अधि स् आताम्, स् का ष—अधिषाताम् ] ॥ ४९ ॥

वेदविषय में 'गुप्' से परे 'च्लि' का विकल्प से 'चङ्' होता है । जहाँ आय प्रत्यय नहीं होता है वहीं पर चङ् विधान लागू होता है । [ क्योंकि पाणिनि ने केवल 'गुप्' का उच्चारण किया है—'गोपाय' ऐसा आय प्रत्यय सहित का नहीं ] उदाहरण—इमान्नो मित्रावरुणो गृहान् अजूगुपतम्,—अगौप्तम्, अगोपिष्टम्, अगोपायिष्टम्—ये चार रूप होते

**अगोपायिष्टमिति वा । भाषायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति ॥**

**६७०. नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥ ५१ ॥ ( ३४०५ )**

**'ऊन परिहाणे'** ( धा० पा० १८८९ ), **'ध्वन शब्दे'** ( धा० पा० ८१७ ), **'इल प्रेरणे'** ( धा० पा० १३५८ ), **'अर्द्द गतौ याचने च'** ( धा० पा० ५५ )—**इत्येतेभ्यो धातुभ्यो ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते**

न्यासः

'वदव्रज' इत्यादिना वृद्धिः । **अगोपिष्टमिति ।** ऊदित्त्वात् 'स्वरति' इत्यादिना पक्षे इट्, 'नेटि' इति वृद्धौ प्रतिषिद्धायां लघूपधगुणः । **अगोपायिष्टमिति ।** आयप्रत्ययान्तात् सिच्, इट्, 'अतो लोपः' । **रूपत्रयमिति ।** पाश्चात्त्यम् ॥ ५० ॥

**नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥ एभ्यो ण्यन्तेभ्य इति ।** ऊनयत्येलयतिभ्यां चुरादिण्यन्ताभ्याम् । **पूर्वेणेति ।** 'णिश्रि' इत्यादिना । **औनयीदिति ।** तिप्, सिच्, 'इट ईटि' इति सिचो लोपः, तस्यासिद्धत्वाद् वृद्धौ प्राप्तायाम् 'ह्म्यन्तक्षण' इति प्रतिषेधः, गुणायादेशौ, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः । **औनिन-**

पदमञ्जरी

'तुजादीनां दीर्घोऽभ्यासस्य' । **अगौप्तमिति ।** ऊदित्त्वादिडभावपक्षे 'झलो झलि' इति सिचो लोपः । **अगोपायिष्ट-मिति ।** आयप्रत्ययान्तात्सिच् ॥ ५० ॥

**नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः । अर्द्द गतौ याचने चेति ।** 'अर्द्द हिंसायाम्' ( धा० पा० १८२८ ) इत्य यापि ग्रहणम्, यदिच्छन्दसि दर्शनमस्ति **एतेभ्य इति ।** तत्रोनयतिश्चुरादिः, ध्वनिरपि 'गर्व माने इति प्रागेतस्माददन्ताः' इत्यधिकारे चुरादिः, पठितः, घटादौ चापि पठ्यते । एलयतिश्चुरादिः, अर्दयतिर्हेतुमण्ण्यन्तः । **पूर्वेणेति ।** 'णिश्रि' इत्यादिना । **ऊनयीरिति ।** मध्यमपुरुषैकवचनम्, पूर्ववद्वृद्धौ प्रतिषिद्धायां गुणः, 'न माङ्योगे'

भावबोधिनी

हैं । [ गुप् + लुङ्=थस्=तम्, अट् च्लि का विकल्प से चङ्=अ, अ गुप् अ + तम् द्वित्व, हलादिशेष अभ्यास का जश्त्व—अ जुगुप् + अ + तम्, "तुजादीनां दीर्घोऽभ्यासस्य" ( पा० सू० ६.१.७ ) से अभ्यास का दीर्घ—अजूगुपतम् । ] जब चङ् नहीं होता है तब सिच् होता है—अगुप् स् + तम्, "झलो झलि" ( पा० सू० ८.२.२६ ) से सिच् का लोप, "वद-व्रज हलन्तस्याचः" ( पा० सू० ७.२.३ ) से वृद्धि—अगौप्तम् । किन्तु यहाँ "स्वरसूतिसूयतिधूञूदितो वा" ( पा० सू० ७.२.४४ ) से विकल्प से इट् होता है—अगुप् इ स् तम्, यहाँ "नेटि" सूत्र से वृद्धि का निषेध होने से उपधा का गुण, षत्व तथा ष्टुत्व करने पर—अगोपिष्टम् । जब "आयादय आर्धधातुके वा" ( पा० सू० ३.१.३१ ) से आय होता है तब अगोपाय इ स् तम्, अलोप, षत्व तथा ष्टुत्व—अगोपायिष्टम् । ] लौकिक संस्कृत चङ् वाला—अजूगुपतम्—रूप छोड़ कर शेष तीन ही रूप होते हैं ॥ ५० ॥

'ऊन' परिहाण=छोड़ना, कम होना—अर्थ में है, 'ध्वन' शब्द करना अर्थ में है, 'इल' प्रेरित करना अर्थ में हैं, 'अर्द्द' यह गमन और याचना अर्थों में है—इन चार णिजन्त धातुओं से पूर्ववर्ती "णि-स्रु द्रुश्रम्यः" सूत्र से च्लि का चङ् प्राप्त रहने पर वेदविषय में नहीं होता है । उदा०—कामम् ऊनयीः [ माङ् के योग में अट नहीं होता है—ऊन् + णिच् । लुङ् = सिप् सिच्, इ लोप, ईट् आगम—ऊन् इ + ई स् स् णिच् के इ का गुण अय् आदेश—ऊन् अय् ईस् । स्, "हल्ङ्याभ्यः" से 'स्' लोप स् का रुत्व विसर्ग—ऊनयीः । ] लौकिक संस्कृत में—औनिनत् ।

**विमर्श**—पदमञ्जरीकार ने 'मा त्वा जरितुः काममूनयीः' [ ऋक् १.५३.३ ] का 'ऊनयीः' माना है और माङ् के योग में अट् का अभाव है । यह मध्यम पुरुष एकवचन का रूप है । लौकिक संस्कृत में 'औनिनः' यह होता है । जो 'औनिनत्' यह मिलता है वह सामान्य प्रक्रियानुसार प्रथम पुरुष एकवचन लिखा है । वास्तव में मध्यम पुरुष एकवचन का रूप ही प्रत्युदाहरण देना उचित है ।

**छन्दसि विषये न भवति। काममूनयीः ( ऋ० १.३.५३ )। औनिनदिति भाषायाम्। मा त्वाग्निर्ध्वनयीत् ( ऋ १.१६१.१५ )। अदिध्वनदिति भाषायाम्। काममैलयीत्। ऐलिलदिति भाषायाम्। मैनमर्दयीत्। आर्दिददिति भाषायाम्॥**

**न्यासः**

**दिति**। 'अजादेर्द्वितीयस्य' इति द्विर्वचनम्, णिलोपः। **ध्वनयीदिति**। ध्वनयीदित्येतदेव निपातनाददन्तत्वम्, 'अतो लोपः', तस्य स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यड्निषेधः। **अदिध्वनदिति**। सन्वद्भावादित्वम्। **ऐलिलदिति**। 'अजादेर्द्वितीयस्य' इति लिशब्दस्य द्विर्वचनम्, पूर्ववदाट्। **आर्दिददिति**। इहापि द्वितीयस्यैकाचो द्विर्वचनं पूर्ववत्। रेफस्तु न द्विरुच्यते; 'न न्द्राः संयोगादयः' इति प्रतिषेधात्। आट्, वृद्धिः॥ ५१॥

**पदमञ्जरी**

इत्याडागमप्रतिषेधः। मा त्वायतो जरितुः काममूनयीः ( ऋ० १.५३.३ ) इदं प्रतिसव्यस्य ऋषेर्वचनम्। त्वायतः = त्वामिच्छतः, जरितुः = स्तोतुर्मम, कामम् = अभिलाषं मा ऊनयीः = ऊनं मा कार्षीरित्यर्थः। प्रायेण तु तिबन्तं पठ्यते, कृताडागमं च, तदन्यत्र द्रष्टव्यम्। **औनिनत् इति**। सिपि चङि 'अजादेर्द्वितीयस्य' इति नशब्दस्य द्विर्वचनम्। प्रायेण तूदाहरणवदिदमपि तिबन्तं पठ्यते। **ध्वनयीदिति**। तिप, 'न माङ्योगे' इत्यडागमप्रतिषेधः। **आर्दिददिति**। 'अजादेर्द्वितीयस्य' 'न न्द्राः संयोगादयः' इति दशब्दस्य द्विर्वचनम्॥ ५१॥

**भावबोधिनी**

न्यासकार ने 'औनयीत्' यह उदाहरण और 'औनिनत्' यह प्रत्युदाहरण दिया है। परन्तु मन्त्र का सन्दर्भ देने के कारण पदमञ्जरीकार का मत अधिक संगत प्रतीत होता है।

[ अनु० ] 'ध्वन' का उदा०—मा त्वाग्निर्ध्वनयीत् [ 'ध्वन् + इ ( णि ) + लुङ् = तिप्, माङ् के योग में अट् का अभाव, च्लि का विकल्प से चङ् निषेध होने से सिच् = स् 'ति' के 'इ' का लोप, इट्, ईट् ध्वन् इ + इ स् + ई त्, णिच् के इ का गुण, ए का अय्, सिच् का लोप ध्वन् अय् + इ ई त्, सवर्णदीर्घ—ध्वनयीत्। यह 'ध्वन' अकारान्त है। णिच् करने पर लुप्त होने वाला अकार उपधावृद्धि के प्रसङ्ग में स्थानिवत् हो जाता है। अतः वृद्धि नहीं होती है।] लौकिकसंस्कृत में—अदिध्वनत् यह होता है। [ ध्वन् + इ + लुङ् = ति, अट्, च्लि का चङ्—अध्वन् इ + अ + ति, "चङि" सूत्र से धातु का द्वित्व, हलादिशेष, "णेरनिटि" सूत्र से णि = इ का लोप, "इतश्च" से ति' के इ का लोप अ द ध्वन् अ त्। "सन्यतः" सूत्र से अभ्यास के अ का इ—अदिध्वनत् ] 'इल' धातु० का उदा०—कामम् ऐलयीः। [ इल् + णिच् = इ + लुङ्, आट्, वृद्धि, च्लि के चङ् का निषेध, सिच् ऐल्इ + स् + ति, ति के 'इ' का लोप, णिच् के इ का गुण, अय्—आदेश—ऐल् अय् इ स् ई त्। "इट ईटि" सूत्र से सिच्लोप, सवर्णदीर्घ—ऐलयीत्। ] लौकिक संस्कृत में—ऐलिलत्—यह होता है। [ इल् णिच् + लुङ् = तिप्, आट्, वृद्धि, च्लि का चङ् ऐलि + अ + ति, "अजादेर्द्वितीयस्य" के अनुसार "चङि" से द्वितीय एकाच 'लि' का द्वित्व ऐ लि लि + अ + ति, "णेरनिटि" से णिलोप, "इतश्च" से इलोप—ऐलिल् + अ + त्।] 'अर्द' का उदा०—मैनम् अर्दयीत्। [ अर्द् णि = इ + लुङ् = तिप्, माङ् के योग में आट् का अभाव, च्लि के चङ् का निषेध होने पर सिच् आदेश इट् आगम—अर्द् इ + इस् + ति, इ का लोप, ईट् आगम, णि के इ का गुण, अय् आदेश—अर्द् अय् + इ ई त्, सवर्णदीर्घ—अर्दयीत्। ] लौकिक संस्कृत में आर्दिदत्—यह होता है। [ अर्द् + णि + लुङ् = तिप्, आट्, वृद्धि, च्लि का चङ् = अ—आर्दि + अ + ति "अजादेर्द्वितीयस्य' के अनुसार "चङि" से द्वितीय एकाच् 'दि' का द्वित्व, "नन्द्राः संयोगादयः" ( पा. सू. ६.१.३ ) के अनुसार रेफ का द्वित्व नहीं होता है—आर्दि दि + अ + ति, णि लोप, 'ति' के इ का लोप—आर्दिदत्। ]॥ ५१॥

**६७१. अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ५२ ॥ (२४३८)**

**'असु क्षेपणे'** ( धा० पा० १२१० ), **'वच परिभाषणे'** ( धा० पा० १०६४ ), **ब्रूञादेशो वा** ( २.४.५३ ); **'ख्या प्रकथने'** ( धा० धा० १०६१ ), **चक्षिङादेशो वा** ( २.४.५४ )—**इत्येभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः।** अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम् ( म० भा० )। **पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। वक्ति—अवोचत्, अवोचताम्, अवोचन्। ख्याति—आख्यत्। आख्यताम्, आख्यन्।**

**कर्त्तरीति किम्? पर्यासिषातां गावौ वत्सेन ॥**

**६७२. लिपिसिचिह्वश्च ॥ ५३ ॥ (२४१८)**

**'लिप उपदे '** ( धा० पा० १४३४ ), **'षिच क्षरणे'** ( धा० पा० १४३५ ), **'ह्वेञ् स्पर्द्धायाम्'** ( धा० पा०

**न्यासः**

**अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ब्रूञादेशो वेति।** 'ब्रुवो वचिः' इति। **चक्षिङादेशो वेति।** 'चक्षिङः ख्याञ्' इति। **पर्यास्थतेति।** 'उपसर्गादस्यत्यूह्योर्वावचनम्' इत्युपसंख्यानादात्मनेपदम्। 'अस्यतेस्थुक्'। **अवोचदिति।** 'वच उम्'। **आख्यदिति।** पूर्ववदाकारलोपः ॥ ५२ ॥

**लिपिसिचिह्वश्च ॥ अह्वदिति।** पूर्ववदाकारलोपः। अथ किमर्थो योगविभागः, न अस्यतिवक्तिख्यातिलिपिसिचिह्वश्च' इत्येक एव योगः क्रियतामित्याह—**पृथगित्यादि।** उत्तरसूत्रे लिपिप्रभृतिभ्य एवात्मनेपदेष्वङ्-

**पदमञ्जरी**

**अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ब्रूञादेशो वेति।** वाशब्दः समुच्चये। एवमुत्तरत्रापि। **पुषादित्वादेव सिद्ध इति।** परस्मैपदेषु। **पर्यास्थतेति।** 'उपसर्गादस्यत्यूह्योर्वावचनम्' ( वा० ४९ ) इत्यात्मनेपदेऽङि 'अस्यतेस्थुक्'। **अवोचदिति।** 'वच उम्'। **आख्यदिति।** 'आतो लोप इटि च' ॥ ५२ ॥

**लिपिसिचिह्वश्च ॥** लिपिसिचीसहितो ह्वा—इति 'मयूरव्यंसकादयः' इति समासः। **समाहारद्वन्द्वे तु** नपुंसकह्रस्वत्वं स्यात्, इतरेतरयोगे बहुवचनम्। ङसौ 'आतो धातोः' इत्याकारलोपः। **योगविभाग उत्तरार्थ**

**भावबोधिनी**

'असु' यह क्षेपण = फेंकना अर्थ में है, 'वच' यह बोलना अर्थ में है अथवा 'ब्रू' का आदेश 'वच' है, 'ख्य' धातु प्रकथन अर्थ में है अथवा 'चक्षिङ्' का आदेश 'ख्याञ्' है—इनसे परे च्लि का 'अङ्' आदेश होता है कर्तृवाची लुङ् परे रहते। 'अस्' यह तो पुषादिगण में पठित है अतः "पुषादि-द्युतादि-ऌदितः परस्मैपदेषु" ( पा. सू. ३.१.५५ ) से च्लि का 'अङ्' आदेश सिद्ध हो है पुनः यहाँ उसका ग्रहण आत्मनेपद के लिये है। [ क्योंकि वह परस्मैपद में ही अङ् करता है। ] उदा०—पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। [ परि + अस् + लुङ् "उपसर्गादस्यत्यूहोर्वावचनम्" से आत्मनेपद, आट् आगम, वृद्धि—परि + आस् + त, च्लि का अङ् आदेश "अस्यतेस्थुक्" ( पा. सू. ७.४.१७ ) से थुक् = थ् आगम, इ का यण्—पर्यास् थ् अ त = पर्यास्थत। ] वच्—का अवोचत्, अवोचताम् अवोचन्। [ वच् + लुङ् = तिप्, अट्, च्लि का अङ् अवच् + अ + ति, "वच उम" ( पा. सू. ७।४।२० ) से 'उम्' = उ का आगम, मित् होने से अ के बाद—अ व च् + अ + ति, गुण, इ का लोप—अवोचत्। ] ख्या—का आख्यत् आख्यताम्, आख्यन्। [ आङ् ख्या + लुङ् = तिप्, अट्, आ अ ख्या + ति, च्लि का 'अङ्', "आतो लोप इटि च" से 'आ' का लोप, उपसर्ग का दीर्घ आ ख्य् अ + ति, इ का लोप—आख्यत्। ]

कर्तृवाची परे रहते—इसका क्या लाभ है? पर्यासिषातां गावौ वत्सेन। [ यहाँ कर्मवाच्य है अतः च्लि का अङ् न होकर सिच् = स् होता है, इट् आगम—परि आस् इ स् आताम् 'स्' का षत्व करने पर रूप बनता है ] ॥ ५२ ॥

"लिप्" धातु उपदेह = बढ़ना = लीपना अर्थ में है, 'षिच' क्षरण अर्थ में है, 'ह्वेञ्' स्पर्धा अर्थ में है—इनसे परे 'च्लि' का अङ् आदेश होता है। उदा०—अलिपत्। असिचत् आह्वत्। [ लिप् + लुङ् = तिप् अट्, च्लि का अङ्

**१००९ )—इत्येतेभ्यश्च परस्य च्लेरङादेशो भवति । अलिपत् । असिचत् । आह्वत् ।**

**पृथग्योग उत्तरार्थः ॥**

### ६७३. आत्मनेपदेष्वन्यतरस्याम् ॥ ५४ ॥ (२४१९)

**पूर्वेण प्राप्ते विभाषा आरभ्यते । लिपि-सिचि-ह्व आत्मनेपदेषु परतश्च्लेरङादेशो भवति अन्यतरस्याम् । 'स्वरितजितः' कर्त्रभिप्राये क्रियाफले ( १.३.७२ ) इत्यात्मनेपदम् । अलिपत, अलिप्त । असिचत, असिक्त । अह्वत, अह्वास्त ॥**

### ६७४. पुषादिद्युताद्य्लृदितः परस्मैपदेषु ॥ ५५ ॥ (२३४३)

**न्यासः**

विकल्पो यथा स्यादित्येवमर्थो योगविभागः । एकयोगे ह्यस्यत्यादीनामप्युत्तरत्रानुवृत्तिः स्यात्, तथा च तेभ्योऽपि विकल्पेनाङ् प्रसज्येत ॥ ५३ ॥

**आत्मनेपदेष्वन्यतरस्याम्** ॥ **'स्वरितजितः' इत्यात्मनेपदमिति** । लिपिसिच्योः स्वरितेत्त्वात्, ह्वयतेस्तु ञित्त्वात् । **अलिप्त । असिक्तेति** । 'झलो झलि' इति सिचो लोपः, तस्यासिद्धत्वाल्लघूपधगुणः प्राप्तः, स 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न भवति, 'चोः कुः' इति कुत्वम् ॥ ५४ ॥

**पुषादिद्युताद्य्लृदितः परस्मैपदेषु ॥** लृकार इद् येषां ते लृदितः । पुषादिरस्त्येव भ्वाद्यन्तर्गणः—'पुष

**पदमञ्जरी**

**इति** । 'अस्यतिवक्तिख्यातिलिपिसिचिह्वः' इत्येकयोगे त्वस्यादीनामप्युत्तरत्रानुवृत्तिः स्यात्, ततश्च तेभ्योऽप्यात्मनेपदे विकल्पः स्यात् ॥ ५३ ॥

**आत्मनेपदेष्वन्यतरस्याम्** ॥ **अलिप्त, असिक्तेति** । 'झलो झलि' इति सलोपः, 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वाद् गुणाभावः ॥ ५४ ॥

**पुषादिद्युताद्य्लृदितः परस्मैपदेषु** ॥ एकेनैवादिशब्देन प्रत्येकं सम्बन्धादेव सिद्धे द्वयोरुपादानं चिन्त्य-

**भावबोधिनी**

ङित् होने से गुण का निषेध ति के इ का लोप -अलिपत् । 'षिच्' का "धात्वादेः षः सः" ( पा. सू. ६।१।६४ ) से 'स्' सिच्—शेष पूर्ववत् । आङ् ह्वे + लुङ् ति, ए का आत्व, आ ह्वा + ति, च्लि का अङ्, "अतो लोप इटि च" ( पा. सू. ६।४।६४ ) से 'आ' का लोप—आह्व् अति, इ का लोप—आह्वत् । ]

[ इन धातुओं को पूर्ववर्ती सूत्र में भी समाविष्ट किया जा सकता था । यह अलग सूत्र किस लिये है ? ] पृथक् सूत्र उत्तरवर्त्ती सूत्र के लिये है । [ अर्थात् केवल तीन में आत्मनेपद में विकल्प से च्लि का अङ् करने लिये यह अलग सूत्र बनाया गया । ] ॥ ५३ ॥

पूर्व सूत्र से प्राप्त रहने पर विकल्प से विधान किया जा रहा है । लिप, सिच् तथा ह्वेञ्—इनसे आत्मनेपद परे रहते च्लि का 'अङ्' आदेश विकल्प से होता है । "स्वरितञितः" ( पा. सू. १।३।७२ ) से [ कर्तृगामी क्रियाफल रहने पर ] आत्मनेपद होता । है । उदा०—अलिपत, अलिप्त । असिचत, असिक्त । अह्वत, अह्वास्त । [ लिप् + लुङ् - त अट्, च्लि का अङ्—अलिप् अत । अङ् न होने पर सिच् स्—अलिप् स् त, "झलो झलि" ( पा. सू. ८।२।२६ ) से सिच् का लुक्—अलिप्त । असिच् + अ + त । अङ् न होने पर सिच् और उसका लुक् अ सिच् + त, च् का कुत्व—असिक्त । ह्वे-आत्व करने पर—ह्वा + लुङ् = त, अट्, च्लि का अङ्—अह्वा + अ + त, "अतो लोप इटि च" ( पा. सू. ६।४।६४ ) से आ का लोप—अह्व् अ त । अङ् न होने पर सिच्—अह्वा स् + त । ] ॥ ५४ ॥

पुष् आदि, द्युत् आदि और लृ की इत्संज्ञा वाली धातुओं से परे च्लि का अङ् आदेश होता है, परस्मैपद प्रत्यय परे रहने पर । दिवादिगण के अन्तर्गत पठित ही पुषादि लिया जाता है, न भ्वादिगण का और न क्र्यादिगण का ।

**पुषादिभ्य, द्युतादिभ्यः, लृदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतोऽङादेशो भवति। पुषादिदिवाद्यन्तर्गणो गृह्यते, न भूवादिः, क्र्याद्यन्तर्गणो वा। पुष—अपुषत्। द्युतादि—अद्युतत्, अश्वितत्।**

**लृदिद्भ्यः–गम्लृ–अगमत्। शक्लृ–अशकत्।**

**न्यासः**

पुष्टौ', 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' इत्येवमादिः, अस्ति च दिवाद्यन्तर्गणः—'पुष पुष्टौ, 'शुष शोषणे' इत्येवमादिः, अस्ति च क्र्याद्यन्तर्गणः—'पुष पुष्टौ', 'मुष स्तेये' इत्यवमादिः, तदिह कस्य ग्रहणमित्याह—**पुषादिर्दिवाद्यन्तर्गण इत्यादि**। यदि भ्वाद्यन्तर्गणो गृह्यते, पुषाद्यनन्तरं द्युतादीनां पाठात् पृथग् ग्रहणं न कुर्यात्; पुषादिग्रहणेनैव गृहीतत्वात्, तस्मात् स तावन्न गृह्यते। क्र्याद्यन्तर्गणोऽपि नैव गृह्यते, तत्र हि चत्वार एव पठ्यन्ते धातवः—पूर्वोक्तौ द्वौ 'खच भूतप्रादुर्भावे' 'ग्रह उपाहाने' इत्येतौ, यदि चैते जिघृक्षिताः स्युर्लृदित एवैतान् कुर्यात्, एवं पुषादिग्रहणं न कर्त्तव्यं भवति। तस्मात् पारिशेष्याद् दिवाद्यन्तर्गणानां पुषादीनां ग्रहणं विज्ञायते। अथ पुषादय लृदितः कस्मान्न कृताः? न; न हि ते लृदितः शक्यन्ते कर्त्तुम्। लृदित्त्वे हि तेषां य उदित आदितश्च पठ्यन्ते तेषाम् 'उदितो वा' 'आदितश्च' इत्येतयोः कार्ययोरभावः स्यात्। अथ द्युतादयः कस्माद् लृदितो न कृताः? यत एव हेतोः पुषादय लृदितो न कृतास्तत एव द्युतादयश्च। तेष्वपि हि केचिदुदित आदितश्च पठ्यन्ते। तत्र पुषादय आदिवादि-परिसमाप्तेः। यत्तु 'ष्णिह प्रीतौ' इत्यनन्तरं वृदिति वृत्करणं तद् रधादीनां परिसमाप्त्यर्थम्, न पुषादीनामित्याचार्याणां स्मृतिः। द्युतादयस्तु 'कृपू सामर्थ्ये' इत्येवंपर्यन्ताः, तदनन्तरं वृत्; 'घट चेष्टायाम्' इति वृत्करणात्। **अद्युतदिति**। 'द्युद्भ्यो लुङि' इति पक्षे परस्मैपदम्। **अश्वितदिति**। 'श्विता वर्णे'। **अगमद्,**

**पदमञ्जरी**

प्रयोजनम्। **दिवाद्यन्तर्गण इति**। 'पुष पुष्टौ' (धा॰ पा॰ ११८२) 'शुष शोषणे' (धा॰ पा॰ ११८३) इत्येवमादिरागणसमाप्तेः। यत्तु मध्ये 'ष्णिह प्रीतौ (धा॰ पा॰ १२००) वृत्' इति वृत्करणं तद्रधादिपरिसमाप्त्यर्थम्। एतच्च 'अस्यतिग्रहणमात्मनेपदार्थं पुषादित्वात्' इति **वा**र्तिकारवचनाद्विज्ञायते। **न भूवादिरिति**। 'पुष पुष्टौ' (धा॰ पा॰ ७००), 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' (धा॰ पा॰ ७०१–७०४) इत्येवमादिः, अस्य यदि ग्रहणं स्यात्पुषाद्यनन्तरं पाठाद् द्युतादीनां पृथग्ग्रहणं न कुर्यात्। **क्र्याद्यन्तर्गणो वेति**। 'पुष पुष्टौ' (धा॰ पा॰ १५२९) 'मुष स्तेये' (धा॰ पा॰ १५३०) इत्येवमादिः। तत्र हि चत्वार एव पठ्यन्ते, तत्र यदि ते जिघृक्षिताः स्युर्लुदित एव तान् कुर्यात्; स्वरितेत्त्वादेरपि तेनैव सिद्धत्वात्। अथ पुषादयो द्युतादयश्च लृदित एव कस्मान्न पठिताः? अशक्यास्ते तथा पठितुम्; आदितामीदितामुदितामूदितां च तत्र भावात्। तद्यथा—पुषादिषु तावत् 'ञिष्विदा गात्रप्रक्षरणे' (धा॰ पा॰ ११८८), 'मदी हर्षे (धा॰ पा॰ १२०८), 'शमु उपशमने' (धा॰ पा॰ १२०१), 'षिधू राद्धौ' (धा॰ पा॰ ११९२) इति; द्युतादिष्वपि 'श्विता वर्णे' (धा॰ पा॰ ७४२), 'ञिमिदा स्नेहने' (धा॰ पा॰ ७४३) 'ञिक्ष्विदा स्नेहविमोचनयोः' (धा॰ पा॰ ७४४), स्रंसु भ्रंसु अवस्रंसने' (धा॰ पा॰ ७५४–७५६) 'स्यन्दू प्रस्रवणे' (धा॰ पा॰ ७६१) 'कृपू सामर्थ्ये' (धा॰ पा॰

**भावबोधिनी**

उदा॰—अपुषत्। [ पुष् + लुङ् = तिप्, अट् च्लि का अङ्, कित्वात् गुणनिषेध—अपुष् अ + ति, इलोप। ] द्युतादि–अद्युतत्, अश्वितत्। [द्युत + लुङ्, श्वित् + लुङ्, शेष पूर्ववत्। ] 'लृ' की इत्संज्ञावाली के उदा—गम्लृ—अगमत्। शक्लृ–अशकत्। [ 'गम्लृ' के लृ की इत् संज्ञा लोप–गम्+ लुङ्=तिप, अट्, इलोप च्लि का अङ्—अगमत्। शक्लृ के लृ की इत्संज्ञा लोप–शक् + लुङ् शेषपूर्ववत्। परस्मैपद परे रहते ही—इसका क्या फल है—व्यद्योतिष्ट। अलोटिष्ट। [ वि + द्युत + लुङ्, अट् "द्युद्भ्यो लुङि" (पा. सू. १.३.९१) से विकल्प से परस्मैपद अतः पक्ष में आत्मनेपद—वि अ द्युत + त, 'च्लि' का अङ् न होने पर सिच् और इट् उपधागुण—वि अ द्योत् इ स् त, इ का यण् स् का षत्व, का ष्टुत्व—व्यद्योतिष्ट।

**परस्मैपदेष्विति किम् ? व्यद्योतिष्ट । अलोटिष्ट ॥**

**६७८. सर्त्तिशास्त्यर्त्तिभ्यश्च ॥ ५६ ॥ (२३८२)**

'सृ गतौ' ( धा० पा० ९३६ ), शासु अनुशिष्टौ' ( धा० पा० १०७६ ), 'ॠ गतौ' ( धा० पा० ९३७ )- इत्येतेभ्यः परस्य च्लेरङादेशो भवति । सर्त्ति-असरत् । शास्ति--अशिषत् । अर्त्ति—आरत् ।

पृथग्योगकरणमात्मनेपदार्थम् । समरन्त ( ऋ० ४.१९.९ ) । चकारः परस्मैपदेष्वित्यनुकर्षणार्थः । तच्चोत्तरत्रोपयोगं यास्यति ॥

**न्यासः**

**अशकदिति** । 'गम्लृ गतौ', 'शक्लृ शक्तौ' । **व्यद्योतिष्टेति** । अनुदात्तेत्त्वादात्मनेपदम् । **अलोटिष्टेति** । 'रुट लुट प्रतीघाते' ॥ ५५ ॥

**सर्त्तिशास्त्यर्त्तिभ्यश्च** ॥ **असरदिति** । 'ऋदृशोऽङि गुणः' । **अशिषदिति** । 'शास इदङ्हलोः' इतीत्त्वम्, 'शासिवसि' इति षत्वम् । **आरदिति** । पूर्ववद् गुणः, अजादित्वादाट्, सवर्णदीर्घः ।

**पृथगित्यादि** । यदि पुषादिद्युताद्य्लृदित्सर्त्तिशास्त्यर्त्तिभ्यश्च' इत्येकयोग एव क्रियेत; सर्त्तिप्रभृतिभ्यः परस्मैपद एव स्यात्, नात्मनेपदे । - स्मादेभ्य एवात्मनेपदेऽपि यथा स्यादित्येवमर्थं पृथग्योगकरणम् । **समरन्तेति** । सम्पूर्वादर्त्तेः 'समो गमि' इत्यादिनात्मनेपदम् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः; छान्दसत्वादस्य प्रयोगस्य । ननु च यद्यात्मनेपदेष्वङ् भवत्येव, तत् किं परस्मैपदेष्वित्यनुकर्षणार्थेन चकारेणेत्याह —**तच्चेत्यादि** ।

**पदमञ्जरी**

७६२ ) इति । **अद्युतत्, अश्वितदिति** । 'द्युद्भ्यो लुङि' इति पक्षे परस्मैपदम् । **अलोटिष्टेति** । 'लुट लुठ प्रतिघाते' ॥ ५५ ॥

**सर्त्तिशास्त्यर्त्तिभ्यश्च** ॥ शासेरदादित्वाच्छपो लुक्, इतरत्र निपातनात् । **शासु अनुशिष्टाविति** । सर्त्यर्त्तिभ्यां परस्मैपदिभ्यां साहचर्यादस्यैव ग्रहणम्, न तु 'आङः शासु इच्छायाम्' ( धा० पा० १०२२ ) इत्यात्मनेपदिन इति दर्शयति । **ऋ गताविति** । 'ऋ गतिप्राणयोः' ( धा० पा० ९३६ ) इति भौवादिकः, 'ऋ सृ गतौ' ( धा० पा० १०९८, १०९९ ) इति जौहोत्यादिकः । द्वयोरप्यत्र निर्देश इति केचित्, वयं तु जौहोत्यादिकयोरेवार्त्तिसर्त्योर्ग्रहणं मन्यामहे । **असरदिति** । 'ऋदृशोऽङि गुणः' । **अशिषदिति** । 'शास इदङ्हलोः' । 'शासिवसिघसीनाञ्च' इति षत्वम् ।

**पृथग्योगकरणमात्मनेपदार्थमिति** । अन्यथा पुषादिद्युताद्य्लृदित्सर्त्तिशास्त्यर्त्तिभ्यः' इत्येकमेव योगं कुर्यात् । एवं हि पृथग्विभक्तिनिर्देशश्चकारश्च न कर्त्तव्यो भवति । **समरन्तेति** । 'समो गम्यृच्छि' इत्यात्मनेपदम्, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्याडभावः, छान्दसत्वादस्य प्रयोगस्य—समन्वयो यत्समरन्त सेनाः, (ऋ० ७.२५.१) सङ्कल्पा अस्य समरन्त । तथा **भट्टिकाव्ये** 'समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते' इति । कश्चि-

**भावबोधिनी**

लुट + लुङ् = त, अट्, च्लि का सिच् इट्, उपधागुण आदि सभी पूर्वोक्त कार्य होने पर —अलोटिष्ट ] ॥ ५५ ॥

'सृ' यह गति अर्थ में है, 'शासु' यह अनुशासन अर्थ में हैं, 'ऋ' यह गति अर्थ में है—इन से परे च्लि का अङ् आदेश होता है । उदा०—'सृ' —का असरत् । 'शास्' का—आशिषत् । 'ऋ' का आरत् । [ सृ = लुङ् = तिप्, च्लि का अङ्, "ऋदृशोऽङि गुणः" ( पा. सू. ७।४।१६ ) से ऋ का गुण रपर – असर् अ+ति, इ का लोप—असरत् । शिष् लुङ् - तिप्, अट्, च्लि का अङ्, "शास इदङ्हलोः" ( पा. सू. ६।४।३४ ) से 'अ' का 'इ'—अ शिस् अति, इलोप "शासिवसिघसीनां च" ( पा. सू. ८।३।६० ) से स् का 'ष्'—अशिषत् । ऋ + लुङ्, तिप् च्लि = अङ्, गुण, आट्, सवर्ण दीर्घ, या वृद्धि, रपर—आर् + अ + ति, इलोप—आरत् । ]

**६७६. इरितो वा ॥ ५७ ॥ (२२६९)**

**इरितो धातोः परस्य च्लेरङादेशो वा भवति । भिदिर्—अभिदत्, अभैत्सीत् । छिदिर् अच्छिदत्, अच्छैत्सीत् । परस्मैपदेष्वित्येव-अरुद्ध । अभित्त । अच्छित्त ॥**

**६७७. जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥ (२२९१)**

**'वा' इति वर्त्तते । 'जृष् वयोहानौ' (धा० पा० ११३१), 'स्तम्भुः' सौत्रो धातुः, 'म्रुचु म्लुचु गत्यर्थौ'**

**न्यासः**

तदिति परस्मैपदेष्वित्येतदपेक्षते । **उत्तरत्रोपयोगं यास्यतीति** । न त्विहैवोपयोगं याति; अन्यथा पृथग्योगकरणमनर्थकं स्यात् ॥ ५६ ॥

**इरितो वा** ॥ इश्च रश्च इरौ, तौ इतौ यस्य स इरित् । तत्रेकारस्य 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञा, रेफस्य 'हलन्त्यम्' इति । अथ वा इरित् यस्यैव समुदायस्य तस्येत्संज्ञा, न प्रत्येकमवयवस्य ? इरित्ययं समुदाय इत्संज्ञको यस्य स इरित् समुदायस्येत्संज्ञाऽस्मादेव वचनाद् वेदितव्या । न ह्यन्येन केनचित् तस्येत्संज्ञा विहिता । **अभैत्सीदिति** । 'वदव्रज' इत्यादिना वृद्धिः, 'अस्तिसिचोऽपृक्ते' इतीट् । **अरुद्ध, अभित्तेति** । स्वरितेत्त्वादात्मनेपदम्, पूर्ववत् सिचो लोपः ॥ ५७ ॥

**जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** ॥ स्तम्भेरुदित्करणम् 'उदितो वा' इति विशेषणार्थम् । **अस्तभदिति** । 'अनिदिताम्' इत्यनुनासिकलोपः । **अश्वदित्यादि** । रूपत्रयं 'विभाषा धेट्श्व्योः' इत्यत्र व्युत्पादितम् ।

**पदमञ्जरी**

दाह—भाष्यविरुद्धमिदम्, **भाष्यकारेण** हि 'समो गम्यृच्छि' इत्यत्र मासमृषातां मासमृषतेति आत्मनेपदे सिजुदाहृत इति । अत्राहुः—शासिसाहचर्यादत्तिसत्त्योरविद्यमानशपोर्जौहोत्यादिकयोरिह ग्रहणम्; 'समो गम्यृच्छि' इत्यत्र तु भौवादिकस्याप्यर्त्तेर्ग्रहणम्, तत्र भौवादिकेऽर्तौ सिच उदाहरणमविरुद्धमिति ॥ ५६ ॥

**इरितो वा** ॥ **अभित्तेति** । स्वरितेत्त्वादात्मनेपदम् ॥ ५७ ॥

**जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । अस्तम्भदिति** । 'अनिदिताम्' इत्युपधालोपः । **अन्यतरोपादानेऽपि रूपत्रयं सिद्ध्यतीति** । कथम् ? यदि तावद् ग्लुचिरुपादीयते तस्मादङ्सिचोः—अग्लुचत्, अग्लोची-

**भावबोधिनी**

यह पृथक् सूत्र बनाना आत्मनेपद के लिये है । अर्थात् इन्हीं से आत्मनेपद करने के लिये यह सूत्र बनाया गया है—समरन्त । "च" यह 'परस्मैपदेषु' इसके अनुकर्षण के लिये है । और यह आगे उपयोग में आयेगा ॥ ५६ ॥

'इर्' की इत्संज्ञा वाली धातु से परे च्लि का 'अङ्' आदेश विकल्प से होता है उदा०—भिदिर्-अभिदत्, अभैत्सीत् । छिदिर्—अच्छिदत्, अच्छैत्सीत् । [ भिदिर्—इसके इ, र् अनुबन्ध हैं, इनकी इत्संज्ञा लोप करने पर भिद् + लुङ् = तिप्, अट्, च्लि = अङ् विकल्प से—अभिद् + अ + ति, इलोप, गुणनिषेध-अभिदत् । अङ् न होने पर सिच्—अभिद् + स् ति, इलोप, ईट् आगम, "वदव्रजहलन्तस्याचः" ( पा. सू. ७।२।३ ) से इ की वृद्धि, द् का चर्त्व त्—अ भैत् स् ई त् । इसी प्रकार छिदिर् के इर् का लोप छिद् + अङ् + ति, अट्, आदि करने बाद अ छिदत् में तुक् = त् और और श्चुत्व होता है सिच् का रूप पूर्ववत् ही होता है । ]

यह 'अङ्' आदेश परस्मैपद परे रहते ही होता है [ आत्मनेपद परे रहते नहीं ]—अरुद्ध, अभित्त । अच्छित्त । [ रुधिर् भिदिर् छिदिर् के इर् का लोप करने पर आत्मनेपद प्रत्यय के योग में यह सूत्र नहीं लगता है । अतः सिच् होता है —अरुध् + स् + ति, "झलो झलि" सूत्र से सिच् का लोप तथा धत्व, जश्त्व करने पर—अरुद्ध । चर्त्व करने पर—अभित्त, अच्छित्त रूप बनते हैं ] ॥ ५७ ॥

पूर्व सूत्र से 'वा' = विकल्प की अनुवृत्ति होती है । 'जृष्' यह अवस्था की कमी अर्थात् बूढ़ा होना अर्थ में है, 'स्तम्भु' यह सौत्र = इस सूत्र में पठित धातु है, 'म्रुचु और म्लुचु'—ये दोनों गमन अर्थ में हैं । 'ग्रुचु तथा ग्लुचु' ये

**( धा० पा० १९५, १९६ ), 'ग्रुचु ग्लुचु स्तेयकरणे' ( धा० पा० १९७, १९८ ), 'ग्लुञ्चु षस्ज गतौ' ( धा० पा० २०१, २०२ ), 'टुओश्वि गतिवृद्ध्योः' ( धा० पा० १०११ )—इत्येतेभ्यो धातुभ्यः परस्य च्लेर्वाऽङादेशो भवति । अजरत्, अजारीत् । अस्तभत्, अस्तम्भीत् । अम्रुचत्, अम्रोचीत् । अम्लुचत्, अम्लोचीत् । अग्रुचत्, अग्रोचीत् । अग्लुचत् अग्लोचीत् । अग्लुञ्चत्, अग्लुञ्चीत् । अश्वत्, अश्वयीत्, अशिश्वियत् ।**

**ग्लुचुग्लुञ्चवोरन्यतरोपादानेऽपि रूपत्रयं सिद्धयति, अर्थभेदात्तु द्वयोरुपादानं कृतम् । केचित्तु वर्णयन्ति—द्वयोरुपादानसामर्थ्याद् ग्लुञ्चेरनुनासिकलोपो न भवति—अग्लुञ्चदिति ॥**

**न्यासः**

**ग्लुचुग्लुञ्चवोरन्यतरोपादाने रूपत्रयं सिध्यतीति ।** कथं कृत्वा ? यदि तावद् ग्लुचिरुपादीयेत, तस्याङि सिचि चाग्लुचत्, अग्लोचीदित्येतद् रूपद्वयं सिध्यति; ग्लुञ्चेस्तु सिचि तृतीयमग्लुञ्चीदिति । अथ ग्लुञ्चिरुपादीयेत, तस्याङि सिचि चाग्लुचत्, अग्लुञ्चीदिति रूपद्वयं सिध्यति । ग्लुचेस्तु सिचि तृतीयमग्लोचीदिति । यद्येवम्, किमर्थमुभयोरुपादानम्, रूपत्रयं हि साध्यम्, तच्चान्यतरोपादानेऽपि सिध्यत्येवेत्यत आह—**अर्थभेदादित्यादि ।** तु-शब्दोऽवधारणे । भिन्नो ह्यनयोरर्थः । तत्रान्यतरस्योपादाने य एव नोपादीयेत तत्रैवार्थेऽग्लुचदिति न सिध्येत् । तस्माद् भिन्नार्थत्वाद् द्वयोरुपादानम् । **केचिदित्यादि ।** अनेकार्थत्वाद्धातूनामभिन्नार्थता न विरुद्धयते । तस्मादुभयोरुपादानमग्लुञ्चदित्यस्य सिद्धय इति ॥ ५८ ॥

**पदमञ्जरी**

दित्येतद् द्वयं सिद्धयति, ग्लुञ्चेस्तु सिचि तृतीयमग्लुञ्चीदिति । अथ ग्लुञ्चिरुपादीयते तस्याग्लुचत् अग्लुञ्चीदिति रूपद्वयं सिद्धयति, ग्लुचेस्तु सिचि तृतीयमग्लोचीदिति, किमर्थं तर्हि उभयोरुपादानमित्यत्राह—**अर्थभेदात्त्विति । केचिदित्यादि ।** इदं भाष्यविरुद्धम्; भाष्यकारो हि 'अनेकार्थत्वाद्धातूनामर्थभेदो न प्रयोजक उभयोपादानस्य' इत्यन्यतरोपादानं प्रत्याख्यातवान् ॥ ५८ ॥

**भावबोधिनी**

दोनों चोरी करना अर्थ में है। 'ग्लुचु' तथा 'षस्ज' ये गमन अर्थ में हैं। 'टु ओ श्वि'—यह गति और बढ़ना अर्थों में है—'इन धातुओं से परे च्लि का 'अङ्' आदेश विकल्प से होता है। उदा०—अजरत्, अजारीत् । [ जॄष् 'ष्' की इत्संज्ञा लोप – जॄ + लुङ् तिप्, अट्, च्लि का विकल्प से अङ्—अ जॄ अ + ति "ऋदृशोऽङि गुणः" से ऋ का गुण, रपर—अजर् अ ति, इलोप करने पर—अजरत् । अङ् न होने पर सिच् स् अ जॄ + स् + त्, इट् और ईट् का आगम, सिच् को मान कर "सिचि वृद्धिः परस्मैपदेषु" से ऋ की वृद्धि, रपर, सिच् लोप, सवर्णदीर्घ—अजार् ईत्, । ] स्तम्भु—से 'अस्तभत्, अस्तम्भीत् । [ स्तम्भु + लुङ् = तिप्, अट् च्लि का अङ्-अस्तम्भ् + अ + ति, "अनिदितां हल उपधायाः क्ङिति" ( पा० सू० ६.४.२४ ) से -म्' का लोप—अस्तभत् । पक्ष में सिच् इट्, ईट्, सिच्लोप, सवर्णदीर्घ—अस्तम्भीत् । ] अम्रुचत् अम्रोचीत् । अम्लुचत्, अम्लोचीत् । अग्रुचत्, अग्रोचीत् । अग्रुचत्, अग्रोचीत्, अग्लुचत्, अग्लोचीत् । अग्लुञ्चत्, अग्लुञ्चीत् । [ इन सभी में प्रथम रूप 'अङ्' आदेश का है। पक्ष में सिच्, इट्, ईट सिच् लुक् सवर्णदीर्घ करने पर दूसरा रूप बनता है । ] 'श्वि'—के अश्वत्, अश्वयीत्, अशिश्वियत्—ये तीन रूप होते हैं। [ प्रथम में च्लि का अङ् हुआ है, दूसरे में 'सिच्' हुआ है और तीसरे में "विभाषा धेट्श्व्योः" ( पा. सू. ३.१.४९ ) इस पूर्व सूत्र से 'चङ्' हुआ है। इसी सूत्र की व्याख्या में इन तीनों की प्रक्रिया देखिये । ]

ग्लुचु तथा ग्लुञ्चु—इनमें से किसी एक के उल्लेख से तीन रूप ( एक अङ् का और दो सिच् के रूप ) सिद्ध हो सकते हैं, परन्तु दोनों धातुओं के अर्थ में भेद होने के कारण दोनों का उपादान किया गया है। कुछ लोग यह व्याख्या करते हैं—दोनों का उपादान करने के सामर्थ्य ( अङ् आदेश में भी ) 'ग्लुञ्च' के अनुनासिक का लोप नहीं होता है—अग्लुञ्चत् । [ जब कि सामान्यतया अनुनासिक लोप होता है—अग्लुचत् बनता है। अतः पृथक् पाठ सप्रयोजन है ] ॥ ५८ ॥

**६७८. कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥ (३४०६)**

**कृ, मृ, दृ, रुहि–इत्येतेभ्यः परस्य च्लेश्छन्दसि विषयेऽङादेशो भवति। शकलाङ्गुष्ठकोऽकरत्। अथोऽमरत्। अदरदर्थान्। सानुमारुहत् ( ऋ० १.१०२ )। अन्तरिक्षाद्दिवमारुहम् ( अथर्व० ४.१४.३ )।**

**छन्दसीति किम्? अकार्षीत्। अमृत। अदारीत्। अरुक्षत्॥**

**६७९. चिण् ते पदः ॥ ६० ॥ (२५१३)**

**'पद गतौ' ( धा० पा० ११७० )–अस्माद्धातोः परस्य च्लेश्चिणादेशो भवति तशब्दे परतः। सामर्थ्यादात्मनेपदैकवचनं गृह्यते—उदपादि सस्यम्। समपादि भैक्षम्।**

**ते इति किम्? उदपत्साताम्। उदपत्सत॥**

**न्यासः**

**कृमृदृरुहिभ्यश्छन्दसि** ॥ 'डुकृञ् करणे', 'मृङ् प्राणत्यागे', 'दॄ विदारणे' 'रुह जन्मनि'। तत्राद्यानां त्रयाणां सिचि प्राप्ते, रुहेश्च 'शल इगुपधादनिटः' इति क्से प्राप्ते। **अकरदिति**। पूर्ववद् गुणः। **अमरदिति**। व्यत्ययेन परस्मैपदम्। भाषायां तु अकार्षीत, अमृत, अदारीत्, अरुक्षदिति भवति ॥ ५९ ॥

**चिण् ते पदः** ॥ **सामर्थ्यादित्यादि**। तशब्दोऽयमस्त्येवात्मनेपदैकवचनम्, अस्ति च परस्मैपदमध्यमपुरुषबहुवचनं यस्थस्य स्थाने विधीयते; तत्रास्य धातोरात्मनेपदित्वात् परस्मैपदबहुवचनं न सम्भवति, अतः पारिशेष्यादात्मनेपदैकवचनस्य ग्रहणम्। इयमेव च पारिशेष्यसिद्धिः सामर्थ्यम्। **उदपादीति**। 'णिचो लुक्' इति

**पदमञ्जरी**

**कृमृदृरुहिभ्यश्छन्दसि** ॥ **अमरदिति**। व्यत्ययेन परस्मैपदम् ॥ ५९ ॥

**चिण् ते पदः** ॥ **सामर्थ्यादिति**। धातोरात्मनेपदित्वात्परस्मैपदबहुवचनस्य स्थाने यस्तशब्दः 'तस्थस्थमिपाम्' इति विहितः, तस्यास्मिन्विषयेऽसम्भवः। **सामर्थ्यादुदपादीति**। 'चिणो लुक्' **उदपत्सतेति**। 'आत्मनेपदेष्वनतः' इत्यदादेशः। इह वेति निवृत्तम्; उत्तरत्रान्यतरस्यां ग्रहणात् ॥ ६० ॥

**भावबोधिनी**

कृ, मृ, दृ तथा रुह—इन चार धातुओं से परे च्लि का अङ आदेश वेद-विषय में होता है। उदा०—शकलाङ्गुष्ठकोऽकरत्। अथोऽमरत्। अदरदथान्। पर्वतम् आरुहत्। अन्तरिक्षाद् दिवम् आरुहम्। [ कृ + लुङ् – तिप्, अट्, च्लि का अङ्, ऋ का गुण, रपर—अ कर् अ + ति, इ का लोप, –अकरत्। मृ + लुङ्, दृ + लुङ् में सारी प्रक्रिया पूर्ववत् होती है। आङ रुह् + लुङ् तिप्, तथा मिप् के रूप है। अङ् के ङित् होने से 'उ' का गुण नहीं होता है। ]

वेदविषय में—इसका क्या लाभ है? अकार्षीत् [ लोक में च्लि का सिच् होता है—अ कृ + स् + त्, 'इ' का लोप, ईट् आगम, ऋ की वृद्धि रपर, स् का ष्—अकार ष् ई त। ] अमृत। [ मृ + लुङ् अट् 'सिच्' 'ह्रस्वादङ्गात्'' से सिच् का लुक्—अमृत। ] अदारीत्। [ दृ + लुङ् = ति, अट्, सिच्, इट, इलोप, ईट्—अदृ + इ स् ई त्, सिच्लोप, सवर्णदीर्घ, ऋ की वृद्धि, रपर,=अदार् ईत्। ] अरुक्षत्। [ रुह + लुङ्, तिप् अट् च्लि का ''शल इगुपधादनिटः क्सः'' के क्स=स आदेश अरुह + स + त्, ह् का ढ् ढ का क्, स का ष अरुक् ष + त्, क् + ष्=क्ष्—अरुक्षत्। ] ॥ ५९ ॥

'पद' धातु गति अर्थ में है, इससे परे च्लि का चिण् आदेश होता है 'त' परे रहते। [ पद धातु आत्मनेपदी है। ] इस सामर्थ्य से प्रथमपुरुष एकवचन 'त' लिया जाता है। [ मध्यम पुरुष बहुवचन 'थ' का आदेशभूत 'त' नहीं। ] उदा०—उदपादि सस्यम्। समपादि भैक्षम्। [ उत् उपसर्ग + पद + लुङ्=त, अट्, च्लि का चिण्=इ आदेश—उत् अ पद् + इ + त, ''अत उपधायाः'' सूत्र से उपधा की वृद्धि, ''चिणो लुक्'' सूत्र से 'त' का लुक, उपसर्ग के त् का जश्त्व द्—उद् अ पाद् इ = उदपादि। 'सम्' उपसर्ग के साथ—सम् अपादि। ]

६८०. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६१ ॥ (२३२८)

**'चिण् ते' इति वर्तते। 'दीपी दीप्तौ' ( धा० पा० ११५१ ), 'जनी प्रादुर्भावे' ( धा० पा० ११५० ), बुध अवगमने' ( धा० पा० ११७३ ), 'पूरी आप्यायने' ( धा० पा० ११५२ ), 'तायृ सन्तानपालनयोः' ( धा० पा० ४८९ ), 'ओप्यायी वृद्धौ' ( धा० पा० ४८८ ) इत्येतेभ्यः परस्य च्लेस्तशब्दे परतोऽन्यतरस्यां चिणादेशो भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट॥**

**न्यासः**

तशब्दस्य लुक्। **उदपत्साताममिति**। आताम्, 'खरि च' इति चर्त्वम्। **उदपत्सतेति**। झे 'आत्मनेपदेष्वनतः' इत्यदादेशः। इह वेति निवृत्तम्; उत्तरत्रान्यतरस्यांग्रहणात्॥ ६०॥

**दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्**॥ 'जनी प्रादुर्भावे', 'बुध अवगमने' इति। एतेन 'जन जनने' 'बुध बोधने' इत्यनयोः परस्मैपदिनोरिहाग्रहणमिति दर्शयति। दीप्यादिभिरात्मनेपदिभिः साहचर्याज्जनिबुध्योरात्मनेपदिनोरेव ग्रहणं न्याय्यमित्यर्थाभिप्रायः। **अजनीति**। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। **अबोधीति**। लघूपधगुणः। **अबुद्धेति**। पूर्ववत् सिचो लोपः, 'झषस्तथोर्धोऽधः' इति धकारः, 'झलां जश् झशि' इति धातुधकारस्य दकारः, सर्वत्रानुदात्तेत्त्वादात्मनेपदम्। इह 'णिश्रि' इत्यादेः सूत्रात् कर्त्तरीत्यनुवृत्तेः कर्त्तर्येव विभाषा। भावकर्मणोस्तु 'चिण् भावकर्मणोः' इति नित्यमेव चिण् भवति॥ ६१॥

**पदमञ्जरी**

**दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्॥ जनी प्रादुर्भावे, बुध अवगमने इति**। 'जन जनने' ( धा० पा० ११०५ ) बुध बोधने' ( धा० पा० ८५८ ) इत्येतयोस्तु परस्मैपदिनोरिह ग्रहणं न भवति; दीप्यादिभिरात्मनेपदिभिः साहचर्यात्। तेन परस्मैपदिभ्यां कर्मव्यतिहारे आत्मनेपदैकवचनेऽपि तशब्दे चिण् न भवति। यदि परस्मैपदिनोरिह ग्रहणं स्यात्, आत्मनेपदिनोर्न स्यात्; सानुबन्धकत्वात्। कर्तरि चायं विकल्पः, भावकर्मणोस्तु 'चिण् भावकर्मणोः' इति नित्यमेव चिण् भवति, परत्वादिह कर्तरीत्यनुवृत्तेर्वा॥ ६१॥

**भावबोधिनी**

'त' परे रहते चिण् होता है—इसका क्या फल है? उदपत्साताम्। उदपत्सत। [ यहाँ आताम् और झ प्रत्यय हैं। अतः चिण् न होकर सिच् होता है—उद् अपत् स् आताम्। झ का अत होता है—उद् अपत् स् अत। ]॥ ६०॥

'चिण् ते' [ 'त' परे रहते च्लि का चिण् होता है ]—इसकी अनुवृत्ति होती है। 'दीपी' यह दीप्ति=चमक अर्थ में है, 'जनी' यह प्रादुर्भाव=पैदा होना अर्थ में है, 'बुध' समझना अर्थ में है, 'पूरी' आप्यायन=पूरा करना अर्थ में है, 'तायृ' यह सन्तान=विस्तार करना और पालन करना अर्थों में है, 'ओ 'प्यायी' यह बढ़ना अर्थ में है,—इन धातुओं से परे 'च्लि' का चिण् आदेश विकल्प से हो जाता है यदि 'त' शब्द परे हो तो। [ चिण् के न होने पर सिच् होता है। अतः दो दो रूप होते हैं। ] उदा०—अदीपि, अदीपिष्ट। [ दीप्+लुङ्=त, अट्, च्लि का चिण्=इ, "चिणो लुक्" ( पा० सू० ६.४.१०४ ) से 'त' का लुक्—अदीप् इ। चिण् न होने पर सिच्—अदीप् स् त, इट्, षत्व, ष्टुत्व—अदीपिष्ट। आगे के रूपों में भी इसी प्रकार की प्रक्रिया है। ] अजनि, अजनिष्ट। [ चिण् करने पर "अत उपधायाः" से प्राप्त वृद्धि का निषेध "जनिवध्योश्च" ( पा० सू० ७.३,३५ ) से हो जाता है। ] अबोधि अबोधिष्ट। [ इसमें उपधा का गुण होता है। ] अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट।

**विमर्श**—यद्यपि 'जन जनने' 'बुध बोधने' ये परस्मैपदी धातुएँ हैं परन्तु दीपी' इस आत्मनेपदी के साहचर्य के कारण उक्त दोनों भी आत्मनेपदी ही लीं जातीं हैं।

एक बात और ध्यान देने की है यहाँ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इस पूर्ववर्ती सूत्र से 'कर्तरि' की अनुवृत्ति

## ६८१. अचः कर्मकर्त्तरि ॥ ६२ ॥ (२७६८)

**अजन्ताद्धातोः परस्य च्लेः कर्मकर्त्तरि तशब्दे परतश्चिणादेशो भवति । प्राप्तविभाषेयम् ( ३.१.८७ ) । अकारि कटः स्वयमेव, अकृत कटः स्वयमेव । अलावि केदारः स्वयमेव, अलविष्ट केदारः स्वमेव ।**

**अच इति किम् ? अभेदि काष्ठं स्वयमेव । कर्मकर्त्तरीति किम् ? अकारि कटो देवदत्तेन ॥**

**न्यासः**

**अचः कर्मकर्त्तरि ॥** कर्म चासौ कर्त्ता चेति कर्मकर्त्ता । यदा तदेव कर्म सौकर्यात् कर्तृत्वेन विवक्ष्यते तदा तस्य कर्तृत्वं भवति, एतच्च तशब्दस्य विशेषणम्—यस्तशब्द इति । **प्राप्तविभाषेयमिति** । कर्मवदित्यतिदेशाच्चिणादेशस्य प्राप्तत्वात् । **अकारीति** । 'अचो ञ्णिति' इति वृद्धिः । **अकृतेति** । 'ह्रस्वादङ्गात्' इति सिचो लोपः, तस्यासिद्धत्वाद् गुणः प्राप्तः 'उश्च' इति कित्त्वान्न भवति । **अभेदीति** । अत्रातिदेशान्नित्यमेव भवति । **अकारि कटो देवदत्तेनेति** । अत्र शुद्धे कर्मणि तशब्दः । तेन 'चिण् भावकर्मणोः' इति नित्यमेव चिण् भवति । एतच्च कर्त्तरीत्येतदिह निवृत्तमित्यपेक्ष्य प्रत्युदाहृतमिति वेदितव्यम् ॥ ६२ ॥

**पदमञ्जरी**

**अचः कर्मकर्त्तरि ॥ कर्मकर्त्तरीति** । यत्कर्म भूत्वा कर्त्ता भवति तत्रैत्यर्थः । **प्राप्तविभाषेयमिति** । 'कर्मवत्कर्मणा' इत्यतिदेशेन नित्यं चिणः प्राप्तेः । **अकारि कटो देवदत्तेनेति** । अत्र शुद्धे कर्मणि 'चिण् भावकर्मणोः' इति नित्यमेव चिण् भवति । नन्विह कर्त्तरीत्यनुवर्त्तिष्यते, यद्येवम्, शुद्धे कर्त्तरि स्यात्, कर्मणीति वाक्यभेदेन कर्ता विशेषयिष्यते—कर्मणि कर्तरीति ? नैतदेवं शक्यते लब्धुम्; कर्मणीत्युच्यमाने कर्तुर्निवृत्तिरेव स्यात्, चकारेऽपि क्रियमाणे कर्मणि च भवति कर्तरि च भवतीत्यधिकरणयोरेव समुच्चयः स्याद्, न सामानाधिकरण्ये प्रमाणमस्ति ॥ ६२ ॥

**भावबोधिनी**

होती है अतः प्रस्तुत सूत्र कर्तृवाच्य में ही विकल्प से चिण् करता है। अतः भाव और कर्म अर्थों में इन धातुओं से भी "चिण् भावकर्मणोः" ( पा० सू० ३.१.६६ ) यह सूत्र नित्य ही चिण् आदेश करता है। अतः एक ही रूप होता है ॥ ६१ ॥

अजन्त धातु से कर्मकर्ता में 'त' परे रहने पर 'च्लि' का चिण् आदेश होता है। [ "कर्मवत् कर्मणा तुल्यक्रियः" ( पा० सू० ३.१.८७ ) सूत्र के अनुसार कर्मवद्भाव का अतिदेश हो जाने से कर्मकर्तृ में 'चिण् भावकर्मणोः" सूत्र से चिण् प्राप्त रहते यह विकल्प किया जा रहा है। अतः ] प्राप्त-विभाषा है। [ काशिकाकार ने यहाँ 'अन्यतरस्याम्' की अनुवृत्ति का उल्लेख नहीं किया है। परन्तु 'प्राप्तविभाषेयम्' कह कर इसी को सूचित किया है। ] उदा—अकारि कटः स्वयमेव, अकृत कटः स्वयमेव। [ कृ+लुङ्, कर्मकर्तृ एकवचन ] अलावि [ लू+लुङ्, कर्मकर्तृ एकवचन ] केदारः स्वयमेव, अलविष्ट केदारः स्वयमेव।

अजन्त धातु से परे—इसका क्या प्रयोजन है ? अभेदि काष्ठं स्वयमेव। [ लकड़ी अपने आप फट गयी। यहाँ भिद् यह अजन्त नहीं है। ] कर्मकर्ता अर्थ में—इसका क्या प्रयोजन है ? अकारि कटो देवदत्तेन। [ यह कर्मवाच्य है—देवदत्त द्वारा चटाई बनाई गयी। अतः यहाँ भी प्रस्तुत विकल्प नहीं होता है। नित्यचिण् होता है। ]

**विमर्श**—कर्म जब कर्ता बन जाता है तब 'कर्मकर्तृ' व्यवहार होता है। भाव यह है कि जब कहीं सौकर्यातिशय द्योतित करने के लिये कर्म को ही कर्तृरूपेण प्रयुक्त कर दिया जाता है वहाँ 'कर्मकर्तृ' माना जाता है। जैसे—देवदत्तः कटं करोति, किं देवदत्तः कटः करोति ? कटः स्वयमेव क्रियते अर्थात् देवदत्त चटाई बनाता है। देवदत्त क्या चटाई बनाता है, चटाई स्वयं बन जाती है—इस स्थिति में कर्मभूत चटाई को कर्ता बना दिया जाता है। इसमें 'कर्मवत् कर्मणा तुल्यक्रियः" (पा०सू० ३.१.८७) के आधार पर कर्मवद्भाव का अतिदेश कर दिया जाता है। अतः कर्म-

६८२. दुहश्च ॥ ६३ ॥ (२७६९)

'दुह प्रपूरणे' ( धा० पा० १०१५ ) अस्मात्परस्य च्लेश्चिणादेशो भवत्यन्यतरस्याम्। अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव। कर्मकर्त्तरीत्येव—अदोहि गौर्गोपालकेन ॥

६८३. न रुधः ॥ ६४ ॥ (२७७०)

'रुधिर् आवरणे' ( धा० पा० १४३९ ) अस्मात्परस्य च्लेः कर्मकर्त्तरि चिणादेशो न भवति। अन्ववारुद्ध गौः स्वयमेव। कर्मकर्त्तरीत्येव—अन्ववारोधि गौर्गोपालकेन ॥

न्यासः

दुहश्च॥ 'न दुहस्नुनमां यक्चिणौ' इति प्रतिषेधे प्राप्ते वचनम्। दुहिग्रहणं तत्र यक्प्रतिषेधार्थम्। अदुग्धेति। 'शल इगुपधादनिटः क्सः' इति क्सः, तस्य 'क्सस्याचि' इत्यतः 'क्सस्य' इत्यनुवर्त्तमाने 'लुग्वा दुहदिह' इति लुक्। दादेर्धातोर्घः', पूर्ववज्जश्त्वम्। अदोहीति। शुद्धे कर्मणि तशब्दः, तेनात्र नित्यं चिण् भवति ॥ ६३ ॥

न रुधः॥ कर्मवदित्यतिदेशे प्राप्तस्य चिणोऽयं प्रतिषेधः। अरुद्धेति। 'झलो झलि' इति सिचो लोपः, तस्यासिद्धत्वाल्लघूपधगुणः प्राप्तः 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न भवति। पूर्ववद् धत्वजश्त्वे ॥ ६४ ॥

पदमञ्जरी

दुहश्च ॥ अप्राप्तविभाषेयम् 'न दुहस्नुनमां यक्चिणौ' इति चिणः प्रतिषेधात्। तत्र दुहिग्रहणे यक्प्रतिषेधार्थं चिण्ग्रहणं स्वाद्यर्थम्। अदुग्धेति। 'क्सस्याचि' 'लुग्वा दुहदिह' इति क्सस्य लुक् ॥ ६३ ॥

न रुधः ॥ रुधिर आवरणे इति। 'अनो रुध कामे' ( धा० पा० ११७४ ) इत्यस्य तु ग्रहणं न भवति, कर्तृस्थभावकत्वेन कर्मकर्तुरभावात् ॥ ६४ ॥

भावबोधिनी

वाच्य के सारे कार्य कर्मकर्तृ में भी किये जाते हैं। अतः लुङ् में च्लि का चिण् "चिण् भावकर्मणोः" यह नित्य करता है। इसी में अजन्त धातु से वैकल्पिक चिण् किया जा रहा है। अतः एक चिण् का और दूसरा सिच् का रूप होता है--कृ+लुङ्=त, अट्, च्लि का चिण्=इ, वृद्धि, रपर, तलोप--अकारि। कृ+लुङ् = त, अट् सिच्--अ कृ+स्+त, "ह्रस्वादङ्गात्" से सिच् लुक्--अकृत। इसी प्रकार अन्यत्र समझना चाहिये ॥ ६२ ॥

'दुह' प्रपूरण = पूरा करना=दुहना अर्थ में है, इससे परे च्लि का चिण् आदेश विकल्प से होता है। उदा०--अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव। कर्मकर्ता में ही विकल्प से चिण् होता है—अदोहि गौः गोपालकेन। [ इस कर्मवाच्य में नित्य चिण् होने से एकही रूप बनता है। ] दुह् + लुङ्=त, अट्, च्लि का चिण=इ, उपधा का गुण 'त' का लुक्--अ दोह् इ। चिण् न होने पर "शल इगुपधादनिटः क्सः" ( पा० सू० ३.१.४५ ) से च्लि का 'क्स'—अदुह्+क्स + त, "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" ( पा० सू० ७.३.७ ) से 'क्स' का विकल्प से लुक्--अदुह्+त, "दादेर्धातोर्घः" से 'ह' का घ, अदुघ + त, 'त' का 'ध' और 'घ' का जश्त्व 'ग्'--अदुग्ध। ] ॥ ६३ ॥

'रुधिर्' यह आवरण अर्थ में है, इससे परे च्लि का चिण् नहीं होता है कर्मकर्ता में। उदा०—अन्ववारुद्ध गौः स्वयमेव। [ गाय स्वयं रुक गयी। ] कर्मकर्ता में ही यह निषेध होता है, अतः--अन्ववारोधि गौः गोपालकेन। [ गोपालक द्वारा गाय रोकी गयी। यहाँ चिण् होता है। अनु अव + अट् + रुध् + लुङ्=त, चिण् निषेध होने पर च्लि का सिच् और "झलो झलि" सूत्र से उसका लुक् हो जाने पर अनु अव अ रुध् + त, यण् सवर्णदीर्घ, धत्व और जश्त्व करने पर--अन्ववारुद्ध। किन्तु चिण् होने पर अन्ववारुध् + चिण् + त, तलोप, उपधा का गुण होने पर—अन्ववारोध् + इ, बनता है। ] ॥ ६४ ॥

६८४. तपोऽनुतापे च ॥ ६५ ॥ (२७६०)

**'न' इति वर्त्तते। 'तप संतापे' ( धा० पा० ९८६ )—अस्मात्परस्य च्लेश्चिणादेशो न भवति कर्मकर्त्तर्यनुतापे च। अनुतापः=पश्चात्तापः, तस्य ग्रहणमकर्मकार्थम्, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति। अतप्त तपस्तापसः। अन्ववातप्त पापेन कर्मणा ॥**

६८५. चिण् भावकर्मणोः ॥ ६६ ॥ (२७५८)

**धातोः परस्य च्लेश्चिणादेशो भवति भावे कर्मणि तशब्दे परतः। भावे तावत्—अशायि भवता।**

**न्यासः**

**तपोऽनुतापे च** ॥ 'तपस्तपः कर्मकस्यैव' इत्यतिदेशात् 'चिण् भावकर्मणोः' इति प्राप्तस्य चिणोऽयं प्रतिषेधः। **अतप्त तपस्तापस इति।** उपवासादिलक्षणं तपस्तापसं तपति=दुःखयतीत्यर्थः। तपसोऽत्र कर्तृत्वम्, तापसस्य तु कर्मत्वम्। यदा तु स तापसस्त्वगस्थीभूतः स्वर्गाय तपस्तप्यते, तदायं प्रयोगः—अतप्त तपस्तापस इति। इदानीं तपसः कर्मत्वं तापसस्य कर्तृत्वम्। तपःशब्दश्चेह ज्ञानविशेषे स्वर्गाद्यवाप्तिहेतौ वर्त्तते। तपिरप्यर्जने। अर्जितवान् ज्ञानविशेषं तापस इत्यर्थः। **अन्ववातप्त पापेन कर्मणेति।** यत् पूर्वं पापकर्म कृतं तेन पश्चात् तप्तोऽभ्याहत इत्यर्थः। कर्मण्यत्र लकारः ॥ ६५ ॥

**चिण् भावकर्मणोः** ॥ भावकर्मणोरर्थयोरिति। तशब्दस्येदं विशेषणम्। **भावकर्मणोर्यस्तशब्द इति।** अथ चिण्ग्रहणं किमर्थम्, यावता 'चिण् ते पदः' इत्यतश्चिण्ग्रहणमनुवर्त्तत एव? स्यादेतत्—'दीपजन' इत्यन्यत-

**पदमञ्जरी**

**तपोऽनुतापे च ॥ कर्मकर्तरीति।** 'तपस्तपःकर्मकस्यैव' इति यत्र कर्मवद्भावो विहितः। **तत्र भावकर्मणोरपीति।** अपिशब्दात् 'कर्मवत्कर्मणा' इति यत्र कर्मवद्भावोऽतिदिष्टस्तत्रापि भवति। **अतप्त तपस्तापस इति।** अस्यार्थम् 'तपस्तपःकर्मकस्यैव' इत्यत्र **वृत्तिकार** एव वक्ष्यति। **अन्ववातप्त पापेनेति।** पापेनेति पूर्वं यत्पापं कर्म कृतं तेन पश्चात्तप्तोऽभ्याहत इत्यर्थः। शुद्धे कर्मणि लकारः, पापेनेति कर्त्तरि तृतीया। कर्माविवक्षायान्तु शोकार्थे वा तपौ भावे लकारः, पापेनेति हेतौ तृतीया। यदाभ्याहननार्थस्य तपेः कर्मस्थभावस्य कर्मकर्त्ता विवक्ष्यते, तदा कर्मवत्कर्मणेत्यतिदेशादात्मनेपदम्, तदापि हेतौ तृतीया ॥ ६५ ॥

**चिण् भावकर्मणोः। चिण्ग्रहणं विस्पष्टार्थमिति।** 'चिण् ते पदः' इत्यतस्तेशब्दवदनुवृत्तेः। यत्तु दीपजनेत्यादावन्यतरस्यांग्रहणम्, तन्न; 'रुध' इति तत्प्रतिषेधविधावेव निवृत्तम्, अन्यथा प्रतिषेधविधानमनर्थकं

**भावबोधिनी**

'न' इसकी अनुवृत्ति होती है। 'तप' यह सन्ताप=गरम करना अर्थ में है, इससे परे 'च्लि' का चिण् आदेश नहीं होता है, कर्मकर्ता में और अनुताप में। अनुताप=पश्चात्ताप—इसका ग्रहण अकर्मकार्थ के लिये है क्योंकि अनुताप में भाव तथा कर्म में भी चिण् का प्रतिषेध होता है। उदा० अतप्त तपः तापसः। [ उपवासादिरूप तप तापस को दुःख देता है। यहाँ 'तपः' कर्ता है, 'तापस' कर्म है, जब तापस अपनी हड्डियों और चमड़ी के रूप में शेष रह जाता है और स्वर्गादि के लिये तपस्या करता है तब इस प्रकार का प्रयोग किया जाता है। इस दशा में 'तपः' कर्म होता है और 'तापस' कर्ता। यहाँ 'तपः' शब्द स्वर्गादि-प्राप्तिहेतुभूत ज्ञान विशेष अर्थ में है। 'तप्' धातु 'अर्जन' अर्थ में है। इस प्रकार काशिकास्थित वाक्य का यह अर्थ है—तापस ने ज्ञानविशेष अर्जित किया। तप् + लुङ् = त, अट्, चिण् का निषेध होने पर सिच् —अ तप् स् + त, "झलो झलि" सूत्र से सिच् का लुक्। ] अनुताप का उदा० अन्वतप्त पापेन कर्मणा। [ जो पापकर्म पहले किया उससे बाद में तप्त = पश्चात्तापयुक्त हुआ। यहाँ कर्म अर्थ में लकार हुआ है। इसका और विचार आगे ३.३.८८ पर भी किया जायगा। ] ॥ ६५ ॥

धातु से परे 'च्लि' का चिण् आदेश होता है, भाव और कर्म में होने वाले 'त' के परे रहते। भाव में 'त' का उदा० अशायि भवता। [ आप सोये। शीङ् + लुङ् भाव अर्थ में 'त', अट्, च्लि और इसका चिण्—अ शी +

**कर्मणि खल्वपि... अकारि कटो देवदत्तेन । अहारि भारो यज्ञदत्तेन । चिण्ग्रहणं विस्पष्टार्थम् ॥**

**६८६. सार्वधातुके यक् ॥ ६७ ॥ (२७५६)**

**भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् प्रत्ययो भवति । आस्यते भवता । शय्यते भवता । कर्मणि— क्रियते कटः । गम्यते ग्रामः ।**

**न्यासः**

रस्यांग्रहणेन 'न रुधः' इति निषेधेन च सम्बद्धं तत्, अतो यदि तदनुवर्त्तेत तत्सम्बद्धमेवानुवर्त्तेतेति, एतच्च नास्ति; अन्यतरस्यांग्रहणस्य पूर्वयोरेव योगयोर्निवर्त्तितत्वात्, प्राप्तिपूर्वकत्वाच्च निषेधस्य । यदि भावकर्मणो-श्चिणः प्राप्तिः स्यात्, तदा तत्प्रतिषेधार्थं नेत्यास्यानुवृत्तिः स्यात् । न च तयोस्तस्य केनचित् प्राप्तिः; चिण्विधौ सर्वत्र कर्त्तरीत्यनुवृत्तेः । तदपार्थकम् पुनश्चिण्ग्रहणमित्याह—**चिण्ग्रहणं विस्पष्टार्थमिति** । असति चिण्ग्रहणे मन्दधियः प्रतिपत्तिगौरवं स्यात्, अतस्तमनुग्रहीतुं न्यायप्राप्तस्यैवार्थस्य स्पष्टीकरणाय पुनश्चिण्ग्रहणम् ॥ ६६ ॥

**सार्वधातुके यक् ॥** भावकर्मणोरित्यनुवर्त्तते, तच्चेह सार्वधातुकस्य विशेषणमिति दर्शयन्नाह—**भावकर्मवाचिनीत्यादि** । भावकर्मणोरर्थयोर्वर्त्तते यत् सार्वधातुकं तद् भावकर्मवाचि । ताच्छील्य आवश्यके णिनिः । अथैवं कस्मान्न भवति—भावकर्मणोरभिधेययोः सार्वधातुके परतो यग् भवतीति ? अशक्यमेवं वक्तुम्; सार्वधातुकवाच्यत्वेन भावकर्मणोः शास्त्रे प्रतिज्ञानात् । कुत एतदिति चेत् ? 'लः कर्मणि च भावे

**पदमञ्जरी**

स्यात् । न च प्रतिषेधस्यानुवृत्तिशङ्का, प्राप्तिपूर्वको हि प्रतिषेधः । न च भावकर्मणोः केनचिच्चिणः प्राप्तिरस्ति ॥ ६६ ॥

**सार्वधातुके यक् ॥** इहाशिषि लिङि लिटि चान्तरेणापि विकरणं सर्वेष्वेव धातुषु तिङामेव सद्भावे भावकर्मकर्त्तारस्त्रयोऽपि प्रतीयन्ते—भविषीष्ट त्वया, कृषीष्ट घटः, भूयात्, क्रियात्, बभूवे, चक्रे घटः, बभूव, चकारेति । अत्तिजुहोत्यादौ कर्त्ता ।

क्वचित्तिङामभावेऽपि प्रतीयन्ते त्रयोऽप्यमी ।
अशाय्यकारि गच्छेति चिणः सन्निधिमात्रतः ॥
अधोगबिभरित्यादौ धातुमात्रेऽपि कर्तृधीः ।
तथा व्यतिस इत्यादौ धात्वभावेऽपि कर्तृधीः ॥

एवं स्थिते भूयोविषयाभ्यामन्वयव्यतिरेकाभ्यां शब्दार्थावसायः । व्यभिचारभूमिषु तु तस्मिंस्तस्मिन्विषये तस्य तस्य शब्दस्य स स महिमेति कल्पयितुमुचितम् । न पुनः क्वचिद्व्यभिचारदर्शनेन सर्वत्रानाश्वासः । तादृशौ

**भावबोधिनी**

इ+त, 'ई' की वृद्धि, आय् आदेश, ''चिणो लुक्'' से 'त' का लुक्—अ श् आय् इ+अशायि । ] कर्म अर्थ में चिण् का उदा०—अकारि कटो देवदत्तेन [ देवदत्त ने चटाई बनाई । ] अहारि भारो यज्ञदत्तेन । [ यज्ञदत्त ने बोझा ढोया । कृ+लुङ् कर्म में 'त', अट्, च्लि का चिण् अकृ+इ+त, ऋ की वृद्धि, रपर—अकारि+त, त का लुक् । हृ+लुङ् शेष पूर्ववत् । ''चिण् ते पदः'' इस सूत्र से चिण् की अनुवृत्ति मान कर निर्वाह सम्भव था, पुनः चिण् के ग्रहण का क्या प्रयोजन ? चिण् ग्रहण साधारण लोगों को शीघ्र समझने के लिये है । [ चूंकि बीच में 'विकल्प' और 'निषेध' आदि का उल्लेख हुआ है । अतः भ्रम संभव है । वह न हो, इसके लिये पुनः 'चिण्' का ग्रहण है । ] ॥ ६६ ॥

भाववाची तथा कर्मवाची सार्वधातुक प्रत्यय परे रहते धातु से 'यक्' प्रत्यय होता है । उदा० आस्यते भवता । शय्यते भवता । [ आप के द्वारा बैठा जाता है । आप के द्वारा सोया जाता है । आस्+लट्, भाव में त, प्रस्तुत सूत्र से यक्=य—आस् य त, ''टित आत्मनेपदानां टेरे'' सूत्र से टि का ए—आस्यते । शी+य+त, ''अयङ् यि क्ङिति', से 'ई' का अयङ्—श् अय् यत, टि का एत्व—शय्यते । ] कर्म में उदा०—क्रियते कटः । गम्यते ग्रामः । [ चटाई बनाई जाती है । गाँव जाया जाता है । कृ+लट्=त, यक्, ''रिङ् श यग्लिङ्क्षु'' ( पा. सू. ७.४.८८ ) से 'ऋ' का 'रिङ्'

**ककारो गुणवृद्धिप्रतिषेधार्थः । यग्विधाने कर्मकर्तर्युपसंख्यानम् । विप्रतिषेधाद्धिः यकः शपो बलीयस्त्वम् । क्रियते कटः स्वयमेव । पच्यते ओदनः स्वयमेव ॥**

**न्यासः**

चाकर्मकेभ्यः' इति वचनात् । ननु चाकारि कटो भवता, अशायि भवता, अबिभर्भवानित्यादौ सार्वधातुकाभावेऽपि कर्मादीनां प्रतीयमानत्वात् सार्वधातुकार्थता नोपपद्यते, न हि यो यदभावे प्रतीयते स तस्यार्थो युज्यते, अन्वव्यतिरेकसमधिगम्यत्वादर्थस्य ? नैष दोषः, न ह्ययं नियमः—अन्वयव्यतिरेकसमधिगम्यत्वादर्थवत्तया भवितव्यमिति, किं तर्हि ? प्रतिज्ञा । प्रापिता च सा भवति यथा क्विबादीनाम् । अस्ति च सार्वधातुकस्येति यत्किञ्चिदेतत् । **शय्यत इति** । 'अयङ् यि क्ङिति' इति इत्ययङादेशः ।

**यग्विधान इत्यादि** । ननु च कर्मवदित्यतिदेशादेव यग् भविष्यतीति किमुपसंख्यानेनेत्यत आह—**विप्रतिषेधाद्धीत्यादि** । 'कर्त्तरि शप्' इत्यस्यावकाशः—शुद्धः कर्त्ता, भवतीति; 'सार्वधातुके यक्' इत्यस्यावकाशः-शुद्धं कर्म, पच्यत ओदन इति; पच्यत ओदनः स्वयमेवेत्यत्र कर्मवद्भावाद् यक् प्राप्नोति, वत्करणात् स्वाश्रयमपि यथा स्यादिति कर्तृत्वस्य सम्भावाच्छबपि, तत्र परत्वाच्छबेव स्यात् । शप्शास्त्रं यक्शास्त्रात् परं

**पदमञ्जरी**

चान्वयव्यतिरेकौ तिङामेवेति तेषामेव भावकर्मकर्त्तारो वाच्याः । **सूत्रकारोऽप्याह**—'लः कर्मणि च भावे चाकर्मकेभ्यः' इति, लादेशाश्च तिङः, ततोऽपि तेषामेव तेऽर्था इति मन्यमान आह—**भावकर्मवाचिनि सार्वधातुके परत इति** । उत्तरसूत्रे च कर्तृवाचिनि सार्वधातुके परत इति । **शय्यत इति** । 'अयङ् यि क्ङिति' । अथ यदा द्वौ कर्त्तारौ बहवो वा, तदा कथमास्यते भवद्भ्याम्, आस्यते भवद्भिः द्विवचनबहुवचने कस्मान्न भवतः ? भावे भेदाभावाद् । धात्वर्थो हि भावः ।

कर्तृभेदेऽपि नावश्यं धात्वर्थो भिद्यते यतः ।
एकामेव क्रियाव्यक्तिं बहुषूत्पादयत्स्वपि ॥
दृष्टमेते पचन्तीति कर्मभेदोऽपि तादृशः ।
पश्यैकस्यां क्रियाव्यक्तौ पच्यन्ते तण्डुला इति ॥
न कालभेदे शब्दैक्यमास्यासिष्यत आस्यते ।
पाकौ पाका इति त्वत्र शब्दैक्यादेकशेषता ॥

अतश्च—

निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते ।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ॥ ( वा० प० २.४५० ) इति ।

**भावबोधिनी**

आदेश—क् रि य + त, टि का एत्व - क्रियते । गम् यत—'अ' का ए—गम्यते । ] यक् का ककार गुण और वृद्धि के प्रतिषेध के लिये है । यक् के विधान में कर्मकर्तृ में भी उपसंख्यान करना चाहिये । [ कर्मकर्तृ में तो कर्मवद्भाव के अतिदेश से ही यक् आदि कार्य सम्भव हैं इस वचन की क्या आवश्यकता ? इस का उत्तर दे रहे हैं—] विप्रतिषेध के कारण यक् से शप् बलवत्तर होता है । उदा० क्रियते कटः स्वययेव । [ चटाई अपने आप बन जाती है । ] पच्यते ओदनः स्वयमेव । [ भात अपने आप पक जाता है । ]

**विमर्श**—प्रस्तुत सूत्र पर भाष्य में यह वार्त्तिक पठित है—"भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम्" इसके आगे दूसरा वार्त्तिक है—"विप्रतिषेधाद्धि शपो बलीयस्त्वम् ।" यहाँ का भाव यह है कि "कर्तरि शप्" ३.१.६८ इस सूत्र की प्रवृत्ति का अवसर शुद्ध कर्ता है—भवति । "सार्वधातुके यक्" ३.१.६७ इसकी प्रवृत्ति का अवसर शुद्ध कर्म है—

**६८७. कर्त्तरि शप् ॥ ६८ ॥ (२१६७)**

**कर्तृवाचिनि सार्वधातुके परतो धातोः शप्प्रत्ययो भवति। पकारः स्वरार्थः (३.१.४), शकारः सार्वधातुकसंज्ञार्थः (३.४.११३)। भवति। पचति ॥**

**न्यासः**

भवति, तस्मात् कर्मकर्त्तरि यक उपसंख्यानम् = प्रतिपादनं कर्त्तव्यम्। प्रतिपादनं त्विदम्—ज्ञापकात् कर्मकर्त्तर्यपि यग्भविष्यतीति। किं तज्ज्ञापकम्? न दुहस्नुनमां यक्चिणौ' इति प्रतिषेधः। यदि हि कर्मकर्त्तरि यग्न स्यात् प्रतिषेधोऽनर्थकः स्यात्। विप्रतिषेधाद्धि शपो बलीयस्त्वं शास्त्रातिदेशत्वमभ्युपेत्योक्तम्, न त्वसौ शास्त्रातिदेशः, किं तर्हि? कार्यातिदेशः। कार्यातिदेशसूत्रमेव स्वतन्त्रं यगादेः कार्यस्य विधायकम्, तच्च परम्; अतो विप्रतिषेधाद् यक एव बलीयस्त्वम् ॥ ६७ ॥

**कर्त्तरि शप् ॥ पकारः स्वरार्थ इति।** 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वं यथा स्यात्। **शकारः सार्वधातु-**

**पदमञ्जरी**

तदेवमाख्यातेन भावस्वरूपगतो भेदः प्रतीयत इति द्विवचनबहुवचनाभावः। यत्र तु स्वरूपगत एव भेदस्तत्र भवत्येव, यथा—उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते इति। उष्ट्राणां ह्यासिका स्वत एव विलक्षणाः, हताश्च नानाप्रकारं शेरते उत्ताना अवताना विकीर्णकशा विस्रस्तवस्त्रा इति तत्साम्यादाख्यातवाच्यस्यापि भावस्य स्वरूपगतभेदावभासाद् बहुवचनम्। इवशब्दप्रयोगमन्तरेणापि चेवार्थावगतिर्भवति, तदयमर्थः—यादृशानि हतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्त इति। केचित्त्वत्र कर्मणि लकारमिच्छन्ति, उष्ट्रासिकाहतशायिकालक्षणस्य भावस्य 'कालभावाध्वगन्तव्याः' ( वा० प० ३.७.६७ ) इति कर्मत्वात्, यथा—गोदोहः सुप्यते इति।

**ककारो गुणवृद्धिप्रतिषेधार्थ इति।** मृज्यत इत्यत्र वृद्धिप्रतिषेधः। **यग्विधान इति।** ननु च 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यतिदेशादेव यक् सिद्धः, किमुपसङ्ख्यानेन तत्राह—**विप्रतिषेधाद्धीति।** यदा 'कर्मवत्कर्मणा' इत्ययं शास्त्रातिदेशः, तदा तेन तेन शास्त्रेण कर्मकार्याणि भवन्ति। तत्र कर्मणि यग्भवतीत्यस्यावकाशः—शुद्धं कर्म, पच्यते ओदन इति; कर्त्तरि शबित्यस्यावकाशः—शुद्धः कर्त्ता, भवति, पचतीति; कर्मकर्त्तर्युभयप्रसङ्गे परत्वाच्छबेव स्यादित्यर्थः। तर्त्हि उपसङ्ख्यानं कर्तव्यम्? न कर्तव्यम्; 'न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधो ज्ञापयति—भवति कर्मकर्त्तरि यगिति। कार्यातिदेशे तु तस्मिंस्तेनैव सूत्रेण भवन्यगेव परो भवति ॥ ६७ ॥

**कर्त्तरि शप् ॥ पकारः स्वरार्थ इति।** उपलक्षणमेतत्, ङित्त्वप्रतिषेधार्थः, 'शप्श्यनोर्नित्यम्' इति विशेषणार्थश्च। **शकारः सार्वधातुकार्थ इति।** सञ्ज्ञापरोऽत्र सार्वधातुकशब्दो न सञ्ज्ञिपरः, सार्वधातुकसञ्ज्ञार्थ इत्यर्थः।

**भावबोधिनी**

रामेण ओदनः पच्यते। अब 'पच्यते ओदनः स्वयमेव' यहाँ "कर्मवत् कर्मणा तुल्यक्रियः" ( पा. सू. ३.१.८७ ) से कर्मवद्भाव का अतिदेश है अतः 'यक्' प्राप्त होता है और 'वत्' करने के कारण कर्तृ-आश्रयक कार्य भी हो, इस लिये शप् भी प्राप्त है। इन दोनों में 'परवर्त्ती' होने से शप् ही होने लगेगा, यक् नहीं हो सकेगा। इस लिये कर्मकर्ता में यक् का अलग से उपसंख्यान आवश्यक है।

वास्तव में इस वचन की आवश्यकता नहीं है क्योंकि "न दुहस्नुनमां यक्चिणौ" ( पा. सू. ३.१.८९ ) यह कर्मकर्ता में यक् चिण् का प्रतिषेध करता है. यदि कर्मकर्ता में यक् होना सम्भव ही नहीं हो तो यह निषेध करना व्यर्थ होगा। अतः यह ज्ञापित करता है कि कर्मकर्ता में भी यक् होता है। उसके लिये यह निषेधवचन किया गया है ॥ ६७ ॥

कर्तृवाची सार्वधातुक प्रत्यय परे रहते धातु से शप् होता है। पकार [ "अनुदात्तौ सुप्पितौ" पा. सू. ३.१.४ से ] अनुदात्त स्वर करने के लिये है। शकार [ "तिङ्शित् सार्वधातुकम्" पा. सू. ३.४.११३ से ] सार्वधातुक संज्ञा करने

**६८८. दिवादिभ्यः श्यन् ॥ ६९ ॥ (२५०५)**

**'दिव्'**-इत्येवमादिभ्यो धातुभ्यः श्यन्प्रत्ययो भवति। शपोऽपवादः। नकारः स्वरार्थः ( ६.१.१९७ ), शकारः सार्वधातुकार्थः। दीव्यति। सीव्यति॥

**६८९. वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥ (२३२१)**

उभयत्रविभाषेयम्। 'टुभ्राशृ टुभ्लाशृ दीप्तौ' ( धा० पा० ८२५, ८२६ ); 'भ्रमु अनवस्थाने' ( धा० पा० १२०६ ), 'भ्रमु चलने' ( धा० पा० ८५१ )—द्वयोरपि ग्रहणम्, 'क्रमु पादविक्षेपे' ( धा० पा० ४७३ ), 'क्लमु ग्लानौ' ( धा० पा० १२०८ ), 'त्रसी उद्वेगे' ( धा० पा० १११८ ), 'त्रुटी छेदने' ( धा० पा० १३७६ ), 'लष

**न्यासः**

**कसंज्ञार्थ इति**। 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकत्वं यथा स्यात्। श्यन्प्रभृतीनामपि शकारस्यैतत् प्रयोजनं वेदितव्यम्॥ ६८॥

**दिवादिभ्यः श्यन्॥ शपोऽपवाद इति**। तत्प्राप्तावेवास्यारम्भात्। **नकारः स्वरार्थ इति**। 'ञ्नित्यादिर्नित्यम्' इति पदस्याद्युदात्तत्वं यथा स्यात्। **दीव्यतीति**। 'हलि च' इति दीर्घः॥ ६९॥

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः॥ उभयत्र विभाषेयमिति**। भ्रमेरनवस्थानार्थस्य, क्लमित्रस्योश्च दैवादिकत्वात् प्राप्ते, त्रुटेस्तौदादिकत्वाद्, भ्राशप्रभृतीनां भौवादिकत्वादप्राप्ते। **द्वयोरपि ग्रहणमिति**। विशेषानुपादानात्, अर्थभेदाच्च। अन्यो हि चलनार्थः, अन्यश्चानवस्थानार्थः। तथा हि—चलन्नपि कार्येषु

**पदमञ्जरी**

कर्तृग्रहणस्य 'कर्मवत्कर्मणा' इत्यत्रोपयोगः। इह तु सार्वधातुके शब् भवति, श्यन् भवतीति सामान्यविधानेऽपि भावकर्मणोर्यगपवाद इति कर्त्तर्येव शबादयो भविष्यन्ति॥ ६८॥

**दिवादिभ्यः श्यन्॥** 'मृग अन्वेषणे' ( धा० पा० १९०० ) इति चुरादावदन्तेष्वात्मनेपदी पठ्यते, तत्र मृगयत इति भवितव्यम्। दिवादिष्वपि पाठान्मृग्यतीति साधुः। कण्ड्वादिषु वा मृगशब्दो द्रष्टव्यः॥ ६९॥

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः॥ उभयत्रविभाषेयम्**। अनवस्थानार्थो भ्रमिः, क्रमित्रसी च दिवादयः, त्रुटिस्तौदादिकः, इतरे भौवादिकाः। **भ्राम्यतीति**। 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः। भौवादिकस्य

**भावबोधिनी**

के लिये है। उदा० भवति। पचति। [ भू + लट् = तिप्, यहाँ सार्वधातुक परे रहने से 'शप्' होता है, श् और प् की इत्संज्ञा तथा लोप करने पर 'अ' बचता है भू + अ + ति, ''सार्वधातुकार्धधातुकयोः'' ( पा. सू. ७.३.८४ ) से ऊ का गुण ओ, ओ का अव् आदेश—भ् अव् अ ति। पच् + शप् = अ + ति। ]॥ ६८॥

दिव् आदि [ गणपठित ] धातुओं से श्यन् प्रत्यय होता है। यह शप् का अपवाद है। 'न्' यह [ ''ञ्नित्यादिर्नित्यम्'' पा. सू. ६.१.१९७ से ] आद्युदात्त स्वर करने के लिये है। शकार [ ''तिङ् शित् सार्वधातुकम्'' से ] सार्वधातुक करने के लिये है। उदा० दीव्यति, सीव्यति। [ 'दिवु' धातु के क्रीडा, विजिगीषा आदि अनेक अर्थ हैं। 'सिव्' का अर्थ सिलाई करना है। दिव् + लट् - तिप्, श्यन् = य—दिव् य + ति ''सार्वधातुकमपित्'' ( पा. सू. १.२.४ ) से श्यन् यह ङित् मान लिया जाता है अतः उपधागुण का निषेध हो जाने पर ''हलि च'' ( ८.२.७७ ) सूत्र से दीर्घ हो जाता है—दीव्यति। इसी प्रकार सिव् + य + ति, दीर्घ सीव्यति॥ ६९॥

यह उभयत्रविभाषा है। [ कारण यह है कि अवस्थानार्थक 'भ्रम्' तथा 'क्लम्' और 'त्रस्' ये तीन दिवादिगणीय हैं। अतः इनमें श्यन् प्राप्त रहते यह विकल्प किया जा है। तथा 'भ्राश्' आदि शेष धातुयें भ्वादिगणीय हैं, इनमें श्यन् की प्राप्ति नहीं है, अप्राप्ति में यह विकल्प किया जा रहा है। अतः प्राप्ते अप्राप्ते च विभाषा प्राप्ताप्राप्तविभाषा। ] ''टु

**कान्तौ' ( धा० पा० ८८९ )—इत्येतेभ्यो वा श्यन् प्रत्ययो भवति । भ्राशते, भ्राश्यते । भ्लाशते, भ्लाश्यते । भ्रमति, भ्राम्यति । क्रामति, क्राम्यति । क्लामति, क्लाम्यति । त्रसति, त्रस्यति । त्रुटति, त्रुटचति । लषति, लष्यति ॥**

६९०. यसोऽनुपसर्गात् ॥ ७१ ॥ (२७२१)

**'यसु प्रयत्ने' ( धा० पा० १२११ ) दैवादिकः, तस्मान्नित्ये श्यनि प्राप्तेऽनुपसर्गाद्विकल्प उच्यते । यसोऽनुपसर्गाद्वा श्यन्प्रत्ययो भवति । यस्यति, यसति ।**

**अनुपसर्गादिति किम् ? आयस्यति । प्रयस्यति ॥**

**न्यासः**

स्थिरारम्भी स्थिर इत्युच्यते; अचलन्नपि कार्येष्वस्थिरारम्भ्यस्थिर इत्युच्यते । तत्रार्थद्वयेऽपि प्रत्ययद्वयं यथा स्यादिति द्वयोरपि ग्रहणम् । रूपभेदोऽप्यस्त्येव—चलनार्थस्य श्यनि विहिते दीर्घत्वं न भवति, अशमादित्वात्; शपि तु द्वयोरपि तुल्यम्, तेन त्रीणि रूपाणि भवन्ति–भ्रम्यति, भ्रमति, भ्राम्यतीति । **भ्राश्यत इति** । अनुदात्तेत्त्वादात्मनेपदम् । **क्रामतीति** । 'क्रमः परस्मैपदेषु' इति दीर्घः । **क्लामतीति** । 'ष्ठिवुक्लमुचमां शिति' इति दीर्घः । **क्लाम्यतीति** । 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः ॥ ७० ॥

**यसोऽनुपसर्गात्** ॥ **अनुपसर्गादिति किम्** ? **आयस्यतीति** । सोपसर्गान्नित्यमेव श्यन् भवति । ननु च 'संयसश्च' इत्येतन्नियमार्थं भविष्यति—सम एवोपसर्गान्नान्यस्मादिति, तत् किमनुपसर्गग्रहणेन ? नैतदस्ति; तुल्यजातीयानां हि नियमो विज्ञायते, एवञ्च समित्येवं हलन्तोऽन्यहलन्तानामेव निवृत्तिं कुर्यात्; नाजन्तानाम् । लक्ष्यानुरोधेनोपसर्गमात्रापेक्षया नियमो विज्ञास्यते, ततश्चाजन्तानामपि निवृत्तिं करिष्यतीति चेत् ? एवमपि प्रतिपत्तिगौरवं स्यात् ॥ ७१ ॥

**पदमञ्जरी**

तु न भवति, अशमादित्वात् । क्रमेः 'क्रमः परस्मैपदेषु' इति दीर्घः । क्लमेस्तु 'ष्ठिवुक्लम्वाचमां शिति' इति त्रसेर्दिवादिपाठे चिन्त्यं प्रयोजनम् । क्लमेस्तु पुषादिकार्यार्थः ॥ ७० ॥

**यसोऽनुपसर्गात्** ॥ **दैवादिक इति** । दिवादिपाठोऽस्य सोपसर्गार्थः । **अनुपसर्गादिति किमिति** । 'सम्यसश्च' इत्येतत्सम एवोपसर्गान्नान्यस्मादिति नियमार्थं भविष्यतीति भावः । **आयस्यति, प्रयस्यतीति** । तुल्यजातीयानां हलन्तानामेव व्यावृत्तिः स्यादिति मन्यते ॥ ७१ ॥

**भावबोधिनी**

भ्राशृ, म्लाशृ' ये दीप्ति = प्रकाशित होना अर्थ में हैं, 'भ्रमु' यह अनवस्थान = न रुकना = घूमना अर्थ में हैं, 'भ्रमु' चलना अर्थ में है, इन दोनों का ग्रहण होता है 'क्रमु' पैर चलाना अर्थ में है, 'क्लमु' ग्लान = दुःखी होना अर्थ में है, 'त्रसी' उद्वेग अर्थ में है, 'त्रुटी' छेदन करना अर्थ में है, 'लष' कान्ति = इच्छा अर्थ में है—इन धातुओं से श्यन् प्रत्यय विकल्प से होता है । उदा०—भ्राशते, भ्राश्यते [ श्यन् के न होने पर शप् होता है । ] म्लाशते म्लाश्यते । [ दोनों का एकही अर्थ है—प्रकाशित होता है, चमकता है । ] भ्रमति, भ्राम्यति । [ भ्रम् + श्यन् = य + ति "शमामष्टानां दीर्घः श्यनि ( पा. सू. ७।३।७४ ) से दीर्घ होने पर भ्राम्यति, शप् करने पर दीर्घ नहीं होता है—भ्रमति । ] क्रामति, क्राम्यति । [ दोनों में "क्रमः परस्मैपदेषु" ( पा. सू. ७।३।७६ ) से दीर्घ होता है । ] क्लामति, क्लाम्यति । [ इनमें "ष्ठिवुक्लमुचमां शिति" ( पा. सू. ७।३।७५ ) से दीर्घ होता है । ] त्रसति, त्रस्यति । त्रुटति, त्रुटचति । लषति, लष्यति । [ इनमें श्यन और शप् होता है । ] ॥ ७० ॥

'यसु' प्रयत्न अर्थ में दिवादिगणीय है, इससे नित्य श्यन् की प्राप्ति रहने पर उपसर्गरहित से विकल्प से श्यन् किया जाता है । उपसर्गरहित 'यस्' से विकल्प से श्यन् प्रत्यय होता है । उदा०—यस्यति यसति । [ प्रयत्न करता है । श्यन् के विकल्प में शप् होता है । ] 'उपसर्गरहित से' ऐसा मानने का क्या प्रयोजन है ? आयस्यति । प्रयस्यति । [ यहाँ आङ् तथा प्र उपसर्ग हैं । अतः विकल्प न होकर "दिवादिभ्यः श्यन्" से नित्य श्यन् होता है ] ॥ ७१ ॥

**६९१. संयसश्च ॥ ७२ ॥ (२५२२)**

**सोपसर्गार्थ आरम्भः । संपूर्वाच्च यसेर्वा श्यन्प्रत्ययो भवति । संयस्यति, संयसति ॥**

**६९२. स्वादिभ्यः श्नुः ॥ ७३ ॥ (२५२३)**

**'षुञ् अभिषवे' ( धा० पा० १२४८ )--इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति । शपोऽपवादः । सुनोति । सिनोति ॥**

**६९३. श्रुवः शृ च ॥ ७४ ॥ (२३८६)**

**श्रुवः श्नुप्रत्ययो भवति, तत्संनियोगेन श्रुवः 'शृ' इत्ययमादेशो भवति । शृणोति, शृणुतः, शृण्वन्ति ॥**

**न्यासः**

**संयसश्च** ॥ चकारो वेत्यनुकर्षणार्थः । अथ यसिग्रहणं किमर्थम्, न 'समः' इत्येवोच्येत, पूर्वसूत्राद् यसिरनुवर्त्तिष्यते ? नैतद्; एवं 'समः' इत्येतावति वक्तव्ये 'षमष्टम वैक्लव्ये' इत्यस्येदं ग्रहणमित्याशङ्कमानो यसिग्रहणमिह निवृत्तमिति कश्चित् सम्भावयेत्, यसिग्रहणे तु धात्वन्तराशङ्का न भवति ॥ ७२ ॥

**स्वादिभ्यः श्नुः ॥ सुनोतीति** । 'सार्वधातुकमपित्' इति ङित्त्वाद् गुणाभावः ॥ ७३ ॥

**श्रुवः शृ च** ॥ 'श्रु श्रवणे' इति भ्वादौ पठ्यते, ततः शपि प्राप्ते श्नुर्विधीयते । 'श्रुवः' इति प्रत्ययविधौ पञ्चमी । यदा त्वादेशेन सह सम्बध्यते तदार्थतः षष्ठी सम्पद्यते । **तत्सन्नियोगेनेति** । एतेन प्रत्ययान्तरे शृभावस्याभावं दर्शयति । **शृण्वन्तीति** । 'हुश्नुवोः सार्वधातुके' इति यणादेशः ॥ ७४ ॥

**पदमञ्जरी**

**संयसश्च** ॥ इह 'समः' इत्येवास्तु, 'यसः' इत्यनुवर्त्तिष्यते, 'षम् ष्टम वैक्लव्ये' ( धा० पा० ८२९-३० ) इत्यस्य ग्रहणशङ्कानिवृत्त्यर्थं तु 'संयसः' इत्युक्तम् । एवं तर्हि 'समो यसः', 'अनुपसर्गाच्च' इत्यस्तु ॥ ७२ ॥

**स्वादिभ्यः श्नुः ॥ सिनोतीति** । 'षिञ् बन्धने' ( धा० पा० १२४८ ) क्र्यादिपाठात्सिनातीत्यपि भवति ॥ ७३ ॥ ७४ ॥ ७५ ॥

**भावबोधिनी**

उपसर्गसहित 'यस्' के लिये यह सूत्र बनाया जा रहा है । सम्पूर्वक 'यस्' धातु से विकल्प से श्यन्=य प्रत्यय होता है । उदा०—संयस्यति, संयसति । [ श्यन् और शप् के दो रूप होते हैं । ] ॥ ७२ ॥

'अभिषव'=स्नपन, पीडन स्नान और सुरासन्धान इन अर्थों में 'षुञ्' धातु है, इन षुञ् आदि धातुओं से 'श्नु' प्रत्यय होता है । यह शप् का अपवाद है । उदाहरण –सुनोति । [ 'षुञ्' ''धात्वादेः षः स'' ( पा. सू. ६।१।६४ ) से 'ष' का 'स' होता है-- सु + लट् = तिप्, प्रस्तुत सूत्र से श्नु=नु प्रत्यय—सु + नु + ति, शित् होने से अपित् होने पर सार्वधातुकमपित्'' ( पा. सू. १।२।४ ) सूत्र से ङित् होता है अतः धातु का गुण नहीं होता है किन्तु तिप् को मानकर 'नु'का गुण होता है—सुनोति । 'षिञ्' बन्धन = सिलना अर्थ में हैं । 'ष्' का स् करने पर —सि + श्नु + तिप् आदि कार्य होते हैं—सिनोति । ] ॥७३ ॥

'श्रु' से श्नु' प्रत्यय होता है, और इसके संनियोग से 'श्रु' का 'शृ' यह आदेश होता है । उदा०--शृणोति, शृणुतः, शृण्वन्ति । [ श्रु + लट् = तिप्, प्रस्तुत सूत्र से 'श्रु' का शृ आदेश और 'श्नु' प्रत्यय करने पर —शृ + नु + ति, श्नु के ङित् होने से 'शृ' का गुण नहीं होता है किन्तु 'तिप्' को मान कर 'नु' का गुण होता है—शृनोति, णत्व करने पर--शृणोति । श्रु + तस् = शृ + नु + तस् ''सार्वधातुकमपित्'' ( पा. सू. १।२।४ ) से दोनों प्रत्यय ङित् होते हैं अतः किसी का गुण नहीं होता है । शृ + झि = अन्ति, शृ + नु + अन्ति, ''हुश्नुवोः सार्वधातुके'' ( पा. सू. ६।४।८७ ) से 'उ' का यण्, णत्व—शृण्वन्ति ] ॥ ७४ ॥

**६९४. अक्षोऽन्यतरस्याम् ॥ ७५ ॥ (२३३८)**

**'अक्षू व्याप्तौ' ( धा० पा० ६५४ ) भौवादिकः, अस्मादन्यतरस्यां श्नुप्रत्ययो भवति । अक्ष्णोति, अक्षति ॥**

**६९५. तनूकरणे तक्षः ॥ ७६ ॥ (२३३९)**

**'तक्षू त्वक्षू तनूकरणे' ( धा० पा० ६५५, ६५६ )—अस्मात्तनूकरणे वर्तमानादन्यतरस्यां श्नुप्रत्ययो भवति । अनेकार्थत्वाद्धातूनां विशेषेणोपादानम् । तक्षति काष्ठम्, तक्ष्णोति काष्ठम् ।**

**तनूकरण इति किम् ? सन्तक्षति वाग्भिः ॥**

**६९६. तुदादिभ्यः शः ॥ ७७ ॥ (२५३४)**

**'तुद व्यथने' ( धा० पा० १२८२ )—इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति । शपोऽपवादः । शकारः सार्वधातुकसंज्ञार्थः । तुदति । नुदति ॥**

**६९७. रुधादिभ्यः श्नम् ॥ ७८ ॥ (२५४३)**

**न्यासः**

**अक्षोऽन्यतरस्याम् ॥ भौवादिक इति** । अनेनाप्राप्तविभाषेयमिति दर्शयति ॥ ७५ ॥

**तनूकरणे तक्षः ॥ तनूकरणेऽर्थे वर्त्तमानादिति** । ननु चायं धातुर्भ्वादौ तनूकरण एव पठ्यते, तत् कस्मादस्य विशेषणस्योपादानमित्याह—**अनेकार्थत्वादित्यादि** ।

**सन्तक्षति वाग्भिरिति** । निर्भर्त्सयति इत्यर्थः ॥ ७६ ॥ **तुदादिभ्यः शः** ॥ ७७ ॥

**रुधादिभ्यः श्नम् ॥ श्नम्प्रत्ययो भवतीति** । शपोऽपवादः । कथं पुनर्भिन्नदेशेन श्नमा शब्

**पदमञ्जरी**

**तनूकरणे तक्षः ॥ अनेकार्थत्वादिति** । अत एव विशेषणोपादानादनेकार्थत्वं विज्ञायते । प्रदर्शनार्थस्तु गणे धातूनामर्थनिर्देशः । **सन्तक्षति वाग्भिरिति** । निर्भर्त्सयतीत्यर्थः ॥ ७६ ॥

**तुदादिभ्यः शः ॥ तुदतीति** । तुद् + ति इति स्थिते परत्वात्प्राप्तमपि गुणं नित्यः शो बाधते ॥ ७७ ॥

**रुधादिभ्यः श्नम् ॥ श्नम्प्रत्ययो भवतीति** । यद्यपि प्रत्ययसंज्ञायां प्रकृत्युपपदोपाधिविकारागमान्वर्ज-

**भावबोधिनी**

'अक्ष्' यह व्याप्त व्याप्त करना अर्थ में भौवादिक [ भ्वादिगणीय ] है, इससे विकल्प से 'श्नु' प्रत्यय होता है । उदा०—अक्ष्णोति, अक्षति । [ अक्ष् + लट् = तिप्, विकल्प से श्नु = नु, णत्व, गुण—अक्ष्णोति । पक्ष में शप्—अक्ष् + अ + ति । व्याप्त करता है—यह अर्थ है । ] ॥ ७५ ॥

"तक्ष्" और 'त्वक्ष्' ये तनूकरण = पतला करना अर्थ में है, यह 'तक्ष्' धातु जो तनूकरण अर्थ में है, उससे विकल्प से श्यन् = य प्रत्यय होता है । [ यद्यपि 'तक्ष' धातु तनूकरण अर्थ में ही पठित है तब सूत्र में इसी अर्थ के उपादान का क्या प्रयोजन है ? ] धातुओं के अनेक अर्थ होते हैं अतः यहाँ विशेष रूप से अर्थ का उपादन किया गया है कि इसी अर्थ में श्यन् होता है । उदा०—तक्षति काष्ठम्, तक्ष्णोति काष्ठम् । [ लकड़ी को छीलता है, पतला करता है । तक्ष् + श्नु = नु + ति, णत्व गुण—तक्ष्णोति । पक्ष में शप्—तक्ष् अ + ति । ]

तनूकरण = पतला करना, छीलना अर्थ में—इसका क्या प्रयोजन है ? सन्तक्षति वाग्भिः । [ वाणी से कष्ट दे रहा है, भर्त्सना कर रहा है । यहाँ तनूकरण अर्थ नहीं है । अतः 'श्नु' नहीं होता है केवल शप् होता है ] ॥ ७६ ॥

'तुद्' यह व्यथित करना अर्थ में है, 'तुद्' आदि धातुओं से 'श' प्रत्यय होता है । यह शप् का अपवाद है । शकार इसकी सार्वधातुक संज्ञा करने के लिये है । [ सार्वधातुक होने पर भी अपित् है अतः 'सार्वधातुकमपित्' ( पा. सू. १।२।४ ) से ङिद्वत् होने से गुण का निषेध हो जाता है । ] उदा०—तुदति । [ तुद् + श = अ + ति, व्यथित करता है । ] नुदति । [ णुद् 'णो नः' ( पा. सू. ६।१।६५ ) से 'ण' का 'न' करने पर नुद् + श = अ + ति— नुदति । प्रेरित करता है ] ॥ ७७ ॥

**'रुधिर् आवरणे' ( धा० पा० १४३९ )—इत्येवमादिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति । शपोऽपवादः । मकारो देशविध्यर्थः । शकारः 'श्नान्नलोपः' ( ६.४.२३) इति विशेषणार्थः । रुणद्धि । भिनत्ति ॥**

**न्यासः**

बाध्यते ? नैतत्; नाभिन्नदेशतैव बाधायाः कारणम्, अपि त्वेकप्रयोजनतेति। विकरणो हि सार्वधातुकस्य धातोश्चार्थाभिधाने सहायतां प्रतिपद्येतेत्येवमर्थं विधीयते। सा च श्नमैव प्रतिपन्नेति शपा न भवितव्यम्। **देशविध्यर्थ इति**। विशिष्टे देशे विधानार्थ इत्यर्थः। स पुनर्देशः 'अचोऽन्त्यात् परः'। **शकारः 'श्नान्नलोपः' इति विशेषणार्थ इति**। 'नान्नलोपः' इत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि नलोपः स्यात्। 'नामि' इति दीर्घत्वे कृते नादिति व्यपदेशाभावान्न भविष्यतीति ? नैतदस्ति; लोपेनैव हि प्राग् भवितव्यम्, तस्य परत्वाद् 'अतो दीर्घो यञि' 'सुपि च' इति दीर्घत्वं यद्यपि लोपात् परम्, तथापि तेनेह न भवितव्यम्; 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति वचनात्। अकारान्तसन्निपातेन हि नुड् विधीयमानो नोत्सहतेऽकारान्ततां विहन्तुम्। इहापि तर्हि दीर्घत्वं न स्याद—वृक्षायेति, 'ङेर्यः' इति यादेशस्याप्यकारान्तसन्निपातेन विधानात् ? नैष दोषः; 'कष्टाय क्रमणे' इति निर्देशो ज्ञापयति—एषा परिभाषा न प्रवर्त्तत इति। षष्ठीबहुवचने ज्ञापकाभावात् प्रवर्त्तत एव। अथाप्यनित्यत्वान्न प्रवर्तते ? एवमप्यसति शकारे 'सुपि च' इति परत्वात् कृते दीर्घत्वे स्थानिवद्भावादत्र लोपः स्यात्। एतच्च **वृत्तिकारः** स्वयमेव वक्ष्यति। विश्नानाम्, प्रश्नानामित्यत्र यद्यपि शका-

**पदमञ्जरी**

यित्वेत्युक्तम्, तथापि विधीयमानत्वेन प्राधान्यात् शबादिवदर्थवत्त्वाच्श्नमः प्रत्ययसंज्ञा भवतीति भावः। तेन शकारस्य प्रत्ययादित्वादित्संज्ञा। **शपोऽपवाद इति**। देशभेदेनोभयोः सत्यपि सम्भवे नाप्राप्ते तस्मिन्नारम्भमाणत्वादेकार्थत्वाच्चापवादत्वम्। विकरणा हि सार्वधातुकस्य धातोश्चार्थाभिधाने सहायतां प्रतिपद्यन्ते। **शकारः श्नान्नलोप इति विशेषणार्थ इति**। अथार्द्धधातुकसंज्ञा मा भूदित्येवमर्थः कस्मान्न भवति ? सत्यां हि तस्याम् अनक्ति—'अतो लोपः' स्यात्, रुणद्धि, भिनत्ति—गुणः स्यात्; हिनस्ति, तृणेढि—इडागमः स्यात्; 'नेड्वशि कृति' इत्येतदपि नास्ति अकृत्त्वात् ? सर्वमेतत् श्नमः पूर्वभागस्यानङ्गत्वान्न भविष्यति। कथमङ्गत्वम् ? यस्मात्प्रत्ययविधिरिति। कोऽर्थः ? प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रातिपदिकादिति तदादि तस्मिन्प्रत्यये परतोऽङ्गमिति। यच्चात्र पञ्चम्या निर्दिष्टं रुधादिभ्यो धातुभ्य इति न तस्मात्प्रत्ययः, यस्माच्च प्रत्ययः पूर्वभागात्स न तस्मिन्विधीयमाने पञ्चम्या निर्दिष्टः, तस्माच्छ्नादिति विशेषणार्थ एव शकारः। 'नान्नलोपः' इत्युच्यमाने 'यजयाचयतविच्छप्रच्छरक्षो नङ्' यज्ञानाम्, यत्नानामत्रापि प्राप्नोति, 'नामि' इति दीर्घत्वे कृते नादिति व्यपदेशाभावान्न भविष्यति, परत्वाल्लोप एव प्राप्नोति। यत्तु 'अतो दीर्घो यञि', 'सुपि च' इति दीर्घत्वम्, न च तदत्र प्रवर्त्तते, किं कारणम् ? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( व्या० परि० १२ )

**भावबोधिनी**

'रुधिर' आवरण=ढकना, रोकना अर्थ में है, इन 'रुधिर' आदि धातुओं से 'श्नम्' प्रत्यय होता है। यह शप् का अपवाद है। मकार देश=स्थान के विधान के लिये है। [ म् की इत्संज्ञा होने से "मिदचोऽन्त्यात् परः" (पा. सू. १।१।४७ ) से अन्त्य अच् के बाद श्नम्=न् होता है। शकार यह "श्नान्नलोपः" ( पा. सू.६. ४.२३ ) इस विशेषण के लिये है। [ भाव यह है कि यहाँ 'श्नम्' की सार्वधातुक संज्ञा करने का कोई लाभ नहीं है। 'श्नान्नलोपः' इस सूत्र में ग्रहण कराने के लिये 'श्' यह है। "नान्नलोपः" कहने पर 'यज्ञानाम् यत्नानाम्' आदि में न का लोप प्रसक्त होगा क्योंकि यज् + न, यत् + न—से षष्ठी बहुवचन में नाम् प्रत्यय होता है। यह 'न' के बाद है, इसका लोप प्रसक्त होता है। विशेष के लिये न्यास और पदमंजरी देखें। ] रुणद्धि। भिनत्ति। [ रुधिर् के 'इ' तथा 'र्' की इत्संज्ञा और लोप करने पर रुध् + लट् = तिप् प्रस्तुत सूत्र से श्नम् = न, मित् होने से अन्त्य अच् के बाद किया जाता है—रु न ध + ति, 'न' का णत्व, "झषस्तथोर्धोधः" से 'त' का 'ध' रुणध् + धि, "झलां जश् झशि" से जश्त्व करने पर—रुणद्धि। ]

## ६९८. तनादिकृञ्भ्य उः ॥ ७९ ॥ (२४६६)

**'तनु विस्तारे' ( धा० पा० १४६४ )—इत्येवमादिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति । शपोऽपवादः । तनोति । सनोति । क्षणोति ।**

**कृञः खल्वपि-करोति ।**

**न्यासः**

रवान् नशब्दः, तथापि तस्य न भवति; लाक्षणिकत्वात्, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्, न तु लाक्षणिकस्येति । लाक्षणिकत्वन्तु विच्छिप्रच्छिभ्याम् 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङि कृते 'च्छ्वोः शूडनुनासिके च' इति शकारे कृते श्नम्शब्दस्याभिनिर्वृत्तत्वात् । **रुणद्धोति** । पूर्ववद्धत्वजश्त्वे । 'रषाभ्याम्' इति णत्वम् ॥ ७८ ॥

**तनादिकृञ्भ्य उः ॥ सनोति, क्षणोतीति** । 'षणु दाने', 'क्षणु हिंसायाम्' । **नियमार्थमिति** । एतदेव तनादिकार्यं यथा स्यादित्येष नियमो यथा स्यात् । अन्यत् तनादिकार्यं मा भूदित्यनेन नियमस्य व्यवच्छेद्यं दर्शयति, 'तनादिभ्यः' इत्यादिना यदन्यत् तनादिकार्यं तदभावम् । असति हि नियमार्थे यथान्येभ्यस्तनादिभ्यः 'विभाषा सिचस्तथासोः' लुग् भवति-अतत, अतथाः, अतनिष्ट, अतनिष्ठाः, तथा करोतेरपि स्यात् । अस्मिंस्तु सति न भवति, तदभावे च 'ह्रस्वादङ्गात्' इत्याष्टमिक एव लोपो भवति—अकृत, अकृथाः । ननु सत्यपि तस्मिंस्तनादिकार्ये नैव किञ्चिदनिष्टमापद्यते, अलुक्पक्षेऽपि 'ह्रस्वात्' इति लोपप्रवृत्तेः ? नैतत्; नाप्राप्ते सिचो लोपे लुगारभ्यमाणस्तस्य बाधकः स्यात् । 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वादयुक्ता लोपबाधेत्येतन्नाशङ्कनीयम्; यस्माद् वक्ष्यत्येतद्—'नास्त्यपवादेष्वसिद्धत्वम्, अपवादवचनाप्रामाण्यात्' इति । यदि तर्हि करोतेरन्यत् तनादिकार्यं

**पदमञ्जरी**

इति । इहापि तर्हि न स्याद्—वृक्षायेति ? **'कष्टाय क्रमणे'** इति निर्देशाद्भविष्यति । इहापि तर्हि—यत्नानामिति ? तस्मादेव निर्देशात्सामान्यापेक्षया ज्ञापनाद्दीर्घो भविष्यति । एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्वान्नशब्द एवायमिति नलोपः स्यादेव । तस्माद्विशेषणार्थः शकारः कर्त्तव्यः अथ क्रियमाणेऽपि शकारे इह कस्मान्न भवति—विश्नानाम्, प्रश्नानामिति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम् ( व्या० परि० ३ )' ॥ ७८ ॥

**तनादिकृञ्भ्य उः ॥ तनोतीत्यादि**। 'तनु विस्तारे' ( धा० पा० १४६३ ) 'षणु दाने' ( धा० पा० १४६४ ) 'क्षणु हिंसायाम्' ( धा० पा० १४६५ ) ।

**अन्यत्तनादिकार्यमिति** । तनादिकार्यापेक्षो नियम इत्यर्थः । व्यावर्त्त्यं दर्शयति—**तनादिभ्यस्तथासोरिति विभाषा सिचो लुग् न भवतीति** । नन्वस्तु लुग्विकल्पः, तदभावे 'ह्रस्वादङ्गात्' इति लोपो भविष्यति, न च विकल्पेन बाधः, विकल्पं प्रति नित्यस्यासिद्धत्वात्; न च तनादिपाठसमार्थ्यादपवादो वचनप्रामाण्यादिति न्यायेना-

**भावबोधिनी**

भिदिर् = भिद् + लट् तिप् श्नम्—भिनद् + ति, चर्त्व—भिनत्ति । ] ॥ ७८ ॥

'तनु' विस्तार अर्थ में हैं 'तनु' आदि धातुओं से तथा कृञ् धातु से 'उ' प्रत्यय होता है । यह शप् का अपवाद है । उदा० तनोति । सनोति । क्षणोति । [ तन् + लट् = तिप्, 'उ' प्रत्यय, और उसका गुण—तन् ओति । 'षणु' दान अर्थ में है 'क्षण्' हिंसा अर्थ में । इनसे भी 'उ' प्रत्यय तथा इसका गुण होता है—सन् ओ ति, क्षण् ओ ति । ]

'कृञ्' से भी 'उ' होता है—कृ + उ + ति, ऋ का गुण, रपर, 'उ' का गुण—कर् ओ ति ।

**तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानं नियमार्थम्, अन्यत्तनादिकार्यं मा भूदिति। 'तनादिभ्यस्तथासोः' ( २.४.७९ ) इति विभाषा सिचो लुग् न भवति– अकृत, अकृथाः ॥**

**६९९. धिन्विकृण्व्योर च ॥ ८० ॥ (२३३२)**

**'हिवि धिवि जिवि प्रीणनार्थाः' ( धा० पा० ५९१, ५९३, ५९४ ), 'कृवि हिंसाकरणयोः' ( धा० पा० ५९८ )—इत्येतयोर्द्धात्वोरुप्रत्ययो भवत्यकारश्चान्तादेशः। धिनोति। कृणोति। अतो लोपस्य ( ६.४.४८ ) स्थानिवद्भावाद् ( १.१.५७ ) गुणो न भवति ॥**

**न्यासः**

नेष्यते, कस्मात् तर्हि भ्वादावेव न पठितः ? कः पुनरेवं लाघवकृतो विशेषः ? भ्वादावपि पाठे नियोगतोऽस्य विकरणविधौ ग्रहणं कर्त्तव्यमित्यदेश्यमेतत् ॥ ७९ ॥

**धिन्विकृण्व्योर च ॥** भ्वादित्वाच्छपि प्राप्ते वचनम्। **अकारादेशो भवतीति।** अलोऽन्त्यपरिभाषया। **धिनोतीति।** 'अतो लोपः'। अथ लघूपधगुणोऽत्र कस्मान्न भवतीत्याह—**अल्लोपस्येत्यादि।** 'अचः परस्मिन् पूर्वविधौ' इत्यल्लोपस्य स्थानिवद्भावादनुपधत्वादिकारस्य गुणो न भवति। लाघवार्थं 'धिविकृव्योः' इति वक्तव्ये नुमनुषक्तयोर्ग्रहणं कृतमुपदेशावस्थायामेव नुम्भवतीति ज्ञापनार्थम्। तेन नुम्विधावुपदेशिवद्वचनमिष्टस्वरसिद्ध्यर्थमिति न वक्तव्यं भवति ॥ ८० ॥

**पदमञ्जरी**

सिद्धत्वबाधाद्विकल्पेन नित्यस्य बाधः, तनादिपाठस्य विकरणविधौ चरितार्थत्वात्; विकल्पोऽप्यतत, अतथा इत्यादौ चरितार्थः; प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञः पाठस्यानन्यार्थत्वाद्येननाप्राप्तिन्यायेन विकल्पो नित्यविधिं बाधेत ? इदं हि कृञ्ग्रहणविधौ तनादिषु पाठश्चरितार्थो मा विज्ञायीत्येवमर्थमेव स्यादिति कृञ्ग्रहणप्रत्याख्यानमेव न्याय्यं मन्यामहे ॥ ७९ ॥

**धिन्विकृण्व्योर च ॥ अतो लोपस्य स्थानिवद्भावाद् गुणो न भवतीति।** तेन प्रक्रियालाघवाय धिन्विकृण्व्योर्लोप एव नोक्त इति भावः। लोपे हि गुणस्स्यात्। न च 'न धातुलोप आर्द्धधातुके' इति निषेधः, प्रत्ययसन्नियोगशिष्टत्वेन लोपस्यानार्द्धधातुकनिमित्तत्वात्। ननु नुमनुषक्तयोर्ग्रहणं किमर्थम् ? नुमि कृतेऽत्वं यथा स्याद्, 'धिविकृव्योः' इत्युच्यमानेऽत्वे कृतेऽत एव परो नुम् प्रसज्येत; अत्वं ह्यन्तरङ्गं प्रत्ययसन्नियोगेन विधानात्; नुमागमस्तु बहिरङ्गः, उत्पन्ने प्रत्ययेऽङ्गस्य सतो विधानात्। ननु चास्त्वङ्गस्य नुम्, लावस्थायामेव भविष्यति;

**भावबोधिनी**

तनादिगण में पाठ से ही 'उ' प्रत्यय सिद्ध था फिर भी इस सूत्र में अलग से करोति=कृञ् उपादान नियम के लिये है—'कृञ्' से केवल 'उ' प्रत्यय ही होता है, और दूसरा कोई तनादिगणीय कार्य नहीं होता है।' अतः "तनादिभ्यस्तथासोः" ( पा. सू. २.४.७९ ) से विकल्प से सिच् का लुक् नहीं होता है—अकृत, अकृथाः। [ कृ+लुङ्=त, अट्, च्लि और सिच् अ कृ+स्+त, यहाँ 'तनादिभ्यस्तथासोः' से विकल्प से सिच् का लुक् नहीं होता है अपितु "ह्रस्वादङ्गात्" से नित्य लुक् होता है। यदि तनादि से इसका भी ग्रहण मानते तो यह विभाषा लुक् भी होता। फलतः दो रूप बनने लगते। ] ॥ ७९ ॥

'हिवि, धिवि जिवि—'ये धातुयें प्रीणन अर्थ में हैं, 'कृवि' यह हिंसा और करण अर्थों में है, इन धिवि तथा कृवि धातुओं से 'उ' प्रत्यय होता है और 'अ' कार अन्तादेश होता है। उदा० धिनोति। कृणोति। [ 'धिवि' इसके 'इ' की इत्संज्ञा लोप करने पर "इदितो नुम् धातोः" ( पा. सू. ७.१.५८ ) से नुम्=न् होने पर—धिन्व्+लट्=तिप् यहाँ प्रस्तुत सूत्र से 'उ' प्रत्यय और अन्त=व् का 'अ' आदेश—धिन् अ+उ+ति, ] "अतो लोपः" सूत्र से अलोप, लघूपधगुण की कर्तव्यता में यह लुप्त 'अ' स्थानिवत् हो जाता है अतः 'इ' का गुण नहीं होता हैं। [ किन्तु तिप्

**७००. क्र्यादिभ्यः श्ना ॥ ८१ ॥ (२५५४)**

**'डुक्रीञ् द्रव्यविनिमये' ( धा० पा० १४७४ )—इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। क्रीणाति। प्रीणाति ॥**

**७०१. स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥ (२५५५)**

**आद्याश्चत्वारो धातवः सौत्राः, 'स्कुञ् आप्रवणे' ( धा० पा० १४७९ )—इत्येतेभ्यः श्नाप्रत्ययो भवति श्नुश्च। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कुनाति, स्कुनोति। उदित्त्वप्रतिज्ञानात्सौत्राणामपि धातूनां सर्वार्थत्वं विज्ञायते, नैतद्विकरणविषयत्वमेव ॥**

**न्यासः**

**क्र्यादिभ्यः श्ना ॥ ८१ ॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥** चकारः श्नानुकर्षणार्थः। **स्तभ्नातीति**। आदौ 'अनिदिताम्' इत्यनुनासिकलोपः। श्नुश्नाभ्यां सह निर्देशात् तद्विषयतैवैषां धातूनामिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह–**उदित्त्वप्रतिज्ञानादित्यादि**। एषां ह्युकार इत्संज्ञकः प्रतिज्ञायते, तस्य क्त्वाप्रत्यय इड्विकल्पः फलम्। यदि त एतद्विविकरणविषयाः स्युः, उदित्करणमनर्थकं स्यात्। तस्मादुदित्करणप्रतिज्ञानात्। सर्वार्थत्वमेषामवसीयते। अर्थशब्दोऽयं विषयवाची। सर्वविषयत्वमित्यर्थः ॥ ८२ ॥

**पदमञ्जरी**

तिबादीनामन्तरङ्गत्वात्। तिबादिष्वेव तर्हि भविष्यति, न; नित्येनात्वेन बाधनात्। नुमागमस्तु शब्दान्तरप्राप्तेरनित्यः। अन्तरङ्गस्तर्हि नुमागमस्तद्विधौ धातुग्रहणात्? तद्धि धातुसंज्ञाप्रवृत्तिकाल एव नुम् यथा स्यादित्येवमर्थम्; अन्यस्योदितोऽसम्भवात्। कथमसम्भवः? यदिदानीमेवोक्तम्—तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थमिति। नन्वत्रापि पक्षे 'नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थम्' इति वचनादुपदेश एव नुम् भविष्यति? एवं तर्ह्यन्तरङ्गत्वादेव प्राप्तस्य नुमोऽयं निर्देशः ॥ ८० ॥ ८१ ॥

**स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ उदित्त्वप्रतिज्ञानादिति**। एषां ह्युकारोऽनुनासिक इत्संज्ञकः प्रतिज्ञायते, तस्य प्रयोजनम्—'उदितो वा' इति क्त्वाप्रत्यये इड्विकल्पः। यदि चैतद्विकरणविषया एवैते स्युस्तन्नोपपद्यते। तस्मादुदित्त्वेन प्रतिज्ञानात्सर्वार्थत्वं विज्ञायते, सर्वे प्रत्ययाः प्रयोजनमेषामित्यर्थः। सर्वप्रत्ययशेषत्वमिति वा ॥ ८२ ॥

**:भावबोधिनी**

को मान कर 'उ' का गुण 'ओ' हो जाता है—धिन् ओति। इसी प्रकार कृवि, इलोप, नुम्। णत्व, 'उ' प्रत्यय, अकार अन्तादेश—कृ न उ ति, अलोप, उ का गुण, णत्व—कृण् ओ ति। ]॥ ८० ॥

'डुक्रीञ्' यह द्रव्य के विनिमय=अदला-बदली अर्थात् एक वस्तु देकर दूसरी वस्तु लेना=खरीदना अर्थ में है, इन 'डुक्रीञ्' आदि धातुओं से 'श्ना' प्रत्यय होता है। शप् का अपवाद है। शकार सार्वधातुक संज्ञा के लिये है। [ 'तिङ्शित् सार्वधातुकम्' से शित् को सार्वधातुक माना जाता है। ] उदा० क्रीणाति। प्रीणाति। [ डुक्रीञ् में "आदिर्ञिटुडवः" से 'डु' की और "हलन्त्यम्" से 'ञ्' की इत्संज्ञा लोप करने पर क्री+लट् = तिप्, प्रस्तुत सूत्र से 'श्ना' = ना—क्री+ना+ति, णत्व—क्रीणाति। प्रीञ् तर्पण अर्थ में है। प्री+ना+ति, णत्व—प्रीणाति। ]॥ ८१ ॥

स्तम्भु, स्तुम्भु, स्कम्भु और स्कुम्भु—ये आदि की चार धातुयें सौत्र = सूत्र में पठित हैं, 'स्कुञ्' यह आप्रवण = नीचे कूदना अर्थ में है—इन धातुओं से श्ना प्रत्यय और श्नु प्रत्यय होते हैं। उदा० स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। [ इन सभी का अर्थ—'रोकना' है। स्तम्भ्+श्ना = ना+ति, श्ना के ङित् होने से "अनिदितां हल उपधायाः क्ङिति" से अनुनासिक 'म्' का लोप हो जाता है। 'श्नु' में 'उ' का गुण होता है। यही प्रक्रिया सब में होती है। ] स्कुनाति, स्कुनोति [ 'स्कुञ्' यह ञित् है, अतः उभयपदी होने से आत्मनेपद के रूप भी लिखने चाहिये थे—स्कुनीते, स्कुनुते। ]

**७०२. हलः श्नः शानज्झौ ॥ ८३ ॥ (२५५७)**

**हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः । मुषाण । पुषाण ।**

**हल इति किम् ? क्रीणीहि । हाविति किम् ? मुष्णाति ।**

**'श्नः' इति स्थानिनिर्देश आदेशसंप्रत्ययार्थः । इतरथा हि प्रत्ययान्तरमेव सर्वविषयं विज्ञायेत ॥**

**न्यासः**

हलः श्नः शानज्झौ ॥ **पुषाण, मुषाणेति** । विध्यादौ लोट्, 'सेर्ह्यपिच्च' क्र्यात्वाच् श्ना, तस्यानेन शानच् । चकारोऽन्तोदात्तार्थः । 'अतो हेः' इति हेर्लुक् ।

**क्रीणीहीति** । 'ई हल्यघोः' इतीत्वम् । ननु च श्नाप्रत्ययस्य प्रकृतत्वात् स एवेह स्थानित्वेन विज्ञास्यते, तत् किमर्थः 'श्नः' इति निर्देश इत्याह—**श्न इति स्थानिनिर्देश इत्यादि** । शानच्शब्दोऽयमादेश इत्येष संप्रत्ययो यथा स्यादित्येवमर्थः श्न इति निर्द्देशः । किं पुनः कारणमसति तस्मिन्नेष संप्रत्ययो न स्यादित्यत आह—**प्रत्ययान्तरं हीत्यादि** । सर्वे धातवोऽन्यगणपठिता अपि विषयो यस्य तत् तथोक्तम् । 'श्नः' इत्यस्मिन् ह्यसति स्थानिनिर्देशे श्नाप्रत्ययस्यानुवृत्तिर्न ज्ञायेत । ततश्च सर्वेभ्यो धातुभ्यो हलन्तेभ्यः शानजपवादः प्रत्ययो विज्ञायेत । 'श्नः' इत्यस्मिंस्तु सति श्नादेशोऽयं विज्ञायेतेति न भवत्येष दोषः । स्थानिवद्भावेनैवादेशस्य शित्त्वे सिद्धे पुनः शित्करणं 'ञिमिदा स्नेहने' इत्यस्माद्व्यत्ययेन यदा श्नाप्रत्ययो भवति तस्य च शानजादेशः, तदा मिदेर्गुणो मा

**पदमञ्जरी**

हलः **श्नः शानज्झौ** ॥ **पुषाण, मुषाणेति** । लोट्, सिप्, तस्य हिः, 'क्र्यादिभ्यः श्ना', तस्य शानच् । चकारः स्वरार्थः । अत्र सन्निपातपरिभाषाया अनित्यत्वाद् 'अतो हेः' इति हेर्लुक् ।

ननु च श्नाप्रत्ययस्य प्रकृतत्वात्तस्यैव शानजादेशो भविष्यति, नार्थः श्न इति स्थानिनिर्द्देशेनात आह—**श्न इति स्थानीत्यादि** । आदेश इत्येष संप्रत्ययः—अवगमो यथा स्यादित्येवमर्थः । असति तु तस्मिन् किं स्यादित्याह—**प्रत्ययान्तरमिति** । अस्तु प्रत्ययान्तरम्, 'क्र्यादिभ्यः' इत्यनुवृत्तेस्तेभ्य एव हलन्तेभ्यो भविष्यतीति न कश्चिद्दोष इत्यत आह—**सर्वविषयमिति** । अक्र्यादिविषयमपीत्यर्थः । क्र्याद्यनुवृत्तिर्दुर्ज्ञानेति मन्यते । शानचः शित्करणञ्चिन्त्यप्रयोजनम्; स्थानिवद्भावेनैव सिद्धेः । इह 'ञिमिदा स्नेहने' ( धा० पा० १२४३ ) दिवादिः, व्यत्ययेन छन्दसि श्ना, तस्य शानजादेशः; मिदान । 'मिदेर्गुणः' इति प्रतिषेधविषये विधीयमानो गुणो न भवति, पुनः शित्करणेन 'सार्वधातुकमपित्' इत्यस्यापि पुनः प्रवृत्तेरिति केचित् । नेति वयम्; यथैव व्यत्ययेन श्ना भवति, एवं गुणविषये इकारो भविष्यति ॥ ८३ ॥

**भावबोधिनी**

आदि की चारों धातुओं में 'उत्' की इत्संज्ञा करायी गयी है अतः सौत्र ( सूत्रपठित ) भी इन चारों धातुओं के क्र्यादिगणीय तथा अन्य सभी कार्य [ 'उदितो वा' सूत्र से इट् विकल्प आदि ] होते हैं, यह पाठ केवल विकरण के लिये नहीं है – ऐसा ज्ञात होता है । ८२ ॥

हल् = व्यंजन से पूववर्ती श्ना प्रत्यय का शानच् आदेश होता है 'हि' परे रहते । उदा०—मुषाण । [ मुष् + लोट् सिप्, "सेर्ह्यपिच्च" ( पा. सू. ३.४.८७ ) से 'सि' का 'हि' आदेश—मुष् + हि, "क्र्यादिभ्यः श्ना" से श्ना प्रत्यय, हल् से परे होने से श्ना का शानच् - आन आदेश—मुष् आन + हि, णत्व, "अतो हेः" सूत्र से हि का लोप शेष पूर्ववत् । ]

हल् = व्यञ्जन से परे हो—इसका क्या प्रयोजन है ? क्रीणीहि । [ क्री + लोट् = हि, श्ना, क्री + ना + हि, "ई हल्यघोः" ( पा. सू. ६.४.११४ ) से 'आ' का 'ई' 'न' का णत्व—क्रीणीहि । यहाँ हल् से परे नहीं है । अतः शानच् नहीं होता है । ] 'हि' परे रहने पर—इसका क्या प्रयोजन है—मुष्णाति [ मुष् + लट् = ति, श्ना—मुष् + ना + ति, यहाँ 'हि' परे नहीं होने से शानच् नहीं होता है । ]

[ यद्यपि 'श्ना' का प्रकरण है अतः स्थानी रूप से यही समझ लिया जाता तथापि ] 'श्नः' [ = श्ना का ] यह स्थानी का निर्देश आदेश का ज्ञान करने के लिये है अर्थात् 'श्ना' स्थानी है और शानच् उसका आदेश है—इसके

**७०३. छन्दसि शायजपि ॥ ८४ ॥ (३४३२)**

**छन्दसि विषये श्नः शायजादेशो भवति, शानजपि । गृभाय जिह्वया मधु ( ऋ० ८.१७.५ ) । शानचः खल्वपि-'बधान देव सवितः' ( वाज० सं० १.२५ ) ॥**

**७०४. व्यत्ययो बहुलम् ॥ ८५ ॥ (३४३३)**

**यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति । व्यतिगमनं**

**न्यासः**

भूत्; इतरथा ह्ययं गुणः प्रतिषेधविषय आरभ्यमाणो यथेह भवति—मेध्यतीति, तथेहापि स्यात्—मिदान इति । पुनः शित्करणे तु 'सार्वधातुकमपित्' इति ङित्त्वमपि पुनः प्रवर्त्तते । तेन मिदेः प्रतिषेधविषयेऽपि गुण आरभ्यमाण इह न भवति ॥ ८३ ॥

**छन्दसि शायजपि** ॥ अत्रापि चित्-शित्करणयोः पूर्वोक्तमेव प्रयोजनम् । **गृहाणेति** । 'ग्रह उपादाने' लोट्, सिप्; हिः, ततः श्ना, तस्य शानच्, हेर्लुक्, ग्रह्यादिना संप्रसारणम् । **गृभायेति** क्वचित् पाठः । तत्र 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । **बधानेति** । 'बन्ध बन्धने', 'अनिदिताम्' इति नलोपः । शेषं पूर्ववत् ॥ ८४ ॥

**व्यत्ययो बहुलम्** ॥ **यथायथमिति** । यो यस्यात्मीयो विषयः=यथायथम् । यस्मिन् यस्मिन् विषय इत्यर्थः । किं पुनरयं व्यत्ययो नामेत्याह—**व्यतिगमनं व्यत्यय इति** । तमेव व्यत्ययं स्पष्टीकर्त्तुमाह—**व्यतिकर इत्यादि** । **क्वचिदित्यादिना** व्यत्ययस्य प्रकारान्तरं दर्शयति । **भेदतीति** । श्नमो विषये शपो विधानम् । **मरतीत्यत्रापि** शविषये शप्, परस्मैपदञ्च व्यत्ययेनैव । **म्रियत इति** । पूर्ववद्रिङ्, तस्येयङ् ।

**पदमञ्जरी**

**छन्दसि शायजपि** ॥ **गृभायेति** । ग्रहिज्यादिसूत्रेण संप्रसारणम्, 'हृग्रहोर्भश्छन्दसि' ( वा० ९१८ ) इति हकारस्य भकारः । **बधानेति** । 'बन्ध बन्धने' ( धा० पा० १५०८ ), 'अनिदिताम्' इति नलोपः ॥ ८४ ॥

**व्यत्ययो बहुलम्** ॥ **यथायथमिति** । स्वस्मिन् स्वस्मिन्विषये इत्यर्थः । **व्यतिगमनं व्यत्यय इति** । व्यतिपूर्वादिणो भावे 'एरच्' । अन्योऽन्यविषयावगाहनमित्यर्थः । **क्वचिदित्यादिना** व्यत्ययस्य प्रकारं दर्शयति । **न मरतीति** । परस्मैपदमप्यत्र व्यत्ययेन । **नेषत्विति** । नयतेर्लोटि शप्सिपौ । **तरुषेमेति** । तरतेर्विध्यादौ लिङ्, तथा च 'तरेमेति प्राप्ते' इति वृत्तिः; इतरथा 'तीर्यास्मेति प्राप्ते' इति वक्तव्यं स्यात्, ततश्शप् सिप् उ प्रत्यय

**भावबोधिनी**

लिये 'श्नः' का उल्लेख है, अन्यथा शानच् यह एक दूसरा ही प्रत्यय सभी धातुओं का विषय ज्ञात होने लगता । [ अर्थात् क्र्यादिगणपठित तथा अन्य सभी से 'शानच्' यह प्रत्यय होने लगता । 'श्नः' इस षष्ठ्यन्त स्थानी का उल्लेख कर दिया गया तब सभी शंकायें समाप्त हो गयीं ] ॥ ८३ ॥

वेदविषय में 'श्ना' का 'शायच्' आदेश भी होता है और शानच् भी अर्थात् दोनों होते हैं । उदा०—गृभाय जिह्वया मधु । [ ग्रह् + लोट् = सिप् = हि, 'श्ना' और इसका 'शायच्' = आय आदेश, ''ग्रहिज्यावयिव्यधिः०' ( पा. सू. ६.१.१६ ) से रेफ का सम्प्रसारण ऋ, 'अ' का पूर्वरूप—गृ ह् आय + हि, हि का लुक् । ''हृग्रहोर्भश्छन्दसि'' से 'ह्' का 'भ्'—गृभाय ।] शानच् भी होता है—बधान पशुम् । [ बन्ध् + लोट्, सिप् = हि, 'श्ना' का शानच् = आन, कित् होने से ''अनिदितां हल उपधायाः क्ङिति'' ( पा. सू. ६.४.२४ ) से अनुनासिक का लोप—बध् + आन + हि, हि का लुक्—बधान । ] ॥ ८४ ॥

अपने अपने विषय में 'शप्' आदि विकरणों का विधान किया जा चुका है उनका वेदविषय में बहुलरूप से व्यत्यय होता है । व्यतिगमन = व्यत्यय = व्यतिहार, (१) दूसरे विषय में विधान हो जाना, (२) कहीं दो विकरण होना, (३) कहीं तीन विकरण होना । [ अर्थात् जहाँ जिसका विषय नहीं है वहाँ उसकी भी प्रवृत्ति होना, कहीं दो विकरण होना और कहीं तीन विकरण होना—यह व्यत्यय समझना चाहिये । न्यासकार ने व्यत्यय का 'व्यतिहार' न

**व्यत्ययः = व्यतिहारः, विषयान्तरे विधानम्—क्वचिद् द्विविकरणता, क्वचित् त्रिविकरणता च। 'आण्डा शुष्मस्य भेदति ( ऋ० ८.४०.११ )। भिनत्तीति प्राप्ते। स च न मरति। न म्रियत इति प्राप्ते'[1]।**

**द्विविकरणता—इन्द्रो वस्तेन नेषतु। नयत्विति प्राप्ते।**

**त्रिविकरणता—इन्द्रेण युजा तरुषेम वृत्रम् ( ऋ० ७.४८.२)। तरेमेति ( तीर्यास्मेति ) प्राप्ते। बहुलग्रहणं सर्वविधिव्यभिचारार्थम्।**

**न्यासः**

**नेषत्विति**। नयतेर्लेट, तिप्, 'एरुः', सिप्, तस्मात् परः शप्, धातोर्गुणः, सिपः षत्वम्।

त्रिविकरणतायास्तूदाहरणम्—**तरुषेम दृषदमिति**। तरतेराशिषि लिङ्, मस्, 'नित्यं ङितः' इति वस्मसोः सलोपः, यासुट्, 'छन्दस्युभयथा' इति सार्वधातुकत्वाल्लिङ उप्रत्ययः, तस्मात् परः सिप्, तस्मादपि परोऽङ्, धातोर्गुणः, सिपः षत्वम्, 'अतो येयः' इतीयादेशः। अङा सह 'आद्गुणः', 'लिङः सलोपोऽनन्तस्य' इति सलोपः। 'लोपो व्योर्वलि' इति यलोपः।

अथ 'व्यत्ययः' इत्येतावत् कथं नोक्तम्, किं बहुलग्रहणेन, पूर्वसूत्राद्ध्यपि शब्दस्यानुवृत्तौ सत्यां छन्दसि व्यत्ययो भवति, अपिशब्दाद् यथाप्राप्तञ्चेति, एवमभिसम्बन्धे क्रियमाणेऽन्तरेणापि बहुलग्रहणं सर्वमिष्टं सिध्यत्येवेत्यत आह—**बहुलग्रहणमित्यादि**। सर्वस्य प्रकृतस्याप्रकृतस्य विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थं बहुलम्, इतरथा ह्यसति बहुलग्रहणे प्रकृतानामेव स्यादीनां शानच् पर्यन्तानां स्यात्, नान्येषां श्नम्प्रभृतीनाम्,

**पदमञ्जरी**

इति त्रयो विकरणाः, धातोर्गुणः। तरुष मस्, ततो यासुट्, 'लिङः सलोपोऽनन्त्यस्य' 'नित्यं ङितः' 'अतो येयः' यलोपः, 'आद्गुणः' तरुषेम।

बहुलग्रहणमनर्थकम्, पूर्वसूत्रादपिशब्दस्यानुवृत्तौ छन्दसि व्यत्ययोऽपि भविष्यति, अपिशब्दाद्यथाप्राप्तञ्चेति सर्वमिष्टं सिद्धचति। अत आह—**बहुलग्रहणमिति**। सर्वस्य प्रकृतस्याप्रकृतस्य च विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थमित्यर्थः।

**भावबोधिनी**

लिखकर 'व्यतिकर' अर्थ लिखा है ] उदा०—आण्डा शुष्मस्य [ शुष्णस्य ] भेदति। 'भिनत्ति' यह प्राप्त होता है। भिदिर् यह रुधादिगणीय है श्नम् का विषय है किन्तु 'शप्' होता है। अतः गुण होता है। लोक में 'भिनत्ति' बनता है। ] स च न मरति। न 'म्रियते' यह प्राप्त होता है। [ 'मृङ्' तुदादिगणीय है। 'श' प्राप्त है किन्तु शप् होता है और आत्मनेपद के स्थान पर परस्मैपद भी व्यत्यय से होता है। शप् करने पर गुण, रपर होकर—मरति। 'म्रियते' में 'मृ' + श = अ + त, "रिङ् शयक्लिङ्क्षु" सूत्र से ऋ का 'रिङ्' होने पर म्रि + अ + त, 'इ' का इयङ्, टि का एत्व—म्रियते—यह होता है। ]

दो विकरण होते हैं—'इन्द्रो वस्तेन नेषतु। [ नी + लोट् = तिप् यहाँ शप् और सिप् दो विकरण होते हैं। यह सिप् मध्यमपुरुष एकवचन का नहीं है, "सिब्बहुलं लेटि" से होने वाला विकरण है—नी स् + अ + ति, गुण, षत्व, "एरु" से 'इ' का 'उ'—नेषतु। ] 'नयतु'—यह रूप प्राप्त है।

तीन विकरण होते हैं—इन्द्रेण युजा तरुषेम वृत्रम्। यहाँ 'तरेम' यह प्राप्त है। [ तॄ + लिङ् मस्, "नित्यं ङितः" सूत्र से 'स्' का लोप, "यासुट् परस्मैपदेषूदात्तो ङिच्च" सूत्र से यास् आगम, "छन्दस्युभयथा" ( पा. सू. ३.४.११७ ) से सार्वधातुक मानकर 'उ' विकरण, इसके बाद 'सिप्' विकरण, इसके बाद शप्—तृ + उ + स् + अ + यास् + म। ऋ का गुण, रपर, षत्व, "लिङः सलोपोऽनन्त्यस्य" से स्लोप, 'अतो येयः' से 'या' का इय्—तरुष + इय् + म, "लोपो व्योर्वलि" से 'य्' लोप, "आद्गुणः" से गुण—तरुषेम।

१. 'ताश्चिन्नु न मरन्ति' ( ऋ० १.१९१.१२ ) न म्रियन्ते इति प्राप्ते। इति वा पाठः उस्मानिया संस्करणे।

**सुप्तिङुपग्रहलिङ्गनराणां कालहल्चस्वरकर्तृयङां च ।**

**न्यासः**

इष्यते च तेषामपि । स बहुलग्रहण एव सति लभ्यते । एतमेवार्थं दर्शयितुमाह—**सुप्तिङुपग्रहेत्यादि**। तत्र १. **सुपां व्यत्ययः**—धुरि दक्षिणाया इति । धुरि दक्षिणायामिति प्राप्ते सप्तम्या विषये षष्ठी । २. **तिङाम्**—ये यूपाय तक्षति । तक्षन्तीति प्राप्ते । ३. **लादेशव्यङ्ग्यक्रियाविशेषो मुख्य उपग्रहः**। इह तु तद्वयक्तिनिर्मित्तत्वात् परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्त्तते । एतदुक्तं भवति—आत्मनेपदपरस्मैपदयोर्व्यत्यय इति । स ब्रह्मचारिणमिच्छते, प्रतीतमन्यदर्ग्नि युध्यति । इच्छति, युध्यत इति प्राप्ते । ४. **लिङ्गस्य**—मधोस्तृप्ता इवासत इति । मधुन इति प्राप्ते । ५. **नरस्य**=प्रथमपुरुषादेः—अथोपचारैर्दशभिर्वियूया इति । वियूयादिति प्रथमपुरुषविषये मध्यमपुरुषः, 'यु मिश्रणे', विपूर्वादाशिषि लिङ्, सिप्, यासुट्, 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'स्कोः संयोगाद्योरन्ते च' इति सलोपः । ६. **कालस्य**—सोऽग्नीनाधास्यमानेन । लुटो विषये लृट्, कालशब्दोऽत्र कालविषयत्वाल्लुडादिप्रत्ययेषु वर्त्तते । न हि मुख्यकालस्य व्यत्ययः शक्यते कर्त्तुम् । ७. **हलाम्**—शुफितं मुखबीजम् । शुभितमिति प्राप्ते । 'शुभ शुम्भ शोभार्थे', निष्ठा, इट्, भकारस्य फकारः । ८. **अचाम्**—उपगायन्तु मां पत्नयो गर्भिणयः । पत्न्यो गर्भिण्य

**पदमञ्जरी**

एवमर्थे बहुलग्रहणे सति यदिष्टं सिद्धयति तत्श्लोकेन दर्शयति—**सुप्तिङुपग्रहेत्यादि**। तत्र १. **सुपां व्यत्ययः**—धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । २. **तिङाम्**—चषालं ये अश्वयूपाय तक्षति ( ऋ० १.१६२.६ )। तक्षन्तीति प्राप्ते । ३. लादेशव्यङ्ग्यः क्रियासाधनविशेषः स्वार्थपरार्थत्वव्यक्तवाक्त्वादिको यः स मुख्य उपग्रहः । यथोक्तम्—

य आत्मनेपदाद् भेदः क्वचिदर्थस्य गम्यते ।
अन्यतश्चापि लादेशान्मत्यन्ते तमुपग्रहम् ॥ ( वा० प० ३.१२.१ ) इति ।

आत्मनेपदाद्धेतोरित्यर्थः । एवमन्यतश्चापि लादेशादिति, इह तु तद्वयक्तिनिमित्तत्वात्परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्त्तते । स ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । ऊर्मिर्युध्यति, युध्यत इति प्राप्ते । ४. **लिङ्गम्**—मधोस्तृप्ता इवासते, मधुन इति प्राप्ते । भाषायामपि मधुशब्दं पुंल्लिङ्गं प्रयुञ्जते—'मधूंश्च बिभ्रति रम्यसुरविटपिन इति', **तच्चिन्त्यम्**। ५. **नरः**=पुरुषः—'अधा स वीरैर्दशभिर्वियूयाः ( ऋ० ७.१०४.१५ ), वियूयादिति प्राप्ते, 'यु मिश्रणे' ( धा० पा० १०३३ ) विपूर्वः, आशिषि लिङ् । कालवाची प्रत्ययः ६. कालः—श्वोऽग्नीनाधास्यमानेन, लुटो विषये लृट् । ७. **हल्**—"त्रिष्टुभौजः सुफितमुग्रवीरम् ( तै० सं० ४.४.१२.२ ) 'शुभ शोभार्थे' ( धा० पा० १३२१ ) भकारस्य फकारः । **आश्वलायनसूत्रे तैत्तिरीये च** भकार एव पठ्यते ।

**भावबोधिनी**

**विमर्श**—'तरुषेम' इसकी प्रक्रिया के विषय में न्यास और पदमंजरीकार में कुछ मतभेद है । न्यासकार इसे आशीर्लिङ का रूप मान कर "छन्दस्युमयथा" इस सूत्र के अनुसार सार्वधातुकत्व-निमित्तक कार्य करते हैं । और 'शप्' न करके 'अङ्' ( वास्तव में ) अट् यह विकरण करते हैं । परन्तु पदमंजरीकार इसे विधि-लिङ् का रूप मानते हैं । और 'अङ्' यह न मान कर सामान्य विकरण 'शप्' करते हैं । वास्तव में पदमंजरीकार का मत ही उचित है क्योंकि काशिकाकार ने 'तरुषेम' के स्थान पर 'तरेम' यही लिखा है । यह विधिलिङ् में होता है । आशीर्लिङ् में तो—"तीर्यास्म' यह होता है । अतः मूलानुरोध से भी विधिलिङ् उचित है । सिद्धान्तकौमुदीकार ने तो स्पष्टतया लिख दिया है—"तरेमेत्यर्थः, तरतेर्विध्यादौ लिङ् ।" ( सि. कौ. सू. ३४३३ )

[ अनु० ] [ पूर्ववर्ती सूत्र से 'अपि' की अनुवृत्ति करके 'छन्दसि व्यत्ययोऽपि' ऐसा मान लिया जाता । क्योंकि व्यत्यय के साथ-साथ यथाप्राप्त कार्य भी हो ही जाता । पुनः 'बहुलम्' इसको लिखने का क्या प्रयोजन ? ] 'बहुल'

**व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्धयति बाहुलकेन ( म० भा० ३.१.८५ ) ॥**

**न्यासः**

इति प्राप्ते। ईकारस्य इकारः। ९. **स्वराणाम्**—'अन्तोऽव्त्या' इत्यन्तोदात्तत्वं यथेह भवति—अश्ववतीं सोमवतीं प्रजावतीं सूर्यवतीं दृषदमिति, तथेहापि स्यात्—अश्ववती सोमवती प्रजावती। व्यत्यये तु सत्यश्वशब्दस्य प्रकृतिस्वर एव भवति। कः पुनः प्रकृतिस्वरः ? आद्युदात्तत्वम्। तथा हि ङीपोऽनुदात्तत्वं पित्त्वात्। मतुपोऽप्यत एव। 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन्प्रत्ययान्तरत्वाद् नित्स्वरेणाद्युदात्तोऽश्वशब्दः। १०. **कर्तृ-ग्रहणम्**—कारकोपलक्षणार्थम्। कारकाणां व्यत्यय इत्यर्थः। आसादयद्भिरुभयोर्वेदाः। आसादयद्भ्यः इति प्राप्ते सम्प्रदानस्य करणत्वम्। ११. **यङिति** प्रत्याहारग्रहणम् – 'सार्वधातुके यक्' इति यक आरभ्य 'लिङ्याशिष्यङ्' इत्यतो ङकारेण। यगादीनां प्रत्ययानामङ्पर्यन्तानां व्यत्यय इत्यर्थः। मुण्डा शुष्मस्य भेदतीति। श्नमि प्राप्ते शप् एषां शप्प्रभृतीनां व्यत्ययमिच्छति **शास्त्रकृत्**=पाणिनिः। **सोऽपि च सिध्यति बाहुलकेन**। अपिशब्दात् स्यादिव्यत्ययः। बहुलस्य भावो बाहुलकम्, द्वन्द्वमनोज्ञादित्वाद् वुञ्। चशब्दो हेतौ। यस्मादेवं प्रकृतानामप्रकृतानाञ्च बाहुलकेन व्यत्ययः सिध्यति तस्माद् बहुलग्रहणं कृतमिति ॥ ८५ ॥

**पदमञ्जरी**

८. **अच्**–उपगायन्ति मा पत्नयो गर्भिणयः, दीर्घस्य ह्रस्वः। ९. **स्वरव्यत्ययः**—'परादिच्छन्दसि बहुलम्' ( ६.२.१९९ ) इत्यत्र वक्ष्यते। १०. कर्तृशब्दः कारकमात्रस्योपलक्षणार्थः, तद्वाचिनां शब्दानां व्यत्यय इत्यर्थः। विभक्तीनां व्यत्यय इति यावत्। ११. **यङाम्**–यङिति प्रत्याहारः यङो यशब्दादारभ्य 'लिङ्याशिष्यङ्' इति ङकारेण, तेषां व्यत्ययः—आण्डा शुष्मस्य भेदतीत्यादिना **वृत्तावेव** दर्शितः। एषां सुप्रभृतीनां व्यत्ययमिच्छति **शास्त्रकृत्**=पाणिनिराचार्यः। सोऽपि=तथाविधो व्यत्ययो बाहुलकेन सिद्धयति। बहुलस्य भावो बाहुलकम्, **मनोज्ञादित्वाद्वुञ्**। तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं यद्बह्वर्थादानम्। च-शब्दो हेतौ। यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिद्धयति, तस्माद्बहुलग्रहणं कृतमित्यर्थः॥ ८५ ॥

**भावबोधिनी**

इसका **ग्रहण** सभी अर्थात् प्रकृत तथा अप्रकृत सभी विधियों का व्यत्ययरूप व्यभिचार का ज्ञान कराने के लिये है। [ यदि 'बहुलम्' न होता तो केवल प्रकृत विधियों का ही व्यभिचार होता, सबका नहीं हो पाता। अब सबका व्यभिचार दिखाने के लिये कारिका प्रस्तुत करते हैं— ]

( १ ) सुप्, ( २ ) तिङ्, ( ३ ) उपग्रह=आत्मनेपद —परस्मैपद, ( ४ ) लिङ्ग, ( ५ ) नर=प्रथमपुरुष, मध्यमपुरुष, उत्तमपुरुष, ( ६ ) काल=वर्तमानादि, ( ७ ) हल्, ( ८ ) अच्, ( ९ ) स्वर—उदात्तादि, ( १० ) कर्तृ=कारक=विभक्ति, ( ११ ) यङ्, यह प्रत्याहार है जो "सार्वधातुके यक्" ( ३।१।६७ ) से 'य' से लेकर 'लिङ्याशिष्यङ्' ( ३।१।८६ ) के 'ङ्' तक मिलाकर बनता है—इनका व्यत्यय शास्त्रकार पाणिनि चाहते हैं। यह भी 'बहुलम्' के द्वारा सिद्ध हो जाता है। [ इसी के लिये सूत्र में 'बहुलम्' का ग्रहण है।

**विमर्श**—काशिकाकार ने भाष्योक्त संग्रह की कारिका के उदाहरण नहीं दिये। उन्हें इस प्रकार समझना चाहिये—

( १ ) सुप् का व्यत्यय—"धुरि दक्षिणायाः।" दक्षिणायाम् यह प्राप्त है, किन्तु सप्तमी के विषय में षष्ठी होती है। ( २ ) तिङ् का व्यत्यय—'ये यूपाय तक्षति।' 'तक्षन्ति' यह प्राप्त है, बहुवचन के विषय में एकवचन है। ( ३ ) उपग्रह का व्यत्यय—'ब्रह्मचारिणमिच्छते।' 'इच्छति' इस परस्मैपद की प्राप्ति में आत्मनेपद हुआ है। ( ४ ) लिङ् का व्यत्यय —"मधोस्तृप्ता इवासत।" यहाँ 'मधुनः' नपुंसकलिङ्ग के विषय में 'मधोः' यह पुल्लिङ्ग हुआ है। ( ५ ) नर=प्रथमपुरुषादि का व्यत्यय—"अधा स वीरैर्दशभिर्वियूयाः।" 'वियूयात्' यह प्रथमपुरुष प्राप्त है, मध्यमपुरुष हुआ है। ( ६ ) काल का व्यत्यय—"सोऽग्नीनाधास्यमानेन।" यहाँ लुट् के विषय में लृट् है। ( ७ ) हलों का व्यत्यय—"शुफितं मुखबीजम्" यहाँ 'शुभितम्' प्राप्त है, 'भ्' का 'फ्' हुआ है। ( ८ ) अचों का व्यत्यय—"उपगायन्तु

### ७०८. लिङ्याशिष्यङ् ॥ ८६ ॥ (३४३४)

**आशिषि विषये यो लिङ् तस्मिन्परतश्छन्दसि विषयेऽङ् प्रत्ययो भवति। शपोऽपवादः। 'छन्दस्युभयथा' ( ३.४.११७ ) इति लिङः सार्वधातुकसंज्ञाप्यस्ति।**

**स्थागागमिवचिविदिशकिरुहयः प्रयोजनम्। स्था—उपस्थेयं वृषभं तुग्रियाणाम्। गा—अञ्जसा सत्यमुपगेयम् ( तै० सं० १.२.१०.२। गमि—गृहं गमेम ( ऋ० १०.४०.११ ) जानतो गृहान्। वचि–मन्त्रं**

**न्यासः**

**लिङ्याशिष्यङ्** ॥ **शपोऽपवाद इति**। ननु चाशिषि यो लिङ् विहितस्तस्य 'लिङाशिषि' इत्यार्धधातुकसंज्ञा, सार्वधातुके च शब् विहितः, तत् कथं शपोऽपवाद इत्याह—**छन्दस्युभयथेत्यादि**।

स्थादिभ्य एवात्र दृश्यते, नान्येभ्य इत्यभिप्रायेणाह—**स्थागागमीत्यादि। उपस्थेयमिति**। उपपूर्वात्तिष्ठतेराशिषिलिङ्, मिप्, तस्य 'तस्थस्' इत्यादिनाऽमादेशः, यासुट्, उभयसंज्ञात्वेन सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः। 'अतो येयः' इतीयादेशः, 'आद् गुणः' 'आतो लोप इटि च' इत्याकारलोपः। क्वचित् **उपस्थेषमिति** पाठः। तत्रार्द्धधातुकत्वात् सलोपाभावः, वलि यलोपः। **उपगेयमिति**। 'गै शब्दे' 'आदेच उपदेशेऽशिति' इत्यात्त्वम्। शेषं पूर्ववत्। **गमेम इति**। गमेः परस्य लिङो मस्, 'नित्यं ङित' इति सलोपः। यासुडादि सर्वं पूर्ववत्। **वोचेयमिति**। 'वच भाषणे'। 'सिप्, तस्याम्, अङ्, अङि परतः 'वच उम्', 'या' इत्यस्य इय्, उभयत्र 'आद् गुणः'। **विदेयमिति**। 'विद ज्ञाने'। **शकेयमिति**। 'शक्लृ शक्तौ'। **आरुहेयमिति**। 'रुह जन्मनि', इयादेशादि सर्वं पूर्ववत्।

**पदमञ्जरी**

**लिङ्याशिष्यङ्** ॥ **शपोऽपवाद इति**। लिङाशिषीत्यार्द्धधातुकत्वात्कथमत्र शपः प्राप्तिरित्यत आह—**छन्दस्युभयथेति**। शब्ग्रहणं चोपलक्षणम्। शकेः श्नोरपवादः, स्थादिष्वेवायमङ् प्रायेण दृश्यत इत्याह—**स्थागागमीत्यादि। उपस्थेयमिति**। उपपूर्वात्तिष्ठतेराशिषि लिङ्, मिपोम्भावः, यासुटस्सार्वधातुकत्वात् 'लिङः

**भावबोधिनी**

मां पत्नयो गर्भिणयः।' यहाँ दीर्घ ई का ह्रस्व हुआ है। 'मित्र वयं च सूरयः' यहाँ 'मित्रा' यह दीर्घ प्राप्त है, इसके प्रसङ्ग में ह्रस्व हुआ है। ( ९ ) स्वर-व्यत्यय—"अश्ववतीं सोमवतीं प्रजावतीं सूर्यवतीं दृषदम्" यहाँ पर "अन्तोऽवत्याः" ( पा. सू ६.१.२२० ) से जैसे अन्तोदात्त होता है वैसे ही—"अश्ववती सोमवती प्रजावती" यहाँ भी प्राप्त है किन्तु व्यत्यय के कारण 'अश्व' शब्द का प्रकृतिस्वर ही रहता है। ( १० ) कर्तृ = कारकों का व्यत्यय—"आसादयद्भिरुभयोर्वेदाः।' 'आसादयद्भ्यः' इस सम्प्रदान की प्राप्ति में करण हुआ है। ( ११ ) यङ्—प्रत्याहार ऊपर बताया जा चुका है, उसके व्यत्यय के उदा० 'आण्डा शुष्मस्य भेदति' यहाँ श्नम् के विषय में शप् हुआ है। ये सभी कार्य 'बहुल' से होते हैं अतः सूत्र में 'बहुलम्' का ग्रहण किया गया है ॥ ८५ ॥

आशीः के विषय में जो लिङ् होता है उसके परे रहते 'अङ्' प्रत्यय होता है वेदविषय में। यह 'शप्' का अपवाद है। [ आशीर्लिङ् तो आर्धधातुक होता है, अतः 'शप्' की प्राप्ति कैसे ? ] "छन्दस्युभयथा" ( ३.४.११७ ) से लिङ् की आर्धधातुक के साथ-साथ सार्वधातुक संज्ञा भी होती है। [ अतः शप् की प्राप्ति है। उसका अपवाद यह 'अङ्' है। ]

❀ स्था, गा, गमि, वचि, वदि, शकि और रुहि—धातुयें अङ् करने की प्रयोजन हैं, अर्थात् इनमें अङ् होता है। ❀ उदा० स्था—उपस्थेयं वृषभं तुग्रियाणाम्। [ उपपूर्वक स्था + लिङ् ( आशीः ) = मिप् = अम् यासुट्, 'छन्दस्युभयथा' के आधार पर यह सार्वधातुक है। अतः 'लिङः सलोपोऽनन्त्यस्य' से 'स्' का लोप—उप स्था + या + अम्, अङ्, "आतो लोप इटि च" से आ का लोप, "अतो येयः" से 'या' का 'इय्' उप स्थ् अ + इय् अम्, गुणसन्धि—

**वोचेमाग्नये' ( ऋ० १.७४.१ )। विद-विदेयमेनां मनसि प्रविष्टाम् ( अथर्व० १९.४.२ )। शकिव्रतं चरिष्यामि तच्छकेयम् ( आश्व० श्रौ० ८.१४.१ )। रुहि-स्वर्गं लोकमारुहेयम्।**

**❀ दृशेरग्वक्तव्यः ❀ ( म० भा० ३.१.८६ वा० ३ )। पितरं दृशेयं मातरं च ( ऋ० १.२४.१ )॥**

## ७०६. कर्मवत्कर्मणा तुल्यक्रियः ॥ ८७ ॥ (२७६६)

**कर्मणि क्रिया = कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवति ( म० भा० )।**

**न्यासः**

**दृशेरग् वक्तव्य इति**। अङि हि सति 'ऋदृशोऽङि गुणः' इति गुणः स्यात्। तथा च दृशेयमिति न सिध्येत्। अकि तु सति कित्त्वाद् गुणाभावो भवति। तस्मादग् वक्तव्यः = व्याख्येयः। व्याख्यानं तु बहुलग्रहणानुवृत्तेर्वक्तव्यम् ॥ ८६ ॥

**कर्मवत् कर्मणा तुल्यक्रियः ॥ कर्मवदिति**। 'तेन तुल्यं क्रिया चेद् वतिः', न तु 'तत्र तस्येव' इति; तुल्यक्रिय इति प्रथमानिर्देशात्। अन्यथा तुल्यक्रिये, तुल्यक्रियस्येति सप्तम्या षष्ठ्या वा निर्देशं कुर्यात्। तुल्या क्रियाऽस्येति तुल्यक्रियः। केन तुल्यक्रियः ? कर्मणा। सापेक्षत्वेऽपि गमकत्वात् समासः। तुल्यशब्दोऽयं सदृशवचनः। न च

**पदमञ्जरी**

सलोपोऽनन्त्यस्य', अङि 'आतो लोप इटि च', 'अतो येयः', 'आद्गुणः'। **एवमुपगेयमिति**। **गमेमेति**। मस्। **वोचेमेति**। अङ्, 'वच उम्', यासुट्, इयादेशः, वलि लोपः। **दृशेरग्वक्तव्य इति**। अङि हि सति 'ऋदृशोऽङि' इति गुणस्स्यात् ॥ ८६ ॥

**कर्मवत् कर्मणा तुल्यक्रियः**। कर्मणा तुल्यं वर्त्तते इति कर्मवत् 'तेन तुल्यम्' इत्यादिना वतिः, न तु 'तत्र तस्येव' इति; तुल्यक्रिय इति प्रतियोगिनि प्रथमानिर्देशात्। अन्यथा तुल्यक्रिये तुल्यक्रियस्येति वा निर्द्देश्यं स्यात्। तथा हि वाक्ये तावद्यतो वतिर्भवति, यश्च प्रतियोगी-उभाभ्यामपि ताभ्यां षष्ठीसप्तम्यौ भवतः, विप्रस्येवास्य

**भावबोधिनी**

उपस्थेयम्। ] गा—का उदा० सत्यमुपगेयम्। [ उप 'गै' ऐ का आत्व गा + लिङ् ( आशीः ), यहाँ सारी पूर्वोक्त प्रक्रिया होती है। ] गमि—का उदा०—गमेम जानतो गृहान्। [ गम् + लिङ् = मस्, 'नित्यं ङितः' से स् का लोप, यासुट्, स् लोप, अङ्, 'या' का इय् गुण, य् लोप। ] वचि—का उदा०—मन्त्रं वोचेमाग्नये। [ वच् + लिङ् = मस्, सलोप, अङ्, ''वच उम्'' से 'उम्', व उ च् अ + म, यासुट्, सलोप, या का इय् गुण, सलोप—वोचेम। [ न्यासकार ने ,वोचेयम्' यह उत्तमपुरुष एकवचन का रूप लिखा है किन्तु यह भाष्यविरुद्ध है। साथ ही, 'आग्नये' यह भी दीर्घ कल्पित करना पड़ेगा। अतः बहुवचन का ही रूप उचित है—वोचेम + अग्नये, सवर्णदीर्घ हो जाता है। ] विद्—का उदा० विदेयमेनां मनसि प्रविष्टाम्। [ विद् + लिङ् ( आशीः ) = मिप् = अम्, अङ्, यासुट् स् लोप, 'या' का 'इय्', गुण—विदेयम्। ] शकि—का उदा०—व्रतं चरिष्यामि तच्छकेयम्। [ शक्लृ 'लृ' की इत्संज्ञा लोप, शक् + लिङ् ( आशीः ) = मिप् = अम्, अङ्, यास् आदि सभी पूर्वोक्त कार्य होते हैं—शकेयम्। ] रुहि—का उदा० स्वर्गं लोकमारुहेयम्। [ आङ् + रुह + लिङ् ( आशीः ) = मिप् = अम्, अङ्, यासुट् आदि सभी पूर्वोक्त कार्य होते हैं। ]

❀ दृश् से अक् कहना चाहिये। ❀ उदा० पितरं च दृशेयं मातरं च। [ दृश् + लिङ् ( आशीः ) = मिप् = अम्—दृश् + अम्, अक् करने पर कित् होने से गुण नहीं होता है, अङ् करने पर 'ऋदृशोऽङि गुणः'' सूत्र से गुण प्रसक्त होता है, वह न हो, इसके लिये दृश् से अक् का विधान है—दृश् + अ + अम् यासुट् इय् और गुण आदि सभी पूर्वोक्त कार्य करने पर—दृशेयम्—बनता है। ] ॥ ८६ ॥

कर्म में रहनेवाली क्रिया 'कर्म' है, कर्म में रहनेवाली क्रिया के तुल्य क्रियावाला कर्ता कर्मवद् होता है। जिस कर्म के कर्ता हो जाने पर भी उसी प्रकार क्रिया लक्षित होती है, जैसी कि कर्म में है, वह कर्ता कर्मवत् होता है =

**यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते, यथा कर्मणि, स कर्ता कर्मवद्भवति=कर्माश्रयाणि कार्याणि प्रतिपद्यते ।**

**न्यासः**

साधनस्य कर्मणः क्रियया सादृश्यमुपपद्यते; अत्यन्तभेदात् । तथा हि—कर्मद्रव्यं परिनिष्पन्नम् । तद्विपरीतस्वभावा क्रिया । तस्मात् कर्मणेति कर्मशब्दोऽयं गौणस्तात्स्थ्यादुपचारेण कर्मस्थायां क्रियायां वर्त्तते, यथा—मञ्चाः क्रोशन्तीति, अत्र मञ्चशब्दः पुरुषेषु । उपचारस्तु कर्मस्थभावकानां कर्मस्थक्रियाणाञ्च कर्मवद्भावो यथा स्यात्, कर्तृस्थभावकानो कर्तृस्थक्रियाणाञ्च मा भूदित्येवमर्थः । एतत् सर्वं चेतसि कृत्वाह—**कर्मणि क्रिया कर्मेति** । एतेन कर्मशब्दोऽयं कर्मस्थक्रियावाचीत्याचष्टे । कर्मस्थक्रियावाचिनि च कर्मशब्दे यः सूत्रार्थः सम्पद्यते तं दर्शयितुमाह—**कर्मस्थयेत्यादि** । एवं स्थिते सूत्रार्थे तुल्यशब्दोऽयं साधारणवचन इति मन्यमानो यो देशयेद्—'यदि कर्मस्थया क्रियया तुल्यक्रियः साधारणक्रियः कर्त्ता कर्मवद् भवति तदा पचत्योदनं देवदत्त इत्यत्रापि स्यात्; यस्मादिहापि यासौ प्रधानक्रिया तामुद्दिश्य सर्वाणि कारकद्रव्याणि प्रवर्त्तन्ते, तया कर्मस्थया साधारणक्रियः कर्त्ता भवति, यथैव ह्यसावन्येषां कारकाणां सम्बन्धिनी तथा कर्त्तुरपि' इति, तं प्रत्याह—**यस्मिन् कर्मणीत्यादि** ।

**पदमञ्जरी**

शीलम्, मथुरायामिव पाटलिपुत्रे प्राकार इति; उभयोरपि सम्बन्धित्वाद्, आधारत्वाच्च । ततश्चोत्पन्नेऽपि वतौ प्रतियोगिनस्ते एव षष्ठीसप्तम्यावुपतिष्ठेते । तुल्यार्थयोगे तु या तृतीया सोपमानादेव भवति, नोपमेयात्; तुल्यशब्दस्योपमेयनिष्ठत्वात्, तद्यथा—चन्द्रेण तुल्यं मुखमिति । ततश्चोत्पन्नेऽपि वतावुपमेयात्प्रथमैवावतिष्ठते ।

कर्मणेति पारिभाषिकं कर्म गृह्यते, न लौकिकं क्रिया कर्म; तस्य हि ग्रहणे क्रियया तुल्या क्रिया यस्येति किमुक्तं स्यात् क्रियायाः; यया कयाचन क्रियया तुल्यत्वाद् ! अतस्साधनकर्मणो ग्रहणम् । तत्र साध्यसाधनयोरत्यन्तभेदान्मुख्येन कर्मणा क्रियायाः सादृश्यासम्भवात्कर्मशब्देन तत्स्था क्रिया लक्ष्यते । भवति हि तात्स्थ्यात्ताच्छब्द्यम्, यथा—मञ्चाः क्रोशन्तीति । तदेतदाह—**कर्मणि क्रिया कर्मेति** ।

विशेषणस्य वैयर्थ्यं न चेदानीं प्रसज्यते ।
कर्मणः क्रियया तुल्या न सर्वस्य क्रिया यतः ।। इति ।।

कर्मणः क्रियया तुल्यक्रियः, न साधनान्तरस्येत्येवं प्रतिपत्त्यर्थत्वादित्याह—**कर्मस्थया क्रियया तुल्यक्रिय इति** । तुल्यशब्दस्य नित्यसापेक्षात्वात्कर्मस्थया क्रिययेत्येतदपेक्षस्यापि सूत्रवद्बहुव्रीहिर्नानुपपन्नः । तुल्यशब्दोऽयमस्ति साधारणवचनः-एतौ तुल्यधनाविति, सादृश्यवचनस्तु प्रसिद्ध एव; तत्राद्यस्य ग्रहणे कर्मणेति यदि मुख्यवृत्तिस्तदा कर्त्तुः कर्मणश्च या साधारणी क्रिया, तत्र यः कर्त्ता कर्मणा सह साधारणक्रियः सकर्मकेषुः यः कर्त्तेत्युक्तं भवति । तत्र तुल्यक्रिय इत्यनर्थकम्, कर्मणेत्येव वाच्यं स्यात् । कर्मणा सह यः कर्त्ता प्रतिपाद्यत इत्यर्थः । अथ गौणवृत्तिस्तदायमर्थः-क्रियया हेतुना साधारणक्रियः । कया क्रियया ? कर्मस्थया क्रिययेति । एवमपि पचत्योदनं देवदत्त इत्यत्रापि प्राप्नोति, यासौ कर्मस्था विक्लित्तिरूपा क्रिया तया साधारणक्रियत्वात् । अतोऽस्मिन्पक्षेऽनिष्टप्रसङ्गः, प्रसिद्धतरश्च सदृशपर्यायस्तुल्यशब्द इति तस्यैव ग्रहणमिति दर्शयन्नाह—**यस्मिन्कर्मणीत्यादि** । अत्र तद्वद्यथाशब्दौ प्रयुञ्जानः 'सादृश्यवचनस्तुल्यशब्दः, न साधारणवचनः' इत्याचष्टे । **कर्तृभूत इति** । कर्त्तरि सम्पन्न इत्यर्थः । च्वेर्विकल्पितत्वादत्राभावः । अथ वा-कर्तृशब्दः कर्तृत्वे वर्तते, भूत इति 'भू प्राप्तौ' ( धा० पा० १८४४ ) इत्यस्य 'आ धृषाद्वा' ( धा० पा० १८०५ ) इति णिजभावे रूपम्, कर्तृत्वं प्राप्त इत्यर्थः । तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदेन सादृश्याभावात्कर्मवद्भावाभावः । एवमपि

**भावबोधिनी**

कर्म को मान कर होने वाले कार्यों को प्राप्त करता है। "कर्त्तरि शप्" ( पा. सू. ३.१.६८ ) से यहाँ अनुवृत्त 'कर्त्तरि' पद प्रथमान्त 'कर्त्ता' में बदल जाता है [ —कर्मणा तुल्यक्रियः कर्त्ता कर्मवत् भवति ]।

**'कर्तरि शप्' ( ३.१.६८ ) इति कर्तृग्रहणमिहानुवृत्तं प्रथमया विपरिणम्यते ।**

**न्यासः**

तद्वद्-यथाशब्दौ सादृश्यार्थौ प्रयुञ्जानः 'सदृशवचनोऽयं तुल्यशब्दः, न साधारणवचनः' इत्याचष्टे । यस्मिन् कर्मणि कर्तृभूतेऽपि कर्त्रवस्थायां प्रतिपन्नेऽपि तादृशी क्रिया लक्ष्यते यादृशी कर्मावस्थायां स कर्त्ता कर्मवद् भवति । सादृश्यञ्च किञ्चिद् भेदाधिष्ठानमित्यसाधारण एवाधिश्रयणादिलक्षणः कर्तृव्यापारो गृह्यते, न तु साधारणो विक्लेदादिलक्षणः । स चासाधारणः पचत्योदनं देवदत्त इत्यत्र कारकान्तरव्यापारविसदृशो देवदत्तस्य कर्त्तुर्व्यापार इति न भवति कर्मवद्भावः । अथ वा—कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवतीत्युक्ते सदृशवचनस्तुल्य-शब्द इति मन्यमानो यो देशयेद्—'यद्येवम्, भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति, तथा हि यादृशी पात्रेष्ववयवविभागात्मिका क्रिया तादृश्येव कुसूले कर्त्तरि लक्ष्यते' इत्यस्मिन् पूर्वपक्ष इदमाह—**यस्मिन् कर्मणीत्यादि** । स इत्यनेन यस्मिन्नित्यनेन योऽर्थो निर्दिष्टः स एव प्रत्यवमृश्यते । एतेनैकद्रव्याधारयैव कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवतीति दर्शयन् पूर्वपक्षं प्रतिक्षिपति । एतच्च प्रत्यासत्तेर्न्यायाल्लभ्यते । एकद्रव्यसमवायिनो हि क्रिया प्रत्यासन्ना, द्रव्यान्तरसमवेता तु विप्रकृष्टा ।

ननु च शक्तिः कारकमिति दर्शनम्, न च कर्मशक्तिः कदापि कर्तृभावमापद्यते, तदयुक्तमुक्तम्—यस्मिन् कर्मणि कर्तृभूतेऽपीति ? शक्तिशक्तिमतोर्भेदस्याविवक्षयां शक्त्याधारं द्रव्यमेवैतदुक्तमित्यदोषः । इदं तर्ह्ययुक्त-मुक्तम्—**तद्वत् क्रिया लक्ष्यते यथा कर्मणीति** । यस्माद् य एव कर्मावस्थायां व्यापारः स एव कर्त्रवस्थायामपीति सादृश्यं नोपपद्यते, तस्य भेदाधिष्ठाने सति सत्त्वात् ? नैष दोषः; अवस्थाभेदेन क्रियाभेदाद्यद्यप्यवस्थावद् द्रव्यम-भिन्नम्, तथाप्यवस्थाभेदोऽस्ति—अन्यैव हि कर्त्रवस्था, अन्या च कर्मावस्था । अवस्थाभेदेन क्रियाभेदेन क्रियाभेद इति तदधिष्ठानं सादृश्यं भवति ।

इहातिदेशो निमित्त-व्यपदेश-शास्त्र-कार्यभेदादनेकविधः । तत्रेह निमित्तातिदेशो न भवति, न हि कर्मणो यन्निमित्तं कर्त्तुरीप्सिततमत्वं तत् कर्त्तर्यतिदेष्टुं शक्यते; वस्त्वन्तरधर्माणां वस्त्वन्तरेण विरुद्धधर्मिणा सम्बन्धा-भावात् । व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते । संज्ञापक्षे तु वक्ष्यमाणो दोषः, वतिग्रहणञ्चानर्थकं स्यात् । शास्त्रातिदेशपक्षे तु शास्त्रमतिदिश्यते, तस्मिन्नतिदिष्टे तैरेव शास्त्रैर्यगादयः प्राप्यन्ते; ततश्च यद्ययं शास्त्रातिदेशः स्यात् कर्मकर्त्तरि परत्वाच्छबादयो बाधकाः स्युः, तत्र प्रतिविधेयं स्यात् । कार्यातिदेशे त्वनेनैव यगादयो विधीयन्ते । तेन येन कर्त्राश्रयाः कर्मकर्तरि शबादयः प्राप्नुवन्ति ते परत्वाद् यगादिभिर्बाध्यन्त इति न किञ्चित् प्रतिविधातव्यम् । प्रधानं तु कार्यातिदेशः; तदर्थत्वादतिदेशशास्त्राणाम् । अतः कार्यातिदेशतामस्य दर्शयन्नाह—**कर्माश्रयाणीत्यादि** । ननु च 'तुल्यक्रियः' इति प्रथमानिर्देशात् तदन्तस्य कर्त्तुरतिदेशो विज्ञायते, न च सूत्रे कर्तृग्रहणमस्ति । यदपि च प्रकृतं तदपि सप्तम्यन्तम्, प्रथमानिर्दिष्टेन चेहार्थः, तत्कथं प्रथमान्तकर्तृग्रहणमन्तरेण शक्यतेऽतिदेशः कर्त्तुमित्याह—**कर्त्तरीत्यादि** ।

**पदमञ्जरी**

भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति, यादृशी हि पात्रेषु क्रियाऽवयवविशरणात्मिका तादृश्येव कुसूलेऽपि कर्त्तरि लक्ष्यत इति ? नैष दोषः; कर्मस्थया क्रियया तुल्या क्रिया यस्य कर्त्तुरित्युक्ते कर्तृत्वोपयोगिनी या क्रिया यदावेशादसौ कर्त्ता भवति सैव क्रिया गम्यते; इह तु पात्रेषु दृश्यमानं द्विधाभवनं कुसूलेऽपि दैवगत्या दृष्टमित्येतावन्न पुनस्तत्समावेशादसौ भिनत्ति, स्वयमभिद्यमानोऽपि कुसूल उपरि पतन् पात्राणि भिनत्त्येव । एवमप्यन्योऽन्यमाश्लिषतः, अन्योऽयं स्पृशतः, अन्योऽन्यं गृह्णीतः-अत्र प्राप्नोति, अत्र हि यत्क्रियावेशात्कर्त्ता भवति सैव कर्मण्यपि दृश्यते ? सत्यं दृश्यते; न सा कर्मत्वोपयोगिनी, न ह्यसौ तदावेशात्कर्म भवति; स्वयमनाश्लिष्यतोऽपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात् । तदेतदुक्तं भवति; स्वयमनाश्लिष्यतोऽपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात् । तदेतदुक्तं भवति-कर्मणः कर्मत्वोपयोगिनी या क्रिया तया तुल्या यस्य कर्तृत्वोपयोगिनी क्रिया स कर्मणा तुल्यक्रियः कर्त्तेति । एवञ्च यस्यैव कर्मणः कर्मावस्थायां या क्रिया

**यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। कारिष्यते कटः स्वयमेव।**

**न्यासः**

किं पुनरस्यातिदेशस्य प्रयोजनमित्याह—**यगात्मनेपदेत्यादि**। भिद्यत इति यक उदाहरणम्। **अभेदीति** चिणः। **कारिष्यते इति** चिण्वद्भावस्य। कर्मणि हि 'स्यसिच्सीयुट्', इत्यादिना चिण्वद्भावो विहितः। आत्मनेपदस्य तु सर्वाण्येवैतान्युदाहरणानि।

**पदमञ्जरी**

कर्त्रवस्थायामपि यदि सैव क्रिया भवति स कर्त्ता कर्मवदित्युक्तं भवति इदमप्यत्रैवोक्तम्–'यस्मिन् कर्मणि कर्त्रवस्थां प्राप्त इति ह्यत्रार्थः। एवञ्च कर्तृकर्मावस्थाभेदादेकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपाद्यम्।

अतिदेशो रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्यातिदेशभेदेनानेकविधः, तत्रादितस्त्रयाणामसम्भवः। व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते। तत्र वत्करणमनर्थकम्। अतः शास्त्रातिदेशः, कार्यातिदेश इति द्वावेव पक्षौ। तत्र शास्त्रातिदेशे 'भावकर्मणोः' इत्यादिषु शास्त्रेष्वतिदिष्टेषु तेन तेन शास्त्रेण तत्तत्कार्यं प्रवर्त्तते, ततश्च 'भावकर्मणोः' इत्यस्यावकाशः—शुद्धं कर्म, पच्यते ओदनः, 'शेषात्कर्तरि परस्मैपदम्' इत्यस्यावकाशः—शुद्धः कर्त्ता, पचति पठति; कर्मकर्त्तर्युभयप्रसङ्गे परत्वात्परस्मैपदं प्राप्नोति ? नैष दोषः; 'कर्त्तरि कर्मव्यतीहारे' इत्यतः कर्तृग्रहणमनुवर्तते, तेन कर्तैव यः कर्त्ता तत्र परस्मैपदम्, कर्मकर्तरि न भविष्यति। इह तर्हि कर्मणि यग् भवतीत्यस्यावकाशः—शुद्धं कर्म, पच्यते ओदनः, 'कर्तरि शप्' इत्यस्यावकाशः—शुद्धः कर्त्ता, पचति पठति; कर्मकर्तर्युभयप्रसङ्गे परत्वाच्छप् प्राप्नोति ? नैष दोषः; 'कर्तरि शप्' इत्यत्र कर्तृग्रहणन्न कर्तव्यम्, सार्वधातुके शबिति सामान्यस्य भावकर्मणोर्यगपवादो भविष्यति, एवं सिद्धे यत्कर्तृग्रहणं क्रियते तस्यैतत्प्रयोजनम्–कर्तैव यः कर्ता तत्र शबादयो यथा स्युः, कर्मापदिष्टे मा भूवन्निति ? सत्यं प्रतिविहितमायुष्मता ! वृथा पुनरयम्प्रयासः, कार्यातिदेशाश्रयेणैव सिद्धेः। तत्र ह्यनेनैवात्मनेपदम्, अनेनैव यगिति परत्वाद्यगात्मनेपदे सिद्ध्यतः। प्रधानं च कार्यम्, तदर्थत्वादतिदेशान्तराणाम्। अतः कार्यातिदेश एवायम्। तदाह—**कर्माश्रयाणि कार्याणि प्रतिपद्यत इति**। ननु च नेह सूत्रे कर्तृग्रहणमस्ति, यदपि प्रकृतम् 'कर्तरि शप्' इति, तदपि सप्तम्यन्तम् 'तुल्यक्रिय' इति प्रथमान्तेन सम्बद्धुं नार्हति तत्राह—**कर्तरि शबित्यत इति**।

**यगात्मनेपदेत्यादि**। लान्तस्य कर्त्ता कर्मवदिति वक्ष्यमाणत्वाद्यगादीनामेव सम्भव इति भावः। **भिद्यते इत्यादीनि** त्रीण्यात्मनेपदस्योदाहरणानि यगादीनां क्रमेण। कथं पुनः काष्ठस्य भिदां प्रति कर्तृत्वम्, यावता भिद्यतेऽसौ देवदत्तेन ? यो ह्युद्यमननिपातनादि कुठारस्य करोति स भेदने कर्त्ता उच्यते। सर्वेषामेव कारकाणां प्रातिस्विकोऽवान्तरव्यापारोऽस्ति, अकिंचित्करस्य कारकत्वानुपपत्तेः। एतच्च कारकप्रकरणे एवोपपादितम्। तत्र च स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैवास्ति। कारके कर्तृव्यापारेण तिरस्कृतत्वात्तु न्यग्भूतं स्वातन्त्र्यमिति कर्तृत्वं न भवति, करणादिसञ्ज्ञैव भवतीत्येतावत्। सकर्मकास्तु केचिद्धातवः कर्मव्यापारमप्यभिधाय तावत्ये-

**भावबोधिनी**

[ कर्मवद्भावातिदेश के ] यक्, आत्मनेपद, चिण् चिण्वद्भाव—ये प्रयोजन हैं। उदाहरण—भिद्यते काष्ठं स्वयमेव। [ लकड़ी स्वयं फट जाती है। ] अभेदि काष्ठं स्वयमेव। [ लकड़ी स्वयं फट गयी। ] कारिष्यते कटः स्वयमेव [ चटाई अपने आप बन जायगी। ]

**विमर्श**—कभी-कभी सौकर्यातिशय द्योतित करने के लिये कर्ता का व्यापार विवक्षित नहीं रहता है। तब अन्य कारक भी कर्तृसंज्ञा प्राप्त करते हैं, क्योंकि अपने व्यापार में वे दूसरे कारक भी स्वतन्त्र रहते हैं। अतः पहले जो करण आदि रह चुका है वह इस अवस्था में कर्ता हो जाता है। इस सम्बन्ध में कर्म की स्थिति यहाँ बताई जा रही है। कर्मवत् कर्मणा तुल्यक्रियः—इस सूत्र में जैसे—'कर्म' शब्द 'कर्मस्थ' में उपचरित है, जैसे—'मंचाः हसन्ति' में 'मञ्चस्थाः

**वत्करणं स्वाश्रयमपि यथा स्यात्—भिद्यते कुसूलेनेति। अकर्मकाणां भावे लः सिद्धो भवति। 'लिङ्चा-**

**न्यासः**

**स्वाश्रयमपीत्यादि**। यद्विनाप्यतिदेशो न भवति तत् स्वाश्रयम्, तद्यथास्यादित्येवमर्थं वत्करणम्। असति हि तस्मिन् संज्ञासूत्रमिदं स्यात्, ततश्च कर्मणा तुल्यक्रियः कर्त्ता कर्मसंज्ञकः स्याद्। एवञ्च सति सकर्मकत्वाद् 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावे लकारो न स्यात्। वत्करणे तु सत्यतिदेशो भवति। तेन चाप्राप्तमेव कर्त्तुः कर्म कार्यं भवति, न स्वाश्रयं कर्तृत्वम्। अकर्मकस्वभावत्वमपनीयते, तत्र तस्या व्यापारात्। एतेनाकर्मकाणां भावे लः सिद्धो भवति—भिद्यते कुसूलेनेति। अथ भिद्यते कुसूलः स्वयमेवेत्यत्र कुसूलशब्दाद् द्वितीया कस्मात् न भवति, एतदपि कर्म कार्यं भवत्यत आह—**लिङ्चाशिष्यङित्तीत्यादि**। द्वौ लकारौ यस्मिन्

**पदमञ्जरी**

वापर्यवस्यन्तस्तदुपसर्जनं कर्तृव्यापारमाचक्षते, तद्यथा—भिदिर्द्विधाभवनोपसर्जनं द्विधाभावनमाह। न खल्वय-मुद्यमननिपातनमात्रवचनः; रजकेऽपि प्रसङ्गात्, सोपि हि वस्त्रमुद्यच्छति निपातयति च। अथ च न भिनत्ती-त्युच्यते; द्विधाभवनाभावात्। एतेन छिनत्तिलुनत्ती व्याख्यातौ। तथा पचिरपि विक्लित्युपसर्जनं विक्लेदनमाह। तत्र यदा कर्मणः सौकर्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्ष्यते, तदा निवृत्तप्रेषणं कर्म स्वक्रियावयव-स्थितं निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते। धातुरपि तद्व्यापारमात्रे वर्तते। कथं पुनरुभयवचनो धातुः कर्मव्यापारमात्रवचनो भवति? को विरोधः? अनेकार्था धातवः, समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते, तदेवं कर्मव्यापारमात्रवाचिषु कर्तृत्वमेव काष्ठादीनाम्, न तु कर्मत्वगन्धोऽप्यस्ति; धातवश्चैते प्रयोगेऽस्मिन्न-कर्मकाः, यथा—विक्लिद्यति द्विधा भवतीति; कथं तर्हि कर्मणा तुल्यक्रियः कर्त्ता? न ब्रूमः—अस्मिन् प्रयोगे यत्कर्म तेन तुल्यक्रिय इति, किं तर्हि? प्रयोगान्तरे यत्कर्म तेन तुल्यक्रिय इति। नन्वेवं पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेव अत्रापि प्राप्नोति? अत्र परिहारं वक्ष्यति—धात्वधिकारादिति। कर्तृकर्मणोर्धातोरन्य-

**भावबोधिनी**

पुरुषाः' यह माना जाता है वैसे ही यहाँ भी समझना चाहिये। 'कर्तरि शप्' का अनुवृत्त 'कर्त्तरि' यह प्रथमान्त में बदल जाता है—इस लिये सूत्र का अर्थ यह होता है—पहले जो कर्म था वह अब कर्ता बन गया है, उसकी क्रिया कर्म के समान लक्षित होती है, वह कर्ता कर्मवत् हो जाता है अर्थात् 'कर्म' को मानकर जो जो कार्य होते हैं वे इस कर्मकर्ता के भी होते हैं। उदाहरणार्थ—देवदत्तः काष्ठं भिनत्ति [ इसमें 'काष्ठम्' कर्म है अब ] किं देवदत्तः काष्ठं भिनत्ति? काष्ठं स्वयमेव भिद्यते। [ देवदत्त लकड़ी को क्या फाड़ता है, लकड़ी स्वयं फट जाती है। लकड़ी इतनी मुलायम है कि देवदत्त के विशेष प्रयास को जरूरत नहीं पड़ती है। अतः कर्मभूत 'काष्ठ' यहाँ कर्ता बन जाता है। परन्तु उसमें फटना क्रिया उसी प्रकार दिखाई देती है जैसी की उसके कर्म होने पर रहती है। अतः यहाँ कर्मवद्भाव का अतिदेश होता है। इसके चार प्रयोजन हैं—(१) यक्, (२) आत्मनेपद, (३) चिण् (४) चिण्वद्भाव। उदाहरण—भिद्यते काष्ठं स्वयमेव। भिद् + लट् अतिदेश के कारण यक् और आत्मनेपद—भिद् + य + त, एत्व—भिद्यते। अभेदि काष्ठं स्वयमेव—यहाँ भिद् + लुङ् = त, अट्, च्लि का चिण् = इ, उपधा का गुण,—अभेदि + त, "चिणो लुक्" से 'त' का लुक्। कारिष्यते कटः स्वयमेव, कृ + लृट् = त, "स्यतासी लृलुटोः" से 'स्य' कृ + स्य + 'त' स्यसिच्-सीयुट्तासिषु भावकर्मणोरुप-देशेऽज्झनग्रहणदृशां वा चिण्वदिट् च" ( पा. सू. ६.४.६२ ) से चिण्वद्भाव और इट् आगम, फलतः णित्वात् ऋ की वृद्धि, रपर—कार् इ स्यत, षत्व, टि का एत्व—कारिष्यते।

[ अनु० ] 'वत्' इस लिये किया गया है कि स्वाश्रय = कर्म को मान कर होने वाला कार्य भी हो सके—भिद्यते कुसूलेन। अकर्मक धातु से भाव में 'ल' सिद्ध होता है। [ भाव यह है कि अब्रह्मदत्त को ब्रह्मदत्त कहे जाने पर 'ब्रह्मदत्ततुल्य' इस अर्थ की प्रतीति हो जाती है। उसी प्रकार सूत्र में "कर्म कर्मणा तुल्यक्रियः" इतना कहने से भी 'कर्मवत्' अर्थ प्रतीत हो जाता है, 'वत्' ग्रहण का क्या प्रयोजन है? समाधान यह है कि 'वत्' का ग्रहण न होने पर 'कर्मस्थ क्रिया

**शिष्यङ्' ( ३.१.८६ ) इति द्विलकारको निर्देशः, तत्र लानुवृत्तेर्लान्तस्य कर्त्ता कर्मवद्भवतीति कुसूलाद् द्वितीया न भवति।**

**कर्मणेति किम् ? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत्—साध्वसिश्छिनत्ति। साधु स्थाली पचति।**

**न्यासः**

स द्विलकारको निर्देशः। यदि द्विलकारको निर्देशस्तदा किमित्याह—**तत्रेत्यादि**। कार्यं प्रतीत्यध्याहार्यम्। द्विलकार निर्देशे सति 'लिङ्च्याशिष्यङ्' इत्यतो लानुवृत्तेर्लान्तस्यैव कार्यं प्रति कर्त्ता कर्मवद्भवति, न तु प्रातिपदिकस्य। **इतिकरणो हेतौ**। यत एवं तस्मात् कुसूलाद् द्वितीया न भवति।

**करणाधिकरणाभ्यामिति**। कर्मणेत्यसत्यस्मिन् करणाधिकरणस्थयापि क्रियया तुल्यक्रियः कर्त्ता कर्मवत् स्यात्, अस्मिंस्तु सति न भवति। **साध्वसिश्छिनत्तीति**। करणस्य कर्तृत्वविवक्षायां करणस्थयापि क्रियया छेद्यद्रव्यान्तःप्रवेशलक्षणया तुल्यक्रियोऽत्रासिः कर्त्ता। **साधु स्थाली पचतीति**। अत्राधिकरणस्य कर्तृत्वविवक्षायाम-

**पदमञ्जरी**

त्रासम्भवादेव सिद्धेस्तदनुवृत्तिरेकत्वविवक्षार्था—यस्मिन्नेव धातौ यत्कर्म तेन तुल्यक्रियस्तस्यैव धातोः कर्तेति। तेन धातुभेदे न भविष्यति ?

आह—अध्यारोपोऽयमस्तु, कोऽर्थः ? कृत्स्न एव धात्वर्थः कर्मण्यध्यारोप्यते किमत्र देवदत्तेन ओदन, एव पाकं करोतीति। एवं हि सौकर्यातिशयः सुतरां प्रतिपादितो भवति, करणाधिकरणवत्, यथा—साध्वसिश्छिनत्ति, साधु स्थाली पचतीति। तत्र येषु तावत्कृत्स्न एव धात्वर्थः कर्मण्यपि सम्भवति—आत्मना बुद्ध्यते, आत्मना मुच्यते, आत्मना हन्यते, आत्मना ताड्यते इति, तेषु शुद्धे कर्मणि लकारः केनचिद्रूपेण कर्तृत्वम्, केनचिद्रूपेण कर्मत्वमिति। तथा भिद्यते कुसूल इति यत्रापि चेतनो भेत्ता न दृश्यते तत्र वातातपकालाभिवर्षणानामन्यतमस्य कर्तृत्वम्, अध्यारोपो वा। पच्यते ओदनः स्वयमेव, लूयते केदारः स्वयमेवेत्यादावध्यारोप एव, आत्मनैवोदनः पच्यते, न तु देवदत्तेनेति, एवं नाम पाकेऽनुकूलो भवतीत्यर्थः। तदेवं शुद्धे कर्मणि लकारोत्पत्तेर्नार्थ एतेन। यद्येवम्, भिद्यते कुसूलेनेति भावे लो न स्यात्, सकर्मकत्वात् ? अथाप्यत्र भिद्यते कुसूलेनात्मेति कर्मणि व्याख्यायेत। एवमपि भेत्तव्यं

**भावबोधिनी**

के तुल्य क्रिया वाला कर्ता कर्मसंज्ञक होता है—यही अर्थ होगा। अब उसमें अकर्मकव्यपदेश नहीं हो सकेगा। फलतः कर्म में ही लकार होगें, भाव में नहीं, जिससे 'भिद्यते कुसूलेन' यह प्रयोग 'भाव' में नहीं होगा। जब 'वत्' लगाया जाता है तब 'अतिदेश' होता है। इससे कर्ता का अप्राप्त ही कर्मकार्य होता है न कि स्वाश्रय कर्तृत्व। अतः कर्ता मान कर भाव अर्थ में लकार सिद्ध हो जाता है—भिद्यते कुसूलेन। भाव में लकार होने से कर्तृत्व अनुक्त मान कर उसमें तृतीया होती है। एक शंका यह हो सकती है कि जब भाव में लकार होता है तब भी कर्ता में कर्मवद्भाव का अतिदेश रहता ही है अतः उस कर्ता से द्वितीया होनी चाहिये ? इसका समाधान देते हैं—] लिङ्च्याशिष्यङ्" ( पा. सू. ३.१.८६ ) इस पूर्ववर्त्ती सूत्र में दो लकारों वाला निर्देश है, इससे 'ल्' की अनुवृत्ति होती है, इससे लकारान्त का कर्ता कर्मवत् होता है, अर्थात् लकारान्त के ही कार्य के प्रति कर्ता कर्मवत् होता है, [ न कि प्रातिपदिक के कार्य के प्रति ] अतः 'कुसूल' से द्वितीया नहीं होती है। [ इसी कारण कर्मकर्ता में कृत्य, क्त तथा खलर्थक प्रत्यय नहीं होते हैं, केवल भाव में ही होते हैं—भेत्तव्यं कुसूलेन। ]

'कर्मणा' [ कर्म के समान ]—इसका क्या फल है ? करण और अधिकरण के समान क्रिया वाले का कर्मवद्भाव न हो—साधु असिश्छिनत्ति [ देवदत्तः असिना छिनत्ति किम् असिना छिनत्ति ? असिः स्वयमेव छिनत्ति। यहाँ करण 'असि' है, अब वह कर्ता होने पर भी करणतुल्य क्रियावाला है। इसका कर्मवद्भाव न हो—केवल कर्मतुल्य क्रियावाले का ही हो—इसके लिये 'कर्मणा' यह है। जैसे करण-तुल्य-क्रियक का नहीं होता है वैसे ही अधिकरण

**धात्वधिकारात्समाने धातौ कर्मवद्भावः। इह न भवति—पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति।**

**न्यासः**

धिकरणस्थया क्रियया सम्भवति धारणात्मिकया तुल्यक्रियः कर्त्ता। अथेह कस्मान्न भवति—पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति, भवति ह्यत्रापि कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता, तथा हि यादृश्योदने कर्मभूते क्रिया विक्लेदनलक्षणा लक्ष्यते तादृश्येव कर्तृभूतेऽपि, पचतिराध्यत्योरेकार्थत्वादित्याह—**धात्वधिकारादित्यादि।** समानशब्दोऽयमेकपर्यायः, यथा—देवदत्तयज्ञदत्तयोः समाना मातेति। एका मातेति गम्यते। 'धातोरेकाचः' इत्यतो धातुग्रहणमनुवर्त्तते। कर्मादिशब्दाश्च सम्बन्धिशब्दाः, ये च सम्बन्धिशब्दास्ते प्रकृत्यैव नियतरूपं

**पदमञ्जरी**

कुसूलेन, भिन्नं कुसूलेन, ईषद्भेदं कुसूलेनेति भावे कृत्यक्तखलर्था न स्युः? न च तत्रापि कर्मणीति शक्यमाश्रयितुं नपुंसकलिङ्गदर्शनात्। तथा नमते दण्डः स्वयमेव, कारयते कटः स्वयमेव, अचीकरत कटः स्वयमेव—यक्चिणोः प्रतिषिद्धयोरपि शप्च्ङौ न स्याताम्, अकर्तृत्वात्। तस्मात्कर्मव्यापारमात्रवाचिभ्यः कर्तरि भावे च लादय इत्येतदेव साधीयः। तथा च 'शृतं पाके' (६.१.२७) इत्यत्र पचेः कर्मव्यापारे कर्तृव्यापारे च शृतमिति भवति; द्वयोरपि पाकशब्दाभिधेयत्वात्।

एवं हि या विमृष्टा शास्त्रं न करिष्यामीति मतिः, सापि त्याज्या। असति सूत्रे 'न दुहस्नुनमां यक्चिणौ' इति प्रतिषेधस्य विषयो न प्रदर्शितः स्यात्। किञ्च, यद्यपि पच्यते ओदनः स्वयमेवेत्यादिकः प्रयोगः कर्मणि समर्थ्यते, कर्तरि तु लकारोत्पत्तौ पचत्योदन इत्यादिकः प्रयोगोऽपि प्रसज्येत। तस्मादारब्धव्यं सूत्रम्।

अत्रोदाहरणेषु कर्त्रन्तरव्युदासार्थं स्वयमिति प्रयुज्यते, न त्वेतदुदाहरणाङ्गम्। प्रयुक्त एतस्मिन्नात्मनेत्यस्यार्थे वृत्तेः प्राकृतमेवैतत्कर्म स्यात्—स्वाश्रयमपि यथा स्यादिति। असति वत्करणे कर्तुः कर्मसंज्ञा ज्ञायेत, ततश्चानेन कर्मणा सकर्मकत्वाद् 'भावे चाकर्मकेभ्यः' इति भावे लो न स्यात्। सति तु तस्मिन्स्वतः प्राप्तस्याकर्मकव्यपदेशस्यानिवर्तनादकर्मकाणां भावे लः सिद्धो भवति, अकर्मकाणां भावे यो लो विधीयते स सिद्धो भवतीत्यर्थः। कथं सिद्धो भवति, यावता नित्योऽयमतिदेशः, नित्ये चास्मिंस्तत्र लविधिरपि कर्मकार्यमेवेति स्यादेवातिदेशः? आतिदेशिकाविरुद्धं स्वाश्रयं वतिना प्राप्यते, न तु विरुद्धमपि। न ह्ययं विकल्पार्थः—कदाचित्कर्मवत्, कदाचिन्नेति। अथ लान्तस्य कर्तेति वक्ष्यमाणत्वादेतत्सूत्रप्रवृत्तेः प्रागेव 'लः कर्मणि च' इत्येतत्प्रवृत्तिरङ्गीक्रियते, तच्च प्रवर्तमानमकर्मकत्वाद्भावे कर्तरि तदाऽयमतिदेश इति भावे लविधिः समर्थ्येत। यद्येवम्, मा भूद्वतिः, लकारवाच्यस्य कर्त्तुः कर्मसञ्ज्ञैवास्तु, यगात्मनेपदयोस्त्वप्रसिद्धिः परत्वाच्छबादीनां परस्मैपदस्य च प्रसङ्गः; न च कर्मसञ्ज्ञया कर्तृसञ्ज्ञाया बाधः, एकसञ्ज्ञाधिकारादन्यत्र सञ्ज्ञानां समावेशात्? सत्यम्; उक्तोऽत्र परिहारः—तदेतद्वत्करणं सर्वसादृश्यार्थम्। तेनोदाहरणेषु काष्ठादिभ्यो द्वितीया न भवति; इतरथा कर्मकार्यत्वात्प्राप्नोति, अभिहितत्वान्न भविष्यति। भवेदयं परिहारः शास्त्रातिदेशे, कार्यातिदेशे त्वनेनैव कर्मकार्याणि प्राप्यन्ते, न चात्रानभिहिताधिकारोऽस्तीति स्यादेव द्वितीया। वत्करणात्तु सर्वसादृश्यार्थाद्यथा कर्मण्यभिहिते न भवति, एवं कर्तर्यपीति द्वितीयाभावः। यदा तर्ह्यकर्मकत्वाद्भावे लकारस्तदा प्राप्नोति, तत्राह—**लिङ्याशिष्यङित्यादि।** तत्र लग्रहणमनुवृत्तं षष्ठ्या विपरिणम्यते इत्यभिप्रायेणाह—**लान्तस्य कर्तेति।** लकारवाच्यः कर्तेत्यर्थः। **कुसूलाद् द्वितीया न भवतीति।** भिद्यते कुसूलेनेत्यनन्तरोदाहृतेषु उदाहरणेषु तु वत्करणादेव सर्वसादृश्यार्थाद् द्वितीयाया अभाव इति भावः। तदेवं **वृत्तिकारस्याभिप्रेतम्**—एतद्वतिः सर्वसादृश्यार्थ इति। किञ्च, नावश्यं द्वितीयैव कृत्यक्तखलर्था अप्यस्मिन्विषये कर्तर्यतिदेशेन प्राप्नुवन्ति भेत्तव्यः कुसूलः स्वयमेव, भिन्नः कुसूलः स्वयमेव, ईषद्भेदः कुसूलः स्वयमेवेति; भाव एव चेष्यन्ते—भेत्तव्यं कुसूलेन कुसूलस्य वा, 'कृत्यानां कर्तरि वा', भिन्नं कुसूलेन, ईषद्भेदं कुसूलेनेति। अत्र वार्तिके क्तग्रहणमन्यत्र सहपाठात्पठितम्, यथा—ककारो गुणवृद्धि-

**कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थभावकानाम्, न वा कर्तृस्थक्रियाणाम्।**

**कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।**

**मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया॥**

**न्यासः**

सम्बन्धिनमुपस्थापयन्ति। तथा हि-मातरि भक्त्या प्रवर्त्तितव्यमित्युक्तेऽन्तरेणापि स्वस्यामिति वचनं स्वस्यां मातरीति गम्यते। तेन यं धातुमपेक्ष्य तस्य कर्मणः कर्तृत्वं तमेव धातुं सन्निधापयति, नान्यम्। ततश्च धातुग्रहणेऽनुवर्त्तमाने सत्ययमर्थो लभ्यते। यस्मिन् धातौ कर्मणोपस्थापिते यत् कर्म तस्मिन्नेव धातौ स यदि कर्त्ता भवत्येवं सत्ययमतिदेशः, नान्यथा। तेन पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेत्यत्र न भवति, भिन्नयोर्धात्वोरोदनस्य कर्मकर्तृत्वासम्भवात्। अथ वा—धातोरिति येयमेका संख्या सा विवक्षिता, तेनैकस्मिन्नेव धातौ कर्मवद्भावो भवति।

**कर्मस्थभावकानामित्यादिना** न्यायप्राप्तमेवार्थं दर्शयति। तथा हि—कर्मस्थया क्रियया तुल्यक्रियस्य कर्त्तुः कर्मवद्भावो भवति। न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां कर्त्ता तथाविधोऽस्ति। यद्यपि क्रियाभावशब्दयोरेक एवार्थः प्रतीयते, तथा हि—'यस्य च भावेन भावलक्षणम्' इत्यत्र क्रियाप्युपादीयते, 'लक्षणहेत्वोः क्रियायाः' इत्यत्र च भावोऽपि परिगृह्यते; तथापीह द्वयोरुपादानसामर्थ्यादर्थभेदो द्रष्टव्यः;

सा परिस्पन्दनसाधनसाध्या क्रिया क्रियाशब्देनोच्यते अपरिस्पदनसाधनसाध्या तु भावशब्देन। येषाम् कर्मस्थो भावः कर्मस्था च क्रिया येषाम् कर्तृस्थो भावः कर्तृस्था च क्रिया, तेषामुदाहरणं दर्शयितुमाह—**कर्मस्थः पचतेर्भाव इति**। पच्यते घटः स्वयमेवेत्यत्र यदा तद्देशस्थघटकर्मकपाको निष्पद्यते तदाऽपरिस्पन्दनसाधनसाध्यस्वभावः पाकः कर्तृस्थो भवति, यदा तु देशान्तरं गच्छतः पाकद्रव्यस्य पाकाभिनिर्वृत्तिर्भवति तदा

**पदमञ्जरी**

प्रतिषेधार्थ इति। भवत्येव ह्येभ्योऽकर्मकत्वाद् 'गत्यर्थाककर्मक' इति कर्तरि क्तः। तथा च 'सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्' ( वा० ९२२ ) इति निष्ठा-नत्वे। सिनो ग्रासः स्वयमेवेति कर्तरि क्त उदाहरिष्यते। तस्मात्कृत्यखलर्थेष्वेवैष दोषः, अतस्तत्र लान्तस्य कर्तेत्याश्रयणादेवातिदेशाभावः।

**भावबोधिनी**

तुल्य-क्रियक कर्ता का भी नहीं होता है। इसका उदाहरण ] साधु स्थाली पचति। [ बटलोई अच्छा पकाती है। यहाँ 'देवदत्तः स्थाल्यां पचति, किं देवदत्तः स्थाल्यां पचति, स्थाली स्वयमेव पचति—यह आशय है। यदि 'कर्मणा' यह न होता तो अधिकरण का भी कर्मवद्भाव हो जाता। ]

'धातु' का अधिकार होने के कारण समान धातु (=एक ही धातु के प्रयोग) में कर्मवद्भाव होता है। यहाँ नहीं होता है—पचति ओदनं देवदत्तः, राध्यति ओदनः स्वयमेव। [ देवदत्त चावल पकाता है। चावल अपने आप गल=पक जाता है। यहाँ 'पच' और 'राध' दो धातुयें हैं। अतः कर्मवद्भाव नहीं होता। ]

कर्मस्थभावक [ कर्म में है भाव जिनका ] और कर्मस्थक्रियक [ कर्म में है क्रिया जिनकी उन ] का कर्ता कर्मवत् होता है, कर्तृस्थभावक [ कर्ता में है भाव जिनका ] और कर्तृस्थक्रियक [ कर्ता में है क्रिया जिन ] का कर्मवद्भाव नहीं होता है।

'पच' धातु का भाव कर्म में स्थित रहने वाला है और 'भिद्' धातु की क्रिया कर्म में स्थित रहने वाली है। मासम् आस्ते आदि में भाव कर्तृस्थ होता है और गम् धात्वर्थ क्रिया कर्तृस्थ होता है।

**न्यासः**

कर्मस्थैव पचेः क्रिया, यथा—पच्यत ओदन इत्यत्रोदाहरणे। **कर्मस्था च भिदेः क्रियेति**। भिद्यते कुसूलः स्वयमेवेति। अवयवविभागलक्षणा हि भिदेः क्रिया, सा च देशान्तरप्राप्तौ सत्यां भवतीति भिद्यते परिस्पन्दः, तेन कर्मस्था क्रिया भवति। **मासासिभावःकर्तृस्थ इति**। आसेर्धातोर्भाव आसिभावः। आसनं हि भावः; तस्या परिस्पन्दनसाधनसाध्यत्वात्। तथा हि—व्यापारोपरतावास्त इति प्रयुज्यते। माससहचरित आसिभावः। शाकपार्थिवादित्वात् समासः—मासासिभावः। कदा स माससहचरित आसिभावो भवति? यदा मासमास्त इति प्रयुज्यते। मासमिति कर्मणि द्वितीया। कर्मसंज्ञा तु 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति

**पदमञ्जरी**

**कर्मणेति किमिति**। धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता, तत्र सादृश्यस्य भेदाधिष्ठानत्वात्कर्तृस्थया क्रियया तुल्यक्रियः कर्त्ता न सम्भवतीति कर्मस्थैव क्रिया आश्रयिष्यत इति मत्वा प्रश्नः। **करणाधिकरणाभ्यामिति**। तत्स्थक्रिययेत्यर्थः। **साध्वसिश्छिनत्तीति**। किं पुनरत्र करणाधिकरणव्यापारमात्रे धातुर्वर्तते? आहोस्वित्तत्र कृत्स्नधात्वर्थाध्यारोपः? न तावदाद्यकल्पः, तावति धातोरवृत्तेरसिना छिनत्तीत्यत्रापि नैव करणव्यापारो धातुनोपादीयते, केवलं करणत्वादवान्तरव्यापारोऽस्तीत्येतावत्। द्वितीये तु भिन्नक्रियत्वादेवाप्रसङ्गः। तस्मात्करणाधिकरणव्यापारमात्रेऽपि धातोर्वृत्तिमङ्गीकृत्य प्रत्युदाहृतं द्रष्टव्यम्। क्वचित् करणेनापि तुल्यक्रियस्य कर्मवद्भाव इष्यते, यदाह—करणेन तुल्यक्रियः कर्त्ता बहुलमिष्यते, परिवारयति कण्टकैर्वृक्षम्, परिवारयन्ते कण्टका वृक्षम्—आत्मनेपदं भवति। **वृत्तिकारस्तु** 'णिचश्च' इत्यात्मनेपदमुपपद्यत इति मन्यमानो नैतदुपसमचष्ट।

**धात्वधिकारात्समाने धाताविति**। एकस्यैव धातोरित्यर्थः। एतच्च प्रागेव व्याख्यातम्।

**कर्मस्थभावकानामित्यादि**। यद्यपि क्रियाभावशब्दयोरभिन्न एवार्थः, तथा च 'यस्य च भावेन भावलक्षणम्' इति क्रियापि गृह्यते, 'लक्षणहेत्वोः क्रियायाः' 'कर्मणा तुल्यक्रियः' इति च वाचोऽपि; तथाप्यस्मिन् ग्रन्थे भेदेनोपादानादर्थभेदो द्रष्टव्यः—अपरिस्पन्दरूपो धात्वर्थो भावः, परिस्पन्दरूपस्तु क्रिया। क्व पुनरसौ कर्मस्थः? क्व वा कर्तृस्थः? केचिदाहुः—येषु कर्मव्यापारोपसर्जनः कर्तृव्यापारोऽभिधीयते तेषु कर्मस्थः, येषु कर्तृव्यापार एव तेषु कर्तृस्थ इति। नेति वयम्; प्रधानक्रिया यत्र समवैति कर्तरि कर्मणि वा तत्स्थो धात्वर्थः, यदुद्देशेन कारकव्यापारः सा प्रधानक्रिया, यथा—पचेर्विक्लित्तिः, गमेर्देशान्तरप्राप्तिः। एवञ्च

**भावबोधिनी**

**विमर्श**—प्रस्तुत कारिका न तो प्रस्तुत सूत्र पर महाभाष्य में है और न वाक्यपदीय में। "कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद् भवति। कर्तृस्थभावकानां कर्तृस्थक्रियाणां च कर्ता कर्मवत् मा भूत्" ये पंक्तियाँ महाभाष्य की हैं। यद्यपि 'भाव' और 'क्रिया' शब्द समानार्थक रूप से प्रयुक्त होते हैं, जैसे "यस्य च भावेन भावलक्षणम्" (पा. सू. २.३.३७) तथा "लक्षणहेत्वोः क्रियायाः" (पा. सू. ३.२;१२६) में समान अर्थ में है। किन्तु भाष्य में एक साथ दोनों का प्रयोग देख कर कैयट आदि व्याख्याकारों ने 'भाव' तथा 'क्रिया' शब्द के अर्थों में कुछ भेद दिखलाया है। "अपरिस्पन्दनसाधनसाध्यो धात्वर्थो 'भावः'। सपरिस्पन्दनसाधनसाध्यस्तु क्रिया। देवदत्तः तण्डुलं पचति, तण्डुलः स्वयमेव पच्यते। देवदत्तः काष्ठं भिनत्ति, काष्ठं स्वयमेव भिद्यते—इन में क्रियाकृत विशेष का दर्शन कर्म में होता है। अतः इन्हें कर्मस्थभावक और कर्मस्थक्रियक माना जाता है। जहाँ कर्म में क्रियाकृत विशेष का दर्शन नहीं होता है वहाँ कर्तृस्थ-भावक और कर्तृस्थक्रियक माना जाता है। जैसे—देवदत्तः मासम् आस्ते, देवदत्तः ग्रामं गच्छति—इन में मास तथा ग्राम में कोई विशेष नहीं दिखाई देता है अतः यहाँ कर्तृस्थभावक माना जाता है। ऐसा कर्ता कर्मवद् नहीं होता है। इसलिये 'ग्रामः गम्यते स्वयमेव, मासः आस्यते स्वयमेव' ऐसे प्रयोग नहीं होते हैं। इस सम्बन्ध में वाक्यपदीय की यह कारिका ध्यान देने योग्य है—

**७०७. तपस्तपःकर्मकस्यैव ॥ ८८ ॥ (२७७१)**

**'तप संतापे'** ( धा० पा० ९८६ ) **अस्य कर्ता कर्मवद्भवति, स च तपःकर्मकस्यैव, नान्यकर्मकस्य। क्रियाभेदाद्विध्यर्थमेतत्। उपवासादीनि तपांसि तापसं तपन्ति। दुःखयन्तीत्यर्थः। स तापसस्त्वगस्थिभूतः**

**न्यासः**

वचनात्। मासासिभावः कर्तृस्थो भवति, आसितरि समवायात्। तेनास्यते मासः स्वयमेवेति न भवति। **कर्तृस्था च गमेः क्रियेति। गमनं** पादविहरणात्मकम्। तच्च परिस्पन्दनसाधनसाध्यत्वाच्च क्रिया, सा च गन्तरि देवदत्तादौ समवेता, न कर्मणि ग्रामादौ। तेन कर्मस्थक्रियाभावाद् गम्यते ग्रामः स्वयमेवेति न भवति ॥ ८७ ॥

**तपस्तपःकर्मकस्यैव ॥ तपःकर्मकस्यैवेति।** एवकार विस्पष्टार्थः; व्यवच्छेदफलत्वात्, सर्ववाक्यानामित्येवं तदर्थस्य लब्धत्वात्। यदि ह्यतपःकर्मकस्यापि स्यात्, तपःकर्मग्रहणमनर्थकं स्यात्। **नान्यकर्मकस्येत्यवधारणेन**

**पदमञ्जरी**

क्त्वा न्यग्भवनोपसर्जनन्यग्भाववचनोऽपि रुहिः कर्तृस्थक्रियः–आरोहन्ति हस्तिनं हस्तिपका इति; उपरिदेश-प्राप्तेरुद्देश्यायाः कर्तरि समवायात्, तत्रेह कर्मस्थेन व्यापारेण कर्तृव्यापारस्योपमानात्।

अस्य चार्थस्य कर्तृस्थव्यापारेष्वसम्भवान्न्यायप्राप्त एवार्थो **वृत्तिकारेण** दर्शितः। तत्र कर्मस्थव्यापारस्य कर्तृस्थस्य चोदाहरणमात्रं श्लोकेन दर्शयति —**कर्मस्थः पचतेर्भाव इति।** पच्यते घट इत्यत्र तद्देशस्यैव घटस्य पाक इति भावोऽसौ भवति, कर्मस्थश्च—पच्यते ओदन इत्यत्र परिस्पन्दत एव, पाक्यस्य पाकाभिनिर्वृत्तिरिति कर्मस्थैव पचेः क्रिया भवति। **कर्मस्था च भिदेः क्रियेति।** भिद्यते कुसूल इत्यत्रावयवविशरणात्मिका भिदि-क्रिया भेदस्य परिस्पन्दे सति भवतीति कर्मस्था च भिदेः क्रिया भवति। **मासासिभावः कर्तृस्थ इति।** मास-मास्ते इत्यत्र 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम्' इति मासकर्मकोऽयमासिधातुः, तत्र मासासिधातौ प्रतीयमानोऽर्थो भावः; अपरिस्पन्दरूपत्वात्, स च कर्तृस्थ इत्यर्थः। **कर्तृस्था च गमेः क्रियेति। गमेरर्थः** क्रिया, सा च कर्तृस्थेत्यर्थः। तेनास्यते मासः स्वयमेव, गम्यते ग्रामः स्वयमेवेति न भवति। अथेह कथं कर्म-वद्भावः—तस्मादुदुम्बरः सलोहितं पच्यते फलमिति ? अत्राहुः—पचिरत्र विषये द्विकर्मकः, वृक्षस्य पाकमन्तरेण फलस्य पाकासम्भवात्। तत्र 'अप्रधाने दुहादीनाम्' इति वृक्षोऽकथितं कर्मेति तत्र लकारः, कालस्तु कर्त्तेति। इदं तु वक्तव्यमेव, 'सृजियुज्योः श्यंस्तु' इति 'सृजि विसर्गे' ( धा० पा० १४१४ ) ( धा० पा० १४४४ ) 'युजियोगे'—अनयोः सकर्मकयोः कर्त्ता कर्मवद्भवति; तत्र सृजेः श्रद्धोपपन्ने कर्त्तरि कर्मवद्भावः, यग्विषये च श्यन्, चिण्विषये तु चिणेवेष्यते; सृज्यते मालां देवदत्तः, श्रद्धया निष्पादयतीत्यर्थः। श्यनि सति प्रकृतेराद्यु-दात्तत्वं भवति, यकि तु सार्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात्—असर्जि मालाम्, श्रद्धया निष्पादयति स्मेत्यर्थः। 'युजिर्'–युज्यते ब्रह्मचारी योगेन ॥ ८७ ॥

**तपस्तपःकर्मकस्यैव ॥** 'क्रियाभेदाद्विध्यर्थमिदम्' इति वक्ष्यति। कथं तर्ह्येवकारस्यान्वय इत्याशङ्क्य वाक्यभेदेन व्याचष्टे—**तपः सन्तापे, अस्य कर्त्ता कर्मवद्भवति, स च तपःकर्मकस्यैवेति।** एवकारस्य व्यवच्छेद्यं

**भावबोधिनी**

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकाश्यते ॥ वा. प. ३.७.६६

इसमें व्याकरणशास्त्र का और दूसरे शास्त्रों का मत दिखाया गया है। विशेषव्याख्या के लिये इस पर हेलाराज की टीका देखनी चाहिये ॥ ८७ ॥

'तप्' धातु सन्ताप अर्थ में है, इसका कर्ता कर्मवत् होता है, और वह कर्ता तपःकर्मक तप् धात्वर्थ का ही हो अन्यकर्मक तप् धात्वर्थ का कर्ता कर्मवत् नहीं होता है। क्रियाभेद के कारण यह सूत्र विधान के लिये है। [ पहलेवाला सूत्र

**स्वर्गाय तपस्तप्यते । अर्जयतीत्यर्थः । पूर्वेणाप्राप्त कर्मवद्भावो विधीयते-तप्यते तपस्तापसः । अतप्त तपस्तापसः । तपःकर्मकस्यैवेति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥**

**न्यासः**

यद्वचवच्छिन्नं तदर्शयति । **क्रियाभेदादिति ।** क्रियाविसदृशत्वादित्यर्थः । पूर्वं हि क्रियासादृश्ये कर्मवद्भावो विहित इति वैसादृश्येन प्राप्नोति, अतो विध्यर्थमेतत् । अत एव कर्मस्थया क्रियया तुल्यत्वं न सम्भवतीति 'कर्मणा तुल्यक्रियः' इत्येतन्नानुवर्त्तते । **उपवासादीनीत्यादिना** तमेव क्रियाभेदं दर्शयति । उपवासादिशब्देन तपःशब्दस्यार्थमाचष्टे । **दुःखयन्तीत्यर्थ** इत्यनेन तापसस्य कर्मावस्थायां तपेर्दुःखनमर्थ इति दर्शयति । **स्वर्गाय तपस्तप्यत इति ।** तपः-शब्दोऽत्र ज्ञानविशेषे स्वर्गाद्यवाप्तिहेतौ वर्त्तते । **अर्जयतीत्यर्थ** इत्यनेन तापसस्य कर्त्रवस्थायां तपिरर्जने वर्त्तते इति दर्शयति । निवर्त्तयतीत्यर्थ इति, न दुःखयतीति; तपसोऽचेतनत्वाद् दुःखासम्भवात् ।

**उत्तपत्ति सुवर्णमित्यादौ** सुवर्णकर्मकत्वात् तपेः कर्मवद्भावो न भवति ॥ ८८ ॥

**पदमञ्जरी**

दर्शयति—**नान्यकर्मकस्येति ।** एतच्च श्रुतस्यैवकारस्यान्वयो वक्तव्य इति मत्वोक्तम्, न पुनरस्य किञ्चित्प्रयोजनमस्ति । **क्रियाभेदादि ।** अत्यन्तभेदादित्यर्थः । नियमपक्षेऽपि क्रियाणां च भेदोऽपेक्षितः; तुल्यत्वस्य भेदाधिष्ठानत्वात् । क्रियाभेदमेव दर्शयति—**उपवासादीनीति । दुःखयन्तीत्यर्थ इति ।** 'सुखदुःख तत्क्रियायाम्' ( धा० पा० १९२९, ३० ) इति चुरादिपाठाण्णिच् । अनेन तापसस्य कर्मत्वे तपेर्दुःखनमर्थ इति दर्शितम् । **अर्जयतीत्यर्थ इति ।** अनेनापि तापसस्य कर्तृत्वे तपेरर्जनमर्थ इति दर्शितम् । क्वचित्तु **आर्जयतीति** पाठः, तत्राङ्पूर्वस्य प्रयोगः नन्वेवमपि शरीरसन्तापलक्षणा क्रियाऽवस्थाद्वयेऽपि तुल्या, न हि शरीरसन्तापादन्यदर्जनं तापसस्य व्यापारः ? तदसत्; वस्तुस्थित्या सतोऽपि शरीरसन्तापस्याशब्दार्थत्वात्, कथमन्यथा तपसः कर्मत्वम् ! तस्मादर्जनम्=निष्पादनम्, अलब्धस्य लाभः; दुःखं तु शरीरसन्ताप एवेति स्पष्ट एव क्रियाभेदः । विध्यर्थमेतदिति यदुक्तं तदेवोपसंहरति—**पूर्वेणाप्राप्तः कर्मवद्भावो विधीयत इति । अतप्त तपस्तापस इति ।** 'तपोऽनुतापे च' इति चिणः प्रतिषेधात्सिच्, 'झलो झलि' इति लोपः ॥ ८८ ॥

**भावबोधिनी**

सूत्र क्रिया की समानता में कर्मवद्भाव करता है अतः भेद में उसकी प्राप्ति नहीं होती है । इस लिये यह सूत्र विध्यर्थ है । ] उपवासादीनि तपांसि तापसं तपन्ति = दुःखी करते हैं, यह अर्थ है । वह तापस त्वगस्थिभूत [ केवल चमड़ी और हड्डी के रूप में स्थित रहता हुआ ] स्वर्ग के लिये तप करता है, यहाँ 'अर्जित करता है' यह अर्थ है । पूर्व सूत्र से अप्राप्त कर्मवद्भाव का इससे विधान किया जाता है—तप्यते तपः तापसः । ( तापस तप को प्राप्त करता है । ) अतप्त तपः तापसः ' [ तापस ने तप को प्राप्त किया । ]

तपः कर्मक तप् धात्वर्थ का ही कर्ता कर्मवत् होता है—इसका क्या प्रयोजन है ? उत्तपति सुवर्णं सुवर्णकारः । [ सुनार सोने को गरम करता है । ] यहाँ तपः कर्म न होने से कर्मवद्भाव नहीं होता है ।

**विमर्श**—सत्य, अहिंसा, अन्नत्याग आदि तप को कर्म बनाया जाय । ये ही जब कर्ता बन जाय तब इस सूत्र की प्रवृत्ति होती है । तापसः तपः तपति । तपांसि तापसं तपन्ति—तपतापस को कष्ट दे रहे हैं । तप् धात्वर्थ का कर्ता 'तपांसि' है, 'तापसम्' कर्म है । यही 'तापसम्' कर्म जब कर्ता बन जाता है तब प्रस्तुत सूत्र से कर्मवद्भाव होता है—'तपस्तप्यते तापसः' ( तपस्वी स्वयमेव स्वर्गादिकामना के लिये तप को प्राप्त करता है । जब 'तापसम्' कर्म रहता है तब 'तपन्ति' का अर्थ है 'दुःख देते हैं' । जब यह तापस कर्मकर्ता बन जाता है तब 'तप्' का अर्थ 'प्राप्त होता है' यह किया जाता है । इस प्रकार दोनों में 'तप्' के अर्थ अलग-अलग होने से पूर्व सूत्र की प्राप्ति नहीं है । इस लिये यह सूत्र बनाया गया है । कर्मवद्भाव हो जाने पर यक् चिण् आत्मनेपद आदि होते हैं ॥ ८८ ॥

## ७०८. न दुहस्नुनमां यक्चिणौ ॥ ८९ ॥ (२७६७)

**'दुह' 'स्नु' 'नम्'—इत्येतेषां कर्मकर्तरि यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः। दुहेरनेन यक् प्रतिषिद्धयते, चिण् तु 'दुहश्च' ( ३. १. ६३ ) इति पूर्वमेव विभाषितः[1]। दुग्धे गौः स्वयमेव। अदुग्ध गौः स्वयमेव, अदोहि गौः स्वयमेव। प्रस्नुते गौः स्वयमेव। प्रास्नोष्ट गौः स्वयमेव। नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव।**

### न्यासः

**न दुहस्नुनमां यक्चिणौ ॥ कर्मकर्त्तरि यक्चिणावुपदिष्टौ न भवत इति।** कर्मकर्त्तरीति विशेषणम्। 'कर्मवत् कर्मणा तुल्यक्रियः' इति प्राप्तयोर्यक्चिणोरयं प्रतिषेधः, न तु चिण्वद्भावकर्मणोः। 'सार्वधातुके यक्' इति च। शुद्धे कर्मणि यौ प्राप्तौ तयोरपीति दर्शनार्थम्। एतच्च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति परिभाषया लभ्यते। **दुग्ध इति।** यकि प्रतिषिद्धे शप्, तस्यादादित्वाल्लुक्। पूर्ववद् घत्वधत्वजश्त्वानि। **अदुग्धेति।** लुङ्। चिणि प्रतिषिद्धे क्सः, तस्य 'लुग्वा' इत्यादिना लुक्। **प्रस्नुत इति।** 'स्नु प्रस्रवणे', पूर्ववच्छपो लुक्। **प्रास्नोष्टेति** लुङ्। **नमत इति।** 'णम प्रह्वत्वे शब्दे'। अन्तर्भावितण्यर्थोऽत्र नमिः कर्मणि वर्त्तत इति वेदितव्यम्, एवं हि कर्मस्थक्रियो भवति; अन्यथा कर्तृस्थक्रियत्वात् प्राप्तिर्नास्त्येवेति प्रतिषेधोऽनर्थकः

### पदमञ्जरी

**न दुहस्नुनमां यक्चिणौ ॥** 'दुह प्रपूरणे' ( धा० पा० १०१४ ) 'ष्णु प्रस्रवणे' ( धा० पा० १०३८ )। 'टुदु उपतापे', ( धा० पा० १२५६ ) 'हसे हसने' ( धा० पा० ७२१ ), 'णु स्तवने' ( धा० वा० १०६५ )—इत्येतेषां तु ग्रहणं न भवति, नौतिहसत्योरकर्मस्थक्रियत्वात्। यदि च तेषां ग्रहणमिष्टं स्यादसन्देहार्थम् न दुनुहस्नमाम्' इत्येव ब्रूयात्, 'अवयवप्रसिद्धेश्च समुदायप्रसिद्धिर्बलीयसी' ( व्या० प० १०८ )। **कर्मवद्भावापदिष्टाविति।** एतेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' ( व्या० पा० १९ ) इति कर्मवत्कर्मणेति प्राप्तयोर्यक्चिणोरयं प्रतिषेधः; न तु 'चिण् भावकर्मणोः', सार्वधातुके यक्' इति शुद्धे कर्मणि भावे प्राप्तयोरिति दर्शयति। **दुग्ध इति।** यकि प्रतिषिद्धे शप्, तस्य अदादित्वाल्लुक्, दादेर्धातोर्घः', 'झषस्तथोर्धोऽधः' जश्त्वम्। दुहिरयं द्विकर्मकः, तत्र 'अप्रधाने दुहादीनाम्' इति यस्मिन्कर्मणि लकारस्तस्य कर्तृत्वविवक्षा, प्रधानं तु कर्म कर्मैवेति, यथा—'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' इति। **अदुग्धेति।** णिच् भावे क्सः, 'लुग्वा दुह' इत्यादिना तस्य लुक्। नन्विदानीमेवोक्तम्-"दुहेरनेन यक् प्रतिषिध्यते,, चिण् तु दुहेश्च'

### भावबोधिनी

'दुह', 'स्नु' 'नम्' इन तीन के कर्मकर्ता में कर्मवद्भाव से प्राप्त होने वाले 'यक्' और 'चिण्' नहीं होते हैं। 'दुह' के केवल यक् का इससे प्रतिषेध होता है, 'चिण्' का प्रतिषेध तो "दुहश्च" ( पा. सू. ३.१.६३ ) इससे पहले ही विकल्पित किया जा चुका है। उदा० दुग्धे गौः स्वयमेव [ गाय अपने आप दुह जाती है। देवदत्तः गां दोग्धि, किं देवदत्तः दोग्धि ? गौः स्वयमेव दुग्धे। कर्मवद्भाव के कारण यक् तथा आत्मनेपद दोनों प्राप्त होते हैं, प्रस्तुत सूत्र से केवल 'यक्' का प्रतिषेध होता है, आत्मनेपद तो होता ही है—दुह् + त, घत्व, धत्व, जश्त्व और टि का एत्व—दुग्धे। ] अदुग्ध गौः स्वयमेव। [ गाय अपने आप दुह गयी। यहाँ दुह् + लुङ्, अट्, त, कर्मवद्भाव के कारण चिण् प्राप्त है उसका विकल्प "दुहश्च" इस सूत्र से हुआ है—अदुस् + चिण् + त, उपधा गुण, "चिणो लुक्" से 'त' का लुक्—अदोहि। चिण् न होने पर "शल इगुपधादनिटः क्सः" से च्लि का 'क्स' और 'लुग्वा दुह दिह' ( पा. सू. ७.३.७३ ) से विकल्प से 'क्स' का लुक्—अदुह + त, घत्व, धत्व, जश्त्व। क्स का लुक् न होने पर—अधुक्षत—ये तीन रूप बनते हैं। ] प्रस्नुते गौः स्वयमेव। [ 'स्नु' का अर्थ प्रस्रवण = दूध निकलना है। गाय ने अपने आप दूध दिया। कर्मवद्भाव से केवल आत्मनेपद, यक् का प्रतिषेध। ] प्रास्नोष्ट गौः स्वयमेव। [ प्र स्नु + लुङ् = त, अट्, च्लि के चिण् का प्रतिषेध होने पर सिच् =

---

१. 'विकल्पितः' इति पदमञ्जरी सम्मतोऽयं पाठः।

**❀ यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् ❀ ( म० भा० ३. १ ८९ वा० १ )। कारयति कटं देवदत्तः। कारयते कटः स्वयमेव। अचीकरत्कटं देवदत्तः। अचीकरत कटः स्वयमेव। उत्पुच्छयते गां गोपः। उत्पुच्छयते गौः स्वयमेव। उदपुपुच्छत गौः स्वयमेव। श्रथ्नाति ग्रन्थं**

**न्यासः**

स्यात्। अन्तर्भावितण्यर्थस्तु कर्मस्थक्रियो भवति—नमति दण्डं देवदत्तः। **नमते दण्डः स्वयमेवेति**। यथा ण्यन्तावस्थायाम्। **यक्चिणोः प्रतिषेध इत्यादि**। यक्चिणोः प्रतिषेधे कर्त्तव्ये श्रन्थ्यादीनामपि तस्य प्रतिषेधस्योपसंख्यानम्=प्रतिपादनं कर्त्तव्यमित्यर्थः। प्रतिपादनं तु नेति योगविभागादिष्टसिद्ध्यर्थात् कर्त्तव्यम्। णीति हेतुमण्णिच इतरस्य च णेर्ग्रहणम्। हेतुमण्णिच्। **कारयति कटं देवदत्तः। कारयते कटः स्वयमेवेति**। यकि प्रतिषिद्धे शप्। **अचीकरत कटः स्वयमेवेति**। चिणि प्रतिषिद्धे 'णिश्रि' इत्यादिना चङ्‌ 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वः। 'चङि' इति द्विर्वचनम्, अभ्यासकार्यम्। इतरो णिः—'पुच्छभाण्डचीवराण्णिङ्'। **उत्पुच्छयते गां गोपः। उत्पुच्छयते गौः स्वयमेव**। यकि प्रतिषिद्धे शप्। एवमुत्तरत्रापि वेदितव्यम्। **उदपुपुच्छत गौः स्वयमेवेति**। चिणि प्रतिषिद्धे पूर्ववच्चङ्। एवमुत्तरत्रापि वेदितव्यम्। 'श्रन्थ ग्रन्थ सन्दर्भे'। चुरादौ ग्रन्थिश्रन्थी

**पदमञ्जरी**

इति पूर्वमेव विकल्पितः" इति, तस्मान्नैतदत्रोदाहर्त्तव्यम्। **प्रस्नुत इति**। यकि प्रतिषिद्धे पूर्ववच्छपो लुक्। **प्रास्नोष्टेति**। चिण्प्रतिषेधे सिच्। **नमत इति**। अन्तर्भावितण्यर्थोऽत्र नमिः। **तत्र यथा** नमयति दण्डं देवदत्तः, नमयते दण्डः स्वयमेवेति ण्यन्तस्य कर्मस्थक्रियत्वम्, एवमस्यापि द्रष्टव्यम्।

**णिश्रन्थिग्रन्थीत्यादि**। णीति णिङो णिचश्च सामान्येन ग्रहणम्। 'श्रन्थ ग्रन्थ सन्दर्भे' चुरादावाधृषीयौ, तयोर्णिजभावपक्षे ग्रहणम्। तथा क्र्यादिष्वपि पठ्येते तयोरपि ग्रहणम्। 'ब्रूञ् व्यक्तायां वाचि'। आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः सकर्मका भवन्ति त इमे आत्मनेपदाकर्मकाः। **वृत्तौ** क्वचिदेषामुदाहरणानि पठ्यन्ते, क्वचिन्न। णिचि—कार्यते कटः स्वयमेव; अचीकरत कटः स्वयमेव, यक्चिणोः प्रतिषिद्धयोः शप्चङौ भवतः। णिङ्—पुच्छमुदस्यति, उत्पुच्छयते गौः, स यदान्तर्भावितण्यर्थस्तदा उत्पुच्छयते गाम्। पुनः सौकार्यातिशयेन कर्तृत्वविवक्षायामुत्पुच्छयते गौः स्वयमेव, उदपुपुच्छत गौः स्वयमेव। श्रन्थिग्रन्थ्योराधृषीययोः—ग्रन्थति ग्रन्थं देवदत्तः, श्रन्थति मेखलाम्, ग्रन्थते ग्रन्थः स्वयमेव, अग्रन्थिष्ट ग्रन्थः स्वयमेव

**भावबोधिनी**

स्, उपधागुण—प्र अ स्नो स् + त, दीर्घ, षत्व, ष्टुत्व—प्रास्नोष्ट। गाय ने अपने आप दूध दिया। ] नमते दण्डः स्वयमेव। [ डण्डा अपने आप झुकता है। ] अनंस्त दण्डः स्वयमेव। [ डण्डा अपने आप झुक गया। नम् + लुङ् = त, अट्, च्लि के चिण् का प्रतिषेध होने पर सिच् = स्—अनम् + स् + त, 'म्' का अनुस्वार—अनंस्त। ]

कर्मवद्भाव में यक् और चिण् के प्रतिषेध के प्रसङ्ग में ण्यन्त, श्रन्थ्, ग्रन्थ, ब्रू तथा आत्मनेपद में अकर्मक धातुओं का उपसंख्यान करना चाहिये। [ आत्मनेपद विधि में जो धातु अकर्मक निर्दिष्ट हैं वे जब अन्तर्भावितण्यर्थ होकर सकर्मक बनते हैं तब कर्मवद्भाव से प्राप्त यक्चिण् का प्रतिषेध किया जाता है। प्रस्तुत वार्त्तिक भारद्वाजीय लोगों का है। उसकी उक्त व्याख्या कैयट ने की है। यह इसी सूत्र के भाष्य और कैयट प्रदीप में देखें। ] उदा०—ण्यन्त—कारयति कटं देवदत्तः। [ देवदत्त चटाई बनवाता है। किं देवदत्तः कारयति ? ] कटः स्वयमेव कारयते। चटाई अपने आप बनती है। [ कृ + विच् = इ, कर्मवद्भाव के कारण आत्मनेपद तो होता है किन्तु यक् का प्रतिषेध हो जाता है—कारि + त, शप् = अ, 'इ' का गुण ए, अय् आदेश, टि का एत्व—कारयते। ] देवदत्तः कटम् अचीकरत् [ देवदत्त ने चटाई बनाई। किं देवदत्तः कटम् अचीकरत् ? ] कटः स्वयमेव अचीकरत। [ चटाई अपने आप बन गयी। कृ + णिच् = इ + लुङ्, वृद्धि, रपर, अर् आत्मनेपद, चिण् का प्रतिषेध होने पर "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" ( पा. सू.

**देवदत्तः। श्रथ्नीते ग्रन्थः स्वयमेव। अश्रन्थिष्ट ग्रन्थः स्वयमेव। ग्रथ्नाति श्लोकं[1] देवदत्तः। ग्रथ्नीते श्लोकः स्वयमेव। अग्रन्थिष्ट श्लोकः स्वयमेव। ब्रवीति श्लोकं देवदत्तः। ब्रूते श्लोकः स्वयमेव। अवोचच्छ्लोकं देवदत्तः। अवोचत श्लोकः स्वयमेव। आत्मनेपदाकर्मकाणाम्—आहन्ति माणवकं देवदत्तः। आहते माणवकः**

**न्यासः**

पठ्यते। 'आ धृषाद्वा' इति विभाषाणिचौ, तयोर्यदा णिज् नास्ति तदोदाहरणे; अन्यथा णीत्येवं सिद्धिः। ग्रन्थति ग्रन्थं देवदत्तः। ग्रन्थते ग्रन्थः स्वयमेव। अग्रन्थिष्ट ग्रन्थः स्वमेव। श्रन्थति मेखलां देवदत्तः। श्रन्थते मेखला स्वयमेव। 'श्रन्थ ग्रन्थ सन्दर्भे' इति क्र्यादावपि पठ्यते, तयोरप्ययं प्रतिषेधः—श्रथ्नीते मेखलां देवदत्तः, श्रथ्नीते मेखला स्वयमेव। 'ई हल्यघोः' इतीत्त्वम्। अश्रन्थिष्ट मेखला स्वयमेव। ग्रथ्नीते ग्रन्थं देवदत्तः। ग्रथ्नीते ग्रन्थः स्वयमेव। अग्रन्थिष्ट ग्रन्थः स्वयमेव। ब्रूते कथां देवदत्तः। ब्रूते कथा स्वयमेव। पूर्ववच्छपो लुक्। अवोचत कथां देवदत्तः। अवोचत कथा स्वयमेव। 'ब्रुवो वचिः' इति वचिरादेशः, 'अस्यतिवक्ति-

**पदमञ्जरी**

श्रन्थते मेखला स्वमेव, अश्रन्थिष्ट मेखला स्वयमेव। क्रैयादिकयोस्तु—ग्रथ्नीते ग्रन्थः स्वयमेव, श्रथ्नीते मेखला स्वयमेव। ब्रूञ्—ब्रवीति कथां देवदत्तः, ब्रूते कथा स्वयमेव। वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम्। आत्मनेपदाकर्मक—'वेः शब्दकर्मणः' 'अकर्मकाच्च' विकुर्वते सैन्धवाः, वल्गन्तीत्यर्थः। तान्यदाऽन्यो वल्गयति तदा तेषां कर्मत्वम्। पुनः सौकार्यातिशयात्कर्तृत्वविवक्षायाम्—विकुर्वते सैन्धवाः, स्वयमेव, व्यकृषत सैन्धवाः स्वयमेव, यक्चिणौ न भवतः। क्वचित्तु वृत्तौ—आहन्ति माणवकम्, आहते माणवकः स्वयमेवेति पठ्यते, तदयुक्तम्; आहन्ति माणवकमिति सकर्मकत्वादात्मनेपदाभावाच्च। अन्ये पुनराहुः—आत्मनेपदाकर्मकेति धातूपलक्षणम्, हन्तिश्चायम् 'आङो यमहनः' इत्यत्र यदा कर्माविवक्षयाऽकर्मकस्तदात्मनेपदस्य निमित्तं स्यात्, तस्याद्य सकर्मकत्वेऽप्यविरुद्धमुदाहरणमिति।

**भावबोधिनी**

३.१.४८ ) से च्लिका चङ्—अ कारि + अ + त, "णौ चङ्युपधायाः ह्रस्वः" से उपधा का ह्रस्व—अ करि + अ + त, "चङि" से द्वित्व, अभ्यास कार्य, अभ्यास का चवर्ग, "सन्यतः" से 'अ' का 'इ', "दीर्घो लघोः" से दीर्घ—"णेरनिटि" से णिलोप—अचीकरत।] उत्पुच्छयते गां गोपः। [ गोपाल गाय की पूँछ ऊपर उठाता है। किं गोपः उत्पुच्छयते ? ] गौः स्वयमेव उत्पुच्छयते। गाय अपने आप पूँछ ऊपर उठाती है। पुच्छम् उदस्यति—इस अर्थ में "पुच्छभाण्डचीवराण्णिङ्" ( पा. सू. ३.१.२० ) से णिङ् प्रत्यय, धातुसंज्ञा, विभक्ति का लुक्, अलोप, उत्पुच्छ् + इ, उत्पुच्छि + लट् त, यक् का प्रतिषेध, शप् उत्पुच्छि + अ + त, इ का गुण, यप् आदेश, टि का एत्व—उत्पुच्छयते।] उदपुपुच्छत गौः स्वयमेव। [ गाय ने अपने आप अपनी पूँछ ऊपर उठायी। उत्पुच्छि + लुङ् = त, चिण् का प्रतिषेध होने पर चङ्, द्वित्व तथा अभ्यासादि कार्य और णिलोप करने पर—उत् अपुपुच्छत।] देवदत्तः ग्रन्थं श्रथ्नाति, [ देवदत्त ग्रन्थ बांधता है। किं देवदत्तः श्रथ्नाति ? ] ग्रन्थः स्वयमेव श्रथ्नीते [ गन्थ अपने आप बँध जाता है। श्रथ् + लट्, आत्मनेपद, यक् के प्रतिषेध होने पर श्ना = ना—श्रम् + ना + त, "ई हल्यघोः" ( पा. सू. ६.४.११३ ) से 'आ' का ई, टि का एत्व ] अश्रन्थिष्ट ग्रन्थः स्वयमेव। [ यहाँ चिण् का प्रतिषेध होने पर सिच् होता है। ] देवदत्तः श्लोकं ग्रथ्नाति। [ देवदत्त श्लोक बनाता है। किं देवदत्तः श्लोकं ग्रथ्नाति ? ] श्लोकः स्वयमेव ग्रथ्नीते। [ श्लोक अपने आप बन जाता है। ग्रन्थ् + लट्, त, श्ना—ग्रन्थ् + ना + त, कित् होने से अनुनासिक 'न्' का लोप, 'अ' का ई,—ग्रथ्नीते। ] अग्रन्थिष्ट श्लोकः स्वयमेव। [ चिण् के प्रतिषेध में च्लि का सिच् होता है। ] देवदत्तः श्लोकं ब्रवीति। [ देवदत्त श्लोक कहता है। किं देवदत्तः श्लोकं ब्रवीति ? ] श्लोकः स्वयमेव ब्रूते। [ श्लोक अपने आप कहा

१. न्यासे तु श्लोकस्थाने सर्वत्र ग्रन्थशब्दो विभक्त्या विपरिणतो दृश्यते।

**स्वयमेव । आवधिष्ट माणवकः स्वयमेव, आहतेति वा । विकुर्वते सैन्धवाः स्वयमेव । व्यकृषत सैन्धवाः स्वयमेव ।**

### ७०९. कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च ।। ९० ।। (२७७२)

**न्यासः**

ख्यातिभ्योऽङ्' इत्यङादेशः, 'वच उम्' । अन्तर्भावितण्यर्थत्वात् कर्मस्थक्रियात्वं वेदितव्यम् । **आत्मनेपदाकर्मकाणामिति** । आत्मनेपदविधावकर्मका ये धातवो गृह्यन्ते त आत्मनेपदाकर्मकाः । **विकुर्वते सैन्धवाः स्वयमेवेति** । 'आत्मनेपदेष्वनतः' इत्यदादेशः । **व्यकृषत सैन्धवाः स्वयमेवे**त्यत्रापि कृञो विपूर्वाद् 'अकर्मकाच्च' इत्यात्मनेपदविधानादात्मनेपदाकर्मकत्वम् । अत्रापि वल्गने वर्त्तमानः करोतिरन्तर्भावितण्यर्थः कर्मस्थक्रियो भवति ॥ ८९ ॥

**कुषिरजोः प्राचां श्यन्परस्मैपदञ्च** ।। रञ्जेः कृतानुनासिकलोपनिर्देशो लाघवार्थः । **यगात्मनेपदयोरपवा-**

**पदमञ्जरी**

भूषाकर्मकिरादिसनां यक्चिणोः प्रतिषेधो वक्तव्यः । कर्मशब्दः क्रियावाची, भूषाफलं च शोभाख्यं कर्मणि दृश्यत इति कर्मस्थ भूषा । अलंकुरुते कन्या स्वयमेव, अलंकरिष्यते कन्या स्वयमेव, अलमकृत कन्या स्वयमेव; अवकिरते हस्ती स्वयमेव, अवाकीर्ष्ट हस्ती स्वयमेव, अवकरिष्यते हस्ती स्वयमेव—यक्चिण्चिण्वद्भावा न भवन्ति । सन्–मुमुक्षते वत्सः स्वयमेव, अमुमुक्षिष्ट वत्सः स्वयमेव; चिकीर्षते कटः स्वयमेव, अचिकीर्षिष्ट कटः स्वयमेव—प्रकृत्यर्थापेक्षमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्था । आर्थं च प्रकृत्यर्थस्य प्राधान्यम्; तदर्थत्वादिच्छायाः ॥ ८९ ॥

**कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥ यगात्मनेपदयोरपवादाविति** । श्यन्यकोपवादः, परस्मैपदमात्मने-

**भावबोधिनी**

जाता है । 'ब्रू+लट्, आत्मनेपद यक् का प्रतिषेध, 'ब्रू+त, एत्व—ब्रूते । ] देवदत्तः श्लोकम् अवोचत् । देवदत्त ने श्लोक बोला । किं देवदत्तः श्लोकम् अवोचत् ? ] श्लोकः स्वयमेव अवोचत् [ श्लोक अपने आप कहा गया । ब्रू+लुङ्, "ब्रुवो वचिः" ( पा. सू. २.४.५३ ) से 'ब्रू' का 'वच्' आदेश वच्+लुङ्=त, अट्, "वच उम्" से 'उम्' का आगम, अ व उ च+त, गुण, च्लि के चिण् का निषेध हो जाने पर "अस्यति-वक्तिख्यातिभ्योऽङ्" ( पा. सू. ३.१.५२ ) से अङ् आदेश—अवोच् अत । ] आत्मनेपद विधियाँ अकर्मक [ जो कही गयीं हैं, अन्तर्भावितण्यर्थ वे सकर्मक होती हैं, उन्हें यहाँ अकर्मक समझना चाहिये ]—आहन्ति माणवकं देवदत्तः । [ देवदत्त माणवक को मारता है । किं देवदत्तः माणवकम् आहन्ति ? ] माणवकः स्वयमेव आहते । [ माणवक अपने आप मारा जाता है । आङ्+हन्+लट् - त, 'न्' का लोप, 'टि' का एत्व—आहते । ] आवधिष्ट माणवकः स्वयमेव, आहत माणवकः स्वयमेव । [ माणवक अपने आप मारा गया । विकुर्वते सैन्धवाः स्वयमेव । [ घुड़सवार घोड़ों को विकृत करता है । वह घोड़ों का क्या विकृत करता है ? घोड़े अपने आप विकार प्राप्त करते हैं । इसमें 'वि' पूर्वक 'कृ' धातु से "अकर्मकाच्च" सूत्र से अकर्मक से आत्मनेपद होता है । उससे यक् और चिण् का निषेध होता है । लट् में—विकुर्वते = विकारं लभन्ते, तथा लुङ् में "व्यकृषत" चिण् न होने पर सिच् - स्, झ का 'अत' होता है । ]

**विमर्श**—पदमंजरीकार के अनुसार "आत्मनेपद में अकर्मक का उदाहरण—आहन्ति माणवकं देवदत्तः, आहते माणवकः स्वयमेव—"इत्यादि काशिकावृत्ति का पाठ उचित नहीं है, क्योंकि 'आहन्ति माणवकम्' यह सकर्मक है और आत्मनेपद नहीं है । परन्तु इस पाठ की भी संगति वहीं पर दिखाई गयी है । न्यासकार ने इस विषय में कुछ नहीं लिखा है और 'हन्' के उदाहरण—ही दिये हैं । सिद्धान्तकौमुदी में भी 'विकुर्वते सैन्धवाः स्वयमेव' यही उदाहरण दिया गया है ।। ८९ ।।

'कुष' यह निकालना = खोंचना अर्थ में है, 'रञ्ज्' यह रंगना अर्थ में हैं—इन धातुओं से कर्मकर्ता में प्राचीन आचार्यों के मत में, श्यन् प्रत्यय और परस्मैपद होता है । ये यक् तथा आत्मनेपद के अपवाद हैं । उदाहरण—कुष्यति

'कुष निष्कर्षे' ( धा० पा० १५१९ ), 'रञ्ज रागे' ( धा० पा० ११६८ )—अनयोर्धात्वोः कर्मकर्तरि प्राचामाचार्याणां मतेन श्यन्प्रत्ययो भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ। कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव।

प्राचांग्रहणं विकल्पार्थम्। कुष्यते। रज्यते।

व्यवस्थितविभाषा चेयम्। तेन लिड्लिङोः स्यादिविषये च न भवतः। चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं स्वयमेव। कोषिष्यते पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अकोषि पादः स्वयमेव। अरञ्जि वस्त्रं स्वयमेव ( म० भा० )॥

**न्यासः**

**दाविति**। श्यन् यकोऽपवादः, परस्मैपदं त्वात्मनेपदस्य। **रज्यतीति**। 'अनिदिताम्' इत्यनुनासिकलोपः। **प्राचां ग्रहणं विकल्पार्थमिति**। एतेन पूजार्थतामपनयति। पूजार्थे तस्मिन् विकल्पो न लभ्येत। **कुष्यते इत्यादिना** विकल्पार्थे प्राग्ग्रहणे यदिष्टं सिध्यति तद्दर्शयति। **स्यादिविषये चेत्यादि**। आदिशब्देन तासिप्रभृतीनां ग्रहणम्। **चुकुषे, ररञ्जे इति**। लिट्, आत्मनेपदम्, तप्रत्ययः, तस्यैशादेशः। **कोषिषीष्टेति**। आशिषि लिङ्, सीयुट्, 'सुट् तिथोः' इति सुट्, लघूपधगुणः, षत्वम्, ष्टुत्वञ्च। **रङ्क्षीष्टेति**। 'एकाचः' इतीट्प्रतिषेधः, 'चोः कुः' इति कुत्वम्—गकारः। 'खरि च' इति चर्त्वम्-ककारः। **अकोषि, अरञ्जीति**। लुङ्, चिण्॥ ९०॥

**पदमञ्जरी**

पदस्य। श्यन्यकोश्चात्र नुमि स्वरे च विशेषः–कुष्यन्ती जङ्घा, श्यनि 'शप्श्यनोर्नित्यम्' इति नित्यं नुमागमः, नित्त्वाच्चाद्युदात्तत्वं भवति; यकि तु 'आच्छीनद्योर्नुम्' इति नुम्विकल्पः, लः सार्वधातुकानुदात्तत्वे च यक एवोदात्तत्वं स्यात्। **रज्यतीति**। 'अनिदिताम्' इति नलोपः। कुष्यते, रज्यते इति पक्षे यगात्मनेपदे भवतः।

**लिङ्लिटोरिति**। आशिषि लिङत्र गृह्यते, यदुक्तम्-कुषिरजोः श्यन्विधाने सार्वधातुकवचनम्, अवचने हि लिङ्लिटोः प्रतिषेध इति। **स्यादिविषये चेति**। आदिशब्देन सिजादीनां ग्रहणम्। **चुकुषे, ररञ्ज इति**। लिट्, आत्मनेपदम्, तस्य एशादेशः। **कोषिषीष्टेति**। 'लिङः सीयुट्', 'सुट् तिथोः' लघूपधगुणः। **रङ्क्षीष्टेति**। 'एकाचः' इतीट्प्रतिषेधः, 'चोः कुः' इति कुत्वम् गकारः, तस्य चर्त्वम्—ककारः। **अकोषि, अरञ्जीति**। चिण्॥ ९०॥

**भावबोधिनी**

पादः स्वयमेव। [ पैर अपने आप खिंचता है। कुष्+लट्, कर्मकर्ता में कर्मवद्भाव से यक् तथा आत्मनेपद प्राप्त हैं किन्तु प्रस्तुत सूत्र से श्यन् और परस्मैपद होते हैं—कुष्+श्यन्+ति, कुष्यति। ] रज्यति वस्त्रं स्वयमेव। [ वस्त्र अपने आप रंग जाता है। रञ्ज्+लट्, कर्मकर्तृ में श्यन् तथा परस्मैपद होता है, "अनिदितां हल उपधायाः क्ङिति" ( पा. सू. ६.४.२४ ) से अनुनासिकलोप—रज्यति। ]

प्राचीनो के मत में—इसका ग्रहण विकल्प के लिये है। [ अतः पक्ष में यक् और आत्मनेपद भी होते हैं—कुष्+यक्+त, रञ्ज्+यक्+त, ञ् का लोप्, टि का एत्व ] कुष्यते, रज्यते।

यह व्यवस्थित-विभाषा है। अतः लिट् तथा लिङ् में और स्य आदि के विषय में ये श्यन् और परस्मैपद नहीं होते हैं। उदा०—चुकुषे पादः स्वयमेव। [ पैर अपने आप खिंच गया। कुष्+लिट्=त=एश्, द्वित्वादि कार्य करने पर चुकुष्+ए। ] ररञ्जे वस्त्रं स्वयमेव। [ कपड़ा अपने आप रंग गया। रञ्ज्+लिट्=त=एश्, द्वित्वादि कार्य। कोषिषीष्ट पादः स्वयमेव। [ पैर अपने आप निकलना चाहिये। कुष्+लिङ्=त, सीयुट्, सुट्, इट् उपधागुण कोष् इ—सीय्+स् त, य् का लोप, दोनों सकारों के मूर्धन्य षकार, ष्टुत्व आदेश—कोषिषीष्ट। ] रङ्क्षीष्ट वस्त्रं स्वयमेव। [ वस्त्र अपने आप रंग जाना चाहिये। रञ्ज्+लिङ्+त, सीयुट्, सुट्, रञ्ज् सीय्+स् त, यलोप, 'ज्'

**७१०. धातोः ॥ ९१ ॥ (२८२९)**

**'धातोः' इत्ययमधिकारो वेदितव्यः। आ तृतीयाध्यायपरिसमाप्तेर्यदित ऊर्ध्वमनुक्रमिष्यामो धातोरित्येवं तद्वेदितव्यम्। वक्ष्यति— तव्यत्तव्यानीयरः' ( ३.१.९६ ) इति। कर्त्तव्यम्, करणीयम्। धातुग्रहणमनर्थकम्,**

**न्यासः**

**धातोः ॥ यङ्विधौ धातोरित्यधिकारादिति।** 'धातोरेकाचः' इति यङ्विधौ यद् धातुग्रहणं तस्येहाधिकारादित्यर्थः। इयञ्च धातुग्रहणस्यानर्थकत्वे युक्तिः। **कृदुपपदसंज्ञार्थं त्विति।** आनर्थक्यमपाकरोति। ननु च पूर्वेणापि धातुग्रहणेन कृदुपपदसंज्ञे सिध्यत एव, किं पुनर्धातुग्रहणेनेत्यत आह--**अस्मिन्नित्यादि।** अस्मिन्नेवेत्यवधारणं द्रष्टव्यम्। यदि पूर्वत्रापि धात्वधिकारे कृदुपपदे स्याताम्, इह करिष्यतीति स्यप्रत्ययस्य 'कृदतिङ्' इति कृत्संज्ञा स्यात्। ततश्च 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा प्रसज्येत, तस्याञ्च सत्यां सुबुत्पत्तिः। 'च्लि लुङि' इत्यत्र च 'तत्रोपपदम्' इति लुङोऽप्युपपदसंज्ञा स्यात्, ततश्च लुङ्युपपदे च्लिरित्ययमर्थश्च सम्भाव्येत।

**पदमञ्जरी**

**धातोः** ॥ आ कुतोऽयमधिकारः, किं प्राग्लादेशाद् ? आहोस्विदाध्यायपरिसमाप्तेः ? इति विचारे द्वितीयं पक्षमाश्रयति—**आ तृतीयाध्यायपरिसमाप्तेरिति।**

एशः शित्करणात्, तद्धि धातोरित्यधिकारे सति 'तस्मादित्युत्तरस्य' 'आदेः परस्य' तकारस्य स्थाने एत्वे सति अकारस्य स्थाने टेरेत्वे अयादेशे च सत्ययेशब्दस्य श्रवणं मा भूदित्येवमर्थं क्रियते। प्राग्लादेशात्पुनर्द्धात्वधिकारेऽलोऽन्त्यस्य विधयो भवन्तीति एकारस्यैकारवचने प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारमन्त्येऽल्यनुसंहारं बाधित्वा सर्वादेशो भविष्यति, किं शकारेण ? यद्याध्यायपरिसमाप्तेरयमधिकारः ? आद्ये योगे न व्यवाये तिङः स्युः, आद्ये योगे तिबादिसूत्रे येऽमी लावस्थायां स्यादयो विधीयन्ते तेषु कृतेषु तैर्व्यवधाने तिबादयो न स्युः। करिष्यति, हरिष्यति, कर्त्ता, शबादिषु तु न दोषः; तेषां सार्वधातुकाश्रयत्वादकृते लादेशे प्राप्त्यभावात्; तिबादयश्च तत्र सावकाशाः।

**न स्यादेत्वम्, टेष्टितां यद्विधत्ते व्यवाय इत्येव—पचते यजते, क्व तर्हि स्यात् ? आस्ते, शेते, धत्ते, रुन्धे, बेभिदाते इत्यादौ यत्र न विकरणाः सन्ति।**

एशः शित्वम् 'लिटस्तझयोरेश्' इत्ययमेश् शित्कर्त्तव्यः। एतच्चोपक्रम एव व्याख्यातम्।

यच्च लोटो विधत्ते तच्च विकरणव्यवाये न स्यात्—'लोटो लङ्वत्' 'एरुः' 'सेर्ह्यपिच्च' इत्यादि पचतु, पचतमित्यादि, स्तौतु, जुहोतु, भिनत्तु, आस्तमित्यादावेव स्यात्।

**भावबोधिनी**

का 'ग्' 'चोः कुः' सूत्र द्वारा और "खरि च" सूत्र से ग् का क् रङ्क् सी स् त, षत्व, क्षत्व ष्टुत्व—रङ्क्षीष्ट। ] कोषिष्यते पादः स्वयमेव। [ पैर अपने आप खिंच जायगा। कुष् + ऌट्, स्य, इट्, त, टि का एत्व ] रङ्क्ष्यते वस्त्रं स्वयमेव। [ कपड़ा अपने आप रंग जायेगा। रञ्ज् + ऌट् = त, स्य, शेष पूर्ववत् टि का एत्व। ] अकोषि पादः स्वयमेव। [ पैर अपने आप खिंच गया। कुष् + लुङ् = त, अट्, च्लि का चिण् उपधागुण, 'त' का लुक्—अकोषि। अरञ्जि वस्त्रं स्वयनेव। [ रञ्ज् + लुङ्=त, अट्, च्लि का चिण् = इ, अरञ्ज् + इ + त, 'त' का लुक्—अरञ्जि। ] ॥ ९० ॥

'धातोः' ( = धातु से ) यह अधिकार समझना चाहिये। यहाँ से आगे तृतीय अध्याय की समाप्ति तक जिनका विधान किया जायगा, उन्हे 'धातु से' ऐसा समझना चाहिये, अर्थात् अब जो भी प्रत्यय होंगे वे धातु से ही समझने चाहिये। आगे कहा जायगा 'तव्यत्तव्यानीयरः' ( पा. सू. ३।१।९६ ) [ धातु से तव्यत्, तव्य और अनीयर प्रत्यय होते हैं। ] उदाहरण - कर्त्तव्यम्, करणीयम्। [ करना चाहिये। कृ + तव्यत्, ऋ का गुण, रपर, 'त' का द्वित्व—

**यङ्विधौ 'धातोः' इत्यधिकारात् ( म० भा० )? कृदुपपदसंज्ञार्थं तर्हि अस्मिन्धात्वधिकारे ते यथा स्याताम्, पूर्वत्र मा भूतामिति। आर्धधातुकसंज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्—धातोरित्येवं विहितस्य यथा स्यात्;**

**न्यासः**

तस्मादिह धात्वधिकारे कृदुपपदसंज्ञे यथा स्यातां पूर्वत्र मा भूतामिति पुनर्धातुग्रहणम्। अथाधिकारेणैते संज्ञे विधास्येते प्रत्ययसंज्ञावत्, तेन पूर्वत्र न भविष्यतीति चेत्? न हि; सिंहावलोकितन्यायोऽप्यस्ति। अधिकारेण विधाने पूर्वत्रापि सम्भाव्येयाताम्। तत्र व्याख्यानं कर्त्तव्यं भवेत्। व्याख्यानाच्च लघु धातुग्रहणं भवति। अवश्यञ्चान्यार्थं धातुग्रहणं कर्त्तव्यम्, तदन्यार्थं क्रियमाणं कृदुपपदसंज्ञाविधावपि विस्पष्टार्थं भविष्यति। तामेव चान्यार्थतां दर्शयितुमाह—**आर्धधातुकसंज्ञार्थमित्यादि**। च-शब्दाद्वाऽसरूपविधानार्थञ्चेत्ययमत्रार्थो वेदितव्यः। 'वाऽसरूपोऽस्त्रियाम्' इत्यस्मिन् धात्वधिकारेऽसरूपोऽपवादो बाधको यथा स्यात्, पूर्वत्र मा भूत्। तेन क्सादिभिः सिचः समावेशो न भवति। ननु च पूर्वेणापि धातुग्रहणेनार्धधातुकसंज्ञा सेत्स्यति, किं द्वितीयधातुग्रहणेन? इत्यत आह—**धातोरित्येवमित्यादि**। धातोरित्येवं धातुशब्दमुच्चार्य विहितस्यार्धधातुकसंज्ञा यथा

**पदमञ्जरी**

यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात्—'नित्यं ङितः', 'इतश्च', 'तस्थस्थमिपां तान्तन्तामः' 'लिङः सीयुट् परस्मैपदेषूदात्तो ङिच्च' इत्यादि, तथा 'थासः से' पचसे इत्यादौ न स्यात्? नैष दोषः; विहितविशेषणं विज्ञास्यते-धातोर्विहितस्य लोट इति। यद्येवम्, विदो लटो वा' इत्यत्रापि विदेर्धातोर्विहितस्य लटस्तिबादीनां णलादय इति विज्ञायमाने विन्दति, विन्दतः, विन्दन्तीति लाभार्थस्य विकरणेन व्यवायेऽपि णलादयः प्राप्नुवन्ति? न क्वचिद्विहितविशेषणं धातुग्रहणमिति सर्वत्र तथा भवितव्यम्। अथ वात्र धातुना विहितं विशेषयिष्यामः, विदिनाऽऽनन्तर्यम्—धातोर्विहितस्य लटो विदेरनन्तरस्येति, 'सिजभ्यस्तविदिभ्यश्च' इत्यत्रापि धातुना विहितं विशेष्यते, अभ्यस्तेन चानन्तर्यम्—धातोर्विहितस्याभ्यस्तादनन्तरस्य ङितो झेरिति; तेनाजक्षिष्यन्, अजागरिष्यन्नित्यादौ न भविष्यति। 'आतः' इत्यत्र कथम्, यदि तावद्धातोर्विहितस्याकारादनन्तरस्येति, अलुनन् अपुनन् अत्रापि प्राप्नोति? अथ आकारान्ताद्धातोर्विहितस्येति, अपिबन्नित्यत्र प्राप्नोति? अस्तु धातोर्विहितस्याकारादनन्तरस्येति, अलुनन् अपुनन्, इत्यत्र लुना झि इति स्थिते 'श्नाभ्यस्तयोरातः' इति लोपे कृते आकाराभावान्न भविष्यति, नात्र लोपः प्राप्नोति? 'ई हल्यघोः' इतीत्वेन बाध्यते। एवमप्याकारान्न भविष्यति? नात्रेत्वं प्राप्नोति, अन्तिभावेन बाध्यते? नात्रान्तिभावः प्राप्नोति, जुस्भावेन बाधनात्? तदेवं लोप ईत्वेन, ईत्वमन्तिभावेन, अन्तिभावो जुस्भावेन, जुस्भावो लोपेन, लोप ईत्वेनेति चक्रकमव्यवस्था प्राप्नोति? नैष दोषः; आयन्नादिषूपदेशिवद्वचनादुपदेशकाल एव झस्यान्तिभावे कृते लोपः, लोपेन व्यवस्था। किं चात इत्यत्र सिज्ग्रहणमनुवर्तते-आकारान्तात्सिज्लुगन्तादिति, तेन न क्वाप्यनिष्टप्रसङ्गः। तदेवमध्यायपरिसमाप्तेर्धात्वधिकार इति स्थितम्।

**वक्ष्यति तव्यत्तव्यानीयर इति**। किं च स्यात् यदि तव्यादिविधौ धातोरिति नानुवर्त्तेत ङ्याप्प्रातिपदिकादपि तव्यादयः स्युः? साधने तव्यादयो विधीयन्ते, साधनं च क्रियायाः। क्रियाया अभावात्साधनाभावः, साधनाभावाद् ङ्याप्प्रातिपदिकात्तव्यादयो न भविष्यन्ति। कथं तर्हि कर्मादिषु विधीयमाना द्वितीयादयो भवन्ति,

**भावबोधिनी**

करत्तव्य, कृ + अनीयर् = गुण, रपर, णत्व—करणीय, 'कृत्तद्धितसमासाश्च' ( पा. सू. १।२।४६ ) से प्रातिपदिक संज्ञा, नपुंसकलिङ्ग एकवचन में 'सु' प्रत्यय 'अतोऽम्' सूत्र से 'सु' का 'अम्' अ का पूर्वरूप करने पर रूप सिद्ध होते हैं—कर्त्तव्यम्, करणीयम्।]

यह अधिकार व्यर्थ है क्योंकि 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' ( पा. सू. ३।१।२२ ) इस यङ्-विधायक सूत्र में 'धातोः' यह अधिकार है? तब तो कृत् और उपपद संज्ञाओं के लिये यह 'धातोः' है। इसी 'धातोः' अधिकार में वे संज्ञायें हों, पूर्व में न हों। और आर्धधातुक संज्ञा के लिये दूसरा धातु ग्रहण करना चाहिये—

**इह मा भूत् लूभ्याम्, लूभिरिति ॥**

**न्यासः**

स्यादित्येवमर्थं पुनर्धातुग्रहणमित्यर्थः। किमर्थं पुनर्धातोरित्येवं विहितस्यार्धधातुकसंज्ञोच्यते ? इत्याह—**इह मा भूदिति**। असति द्वितीये धातुग्रहणे लूभ्याम्, लूभिरित्यत्रार्धधातुकसंज्ञा स्यात्। भवति ह्यत्र धातोः परः प्रत्ययः—'क्विबन्ता धातुत्वं न जहति' इति कृत्वा। आर्धधातुकत्वे सत्यार्धधातुकलक्षण इट् प्रसज्येत। द्वितीयं तु धातुग्रहणं क्रियमाणं सामर्थ्याच्छब्दपदात्मकं भवति। तेनायमर्थो लभ्यते—धातोरित्येवं धातुसंशब्दनेन यो विहितः स आर्धधातुकसंज्ञो भवतीति। तेन लूभ्यामित्यादावार्धधातुकत्वं न भवति। न हीह धातोरित्येवं प्रत्ययो विहितः, किं तर्हि ? प्रातिपदिकादित्येवम् ॥ ९१ ॥

**पदमञ्जरी**

नैव प्रातिपदिकार्थस्य साधने द्वितीयादयः, किं तर्हि ? शब्दान्तरवाच्यक्रियापेक्षे तस्यैव कर्मादिभावे; तव्यादयस्तु प्रकृतिवाच्यक्रियापेक्षे साधने चरितार्था न ङ्याप्प्रातिपदिकाद्भविष्यन्ति ? इदं तर्हि प्रयोजनम्—सत्याणवयेत्यादयो येऽपभ्रंशाः क्रियावचनास्तेभ्यस्तव्यादयो मा भूवन्निति; न हि ते धातवः, भूवादिपाठाश्रयत्वाद्धातुसंज्ञायाः। किञ्च, सोपसर्गाल्लिङादयो मा भूवन्निति धात्वधिकारः क्रियते; अन्यथा प्राकरोत, प्रास्थित, अध्यैष्टेति धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात्ततः प्रत्ययविधावङ्गसंज्ञायामडादिप्रसङ्गः। चोदयति—**धातुग्रहणमनर्थकम्, यङ्विधौ धात्वधिकारादिति**। 'धातोरेकाचः' इत्यत्र यङ्विधौ धात्वधिकारादिति 'धातोरेकाचः' इत्यत्र यङ्विधौ यद्धातुग्रहणं तस्येहाधिकारादित्यर्थः। परिहरति—**कृदुपपदसंज्ञार्थं त्विति**। एतदेव व्याचष्टे—**अस्मिन्निति**। अस्मिन्नेवेत्यवधारणं द्रष्टव्यम्। तद्दर्शयति—**पूर्वत्र मा भूतामिति**। असत्यस्मिन्नधिकारे धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदमित्येतावानर्थः स्यात्, ततश्च पूर्वत्रापि स्यात्—'च्लि लुङि' लुङन्त उपपदे च्लिरिति। एवं कृत्संज्ञापि धातोर्विहितस्यातिङो भवतीति पूर्वत्रापि स्यात्, ततश्च करिष्यतीत्यत्र स्यप्रत्ययस्य कृत्संज्ञायां कृदन्तं प्रातिपदिकमिति प्रातिपदिकत्वे सति तिङोक्तेऽप्येकत्वे वचनग्रहणादेकवचनस्य चोत्सर्गत्वात्सोरुत्पत्तिः प्रसज्येत। तस्मादस्मिन्धात्वधिकारे यथा स्यातां पूर्वत्र मा भूतामिति पुनर्धात्वधिकारः क्रियते।

ननु चाधिकारेण ते संज्ञे विधास्येते, प्रत्ययसंज्ञा च तत्र, ते पूर्वत्र भविष्यत इत्याशंक्य प्रयोजनान्तरमाह—**आर्द्धधातुकसंज्ञार्थं चेति**। कः पुनरार्द्धधातुकसंज्ञायां द्वितीयधातुग्रहणस्योपयोग इत्यत आह—**धातोरित्येव विहितस्येति। लूभिरिति**। अत्र सत्यपि प्रातिपदिकत्वे धातुत्वमप्यस्ति; पूर्वप्रवृत्ताया धातुसंज्ञाया अनिवर्तनात्। ततश्च धातोरेवायं विहित इति आर्धधातुकसंज्ञा स्यादेव। यदि तु शमिधातोरित्यत्र धातुग्रहणस्य द्वितीयस्यार्द्धधातुकसंज्ञार्थं स्वरितत्वं प्रतिज्ञायेत, अयमप्यधिकारः शक्योऽकर्तुम्। वासरूपविधिरप्यधिकारेण सिद्धः, तेन क्सादिभिः सिचः समावेशो न भविष्यति ॥ ९१ ॥

**भावबोधिनी**

'धातोः' = धातु से'—ऐसा मानकर किये गये प्रत्यय की ही आर्धधातुक संज्ञा हो, यहाँ=अन्य स्थिति में न हो—लूभ्याम्, लूभिः।

**विमर्श**—क्विप् प्रत्यय और उसका सर्वापहारी लोप हो जाने पर 'क्विबन्त अपना धातुत्व नहीं छोड़ता है' अतः धातुत्व तो बना रहता है। परन्तु 'भ्याम्' आदि प्रत्यय 'धातु से' मानकर नहीं होते हैं अपितु 'प्रातिपदिक से' ऐसा मानकर होते हैं। अतः इनकी आर्द्धधातुक संज्ञा नहीं होती है। दूसरा 'धातोः' शब्दपरक होता है—'धातोः' इस प्रकार धातुशब्द का उच्चारण कर के जिस प्रत्यय का विधान होता है, वही आर्धधातुक माना जाता है। 'भ्याम्' आदि ऐसे नहीं। अतः इनकी आर्धधातुक संज्ञा रोकने के लिये 'धातोः' यह दूसरी बार कहा गया है ॥ ९१ ॥

**७११. तत्रोपपदं सप्तमीस्थम् ॥ ९२ ॥ ( ७८१ )**

**तत्रैतस्मिन् धात्वधिकारे तृतीये यत्सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति। वक्ष्यति—'कर्मण्यण्' ( ३ २.१ ), कुम्भकारः।**

**स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्; इतरथा हि सप्तमी श्रूयते यत्र, तत्रैव स्यात्–स्तम्बेरमः;**

**न्यासः**

**तत्रोपपदं सप्तमीस्थम् ॥ सप्तम्या निर्दिष्टमित्यनेन** सप्तमीस्थमित्यस्यार्थमाचष्टे। शब्दस्य हीयं संज्ञा विधीयते, स च कः सप्तमीस्थो भवति ? यस्याः सप्तम्या निर्देशः। **कुम्भकार इति**। उपपदसंज्ञायाम् 'उपपदमतिङ्' इति समासः, 'गतिकारकोपपदात् कृत्' इत्युत्तरपदस्य प्रकृतिस्वरत्वं भवति।

**स्थग्रहणमित्यादि**। निर्दिश्यतेऽनेनेति निर्देशः। सप्तमी निर्देशो यस्य स सप्तमीनिर्देशः। तत्प्रतिपत्त्यर्थं स्थग्रहणम्। एतदुक्तं भवति—सूत्रे यत् सप्तम्या निर्दिष्टं तस्य संज्ञित्वेन प्रतिपत्तिर्यथा स्यादित्येवमर्थं स्थग्रहणम्। यदि पुनः स्थग्रहणं न क्रियेत, ततः किं स्यादित्यत आह—**इतरथा हीत्यादि**। इतरथा ह्यक्रियमाणे स्थग्रहणे 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति सैव सप्तम्युपपदसंज्ञां प्रतिपद्येत। न चासतः संज्ञिनः संज्ञा युक्तेति यत्र श्रूयते सप्तमी—स्तम्बेरम इत्यादौ, तत्रैव स्यात्। स्यादेतत्—नैतत् प्रत्ययग्रहणम्, किं तर्हि ? सप्तमीशब्दस्य स्वरूपस्य ग्रहणमित्याह—**यत्रेत्यादि**। गतार्थम्। **स्थग्रहणात् त्वित्यादि**। स्थग्रहणे तु क्रियमाणे ग्रन्थाधिक्यात्

**पदमञ्जरी**

**तत्रोपपदं सप्तमीस्थम् ॥** 'सप्तमीस्थम्' इत्यस्यार्थमाह – **सप्तम्या निर्दिष्टमिति**। सप्तम्या विभक्त्योच्चारितमित्यर्थः। सप्तम्यन्तेन पदेन प्रतिपादितमिति वा। अस्मिन्पक्षे सूत्रे सप्तमीशब्देन सप्तम्यन्तमुच्यते। सप्तम्यन्ते पदे कर्मणीत्यादौ प्रतिपाद्यत्वेन स्थितं कुम्भादिकमित्यर्थः। प्रथमे तु पक्षे कर्मणीत्यादेर्यः सप्तम्या निर्देशः, स एव कुम्भमित्यादेरपि प्रयोगगतस्य सप्तम्या निर्देशः, यथा—'तस्यापत्यम्' इत्यादौ तस्येति सामान्यं विशेषोपलक्षणार्थमिति तदीयमेव प्राथम्यं विशेषाणामपि भवति, तद्वदत्रापि। **कुम्भकार इति**। अत्रोपपदत्वात्समासः, कृदुत्तरपदप्रकृतिस्वरत्वं च भवति।

**स्थग्रहणमित्यादि**। सूत्रेषु यः सप्तम्या विभक्त्या निर्देश उच्चारणं सप्तम्यन्तेन वा पदेन प्रतिपादनं तदेव संज्ञाङ्गमिति प्रतिपत्त्यर्थमित्यर्थः। ननु सप्तमीशब्देन साहचर्यात्सूत्रादिषु सप्तम्या निर्दिष्टं ग्रहीष्यते, नार्थ एतदर्थेन ग्रहणेन ? तत्राह—**अन्यथा हीति**। मुख्यार्थसम्भवे गौणस्याग्रहणात् सप्तम्या एव संज्ञा स्यात्; 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात्' ( पुरु० परि० वृ० ८१ )। न चासतस्संज्ञिनः संज्ञा शक्या विधातुमिति यत्र सप्तमी श्रूयते तत्रैव स्यादित्यर्थः। **स्तम्बेरम इति**। 'स्तम्बकर्णयोरमिजपोः' इत्यच्, 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। **यत्र वेति**। यत्र सूत्रे **सप्तमीश्रुतिः**, सप्तमीशब्दस्य श्रवणमित्यर्थः। अशब्दसंज्ञेति स्वरूपग्रहणप्रतिषेधादभ्युपगम्यवादोऽयम्, सर्वथेष्टं न सिध्यतीत्यत्र तात्पर्यम्। **स्थग्रहणात्त्विति**। स्थग्रहणे सति सौत्रसप्तम्युपलक्षितस्य संज्ञाविधानात्सर्वत्र सिध्यतीत्यर्थः।

**भावबोधिनी**

तत्र = इस तीसरे अध्याय में 'धातोः' इस अधिकार में सप्तमी विभक्ति से जिसका निर्देश किया गया है, उसकी उपपद संज्ञा होती है। आगे कहा जायगा—'कर्मणि अण्' ( पा. सू. ३. २.११ ) कुम्भकारः [कर्मणि = कर्मवाचक उपपद रहने पर—अण् प्रत्यय होता है। कुम्भं करोति में 'कुम्भम्' उपपद 'कृ' से अण् होकर ऋ की वृद्धि, रपर, "उपपदमतिङ्" ( पा. सू. २.२.१९ ) सूत्र से समास विभक्तिलोप—कुम्भकार, प्रातिपदिकसंज्ञा और विभक्तिकार्य करने पर—कुम्भकारः बनता है। ]

'स्थ' इसका ग्रहण—सूत्रों में 'सप्तमीविभक्त्यन्त निर्देश हो जिसका वह **सप्तमीनिर्देश** है, उसका **ज्ञान** कराने के लिये हैं। यदि 'स्थ' ग्रहण नहीं रहता तो जहाँ सप्तमी सुनाई देती है वहीं पर [ उपपद संज्ञा ) होती, जैसे—

**कर्णेजपः ( म० भा० ) इति। यत्र वा सप्तमीश्रुतिरस्ति 'सप्तम्यां जनेर्डः' ( ३.२९७ ) इति-उपसरजः, मन्दुरज इति। स्थग्रहणात्तु सर्वत्र भवति।**

**गुरुसंज्ञाकरणमन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारार्थम्-पश्य कुम्भं करोति कटमिति प्रत्ययो न भवति।**

**न्यासः**

सूत्रे यस्य सप्तम्या निर्देशस्तत् संज्ञित्वेन निर्दिश्यते, तेन सर्वं सिद्धं भवति; येषामियं संज्ञेष्यते तेषां सर्वेषामेव सूत्रे सप्तमीनिर्देशात्। तथा हि—'स्तम्बकर्णयोः' इत्यत्र स्तम्बकर्णशब्दौ सूत्रे सप्तम्या निर्दिष्टौ। 'सप्तम्यां जनेर्डः' इत्यत्राप्युपसरादयः। 'कर्मण्यण्' इत्यत्रापि कर्माभिधायिनः कुम्भप्रभृतयः।

ननु च लाघवार्थं संज्ञाकरणम्, तत् किमर्थं गुर्वी संज्ञा क्रियते? इत्याह—**गुरुसंज्ञाकरणमित्यादि।** उपशब्दः सामीप्ये। उपोच्चरितं पदमुपपदमित्यन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारो यथा स्यादित्येवमर्थं गुरुसंज्ञाकरणम्। समर्थपरिभाषोपस्थाने सति यदिष्टं सम्पद्यते तद्दर्शयितुमाह- **पश्य कुम्भमित्यादि।** अन्वर्थसंज्ञायां हि सत्यामुपपदाश्रयः प्रत्ययः पदविधिर्भवति। यत्र च पदगन्धोऽप्यस्ति तत्र समर्थपरिभाषोपतिष्ठते। तेन पश्य कुम्भं करोति कटमित्यत्र 'कर्मण्यण्' न भवति। न हीह कुम्भस्य करोतिना सामर्थ्यम्, किं तर्हि? पश्येत्यनेन। पदशब्दोऽप्यत्रान्वर्थ एव न पारिभाषिकः। तथा हि सुबन्तस्य पदसंज्ञा चोपपदसंज्ञाविधानकाले सुबन्त-

**पदमञ्जरी**

ननु च लघ्वर्थं संज्ञाकरणम्, तत्किमर्थं गुर्वी संज्ञा क्रियत इत्यत आह—**गुरुसंज्ञाकरणमिति।** 'उपोच्चारितं पदमुपपदम्'—इत्येवमर्थानुगता संज्ञा अन्वर्थसंज्ञा। **समर्थपरिभाषाव्यापारार्थमिति।** इह यदा स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः प्रातिपदिकार्थः, तदा नान्तरेण विभक्तिं कर्माधिकरणाद्युपपदमुपपद्यत इत्यवश्यमुत्पाद्या विभक्तिरिति पदविधित्वादेव सिद्धः परिभाषाव्यापारः, पञ्चकपक्षेऽपि तु प्रातिपदिकस्यैव कर्माद्यभिधायित्वेन पदविधित्वाभावात्परिभाषाव्यापारो न स्यादित्यन्वर्थया संज्ञया बलात्प्रवर्त्यते? नैतदस्ति; पञ्चकपक्षेऽपि विभक्त्युत्पत्त्या पदत्वे सत्येव प्रत्यय इति प्रतिपादनात्।

ननु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' ( व्या० परि० १३८ ) इति वचनात्कथमुपपदस्य सुबन्तत्वम्—सामि स्मर्त्ता भवान्? 'उपपदमतिङ्' इत्यत्र हि सुपेति तृतीयान्तमेव निवृत्तम्, सुबिति प्रथमान्तमनुवर्तत इत्यवोचाम, कथमपरथा चर्मकारादौ नलोपादि स्यात्! **पश्य कुम्भं करोति कटमिति।** धातोरिति वर्त्तते, कर्मादिशब्दाश्च सम्बन्धिशब्दाः ततं एवं विज्ञास्यामः—यस्य धातोर्यत्कर्मेति। एवमपि महान्तं कुम्भं करोतीत्यत्र प्राप्नोति? न वा भवति; महाकुम्भकार इति भवति, यदेतद्वाक्यम्—महान् कुम्भो महाकुम्भः महाकुम्भं करोतीति। यदा त्वेतद्वाक्यम्—महान्तं कुम्भं करोतीति, तदा नेष्यते। किं च स्याद् यद्यत्र स्यात्? कुम्भशब्दस्य कारशब्देन समासे कृते तदर्थ एकार्थीभावात् महच्छब्देन समासो न स्याद्, अन्वर्थत्वादेव संज्ञायाः सप्तमीनिर्दिष्टत्वेऽपि प्रकृत्यर्थविशेषणात्तद्विशेषणानां च उपोच्चारितपदत्वाभावादुपपदसंज्ञा न भवति।

अथ तत्र-ग्रहणं किमर्थम्? धात्वधिकारः प्रतिनिर्दिश्यते—तत्रैतस्मिंस्तृतीये धात्वधिकार इति। नैतदस्ति प्रयोजनम्, अधिकारादप्येतत्सिद्धम्? इदं तर्हि प्रयोजनम्- सप्तमीस्थस्य प्रत्ययोत्पत्तिं प्रति निमित्तत्वं यथा

**भावबोधिनी**

स्तम्बेरमः, कर्णेजपः। [ स्तम्बे रमते, कर्णे जपति —इन अर्थों में अच् प्रत्यय करने के बाद उपपद समास में विभक्ति का अलुक् 'तत्पुरुषे कृति बहुलम्'' इस सूत्र से होता है। अतः सप्तमी सुनाई देती है, इसी की उपपद संज्ञा होती। ] अथवा जिस सूत्र में 'सप्तमी' शब्द सुनाई देता, जैसे—''सप्तम्यां जनेर्ड'' यहीं उपपद संज्ञा होती—उपसरजः, मन्दुरजः [ इन में सप्तम्यन्त उपपद रहते 'जन्' से 'ड' प्रत्यय और टि का लोप होता है। ] 'स्थ' का ग्रहण करने से सर्वत्र उपपद संज्ञा हो जाती है।

**उपपदप्रदेशाः—'उपपदमतिङ्' ( २.२.१९ ) इत्येवमादयः ।।**

## ७१२. कृदतिङ् ॥ ९३ ॥ ( ३७४ )

**अस्मिन्धात्वधिकारे तिङ्वर्जितः प्रत्ययः कृत्संज्ञको भवति । कर्तव्यम् । करणीयम् ।**

**न्यासः**

तयास्ति; यस्मादुपपदसंज्ञायां विहितायामुपपदाश्रयेऽपि प्रत्यय उपपदसमासोऽपि 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' इति सुबुत्पत्त्या भवितव्यः। तस्मादन्वर्थोऽयं पदशब्दः—पद्यते गम्यतेऽर्थो येन तत् पदमिति। तत्रग्रहणं सप्तमीस्थस्य प्रत्ययोत्पत्तिं प्रति निमित्तभावे सत्युपपदसंज्ञा यथा स्यादित्येवमर्थम्। असति हि तत्रग्रहणे कर्मण्युपपदेऽनुपपदेऽपि प्रत्ययः स्यात्। यस्तु कर्मणीति सप्तम्या निर्देशः, स यदा सप्तम्यन्तः सम्भवति, तदा तस्योपपदसंज्ञार्थः स्यात्; न तु तस्मिन् सत्येव प्रत्ययेन भवितव्यमित्येषोऽर्थो लभ्यते। तस्मात् यथोक्तप्रयोजनार्थं तत्रग्रहणम्। ननु चानन्तरस्य धात्वधिकारस्य निर्देशार्थं तत्रग्रहणं कस्मान्न भवति, तत्रैतस्मिन् धात्वधिकारेऽनन्तर उपपदसंज्ञा यथा स्यादिति? नैतदस्ति; अधिकारादप्येतत् सिद्धम्। उपपदसंज्ञाधिकरिष्यते, तेन वक्ष्यमाणेषु संज्ञिषु संज्ञा भविष्यतीति नार्थ एतदर्थेन तत्रग्रहणेन। **तत्रैतस्मिन्नित्यादिस्तु** वृत्तिग्रन्थ एवमुन्नीयते—एतस्मिन् धात्वधिकारे यत् सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति। तत्र च निमित्ते प्रत्यय इत्येषोऽर्थः सोपस्कारत्वाद् वृत्तिग्रन्थस्य लभ्यते ॥ ९२ ॥

**कृदतिङ् ॥ कर्त्तव्यमिति** । कृत्संज्ञयायां सत्याम् 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा । **चीयादिति** ।

**पदमञ्जरी**

स्यादिति, कथम्? प्रत्यय इति वर्तते—सप्तमीस्थमुपपदसंज्ञं भवति, तत्र चोपपदे सत्येव प्रत्यय इति। अथ कर्मणीत्यादिका सत्सप्तमी, तत्कुतोऽसत्युपपदे प्रत्ययप्रसङ्गः? न; कर्मणीत्यादिका सौत्री सप्तम्यर्थापेक्षा, तथा हि सत्यण्प्रत्ययस्याभिधेयं कर्म स्यात्—यथा—'धः कर्मणि ष्ट्रन्' इति, तथा चोपपदत्वं न प्रतीयेत, अतो यथेत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायते तथार्थनिरपेक्षा केवलमुपपदसंज्ञाया लिङ्गं सप्तमी, तथा च धातोरण भवति कर्म चोपपदमित्येतावानर्थः स्यात्। कर्मणः प्रत्ययोत्पत्तिं प्रति निमित्तत्वं न प्रतीयेत, तस्मात्तदर्थं तत्र—ग्रहणम्। किमिदानीं हेय एवायं ग्रन्थस्तत्रैतस्मिन्धात्वधिकार इति? न ब्रूमो हेय इति, सोपस्कारस्तु भवति—एतस्मिन्धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति, तत्र च सति प्रत्यय इति ॥ ९२ ॥

**कृदतिङ् ॥ तिङ्वर्जित इति** । तिङ्त्वेन त्यक्तस्तिङ्त्वेन रहितः, तिङोऽन्य इति यावत्।

**अतिङिति किमिति** । इह क्रियमाणोऽप्ययं प्रतिषेधः स्वाश्रयामेव तिङः कृत्सञ्ज्ञां बाधितुं प्रभवति, न तु लकारस्य कृत्त्वात्स्थानिवद्भावेन प्राप्ताम्; 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' ( व्या० परि० १९ )

**भावबोधिनी**

[ यद्यपि लघुभूत संज्ञा से निर्वाह करना उचित था परन्तु ] गुरुभूत संज्ञा इस लिये बनायी गयी है कि अन्वर्थसंज्ञा का ज्ञान होने पर "समर्थः पदविधिः" ( पा. सू. २।१।१ ) इस समर्थ परिभाषा के व्यापार के लिये है—'पश्य कुम्भं करोति कटम्'। [ यहाँ "कर्मण्यण्" से अण् नहीं होता है क्योंकि 'कुम्भम्' का 'पश्य' के साथ सम्बन्ध है न कि 'करोति' के साथ। अतः सामर्थ्य न होने से अण् नहीं होता है अलग-अलग ही प्रयोग होते हैं। ]

उपपद संज्ञा के लक्ष्य "उपपदमतिङ्" ( पा० सू० २.२.१९ ) आदि सूत्र हैं ॥ ९२ ॥

'धातोः' इस अधिकार के अन्तर्गत तिङ् को छोड़कर अन्य प्रत्ययों की कृत् संज्ञा होती है उदाहरण—कर्त्तव्यम्। करणीयम्। [ कृ + तव्यत्, कृ + अनीयर्—ये प्रत्यय कृत्संज्ञक हैं अतः कृदन्त मानकर "कृत्तद्धितसमासाश्च" से प्रातिपदिक संज्ञा और उसे मानकर विभक्ति कार्य होते हैं। ]

अतिङिति किम् ? चोयात् । स्तूयात् ।

कृत्प्रदेशाः—'कृत्तद्धितसमासाश्च' ( १.२.४६ ) इत्येवमादयः ।

**७१३. वाऽसरूपोऽस्त्रियाम् ॥ ९४ ॥ ( २८३० )**

**अस्मिन्धात्वधिकारेऽसमानरूपोऽपवादप्रत्ययो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा ।**

**न्यासः**

आशिषि लिङ् 'लिङाशिषि' इत्यार्धधातुकसंज्ञा। अतिङिति यदि नोच्येत, तिङोऽपि कृत्संज्ञा स्यात्, ततश्च 'अकृत्सार्वधातुकयोः' इति दीर्घत्वं न भवेत् । अतिङिति तु सत्यकृद्यकारत्वाद् भवति ॥ ९३ ॥

**वाऽसरूपोऽस्त्रियाम्** ॥ अपवादविषयमुत्सर्गो नाभिनिविशत इत्येष उत्सर्गधर्मः, कृताञ्च केषाञ्चिदुत्सर्गाणामपवादविषये प्रवृत्तिरिष्यते, सा च वचनमन्तरेण न सिद्ध्यतीति तदर्थमिदम् । ननु चारभ्यमाणेऽप्येतस्मिन् नैवायमर्थः सम्पद्यते, तथा हि -अस्योत्सर्गेण वा सम्बन्धः स्यात्, अपवादेन वा, उभाभ्यां वा ? तत्र यदि पूर्वकल्प आश्रीयेत तदा वाशब्देन विकल्पार्थेनोपस्थापितयोर्भावाभावयोरस्यायमर्थः स्यात्—उत्सर्गो-

**पदमञ्जरी**

इति वचनादिति मत्वा प्रश्नः । तिङ्भाविनो लकारस्यैव कृतसञ्ज्ञा प्रतिषिद्ध्यते, प्रतिषेधसामर्थ्याद्वा स्थानिवद्भावो न भविष्यतीत्युत्तरम्। **चीयात्स्तूयादिति**। ननु च ज्ञापकादेतत्सिद्धम्, यदयम् 'अकृत्सार्वधातुकयोः' इति पृथक् सार्वधातुके प्रतिषेधं शास्ति, तद् ज्ञापयति—अकृदिति प्रतिषेधो न तिङ्क्षु भवतीति। यदि स्यात्; चिनुयात्, सुनुयादित्यादौ सार्वधातुकेऽपि कृत्प्रतिषेधादेव दीर्घो न भविष्यति, किं पृथक् सार्वधातुकपर्युदासेन ! इह तर्हि पचति, पठति—'ह्रस्वस्य पिति कृति तुक्' इति तुङ् मा भूदिति ? तुग्विधौ धात्वादेरित्यतो धातुग्रहणमनुवर्तिष्यते। एवमपि—चिकीर्षति, जिहीर्षतीत्यत्र प्राप्नोति ? शपा व्यवधानान्न भविष्यति। एकादेशे कृते नास्ति व्यवधानम् ? 'एकादेशः पूर्वविधौ स्थानिवद्भवति' इति व्यवधानमेव, नात्र स्थानिवद्भावः प्राप्नोति; परत्वादन्तवद्भावेन बाद्ध्यते। तस्माच्चिकीर्षतीत्यादौ तुङ् मा भूदित्यतिङिति प्रतिषेधः कर्त्तव्यः। किञ्च, तिङन्तस्य कृदन्तं प्रातिपदिकमिति प्रातिपदिकसंज्ञायां पचेरन्—नलोपः प्राप्नोति, पपाच ब्राह्मणी—टाप्प्राप्नोति, सर्वत्र च स्वाद्युत्पत्तिः प्रसज्येत, तदेतदस्मादन्यार्थादतिङिति प्रतिषेधादेव सिद्धे चीयादित्यादौ ज्ञापकं नाश्रयितव्यमिति **वृत्तिकारो** मन्यते स्म ॥ ९३ ॥

**वाऽसरूपोऽस्त्रियाम्** ॥ 'असरूपः' इति पदच्छेदः, अन्यथा लाघवे विशेषाभावादसन्देहार्थं 'सरूपोऽस्त्रियां वा' इति ब्रूयात् । अपवादविषयेऽपि केषाञ्चित्कृतां प्रवृत्तिर्यथा स्यादित्येवमर्थमिदं वचनम् । यथोक्तम्-असरूपस्य वावचनमुत्सर्गस्य बाधकविषये निवृत्त्यर्थमिति । परिभाषा चेयम्, अस्मिन्धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यान्यसरूपस्यापवादस्य विधायकानि शस्त्राणि तच्छेषभूता, तत्र तत्र वचने क्रियमाणे गौरवं

**भावबोधिनी**

तिङ्भिन्न—इसका क्या प्रयोजन है ? चीयात्, स्तूयात् । [ चि + लिङ् = ( आशीः ) ति, को यासुट् आगम होता है अतः यह भी तिङ् मान लिया जाता है, कृत्संज्ञा नहीं होती है और "अकृत्सार्वधातुकयोः" सूत्र से दीर्घ हो जाता है । तिङ्भिन्न मानने पर यह तिङ् है = अकृत् है, अतः अकृत्—यकारादि परे मानकर दीर्घ होता है । ] कृत् संज्ञा के लक्ष्य "कृत्तद्धितसमासाश्च" ( पा० सू० १.२.४६ ) आदि सूत्र हैं ॥ ९३ ॥

'धातोः' इस अधिकार के अन्तर्गत असमानरूपवाला अपवाद प्रत्यय विकल्प से बाधक होता है किन्तु "स्त्रियाम्" इस अधिकार में विहित प्रत्यय को छोड़कर, अर्थात् उसमें नित्य बाधक होता है, केवल अपवाद प्रत्यय ही होता है। जैसे—"ण्वुल्तृचौ" ( पा. सू. ३.१.१३३ ) से विहित ण्वुल् और तृच हैं, "इगुपधज्ञाप्रीकिरः कः" (पा. सू. ३.१.१३५)

'ण्वुल्तृचौ' ( ३.१.१३३ ) इत्युत्सर्गौ, 'इगुपधज्ञाप्रीकिरः कः' ( ३.१.१३५ ) इत्यपवादः, तद्विषये ण्वुल्तृचावपि भवतः। विक्षेपकः, विक्षेप्ता, विक्षिपः ( म० भा० )।

असरूप इति किम् ? 'कर्मण्यण्' ( ३.२.१ ) इत्युत्सर्गः 'आतोऽनुपसर्गे कः' ( ३.२.३ ) इत्यपवादः, स

**न्यासः**

ऽसरूपोऽस्त्रियां पक्षे भवतीति, पक्षे न भवतीति। तथा चापवादस्य स्वस्मिन् विषये नित्याप्राप्तिः स्यात्। न ह्यनेनापवादस्य किञ्चित् कृतम्; तेन सहास्यासम्बन्धात्। न च बाधकेऽपवादेऽविकल्पां प्रवृत्तिमनुभवति सति तत्रोत्सर्गः प्रवर्त्तितुमुत्सहत इति स्वविषय एव विकल्पः प्रवर्त्तेत। अथ द्वितीयः, तदायमर्थः स्यात् - असरूपोऽपवादोऽस्त्रियां विकल्पेन भवतीति। एवमपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिर्लभ्यते। उपसर्गोऽपवादविषयं परिहरति, तदापवादस्य बाधकत्वात्। तच्च बाधकत्वमस्मिन्नपि पक्षे तदवस्थमेव, न ह्यनेन तदपनीतम्, किं तर्हि ? स्वस्मिन् विषये तस्य भावाभावौ प्रतिपादितौ—पक्षे भवति, पक्षे न भवति। न चान्यद्वचनमस्ति; यतोऽपवादविषयमुत्सर्गोऽध्यास्ते। अपवादस्याभावपक्षे प्रापकवचनमन्तरेणापि उत्सर्गो भविष्यति। प्रतिबन्धाभावादिति चेत् ? सत्यमेतत् कार्यबाधायाम्; शास्त्रबाधायान्तु यत् कार्यस्य विधायकं तदपवादेन बाध्यमानं तद्विषयपरीहारेणैव प्रवर्त्तेत, तस्मिन् प्रवृत्ते पश्चादपवादे विकल्पेन प्रवृत्तिमनुभवत्यपि तद्विषय उत्सर्गप्रवृत्तिर्न सम्भवति; सामान्यशास्त्रस्यातद्विषयत्वात्।

**पदमञ्जरी**

स्यादीति साधारणरूपेण परिभाष्यते। तत्र च 'असरूपः' इति व्यर्थं कृन्मात्रस्य विकल्पने सर्वस्यैवासरूपत्वाद्यत्किञ्चित्कृदपेक्षया; असरूपपदं चैतत्सापेक्षं प्रतियोगिनि यतोऽत्र भिन्नरूपत्वमसरूपत्वमिष्यते। केनचिद्धि किञ्चित्सरूपमसरूपं वा भवति, तत्र केनासरूप इत्यपेक्षायां स्वविधानवेलायां यः स्वस्मिन्विषये प्राप्तः स एव बुद्धिस्थः प्रतियोगी गम्यते, अपवादविधानसमये चोत्सर्गः, तमपि विषयमवगाढुमुपढौकमान उपारूढो बुद्धौ भवतीति तदपेक्षया भिन्नरूपोऽपवाद एवात्रासरूपो विवक्षित इत्याह—**असरूपोऽपवादप्रत्यय इति**। एवं स्थिते यद्ययमुत्पत्तिविकल्पस्स्याद्, अपवादप्रत्ययो वा भवतीति, ततः स्वविषये कामं विकल्पस्तस्य लभ्यते, न तूत्सर्गः प्रवर्त्तेत। तत्रातद्विषयो ह्यसौ, उत्सर्गापवादशास्त्रयोर्हि प्रमितिव्यापारे पर्यवसिते पश्चादियमत्रैव प्रदेशे स्थिताऽपवादस्य पक्षे प्रवृत्तिं प्रतिबध्नाति। अपवादशास्त्रेण यः स्वीकृतो विषयस्तद्व्यतिरिक्तविषया सामान्यशास्त्रस्य प्रमितिरित्यपवादस्याप्रवृत्तावपि नैवोत्सर्गस्य तस्मिन्विषये प्रमितिः प्रवृत्तिर्वोपपद्यते, तद्धितवत्; तद्यथा—दक्षस्यापत्यम् अत इञि विकल्पिते पक्षेऽण् न भवति, अपि तु वाक्यमेव भवति, तत्कस्य हेतोः ? 'समर्थानां प्रथमाद्वा' इति तटस्थेन पक्षे प्रवृत्तिर्निरुद्ध्यते, न पुनरेकवाक्यतया प्राप्तिरेव विकल्परूषितेति, तथेहापीति। अपवादाभावपक्षे प्रकृतिरेव कर्त्राद्यभिधानायानुज्ञाता स्याद्, यथाग्निचिदित्यादौ क्विबादिलोपे, तदाह—तत्रोत्पत्तिर्वा प्रसङ्गो यथा तद्धित इति।

**भावबोधिनी**

से विहित 'क' प्रत्यय अपवाद है अतः इस 'क' के विषय में ण्वुल् और तृच् भी होते है। [ क्योंकि यह अपवाद प्रत्यय असमानरूप है। ] उदा० विक्षेपकः, विक्षेप्ता, विक्षिपकः। [ विक्षिपतिः इस कर्ता अर्थ में ण्वुल् = वु, "युवोरनाकौ" ( पा. सू. ७.१.१ ) से 'वु' का 'अक' आदेश, उपधा का गुण—विक्षेप् + अक। तृच् होने पर - विक्षेप् + तृच्, ऋ का अनङ् आदि कार्य करने पर—विक्षेप्ता। विक्षिप् + क = अ, कित् है अतः गुण नहीं होता है–विक्षिपकः। इनमें प्रातिपदिक संज्ञा और सु आदि कार्य किये जाते हैं। ]

असरूप – समानरूपवाला नहीं—इसका क्या प्रयोजन है ? "कर्मण्यण्" [ यह कर्म उपपद रहते धातुमात्र से अण् प्रत्यय करता है। ] यह उत्सर्ग है, "आतोऽनुपसर्गे कः" [ उपसर्गरहित आकारान्त धातु से 'क' प्रत्यय होता है ] यह अपवाद है, यह अण् का नित्य बाधक होता है अर्थात् केवल 'क' प्रत्यय का ही रूप बनता है। जैसे—गोदः।

**नित्यं बाधको भवति । गोदः । कम्बलदः । 'नानुबन्धकृतमसारूप्यम्' (व्या० परि० १५) । अस्त्रियामिति किम् ?**

**न्यासः**

अस्तु कार्यबाधापक्ष इति चेत् ? न; अयुक्तत्वात् । न ह्यबाधिते विधायके शास्त्रे तत्कार्यबाधा युज्यते । निदानोच्छेदेन हि निदानिन उच्छेदः शक्यते कर्त्तुम्, नान्यथा । न हि प्रदीपेऽनुच्छिन्ने तत्प्रभोच्छिद्यते । तस्मादपवादः शास्त्रमेव बाधते, तस्मिंश्च बाधिते सत्यपवादाभावपक्षेऽपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिः स्यात् । अथ तृतीयः पक्षः, तदायमर्थः स्यात्—उत्सर्गोऽसरूपोऽस्त्रियां वा भवति, अपवादोऽपीति । एवमपि तयोः स्वस्मिन् विषये विकल्पेन प्रवृत्तिः स्यात्, न तूत्सर्गस्यापवादविषये; पूर्वोक्तादेव हेतोः । तस्मात् क्रियमाणेऽप्येतस्मिन् नैवाभिमतोऽर्थः सम्पद्यत इति यो देशयेत्, तं प्रत्याह—**असरूपोऽपवादप्रत्ययो वा बाधको भवतीति** । एतेनापवादस्यानेन सम्बन्धः, न तु भावाभावौ विकल्प्येते, किं तर्हि ? पक्षे बाधकत्वमिति दर्शयति । एवञ्च यस्मिन् पक्षेऽपवादो बाधको न भवति, तस्मिन् विषये प्रतिबन्धाभावादुत्सर्गः प्रवर्त्तत इति सिध्यति समावेशः । **स्त्र्यधिकारविहितं प्रत्ययं वर्जयित्वेति** । कथं पुन 'अस्त्रियाम्' इति वचनादेषोऽर्थो लभ्यते ? एवं मन्यते 'स्त्रीग्रहणमिह स्वर्यते, स्वरितेन चाधिकारावगतिर्भवति, तेन स्त्र्यधिकारविहितमाश्रित्य यावुत्सर्गापवादौ विहितौ तद्विषये प्रतिषेधो

**पदमञ्जरी**

तमिममुत्पत्तिविकल्पपक्षे दोषं दृष्ट्वा बाधकत्वं विकल्प्यत इत्याह—**वा बाधको भवतीति** । उक्तं च 'सिद्धं त्वसरूपबाधकस्य वावचनात्' इति, असरूपो वा बाधको भवतीति वक्तव्यमित्यर्थः । ननु तत्र तत्रोच्यते—यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवतिपर इति, ततश्चासरूपो वेत्युक्ते भवतीत्येवाध्याहारो युक्तः, न पुनर्वा बाधक इति ? उच्यते—उत्पत्तिविकल्पस्य प्रयोजनं केवलायाः प्रकृतेः प्रयोगः, केवला च प्रकृतिः स्वार्थमात्रमभिधातुमसमर्था, किं पुनः कर्त्रादिकमभिधास्यति ! प्रकृतिप्रत्ययसमुदाये हि प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यामयं प्रकृत्यर्थः, अयं प्रत्ययार्थ इति व्यवस्थाप्यते; अनुत्पन्नप्रत्यया तु प्रकृतिर्न कञ्चिदप्यर्थं गमयति । प्रयोगोऽपि हि तस्या दुर्लभः; परश्चेति नियमात् । तद्धिते त्वनुत्पत्तिपक्षेऽप्युत्सर्गप्रवृत्तिव्यतिरेकेण प्रत्ययान्तरमस्ति षष्ठी, इह तु न तथेति सामर्थ्याद्बहिरङ्गमपि बाधकत्वमपि कल्प्यते । ननु च शास्त्रं शास्त्रेण बाध्यते, न पुनः कार्यं कार्येण, निदानोच्छेदेनैव हि निदानिन उच्छेदः शक्यते कर्त्तुम्, न हि प्रदीपेऽनुच्छिन्ने तत्प्रकाश उच्छिद्यते, तत्किमुच्यते—अपवादप्रत्यय इति एवं तु वक्तव्यम्—अपवादशास्त्रमिति ? उच्यते—सर्वस्यैवापवादशास्त्रस्य स्वगतमसारूप्यमव्यभिचारीति प्रत्ययद्वारकं तदाश्रयणीयमित्यपवादप्रत्यय इत्युक्तम् । एवम्भूतस्य प्रत्ययस्य विधायकं शास्त्रमित्यर्थः ।

यद्वा—प्रत्ययस्य बाधकत्वविकल्पसामार्थ्याच्छास्त्रमपि पक्षे बाधकं भविष्यति ।

अथ वा वृत्तौ वस्तुमात्रं दर्शितम्; यथा त्वयमर्थ उपपद्यते तथा सूत्रं व्याख्येयम् । तत्रेदं व्याख्यानम्—

**भावबोधिनी**

कम्बलदः [ गां ददाति, कम्बलं ददाति—इसमें 'गाम्' तथा 'कम्बलम्' इस कर्म को उपपद मानकर "कर्मण्यण्" से अण् प्राप्त है परन्तु उपसर्गरहित आकारान्त 'दा' धातु होने से 'क' प्रत्यय "आतोऽनुपसर्गे कः" सूत्र से होता है और 'आतो लोप इटि च" से 'आ' का लोप होने पर 'द् + अ = द' के साथ समास और विभक्तिलोप करने पर—गोद, कम्बलद, की प्रातिपदिक संज्ञा, सु, विसर्ग—गोदः, कम्बलदः । अण् और क यद्यपि असरूप प्रतीत होते हैं परन्तु अनुबन्ध विनिर्मुक्त पदार्थ ही उपस्थित होता है अतः अनुबन्धलोप कर देने पर अण् = अ क = अ, दोनों में 'अ' यह सरूप प्रत्यय ही बचता है । अतः यह नित्य बाधक होता है—यही कहते हैं—] "अनुबन्ध को मानकर होने वाली असमानरूपता का ग्रहण नहीं किया जाता है ।"

"स्त्रियाम्" इस अधिकार में होने वाले प्रत्यय को छोड़कर—इसका क्या प्रयोजन है ? "स्त्रियां क्तिन्" ( ३.३.९४ स्त्रीलिंग में भाव आदि अर्थों में धातु से क्तिन् प्रत्यय होता है । ) यह उत्सर्ग है "अ प्रत्ययात्" ( ३.३.१०२

**'स्त्रियां क्तिन्' ( ३.३.९४ ) इत्युत्सर्गः 'अ प्रत्ययात्' ( ३.३.१०२ ) इत्यपवादः, स बाधक एव भवति। चिकीर्षा। जिहीर्षा॥**

**न्यासः**

विज्ञायते' इति। अथैवं कस्मान्न विज्ञायते—स्त्रियामभिधेयायामसरूपोऽपवादो बाधको वा न भवतीति? एवमशक्यं विज्ञातुम्; एवं हि विज्ञायमाने लव्या, लवितव्येति यद्विषये तव्यो न स्यात्। एवं तर्हि कस्मान्न विज्ञायते—स्त्रियामित्येवं स्त्रीशब्दसंशब्दनेन यः प्रत्ययो विहितः स इह स्त्रीशब्देनोक्तः, तत्र स्त्रियामित्येवं विहितेऽसरूपोऽपवादो बाधको वा न भवतीति? एवमशक्यं विज्ञातुम्; एवं हि विज्ञायमाने व्यावक्रोशी, व्यावक्रुष्टिरिति णचो विषये क्तिनः प्रवृत्तिर्न स्यात्; यस्मात् 'कर्मव्यतीहारे णच् स्त्रियाम्' इति णज् विहितः, स्त्रियां क्तिन्नपि; तस्मात् पूर्वोक्त एवार्थः। यद्येवम्, 'क्तल्युट्तुमुन्खलर्थेषु' इति परिभाषा न प्राप्नोति; तेषामस्त्र्यधिकारविहितत्वात्? 'नपुंसके भावे क्तः', 'ल्युट् च'—हसितम्, हसनम्, तयोर्विषये 'भावे' इति घञपि प्राप्नोति? 'समानकर्तृकेषु

**पदमञ्जरी**

परिभाषेयमित्युक्तम्, तत्रैकपरिभाषावदियमपि पदमुपस्थापयति—अस्मिन्धात्वधिकारे यत्रासरूपोऽपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते, स्त्र्यधिकारे तु नेति। किं कृतं भवति? 'ददातिदधात्योर्विभाषा' इत्यादिवत् प्रमितिरेव विकल्परूषिता भवति, ततस्तद्वदेवोत्सर्गस्य प्रवृत्तिसिद्धिरिति। अथ 'असरूप उत्सर्गप्रत्ययोऽपवादविषये वा भवति' इति विज्ञायमाने को दोषः? न खलु कश्चिद्दोषः; अपवादविकल्पे प्राप्ते विभाषा, उत्सर्गविकल्पे त्वप्राप्तविभाषेति, किन्तु प्रतियोग्यपेक्षमसरूपपदमप्यपवादमेव गोचरयतीत्युक्तम्।

'अस्त्रियाम्' इत्यत्र पक्षत्रयं सम्भवति—अभिधेयसप्तमी वा स्यात्—स्त्रियामभिधेयायां वासरूपो न भवतीति, स्त्रियामित्येव वा विहितस्यासरूपस्य निषेधः स्यात् - स्त्रियामित्युच्चार्य ये विधीयन्ते ते नेति, स्त्रीग्रहणं वा स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति–स्त्रियां क्तिन्नित्यस्मिन्नधिकारे नेति। तत्राद्ये पक्षे विक्षिपा, विक्षेपिका, विक्षेप्त्रेति कविषये ण्वुल्तृचौ न स्याताम्। द्वितीये तु 'कर्मव्यतिहारे णच् स्त्रियाम्' व्यावक्रोशी, व्यावक्रुष्टिरिति णचो विषये क्तिन् न स्यात्, द्वयोरपि स्त्रियामित्युच्चार्य विधानादिति, ममाद्ययोः पक्षयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह–**स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वेति**। केचिदाहुः—अपवादप्रत्ययं वर्जयित्वेति वक्तव्ये प्रत्ययं वर्जयित्वेति वचनं प्रत्ययमात्रपरिग्रहार्थम्, तेनोत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशिनोरयं प्रतिषेधः। किं सिद्धं भवति? आसना, आस्या—स्त्र्यधिकारविहितेनापि युचापवादेन ऋहलोर्ण्यतः समावेशः सिद्धो भवति। घञस्तु क्तिन्नादिभिरनभिधादानादसमावेश इति। अन्ये तु—अपवादो वा बाधको भवतीति प्रकृतत्वात्स एवाच प्रत्यय इति व्याचक्षते, तेन घञः क्तिन्नादिभिरसमावेशः। आस्येत्यत्र कृत्यल्युटो बहुलमिति ण्यदिति। **ण्वुल्तृचावुत्सर्गाविति**। धातुमात्रे विधानात्। **इगुपधज्ञाप्रीकिरः क इत्यपवाद इति**। धातुविशेषे विधानात्। किं पुनः प्रयोगगतमसारूप्यम्? आहोश्विदुपदेशगतम्? किं चातः? प्रयोगे लादेशेषु प्रतिषेधः—ह्योऽपचदित्यत्र लुङपि प्राप्नोति, प्रयोगे ह्यसरूपत्वात्, लङ्यनच्कस्तकारः प्रत्ययः; लुङि अपाक्षीदितीच्छब्दः; श्वः कर्तेत्यत्र लृडपि प्राप्नोति? ज्ञापका-

**भावबोधिनी**

प्रत्ययान्त धातु से 'अ' प्रत्यय स्त्रीलिंग में होता है। ) यह अपवाद है, यह अकेला बाधक प्रत्यय ही होता है। उदा० चिकीर्षा, जिहीर्षा। [ सन्नन्त 'कृ' का 'चिकीर्ष', और हृ का 'जिहीर्षा होता है, प्रत्ययान्त मानकर केवल 'अ' प्रत्यय होता है, स्त्रीलिङ्ग में टाप् होकर रूप बनते हैं। करने की इच्छा, हरने की इच्छा—ये अर्थ हैं। ]

**विमर्श**—कृत् प्रत्यय अनेक हैं। उनमें कुछ उत्सर्ग हैं और कुछ अपवाद। अपवाद प्रत्ययों के विषय में व्यवस्था के लिये प्रस्तुत सूत्र है। सामान्यतया अकेला अपवाद सूत्र ही प्रवृत्त होता है। उसमें यह विकल्प की सुविधा देता है। इससे निम्न बातें समझनी चाहिये—

**न्यासः**

तुमुन्'—इच्छति भोक्तुम्, तस्य विषये 'इच्छार्थेषु लिङ्लोटौ' अपि प्राप्नुतः ? 'आतो युच्'—ईषत्पानम्, तस्य विषये 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खलपि प्राप्नोति ? वावचनस्य व्यवस्थितविभाषात्वान्न भवतीत्यदोषः। **ण्वुल्तृचावित्युत्सर्गाविति**। सामान्यविहितत्वात्। **इगुपधज्ञाप्रीकिरः कः इत्यपवादः**। विशेषविहितत्वात्।

'कर्मण्यण्' इत्युत्सर्गः, 'आतश्चोपसर्गे' इति कप्रत्ययोऽपवादः। ननु चानुबन्धकृतेनासारूप्येण सोऽप्यसरूप इत्याह—**नानुबन्धकृत इत्यादि**। अत्र 'ददातिदधात्योर्विभाषा' इति विभाषाग्रहणं ज्ञापकम्। यदि ह्यनुबन्धकृतमसारूप्यं स्याद् विभाषाग्रहणमनर्थकं स्यात्। अनुबन्धकृतादसरूप्यादेव हि 'श्याद्व्यध' इत्यादिसूत्रेण पक्षे णो भविष्यति ॥ ९४ ॥

**पदमञ्जरी**

त्सिद्धम्, यदयम् 'हशश्वतोर्लङ् च' इति लिड्विषये लङं शास्ति, तज् ज्ञापयति—न लादेशेषु वासरूपविधिरिति। एवमपि ग्रामणीः, ग्रामनाय इति क्विबादिविषयेऽणादयो न स्युः, न हि क्विबादयः प्रयोगे रूपवन्तः, लोपविधानात्तेषाम्। तस्मादुपदेशगतमसारूप्यम्। यद्येवम्, अनुबन्धभिन्नेषु विभाषाप्रसङ्गः, काणोरपि ह्युपदेशे भिन्नं रूपम्, प्रयोगे तु समानम्, तत्राह—**नानुबन्धकृतमिति**। अनुबन्धानामनेकान्तत्वात्तत्कृतमसारूप्यं नाश्रीयते, तथा च 'उदीचां माङः' इति श्रूयमाणेऽपि ङकारे तस्यानेकान्तत्वादव्याहतमेजन्तत्वमित्यात्वं प्रयुक्तम्। 'ददातिदधात्योर्विभाषा' इति विभाषाग्रहणं च लिङ्गमस्यार्थस्य; अन्यथाऽनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किं तेन ?

इह क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिः प्राप्नोति। हसितं छात्रस्य शोभनं हसनं छात्रस्य, अत्र क्तल्युड् विषये घञपि प्राप्नोति। तुमुन्–इच्छति भोक्तुम्, अत्र 'इच्छार्थेषु लिङ्लोटौ' इति लोट् प्राप्नोति, तुमुना च बाध इष्यते, लिङ् तु 'लिङ् च' इति वचनाद्भवत्येव। यद्येवम्, अस्मादेव नियमाल्लोडपि न भविष्यति। खलर्थ—'आतो युच्' ईषत्पानः, अत्र खलपि प्राप्नोति। ननु स्त्र्यधिकारे तावदस्त्रियामिति प्रतिषेधादस्याप्रवृत्तिः परस्तादपि विच्छिन्नत्वादेव न भविष्यति ? स्यादेतदेवम्, यद्ययमधिकारः स्यात्, परिभाषा त्वेषेत्युक्तम्। इष्यते च स्त्र्यधिकारादूर्ध्वमपि वासरूपविधिः—आसित्वा भुङ्क्ते, आस्यक्ते भोक्तुमित्यपि यथा स्याद्; अन्यथा भोजनार्थत्वादासनस्य पौर्वकाल्यमवगम्यते तुमर्थाधिकाराद्भावे क्त्वाप्रत्ययस्तत्रैव च लकार इति समानविषयत्वाद् बाध्यबाधकभावः स्यात्। तथा कालो भोक्तुम्, कालो भोजनस्य-तुमुना ल्युटो बाधः स्यात्। तस्मात् स्त्र्यधिकारस्य परस्तादपि वासरूपविधिरेषितव्यः, 'अर्हे कृत्यतृचश्च' इत्यत्र कृत्यतृज्ग्रहणं ज्ञापकम्—स्त्र्यधिकारस्य परस्तादनित्यैषा परिभाषेति। तस्मात् क्तल्युट्तुमुन्खलर्थेषु प्रतिषेधोऽवक्तव्य एव ॥ ९४ ॥

**भावबोधिनी**

(१) यदि उत्सर्ग और अपवाद प्रत्यय अनुबन्ध रहित हो जाने पर समान रूप वाले हो जाते हैं तो वहाँ केवल अपवाद प्रत्यय का एक रूप होता है। जैसा कि—ऊपर 'अण्' और 'क' के विषय में दिखाया जा चुका है। (२) यदि उत्सर्ग और अपवाद प्रत्यय असरूप हैं, दोनों का रूप भिन्न-भिन्न है तो वहाँ अपवाद विकल्प से प्रवृत्त होता है, पक्ष में उत्सर्ग भी प्रवृत्त होता है। अतः उत्सर्ग और अपवाद सभी प्रत्ययों के रूप होते हैं—जैसा कि—विक्षेपकः, विक्षेप्ता, विक्षिपः—इस लक्ष्य में दिखाया जा चुका है। (३) यह विकल्प की सुविधा "स्त्रियां क्तिन्" (पा. सू. ३.३.१०२) के अधिकार में विहित प्रत्ययों में नहीं है। वहाँ केवल अपवाद प्रत्यय होकर उसी का एक रूप बनता है। जैसे—चिकीर्षा। यहाँ केवल 'अ' होता है, क्तिन् नहीं। यहाँ असरूप और सरूप जैसा भी हो, अकेला अपवाद प्रत्यय ही होता है ॥ ९४ ॥

७१४. कृत्याः प्राङ् ण्वुलः[1] ॥ ९५ ॥ ( २८३१ )

'ण्वुल्तृचौ' ( ३.१.१३३ ) इति वक्ष्यति, प्रागेतस्माण्ण्वुल्संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः, कृत्य संज्ञकास्ते वेदितव्याः। तत्रैवोदाहरिष्यामः।

कृत्यप्रदेशाः—'कृत्यैरधिकार्थवचने' ( २.१.३३ ) 'कृत्यानां कर्तरि वा' ( २.३.७१ ) इत्येवमादयः॥

**न्यासः**

**कृत्याः प्राङ् ण्वुलः** ॥ 'कृत्याः' इति बहुवचनेन निर्देशो बहुत्वात् संज्ञिनाम्। अथ वा—अनुक्तकृत्प्रत्यय-संग्रहार्थं बहुवचनम्। तेन 'केलिमर उपसंख्यानम्' इत्येतत् कर्त्तव्यं न भवति। **ण्वुल्तृचाविति वक्ष्यतीति**। अथ 'रोगाख्यायां ण्वुल् बहुलम्' इत्यस्य ण्वुलोऽवधित्वं कस्मान्न विज्ञायते? ज्ञापकात्। यदयम् 'अर्हे कृत्यतृचश्च' इति कृत्यग्रहणं कृत्वा तृज्ग्रहणं करोति, ततो ज्ञायते-नास्यावधित्वमिति; अन्यथा तृचोऽपि कृत्यत्वाद् भेदेनो-पादानमनर्थकं स्यात्। यद्येवम्; प्राग्वचनमनर्थकं स्यात्, अत एव ज्ञापकात् तृच इयं संज्ञा न भविष्यति? नैतदस्ति; असति ह्येतस्मिन्, ज्ञापकात् तृच एव न स्यात्। ण्वुलस्तु स्यादेव। स्यादेतत्—योगापेक्षं ज्ञापकम्, एतस्मिन् योगे कृत्यसंज्ञा भवति-एषोऽर्थस्तृज्ग्रहणेन ज्ञाप्यते, तेन ण्वुलोऽपि न भविष्यतीति? एवमन्येषामजा-दीनां स्यात्, प्रतिपत्तिगौरवञ्च स्यात्; योगापेक्षस्य ज्ञापकस्य दुर्विज्ञानत्वात्॥ ९५॥

**पदमञ्जरी**

**कृत्याः प्राङ् ण्वुलः** ॥ **ण्वुलतृचाविति वक्ष्यतीति**। 'रोगाख्यायां ण्वुल् बहुलम्' मित्ययं त्ववधिर्न भवति; 'अर्हे कृत्यतृचश्च' इति पृथक् तृचो ग्रहणात्। यद्येवम्, 'प्राङ् ण्वुलः', इति न वक्तव्यम्, 'कृत्याः' इत्येवास्तु, तृज्ग्रहणादेव ज्ञापकात्परतोऽनुवृत्तिर्न भविष्यति, योगापेक्षं च ज्ञापकम् 'ण्वुल्तृचौ' इत्यस्माद्योगात्प्राक् कृत्य-सञ्ज्ञाधिकार इति? सत्यम्; 'कृत्याः' इत्येतावदेव पठितं सूत्रकारेण। **वृत्तिकारस्तु**, भाष्ये पूर्वपक्षरूपेण पठितं सूत्रे प्रचिक्षेप। **विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण**। 'कृत्याः' इति बहुवचनमनुक्तसमुच्चयार्थम्, तेन 'केलिमर उपसङ्ख्यानम्' ( वा० २१२ ) इत्यादि नोपसंख्येयं भवति॥ ९५॥

**भावबोधिनी**

"ण्वुल्तृचौ" ( पा. सू. ३.१.१३३ ) यह आगे कहा जायगा। इस 'ण्वुल्' शब्द के उच्चारण से पहले तक यहाँ से लेकर जिनका विधान किया जायगा, उनकी 'कृत्य' संज्ञा समझनी चाहिये। उन प्रत्ययों के उदाहरण उन्हीं सूत्रों में दिये जायेंगे।

'कृत्य' के लक्ष्य हैं—"कृत्यैरधिकार्थवचने" ( पा. सू. २.१.३३ ) "कृत्यानां कर्त्तरि वा" ( पा. सू. २.३.७१ ) आदि सूत्र।

**विमर्श**—आचार्य पाणिनि ने 'कृत्याः' इतना ही सूत्र बनाया है। भाष्यकार ने भी इतना ही लिखा है। किन्तु वार्त्तिककार ने "कृत्यसंज्ञायां प्राङ् ण्वुल्वचनम्" ऐसा कह कर आगे ज्ञापक द्वारा इस कार्य की उपपत्ति मानकर 'कृत्याः' इसी को स्वीकार किया हैं। कैयट, सिद्धान्तकौमुदीकार और पदमंजरीकार भी केवल "कृत्याः" को मानते हैं। परन्तु काशिकाकार और न्यासकार ने "कृत्याः प्राङ् ण्वुलः" ऐसा माना है। यह केवल स्पष्टता के लिये माना है—ऐसा प्रतीत होता है॥ ९५॥

---

१. वस्तुतः 'कृत्याः' इत्येव सूत्रम्। 'प्राङ् ण्वुलः' इत्यंशस्तु प्रक्षिप्तो वृत्तिकारेण। यथाह कैयटोऽत्रैव सूत्रे—'कृत्या इत्येतावदेव सूत्रम्' इति। भट्टोजि-हरदत्तमिश्रावपि कैयटमतमेव स्वीचक्रतुः।

**७१८. तव्यत्तव्यानीयरः ॥ ९६ ॥ (२८३४)**

**'धातोः' ( ३.१.९१ ) इति वर्तते। धातोस्तव्यत्, तव्य, अनीयर्-इत्येते प्रत्यया भवन्ति। तकाररेफौ स्वरार्थौ। कर्त॑व्यम्। कर्तव्य॑म्। कर॒णीय॑म्।**

*** वसेस्तव्यत् कर्तरि णिच्च * ( म० भा० ३.१.९६ वा० २ )। वास्तव्यः।**

*** केलिमर उपसंख्यानम् * ( वा० १ )। पचेलिमा माषाः। भिदेलिमानि काष्ठानि। कर्मकर्तरि चायमिष्यते ॥**

**न्यासः**

तव्यत्तव्यानीयरः ॥ **तकाररेफौ स्वरार्थाविति**। तकारः 'तित्स्वरितम्' इति स्वरितार्थः। रेफः 'उपोत्तमं रिति' इति मध्योदात्तार्थः।

**वसेस्तव्यत् कर्त्तरि णिच्चेति**। 'वस निवासे' इत्यस्मात् कर्त्तरि तव्यत्प्रत्ययो भवति, स च णिद् भवतीति। च चैतद् वक्तव्यम्; 'कृत्यल्लुटो बहुलम्' इति सिद्धत्वात्। वसतीति **वास्तव्यः**। णित्त्वाद् वृद्धिः।

**केलिमर उपसंख्यानमिति**। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु प्रागेव कृतम्। पुनरपि क्रियते–'कृत्यल्युटो बहुलम्' इति बहुलवचनात् केलिमर्प्रत्ययोऽपि कृत्यो भविष्यति। ककारः कित्कार्यार्थः, रेफः स्वरार्थः। स्वयमेव पच्यन्ते **पचेलिमा माषाः**। शब्दशक्तिस्वाभाव्यादत एव बहुलवचनाच्च कर्मकर्त्तर्येव भवति, नान्यत्र ॥ ९६ ॥

**पदमञ्जरी**

**तव्यत्तव्यानीयरः ॥ वसेरिति**। 'वस निवासे' ( धा० पा० १००५ ) इत्यस्य ग्रहणम्, न तु 'वस आच्छादने' ( धा० पा० १७४४ ) इत्यस्य लुग्विकरणस्य। 'तयोरेव कृत्यक्तखलर्थाः' इति वचनात्कर्त्तरि न प्राप्नोतीति वचनम्, णिद्वद्भावार्थं च। **वास्तव्य इति**। तद्धितान्तो वा पुनरेष भविष्यति, वास्तुनि भावो वास्तव्यः, दिगादित्वाद्यत्। अवास्तव्य इत्यत्र स्वरभेदो नास्ति, कृत्योकेष्णुच्' इति यदन्तोदात्तत्वं तदेव 'ययतोश्चातदर्थे' इत्यनेन भविष्यति। **केलिमर इति**। ककारो गुणवृद्धिप्रतिषेधार्थः, रेफस्स्वरार्थः।

**कर्मकर्त्तरि चायमिष्यत इति**। **भाष्ये** तु—'पचेलिमा माषाः, पक्तव्याः; भिदेलिमास्सरलाः, भेत्तव्याः' ( म० भा० ) इति शुद्धे कर्मणि प्रदर्शितम् ॥ ९६ ॥

**भावबोधिनी**

"धातोः" ( = धातु से ) इसकी अनुवृत्ति होती है। धातु से तव्यत्, तव्य और अनीयर्—ये तीन प्रत्यय होते हैं। तकार और रेफ अनुबन्ध स्वर के लिये हैं। [ 'तित् स्वरितम्' ( पा. सू. ६.१.१८५ ) से स्वरित स्वर और "उपोत्तमं रिति" ( पा. सू. ६.१.२१७ ) से मध्योदात्त स्वर की सिद्धि के लिये ये 'त्' और 'रेफ' हैं। ] उदाहरण—कर्त्तव्यम्। कर्त्तव्यम्। करणीयम् [ कृ+तव्यत् और कृ+तव्य दोनों में ऋ का गुण, रपर, 'त' का द्वित्व, 'कर्त्तव्य', कृ+अनीयर् गुण, रपर, णत्व—करणीय। प्रातिपदिक संज्ञा और तत्सम्बन्धी कार्य होते हैं। करना चाहिये—यह अर्थ है।

वस् धातु से तव्यत् प्रत्यय कर्ता अर्थ में होता है और वह णित् होता है। *उदाहरण—वास्तव्यः। [ 'वसति' इस अर्थ में वस्+तव्यत्, णित् होने पर "अत उपधायाः" ( पा. सू. ७.२.११६ ) से उपधा की वृद्धि—'वास्तव्य'। विभक्ति कार्य। ]

केलिमर् का उपसंख्यान करना चाहिये। *उदाहरण—पचेलिमाः माषाः। भिदेलिमानि काष्ठानि। [ पच्+केलिमर् = एलिम, बहुवचन का रूप पचेलिम+जस् = अस् दीर्घ और स् का रुत्व विसर्ग—पचेलिमाः। पकने योग्य। भिद्+केलिमर् = एलिम नपुंसकलिङ्ग बहुवचन में—भिदेलिम्+जस्–शि = इ, नुम् आदि करने पर—भिदेलिमानि। टूटने योग्य—यह अर्थ है। ] यह 'केलिमर' प्रत्यय कर्मकर्ता में ही इष्ट है।

## ७१६. अचो यत् ॥ ९७ ॥ (२८४२)

**अजन्ताद्धातोर्यत्प्रत्ययो भवति । तकारः 'यतोऽनावः' ( ६.१.२१३ ) इति स्वरार्थः । गेयम् । पेयम् । चेयम् । जेयम् ।**

**अज्ग्रहणं किम्, यावता हलन्ताण्ण्यतं वक्ष्यति ? अजन्तभूतपूर्वादपि यथा स्यात्—दित्स्यम्, धित्स्यम् ( म० भा० ) ।**

### न्यासः

**अचो यत्** ॥ तकारः 'यतोऽनावः' इति विशेषणार्थ इति । आद्युदात्तार्थः । **गेयमिति** । 'कै गै शब्दे', आदेच उपदेशेऽशिति' इत्यात्त्वम्, 'ईद्यति' इतीत्त्वम्, गुणः ।

**यावतेत्यादि** । इह द्विविधा धातवः—हलन्ताः, अजन्ताश्च; तत्र 'ऋहलोर्ण्यत्' इति ण्यतं हलन्तादिच्छति । अतः पारिशेष्यादेवाज्ग्रहणमन्तरेणाप्यजन्तादेव यद् भविष्यतीत्यतोऽज्ग्रहणमपार्थकमित्यभिप्रायः । **अजन्तभूतपूर्वादिति** । अजन्तश्चासौ भूतपूर्वश्चेति कर्मधारयः । यः प्रागजन्त आसीत् संप्रति तु हलन्तः, ततोऽपि यथा स्यादित्येवमर्थमज्ग्रहणम् । **दित्स्यम्** । **धित्स्यम्** । दाञो धाञश्च सन्, द्विर्वचनम् । 'सनि मीमा' इतीस् । 'अत्र लोपोऽभ्यासस्य'

### पदमञ्जरी

**अचो यत्** । **अज्ग्रहणं किमिति** । पूर्वसूत्र एव यद्ग्रहणं कर्त्तव्यमिति प्रश्नः । **यावतेत्यादि** । द्वये हि धातवः—अजन्ताः, हलन्ताश्च । तत्र हलन्ताद् ण्यतं वक्ष्यति, अतः पारिशेष्यादजन्तादेव यद्भविष्यतीत्यभिप्रायः ।

**अजन्तभूतपूर्वादपीति** । पूर्वं भूतो भूतपूर्वः 'सुप् सुपा' इति समासः, अजन्तश्चासौ भूतपूर्वश्च अजन्तभूतपूर्वः । **दित्स्यं धित्स्यमिति** । दाञो धाञश्च सन्, द्विर्वचनम्, 'सनिमीमाघु' इत्यादिना इस, 'सः स्यार्द्धधातुके'

### भावबोधिनी

**विमर्श**—काशिकाकार और न्यासकार ने केलिमर् को कर्मकर्ता अर्थ में माना है । परन्तु भाष्य में ऐसा कोई वचन नहीं है । भाष्य के अनुसार यह 'कर्म' अर्थ में होता है । कैय्यट, हरदत्त और उद्द्योतकार नागेश ने काशिकाकार के मत की आलोचना की है । उनका कहना है कि लकारवाच्य कर्ता ही कर्मवत् होता है अतः 'तव्य' को कर्मकर्ता अर्थ में मानना ठीक नहीं है । केवल शुद्ध कर्म अर्थ में मानना ही उचित है ॥ ९६ ॥

अजन्त धातु से यत् प्रत्यय होता है । तकार [ "यतोऽनावः" ( पा. सू. ६।१।२१३ ) यत् प्रत्ययान्त द्वयच् का आदि उदात्त होता है यदि वह यत् 'नौ' से परे न हो तो ] से आद्युदात्त स्वर के लिये है । उदाहरण—गेयम् पेयम्, चेयम्, जेयम्, [ यह भाव और कर्म अर्थों में होता है । अतः गाने योग्य या गाना चाहिये, पीने योग्य या पीना चाहिये, चुनने योग्य या चुनना चाहिये, जप करने योग्य, या जप करना चाहिये । गै = गा + यत्, पा + यत् "ईद्यति" से अ का ई, गी, पी का गुण करने पर—गेय, पेय, चि+यत्, जि + यत् का भी गुण होता है चेय, जेय । विभक्तिकार्य । ]

'अच्' ग्रहण किस लिये है क्योंकि हलन्त से तो "ऋहलोर्ण्यत्" सूत्र से ण्यत् कहा जायगा ? जो पहले अजन्त रह चुका हो । [ वर्तमान में न हो ] उससे भी यत् हो सके, इसके लिये अज् का ग्रहण है—दित्स्यम् धित्स्यम् । [ दा + सन्, धा + सन्, "सन्यङोः" से द्वित्व, 'सनि मीमा घु०' से 'आ' का 'इस्'—"अत्र लोपोऽभ्यासस्य" ( पा. सू. ७.४.५८ ) से अभ्यास का लोप—दिस् + स, धिस् + स, "सः स्यार्द्धधातुके" ( पा. सू.७.४.४९ ) से प्रथम 'स्' का त्—दित्स, धित्स । इस अवस्था में आर्धधातुक प्रत्यय के न आने पर भी उसके विवक्षित हो जाने से, बुद्धिस्थ हो जाने से ही "अतो लोपः" से 'अ' का लोप हो जाता है–दित्स्, धित्स् । यहाँ सम्प्रति अजन्त नहीं है किन्तु पहले था, उसे ही मानकर यह सूत्र प्रत्यय कर सके इसके लिये 'अच्' का ग्रहण है । यदि आर्धधातुक परे रहते लोप माना जाय तब तो यह भी फल नहीं होता । अतः केवल स्पष्टता के लिये 'अच्' का ग्रहण है ।

**❀ तकिशसिचतियतिजनीनामुपसंख्यानम् ❀ ( म० भा० ३.१.९७ वा० २ )। तकि—तक्यम्। शसि—शस्यम्। चति—चत्यम्। यति—यत्यम्। जनि—जन्यम्।**

**❀ हनो वा वध च ❀ ( वा० २ )। वध्यम्। घात्यम्।**

**न्यासः**

इत्यभ्यासलोपः। 'सः स्यार्धधातुके' इति तत्वम्। अनुत्पन्न एवार्धधातुके विषयभावेन विवक्षिते 'अतो लोपः' इत्यकारलोपः। अस्यामवस्थायामसत्यज्ग्रहणे न स्यात्; अनजन्तत्वात्। तस्मिंस्तु सति भूतपूर्वमजन्तत्वमाश्रित्य भवति। पाक्षिकञ्चैतत् प्रयोजनं वेदितव्यम्। क्व तस्मिन् पक्षे? यदार्धधातुके विषयभावेन विवक्षिते 'अतो लोपः' विधीयते। यदाऽऽर्धधातुकः, तदा नेदं प्रयोजनम्। विस्पष्टार्थं त्वज्ग्रहणं वेदितव्यम्।

**तकिशसीत्यादि**। 'तक सहने', 'शसु हिंसायाम्', 'चते चदे याचने', यती प्रयत्ने', 'जनी प्रादुर्भावे'—एषां यत्प्रत्ययस्योपसंख्यानम्=प्रतिपादनं कर्त्तव्यम्। प्रतिपादनं तु बहुलग्रहणमाश्रित्य कर्त्तव्यम्।

**हनो वा वध चेति**। हन्तेर्धातोर्यत्प्रत्ययो भवति, ण्यतोऽपवादः। वावचनात् पक्षे ण्यद् भवत्येव। यत्प्रत्ययस्तु तत एव बहुलवचनाल्लभ्यते। यदा यद् भवति तदा हन्तेर्वधादेशः। सोऽपि 'हनो वध लिङि' इत्यत्र 'बहुलं छन्दसि' इत्यतो बहुलग्रहणानुवृत्तेर्लभ्यते। **घात्य इति**। 'हनस्तः' इति तत्वम्, 'हो हन्तेः' इति कुत्वम्॥ ९७॥

**पदमञ्जरी**

इति तत्वम्, 'अत्र लोपोऽभ्यासस्य' दित्स धित्स इति स्थिते, अनुत्पन्न एवार्द्धधातुके बुद्धिस्थे एवातो लोपे कृते सम्प्रत्ययं हलन्त इति ण्यत् स्याद्; अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति। तेन 'यतोऽनावः' इत्याद्युदात्तत्वम्, ण्यति तु तित्स्वरितं स्यात्। चिकीर्ष्यमित्यादौ तु ण्यद्यतोर्विशेषाभावः। 'यतोऽनावः' इत्यत्र हि 'द्व्यचः' इति वर्त्तते। यदा त्वार्द्धधातुके परतो लोपः, तदैतदज्ग्रहणं न कर्तव्यमेव।

**तकिशसीत्यादि**। 'तकि हसने' ( धा० पा० ११७ ), 'शसु हिंसायाम्' ( धा० पा० ७२७ ) 'चते चदे याचने' ( धा० पा ८६५, ८६६ ), 'यती प्रयत्ने' ( धा० पा० ३० ) 'जजी प्रादुर्भावे' ( धा० पा० ११४९ ) 'यतोऽनावः' इति स्वरार्थं जनेर्यद्विधानं जन्यमिति रूपम, न तु ण्यतापि सिद्धम्; 'जनिवध्योश्च' इति वृद्धिप्रतिषेधात्। शंसिमपि केचित्पठन्ति—तद्वा नाराशंस्यं राद्धचं च।

**हनो वा वध चेति**। हन्तेर्वा यत्प्रत्ययो भवति, तत्सन्नियोगेन च वधादेशः। **वध्यमिति**। तद्धितान्तो वा पुनरेष भविष्यति—वधमर्हतीति वध्यः, 'दण्डादिभ्यः' इति यत्। यदि तद्धितः, समासो न प्राप्नोति—असिवध्यः, मुसलवध्य इति, कृति पुनः सति 'कर्तृकरणे कृता बहुलम्' इति समासः सिद्धो भवति। **घात्यमिति**। 'हनस्तोऽचिण्णलोः' इति तत्वम्, 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्॥ ९७॥

**भावबोधिनी**

❀ तक्, शस्, चत्, यत् और जन् का भी यत् में उपसंख्यान करना चाहिये। तक्—तक्यम् [ सहनीय ] शस्यम् [ हिंसा करने योग्य ], चत्यम् [ याचना करने योग्य ], यत्यम् [ तत्न करने योग्य ], जन्यम् [ उत्पन्न होने योग्य। इन सभी में धातु से यत् प्रत्यय होता है। ]

❀ हनो वा वध च। ❀ हन् से यत् प्रत्यय होता है और विकल्प 'वध' आदेश होता है। [ जब यत् होता है तभी 'वध' आदेश होता है। पक्ष में ण्यत् होता है— ] वध्यम्; घात्यम्। [ हन्+यत्, वध आदेश—बध्यम् यत् न होने पर "ऋहलोर्ण्यत्" से ण्यत् हन्+य, उपधावृद्धि। "हनस्तोऽचिण्णलोः" ( पा. सू. ७.३.३२ ) से 'न' का 'त्' 'हो हन्तेर्ञ्णिन्नेषु' ( पा. सू. ७.३.२४ ) से ह का घ—घात्यम्। वध करने योग्य—यह अर्थ है। ]॥ ९७॥

७१७. पोरदुपधात् ॥ ९८ ॥ (२८४४)

**पवर्गान्ताद्धातोरकारोपधाद्यत्प्रत्ययो भवति । ण्यतोऽपवादः । शप्—शप्यम् । लभ्—लभ्यम् ।**
**पोरिति किम् ? पाक्यम् । वाक्यम् ।**
**अदुपधादिति किम् ? किम् ? कोप्यम् गोप्यम् तपरकरणं तत्कालार्थम् । आप्यम् ॥**

७१८. शकिसहोश्च ॥ ९९ ॥ (२८४७)

**'शक्लृ शक्तौ' ( धा० पा० १२६२ ) 'षह मर्षणे' ( धा० पा० ८५३ )—अनयोर्धात्वोर्यत्प्रत्ययो भवति शक्यम् । सह्यम् ॥**

न्यासः

**पोरदुपधात् ॥ पाक्यम् । वाक्यमिति ।** 'चजोः' इति कुत्वम् । **कोप्यम् । गोप्यमिति ।** 'कुप क्रोधे', 'गुप गोपनकुत्सनयोः', 'गुप व्याकुलीकरणे' । **आप्यमिति ।** 'आप्लृ व्याप्तौ' ॥ ९८ ॥

**शकिसहोश्च ॥ ९९ ॥**

पदमञ्जरी

**पोरदुपधात् ॥ पाक्यं वाक्यमिति ।** 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । **कोप्यं गोप्यमिति ।** 'कुप कोपने' ( धा० पा० १२३३ ), 'गुप व्याकुलत्वे' ( धा० पा० १२३४ ) । **आप्यमिति ।** 'आप्लृ व्याप्तौ' ( धा० पा० १२६० ) एषु त्रिषु 'यतोऽनावः' इत्याद्युदात्तत्वं न भवति, तित्स्वरित एव तु भवति ॥ ९८ ॥

**शकिसहोश्च ॥ शक्लृ शक्ताविति ।** उपलक्षणमेतत्, 'शक विभाषितो मर्षणे' (धा० पा० ११८७) इत्यस्यापि ग्रहणम् । **षह मर्षण इति ।** ननु 'षह शक्यर्थे' ( धा० पा० ११२८ ) इत्यस्यैव परस्मैपदिनोऽननुबन्धकस्य ग्रहणं प्राप्तम्, नैष दोषः; प्रत्ययविधिविषयत्वादननुबन्धकपरिभाषायाः, तस्माद् द्वयोरपि ग्रहणम् । अन्ये तु 'कृत्यल्युटो बहुलम्' इति वृत्तिकारोक्तयोरेव ग्रहणमिच्छन्ति ॥

भावबोधिनी

पवर्गान्त अकारोपध धातु से यत् प्रत्यय होता है । यह [ हलन्त मान कर होने वाले ] ण्यत् का अपवाद है । उदाहरण—शप्—शप्यम्, लभ्—लभ्यम् । [ शाप देने योग्य । प्राप्त करने योग्य । ]

'पवर्गान्त से' इसका क्या प्रयोजन है ? पाक्यम्, वाक्यम् । पच् + ण्यत् = य, उपधावृद्धि, "चजोः कुः घिण्ण्यतोः" ( पा. सू. ७.३.५२ ) से 'च्' का 'क्' पाक्य । इसी प्रकार वच् + ण्यत्, उपधावृद्धि, कुत्व—वाक्यम् । यहाँ पवर्गान्त नहीं है । अतः यत् नहीं होता है । ] ह्रस्व अकार उपधा में हो—इसका क्या फल है ? कोप्यम् । गोप्यम् । ] कुप् + ण्यत्, गुप् + ण्यत्, उपधागुण, यहाँ अकारोपध नहीं है अतः यत् नहीं होता है । ] 'अत्' में तपर करण "तपरस्तत्कालस्य" के अनुसार उच्चारण समकाल का बोध कराने के लिये है । अतः यहाँ यत् नहीं होता है— ] आप्यम [ आप् + ण्यत् । यद्यपि यत् और ण्यत् दोनों में एक सा ही होता है केवल स्वर में भेद होता है ण्यत में स्वरित ही होता है "यतोऽनावः" ( पा. सू. ६.१.२१३ ) से आद्युदात्त नहीं होता है ] ॥ ९८ ॥

'शक्लृ' यह समर्थ होना अर्थ में है, 'षह' यह सहन करना अर्थ में है, इन दो धातुओं से यत् प्रत्यय होता है । उदाहरण—शक्यम्, सह्यम् [ यह ण्यत् का अपवाद है । सकने योग्य और सहन करने योग्य—ये अर्थ है ॥ ९९ ॥

### ७१९. गदमदचरयमश्चानुपसर्गे ॥ १०० ॥ (२८४८)

**गद व्यक्तायां वाचि' ( धा० पा० ५२ ) 'मदी हर्षे' ( धा० पा० १२०९ ), 'चर गतिभक्षणयोः' ( धा० पा० ५५९ ), 'यम उपरमे' ( धा० पा० ९८५ )—इत्येतेभ्यश्चानुपसर्गेभ्यो यत्प्रत्ययो भवति। गद्यम्। मद्यम्। चर्यम्। यम्यम्।**

**अनुपसर्ग इति किम् ? प्रगाद्यम्। प्रमाद्यम्। यमेः पूर्वेणैव सिद्धेऽनुपसर्गनियमार्थं वचनम्।**

**ॐ चरेराङि चागुरौ ॐ ( म० भा० ३.१.१०० वा० १ )। आचार्यो देशः।**

**अगुराविति किम् ? आचार्य उपनेता ॥**

**न्यासः**

**गदमदचरयमश्चानुपसर्गे ॥ अनुपसर्ग इति।** सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी। अत एवाह—**अनुपसर्गेभ्य इति।** अविद्यमानोपसर्गेभ्य इत्यर्थः। अथैवं कस्मान्न विज्ञायते—उपसर्गादन्योऽनुपसर्ग इति ? अशक्यमेवं विज्ञातुम्; एवं हि विज्ञायमाने केवलेभ्यो न स्यात्। नञिवयुक्तन्यायेनोपसर्गसदृशस्य सुबन्तस्य ग्रहणे सति 'वदः सुपि क्यप् च' इत्यत्र पुनः सुब्ग्रहणमनर्थकं स्यात्, अस्यैवानुपसर्गस्य तत्रानुवृत्तेः। तस्मात् पूर्वोक्त एवार्थो युक्तः। **नियमार्थमिति।** अनुपसर्गादेव यथा स्यात्, सोपसर्गान्मा भूदिति।

**चरेरित्यादि।** सोपसर्गार्थमिदम्—चरेर्धातोराङि चोपपदे यद्भवतीति, अगुरावभिधेये। स तु ज्ञापकादेव सिध्यतीति नोपसंख्येयः, यदयम् 'आश्चर्यमनित्ये' 'सम्माननोत्सञ्जनाचार्यकरण' इत्यादि करोति, ततो ज्ञायते-चरेराङि चागुरौ यत् भवतीति। **आचर्यो देश इति।** गन्तव्य इत्यर्थः। गुरुः = उपनेता ॥ १०० ॥

**पदमञ्जरी**

**गदमदचरयमश्चानुपसर्गे ॥ अनुपसर्गेभ्य इति।** सूत्रे 'अनुपसर्गे' इति व्यत्ययेन पञ्चम्यर्थे सप्तमीति भावः। अत एवोपसर्गादन्योऽनुपसर्गस्तस्मिन्ननुपसर्गे उपपद इत्यर्थो न भवति। एवं हि केवलेभ्यो न स्यात्, 'वदः सुपि क्यप् च' इत्यत्र सुब्ग्रहणमनर्थकं स्यात् ? अनुपसर्गे' इति हि वर्त्तते तत्र नञिवयुक्तन्यायेनोपसर्गसदृशस्य सुबन्तस्य ग्रहणं भविष्यति।

**नियमार्थमिति।** अनुपसर्गादेव यथा स्यात्सोपसर्गान्मा भूदिति। कथं तर्हि तेन न तत्र भवेद्विनियम्यमिति ? प्रमादपाठोऽयम्, विनियाम्यमिति पाठः। एतेन 'इति यत्नोपचर्यम्' इति व्याख्यातम्।

**चरेराङि चागुराविति।** सोपसर्गार्थं वचनम्। **आचर्यो देश इति।** गन्तव्य इत्यर्थः। **उपनेता = गुरुः** ॥१००॥

**भावबोधिनी**

'गद' यह स्पष्ट बोलना अर्थ में है, 'मद' यह 'हर्ष' अर्थ में है, 'चर' यह चलना और भक्षण करना अर्थ में है, 'यम' यह उपरम = अलग होना अर्थ में हैं—इन उपसर्ग रहित धातुओं से यत् प्रत्यय होता है। उदाहरण—गद्यम् [बोलने योग्य], मद्यम् [हर्षित होने योग्य, चर्यम् [चलने अथवा खाने योग्य], यम्यम् [अलग करने योग्य, शान्त करने योग्य]।

उपसर्ग रहित से—इसका क्या फल है ? प्रगाद्यम्, प्रमाद्यम्। [ इनमें 'प्र' उपसर्ग होने से यत् न होकर ण्यत् होता है। अतः उपधावृद्धि होती है। ] यम् से तो यत् की सिद्धि "पोरदुपधात्" इस पूर्ववर्ती सूत्र से सम्भव थी अतः यह अनुपसर्ग = उपसर्ग रहित ही 'यम्' से यत् होता है -इस नियम के लिये सूत्र में ग्रहण है। [ अतः उपसर्ग-सहित से ण्यत् और केवल से यत् होता है। ]

आङ् पूर्व में हो ऐसी 'चर' धातु से यत् प्रत्यय गुरु भिन्न अर्थ में होता है। उदाहरण—आचार्यो देशः [ आङ् चर्+यत्, जाने योग्य देश। ] 'गुरु भिन्न में' इसका क्या प्रयोजन है ? आचार्यः = उपनेता। [ यहाँ गुरु अर्थ है अतः 'यत्' न होकर ण्यत् होता है—आ चर्+य, णित् होने से उपधा की वृद्धि—आचार्य।

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ [ मनुस्मृति २.१४० ]

इस लिये गुरु को 'आचार्य' कहा जाता है ] ॥ १०० ॥

## ७२०. अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥ (२८४९)

**अवद्य, पण्य वर्या — इत्येते शब्दा निपात्यन्ते ; गर्ह्य, पणितव्य, अनिरोध-इत्येतेष्वर्थेषु यथासंख्यम् । अवद्यमिति निपात्यते, गर्ह्यं चेत्तद्भवति । अवद्यं पापम् । अनुद्यमन्यत् । 'वदः सुपि क्यप् च' ( ३.१.१०६ ) ।**

**पण्यमिति निपात्यते, पणितव्यं चेत्तद्भवति । पण्यः कम्बलः । पण्याः गौः । पाण्यम् अन्यत् ।**

**वर्येति स्त्रियां निपात्यते, अनिरोधश्चेद्भवति । अनिरोधः = अप्रतिबन्धः । शतेन वर्या । सहस्रेण वर्या । वृत्याऽन्या ।**

न्यासः

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ अवद्यमिति ।** वदेर्नञ्युपपदे 'वदः सुपि क्यप् च' इति यत्क्यपोः प्राप्तयोर्यदेव निपात्यते । **अनुद्यमिति ।** यजादित्वात् संप्रसारणम्, 'नलोपो नञः', तस्मान्नुडचि' इति नुट् । **पण्यमिति ।** पणेर्व्यवहारार्थस्य ण्यति प्राप्ते यन्निपात्यते । **पाण्यमिति ।** स्तोतव्यमित्यर्थः ।

**वर्येति ।** वृङो ण्यति प्राप्ते यन्निपात्यते । स्त्रियामित्यनेन सूत्रे लिङ्गनिर्देशस्य तन्त्रतां दर्शयति । **अप्रतिबन्ध इति ।** अनेनानिरोधशब्दस्यार्थमाचष्टे । अप्रतिबन्धः प्रसराभिघात इत्यर्थः । **वृत्येति ।** निरोधनीया ।

पदमञ्जरी

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ अवद्यमिति । निपात्यत इति ।** वदेर्नञ्युपपदे 'वदः सुपि क्यप् च' इति यत्क्यपोः प्राप्तयोर्यदेव यथा स्याद्—गर्ह्य एव च यथा स्यादित्युभयार्थं निपातनम् । **अवद्यं पापमिति ।** अवदनार्हत्वात् । **अनुद्यमन्यदिति ।** गुरुनामादि । तद्धि गर्ह्यं न भवत्यथ च वदनार्हमपि न भवति । अत्र क्यबेव भवति, यजादित्वात्सम्प्रसारणम्, 'नलोपो नञः', 'तस्मान्नुडचि' । **पण्यं व्यवहर्त्तव्यमिति ।** निपातनस्य रूढ्यर्थत्वात् पण्यशब्दस्य च तत्रैव रूढत्वात् । उक्तं च—

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥ इति ।

**पाण्यमन्यदिति ।** स्तुत्यमित्यर्थः । **वर्येति स्त्रियां निपात्यत इति ।** सूत्रेऽवद्यादीनि अविभक्तिकानि पृथक् पदानि, न तु द्वन्द्वस्य जसन्तनिर्देश इति भावः । **शतेन वर्येति ।** 'वृङ् सम्भक्तौ' ( धा० पा० १५०९ ) इत्यस्येदं निपातनम्; तत्रैवानिरोधसम्भवात् । **वृत्यान्येति ।** 'वृञ वरणे' ( धा० पा० १२५४ ) 'एतिस्तुशास्वृ' इत्यादिना

भावबोधिनी

अवद्य, पण्य तथा वर्या—ये तीन शब्द क्रमशः—गर्ह्य ( निन्दनीय ), पणितव्य [ = खरीदने योग्य ] अनिरोध [ अप्रतिबन्ध ] इन अर्थों में निपातित होते हैं । उदा० अवद्यम् यह निपातित होता है यदि वह गर्ह्य = निन्दनीय होता हो तो । [ नञ् उपपद 'वद' धातु से 'वदः' सुपि क्यप् च'' ( पा. सू. ३.१.१०६ ) से क्यप् और यत् दोनों प्राप्त हैं केवल यत् होता है । अतः सम्प्रसारण नहीं होता है । ] अवद्यम् पापम् = निन्दा करने योग्य पाप । यदि निन्द्य अर्थ नहीं होता—अनुद्यम् [ नञ् उपपद वद् + क्यप् = य, कित् परे रहने से 'व्' का सम्प्रसारण 'उ' तथा 'अ' का पूर्वरूप—उद्य, 'न' का उपपद समास होने पर न् लोप, अ + उद्य, नुट् का आगम —अनुद्यम् । न कहने योग्य । पण्यम्—यह निपातित होता है यदि वह पणितव्य = खरीदने योग्य हो तो । उदा० पण्यः कम्बलः । पण्याः गौः । [ यहाँ व्यवहारार्थक पण् धातु से ण्यत् प्राप्त है, यत् होता है । खरीदने योग्य कम्बल, खरीदने योग्य गाय । ] दूसरा अर्थ हो तो—पाण्यम् । [ पण् + ण्यत्, उपधावृद्धि । स्तुति करने योग्य ] ।

'वर्या' यह स्त्री लिङ्ग में ही निपातित होता है, यदि 'अनिरोध' अर्थ हो तो । अनिरोध = अप्रतिबन्ध = अनियम । शतेन वर्या । सहस्रेण वर्या । [ सौ पुरुषों द्वारा वरण करने योग्य, हजार पुरुषों द्वारा वरण करने योग्य । यहाँ वरयिताओं का कोई प्रतिबन्ध = नियम नहीं है । अतः वृ (ङ्) + यत् = य, गुण रपर, टाप्—वर्या । ] इसमें भिन्न 'वृत्या' होती है । [ वृ + क्यप् = य, यहाँ ''एतिस्तुशास्वृदृजुषः क्यप्'' ( पा. सू. ३.१.१०९ ), और पित् होने से ''ह्रस्वस्य पिति कृति तुक्'' ( पा. सू. ६.१.७१ ) से तुक् आगम वृत्य + टाप् + वृत्या । अनुरूप के द्वारा वरणयोग्य । ]

स्त्रीलिङ्गनिर्देशः किमर्थः ? वार्या ऋत्विजः ॥

७२१. वह्यं करणम् ॥ १०२ ॥ (२८५०)

वहेर्धातोः करणे यत्प्रत्ययो निपात्यते । वहत्यनेनेति वह्यं शकटम् । करण इति किम् ? वाह्यमन्यत् ॥

७२२. अर्यः स्वामिवैश्ययोः ॥ १०३ ॥ (२८५१)

'ऋ गतौ' ( धा० पा० १०९९ )—अस्माण्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत् प्रत्ययो निपात्यते । अर्य स्वामी । अर्यो वैश्यः ॥

'यतोऽनावः' ( ६.१.२१३ ) इत्याद्युदात्तत्वे प्राप्ते—

※ स्वामिन्यन्तोदात्तत्वं च वक्तव्यम् ※ ( म० भा० ३.१.१०३ वा० १ ) ।

स्वामिवैश्ययोरिति किम् ? आर्यो ब्राह्मणः ॥

न्यासः

प्रसरविघातोऽस्याः कर्त्तव्य इत्यर्थः । एतच्च वृञः 'एतिस्तुशासु' इति क्यपि कृते 'ह्रस्वस्य पिति कृति' इति तुकि च रूपम् । वार्या ऋत्विज इति । वृङ एतद् रूपम् । ऋत्विजो हि धनेन संविभक्तव्या इत्यस्त्यनिरोधः । स्त्रीलिङ्गता तु नास्तीति ण्यदेव भवति । ननु 'एतिस्तुशास्वृ' इति क्यपा भवितव्यम् ? नैतदस्ति; वृञो हि तत्र ग्रहणम्, वृङश्चात्रोदाहरणम् ॥ १०१ ॥

वह्यं करणम् ॥ १०२ ॥ अर्यः स्वामिवैश्ययोः ॥ वक्तव्यमिति । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—तन्त्रेणेह द्वावर्यशब्दावुच्चारितौ, तत्रैक आद्युदात्तः, अपरोऽन्तोदात्तः । य आद्युदात्तः स वैश्ये निपात्यते, इतरस्तु स्वामिनीति ॥ १०३ ॥

पदमञ्जरी

क्यप् । वार्या ऋत्विज इति । 'एतिस्तुशास्वृ' इत्यत्र वृञो ग्रहणम्, वृङस्तु स्त्रीलिङ्गादन्यत्र ऋहलोर्ण्यदेव भवति । भट्टिकाव्ये तु पुँल्लिङ्गेऽपि यदेव प्रयुक्तः—'सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः' इति ( ६.५१ ) ॥ १०१ ॥

वह्यं करणम् ॥ वहेर्धातोः करणे यत्प्रत्ययो निपात्यत इति । अर्थव्याख्यानमेतत् । 'वह्यमिति निपात्यते करणं चेद्भवति' इति वक्तुं युक्तम् ॥ १०२ ॥

अर्यः स्वामिवैश्ययोः ॥ स्वामिन्यन्तोदात्तत्वञ्चेति । अथ यो वैश्यः स्वामी च, तत्र कथम् ? उच्यते—वैश्याख्यायामाद्युदात्तत्वम्, स्वाम्याख्यायामन्तोदात्तत्वम् । तथा च 'अर्यस्य स्वाम्याख्यायाम्' ( फि० सू० १.१७ ) इति फिट्सूत्रे आख्याग्रहणं कृतम् । आर्यो ब्राह्मण इति । प्राप्तव्य इत्यर्थः ॥ १०३ ॥

भावबोधिनी

स्त्रीलिङ्ग निर्देश किस लिये है ? वार्या ऋत्विजः । [ यद्यपि ऋत्विज् भी धन से संविभक्तव्य होते हैं परन्तु वे स्त्री नहीं होते हैं । अतः निपातन नहीं होता है । वृङ् + ण्यत्, ऋ की वृद्धि, रपर, टाप्—वार्याः । ] ॥ १०१ ॥

'वह' धातु से करण अर्थ में यत् प्रत्यय निपातित होता है । उदा० वहति अनेन—इस अर्थ में—वह्यं शकटम् [ जिसके द्वारा ढोया जाय, वह—'वह्य' = गाड़ी वह् + यत् । ]

करण अर्थ में—इसका क्या फल है ? वाह्यम् अन्यत् [ वहन करने योग्य—इस अर्थ में वह् + ण्यत्, उपधा वृद्धि—वाह्यम् ॥ १०२ ॥

'ऋ गत्यर्थ में है' इस धातु से ण्यत् की प्राप्ति रहते 'स्वामी और वैश्य' अर्थ वाच्य होने पर 'यत्' प्रत्यय निपातित होता है । उदा० अर्यः = स्वामी । अर्यः = वैश्यः [ ऋ + यत्, गुण, रपर करने पर रूप बनाता है । ] 'यतोऽनावः' ( पा. सू. ६.१.२१३ ) सूत्र से इस 'अर्य' का आद्युदात्तत्व प्राप्त रहते स्वामी अर्थ में अन्तोदात्तत्व भी कहना चाहिये । इससे स्वामी अर्थ में निपातित 'अर्यः' अन्तोदात्त होता है । [ वैश्य अर्थ में निपातित 'अर्य' आद्युदात्त होता है । ]

स्वामी तथा वैश्य—इन अर्थों के वाच्य होने पर—इसका क्या प्रयोजन है ? आर्यो ब्राह्मणः । [ ऋ + ण्यत्, वृद्धि रपर करने पर रूप बनता है । आर्य = प्राप्तव्य । ] ॥ १०३ ॥

**७२३. उपसर्या काल्या प्रजने ।। १०४ ।। (२८५२)**

**'उपसर्या' इति निपात्यते, काल्या चेत्प्रजने भवति। उपपूर्वात्सर्तेर्यत्प्रत्ययः। प्राप्तकाला = काल्या। प्रजनः = प्रजननम्, प्रथमगर्भग्रहणम्। गर्भग्रहणे प्राप्तकाला-उपसर्या गौः, उपसर्या वडवा।**

**काल्या प्रजन इति किम् ? उपसार्या शरदि मधुरा ।।**

**७२४. अजर्यं सङ्गतम् ।। १०५ ।। (२८५३)**

**अजर्यमिति निपात्यते, संगतं चेद्भवति। जीर्यतेर्नञ्पूर्वात् संगते = संगमने कर्तरि यत्प्रत्ययो निपात्यते। न जीर्यतीत्यजर्यम्। अजर्यमार्यसंगतम्। अजर्यं नोऽस्तु संगतम्।**

**संगतमिति किम् ? अजरिता कम्बलः ।।**

### न्यासः

**उपसर्या काल्या प्रजने ।। प्राप्तकाला काल्येति।** 'तदस्य प्राप्तम्' इत्यनुवर्त्तमाने 'कालाद् यत्' इति यत्। प्रजननम् = प्रजनः, भावे घञ्, 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। **उपसार्येति**। उपसंक्रमणीयेत्यर्थः ।। १०४ ।।

**अजर्यं सङ्गतम् ।। जीर्यतेरिति।** 'जृष् झृष वयोहानौ' **सङ्गमन इति**। सङ्गमनम्=सङ्गतिः। 'ल्युट् च' इति ल्युट्। एतेन सङ्गतमित्यत्र 'नपुंसके भावे क्तः' इति दर्शयति। **कर्त्तरि यत्प्रत्ययो निपात्यत इति**। तृजादीनामपवादः। **अजरितेति** तृच् ।। १०५ ।।

### पदमञ्जरी

**उपसर्या काल्या प्रजने ।। उपपूर्वात्सर्त्तेरिति।** भौवादिकस्य जौहोत्यादिकस्य च 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति निर्देशात् सूत्राद् बहिरपि लुका निर्देशः। **प्राप्तकाला काल्येति**। 'तदस्य प्राप्तम्' इति वर्तमाने 'कालाद्यत्' इति यत्। प्रजननम् = प्रजनः, भावे घञ्, 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। **उपसर्या गौरिति**। गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः, वृषभोपगमनस्य प्राप्तकालेति यावत्। **उपसार्येति**। उपसरणीया, प्राप्तव्येत्यर्थः ।। १०४ ।।

**अजर्यं सङ्गतम् ।। सङ्गमने कर्त्तरीति।** सूत्रे 'सङ्गतम्' इति 'नपुंसके भावे क्तः' इति दर्शयति। कर्त्तरीति 'तयोरेव कृत्यक्तखलर्थाः' इति भावे मा भूदिति निपातनाश्रयणम्। तेन भावे सङ्गतकर्तृकेऽपि ण्यदेव भवति—अजार्यं सङ्गतेनेति। **अजरितेति**। तृच् ।। १०५ ।।

### भावबोधिनी

'उपसर्या' यह निपातित होता है यदि प्रजन = प्रथम गर्भग्रहण में काल्या हो तो। उपपूर्वक सृ धातु से यत् प्रत्यय होता है। प्राप्तकाला = काल्या [ जिसका समय प्राप्त हो चुका है—इस अर्थ में 'तदस्य प्राप्तम्' के अन्तर्गत ''कालाद्यत'' सूत्र से यत् होने पर काल्या बनता है। ] प्रजन = प्रजनन, पहला गर्भ धारण करना। प्रथमगर्भ ग्रहण में जिसका काल प्राप्त हो चुका है वह —उपसर्या गौः, उपसर्या वडवा। बैल से प्रथम गर्भ धारण के समय वाली गाय, वैसी ही घोड़ी। ]

प्रथम गर्भग्रहण में जिसका समय प्राप्त हो चुका है—इसका क्या प्रयोजन है ? उपसार्या शरदि मधुरा। [ शरद् ऋतु में प्राप्त करने योग्य मधुरा। यहाँ 'मथुरा' पाठ ठीक प्रतीत होता है। सिद्धान्त कौमुदी में 'उपसार्या काशी' यह लिखा है। यदि मधुरा = सौंफ वाचक है तो —शरत् काल में प्राप्त = लेने योग्य सौंफ। ] ।। १०४ ।।

यदि 'संगत' अर्थ हो तो 'अजर्यम्' यह निपातित होता है। नञ् पूर्वक 'जृ' धातु से संगत्=संगमन में कर्ता वाच्य होने पर यत् प्रत्यय निपातित होता है उदा० न जीर्यति ( नहीं जीर्ण होता है )—इस अर्थ में —अजर्यम्। अजर्यम् आर्यसंगतम् [ सज्जनों का संगत = मिलन कभी पुराना नहीं होता है। [ अजर्य नः अस, संगतम्। [ हम लोगों का मेल कभी भी समाप्त न होने वाला बने। ]

संगत—इस अर्थ में —इसका क्या फल है ? अजरिता कम्बलः। [ कभी भी पुराना न होने वाला कम्बल। यहाँ संगत अर्थ नहीं है। अतः यत् न होकर तृच् होता है। जॄ + तृच्, ऋ का गुण, रपर तथा विभक्ति कार्य होते हैं।] ।।१०५।।

**७२५. वदः सुपि क्यप् च ।। १०६ ।। (२८५४)**

'अनुपसर्गे' इति वर्तते। वदेर्धातोः सुबन्ते उपपदे अनुपसर्गे क्यप् प्रत्ययो भवति, चकाराद्यच्च। ब्रह्मोद्यम्, ब्रह्मवद्यम्। सत्योद्यम्, सत्यवद्यम्।

सुप्रीति किम्? वाद्यम्। अनुपसर्ग इत्येव-प्रवादम् ॥

**७२६. भुवो भावे ।। १०७ ।। (२८५५)**

'सुपि' 'अनुपसर्गे' इत्यनुवर्त्तते। भवतेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति। यत्तु नानुवर्त्तते। ब्रह्मभूयं गतः, ब्रह्मत्वं गतः। देवभूयं गतः, देवत्वं गतः।

**न्यासः**

**वदः सुपि क्यप् च ।। अनुपसर्ग इति वर्त्तत इति।** ननु च 'सत्सूद्विष' इत्यादौ सूत्रे वक्ष्यति-एतदुपसर्गग्रहणं ज्ञापनार्थम्, अन्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवतीति; एवञ्च तत एव ज्ञापकादुपसर्गे न भविष्यतीति किमिहानुपसर्गग्रहणानुवृत्त्या? विस्पष्टार्थमित्येके। तत्र वाज्ञापनार्थमुपसर्गग्रहणं कर्त्तव्यम्। इह वानुपसर्गमनुवर्त्त्यमिति विकल्पदर्शनार्थमित्यपरे। **ब्रह्मोद्यमिति।** ब्रह्मणो वदनमित्यर्थः। भावे क्यप्, पूर्ववत् संप्रसारणम्, 'आद् गुणः', उपपदसमासः ॥ १०६ ॥

**भुवो भावे ।। यत् तु नानुवर्त्तत इति।** पूर्वसूत्रे चानुकृष्टत्वात्। **ब्रह्मभूयं गत इति।** ब्रह्मत्वं प्राप्त इत्यर्थः। ननु च 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोः कृत्या विधीयन्ते, अनुपसर्ग इति चानुवर्त्तते,

**पदमञ्जरी**

**वदः सुपि क्यप् च ।। अनुपसर्गे इति वर्त्तत इति।** 'सत्सूद्विष' इत्यादौ सूत्रे वक्ष्यति—उपसर्गग्रहणं ज्ञापकमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति। तच्चावश्यं तथैवाश्रयणीयम्—'सुप्यजातौ' 'स्पृशोऽनुदके क्विन्' इत्यादावुपसर्गग्रहणं मा भूदिति, ततश्च नार्थ इहानुपसर्गग्रहणानुवृत्त्या। **सुबन्ते उपपदे अनुपसर्ग इति।** यद्यपि पूर्वं बहुव्रीहेः पञ्चम्यर्थे सप्तमीति व्याख्यातम्, इह तु विरोधाभावात्तत्पुरुषात्स्वार्थ एव सप्तमीति भावः। **ब्रह्मोद्यमिति।** भावे क्यप्, पूर्ववत्संप्रसारणम्। ब्रह्म वेदः, तस्य वदनमित्यर्थः। कथं पुनः सकर्मकाद्भावे कृत्यप्रत्ययः, यावता भावे चाकर्मकेभ्यः 'तयोरेव कृत्यक्तखलर्थाः' इति वक्ष्यति; न च कर्माविवक्षयाऽकर्मकत्वम्; ब्रह्मेति कर्मणः श्रुतत्वात्? तस्मादुत्तरसूत्रादिह भावग्रहणमपेक्षणीयमित्याहुः ॥ १०६ ॥

**भुवो भावे ।। यत्तु नानुवर्तत इति।** पूर्वसूत्रे चानुकृष्टत्वात्। ननु 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोः कृत्या विधीयन्ते, 'अनुपसर्गे' इति चानुवर्त्तते, अनुपसर्गश्च भवतिरकर्मक एव, अतः सामर्थ्याद्भाव एव

**भावबोधिनी**

'अनुपसर्गे' [उपसर्गरहित होने पर]–इनकी अनुवृत्ति होती है। उपसर्गरहित वद धातु से सुबन्त उपपद रहने पर 'क्यप्' प्रत्यय होता है और 'च' के बल से 'यत्' भी होता है। उदा० ब्रह्मोद्यम्, ब्रह्मवद्यम् [ब्रह्म का कथन 'ब्रह्म' उपपद वद्+क्यप्=य, व् का सम्प्रसारण 'उ' अ का पूर्वरूप–ब्रह्म+उद्य, गुण ब्रह्मोद्यम्। यत् होने पर–ब्रह्मवद्यम्। सत्योद्यम्, सत्यवद्यम्। [सत्य उपपद वद+क्यप्=सम्प्रसारण, अ का पूर्वरूप गुण— ब्रह्मोद्यम्। सत्य+वद्+यत्—सत्यवद्यम्। [सत्य बोलना।]

सुबन्त उपपद रहने पर—इसका क्या प्रयोजन है? वाद्यम्। [यहाँ अकेला 'वद्' है, ण्यत् होता है। उपसर्ग रहित 'वद'-से ही ये क्यप् तथा यत् होते हैं अतः प्रवाद्यम्। [प्रवद्+ण्यत् होता है, उक्तप्रत्यय नहीं होते हैं।] ॥१०६॥

'सुपि' (सुबन्त उपपद रहते) और 'अनुपसर्गे' (उपसर्गरहित रहने पर)—इनकी अनुवृत्ति होती है। सुबन्त उपपद रहने पर उपसर्गरहित 'भू' धातु से भाव अर्थ में क्यप् होता है। 'यत्' की अनुवृत्ति नहीं होती है। उदा० ब्रह्मभूयं गत=ब्रह्मत्व को प्राप्त हुआ। (ब्रह्म उपपद भू+क्यप्=य, कित् होने से गुणनिषेध, प्रातिपदिक संज्ञा सु, अम् आदि कार्य) देवभूयं गतः=देवत्व को प्राप्त हुआ। [देवम् उपपद 'भू' से क्यप्, प्रातिपदिक संज्ञा के कारण विभक्ति लोप।]

**भावग्रहणमुत्तरार्थम् ( म० भा० ) । सुपीत्येव-भव्यम् । अनुपसर्ग इत्येव-प्रभव्यम् ॥**

**७२७. हनस्त च ॥ १०८ ॥ (२८५६)**

**'सुपि' 'अनुपसर्गे' इति वर्तते, 'भावे' इति च । हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति, तकारश्चान्तादेशः । ब्रह्महत्या । अश्वहत्या । सुपीत्येव-घातः ।**

**ण्यत्तु भावे न भवति; अनभिधानात् । अनुपसर्ग इत्येव-प्रघातो वर्त्तते ॥**

**न्यासः**

अनुपसर्गश्च भवतिरकर्मक इति सामर्थ्याद् भाव एव भविष्यति, न कर्मणि, किं भावग्रहणेन ? इत्याह—**भावग्रहणमुत्तरार्थमिति** । एतेन 'हनस्त च' इत्यत्रोपयोगमाह—तत्र भाव एव यथा स्यात् । **भव्यमिति** । 'अचो यत्', धातोर्गुणः, 'धातोस्तन्निमित्तस्यैव' इत्यवादेशः ॥ १०७ ॥

**हनस्त च ॥ ब्रह्महत्येति** । ब्रह्मणो हननमित्यर्थः । **घात इति** । पूर्ववत् तत्वकत्वे ।

किमर्थं पुनर्घञ् प्रत्युदाह्रियते, न ण्यदित्याह —**ण्यत्त्वित्यादि** । तत्रैव युक्तिमाह—**अनभिधानादिति** । अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति, न च हन्तेर्विहितेन ण्यता भावः शक्यतेऽभिधातुम् । तथा हि घात्य इत्युक्ते कर्मैव प्रतीयते, न भावः ॥ १०८ ॥

**पदमञ्जरी**

भविष्यति ? ननु च प्राप्त्यर्थः सकर्मक एव ? सत्यम्; व्यक्तिनिर्द्देशात्, प्राथम्याच्च सत्तार्थस्यैव ग्रहणम् । न च कालादिकर्मणि प्रसङ्गः, अनभिधानात्, तत्किमर्थं भावग्रहणम् ? इत्यत्राह—**भावग्रहणमुत्तरार्थमिति** । 'हनस्त च' इति सकर्मकादपि हनो भावे यथा स्याद्—ब्रह्महत्या वर्तत इति, कर्मणि मा भूत्—त्वया घात्यो वृषल इति ॥ १०७ ॥

**हनस्त च ॥ ब्रह्महत्येति** । स्वभावतः स्त्रीलिङ्गत्वमस्य क्यबन्तस्य, यथान्येषां भावे कृत्यानां नपुंसकत्वम् । छन्दसि तु क्यबन्तस्यापि नपुंसकत्वमिष्यते—'सनादेव दस्युहत्याय जज्ञिषे' ( ऋ० १.५१.६ ) । छन्दसि च स्त्रियां चिद्वक्तव्यः—'अस्यै ब्रह्महत्यायै तृतीयं परिगृहाण' इति । **प्रघातो वर्तत इति** । किं पुनः कारणं घञ् प्रत्युदाह्रियते, न ण्यदित्यत आह—**ण्यत्तु भावे न भवतीति** । कर्माविवक्षायामकर्मकत्वे सत्यपीति भावः । सकर्मकात्तु भावे ण्यतः प्राप्तिरेव नास्ति ॥ १०८ ॥

**भावबोधिनी**

'भावे' इसका ग्रहण आगे अनुवृत्ति के लिये है । सुप, उपपद रहने पर हीं क्यप् होता है—भव्यम् । [ यहाँ क्यप् नहीं होता है । ''अचो यत्'' सूत्र से यत् प्रत्यय, ऊ का गुण, ''धातोस्तान्निमित्तस्यैव ( पा. सू. ) से अव् आदेश, विभक्ति कार्य उपसर्गरहित में ही—प्रभव्यम् । [ यहाँ 'प्र' उपसर्ग के कारण क्यप् न होकर यत् होता है । ] ॥ १०७ ॥

'सुपि' 'अनुपसर्गे' और 'भावे'—इनकी अनुवृत्ति होती है । सुबन्त उपपद रहते, उपसर्ग रहित 'हन्' धातु से 'भाव' अर्थ में क्यप् होता है और अन्त्य वर्ण का 'त्' आदेश होता है । उदा० ब्रह्महत्या । [ ब्रह्म का हनन । ब्रह्म उपपद हन् + क्यप् 'न्' का 'त्' आदेश—उपपद समास ब्रह्महत् य । यहाँ लोक व्यवहार के आधार पर स्त्रीलिंग का प्रयोग किया जाता है । अतः टाप् = आ करने पर —'ब्रह्महत्या' बनता है । ] अश्वहत्या । [ घोड़े का वध । अश्वस्य उपपद हन् + क्यप्, न का त्, टाप् ] ।

सुबन्त उपपद रहते ही क्यप् होता है—घातः [ हननम्—इस अर्थ में सुबन्त उपपद न होने से क्यप् न होकर 'घञ्' होता है । आदि वृद्धि ''हो हन्तेर्ञ्णिन्नेषु'' सूत्र से कुत्व 'ह' का घ—घातः । ]

भाव अर्थ में [ हन् धातु से ] ण्यत् प्रत्यय नहीं होता है, क्योंकि उसका अनभिधान है । उपसर्ग रहित 'हन्' से ही क्यप् होता है—प्रघातो वर्तते । [ यहाँ उपसर्ग योग होने से क्यप् न होकर घञ् तथा शेष प्रक्रिया पूर्ववत् होती है । ] ॥ १०८ ॥

## ७२८. एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥ (२८५७)

**'सुपि' 'अनुपसर्गे' भावे' इति निवृत्तम्। सामान्येन विधानमेतत्। एति, स्तु, शास्, वृ, दृ, जुष्-इत्येतेभ्यः क्यप् प्रत्ययो भवति। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। आदृत्यः। जुष्यः।**

**क्यबिति वर्त्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्। 'ओरावश्यके' ( ३ १.१२५ ) इति ण्यतं बाधित्वा क्यबेव भवति। अवश्यस्तुत्यः। वृग्रहणे वृञो ग्रहणमिष्यते, न वृङः। वार्याः ऋत्विजः।**

न्यासः

**एतिस्तुशास्वृदृजुषः क्यप्॥ शिष्य इति।** 'शासु अनुशिष्टौ', 'शास इदङ्हलोः' इतीत्वम्, 'शासिवसि' इति षत्वम्। **आदृत्य इति।** 'दृङ् आदरे', आङ्पूर्वः। **जुष्य इति।** 'जुषी प्रीतिसेवनयोः'। अथ किमर्थं क्यब्ग्रहणम्, यावता 'वदः सुपि क्यप् च' इत्यतः क्यब्ग्रहणमनुवर्त्तत एवेत्यत आह—**क्यबिति वर्त्तमान इत्यादि। बाधकबाधनार्थमिति।** एतद् विस्पष्टीकर्त्तुमाह—**ओरावश्यक इति।** स्तुग्रहणस्यावकाशो यत्रावश्यकं न विवक्ष्यते-स्तुत्य इति, 'ओरावश्यके' इत्यस्यावकाशोऽन्यो धातुः—अवश्यलाव्यमिति; इहोभयं प्राप्नोति—अवश्वस्तुत्य इति, परत्वाद् बाधको ण्यत् स्यात्। पुनः क्यब्ग्रहणात् तमपि बाधित्वा क्यब् भवति। **वृग्रहणेन वृञो ग्रहणमिष्यते, न वृङ इति।** तत् कथम्? 'कुषिरजोः' इत्यादेः सूत्रादिह परस्मैपदग्रहणमनुवर्त्तते, तेन वृशब्दो विशिष्यते—परस्मै-

पदमञ्जरी

**एतिस्तुशास्वृदृजुषः क्यप्॥** 'एति' इति तिपा निर्देशः किमर्थः? धातोर्ग्रहणं यथा स्यादिवर्णान्तस्य मा भूदिति। अत्र चेण एव ग्रहणम्, नेङिकोः, तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्देशानुपपत्तेः। तथा च—'रक्षार्थं वेदानामध्येयं व्याकरणम्' ( पस्पशा० ) इति भाष्ये यदेव प्रयुक्तः। केचित्तु 'इण्वदिक इति वक्तव्यम्' ( वा० १६७ ) इति वचनादधीत्या मातेत्यप्युदाहरन्ति। **स्तुत्य इति।** ह्रस्वस्य तुक्। **शिष्य इति।** 'शास इदङ्हलोः' इतीत्वम्, 'शासिवसिघसीनां च' इति षत्वम्, 'आङः शासु इच्छायाम्' ( धा० पा० १०२२ ) इत्यस्यापि ग्रहणमविशेषात्। तेनाशास्यमिति धातुस्वरेण मध्योदात्तं पदं भवति। ण्यति तु 'गतिकारकोपपदात्कृत्' इति अन्तस्वरितत्वं स्यात्। केचित्तु 'शासु अनुशिष्टौ' इत्यस्यैव ग्रहणमिच्छन्ति। **ओरावश्यक इत्यादि।** इह स्तुग्रहणस्यावकाश आवश्यकाविवक्षायाम्—स्तुत्य इति; 'ओरावश्यके' इत्यस्यावकाशः—अवश्यलाव्यमिति, अवश्यस्तुत्य इत्यत्रोभयप्रसङ्गे परत्वाद् ण्यत्स्यात्, पुनः क्यब्ग्रहणात्क्यबेव भवति। **वृग्रहणे वृञो ग्रहणमिष्यते न वृङ इति।** ज्ञापकात्; यदयम्

भावबोधिनी

'सुपि' 'अनुपसर्गे' और 'भावे' इनकी अनुवृत्ति नहीं होती है। यह सामान्य रूप से ( कर्म ) विधान होता है। एति ( इण् ), स्तु, शास्, वृ, दृ तथा जुष्—इन से क्यप् प्रत्यय होता है। उदा० इत्यः [ एतुं योग्यः—इस अर्थ में 'इ' + क्यप् = य, 'पित्' परे होने से "ह्रस्वस्य मिति कृति तुक्" ( पा. सू. ६.१.७१ ) से तुक् = त् आगम होता है—इत्यः = जाने योग्य ] स्तुत्यः। [ स्तोतुं योग्यः। [ स्तु + क्यप्, शेष पूर्ववत् ] शिष्यः। [ शासितुं योग्यः—इस अर्थ में शास् + क्यप् = य, "शास इदङ्हलो" ( पा. सू. ६.४.३४ ) से 'आ' का 'इ'—शिस् + य, "शासिवसिघसीनां च" ( पा. सू. ८.३.६० ) से 'स्' का 'ष्'—शिष्यः ] वृत्यः। [ वर्तुं योग्यः—इस अर्थ में वृञ् = वृ + क्यप् = य, तुक् ] आदृत्यः। [ आदर्तुं योग्यः—इस अर्थ में आङ् उपसर्गपूर्वक दृ + क्यप् = य, तुक् = त्, कित् होने से गुण का अभाव ] जुष्यः। [ जुष् + क्यप् ]।

यद्यपि [ ३.१.६ से ] क्यप् की अनुवृत्ति सम्भव भी पुनः क्यप् का ग्रहण बाधक का बोध करने के लिये है अर्थात् इन धातुओं से केवल क्यप् ही होता है। 'ओरावश्यके' [ उकारान्त धातु से ण्यत् होता है आवश्यक अर्थ में ] से प्राप्त ण्यत् का बोध करके [ 'स्तु' से ] क्यप् ही होता है। उदा० अवश्यस्तुत्यः। [ अवश्यम् + स्तु + क्यप् ] 'वृ' इससे वरण अर्थ वाली वृञ् धातु का ग्रहण है 'संभक्ति' अर्थ वाली 'वृङः' इसका नहीं। [ अतः वृङ् से क्यप् न होकर ण्यत् होने पर वृ + ण्यत् ऋ की वृद्धि, रपर करने पर वार्याः ऋात्विजः [ संभक्तव्य ऋत्विज्-यह अर्थ है। ]

**❀ शंसिदुहिगुहिभ्यो वेति वक्तव्यम् ❀** ( ? )। शस्यम्, शंस्यम्। दुह्यम्, दोह्यम्। गुह्यम्, गोह्यम्।

**❀ आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् ❀** ( म० भा० ३.१.१०९ वा० २ )। आज्यं घृतम्।

**कथमुपेयम् ? एरेतद्रूपम्, नेणः ॥**

**न्यासः**

पदस्य यो वृशब्द इति। कश्च परस्मैपदस्य वृशब्दः ? यस्य परस्मैपदं प्रति निमित्तभावो दृष्टः। वृञ एवोभयपदिनः स दृष्टः, न वृङः; तस्य नित्यात्मनेपदित्वात्। तेन वृञ एव ग्रहणं भवति, न वृङः।

**शंसिदुहीत्यादि**। एभ्यः शंसिप्रभृतिभ्यो वा क्यब् भवतीत्येतदर्थरूप व्याख्येयमित्यर्थः। व्याख्यानं तु तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम्। **शस्यमिति**। 'शन्सु स्तुतौ', 'अनिदिताम्' इति नलोपः। **गुह्यमिति**। 'गुहू संवरणे'।

**आङ्पूर्वादञ्जेरित्यादि**। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तच्च पूर्ववत्। 'अञ्जू व्यक्तिम्रक्षण-कान्तिमतिषु'। पूर्ववन्नलोपः। इयञ्च सर्पिषः संज्ञा।

**कथमुपेयमिति**। इण एतद्रूपमिति मन्यमानस्य प्रश्नः। **ईङ एतद्रूपमिति**। 'ईङ् गतौ' इत्यस्य 'अचो यत्' इति यति सत्येतद्रूपम्, न त्विणः। तस्य हि क्यपि सत्युपेत्यमिति भवितव्यम् ॥ १०९ ॥

**पदमञ्जरी**

'ईडवन्दवृशंसदुहां ण्यतः' इति वार्यशब्दस्याद्युदात्तत्वं शास्ति, तत्र चेडिवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङो ग्रहणम्।

**शंसिदुहीत्यादि**। 'शंसु स्तुतौ' ( धा० पा० ७२८ ) 'दुह प्रपूरणे' ( धा० पा० १०१४ ) गुहू 'संवरणे' ( धा० पा० ८९६ )। **शस्यमिति**। क्यप्पक्षे उपधालोपः। भाष्ये एतदुपसङ्ख्यानं न दृष्टम्।

**आङ्पूर्वादिति**। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' ( धा० पा० १४५८ ) **आज्यमिति**। 'कृत्यल्युटो बहुलम्' इति करणे क्यप्, पूर्ववदुपधालोपः। अथ कस्माद् ण्यत्येवोपधालोपो नोक्तः ? कुत्वप्रसङ्गात्तित्स्वरप्रसङ्गाच्च। तस्मात्क्यबन्त एषः। यद्येवम्, अवग्रहः प्राप्नोति—आज्यमित्या अज्यमिति ? अवगृह्यताम्, को दोषः ? न हि लक्षणेन पदकारा अनुवर्त्त्याः, किन्तु पदकारैर्नाम लक्षणमनुवर्त्त्यम्। पदविच्छेदो हि पौरुषेयः, संहितैव तु नित्या। अर्थं चार्थनिश्चयाभावे नावगृह्णन्ति; यथा—हरिव इति, किं हरिशब्द इकारान्त उत हरिच्छब्दस्तकारान्त इति सन्देहात्।

**कथमिति**। इण एवैतद्रूपमिति मन्यमानस्य प्रश्नः। **एरिति**। 'इ गतौ' (धा० पा० १०४५) इत्यस्य ॥१०९॥

**भावबोधिनी**

❀ शंसि, दुह, तथा गुह्—इनसे विकल्प से क्यप् का विधान कहना चाहिये। ❀ शस्यम्, शंस्यम्। [ शंस्+क्यप्=य, कित् होने से अनुस्वार का लोप, पक्ष में ण्यत् ]। दुह्यम्, दोह्यम्, [ दुह्+क्यप्=य, कित् होने से गुणनिषेध, दुह्+ण्यत्=य, उपधा का गुण—दोह्यम्। ] गुह्यम् गोह्यम्। [ गुह्+क्यप्, कित् होने से गुणनिषेध, गुह्+ण्यत्, उपधागुण—गोह्यम्।

**विमर्श**—प्रस्तुत वचन काशिकाकार ने किस ग्रन्थ से लिया है, ज्ञात नहीं होता है। इसीलिये पदमञ्जरीकार ने यह लिखा है कि यह उपसंख्यान भाष्य में नहीं है। सिद्धान्त कौमुदी में दीक्षित ने भी ऐसा ही संकेत दिया है। और यह वचन काशिकाकार के नाम से प्रस्तुत किया है।

❀ आङ् पूर्वक अञ्ज् धातु से संज्ञा अर्थ में क्यप् का उपसंख्यान करना चाहिये। ❀ उदा० आज्यम्=घी। [ आङ् अञ्ज्=क्यप्, उपधा ( अ् ) का बाहुलकात् लोप, दीर्घ—आज्य। [ ण्यत् करने पर भी यह रूप संभव था किन्तु कुत्व का प्रसंग होने के कारण क्यप् ही किया गया। ]

[ इण् से क्यप् करने पर 'इत्यः' बनता है ] तो फिर 'उपेयम्' यह कैसे बनता है ? यह 'ईङ् गतौ' का रूप है, 'इण् गतौ' का नहीं। [ ई+यत् 'अचो यत्' सूत्र से, गुण—एयम्, उप+एयम्, 'एङि पररूपम्' से पररूप होता है—उपेयम्। ] ॥ १०९ ॥

## ७२९. ऋदुपधाच्चाक्लृपिचृतेः ॥ ११० ॥ (२८५९)

**ऋकारोपधाच्च धातोः क्यप्प्रत्ययो भवति कृपिचृती वर्जयित्वा। वृतु-वृत्यम्। वृधु-वृध्यम्।**
**अक्लृपिचृतेरिति किम्? कल्प्यम्। चर्त्यम् ( ३.१.१२४ ) तपरकरणं किम्? 'कृत संशब्दने' ( धा० पा० १६५४ ) ण्यदेव भवति-कीर्त्यम्।**

**❀ पाणौ सृजेर्ण्यद्वक्तव्यः ❀ ( ? )। पाणिसर्ग्या रज्जुः।**

**❀ समपूर्वाच्च ❀ ( ? )। समवसर्ग्या॥**

**न्यासः**

**ऋदुपधाच्चाक्लृपिचृतेः॥ क्लृपिचृती वर्जयित्वेति।** 'कृपू सामर्थ्ये' 'चृती हिंसाग्रन्थनयोः इत्येतौ त्यक्त्वा। कृपेर्लत्वस्यासिद्धत्वादृदुपधत्वम्। **कल्प्यमिति।** लत्वस्यासिद्धत्वादृकारस्यैवाकारो गुणः। **ण्यदेव भवति—कीर्त्यमिति।** आर्धधातुकविवक्षायां चुरादिणिचः 'णेरनिटि' इति णिलोपे कृते हलन्ततोपजायत इति कृत्वा 'ऋहलोर्ण्यत्' इति ण्यदेव भवति। 'हलि च' इति दीर्घः। ननु च 'अचो यत्' इत्यत्राज्ग्रहणस्य प्रयोजनमुक्तम्–अजन्तभूतपूर्वादपि यथा स्यात्, दित्स्यम्, धित्स्यमिति; एवञ्चेहापि णिचि लुप्ते यतैव भवितव्यम्? एवं तर्ह्यनित्यण्यन्ताश्चुरादय इत्यण्यन्तादेवात्र ण्यद् भवतीत्यदोषः। **वक्तव्य इति।** व्याख्येय इत्यर्थः। व्याख्यानं तु पूर्ववत्।

पाणिभ्यां स्रष्टव्या **पाणिसर्ग्या** रज्जुः। 'उपपदमतिङ्' इति समासः।

**समवपूर्वाच्चेति।** सृजेर्ण्यद् भवतीति सम्बध्यते। चकारः समुच्चये। न केवलं पाणावुपपदे ण्यद्वक्तव्यः, अपि तु समवपूर्वाच्च॥ ११०॥

**पदमञ्जरी**

**ऋदुपधाच्चाक्लृपिचृतेः। क्लृपिचृती वर्जयित्वेति।** 'क्लृपू सामर्थ्ये' ( धा० पा० ७६२ ) 'चृती हिंसाग्रन्थनयोः' ( धा० पा० १३२४ ) कृपेर्लत्वस्यासिद्धत्वादृकारलृकारयोस्सवर्णसंज्ञाविधानाच्च ऋदुपधात्वम्। **कृत संशब्दने ण्यदेव भवतीति।** 'अनित्यण्यन्ताश्चुरादयः' इति णिजभावपक्ष इति भावः। इदमेव च तपरकरणं लिङ्गम्—अनित्यण्यन्ताश्चुरादय इति। णिजन्तात्तु णिलोपे कृते चाकृते च दित्स्यं धित्स्यमितिवद्यदेव भवति।

**पाणिसर्ग्येति।** पाणिभ्यां सृज्यत इत्युपपदसमासः, पूर्ववत्कुत्वम्। एवं **समवसर्ग्येत्यत्रापि**॥११०॥

**भावबोधिनी**

ऋकारोपध धातु से क्यप् प्रत्यय होता है, कृप् और चृत—इन दो को छोड़कर। उदा० वृत्यम् [ वृत् + क्यप्, ] वृध्यम् [ वृध् + क्यप्, कित् होने से दोनों में गुण नहीं होता है। ]

'क्लृप् तथा चृत् से नहीं होता है'—इसका क्या लाभ है? कल्प्यम्, चर्त्यम्। [ कृप् + ण्यत्, ऋ का गुण, रपर और लत्व हाता है। ] 'ऋत्' का तपरकरण किस लिये है? 'कॄत् संशब्दने' इस दीर्घ ऋ उपधावाली धातु से ण्यत् ही होता है—कीर्त्यम्। [ 'कृत्' यह चुरादिगणीय है। अतः इससे स्वार्थिक णिच् करके आर्धधातुकत्व विवक्षा में 'णेरनिटि' सूत्र से णिलोप कर दें अथवा 'अनित्यण्यन्ताश्चुरादयः' यह मान कर णिच् के अभावपक्ष का उदाहरण मान लिया जाय। कृत् + ण्यत् = य, 'ऋत इद्धातोः' से ऋ का इ, रपर, 'हलि च' से उपधा का दीर्घ—कीर्त्यम्। ]

❀ 'पाणि' उपपद रहने पर सृज् धातु से ण्यत् प्रत्यय कहना चाहिये। ❀ उदा० पाणिसर्ग्या रज्जुः। [ हाथों से बनाई जाने वाली रस्सी। पाणिभ्यां स्रष्टव्या—इस अर्थ में—पाणिभ्याम् उपपद सृज् + ण्यत् + य, 'उपपदमतिङ्' सूत्र से उपपद समास विभक्तिलोप, ऋ का गुण, रपर 'ज्' का कुत्व—पाणिसर्ग्य + टाप्। ]

❀ सम् तथा अव पूर्व में रहने पर भी ण्यत् कहना चाहिये। ❀ उदा० समवसर्ग्या। [ सम् अव + सृज् + ण्यत्, गुण, रपर, कुत्व, टाप् ]॥ ११०॥

## ७३०. ई च खनः ॥ १११ ॥ (२८६०)

**खनेर्धातोः क्यप् प्रत्ययो भवतीकारश्चान्तादेशः । खेयम् । दीर्घनिर्देशः प्रश्लेषार्थः तत्र द्वितीय इकारः 'ये विभाषा' ( ६.४.४३ ) इत्यात्वबाधनार्थः ॥**

## ७३१. भृञोऽसंज्ञायाम् ॥ ११२ ॥ (२८६१)

**भृञो धातोरसंज्ञायां विषये क्यप् प्रत्ययो भवति । भृत्याः कर्म कराः । भर्तव्या इत्यर्थः ।**

### न्यासः

**ई च खनः ॥ खेयमिति ।** 'खनु अवदारणे', नकारस्य ईकारः, 'आद् गुणः' । अथ किमर्थं दीर्घ आदिश्यते, यावता ह्रस्वेऽपि कृते आद्गुणेन भवितव्यम् । न च ह्रस्वस्याद्गुणे कृते कश्चिद् विशेषः ? स्यादेतत्—एकादेशस्तु तुग्विधावसिद्धो वक्तव्यः, तत्र यदि ह्रस्व आदिश्यते तदा ह्रस्वस्याद्गुणे कृते तुग्विधावसिद्धत्वाद् ह्रस्वाश्रयस्तुक् स्यात्; दीर्घादेशे तु न भवति, अतो दीर्घादेशो वक्तव्य इति ? एतच्च नास्ति; यस्मात् पदान्तपदाद्योर्य एकादेशः स तुग्विधावसिद्धो वक्तव्यः, न सर्वत्रेत्याह—**दीर्घनिर्देश इत्यादि ।** अकः सवर्णदीर्घत्वेन द्वयोरिवर्णयोः प्रश्लेषो यथा स्यादित्येवमर्थो दीर्घनिर्देशः । किमर्थं पुनर्द्वितीय इवर्णः, यावतैकेनैव खेयमिति रूपं सिध्यतीत्यत आह–**तत्रेत्यादि ।** द्वयोरिकारयोः प्रश्लेषनिर्देशः । तत्र यो द्वितीय इवर्णः स 'ये च' इत्यात्त्वबाधा यथा स्यादित्येवमर्थः । 'ये विभाषा' इत्यस्यावकाशः–खायते, खन्यते इति, अस्यादेशस्यावकाशो यस्मिन् पक्ष आत्त्वं नास्ति; आत्त्वपक्षे तूभयं प्राप्नोति । उभयप्राप्तावसतीकारे परत्वादन्तरङ्गत्वाच्चात्त्वं स्यात्, अस्मिंश्च सत्यात्त्वं बाधित्वेकार एव भवति । अन्तरङ्गत्वं पुनरात्त्वस्य यकारसामान्यमाश्रित्य विधानात् । इत्त्वस्य बहिरङ्गत्वं; क्यब्विशेषमाश्रित्य विधानात् ॥ १११ ॥

**भृञोऽसंज्ञायाम् ॥ भर्त्तव्या इत्यर्थं इति ।** एतेन क्रियाशब्दत्वं भृत्यशब्दस्य दर्शयन् संज्ञाशब्दत्वमपा-

### पदमञ्जरी

**ई च खनः ॥** दीर्घोच्चारणं किमर्थम्, न 'इ च खनः' इत्येवोच्येत, दीर्घस्य ह्रस्वस्य वा आद्गुणे नास्ति विशेषः, ह्रस्वादेशे 'षत्वतुकोरसिद्धः' इत्येकादेशस्यासिद्धत्वाद्ध्रस्वाश्रयस्तुक् स्यादिति चेत् ? न; पदान्तपदाद्योरेकादेशस्तुग्विधावसिद्धः, अन्यथा वृक्षेच्छत्रमिति ङवादगुणस्यासिद्धत्वाद् 'छे च' इति ह्रस्वाश्रयो नित्यस्तुक् स्यादित्यत आह—**दीर्घनिर्देश इत्यादि ।** एतेन ह्रस्वद्वयमत्र विधीयते, न दीर्घ इति दर्शयति । पूर्वं तु यथाश्रुताश्रयणेनोक्तमीकारश्चान्तादेश इति । **तत्रेति ।** प्रश्लेषे सति । ये **विभाषेत्यात्वबाधनार्थ इति ।** अन्यथा 'ये विभाषा' इत्यस्यावकाशः—खायते, खन्यते; अस्य त्ववकाशः—यस्मिन्पक्षे आत्वं नास्ति; आत्वपक्षे उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात् । एतच्च 'ये विभाषा' इति विषयसप्तमीपक्ष उच्यते । तदा हि यकारादौ बुद्धिस्थ एव भवदात्वमन्तरङ्गम्, अयं त्विकारः क्यपा सह विधानाद्बहिरङ्गः । परसप्तमीपक्षे त्विदमेवेत्त्वमन्तरङ्गम्, परनिमित्तमनपेक्ष्य विधानात् ॥ १११ ॥

**भृञोऽसंज्ञायाम् ॥ भर्तव्या इत्यर्थ इति ।** एतेन क्रियाशब्दत्वं दर्शयन् संज्ञात्वमपाकरोति ।

### भावबोधिनी

खन् 'धातु से क्यप् प्रत्यय होता है और ईकार अन्तादेश होता है । उदा० खेयम् । [ 'खन' यह खोदना अर्थ में है । खन्+क्यप्, 'न' का 'ई' ख ई+य, गुण । यद्यपि दीर्घ ई न करके ह्रस्व इ करने पर भी गुण होकर यह रूप बनना संभव था किन्तु ] दीर्घ ई का निर्देश दो इकारों के प्रश्लेष के लिये है । इनमें दूसरा इकार 'ये विभाषा' सूत्र से प्राप्त आत्व का बाध करने के लिये है । [ अर्थात् 'इ' ही रहता है कभी भी आ नहीं होता है अन्यथा खेयम् और खायम् ये दो रूप बनने लगते । ] ॥ १११ ॥

असंज्ञाविषय में भृञ् धातु से क्यप् प्रत्यय होता है । उदा० भृत्याः=कर्मकराः । भरण योग्य—यह अर्थ है । [ भृ+क्यप्=य, तुक्=त् कित् होने से गुणनिषेध, प्रथमा बहुवचन का रूप है । ]

**असंज्ञायामिति किम् ? भार्यो नाम क्षत्रियः ।**
**⁂ संपूर्वाद्विभाषा ⁂ ? ) संभृत्याः । संभार्याः ॥**
**संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति ?**
**स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति ॥** ( म० भा० ३.१.११२ श्लो० वा० ४, ५ )

**न्यासः**

करोति । **संपूर्वाद्विभाषेति** । असंज्ञायामेवायं क्यपो नित्यं प्रसक्तस्य विकल्पः । एतद् वक्ष्यमाणस्य विभाषा-ग्रहणस्योभयोरपि योगयोः शेषभूतत्वाद् व्यवस्थितविभाषाविज्ञानाच्च लभ्यते ।

**संज्ञायां पुंसीत्यादि** । असंज्ञायामित्यस्य प्रतिषेधस्येति शेषः । एतेन पुंसि प्रतिषेधस्य चरितार्थतामाह—यत एवं पुंसि चरितार्थः प्रतिषेधस्ततो न ते भार्या प्रसिध्यति । भार्याशब्दस्तव सूत्रकारस्य मते न प्रसिध्यतीत्यर्थः । पुंसि प्रतिषेधे हि चरितार्थे स्त्रियाँ क्यपा भवितव्यम् । ननु चासंज्ञायामित्युच्यते, संज्ञाशब्दश्च भार्या-शब्दः, तथा हि अबिभ्रत्यपि देवदत्ते तस्य पत्नी भार्येत्युच्यते, तत् कुतः क्यप्प्रसङ्गः ? न ब्रूमः—अनेन सूत्रेण क्यपा भवितव्यमिति, किं तर्हि ? 'संज्ञायां समजनिषद्' इत्यनेन, तत्र उत्तरमाह—**स्त्रियां भावाधिकारोऽस्तीति** । भावाधिकारशब्देनात्र भावस्याभिधेयभावोपगमलक्षणो व्यापारो विवक्षितः, न तु शास्त्रीयोऽधिकारः । स्त्रियाम् = स्त्रीप्रकरणे, 'संज्ञायां समजनिषद' इत्यादिना क्यपि विधीयमाने भावस्याधिकारः; शब्दशक्तिस्वाभाव्यात् । तत्र क्यब् विधीयमानो भाव एव भवति, न कर्मणि । **तेन भार्या प्रसिध्यतीति** । कर्मणीत्यभिप्रायः ।

**पदमञ्जरी**

**संपूर्वाद्विभाषेति** । असंज्ञायामेव सूत्रेण नित्यं प्रसक्तस्य क्यपोऽयं विकल्पः । प्राप्तविभाषेत्यर्थः ।

**संज्ञायामित्यादि** । प्रतिषेधस्येति शेषः । असंज्ञायामित्यस्य प्रतिषेधस्य भार्यो नाम क्षत्रिय इत्यत्र पुंसि दृष्टत्वाच्चरितार्थत्वान्न ते=सूत्रकारस्य भार्या शब्दः सिद्ध्यतीत्यर्थः । पुंसि चरितार्थे हि प्रतिषेधे स्त्रियां क्यपा भवितव्यम् । ननु भार्याशब्दोऽपि संज्ञा, अभ्रियमाणापि हि भार्या भार्येत्युच्यते, तत्कुतोऽस्य क्यपः प्रसङ्गः ? न ब्रूमोऽनेन क्यपा भवितव्यमिति; यस्तु संज्ञायामेव विधीयते 'संज्ञायां समजनि' इत्यादिना, तस्यात्र प्रसङ्गः । न च तस्यापि प्रतिषेधसामर्थ्यान्निवृत्तिः, पुंसि प्रतिषेधस्य चरितार्थत्वादिति चोद्यम् । उत्तरमाह—**स्त्रियां भावाधिकारोऽस्तीति** । ननु 'सञ्ज्ञायां समजनिषद' इत्यत्र वक्ष्यति—'भाव इति न स्वर्यते पूर्वक एवार्था-

**भावबोधिनी**

संज्ञा अर्थ में नहीं होता है इसका क्या फल है ? भार्यो नाम क्षत्रियः । [ यह किसी क्षत्रिय का नाम है । अतः क्यप् न होकर ण्यत्, वृद्धि, रपर होते हैं । ] सम् पूर्वक भृञ् से विकल्प से होता है । उदा० सभृत्याः, संभार्याः । [ सम् भृञ् + क्यप्, तुक् । पक्ष में, सम् + भृ + ण्यत् वृद्धि, रपर । ]

**विमर्श**—आगे के दो वार्तिक कात्यायन के नहीं है, किसी अन्य आचार्य के हैं । इसी लिये भाष्यकार ने इनको प्रस्तुत करते हुये "अपर आह" ऐसा लिखा है ।

***भृञ् से असंज्ञा** = संज्ञाभिन्न अर्थ में क्यप् होता है–यह प्रतिषेध 'भार्य नामवाला क्षत्रिय' इस पुलिग में दृष्ट चरिताथ हो चुका है [ अतः स्त्रीलिङ्ग में यह प्रतिषेध नहीं प्रवृत्त होगा, उसमें क्यप् होगा, तब ] तुम्हारे=सूत्रकार के मत में 'भार्या' [ = बधू ] यह शब्द सिद्ध नहीं हो सकता ?

* [यदि यह कहा जाय कि देवदत्त द्वारा जिसका भरण पोषण नहीं किया जाता है, उसे भी देवदत्त की 'भार्या=पत्नी' ऐसा व्यवहार देखा जाता है । इस प्रकार यह भी संज्ञा शब्द हो जाता है । तब क्यप् का प्रसंग नहीं है—ऐसी यदि शंका हो तो उसका उत्तर यह है कि प्रस्तुत सूत्र से भले ही क्यप् की प्राप्ति न हो परन्तु "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्-भृञिणः" ( पा. सू. ३.३. ९९ ) से क्यप् होना ही चाहिये ? इस शंका का समाधान अगले वार्तिक से किया जा रहा है] "संज्ञायां जनि०" इत्यादि सूत्र से विधीयमान क्यप् में 'स्त्रियाम्' और 'भावे' दोनों का अधिकार है । [अतः इससे जो क्यप् होता है वह केवल 'भाव' अर्थ में होता है, कर्म अर्थ में नहीं । अतः 'भ्रियते या सा भार्या' इस कर्म अर्थ में ण्यत् ही होता है । ] इस कारण 'भार्या ( =पत्नी ) शब्द सिद्ध हो जाता है ।

## ७३२. मृजेर्विभाषा ॥ ११३ ॥ (२८६२)

**मृजेर्धातोर्विभाषा क्यप् प्रत्ययो भवति। ऋदुपधत्वात् प्राप्तविभाषेयम्। परिमृज्यः, परिमार्ग्यः (३.१.१२४)।**

## ७३३. राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११४ ॥ (२८६५)

**राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य—इत्येते शब्दाः क्यपि निपात्यन्ते। राज्ञा सोतव्यः**

**न्यासः**

यस्मात् स्त्रियो भावाधिकारोऽस्ति। भाव एव वाच्यत्वेन व्याप्रियते, न कर्म, तेन कर्मणि भार्याशब्दः प्रसिध्यति। स्त्रियां भावाधिकारे हि भाव एव क्यपा भवितव्यम्। कर्मणि तु ण्यतैव ॥ ११२ ॥

**मृजेर्विभाषा ॥** ऋदुपधत्वात् प्राप्तविभाषेयम्। 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यपो विधानात्। **परिमार्ग्य इति।** पूर्ववत् कुत्वम्, 'मृजेर्वृद्धिः' ॥ ११३ ॥

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ राज्ञा सोतव्य इति।** वाक्यविशेषेण राजनि तृतीयान्त उप-

**पदमञ्जरी**

धिकारः' इति, यथा—समजन्ति तस्यामिति समज्या, निषदन्ति तस्यामिति निषद्येत्यादि भवति, तत्कथमिद-मुच्यते—स्त्रियां भावाधिकारोऽस्तीति ? नेदमपूर्वं चोद्यम्, **वृत्तिकार** एव हि तत्र वक्ष्यति—कथं तदुक्तं स्त्रियाम् भावाधिकारोऽस्तीति। स्त्रीयां स्त्रीप्रकरणे 'संज्ञायां समजनि' इत्यादिना क्यपि विधीयमाने भावस्याधिकारोऽभिधेयभावोपगमलक्षणो व्यापारोऽस्ति; शब्दशक्तिस्वाभाव्याद्। भाव एव तेन क्यब् भवति, न कर्मणि, तेन भार्या प्रसिद्धचतीति कर्मणीत्यभिप्रायः। 'एकानुबन्धकग्रहणे न द्वचनुबन्धकस्य' (व्या० परि० ५२) इति 'भृञ् भरणे' (धा० पा० ८९८) इत्यस्यैव क्यब्विधौ ग्रहणम्, न 'डुभृञ् धारणपोषणयोः' (धा० पा० १०८७) इत्यस्य। अतस्तस्माद्वा 'भृञ् भरणे' इत्यस्माद्दीर्घान्ताद्वा भार्येति प्रसिद्धचतीति परिहारान्तरमप्यत्र सम्भवति ॥ ११२॥

**मृजेर्विभाषा ॥ परिमार्ग्य इति।** 'मृजेर्वृद्धिः' पूर्ववत्कुत्वम् ॥ ११३ ॥

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ राज्ञा सोतव्य इति।** अभिषिक्तः क्षत्रियो राजा, तेन

**भावबोधिनी**

**विमर्श**—'भृञ् भरणे (भ्वादि ८९८), डु.भृञ् धारणपोषणयोः (जुहोत्यादि १०८७) और 'भृ भर्त्सने'। भरणे-इत्येके—ये तीन धातुयें हैं। क्यप् प्रत्ययविधायक 'भृञोऽसंज्ञायाम्' तथा "संज्ञायां समजनि" इन दोनों सूत्रों में 'ञ्' अनुबन्ध सहित 'भृञ्' का ग्रहण है। अतः क्यप् तो इसी धातु से होगा। शेष दो जो जुहोत्यादि और क्र्यादि गणों की हैं उनसे ण्यत् होगा। अतः 'भृत्य' और 'भार्या' दोनों शब्दों की सिद्धि हो जाती है। क्यप् विधान में इन दो को नहीं लिया जा सकता क्योंकि यह नियम है—"तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम्।" अतः 'भार्या=पत्नी' वाचक की सिद्धि निर्बाध है। ॥ ११२ ॥

'मृज' धातु से विकल्प से क्यप् होता है। ऋकारोपध होने के कारण (ऋदुपधात्० '३.१.११०' से क्यप् प्राप्त होने के कारण) यह प्राप्तविभाषा है। उदा०—परिमृज्यः, परिमार्ग्यः। [परिमृज् + क्यप् =य, क्यप् न होने पर 'ऋहलोर्ण्यत्' सूत्र से ण्यत्, "मृजेर्वृद्धि" से वृद्धि, रपर, 'चजोः कुः घिण्यतोः' सूत्र से 'ज्' का कुत्व 'ग'—परिमार्ग्यः=शुद्ध करने योग्य] ॥ ११३ ॥

राजसूर्य, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य तथा अव्यथ्य—इतने शब्द क्यप् प्रत्ययान्त निपातित होते हैं। उदा० राजसूर्यः, 'राज्ञा सोतव्यः' = राजा द्वारा अभिषव से निष्पादन के योग्य, अथवा 'राजा इह सूयते=लतात्मक

**राजा वा इह सूयते—राजसूयः क्रतुः। सूसर्त्तिभ्यां क्यप्, सर्त्तेरुत्वम्, सुवतेर्वा रुडागमः। सरति सुवति वा सूर्यः। मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यब् निपात्यते। मृषोद्यम्। रोचतेऽसौ रुच्यः। कर्त्तरि क्यप्। गुपेरादेः कत्वं च संज्ञायाम्। कुप्यम्। गोप्यमन्यत्। कृष्टे पच्यन्ते कृष्टपच्याः। कर्मकर्त्तरि निपातनम्। न व्यथते अव्यथ्यः॥**

**न्यासः**

पदे कर्मणि निपातनमिति दर्शयति। **राजा वेह सूयत** इत्यनेनापि राजनि प्रथमान्त उपपदेऽधिकरणे निपातनमिति। 'षुञ् अभिषवे' इत्यस्मात् क्यप्। तत्र चास्य तुगभावो दीर्घत्वञ्च निपात्यते। **सूसर्त्तिभ्यामिति**। 'षू प्रेरणे', 'सृ गतौ'—आभ्यां यथाक्रमम् 'अचो यत्' इति यति प्राप्ते 'ॠहलोर्ण्यत्' इति च, क्यब् निपात्यते। **सुवतीति**। कर्मणि। कार्ये लोकान् प्रेरयतीति। तस्मिन् ह्युदिते लोकस्य क्रियाप्रवृत्तिः। **पक्षे यति प्राप्त इति**। 'वदः सुपि क्यप् च' इत्यनेन। मृषावदनम्=मृषोद्यम्। क्यप्, संप्रसारणम्, 'आद् गुणः', उपपदसमासः। **रोचतेऽसाविति**। कर्तृप्रत्ययान्तेनार्थमुपदर्शयन् कर्त्तरि निपातनं दर्शयति। तृजादौ प्राप्ते क्यब् निपात्यते। **गुपेरिति**। 'गुप गोपने', 'गुपू रक्षणे' इत्यस्य वा। **अव्यथ्य इति**। 'व्यथ भयचलनयोः'—अस्मात् कर्त्तरि तृजपवादः क्यब् निपात्यते॥ ११४॥

**पदमञ्जरी**

सोतव्योऽभिषवद्वारेण निष्पादयितव्य इत्यर्थः, कर्मणि क्यब् दीर्घत्वं च निपात्यते। **राजा वा इह सूयत इति**। अत्र पक्षे लतात्मकः सोमो राजा, राजानं क्रीणन्तीत्यादौ दर्शनात्। सुनोतिरत्राप्यभिषवे। अधिकरणे क्यब्-निपतनं रूढ्यर्थम्, तेन ज्योतिष्टोमादौ न भवति। पूर्वस्मिन्नपि पक्षेऽश्वमेधादावतिप्रसङ्गः। **सूसर्तिभ्यामिति**। ननु 'सर्तेरुत्वं सुवतेर्वा रुडागमः' इत्यभिधानाद्विकल्पोऽत्राभिप्रेत इति चार्थाभावाद् द्वन्द्वानुपपत्तिः? **भाष्यकार**-प्रयोगात्तु द्वन्द्वः। प्रयुक्तं हि **भाष्ये** 'सूसर्त्तिभ्यां च सर्त्तेरुत्वं सुवतेर्वा रुडागमः' इति। **सर्त्तेरुत्वमिति**। दीर्घत्वं तु रपरत्वे सति 'हलि च' इत्येव सिद्धम्। **सुवतेर्वा रुडागम इति**। सुवतेरिति पञ्चमी, सुवतेः परस्य क्यप इत्यर्थः। **रुगागम इति** पाठे षष्ठी। **सरतीति**। आकाशे। **सुवतीति**। 'षू प्रेरणे' ( धा० पा० १४०८ ) तुदादिः, कर्मणि लोकं प्रेरयतीत्यर्थः, उदिते हि तस्मिन्क्रियासु लोकस्य प्रवृत्तिः। कर्तृप्रत्ययेन कर्त्तरि' निपातनं दर्शयति। एवं रुच्याव्यथ्ययोरपि द्रष्टव्यम्। आह च 'सूर्यरुच्याव्यथ्याः कर्त्तरि' इति। **कुप्यमिति**। संज्ञायामेतदिष्यते, सुवर्ण-रजतव्यतिरिक्तस्य धनस्येयं संज्ञा। सर्वत्रातिप्रसङ्गो निपातनाश्रयेण परिहार्यः। **कर्मकर्त्तरि निपातनमिति**।

**भावबोधिनी**

सोम राजा का जिसमें अभिषव किया जाता है—ये विग्रह हैं। [ तृतीयान्त राजा के उपपद रहते षु=सु धातु से कर्म अर्थ में क्यप् प्रत्यय और धातु का दीर्घ निपातित किया जाता है। अथवा 'राजा' इस प्रथमान्त के उपपद रहते 'षु' = 'सु' धातु से अधिकरण अर्थ में क्यप् प्रत्यय और दीर्घ निपातित किये जाते हैं। ] सूर्यः—[ 'षू' प्रेरण अर्थ वाली और 'सृ' गति अर्थवाली से क्रमशः 'अचो यत्' से यत् और 'ॠहलोर्ण्यत्' से ण्यत् प्रत्यय प्राप्त रहते हैं उनमें ] क्यप् होता है, 'सृ' के ऋ का उ और रपर होता है। [ और 'सुर् य' में 'हलि च' से दीर्घ होकर 'सूर्यः' बनता है। ] 'सु' से क्यप्=य, और रुट्=र् का आगम [ तथा दीर्घ होता है। यदि 'रुट्' आगम है तो प्रत्यय का आगम है अतः क्यप् से पहले होता है। और यदि रुक् आगम है तो 'सु' धातु का है, कित् होने से बाद में ] होता है। सरति आकाशे= आकाश में चलने वाला, अथवा सुवति=कार्य में लोगों को लगाने वाला—'सूर्यः'। 'मृषा' पूर्वक 'वद' धातु से [ 'वदः सुपि च' इससे ] यत् की प्राप्ति रहते नित्य क्यप् का निपातन किया जाता है। मृषावदनम्—इस अर्थ में मृषोद्यम् [ झूठ बोलना, मृषा वद्+क्यप्=य 'व्' का सम्प्रसारण, अ का पूर्वरूप मृषा के साथ—समास उद्+य, गुण—मृषोद्यम्। ] रोचते असौ—इस अर्थ में-रुच्यः। यहाँ कर्ता अर्थ में 'क्यप्' निपातित होता है, [ कित् होने से गुण नहीं होता है। ] कुप्यम [ 'गुप गोपने' अथवा 'गुपू रक्षणे' इससे ] क्यप् प्रत्यय और आदि का 'क' होता है—गुप्+य=कुप् य=कुप्यम यह सोने चाँदी आदि की संज्ञा है। ] अन्य अर्थ में [ ण्यत् होने से ] गोप्यम्। कृष्टे=जोतने आदि पर पच्यन्ते=पकने वाले—कृष्टपच्याः। कर्मकर्ता में निपातित होता है। [ शुद्ध कर्म में 'कृष्टपाक्याः' यह बनता है। ] न व्यथते-इस अर्थ में—अव्यथ्यः। [ कर्ता अर्थ में प्राप्त तृच् का अपवाद क्यप् प्रत्यय है। ]॥ ११४॥

**७३४. भिद्योद्ध्यौ नदे ॥ ११५ ॥ (२८६६)**

भिदेरुज्झेश्च क्यब् निपात्यते नदेऽभिधेये । उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः । उज्झत्युदकम् उद्ध्यः ।

नद इति किम् ? भेत्ता । उज्झित्ता ॥

**७३५. पुष्यसिद्ध्यौ नक्षत्रे ॥ ११६ ॥ (२८६७)**

पुषेः सिधेश्चाधिकरणे क्यब् निपात्यते नक्षत्रेऽभिधेये । पुष्यन्त्यस्मिन्नर्था इति पुष्यः । सिद्ध्यन्त्यस्मिन्निति सिद्ध्यः ।

नक्षत्र इति किम् ? पोषणम्, सेधनम् ॥

**७३६. विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११७ ॥ (२८६८)**

विपूय, विनीय, जित्य—इत्येते शब्दा निपात्यन्ते यथासंख्यं मुञ्ज, कल्क, हलि—इत्येतेष्वर्थेषु बोध्येषु । विपूर्वात्पवतेर्नयतेश्च तथा जयतेर्यति प्राप्ते ( ३.१.९७ ) कर्मणि क्यब्निपात्यते । विपूयो मुञ्जः, विपाव्यमन्यत् ।

**न्यासः**

**भिद्योद्ध्यौ नदे ॥ उज्झेश्चेति** । 'उज्झ उत्सर्गे' । **कर्त्तरि क्यब् निपात्यत इति** । तृजादेरपवादः ॥ ११५ ॥

**पुष्यसिद्धौ नक्षत्रे । पुषेः सिद्धेश्चेति** । 'पुष पुष्टौ' 'सिधु संराद्धौ' । **अधिकरणे क्यब् निपात्यत इति** । ल्युटोऽपवादः ॥ ११६ ॥

**विपूयविनीयजित्या मुञ्जकल्कहलिषु । विपूर्वात् पवतेरिति** । 'पूङ् पवने' । **नयतेश्चेति** विपूर्वादित्यपेक्षते । **यति प्राप्त इति** । त्रयाणामप्यजन्तत्वात् । विपूयते विपूयः । विनीयते=सिद्धत्वं प्राप्यते विनीयः । तैलेन

**पदमञ्जरी**

अन्तोदात्तस्य चेति द्रष्टव्यम् । आह हि—'कृष्टपच्यस्यान्तोदात्तत्वं कर्मकर्तरि च' इति । शुद्धे तु कर्मणि कृष्टपाक्य इत्येव भवति ॥ ११४ ॥ ११५ ॥

**पुष्यसिद्धौ नक्षत्रे ॥ पुष्यन्त्यस्मिन्नर्था इति** । आरब्धा इति शेषः । **सिद्ध्यन्त्यस्मिन्निति** । अत्रार्था इत्यपेक्ष्यते । पुष्पसिद्धशब्दौ पर्यायौ । स्वरूपपरत्वात्तु सूत्रे द्वन्द्वः ॥ ११६ ॥

**विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ विपूयो मुञ्ज इति** । रज्वादिकरणाय शोधयितव्यः इत्यर्थः ।

**भावबोधिनी**

भिद् और उज्झ धातु से, नद अर्थ वाच्य रहने पर, क्यप् प्रत्यय निपातित होता है । और 'उज्झ' के 'झ' का 'ध' होता है । उदा० भिनत्ति कूलम्—इस अर्थ में-भिद्यः । [ भिद् + क्यप् = य, कित् होने से गुणनिषेध ] उज्झति उदकम् —उद्ध्यः । [ उज्झ् + य, झ् का 'ध्' करने पर 'ज्' का 'द्' हो जाता है । किनारा तोड़ने वाला नद । पानी छोड़ने वाला नद । ]

नद अर्थ में—इसका क्या फल है—भेत्ता । उज्झिता । [ नद से भिन्न में क्यप् न होकर तृच् होता है—भिद् + तृच् उपधागुण, विभक्ति कार्य, उज्झ् + तृच् में इट् आगम, विभक्तिकार्य । ] ॥ ११५ ॥

नक्षत्र अभिधेय = वाच्य रहने पर अधिकरण अर्थ में 'पुष्' तथा 'सिध्' धातु से क्यप् प्रत्यय निपातित होता है । उदा० पुष्यन्ति अर्थाः अस्मिन् = जिसमें पदार्थ परिपुष्ट होते हैं—वह—पुष्यः । [ पुष् + क्यप्, कित् होने से गुणनिषेध । ] सिध्यन्ति कार्याणि अस्मिन्—जिसमें कार्य सिद्ध होते हैं—वह सिद्ध्यः [ सिध् + क्यप् कित् होने से गुणनिषेध, 'अनचि च' सूत्र से 'ध्' का वैकल्पिक द्वित्व करने पर प्रथम 'ध्' का जश्त्व द्—सिद्ध्यः पक्ष में एक 'ध्'—सिध्यः । ] नक्षत्र रहने पर इसका क्या लाभ है—पोषणम्, सेधनम् । [ इनमें अधिकरण अर्थ में ल्युट् होता है ] ॥ ११६ ॥

मुञ्ज कल्कि और हली इन अर्थों के बोध्य रहने पर क्रमशः विपूय, विनीय और जित्य—ये शब्द निपातित होते हैं । विपूर्वक 'पू' धातु और 'नी' धातु से तथा 'जि' धातु से [ "अचो यत्" सूत्र से ] यत् प्रत्यय के प्राप्त रहते कर्म अर्थ में क्यप् निपातित होता है । उदा० विपूयः मुञ्जः । [ विपू + क्यप्, साफ करने योग्य मूंज । ] अन्य अर्थ में विपव्यम् ।

**विनीयः कल्कः, विनेयमन्यत् । जित्यो हलिः, जेयमन्यत् ॥**

**७३७. प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ ११८ ॥ (२८७०)**

**प्रति, अपि–इत्येवम्पूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये । मत्तस्य न प्रतिगृह्यम् ( अनृतम् ) ( का० सं० १४५ ) । तस्मान्नापि गृह्यम् ( का सं० २७३ ) ।**

**छन्दसीति किम् ? प्रतिग्राह्यम् । अपिग्राह्यम् ( ३.१.१२४ ) ।**

**७३८. पदास्वैरिबाह्यापक्ष्येषु च ॥ ११९ ॥ (२८७०)**

**पदेऽस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् प्रत्ययो भवति । पदे तावत्–प्रगृह्यं पदम्, यस्य**

**न्यासः**

घृतेन वा त्रिफलादिद्रव्यसमवेतेन साध्यः कश्चिदौषधविशेषः कल्क इत्युच्यते । जेतव्यो **जित्यः** । 'बृहद्धलम् = हलिः ॥ ११७ ॥

**प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ प्रतिगृह्यमिति** । 'ग्रहिज्या' इत्यादिना संप्रसारणम्, 'कुगतिप्रादयः' इति समासः ॥ ११८ ॥

**पदास्वैरिबाह्यापक्ष्येषु च ॥ अस्वैरीति** । 'ईर गतौ' । स्वेन स्वयमीरितुं गन्तुं शीलमस्येति ताच्छीलिको णिनिः । निपातनाद् वृद्धिः स्वैरी=स्वतन्त्रः । अस्वैरी परतन्त्र उच्यते । बाह्यायामिति बहिभूतायामित्यर्थः । 'बहिषष्टिलोपश्च' इत्युपसंख्यानाद् यञ्, तत्र च टिलोपः । **पक्ष्ये चार्थ इति** । पक्ष्यशब्दो वर्गमाचष्टे । पक्षे

**पदमञ्जरी**

**विनीयःकल्क इति** । कल्कशब्दोऽयमस्ति । पिष्ट औषधे—'पथ्या शुण्ठी सैन्धवांशस्य कल्कः पेयो नित्यं सर्वरोगक्षयाय' इति, तैले घृते वा औषधे प्रक्षिप्ते यदजीषं तत्रापि वर्त्तते, तापे च प्रसिद्धः–तपो न कल्पोऽध्ययनं न कल्कः' इत्यादौ; इह तु प्रथमस्य ग्रहणमिति केचित् । विशेषेसेति, वयम्, तथा **च माघः** प्रायुङ्क्त–'अविनीय संभ्रमविकासिभक्तिभिः' इति । **जित्य इति** । बलेनाक्रष्टव्यः । कृष्टसमीकरणार्थं स्थूलं काष्ठं हलिरिच्युत्यते ॥ ११७ ॥ ११८ ॥

**पदास्वैरिबाह्यापक्ष्येषु च ॥ अस्वैरिणीति** । 'ईर प्रेरणे' ( धा० पा० १०१८ ) स्वयमेवेरितुं शीलमस्या इति ताच्छीलिको णिनिः, 'स्वादीरेरिणोः' ( वा० ६७९ ) इति वृद्धिः । **बाह्यायामिति** बहिर्भवा 'बहिषष्टि-

**भावबोधिनी**

[ वि पू + यत्, ऊ का गुण, 'ओ' का अव् आदेश—विपव्यम् । ] विनीयः कल्कः । [ पीसी गयी औषधिविशेष । अथवा पाप । वि नी + क्यप्=य, कित् होने से गुण-निषेध । ] अन्य पदार्थ होने पर—विनेयम् । ( विनी + यत् गुण ) जित्यः हलिः । [ जि + क्यप् तुक् = त् आगम । बलपूर्वक खींचने योग्य । जुते हुये खेत को बराबर करने के लिये जिस काष्ठ का प्रयोग किया जाता है उसे 'हलि' कहते हैं । लोकभाषा में 'पाटा' कहा जाता है । ] अन्य पदार्थ होने पर— जेयम् । [ जि + यत् गुण । ] ॥ ११७ ॥

वेदविषय में, प्रति और अपि पूर्वक ग्रह धातु से क्यप् प्रत्यय होता है । उदा० मत्तस्य न प्रतिगृह्यम् । तस्मान्न अपिगृह्यम् । प्रतिग्रह् +क्यप्, अपिग्रह+क्यप् "ग्रहिज्यावयि०" सूत्र से 'र्' का सम्प्रसारण ऋ, अ का पूर्वरूप, उपपद समास करने पर रूप बनते हैं । ]

वेदविषय में—इसका क्या फल है—प्रतिग्राह्यम, अपिग्राह्यम् । [ प्रतिग्रह् + ण्यत्, अपिग्रह + ण्यत्, उपधा की वृद्धि करने पर रूप बनता है । ] ॥ ११८ ॥

पद, अस्वैरी = परतन्त्र, बाह्या [ =बाहर होने वाली ], और पक्ष्य [ पक्ष में होने वाला ]—इन अर्थों में भी 'ग्रह्' धातु से क्यप् प्रत्यय होता है । उदा० पद अर्थ में—प्रगृह्य पदम्, जिसकी प्रगृह्य संज्ञा की गयी है । [ प्र

**प्रगृह्यसंज्ञा विहिता । अवगृह्यं पदम्, यस्यावग्रहः क्रियते । अस्वैरी = परतन्त्रः । गृह्यका इमे । गृहीतका इत्यर्थः । बाह्यायाम्–ग्रामगृह्या सेना । नगरगृह्या सेना । ग्रामनगराभ्यां बहिर्भूतेत्यर्थः ।**

**स्त्रीलिङ्गनिर्देशादन्यत्र न भवति । पक्षे भवः पक्ष्यः । वासुदेवगृह्याः । अर्जुनगृह्याः । तत्पक्षाश्रिता इत्यर्थः ।।**

## ७३९. विभाषा कृवृषोः ।। १२० ।। (२८७१)

**कृञो वृषेश्च विभाषा क्यप् प्रत्ययो भवति । करोतेर्ण्यति प्राप्ते ( ३.१.१२४ ) वर्षतेर्ऋदुपधत्वान्नित्ये क्यपि प्राप्ते ( ३.१.११० ) विभाषाऽऽरभ्यते । कृत्यम्, कार्यम् । वृष्यम्, वर्ष्यम् ।।**

### न्यासः

भवः पक्ष्य इति दिगादित्वाद् यत् । प्रगृह्यत इति प्रगृह्यं पदम् । असन्निकर्षोऽत्र गृह्णातेरर्थः । स्वरा हि तत्र न सन्निकृष्यन्ते । सन्निधीयन्त इत्यसन्निकर्षः । अवगृह्यत इत्यवगृह्यम् । **यस्यावग्रहः क्रियत इति ।** तत्र समुदाय-पदेऽवयवपदानि विविधान्यवगृह्य विच्छिद्याख्यायन्ते । तेनावयवानामवगृह्यत्वादवगृह्यमित्युच्यते । **गृह्यका इति ।** 'अनुकम्पायाम्' इति कन् । **गृहीतका इति ।** संयताः परतन्त्रीकृता इति यावत् । **अन्यत्रेति ।** पुंसि नपुंसके च । **वासुदेवगृह्या इति** षष्ठीसमासः ।। ११९ ।।

**विभाषा कृवृषोः ।। वृषेश्चेति ।** 'वृषु प्लुषु मृषु मेचने' ।। १२० ।।

### पदमञ्जरी

लोपश्च' ( वा० ३७८ ) इति यण्टिलोपौ, पक्षे भवः पक्ष्यः, दिगादित्वाद्यत् । **यस्य प्रगृह्यसंज्ञा विहितेति ।** ननु पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा, तु न पदस्य ? सत्यम्; यौगिकस्त्वयं पदशब्दः—पद्यते गम्यतेऽनेनार्थ इति । यद्वा–**प्रातिशाख्ये** द्विवचनान्ते पद एव प्रगृह्यशब्दः प्रसिद्धः । सन्निकर्षोऽत्र गृह्णातेरर्थः । स्वरसन्ध्यभावादग्नी इत्यादौ कियतापि कालेन व्यवधानात्परस्परमचो न सन्निकृष्यन्ते । **अवगृह्यमिति ।** समारे पूर्वपदम्, तत्र हि पदकालेऽवग्रहो विच्छेदः । **गृह्यका इमे गृहीतिका इति ।** उभयत्रानुकम्पायां कन् । पञ्जरादिबन्धेन परतन्त्री-कृताः शुकादय उच्यन्ते । **ग्रामगृह्येति ।** शेषलक्षणायाः षष्ठ्याः समासः । **वासुदेवगृह्येत्यत्र** तु कर्त्तरि षष्ठ्याः शेषषष्ठ्या वा समासः ।। ११९ ।।

**विभाषा कृवृषोः ।। वृष्यमिति ।** 'वृषु सेचने' ( धा० पा० ७०६ ) ।। १२० ।।

### भावबोधिनी

ग्रह् + क्यप्=य, र का सम्प्रसारण । ] अवगृह्यम् पद, जिसका अवग्रह किया जाता है, अलग-अलग किया जाता है । [ अव ग्रह + क्यप्=य, 'र' का सम्प्रसारण ] अस्वैरो = परतन्त्र । गृह्यका इमे = पकड़ कर पाले गये तोता आदि—यह अर्थ है । [ ग्रह् + क्यप्, सम्प्रारण, 'गृह्य' इससे ''अनुकम्पायाम्'' सूत्र से अनुकम्पा अर्थ में कन् प्रत्यय हुआ है । ] बाह्या अर्थ में—ग्रामगृह्या सेना, नगरगृह्या सेना—गाँव और नगर से बाहर होने वाली सेना—यह अर्थ है । यहाँ स्त्रीलिंग निर्देश है अतः पुल्लिग और नपुंसकलिंग में यह नहीं बनता है । ] पक्ष में होने वाला—पक्ष्य । उदाहरण —वासुदेवगृह्याः । अर्जुनगृह्याः । [ गृह् + क्यप्, सम्प्रसारणादि के बाद शेष अर्थ में षष्ठीसमास होता है । ] वासुदेव = कृष्ण के पक्ष में रहने वाले, अर्जुन के पक्ष में रहने वाले—यह अर्थ है ।। ११९ ।।

'कृ' और 'वृष' इनसे विकल्प से क्यप् प्रत्यय होता है । 'कृ' धातु से [ ''अचो यत्'' से ] यत् की प्राप्ति है और 'वृष' धातु से ऋदुपध मानकर [ ''ऋदुपधाच्च'' सूत्र से ] नित्य क्यप् की प्राप्ति है, इस अर्थ में विकल्प विधान किया जा रहा है । उदा० कृत्यम्, कार्यम् । [ कृ + क्यप् = य, तुक् = त्, कृत्यम् । पक्ष में ''ऋहलोर्ण्यत्'' सूत्र से ण्यत् प्रत्यय, ऋ की वृद्धि, रपर—कार्यम् । ] वृष्यम्, वर्ष्यम् । [ वृष् + क्यप् = य, कित् होने से गुणनिषेध । पक्ष में ण्यत्, गुण, रपर-वर्ष्यम् । ] ।। १२० ।।

## ७४०. युग्यं च पत्त्रे ॥ १२१ ॥ (२८७३)

'युग्यम्' इति निपात्यते, पत्त्रं चेत्तद्भवति । पतत्यनेनेति पत्त्रम्, वाहनमुच्यते । युग्यो गौः । युग्योऽश्वः । युग्यो हस्ती । युजेः क्यप् कुत्वं च निपात्यते ।

पत्त्र इति किम् ? योग्यमन्यत् ॥

## ७४१. अमावस्यदन्यतरस्याम् ॥ १२२ ॥ (२८७४)

अमाशब्दः सहार्थे वर्त्तते । तस्मिन्नुपपदे वसेर्धातोः कालेऽधिकरणे ण्यत्प्रत्ययो भवति, तत्रान्यतरस्यां

न्यासः

**युग्यञ्च पत्त्रे ॥ पतन्त्यनेनेति पत्त्रमिति** । 'दाम्नीशस' इत्यादिना ष्ट्रन् । **युग्यमिति** । 'युजिर् योगे' । योजनीये । युज्यते वाहनेन गमनमिति युग्यम् ॥ १२१ ॥

**अमावस्यदन्यतरस्याम् ॥ अमावस्यदिति** । ण्यत्प्रत्ययान्तमेतन्निपातनम्, न क्यप्प्रत्ययान्तमिति ज्ञापनार्थं तकारानुबन्धोच्चारणम्; अन्यथा क्यपः प्रकृतत्वात् क्यप्प्रत्ययान्तमेतदिति सम्भाव्येत । स चापि तित्प्रत्ययो ण्यदिहाभिप्रेतः, न यत्; अन्यथा हि निपातनमनर्थकं स्यात् । यत्प्रकरणे 'अमावसेरन्यतरस्याम्' इत्येव ब्रूयात् । दोषवत्त्वाच्च यत्प्रत्ययान्तनिपातस्य, दोषस्तूत्तरत्राविष्करिष्यते । यश्च यत्प्रत्ययान्तनिपातने दोषः स क्यबन्तेऽपि, संप्रसारणाभावश्च निपातयितव्यतामापद्येत; तस्माण्ण्यत्प्रत्ययान्तमेतन्निपातनमिति मत्वाह—**कालेऽधिकरणे ण्यत्प्रत्ययो भवतीति** । एकदेशविकृतत्वादिना ण्यत्प्रत्ययान्तनिपातनस्य गुणं दर्शयति । वृद्ध्यभावो हि ण्यति

पदमञ्जरी

**युग्यं च पत्त्रे ॥ पतत्यनेनेति पत्त्रमिति** । 'दाम्नीशस' इत्यादिना करणे ष्ट्रन् । 'तद्वहति रथयुगप्रसङ्गम्' इति प्राग्दीव्यतीयेनैव यथा सिद्धम् । स्वरेऽपि नास्ति भेदः—क्यपि धातुस्वरः, यत्यपि 'यतोऽनावः' इत्याद्युदात्तत्वम्, अयुग्यमित्यत्रापि न स्वरे भेदः, 'ययतोश्चातदर्थे' 'कृत्योकेष्णुच्चार्वादयश्च' इत्युभयत्रान्तोदात्तविधानात् ॥ १२१ ॥

**अमावस्यदन्यतरस्याम् ॥ अमाशब्दः सहार्थे वर्तत इति** । अमात्य इत्यादौ दर्शनात् । **तस्मिन्नुपपद इति** । उपपदत्वमपि निपातनादेव, अमेति वा सप्तम्या लुका निर्देशः । तकारोच्चारणात्प्रकृतस्य क्यपस्तावन्निपातनं न भवति । यदि तु परमप्रकृतस्य यतो निपातनं स्यात् स्वरे दोषः स्यात्—यति सति वस्याशब्दे 'यतोऽनावः' इत्याद्युदात्तत्वम्; कृदुत्तरपदप्रकृतिस्वरत्वेऽपि स एव स्वरोऽवतिष्ठेत, ण्यति त्वन्तस्वरितत्वं भवति । तथा यता मुक्तेऽमावास्येत्यधिकरणे ण्यन्न प्राप्नोति, 'कृत्यल्युटो बहुलम्' इति भविष्यति । एवमप्युपपदसमासो न प्राप्नोति ? मयूरव्यंसकादित्वाद्भविष्यति । एवमपि 'गतिकारकोपपदात्' इति स्वरो न प्राप्नोति ? तथा 'अमावास्याया वा' इति ण्यदन्तस्य यत्कार्यं तद्यदन्तस्यामावस्यशब्दस्य न स्याद्, भिन्नत्वात् ? इति यदन्तपक्षे दोषं दृष्टवा प्रकृतस्यापि ण्यत एव निपातनमित्याह—**ण्यत्प्रत्ययो भवतीति** । किं तर्हि उच्यते—ण्यत्प्रत्ययो भवतीति, न पुनर्ण्यत्प्रत्ययो निपात्यत इति ? सत्यम्, स एवार्थः, निपातनाद् ण्यत्प्रत्यो भवतीत्यर्थः । **अन्यतरस्यां वृद्ध्यभावो**

भावबोधिनी

'युग्यम्' यह निपातित होता है, यदि वह 'पत्त्र' होता हो तो । पतति अनेन—इस अर्थ में पत्त्रम् = वाहन = गाड़ी । [ जिसके द्वारा जाया जाय ] युग्यः गौः । [ युज् + क्यप् = य, 'ज्' का 'ग्' भी निपातित होता है—युग्यः । गाड़ी में जोतते योग्य बैल ] युग्यः अश्वः । युग्यः हस्ती । युज् धातु से क्यप् प्रत्यय और 'ज्' का 'ग्' ये दोनों निपातित होते हैं ।

पत्त्र = वाहन अर्थ रहने पर—इसका क्या फल है ? अन्य अर्थ हो तो—योग्यम् [ युज् + ण्यत्, उपधागुण और कुत्व करने पर—'योग्यम्' बनता है । ] ॥ १२१ ॥

'अमा' यह शब्द सह = साथ अर्थ में है । अमा यह उपपद रहने पर 'वस्' धातु से काल अधिकरण अर्थ में

**वृद्धयभावो निपात्यते। सह वसतोऽस्मिन्काले सूर्याचन्द्रमसाविति अमावस्या, अमावास्या। एकदेशविकृतस्यानन्यत्वाद् 'अमावास्याया वा' ( ४.३.३० ) इत्यत्रामावस्याशब्दस्यापि ग्रहणं भवति।**

**अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्।**
**तथैकवृत्तिता तयोः स्वरश्च मे प्रसिद्धयति॥ ( म० भा० ३.१.१२२ श्लो० वा० )**

**न्यासः**

निपातितोऽमावस्याशब्द एव। अमावस्याशब्दो नात्रोपतिष्ठते वृद्धयभावपक्षे ततश्च 'एकदेशविकृतमनन्यवद्भवति' इत्यमावस्याशब्दे गृह्यमाणेऽमावास्याशब्दस्यापि ग्रहणं भवति। तेन 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्काराद्वुन्' 'अमावास्याया वा' इत्यमावास्याशब्दे वुन्नणौ विधीयमानावमावस्याशब्दस्यापि सिध्यतः।

**अमावसोरित्यादि**। एकस्या अपि प्रकृतेर्वृद्धिभाक्त्वावृद्धिभाक्त्वधर्मभेदेन भेदस्य विवक्षितत्वाद् द्विवचने निर्देशः। अहमित्यात्मानं व्यपदेशयन्नपरेऽन्यथा कुर्वन्तीति सूचयति। **ण्यतोरिति**। ण्यत्प्रत्ययान्तयोरित्यर्थः। **निपातयाम्यवृद्धितामिति**। अन्यतरस्यामिति शेषः। तेन किं सिध्यतीत्याह—**अथैकवृत्तिता तयोरिति**। प्रसिद्धयतीति वक्ष्यमाणेन सम्बन्धः। क्वचित् **तथैकवृत्तितामिति** पाठः। तत्र निपातयामीति प्रकृतेन सम्बन्धः। निपातयामीत्यस्य च साधयामीत्येषोऽर्थः। **तयोरिति**। अमावास्याऽमावस्ययोः प्रत्यवमर्शः। वृत्तिः पुनर्वुन्नणोः प्रत्यययोरुत्पत्तिः। एका तुल्या ययोर्वृत्तिस्तावेकवृत्ती, तद्भाव एकवृत्तिता। सा ण्यत्प्रत्ययमुत्पाद्य तत्र वृद्धयभावनिपातनेन सिध्यतीति; एकदेशविकृतस्यानन्यत्वात्। **स्वरश्च मे प्रसिध्यतीति**। 'तित् स्वरितम्' इति। अन्तस्वरितत्वञ्चेष्टम्। **सिध्यतीति**। ये त्वमापूर्वस्य वसेर्यतं निपातयन्ति, अन्यतरस्यांग्रहणाच्च पक्षे

**पदमञ्जरी**

**निपात्यत इति**। ण्यत्प्रत्ययो नित्यः, वृद्धयभावस्तु पाक्षिक इत्यर्थः। **सह वसत इति**। सन्निकृष्टौ वसत इत्यर्थः। यदुक्तम्—ण्यत्प्रयये निपात्यत इति, तत्रायं गुण इत्याह— **एकदेशविकृतस्यानन्यत्वादिति**। ण्यति ह्यमावास्येति स्वतः प्राप्तं रूपम्, वृद्धयभावस्तु तस्यैव विकार इति भावः। यद्वा—ण्यति वृद्धौ कृतायां पक्षे ह्रस्वोऽपि निपात्यते, स एव वृद्धयभाव उक्तः। एवं श्लोकेऽप्यवृद्धितामिति।

किमत्र निपात्यत इत्याशङ्कायां श्लोकः—**अमावसोरित्यादि**। वृद्धिभावाभावकृतविशेषाश्रयो द्विवचननिर्देशः। **निपातयामीति**। एकस्यैवेति शेषः, अमापूर्वयोर्वसोर्ण्यन्तयोर्मध्ये एकस्य वृद्धयभावमहं निपातयामीत्यर्थः। सूत्रकारेणैक्यमापन्नस्यैतद्वचनम्। तथा सति किं सिद्धमित्यत्राह—**तथेति**। एका तद्धितवृत्तिरेकदेशविकृतस्यानन्यत्वाद् एतयोर्द्वयोरपि सिद्धयतीत्यर्थः। **स्वरश्च मे प्रसिद्धयतीति**। एवं निपातयतो मम स्वरोऽपि

**भावबोधिनी**

ण्यत् प्रत्यय होता है, इसमें विकल्प से वृद्धि का अभाव भी निपातित होता है। उदाहरण—सह वसतः अस्मिन् काले सूर्याचन्द्रमसौ [ साथ में रहते हैं जिस काल में सूर्य तथा चन्द्रमा वह काल ] अमावस्या, अमावास्या [ अमा उपपद वस्+ण्यत्, पाक्षिक वृद्धि का अभाव, उपपद समास करने पर अमावस्या, पक्ष में उपधा वृद्धि करने पर—अमावास्या। ] "एक अवयव के विकृत होने से दूसरा नहीं हो जाता है" इस न्याय के अनुसार "अमावास्याया वा" ( पा. सू. ४.३.३० ) इस सूत्र में 'अमावस्या का भी ग्रहण होता है।

❀ ण्यत् प्रत्ययान्त 'अमावस्+य' की अवृद्धिता=वृद्धि के अभाव को मैं ( वार्त्तिककार ) निपातित करता हूँ। इस प्रकार दोनों से तद्धितवृत्ति ( वुन् और अण् प्रत्यय ) तथा दोनों का स्वर मेरे मत में सिद्ध हो जाता है॥ ❀

**विमर्श**—'अमा' उपपद 'वस' धातु से ण्यत् होता है और विकल्प से वृद्धि का अभाव होता है। इसका आशय यह है कि वृद्धि के अभाववाला—अमावस्या यह रूप है। अतः "अमावास्याया वा" ( पा. सू. ४.३.३० ) इसमें केवल वृद्धिवाला 'अमावास्या' ही गृहीत होगा, वृद्धि के अभाववाला-अमावस्या नहीं। तब इससे भव' आदि अर्थ में प्रत्यय कैसे होगें ? इसका उत्तर यह "एकदेशविकृतमनन्यवत्" इस परिभाषा के बल से 'अमावास्या' का जहाँ ग्रहण होता है वहाँ ह्रस्व अकार वाला—'अमावस्या' का भी ग्रहण हो जायगा। इस कारण दोनों शब्दों से तद्धित प्रत्यय ( वुन् और अण् ) होते हैं।

**७४२. छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ १२३ ॥ (३४०७)**

**निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते । यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् । निष्टर्क्य इति—'कृती छेदने' (धा० पा० १४३६) इत्यस्मान्निस्पूर्वात्क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते । 'निष्टर्क्यं चिन्वीत पशुकामः' ( ऐ० आ० ५.१.३ )। देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घः, तुगभावश्च—देवहूयः ( शत० ब्रा० २.१.३.२ )। प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्—प्रणीयः ( शत० ब्रा० ३.१.३.१ ), उन्नीयः ( शत० ब्रा० ३.५.१६.१२ )। उत्पूर्वाच्छिषेः क्यप्—उच्छिष्यम् ( मै० सं० ३.९.२ )। 'मृङ् प्राणत्यागे' ( धा० पा० १४०४ ), 'स्तृञ् आच्छादने' ( धा० पा० १२५३ )—आभ्यां यत्प्रत्ययः । मर्यः ( तै० आ० १.३.२ )। स्तर्या ( शत० ब्रा० २.१.२.१० )। स्त्रियामेव निपातनम् । 'ध्वृ हूर्छने' ( धा० पा०**

**न्यासः**

ण्यतमिच्छन्ति, तेषा यद्यप्यमावस्येति रूपं सिध्यति तथापि यत्प्रत्ययपक्षे स्वरो न सिध्यति; 'यतोऽनावः' इति स्वरितत्वापवाद आद्युद.त्तत्वं वस्याशब्दस्य प्राप्नोति । अमाशब्देनापि समासे कृते 'गतिकारकोपपदात् कृत्' इति कृदन्तस्योत्तरपदस्य प्रकृतिस्वरे कृते वस्याशब्द एवाद्युदात्तः स्यात्, अन्तस्वरितश्चेष्यते । एकवृत्तितापि पूर्वोक्ता न सिध्यति; शब्दान्तरत्वात् । एको हि यत्प्रत्ययान्तः अपरश्च ण्यत्प्रत्ययान्त इति ण्यति वृद्ध्यभावो निपात्यते ॥ १२२ ॥

**छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।। क्यपि प्राप्त इति ।** ऋदुपधत्वात् । **आद्यन्तविपर्यय इति** ककारस्यादेरन्तत्वं निपात्यते । तकारस्यान्तस्यादित्वम् । **ह्वयतेरित्यादि ।** यदा'ह्वेञ् स्पर्द्धायाम्' इत्यस्मात् क्यप् तदा यजादित्वात् संप्रसारणम्, 'हलः' इति दीर्घः । यदा तु 'हु दाने' इत्यस्मात्, तदा तुगभावो निपात्यते दीर्घत्वञ्च । देवा हूयन्तेऽस्मिन्निति देवहूयः । **उच्छिष्य इति ।** 'शिष्लृ विशरणे' । 'शश्छोऽटि' इति छकारः, 'स्तोः श्चुना श्चुः' इति श्चुत्वम् । **आभ्यां यत्प्रत्यय इति ।** ऋकारान्तत्वाण्ण्यति प्राप्ते । **स्त्रियामेव निपातनमिति ।** अन्यथा स्तर्येति स्त्रिलिङ्गनिर्देशोऽपार्थकः स्यात् ।

**पदमञ्जरी**

सिद्ध्यति । व्याख्यातः स्वरः ॥ १२२ ॥

**छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ तुगभावश्चेति ।** यदा जुहोतेस्तदेति भावः । **उपचाय्यपृडमिति ।** 'मृड सुखे' 'पृड च'

**भावबोधिनी**

वार्त्तिक में 'अमावसोः' 'ण्यतोः' द्विवचन का प्रयोग दोनों शब्दरूपों को ध्यान में रख कर किया गया है ॥ १२२ ॥

वेदविषय में 'निष्टर्क्य' आदि शब्द निपातित होते हैं। इनमें जो लक्षण = सूत्र से उपपन्न नहीं हो पाता है वह सब निपातन से सिद्ध किया जाता है। उदाहरण—(१) निष्टर्क्य 'छेदन अर्थ में कृती' धातु से 'निस्' पूर्व में लगा कर ("ऋदुपधाच्चाक्लृपि०" से ) प्रत्यय के प्राप्त रहते ण्यत् किया जाता है निस्कृत् + य, आदि और अन्त व्यञ्जन वर्णों का विपर्यय करने पर निस्तृक् + य, स् का षत्व, ष्टुत्व ऋ का गुण रपर—निष्टर्क्यः 'निष्टर्क्यं चिन्वीत पशुकामः ।' (२) देवहूयः—देव शब्द उपपद मान कर 'ह्वेञ्' अथवा 'हु' धातु से क्यप्, दीर्घ और तुक् का अभाव । [ जब ह्वेञ् है तब 'व्' का सम्प्रसारण, ए का पूर्वरूप, "हलः" से 'उ' का दीर्घ होता है। जब 'हु' है तब पित् मान कर प्राप्त तुक् का अभाव और 'उ' का दीर्घ निपातित होता है । देवाः हूयन्ते अस्मिन् - यह विग्रह है। 'ह्वे' से बनने पर जिसमें देव बुलाये जाते हैं—यह अर्थ है। 'हु' से बनने पर 'देवेभ्यः हूयते अत्र' यह अर्थ करना चाहिये ।] (३) प्रणीयः—'प्र' पूर्वक और 'नी' से क्यप् (४) उन्नीयः—उत् पूर्वक 'नी' से क्यप्, । (५) उच्छिष्यः—उत् पूर्वक 'शिष्' से क्यप् = उत् शिष्य । [ 'शश्छोऽटि' से 'श्' का 'छ्' और श्चुत्व करने पर 'त्' का 'च्'—उच्छिष्यः । ]

९४० ), ध्वर्यः । खनेर्यत्-खन्या ( तै० सं० ७.४.१३.१ )। एतस्मादेव ण्यत्—खान्यः। देवशब्द उपपदे यजेर्यत्-देवयज्या ( ऋ० १०.३०,२१ )। स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात्पृच्छेः क्यप्-आपृच्छ्यः ( ऋ० १.६०.२ )। प्रतिपूर्वात्सीव्यतेः क्यप् षत्वं च प्रतिषीव्यः ( मा० श्रौ० २.२.२,३५ )। ब्रह्मण्युपपदे वदेर्ण्यद्-ब्रह्मवाद्यम् ( तै० सं० २.५.८.३ )। भवतेः स्तौतेश्च ण्यत् आवादेशश्च भवति—भाव्यम् (अथर्व० १३.१.५४)। स्ताव्यः। उपपूर्वस्य चिनोतेर्ण्यदायादेशौ—उपचाय्यपृडम् हिरण्यदक्षिणा का० ( सं० ११.१ )। पृडे चोत्तरपदे निपातनमेतत्।

❀ हिरण्य इति वक्तव्यम् ❀ ( म० भा० ३.१ १२३ वा० ४ )। हिरण्यादन्यत्र उपचेयपृडमेव।

निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात्।
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ॥

न्यासः

आपृच्छ्य इति। ग्रह्यादिना संप्रसारणम्। प्रतिषीव्य इति। 'हलि च' इति दीर्घः। वदेर्ण्यदिति। 'वदः सुपि क्यप् च' इति क्यपि यति च प्राप्ते। भाव्यः, स्ताव्य इति। भवतेः स्तौतेश्च यदपवादो ण्यत्।

निष्टर्क्य इत्यादि। सुखोपग्रहणार्थौ संग्रहश्लोकौ। व्यत्ययमिति। आद्यन्तविपर्ययमित्यर्थः। ण्यदेकस्मादिति। कर्मणि ल्यब्लोप एषा पञ्चमी। एकं निष्टर्क्यशब्दमुद्दिश्य ण्यद् भवति। एकं शब्दं साधयितुं ण्यद् भवतीति यावत्। चतुर्भ्यः क्यबिति। तादर्थ्य एषा चतुर्थी। ये देवहूयादयोऽनन्तराश्चत्वारस्तदर्थं तत्सिद्ध्यर्थं क्यब् भवतीति। चतुर्भ्यश्च यतो विधिरिति। एषापि तादर्थ्य एव चतुर्थी। तदनन्तरा ये चत्वारो मर्यादयः खान्यपर्यन्तास्तदर्थम्=तत्सिद्ध्यर्थं यतो विधिर्भवति। ण्यदेकस्मादिति। एषापि ल्यब्लोपे कर्मणि पञ्चमी। खान्यमेकं शब्दमुद्दिश्य ण्यद् भवति। खान्यशब्दं साधयितुमित्यर्थः। चशब्दश्चेति। एकस्मादित्यनुकर्षणार्थः।

पदमञ्जरी

( धा० पा० १३२७, २८ ) इत्येतस्मात् 'इगुपधलक्षणः कः, उपचाय्यं च तत्पृडं चेति' कर्मधारयः। हिरण्ये चेति वक्तव्यमिति। हिरण्येऽभिधेय इत्यर्थः। व्यत्ययमिति। आद्यन्तविपर्यास इत्यर्थः।

भावबोधिनी

(६) मर्यः—'प्राणत्याग अर्थ में मृङ् है' इससे यत् प्रत्यय, ऋ का गुण रपर–मर्यः। (७) स्तर्या—'आच्छादन अर्थ में स्तृञ्' है, इससे यत् ऋ का गुण रपर—स्तर्या। यह स्त्रीलिङ्ग में हो निपातित होता है। [ अतः टाप् होता है—स्तर्या। ] (८) ध्वर्यः—'हूर्च्छन' अर्थ में ध्वृ धातु है, इससे यत्, ऋ का गुण, रपर—ध्वर्यः। (९) खन्यः—'खन्' धातु से यत्। (१०) खान्यः—खन् से ही ण्यत् करने पर उपधावृद्धि-खान्यः। (११) देवयज्या—देवशब्द उपपद रहते 'यज्' से यत् प्रत्यय स्त्रीलिङ्ग में निपातित किया जाता है। (१२) आपृच्छ्यः—आङ् पूर्वक 'प्रच्छ' से क्यप्, [ कित् मान कर "ग्रहिज्या" आदि सूत्र से रेफ का सम्प्रसारण, अ का पूर्वरूप-आपृच्छ्यः। (१३) प्रतिषीव्यः 'प्रति' पूर्वक 'सिव्' ( षीवु ) से क्यप् और षत्व ( तथा "हलि च" से दीर्घ ) होता है। (१४) ब्रह्मवाद्यः—'ब्रह्मणि' उपपद 'वद' धातु से ण्यत्, ( उपधा-वृद्धि )। (१५) भाव्य—'भू' से ण्यत्, [ ऊ की वृद्धि, 'औ' का आव् आदेश ]—भाव्यः (१६) स्ताव्यः—'स्तु' ण्यत्, वृद्धि और आव् आदेश। (१७) उपचाय्यपृडम्—'उप' पूर्वक 'चि' धातु से ण्यत् प्रत्यय और आय् आदेश—उपचाय्+य। यह 'पृड' को उत्तर पद मानकर निपातित होता है—उपचाय्यपृडम्।

❀ हिरण्य अर्थ में 'उपचाय्यपृडम्' होता है—ऐसा कहना चाहिये। ❀ अतः अन्य अर्थ में [ यत् करने पर ] उपचेयपृडम् बनता है।

[ इस सूत्र के भाष्य में किसी वार्तिककार का मत उद्धृत है। वही काशिकाकार ने भी लिख दिया है— ]

निष्टर्क्य—इसमें [ कृत् के आदि और अन्त व्यजनों का ] व्यत्यय = विपर्यय और निस् के स् का ष् निपातन से होता है। उपचाय्य् इसमें ण्यत् प्रत्यय और आय् आदेश इनको निपातन से किया जाता है।

**ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।**
**ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः॥ ( म० भा० ३.१.१२३ श्लो० वा० २, ३)**

## ७४३. ऋहलोर्ण्यत् ॥ १२४ ॥ ( २८७२ )

**पञ्चम्यर्थे षष्ठी, ऋवर्णान्ताद्धातोर्हलन्ताच्च ण्यत्प्रत्ययो भवति। कार्यम्। हार्यम्। धार्यम्। वाक्यम्। पाक्यम्॥**

**न्यासः**

देवयज्याशब्दमुद्दिश्य यशब्दो भवति। **द्वौ क्यपाविति**। आपृच्छ्यप्रतिषीव्यशब्दयोः सिद्धये द्वौ क्यपो भवतः। **ण्यद्विधिश्चतुरिति**। चतुरो वारान् ण्यद् भवतीत्यर्थः। स पुनः परिशिष्टेषु ब्रह्मवाद्यादिषु।

अथ वा—**ण्यदेकस्मादित्येकस्माद्** धातोरित्यर्थः। **चतुर्भ्यः क्यबिति**। चतुर्भ्यो धातुभ्यः क्यब् भवतीति। ननु च नयतिरेक एव धातुः, तत् कथं चतुर्भ्यो धातुभ्य इत्युच्यते? उपसर्गभेदादेकस्यापि भेदो विवक्षित इत्यदोषः। **चतुर्भ्यश्च यतो विधिरिति**। तदनन्तरेभ्यश्चतुर्भ्यो धातुभ्यो यतो विधिरित्यर्थः। **ण्यदेकस्मादिति**। खन एकस्माद्धातोर्ण्यद्विधिः। **यशब्दश्चेति**। देवयज्याशब्द एकस्माद्धातोर्यशब्दो भवति। **द्वौ क्यपाविति**। आपृच्छ्यप्रतिषीव्यशब्दयोः सिद्धय आप्रच्छिप्रतिषिवशब्दाभ्यां द्वौ क्यपौ भवतः॥ १२३॥

**ऋहलोर्ण्यत्॥ पञ्चम्यर्थे षष्ठीति**। 'व्यत्ययो बहुलम्' इत्यनेन। कस्याः पुनः पञ्चम्या अर्थे षष्ठी? दिग्योगलक्षणायाः। प्रत्ययविधौ हि 'परश्च' इति सम्बन्धात् पञ्चम्या भाव्यम्॥ १२४॥

**पदमञ्जरी**

**ण्यदेकस्मादिति**। एकस्माद्धातोर्ण्यत्प्रत्ययो निपात्यते, तदनन्तरेषु देवहूयादिषु चतुर्षु चतुर्भ्यो धातुभ्यः क्यब् निपात्यते, उपसर्गभेदान्नयतेर्भेदः। **द्वौ क्यपाविति**। द्वाभ्यां धातुभ्यां द्वौ क्यपौ निपात्येते इत्यर्थः। **ण्यद्विधिश्चतुरिति**। सुजन्तमेतत्, क्रियाभ्यावृत्तिवाचिचतुरो वा ण्यद्विधीयत इत्यर्थः॥ १२३॥

**ऋहलोर्ण्यत्॥ ऋवर्णान्तादिति**। अर्त्तेस्तु ग्रहणं न भवति; हला साहचर्यात्, परं कार्यमिति निर्देशाद्, 'ईडवन्दवृशंसदुहां ण्यतः' इति लिङ्गाच्च॥ १२४॥

**भावबोधिनी**

एक 'निष्टक्र्य' को उद्देश्य मान कर ण्यत् होता है। [ देवहूयः, प्रणीयः, उन्नीयः उच्छिष्यः—इन चार से क्यप् होता है। [ मर्यः, स्तर्या, ध्वन्यः, खन्यः-इन ] चार से यत् की निपातन-विधि होती है। एक 'खान्यः' से ण्यत् होता है। देवयज्या—इससे 'य' होता है। आपृच्छ्यः और प्रतिषीव्यः—इन दो से क्यप् होते हैं। ब्रह्मवाद्यः, भाव्यः, स्ताव्यः, उपचाय्यपृडम्—इन चार से 'ण्यत्' का निपातन होता है।

[ इस द्वितीय श्लोक में सभी सत्तरह शब्दों के प्रत्यय का उल्लेख कर दिया गया है। 'चतुः' यह क्रियाभ्यावृत्ति में सुच् प्रत्ययान्त है अतः 'चार बार' यह अर्थ है, अर्थात् चार शब्दों से ण्यत् निपातित होता है॥ १२३॥

[ सूत्र में ] पञ्चमी के अर्थ में षष्ठी है, ऋकारान्त और हलन्त धातु से ण्यत् प्रत्यय होता है। उदाहरण—कार्यम्, हार्यम, धार्यम्। [ कृ + ण्यत् हृ + ण्यत्, धृ + ण्यत्, ऋ की वृद्धि और रपर ] वाक्यम्, पाक्यम्। [ वच् + ण्यत्, पच् + ण्यत्, उपधावृद्धि "चजोः कुः घिण्ण्यतोः" सूत्र से च् का क्। यह सामान्य सूत्र है। भाव और कर्म में ण्यत् प्रत्यय करता है। ]॥ १२४॥

७४४. ओरावश्यके ॥ १२५ ॥ ( २८८६ )

**अवश्यंभावः = आवश्यकम् । उवर्णान्ताद्धातोर्ण्यत् प्रत्ययो भवत्यावश्यके द्योत्ये । यतोऽपवादः । लाव्यम् । पाव्यम् । आवश्यके इति किम् ? लव्यम् ।**

**'आवश्यके द्योत्ये' इति चेत्स्वरसमासानुपपत्तिः - अवश्यलाव्यम्, अवश्यपाव्यमिति ? नैष दोषः, मयूरव्यंसकादित्वात् ( २.१.७२ ) समासः, उत्तरपदप्रकृतिस्वरे च यत्नः करिष्यते ॥**

**न्यासः**

**ओरावश्यके ॥ अवश्यम्भाव आवश्यकमिति** । मनोज्ञादित्वाद् वुञ् । एतदेव ज्ञापकम्—अव्ययानां भमात्रे टिलोपो भवतीति । अत्र द्वयं सम्भाव्यते—उपपदत्वम्, आवश्यक उपपद इति; उपधिकत्वञ्च, आवश्यके द्योत्य इति । तत्र यद्येवं ज्ञायते—आवश्यक उपपद इति, तदोपपदरहितादावश्यके द्योत्ये न स्यात् । **लाव्यं पाव्यमिति** ।

आवश्यके द्योत्य इत्येवं विज्ञायत इत्याह—**आवश्यके द्योत्ये इति** । एतच्च प्रत्यासत्त्या लभ्यते । उपाधिर्हि प्रत्ययान्तद्योत्यत्वादन्तरङ्गः, उपपदेन च सम्बन्धो बहिरङ्गः, तदर्थस्य पदान्तरवाच्यत्वात् । **स्वरसमासानुपपत्तिरिति** । उपपदे ह्यावश्यके विज्ञायमाने 'उपपदमतिङ्' इति समासो भवति । तस्मिंश्च सति 'गतिकारकोपपदात् कृत्' इत्युपपदाश्रय उत्तरपदप्रकृतिस्वरत्वम्, न तित्स्वरो भवति । द्योत्यपक्षे तु समासो न स्यात्; लक्षणाभावात् । अथापि कथञ्चिदुपपदसमासादन्यः समासः स्यात् ? एवमप्युपपदसमासाश्रयः स्वरो न स्यात्, ततश्च तित्स्वरो न लभ्येत, समासान्तोदात्तत्वं हि स्यात् । **अवश्यलाव्यमिति** । 'लुम्पेदवश्यमः कृत्ये' इति मलोपः । **मयूरव्यंसकादित्वादित्यादि** । मयूरव्यंसकादेराकृतिगणत्वादवश्यलाव्यप्रभृतयस्तत्र द्रष्टव्या इति दर्शयति । स्वरः कथमित्याह— **उत्तरपदप्रकृतिस्वरत्वे चेत्यादि** । तत्रायं यत्नः—'गतिकारकोपपदात् कृत्' इत्यत्र 'षट् च काण्डादीनि' इत्यत-

**पदमञ्जरी**

**ओरावश्यके ॥ अवश्यं भाव आवश्यकमिति** । मनोज्ञादित्वाद् वुञ्, अव्ययानां भमात्रे टिलोपः । किं पुनरवश्यार्थवाचिन्युपपदे प्रत्यये ? आहोस्विदावश्यके द्योत्ये ? तत्राद्ये पक्षे उपपदरहितात्प्रत्ययो न स्यात्—लाव्यं पाव्यमिति, तस्माद् द्वितीयः पक्ष आश्रीयत इत्याह—**आवश्यके द्योत्य इति** ।

**स्वरसमासानुपपत्तिरिति** । उपपदपक्षे उपपदसमासो लभ्यते, गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वं च; द्योत्यपक्षे त्वेतदुभयमपि न सिद्ध्यतीत्यर्थः । **अवश्यलाव्यमिति** । 'लुम्पेदवश्यमः कृत्ये' इति मलोपः । द्योतितार्थस्यापि क्वचित्प्रयोगो दृश्यते, लाघवं प्रत्यनादरात् । न त्वेतदत्र वक्तव्यम्; 'लुम्पेदवश्यमः कृत्ये' इति वचनादेव द्योतिते अवश्यमः प्रयोग इति तस्यावश्यकर्त्तव्यादौ चरितार्थत्वात् । **मयूरव्यंसकादित्वादिति** । तस्याकृतिगणत्वादिति भावः । **उत्तरपदप्रकृतिस्वरत्वे चेति** । मयूरव्यंसकादिनिपातनादेव स्वरोऽपि भविष्यतीत्यपि

**भावबोधिनी**

अवश्यंभावः ( = अवश्य होना ) = आवश्यक । आवश्यक = अवश्य होना द्योत्य रहने पर उकारान्त धातु से ण्यत् प्रत्यय होता है । यह [ 'अचो यत्' से प्राप्त ] यत् का अपवाद है । उदा०—लाव्यम् । पाव्यम् । [ लू + ण्यत्, पू + ण्यत्, ''अचो ञ्णिति''—से ऊ की वृद्धि, ''वान्तो यि प्रत्यये'' से औ का आव् । अवश्य काटने योग्य, अवश्य पवित्र करने योग्य । ] आवश्यक—अवश्य होना—इसका क्या प्रयोजन है ? लव्यम् । [ लू + यत्, गुण, अवादेश । यहाँ सामान्य भाव अर्थ है । ]

'आवश्यक द्योत्य रहने पर' यदि ऐसा कहा जाता है तो स्वर और समास की अनुपपत्ति होती है—अवश्यलाव्यम् अवश्यपाव्यम् ? [ भाव यह है कि यदि 'आवश्यक' को उपपद माना जाता है तब ''उपपदमतिङ्'' से उपपद समास होता है और ''गतिकारकोपपदात् कृत्'' सूत्र से उपपद को मान कर होने वाला उत्तरपद का प्रकृतिस्वर होता है, प्रत्यय को मान कर होने वाला तित् स्वर नहीं होता है । यदि द्योत्य माना जाता है तब ये दोनों कार्य नहीं हो सकेगें ? इस शंका का समाधान यह है—] यहाँ ''मयूरव्यंसकादयश्च'' ( पा. सू. २.१.७२ ) से समास होता है, और उत्तरपद के प्रकृतिस्वर के लिये यत्न किया जायगा अर्थात् वह भी निपातन से कर लिया जायगा । [ अवश्यलाव्यम् आदि में ''लुम्पेदवश्यमः कृत्ये'' इस वचन के आधार पर 'म्' का लोप हो जाने से उसका श्रवण नहीं होता है । ] ॥ १२५ ॥

**७४५. आसुयुवपिरपिलपित्रपिचमश्च ॥ १२६ ॥ (२८८७)**

आङ्पूर्वात्सुनोतेः यु, वपि, रपि, लपि, त्रपि, चम्–इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति । यतोऽपवादः । आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । त्राप्यम् । आचाम्यम् । अनुक्तसमुच्चयार्थश्चकारः । दभि–दाभ्यम् ॥

**७४६. आनाय्योऽनित्ये ॥ १२७ ॥ (२८८८)**

'आनाय्यः' इति निपात्यते, अनित्येऽभिधेये । नयतेराङ्पूर्वाण्ण्यदायादेशौ निपात्येते । आनाय्यो

**न्यासः**

श्चकारोऽनुवर्त्तिष्यते, स चानुक्तसमुच्चयार्थः । तेनावश्यलाव्यमित्यादावपि प्रकृतिस्वरो भवतीति ॥ १२५ ॥

**आसुयुवपिरपिलपित्रपिचमश्च** ॥ **यतोऽपवाद इति** । 'षुञ् अभिषवे', 'यु मिश्रणे'—अनयोरजन्तत्वात् । 'डुवप बीजतन्तुसन्ताने', 'रप लप व्यक्तायां वाचि', 'त्रपूष् लज्जायाम्', 'चमु अदने'—एषामदुपधत्वात् पवर्गान्तित्वात् । **दाभ्यमिति** । दभिर्धातुष्वपठित एव प्रकृत्यन्तरमस्ति चुलुम्पवत् ॥ १२६ ॥

**आनाय्योऽनित्ये** ॥ **ण्यन्निपात्यत इति** । यति प्राप्ते । यद्यनित्ये निपात्यते घटादिष्वप्यतिप्रसङ्गः, तेषाम-

**पदमञ्जरी**

शक्यं वक्तुम् ॥ १२५ ॥

**आसुयुवपिरपिलपित्रपिचमश्च** ॥ युप्रभृतीनां द्वन्द्वेन आसुनोतेर्द्वन्द्व इत्याहुः । सुनोतेरभिसम्बन्धस्तदाह—**आङ्पूर्वात्सुनोतेरिति** । 'षु प्रसवैश्वर्ययोः' ( धा० पा० ९४१ ) इत्यस्य त्वग्रहणम् 'कृत्यल्युटो बहुलम्' इति । 'यु' इति 'युमिश्रणे' ( धा पा० १०३३ ) इत्यस्य ग्रहणम् । 'युञ् बन्धने' ( धा० पा० १४७९ ) इत्यस्य तु सानुबन्धकत्वादग्रहणम् । **यतोऽपवाद इति** । 'अचो यत्' 'पोरदुपधात्' इति यथायोगं प्राप्तस्य । **दाभ्यमिति** । दभेर्धातुष्वपठितस्यापि चुरादौ 'बहुलमेतन्निदर्शनम्' इति वचनाच्छिष्टप्रयोगाच्च क्षपयत्यर्थयत्यवधीरयत्यादिवद्धातुत्वं द्रष्टव्यम् ॥ १२६ ॥

**आनाय्योऽनित्ये** ॥ **रूढिरेषेति** । तेन घटादावतिप्रसङ्गो नोद्भावनीय इति । निपातनाच्च रूढित्वम् । उक्तं

**भावबोधिनी**

आङ्पूर्वक 'सु' [ = प्रसव तथा ऐश्वर्य अर्थ वाली ], यु, वप्, रप्, लप्, त्रप् और चम्—इनसे ण्यत् प्रत्यय होता है। [ "अचो यत्" और "पोरदुपधात्" सूत्रों से प्राप्त ] 'यत्' का अपवाद है। उदा० आसाव्यम् = [ आङ् पूर्वक षु = सु + ण्यत्, वृद्धि आव् आदेश—आ साव् यम् । याव्यम् = [ यु + ण्यत् ], वाप्यम् [ वप् + ण्यत् ], राप्यम् = [ रप् + ण्यत् ], लाप्यम् [ लप् + ण्यत् ], त्राप्यम् [ त्रप् + ण्यत् ], आचाम्यम् [ आचम् + ण्यत् ] अनुक्त के समुच्चय के लिये 'च' है, उदा० दभ् + ण्यत्, दाभ्यम् । [ आसाव्यम् = पैदा करने योग्य, याव्यम् = मिलाने योग्य, वाप्यम् = बीज बोने योग्य, राप्यम् = बोलने योग्य, लाप्यम् = बोलने योग्य, त्राप्यम् = लज्जा करने योग्य, आचाम्यम् = आचमन करने योग्य । ]

**विमर्श**—सु तथा यु में 'अचो यत्' से यत् की प्राप्ति में बाध करके ण्यत् होता है और 'अचो ञ्णिति' से वृद्धि करके 'वान्तो यि प्रत्यये "से आय् होता है। वप्, रप्, लप्, त्रप् और चम्—इनमें अदुपधा और पवर्गान्त होने से "पोरदुपधात्" से प्राप्त यत् का बाध करके ण्यत् होता है। "अत उपधायाः" से उपधा की वृद्धि होती है।

'दभि' यह धातु पाणिनीय धातुपाठ में नहीं है। इसको शिष्ट प्रयोग तथा "बहुलम् एतन्निदर्शनम्" के अनुसार चुरादिगण में मान लेना चाहिये ॥ १२६ ॥

'अनित्य' अर्थ वाच्य रहने पर 'आनाय्यः' यह निपातित होता है। आङ् पूर्वक 'नी' धातु से ण्यत् प्रत्यय और

**दक्षिणाग्निः । रूढिरेषा, तस्मादनित्यविशेषे दक्षिणाग्नावेवावतिष्ठते । तस्य चानित्यत्वं नित्यमजागरणात् । यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सहैकयोनिस्तत्रैतन्निपातनम्, न दक्षिणाग्निमात्रे; तस्य हि योनिविकल्प्यते —'वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वा' ( पार० गृ० १.२.३ ) इति ॥**

**आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेत् । ( म० भा० वा० २ )**
**एकयोनौ च तं विद्यादानेयो ह्यन्यथा भवेत् ॥ ( म० भा० वा० ३ )**

**न्यासः**

नित्यत्वादित्याह—**रूढिरित्यादि** । सत्यपि प्रवृत्तिनिमित्तत्वे रूढ्या नियतविषयत्वाच् शब्दा विशिष्ट एवार्थे वर्त्तन्ते, नाविशिष्टे, मयूरादिशब्दवत् । न हि मह्यां रौतीति सर्वो मयूर इत्युच्यते, नापि गच्छतीति सर्वो गौरित्युच्यते, किं तर्हि ? विशिष्ट एव प्राणी । तस्माद्रूढिशब्दाद् दक्षिणाग्नावेव वर्त्तते, न घटादिषु । **नित्यमजागरणादिति** । सततमज्वलनादित्यर्थः । ज्वलनमेव हि तस्य जागरणम् । दक्षिणाग्नावपि विशिष्ट एवावतिष्ठते न सर्वत्रेति दर्शयितुमाह - **यश्चेत्यादि** । किं पुनस्तस्य योनिविकल्पोऽस्ति, येनैवं विशिष्यते ? इत्याह—**तस्य हीत्यादि** । योनिः=कारणमित्यर्थः । **वैश्यकुलादित्यादिना** योनिविकल्पं दर्शयति ।

**आनाय्योऽनित्य इति चेदिति** । घटादिष्वपि प्राप्नोतीति शेषः । **दक्षिणाग्नौ कृतं भवेदिति** । 'आनाय्यः इत्येतस्मिन्निपातनं दक्षिणाग्नावेव विशिष्टे कृतं भवेत्, नान्यत्र । लिङ् सम्भावनायाम् । एतत् सम्भाव्यते, नान्यथेत्यर्थः । **एकयोनौ च तं विद्यादिति** । तमानाय्यशब्दमाहवनीयेन य एकयोनिर्दक्षिणाग्निस्तत्र विद्याज्जानीयादित्यर्थः । च शब्दोऽवधारणे—एकयोनावेव । **आनेयो ह्यन्यथा भवेदिति** । घटादावनित्ये दक्षिणाग्नौ चाहवनीयेन भिन्नयोनौ 'अचो यत्' इति यति कृत आनेन इत्येवं भवति ॥ १२७ ॥

**पदमञ्जरी**

हि—रूढ्यर्थं च निपातनमिति । कुतः पुनरनित्यत्वमित्यत्राह—**तस्य चानित्यत्वमिति** । **नित्यमजागरणादिति** । सततमज्वलनादित्यर्थः, ज्वलनमेव हि तस्य जागरणम् । दक्षिणाग्नावपि विशिष्ट एवेष्यते, न सर्वत्रैवेति दर्शयति —**यश्चेति** । योनिः = उत्पत्तिस्थानम् । **वैश्यकुलादित्यादिना** योनिविकल्पं दर्शयति ।

**आनाय्योऽनित्य इति चेदिति** । घटादिष्वपि प्रसङ्ग इति शेषः । **भवेदिति** । सम्भावने लिङ् । निपातनादेव सम्भाव्यत इत्यर्थः । **एकयोनाविति** । आहवनीयेन । **आनेयो ह्यन्यथा भवेदिति** । घटादावनित्ये भिन्नयोनौ च दक्षिणाग्नौ, 'अचो यत्' इति यदेव भवतीत्यर्थः ॥ १२७ ॥

**भावबोधिनी**

आय् आदेश दोनों निपातित होते हैं । उदा० आनाय्यः दक्षिणाग्निः । यह रूढि है, अतः अनित्यविशेष दक्षिणाग्नि अर्थ में ही प्रयुक्त होता है । यह अग्नि अनित्य इस लिये है क्योंकि नित्य जागरण नहीं होता है - सदैव नहीं जलती है । जो दक्षिणाग्नि गार्हपत्य से लायी जाती है वह आहवनीय अग्नि के समान एककारणवाली है [ वह अनित्य है ] उसी के विषय में यह 'आनाय्यः' शब्द निपातित होता है न कि दक्षिणाग्निमात्र में । क्योंकि उस दक्षिणाग्नि के कारणों का विकल्प है—"वित्तवान् वैश्यकुल से अथवा गार्हपत्य भ्राष्ट्र=कुण्डादि से" [ अग्नि लाकर दक्षिणाग्नि जलाई जाती है । अतः केवल गार्हपत्य से लाई गयी अग्नि के विषय में ही यह होता है । अन्यत्र 'आग्नेयः' बनता है । ]

'आनाय्यः' यह यदि अनित्य पदार्थ के विषय में होगा तब तो घटादि में प्रयुक्त होगा, ऐसा यदि कहना चाहो तो नहीं कह सकते क्योंकि 'आनाय्यः' यह दक्षिणाग्नि विशिष्ट में ही निपातित होता है, सर्वत्र नहीं । इस 'आनाय्य' को वहीं समझना चाहिये जो एकयोनि = आहवनीय के समान उत्पत्तिस्थानवाला हो अन्यथा इससे भिन्न [ घटादि पदार्थ तथा आहवनीय से भिन्न उत्पत्ति-स्थान वाले दक्षिणाग्नि ] में 'आनेयः' [ =घटः, दक्षिणाग्नि ] ऐसा समझना चाहिये । [ इस लिये गार्हपत्य अग्निकुण्ड से लाकर प्रज्वलित की जाने वाली दक्षिणाग्नि सदैव नहीं जलती है, अनित्य है, उसी में 'आनाय्यः' यह प्रयोग होता है । दूसरे प्रकार की दक्षिणाग्नि तथा घटादि अन्य अनित्य पदार्थों के विषय में 'यत्' प्रत्यय करके 'आनेयः' यही होता है । ] ॥ १२७ ॥

**७४७. प्रणाय्योऽसम्मतौ ॥ १२८ ॥ (२८८९)**

**अविद्यमाना संमतिरस्मिन्नित्यसंमतिः । संमननं संमतिः = संमतता, पूजा । 'प्रणाय्यः' इति निपात्यते-ऽसंमतावभिधेये । प्रणाय्यश्चोरः ।**

**असंमताविति किम् ? प्रणेयोऽन्यः । यद्येवम्, कथमेतत्—'ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायान्तेवासिने, नान्यस्मै कस्मैचन' (छां० उप० ३.१०.५.६) इति ? संमतिरभिलाषोऽप्युच्यते, तदभावेन निष्कामतया असंमतिरन्तेवासी भवति । तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति युज्यते ॥**

**७४८. पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ ॥ (२८९०)**

**पाय्यादयः शब्दा निपात्यन्ते यथासंख्यम्; माने, हविषि, निवासे, सामिधेन्यां चाभिधेयायाम् । पाय्य**

**न्यासः**

**प्रणाय्योऽसम्मतौ** ॥ अविद्यमाना सम्मतिरित्यनेन वाक्यविशेषेण बहुव्रीहिं दर्शयंस्तत्पुरुषाशङ्कां निराकरोति—**सम्मतिः सम्मततेति** । सम्मत इति पूजित इत्युच्यते । सम्मतस्य भावः सम्मतता । एतेन सम्मतिशब्देनेह पूजिताभिधेयतेति दर्शयति ।

**यद्येवमित्यादि** । अविद्यमानपूजे चौरादौ प्रणाय्यशब्दस्यान्तेवासिनि प्रयोगो नोपपद्यते । न हि पूजाऽन्तेवासिनि न विद्यत इत्यभिप्रायः । **ब्रह्मप्रब्रूयादिति** । ब्रह्मशब्देनात्र वेद उच्यते । **सम्मतिरभिलाषोऽप्युच्यत इति** । न केवलं पूजेत्यपिशब्देन दर्शयति । **तदभावेनेति** । अभिलाषाभावेन । **निष्कामतयेति** । भवभोगाभिलाषरहिततयेत्यर्थः ॥ १२८ ॥

**पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु** ॥ **पाय्य इति** । 'आतो युक्' । **हविर्विशेषे-**

**पदमञ्जरी**

**प्रणाय्योऽसम्मतौ** ॥ असम्मताविति बहुव्रीहिरित्याह—**अविद्यमाना संमतिरस्मिन्निति** । सम्मतिश्चात्र संमननं प्रीतिविषयभावोपगमनं कर्मव्यापारो विवक्ष्यते, न संमन्तृव्यापारः; तथा सत्यसंमन्तरि निपातनप्रसङ्गात्, तस्य चानिष्टत्वादित्यभिप्रायेणाह—**संमतता संमतिरिति । संमतिरभिलाषोऽप्युच्यत इति** । भोगविषयोऽप्यादरः सम्मतिशब्देनोच्यते, तन्त्रेणेत्यर्थः ॥ १२८ ॥

**पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु** ॥ मीयतेऽनेनेति मानम्, हूयत इति हविः,

**भावबोधिनी**

अविद्यमान है असम्मति इसमें वह—'असम्मति' है । संमनन = संमतता, पूजा । 'असंमति' के अभिधेय रहने पर 'प्रणाय्यः' यह निपातित होता है । उदा० प्रणाय्यः चोरः । [ निन्दित चोर । प्र + णी + ण्यत्, वृद्धि, आय् आदेश । ]

असंमति में—इसका क्या प्रयोजन है ? प्रणेयः अन्यः । [ प्र + नी + यत्, गुण ] ।

यदि ऐसी बात है तब यह कैसे होता है ?—''पिता ज्येष्ठ पुत्र के लिये ब्रह्म = वेद कहे और प्रणाय्य अन्तेवासी के लिये, किसी दूसरे के लिये नहीं कहे ।'' यहाँ 'संमति' अभिलाष को भी कहा जाता है उसके अभाव के कारण निष्काम हो जाने से अन्तेवासी 'असंम्मति' होता है उस निष्काम, मोक्ष के लिये यत्न करने वाले प्रणाय्य अन्तेवासी के लिये वेद का उपदेश दे—यह ठीक ही है ।

**विमर्श** - संमति = सम्मान और सांसारिक भोगों में आदर । जब शिष्य को सांसारिक भोगों की आदर = अभिलाषा नहीं रह जाती है तब वहाँ भी 'असम्मति' सम्भव है । अतः 'प्रणाय्य' यह अन्तेबासी के लिये भी कहा जा सकता है ॥ १२८ ॥

पाय्य, सान्नाय्य, निकाय्य और धाय्या शब्द निपातित होते हैं यदि क्रमशः मान, हविः, निवास और सामिधेनी

**इति माङो ण्यत्प्रत्ययश्च आदेः पत्वं च निपात्यते माने । पाय्यं मानम् । मेयमन्यत् । संपूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च निपात्यते—सान्नाय्यं हविः ( तै० सं० ७.५.१०३ ) । सन्नेयमन्यत् । रूढित्वाच्च हविर्विशेषेष्ववतिष्ठते । निपूर्वाच्चिनोतेर्ण्यदायादेशावादिकुत्वं च निपात्यते - निकाय्यो निवासः । निचेयमन्यत् । धाय्येति धाञो ण्यत्प्रत्ययो निपात्यते सामिधेनी चेत्सा भवति–धाय्या सामिधेनी । धेयमन्यत् । सामिधेनीशब्द ऋग्विशेषस्य वाचकः, तत्र च धाय्येति न सर्वा सामिधेन्युच्यते, किं तर्हि ? काचिदेव । रूढिशब्दो ह्ययम् । तथा चासामिधेन्यामपि दृश्यते-'धाय्याः शंसति' 'अग्निर्नेता' 'त्वं सोमक्रतुभिः' ( ऐ० ब्रा० १२.७, पृ० ४४० ) इति ॥**

**न्यासः**

**व्यवतिष्ठत इति** । यत्रैवायं रूढस्तत्रैवावतिष्ठते । न हविर्मात्रे । **धाय्येति** । पूर्ववत् युक् । **ऋग्विशेषस्य वाचक इति** । सर्वा ऋचो न सामिधेनीशब्देनोच्यन्ते, किं तर्हि ? समिदाधानमन्त्रः । तथा हि समिदाधानमन्त्रे सामिधेनीशब्दो व्युत्पाद्यते । सामिधेन्यपि न सर्वा ऋगभिधीयते, किं तर्हि ? काचिदेवेति दर्शयन्नाह—**तत्रेत्यादि** । कथं पुनः सामान्येन निपातनं क्रियमाणं विशेषविषयं लभत इत्याह—**रूढिशब्दो ह्ययमिति** । धाय्याशब्दो रूढिशब्द ऋग्विशेषस्य वाचकः । सैवानेनोच्यते, नान्या । कथं पुनर्ज्ञायते रूढिशब्दोऽयमित्यत आह—**तथा चेत्यादि** । यदि रूढिशब्दोऽयं न स्यात् सामिधेन्यां निपातितत्वाद् धाय्याः शंसतीत्यत्र ऋग्विशेषे न दृश्येत, दृश्यते चासौ । तस्माद्

**पदमञ्जरी**

निवसत्यस्मिन्निति निवासः, समिधामाधानी ऋक् सामिधेनी । **माङो ण्यत्प्रत्यय इति** । करणे तत्र 'आतो युक् चिण्कृतोः' इति युक् । **मेयमन्यदिति** । भावकर्मणोर्यदेव भवतीत्यर्थः । **सान्नाय्यमिति** । सम्यग्नीयते होमार्थमग्निं प्रतीति कर्मणि ण्यत् । **हविर्विशेष इति** । ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति विहितयोर्दधिपयसोः । **माघस्तु** यथाश्रुतार्थग्राही हविर्मात्रे प्रायुङ्क्त—'हुतमयमवलीढे साधु सान्नाय्यमग्निः' ( ११.४१ ) इति । निचीयतेऽस्मिन्धान्यादिकमिति अधिकरणे ण्यत् । **धाय्येति** । धीयतेऽनया समिदिति करणे ण्यत्, पूर्ववद्युक् । **ऋग्विशेषस्येति** । 'प्र वो वाजा अभिद्यवः' (ऋ० ३.२७.१) इत्यादिकस्य । **किं तर्हि काचिदेवेति** । समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा 'पृथुपाजा अमर्त्य' ( ३.२७.५ ) इत्यादिका । कथं पुनरयं विशेषो लभ्यत इत्याह—**रूढिशब्दोह्ययमिति** । अत एव निपातनाश्रयणमिति भावः । रूढित्वमेव द्रढयति—**तथा चेति** । 'धाय्याः शंसति'

**भावबोधिनी**

अर्थ हों । (१) पाय्यम् —[ मीयते अनेन—इस अर्थ में ] 'माङ्' धातु से ण्यत् प्रत्यय, और आदि का 'प' आदेश होता है—पा + य [ "आतो युक् चिण् कृतोः" सूत्र से युक् = य् का आगम पाय्य ] पाय्यम् = मान । अन्य अर्थ हो तो मेयम् । [ मा + यत्, "ईद्यति" सूत्र से आ का ई, गुण । (२) सान्नाय्यम्—सम् पूर्वक 'नी' धातु से ण्यत् प्रत्यय सम् नी + य, आय् आदेश, उपसर्ग का दीर्घ निपातित होते हैं [म् का अनुस्वार, परसवर्ण—] सान्नाय्यम् = हविः । [ हूयते इति हविः = संनीयते इति सान्नाय्यम् -कर्म में ण्यत् है । ] दूसरा पदार्थ हो तो 'सन्नेयम्' बनता है । [ सम् + नी + यत्, गुण ] । रूढि होने से हविर्विशेष अर्थ में 'सान्नाय्य' का प्रयोग होता है । (३) निकाय्य—'नि' पूर्वक 'चि' धातु से ण्यत् प्रत्यय आय् आदेश और आदि वर्ण का कुत्व निपातित होता है—नि + चि + ण्यत् = नि क् आय् यः = निवासः । [ निवसति अस्मिन् इस अधिकरण में घञ् होता है । अतः निचीयतेऽस्मिन्—यह विग्रह है । ] अन्य अर्थ हो तो—निचेयम् । [ नि + चि + यत्, गुण ] (४) धाय्या—'धा' से ण्यत् प्रत्यय निपातित होता है यदि वह सामिधेनी ऋचा हो तो । धाय्या सामधेनी । [ धा + ण्यत् "आतो युक् चिण् कृतोः" से युक् आगम होता है । ] अन्य अर्थ हो तो धेयम् । [ धा + यत्, आ का ई, गुण धेयम् बनता है । ] सामिधेनी शब्द ऋचा विशेष का वाचक है, उसी में धाय्या का प्रयोग होता है, न कि सभी ऋचायें सामिधेनी कहीं जाती हैं, तो क्या ? कोई ही ऋचा सामिधेनी कहीं जाती है । यह उसी में रूढ शब्द है । इस लिये असामिधेनी में भी इसका प्रयोग देखा जाता है—"धाय्याः शंसति अग्निर्नेता त्वं सोमक्रतुभिः ।" ॥ १२९ ॥

## ७४९. क्रतौ कुण्डपाय्यसंचाय्यौ ॥ १३० ॥ (२८९१)

कुण्डपाय्य, संचाय्य–इत्येतौ शब्दौ निपात्येते क्रतावभिधेये । कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो निपात्यते, युक्च । कुण्डेन पीयतेऽस्मिन्सोम इति कुण्डपाय्यः ( ऋ० ८ १७.१३ ) क्रतुः । 'यतोऽनावः' ( ६.१.२१३ ) इति स्वरः । संपूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते । संचीयतेऽस्मिन् सोम इति—संचाय्यः क्रतुः ।

क्रताविति किम् ? कुण्डपानम् । संचेयः ॥

## ७५०. अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥ (२८९२)

परिचाय्य, उपचाय्य, समूह्य—इत्येते शब्दा निपात्यन्ते अग्नावभिधेये । पर्युपपूर्वाच्चिनोतेर्ण्यदायादेशौ

### न्यासः

रूढिशब्दोऽयमित्यवसीयते । यदि तर्ह्यसामिधेन्यामपि दृश्यते, सामिधेनीग्रहणमनर्थकं स्यात् ? नानर्थकम्; रूढिविशेषोपलक्षणार्थत्वात् ॥ १२९ ॥

**क्रतौ कुण्डपाय्यसञ्चाय्यौ** ॥ **पिबतेरिति** । 'पा पाने' । **अधिकरणे यत्प्रत्यय इति** । ल्युटि प्राप्ते । किं पुनः कारणं ण्यतं त्यक्त्वा यत्प्रत्ययान्तः कुण्डपाय्यशब्दो निपात्यते ? अत आह—**यतोऽनाव इति स्वर इति** । यत्प्रत्ययान्तत्वे ह्युत्तरपदाद्युदात्तत्वं भवति । ण्यत्प्रत्ययान्तत्वेऽन्तस्वरितत्वं स्यात् । **कुण्डपानमिति** । क्रतोरन्यत्र ल्युडेव भवति ॥ १३० ॥

**अग्नौ परिचाय्योपचाय्यसमूह्याः** ॥ **संपूर्वाद्वहेरित्यादि** । हलन्तत्वाण्ण्यत् सिद्ध एव, तस्मिंस्तु सति

### पदमञ्जरी

( ऐ० ब्रा० १२.७ ) इति ज्योतिष्टोमे मरुत्वतीये शस्त्रे विधानमेतत् । सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थमिति भावः ॥ १२९ ॥

**क्रतौ कुण्डपाय्यसंचाय्यौ** ॥ ण्यति प्रकृते यत्प्रत्ययान्तः कुण्डपाय्यशब्दो निपात्यत इत्युक्तम्, तत्र प्रयोजनमाह—**यतोऽनाव इतीति** । यदुत्तरपदस्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरेण स एव स्वरः सिद्धो भवतीत्यर्थः । ण्यति तु स्वरितत्वं स्यात् ॥ १३० ॥

**अग्नौ परिचाय्योपचाय्यसमूह्याः** ॥ **अग्नाविति** । न ज्वलने, किं तर्हि ? तदर्थइष्टकाचयनविशेषे; तत्रैव

### भावबोधिनी

क्रतु = यज्ञ अभिधेय रहने पर 'कुण्डपाय्य' तथा 'सञ्चाय्य' ये दो शब्द निपातित होते हैं । तृतीयान्त कुण्ड [ कुण्डेन ] उपपद 'पा' धातु से अधिकरण अर्थ में 'यत्' प्रत्यय निपातित होता है और युक् का आगम होता है । कुण्डेन पीयते अस्मिन् सोमः– इस अर्थ में 'कुण्डपाय्यः क्रतुः । [ कुण्डेन उपपद पा + यत्, युक् = य् आगम, उपपदसमास — कुण्डपाय्यः । ] ''यतोऽनावः'' इस सूत्र से ( उत्तरपद का आदि उदात्त ) स्वर होता है । [ ण्यत् करने पर अन्त का स्वरित होने लगता । कुण्ड से जिसमें सोम पिया जाय वह यज्ञ । ] सम् पूर्वक 'चि' धातु से ण्यत् प्रत्यय, आय् आदेश निपातित होते हैं । संचीयते अस्मिन् सोमः—इस अर्थ में सञ्चाय्यः क्रतुः । [ जिसमें सोम का संचय किया जाता है, ऐसा यज्ञ । ]

क्रतु अर्थ में—इसका क्या फल है ? कुण्डपानम् । [ क्रतु अर्थ नहीं है । अतः अधिकरण अर्थ में ल्युट् होता है । ] संचेयः । [ यहाँ ण्यत् और आय् आदेश नहीं होते हैं । ] ॥ १३० ॥

'अग्नि' अर्थ अभिधेय रहने पर—परिचाय्य, उपचाय्य और समूह्य —ये शब्द निपातित होते हैं । उदाहरण — परिचाय्यः [ परिचीयतेऽस्मिन्—इस अर्थ में ] 'परि'पूर्वक 'चि' से ण्यत् प्रत्यय [ वृद्धि ] और आय् आदेश निपातित

**निपात्येते । परिचाय्यः ( तै० सं० ५.४.११ ) । उपचाय्यः ( मै० सं० ३.४.७ ) । संपूर्वाद्वहेः संप्रसारणं दीर्घत्वं च निपात्यते । 'समूह्यं चिन्वीत पशुकामः ( तै० सं० ५.४.११ ) ।**

**अग्नाविति किम् ? परिचेयम् । उपचेयम् । संवाह्यम् ॥**

## ७५१. चित्याग्निचित्ये च ॥ १३२ ॥ (२८९३)

**चित्यशब्दोऽग्निचित्याशब्दश्च निपात्येते । चीयतेऽसौ चित्योऽग्निः । अग्निचयनमेवाग्निचित्या ( शत० ब्रा० १९ १५.७ ) । भावे यकारप्रत्ययस्तुक् च, तेनान्तोदात्तत्वं भवति । अग्नावित्येव । चेयमन्यत् ।**

## ७५२. ण्वुल्तृचौ ॥ १३३ ॥ (२८९५)

### न्यासः

संप्रसारणं न प्राप्नोति; अकित्त्वात् । ण्यतः कृतेऽपि संप्रसारणे 'हलः' इति दीर्घत्वं न प्राप्नोति; यस्मादङ्गावयवाद्धल उत्तरं यत् संप्रसारणं तदन्तस्याङ्गस्य दीर्घत्वं विधीयते; न चायमेवम्प्रकारोऽस्ति, अत उभयं निपात्यते । न संपूर्वाद्वहेः सामान्यविहितेन ण्यतैव सिध्यति । अग्नावेव वहेः संपूर्वाण्ण्यद् यथा स्यात् इह मा भूत्—संवोढव्यो ब्राह्मण इति ॥ १३१ ॥

**चित्याग्निचित्ये च ॥ तेनान्तोदात्तत्वं भवतीति ।** यप्रत्ययान्तनिपातने हि प्रत्ययस्वरेणान्तोदात्तत्वं पदस्य भवति । ण्यति तु सति तित्स्वरितत्वं भवति । तस्मात् प्रकृतं त्यक्त्वा यप्रत्ययो निपात्यत इति भावः ॥ १३२ ॥

### पदमञ्जरी

रूढत्वात् । इह संपूर्वात् 'ऊह वितर्के' ( धा० पा० ६४८ ) इत्यस्मादनेकार्थत्वाद्वहेरर्थे वर्त्तमानाद्धलन्तत्वाद् ण्यति समूह्यमिति सिद्धम् । तथा च—'समूह्यं चिन्वीत पशुकामः पशवो वै पुरुषः पशूनेवास्य तत्समूहति' ( तै० सं० ५.४.११ ) इति वह्यर्थेनोहिना ब्राह्मणे समूह्यशब्दो निरुक्तः ॥ १३१ ॥

**चित्याग्निचित्ये च ॥ चित्योऽग्निरिति ।** कर्मणि यदपवादः क्यब् निपात्यते, तेनाद्युदात्तत्वं भवति । **भावे यकारप्रत्यय इति ।** किमर्थं पुनरत्रापि क्यबेव न निपातितः, एवं हि तुग् निपात्यो न भवति, तत्राह—**तेनान्तोदात्तत्वं भवतीति । अग्नावित्येवेति ।** तच्च चित्यशब्दस्यैव विशेषणार्थम्, नाग्निचित्याशब्दस्य; तस्य

### भावबोधिनी

होते हैं परि च् आय् य=परिचाय्यः । [ 'उप' पूर्वक चि+ण्यत्, वृद्धि, आय् आदेश ] 'उपचाय्यः । 'सम्' पूर्वक 'वह्' धातु से ण्यत्, धातु का सम्प्रसारण और दीर्घत्व निपातित किया जाता है—सम् वह् + ण्यत्, सम् उह् + य, सम् ऊह् य । समूह्यं चिन्वीत पशुकामः । [ ये तीनों शब्द 'अग्नि' अर्थ में साधु हैं । जहाँ यज्ञ की अग्नि स्थापित की जाती है ऐसे स्थलविशेष के लिये इन शब्दों का प्रयोग होता है. क्योंकि इसी में रूढ़ हैं । ]

'अग्नि अर्थ में—इससे क्या फल है ? परिचेयम् । उपचेयम् । [ परि + चि + यत्, उप + चि + यत् ] संवाह्यम् [ सम् + वह् + ण्यत् ये ही रूप होते हैं ] ॥ १३१ ॥

चित्यश्च अग्निचित्या च—यह इतरेतरयोग द्वन्द्व है । ] अतः परवर्ती स्त्रीलिङ्ग द्विवचन है । ] 'अग्नि' अर्थ में 'चित्य' शब्द और 'अग्निचित्या' शब्द निपातित होते हैं । उदाहरण—चीयतेऽसौ—इस अर्थ में—चित्यः अग्निः । [ कर्म अर्थ में यत् का अपवाद क्यप् होता है, तुक् का आगम । यदि ण्यत् करें तो तुक् का भी निपातन करना पड़ता है । ] अग्निचयन ही 'अग्निचित्या' है । भाव अर्थ में 'य' प्रत्यय और तुक् आगम निपातित होते हैं । अतः प्रत्ययस्वर से अन्त उदात्त होता है । ये शब्द भी 'अग्नि' अर्थ में ही होते हैं । अन्य अर्थ में 'चेयम्' [ चि + यत् ] होता है ॥ १३२ '।

**'धातोः' इति वर्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः, कर्त्ता। हारकः, हर्त्ता। चकारः सामान्यग्रहणार्थः—'तुश्छन्दसि' ( ५.३.५९ ), 'तुरिष्ठेमेयस्सु' ( ६.४.१५४ ) इति॥**

## ७८३. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥ १३४॥ (२८९६)

**प्रत्येकमादिशब्दः संबध्यते। त्रिभ्यो गणेभ्यस्त्रयः प्रत्यया यथासंख्यं भवन्ति—नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच्। नन्दिग्रहिपचादयश्च न धातुपाठतः संनिविष्टा गृह्यन्ते, किं तर्हि? नन्दन-रमणेत्येवमादिषु प्रातिपदिकगणेषु अपोद्धृत्य ये पठ्यन्ते ते निर्दिश्यन्ते।**

**❀ नन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् ❀। नन्दनः। वाशनः। मदनः।**

**न्यासः**

**ण्वुल्तृचौ॥ चकारः सामान्यग्रहणार्थ इत्यादि।** तृज्तृनोः सामान्यग्रहणं यथा स्यादिति। असति तु तस्मिन् 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति तृनो ग्रहणं न स्यात्। अथान्तोदात्तार्थः कस्मान्न भवति? तस्य प्रत्यय-स्वरेणैव सिद्धत्वात्॥ १३३॥

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥** प्रत्यासत्त्या पचिनैवादिशब्दस्य सम्बन्धो मा विज्ञायीत्यत आह—**प्रत्येकमित्यादि।**

**नन्दिवाशीत्यादि।** 'टुनदि समृद्धौ', 'वाश्टृ शब्दे', 'मदी हर्षे', 'दुष वैकृत्ये', 'राध साध संसिद्धौ', 'शुभ

**पदमञ्जरी**

भावे निपातितत्वात्। तदेतद्दर्शितम्—**चेयमन्यदिति॥ १३२॥ १३३॥**

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥ आदिशब्दः प्रत्येकमभिसम्बद्धचत इति।** गणपाठादिति भावः। **अपोद्धृत्य ये पठ्यन्त इति।** ते गृह्यन्त इत्यन्वयः। अपोद्धृत्येति बुद्धचा पृथक्कृत्येत्यर्थः। किमर्थं पुनरपोद्धृत्य प्रत्ययविधानम्, यावता नन्दनादीनां गणपाठादेव सिद्धं साधुत्वम्? उच्यते—असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनु-पयोगाद्गणत्रयपाठोऽनार्षोऽध्यवसीयेत।

**नन्दिवाशीत्यादि।** 'टुनदि समृद्धौ' ( धा० पा० ६७ ) 'वाश्टृ शब्दे' ( ११६३ ) 'मदी हर्षे' ( १२०८ )

**भावबोधिनी**

'धातोः' [ धातु से ] इसकी अनुवृत्ति होती है। सभी धातुओं से ण्वुल् और तृच् प्रत्यय होते हैं। उदाहरण—कारकः, कर्त्ता। हारकः, हर्त्ता। 'च्' अनुबन्ध तृन् और तृच् दोनों के सामान्यरूप से ग्रहण कराने के लिये है—"तुश्छन्दसि" [ ५.३.५९ ] तृ = तृन् या तृच् जिसके अन्त में है उससे वेदविषय में अजादी दोनों प्रत्यय इष्ठन् और ईयसुन् होते हैं ] 'तुरिष्ठेमेयस्सु' ( ६.४.१५४ ) [ इष्ठन्, इमनिच्, ईयसुन् प्रत्यय परे रहते 'तृ' शब्द का लोप होता है। यदि तृच् में 'च्' अनुबन्ध नहीं होता और तृन् में अनुबन्ध होता है तो 'अनुबन्धरहित के ग्रहण में अनुबन्धसहित का ग्रहण नहीं होता है' इस नियम से उक्त दोनों सूत्रों में 'तृन्' का ग्रहण नहीं हो पाता। जब तृच् में भी 'च्' अनुबन्ध लगाया गया तब कहीं भी अनुबन्धरहित न मिलने से 'तुः' का ग्रहण व्यर्थ होकर तृच् और तृन् दोनों का ग्रहण सिद्ध कराता है ]॥ १३३॥

प्रत्येक के साथ 'आदि' शब्द का सम्बन्ध होता है। तीनों गणों से क्रमशः तीन प्रत्यय होते हैं—(१) नन्द्यादि से ल्यु, (२) ग्रहादि से णिनि, (३) पचादि से अच् प्रत्यय होते हैं। नन्दि, ग्रहि और पच आदि धातुपाठ से संनिविष्ट नहीं गृहीत होते हैं, तो क्या? नन्दन, रमण आदि रूप से प्रातिपदिक गणों में अपोद्धृत करके ( बुद्धि से अलग करके ) पढ़े गये हैं, उनका ग्रहण होता है।

❀ नन्द् ( टुनदि समृद्धौ ), वाश् ( वाश्टृ शब्दे ), मद् ( मदी हर्षे ) दुष् ( दुष वैकृत्ये ), साध् ( साध संसिद्धौ ), वृध् ( वृधु वृद्धौ ), शुभ् ( शुभ शोभार्थे ), रुच् ( रुच दीप्तौ )—इन णिजन्त धातुओं से संज्ञाविषय में ल्युट् होता है। ❀ उदाहरण—नन्दनः। [ आनन्दित कराने वाला। नन्दयति—इस अर्थ में 'नदि' इकार की इत्संज्ञा, नुम् आगम, नन्द्+ल्यु=यु, "युवोरनाकौ" ( पा. सू. ७.१.१ ) से 'यु' का अन आदेश, प्रातिपदिक संज्ञा और सु, रुत्व, विसर्ग होता है। ] वाशनः। [ वाशयति—इस अर्थ में वाश्+ल्यु=अन, शब्द कराने वाला। ] मदनः। [ मदयति—इस अर्थ में मद्+

**दूषणः । साधनः । वर्द्धनः । शोभनः । रोचनः । ❀ सहितपिदमेः संज्ञायाम् ❀ ( ग० सू० ३ ) । सहनः । तपनः । दमनः । जल्पनः । रमणः । दर्पणः । संक्रन्दनः । संकर्षणः । संहर्षणः । जनार्दनः । यवनः । मधुसूदनः । विभीषणः । लवणः, निपातनाण्णत्वम् । वित्तविनाशनः ।[1] कुलदमनः । शत्रुदमनः इति नन्द्यादिः ।**

**न्यासः**

शुम्भ शोभायाम्', 'रुच दीप्तौ'—एभ्यो धातुभ्यो ण्यन्तेभ्यः संज्ञायां ल्युर्भवति । नन्दयतीति नन्दनमित्येवमाद्युदाहरणम् **दूषणमिति** । 'दोषो णौ' इत्यूत्वम् । अण्यन्तानां त्वेषामसंज्ञायां संज्ञायां च तृजादय एव भवन्ति । ग्रह्यादीनां नन्द्यादीनाञ्च गणे पाठस्येदमेव प्रयोजनम्—संज्ञाविशिष्टविषये तेषां साधुत्वं यथा स्यात् । अन्यथा हि प्रकृतीरेव गणे पठित्वेह चादिशब्देन ता उपलक्ष्य प्रत्ययं विदध्यात् । **सहितपीत्यादि** । 'षह मर्षणे', 'तप सन्तापे', 'दमु उपशमे'—एभ्यः संज्ञायामण्यन्तेभ्यो ल्युः । **जल्पन इत्यादि** । 'जप जल्प व्यक्तायां वाचि', 'रमु क्रीडायाम्', 'दृप हर्षणमोचनयोः', 'कदि क्रदि आह्वाने रोदने च', कृष विलेखने', 'हृषु अलीके', 'अर्द हिंसायाम्', जनमर्दयतीति जनार्दनः, कर्मण्यणि प्राप्ते ल्युः । 'यु मिश्रणे', 'षूद क्षरणे' मधु' सूदयतीति मधुसूदनः । अत्रापि कर्मण्यणि प्राप्ते ल्युः । 'ञिभी भये' । विपूर्वाद 'हेतुमति च' इति णिच्, 'भियो हेतुभये षुक्' । **लवण इति** । 'लूञ् छेदने' । **निपातनाणत्वमिति** । कृतणत्वस्य गणे पाठो निपातनम् । 'णश अदर्शने' बिपूर्वः, दमु उपशमे'—द्वावप्येतौ

**पदमञ्जरी**

'दुष वैकृत्ये' ( ११८५, ७४५ ) 'राध साध संसिद्धौ' ( ११६२,६३ ) 'वृधु वृद्धौ' ( ७५९ ) 'शुभ शुम्भ शोभार्थे' ( १३२१,२१ ) 'रुच दीप्तौ' । **दूषण इति** । 'दोषो णौ' इत्यूत्वम् । **सहितपीत्यादि** । 'षह मर्षणे' ( ८५२ ) 'तप सन्तापे' ( ९८५ ) 'शमु दमु उपशमे' ( १२०१,३ ) । **जल्पन इत्यादि** । 'जल्प जप वक्तायां वाचि' ( ३९७,९८ ) । 'रमु क्रीडायाम्' ( ८५३ ), 'दृप हर्षविमोचनयोः' ( ११९६ ) 'क्रदि आह्वाने रोदने च'

**भावबोधिनी**

ल्यु = अन । कामदेव अर्थ है । ] दूषणः [ दुष् णि + ल्यु = अन, "दोषो णौ" ( पा. सू. ६.४.९० ) से दीर्घ होता है । न का ण होता है । एक राक्षस = खर + दूषण ] साधनः । [ साध् + ल्यु = अन ] । वर्द्धनः [ बढ़ाने वाला वृध् + ल्यु = अन, ऋ का गुण, रपर । ] शोभनः । [ शोभित कराने वाला शुभ् + ल्यु = अन, गुण ] रोचनः [ रुच् + ल्यु = अन, गुण । अग्नि अर्थ है । ]

❀ सह, तप् और दम—इन अणिजन्तों से भी संज्ञा अर्थ में 'ल्यु' प्रत्यय होता है । ❀ सहनः । [ सहन करने वाला 'षह मर्षणे' सह + ल्यु = यु = अन ] तपनः । [ तप् + ल्यु = अन । सूर्य । ] दमनः । [ दम् + ल्यु = अन । ऋषि का वाचक है । ]

जल्पनः । [ बहुत बोलने वाला । जल्प् + ल्यु ] रमणः । [ रमण करने वाला । रम् + ल्यु, णत्व ] दर्पण । [ हर्षित करने वाला ] शीशा । दृप् + ल्यु, गुण, रपर, णत्व ] । सङ्क्रन्दनः [ सम् क्रन्द् + ल्यु ] संहर्षणः । [ सम् हृष् + ल्यु = अन ] जनार्दनः । [ जनान् अर्दयति—इस विग्रह में जनान् उपपद अर्दि + ल्यु = अन, णिलोप, उपपदसमास, दीर्घ—जनार्दनः = विष्णु । यवनः [ यु + ल्यु = अण, गुण, अव् आदेश । मुसलमान का वाचक है । ] मधुसूदनः । [ मधुं तन्नामकं राक्षसं सूदयति—इस अर्थ में मधुम् उपपद सूदि + ल्यु = अन णिलोप, उपपद—समास । विष्णु का वाचक ] विभीषणः । [ वि + भीष् + ल्यु = अन, णत्व, रावण का भाई । ] लवणः । [ लु + ल्यु = अन, गुण, अवादेश ] निपातन से 'न' का ण । नमक । वित्तविनाशनः [ वित्तं विनाशयति - इस अर्थ में—वित्तम् उपपद वि + नाशि + ल्यु = अन, णिलोप उपपदसमास । धन का विनाश करने वाला ] कुलदमन. । [ कुलं दमयति—इसमें कुलम् उपपद दमि + ल्यु = अन, णिलोप, उपपद समास, विभक्तिलोप । कुल का दमन कराने वाला ] शत्रुदमनः [ शत्रून् दमयति—इस अर्थ में शत्रून् उपपद दमि + ल्यु = यु = अन, णिलोप उपपदसमास, विभक्तिलोप । शत्रु का दमन करने वाला । ] ये नन्दि आदि शब्द हैं ।

---

१. पदमञ्जर्यामियं पाठः, न्यासे तु 'चित्तविनाशनः' इति पाठः ।

**ग्रह । उत्सह । उद्वस । उद्भास । स्था । मन्त्र । संमर्द—ग्राही । उत्साही । उद्वासी । उद्भासी । स्थायी । मन्त्री । संमर्दी ।**

**❀ रक्षश्रुवसवपशां नौ ❀ ( ग० सू० २४ ) । निरक्षी । निश्रावी । निवासी । निवापी । निशायी । ❀ याचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम् ❀ ( ग० सू० २५ ) । अयाची । अव्याहारी । असंव्याहारी ।**

**न्यासः**

हेतुमण्णिजन्तौ । वित्तं विनाशयतीति वित्तविनाशनः । कुलं दमयतीति कुलदमनः । 'मितां ह्रस्वः' इति ह्रस्वः, कर्मण्यणि प्राप्ते ल्युः ।

**ग्रह इत्यादि** । 'ग्रह उपादाने', 'षह मर्षणे' उत्पूर्वः । 'तसु क्षेपणे', 'दसु च', दसिवत् पूर्वः । 'भस भर्त्सनदीप्त्योः' उत्पूर्वः । 'ष्ठा गतिनिवृत्तौ', 'आतो युक्' । **स्थायी** ! 'मत्रि गुप्तभाषणे', चुरादिणिजन्तः 'मृद क्षोदे' संपूर्वः संमृद्नातीति संपूर्वादेव यथा स्यात् । **रक्षश्रुवसवपशां नाविति** । 'रक्ष पालने' 'श्रु श्रवणे', 'डुवप बीजतन्तुसन्ताने', 'शो तनूकरणे'–एषां निशब्द उपपदे णिनिः । **निशायीति** पूर्ववद् युक् । **याचीत्यादि** । 'टुयाचृ याच्ञायाम्', 'हृञ् हरणे' व्याङ्पूर्वः, पुनः स एव संपूर्वः, 'वज व्रज गतौ', 'वद व्यक्तायां वाचि', 'वस निवासे'—एषां प्रतिषिद्धानां णिनिर्भवति । **प्रतिषिद्धानामिति** । प्रतिषिद्धार्थानामित्यर्थः । प्रतिषिद्धार्थता च नञ्पूर्वाणामेव

**पदमञ्जरी**

( ७१ ) । 'कृष विलेखने' ( ९९० ), 'हृषु अलीके' ( ७०९ ) । 'अर्द हिंसायाम्' ( १८२८ ), जनमर्दयतीति जनार्दनः, कर्मण्यणि प्राप्ते । एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम् । 'यु मिश्रणे' ( १०३३ ) 'षूद क्षरणे' ( ५ ) । मधुनामाऽसुरः, तं सूदयतीति मधुसूदनः । 'ञिभी भये' ( १०८४ ), णिचि 'भियो हेतुभये षुक्' । 'लूञ् छेदने' ( १४८३ ), 'णश अदर्शने' ( ११९४ ), 'दमु उपशमे' ( १२०३ ),—ण्यन्तौ, चित्तं नाशयतीति चित्तनाशनः, कुलं दमयतीति कुलदमनः ।

**ग्राहीत्यादि** । 'ग्रह उपदाने' ( १५३३ ), 'षह मर्षणे' ( ८५२ ), 'तसु उपक्षये' ( १२१२ ), 'दसु च' ( १२१३ ), 'भस भर्त्सनदीप्त्योः' ( ११०० ) । तिष्ठतेरातो युक् । 'मत्रि गुप्तभाषणे' ( १६७९ ) चुरादिः, अर्द हिंसायाम् ( १८२८ ) । **रक्षेत्यादि** । 'रक्ष पालने' ( ६५८ ), 'श्रु श्रवणे' ( ९४२ ), 'डुवप् बीजसन्ताने' ( १००३ ) 'शो तनूकरणे' ( ११४५ )—एषां निशब्द उपपदे णिनिः । **याचीत्यादि** । 'टुयाचृ याच्ञायाम्'

**भावबोधिनी**

ग्रह । उत्सह । उद्वस । उद्भास । स्था । मन्त्र । संमर्द । [ इनसे णिनि होता है । ] ग्राही । [ गृह्णाति—इस अर्थ में—ग्रह् + णिनि = इन्, उपधावृद्धि—ग्राहिन् + सु विभक्तिकार्य करने पर—ग्राही बनता है । ग्रहण करने वाला—यह अर्थ है । ]उत्साही [ उत्सह् + णिनि = इन्, उपधावृद्धि—उत्साहिन् + सु । ] उद्वासी । [ उद्वस् + णिनि ] उद्भासी । [ उद् भस् + णिनि ] स्थायी [ स्था + णिनि = इन् "आतो युक् चिण्कृतोः" ( ७.३.३३ ) से युक् = य् आगम = स्था य् इन् = स्थायिन् । ] मन्त्री । [ मन्त्र् + णिनि ] संमर्दी । [ संमर्द + णिनि ]

❀ 'नि' उपपद रहते रक्ष, श्रु, वस्, वप्, और शा = शो—इन धातुओं से णिनि प्रत्यय होता है । ❀ उदा० [ नि रक्ष् + णिनि = ] निरक्षी । [ निश्रु + णिनि, वृद्धि, आव् आदेश — ] निश्रवी । [ निवस् + णिनि, उपधावृद्धि ] निवासी । [ नि वप् + णिनि, उपधा की वृद्धि—] निवापी । [ निशो + णिनि, "आदेच उपदेशेऽशिति" ( पा. सू. ६.१.४५ ) से आत्व — नि शा + इन्, "आतो युक् चिण्कतोः" से युक् = य् का आगम -] निशायी ।

❀ प्रतिषिद्ध अर्थवाली याच्, व्याहृ, संव्याहृ, व्रज, वद और वस् धातुओं के णिनि प्रत्यय का उपसंख्यान करना चाहिये । ❀ उदा० अयाची [ न याचते—इस अर्थ में अयाच् + णिनि । न मांगने वाला ] अव्याहारी । [ न व्याहरति—इस अर्थ में अव्याहृ + णिनि । न बोलने वाला । ] असंव्याहारी । [ न संव्याहरति —इस अर्थ में असंव्याहृ +

**अव्राजी । अवादी । अवासी । ❀ अचामचित्तकर्तृकाणाम् ❀ ( ग० सू० २६ ) । प्रतिषिद्धानामित्येव । अकारी । अहारी । अविनायी । अविशायी । ❀ विशयी विषयी देशे ❀ ( ग० सू० २७ ) । विशयी, विषयी देशः । ❀ अभिभावी भूते ❀ ( ग० सू० २८ ) । अभिभावी । अपराधी । उपरोधी । परिभावी, परिभवी इति ग्रह्यादिः ।**

**न्यासः**

भवतीति नञ्पूर्वेभ्यो णिनिर्विज्ञायते । कथं पुनः प्रतिषिद्धानां प्रयोगः ? उपचारसत्तायामप्रतिषेधाददोषः । न हि मुख्यैव पदार्थानां सत्ता; किन्तूपचरितापि, यथोक्तमर्थद्वारेण पदार्थानामन्या सत्तौपचारिकीति । तत्र मुख्या या सत्ता तस्या एव प्रतिषेधः, न तु बुद्धिस्थाया औपचारिक्या इति तन्निबन्धनप्रयोगो न विरुध्यते । **अचामित्यादि ।** अजन्तानां धातूनामचित्तकर्तृकाणां प्रतिषिद्धानां णिनिर्भवति । अविद्यमानं चित्तमस्येति अचित्तः, स कर्ता येषां ते तथोक्ताः । अर्थद्वारकं चेदं विशेषणम् । अर्थस्य ह्यचित्तकर्तृकत्वात् तदभिधायिनो धातव उपचारेण तथोच्यन्ते । **विशयी विषयी देश इति ।** विशयिविषयिशब्दो देशेऽभिधेये णिनिप्रत्ययान्तौ साधू भवतः । 'शीङ् स्वप्ने', षिञ् बन्धने - एतयोर्विपूर्वयोर्णिनिः; वृद्ध्यभावश्च निपातनात् । **अभिभावी भूत इति ।** अभिभाविशब्दो भूतकाले णिनिप्रत्ययान्तः साधुर्भवति भवतेरभिपूर्वात् णिनिः । अभिभूतवानित्यभिभावी । **अपराधी, उपरोधीति ।** 'राध साध संसिद्धौ', 'रुधिर् आवरणे'—आभ्यामपोपपूर्वाभ्यां णिनिः । **परिभावी, परिभवी ।** भवतेः परिपूर्वस्य । पक्षे वृद्ध्यभावः ।

**पदमञ्जरी**

( ८६३ ), 'हृञ् हरणे' ( ८९९ ), 'व्रज गतौ' ( २५३ ) 'वद व्यक्तायां वाचि' ( १००९ ), **'वस निवासे'** ( ९४२ ) –एषां प्रतिषिद्धानां णिनिर्भवति, प्रतिषिद्धार्थानामित्यर्थः । प्रतिषिद्धार्थता च नञ्पूर्वाणां भवतीति दर्शयति । **अयाचीत्यादि ।** यद्यपि विशब्दोऽपि विगर्द्भरथिरित्यादौ प्रतिषेधे दृष्टः, याच्यादीनां तु विपूर्वाणां णिनिर्न दृश्यत इति नञ्येव णिनिर्विज्ञायते । **अचामित्यादि ।** अजन्तानां धातूनामचित्तकर्तृकाणां प्रतिषिद्धार्थानां णिनिर्भवति, न विद्यते चित्तमस्येत्यचित्तः स कर्ता येषां ते तथोक्ताः । **विशयी, विषयीति ।** 'शीङ् स्वप्ने' ( धा० पा० १०३२ ), 'षिञ् बन्धने' ( धा० पा० १४७७ ), वृद्ध्यभावो निपातनात् । **अभिभावी भूत इति ।** अभिभूतवानभिभावी । **अपराधी, अवरोधी ।** 'राध साध संसिद्धौ' ( धा० पा० ११६२,६३ ), 'रुधिर् आवरणे' ( १४३८ ) । **परिभवी, परिभावीति ।** पक्षे वृद्ध्यभावः ।

**भावबोधिनी**

णिनि । न सम्भाषण करने वाला ] अव्राजी [ न व्रजति—इस अर्थ में 'अ' व्रज् + णिनि । न जाने वाला ] । अवादी । [ न वदति—इस अर्थ में—अव्रज् + णिनि । न बोलने वाला । ] अवासी [ न वसति—इस अर्थ में—अवस् + णिनि न रहने वाला । ]

❀ प्रतिषिद्ध अर्थवाली अचित्तवान् कर्तावाली अजन्त धातु से णिनि होता है । ❀ प्रतिषिद्ध अर्थवालों का ही ग्रहण होता है । अकारी । [ न करोति—इस अर्थ में अकृ + णिनि, ऋ की वृद्धि, रपर । न करने वाला । ] अहारी । [ न हरति—इस अर्थ में अहृ + णिनि, न हरने वाला । ] अविनायी । [ न विनयति—इस अर्थ में—अविनी + णिनि, 'ई' की वृद्धि, आय् आदेश—न झुकने वाला । ] ❀ देश अर्थ अभिधेय रहने पर 'विशयी' और 'विषयी' शब्द साधु होते हैं । ❀ विशयी, विषयी देशः [ वि + शी + णिनि, वृद्धि का अभाव निपातित होने पर गुण, अय आदेश—विशय् इन् । वि + षि + णिनि, इसमें भी वृद्धि का अभाव निपातित होने पर गुण अय् आदेश—विषय् + इन् । ] ❀ भूतकाल की प्रतीति में 'अभिभावी' शब्द निपातित होता है । ❀ अभिभूतवान्—इस अर्थ में अभिभू + णिनि, वृद्धि, आव् आदेश—अभिभाव् + इन् ] अपराधी । [ अपराध् + णिनि ] उपरोधी [ उपरुध् + णिनि, पदमंजरी के अनुसार अवरोधी = अव रुध् + णिनि । ] परिभावी, परिभवी । [ परि भू + णिनि, वृद्धि, आव् आदेश—परि भाव् + इन्, पक्ष में वृद्धि का अभाव निपातित होने पर गुण, अव् आदेश होता है—परिभवी । ]—ये ग्रहि आदि हैं ।

**पच। वच। वप। वद। चल। शल। तप। पत। नदट्। भषट्। वस। गरट्। प्लवट्। चरट्। तरट्। चोरट्। ग्राहट्। जर। मर। क्षर। क्षम। सूदट्। देवट्। मोदट्। सेव। मेष। कोप। मेधा। नर्त्त। व्रण। दर्श। दंश। दम्भ। जारभरा। श्वपच। पचादिराकृतिगणः[1] ॥**

**अज्विधिः सर्वधातुभ्यः, पठ्यन्ते च पचादयः।**
**अण्बाधनार्थमेव स्यात्सिध्यन्ति श्वपचादयः ॥[2]**

**न्यासः**

**पचेत्यादि**। 'डुपचष् पाके', 'वच परिभाषणे', 'डुवप बीजतन्तुसन्ताने', 'वद व्यक्तायां वाचि', 'चल कम्पने' 'शल गतौ' 'पत्लृ गतौ'। **नदडिति**। 'नद अव्यक्ते शब्दे'। टकारानुबन्धो ङीबर्थः। **भसडिति**। 'भस भर्त्सनदीप्त्योः', अस्य च टकारो ङीबर्थः। 'प्लुङ् गतौ', 'चर गतौ', टकारो ङीबर्थः। 'गॄ निगरणे', 'मिष स्पर्द्धायाम्', 'कुप क्रोधे', 'मिह सेचने', 'तॄ प्लवनतरणयोः', 'चुर स्तेये', 'गाहू विलोडने', 'जॄष् झॄष् वयोहानौ', 'मृङ् प्राणत्यागे', 'क्षमूष् सहने' 'तुद व्यथने', 'मृद क्षोदे', 'दिवु क्रीडादौ', 'नृती गात्रविक्षेपे', 'व्रण गात्रविचूर्णने' चुरादिः, 'दृशिर् प्रेक्षणे'। डुभृञ् धारणपोषणयोः'—अस्माज्जारशब्द उपपदेऽच्। जारं बिभर्तीति **जारभरा**। पचेः शुन्युपपदे कर्मण्यणपवादोऽच्—श्वानं पचतीति **श्वपचः**। **आकृतिगण इति**। पचादिसम्बन्धिन आदिशब्दस्य

**पदमञ्जरी**

**पचेत्यादि**। 'डुपचष् पाके' (९९६)। 'वच परिभाषणे' (१०६३), डुवपिरुक्तार्थः, एवं वदिरपि। 'चल कम्पने' (८३२), 'पत्लृ गतौ' (८४५)। **नदडिति**। 'नद अव्यक्ते शब्दे' (५४)। टकारो ङीबर्थः, एवमुत्तरत्रापि। 'भष भर्त्सने' (६९५), 'प्लुङ् गतौ' (९५८), 'चर गत्यर्थः' (५५९), 'गॄ निगरणे' (१४१०), 'तॄ प्लवनतरणयोः' (१६९), 'चुर स्तेये' (१५३४), 'दिवु क्रीडादौ' (११०७), सूदिरुक्तार्थः, 'जॄष वयोहानौ' (११३०), 'मृङ् प्राणत्यागे' (१४०३), 'क्षमूष् सहने' (४४२), षिवु तन्तुसन्ताने (११०८) 'मिष स्पर्द्धायाम्' (१३५८), 'कुप क्रोधे' (१२३३), मिधृ मेधाहिंसनयोः' (८६८), 'व्रण गात्रचूर्णने' (११३७) चुरादिः, 'नृती गात्रविक्षेपे' (१११६), 'दृशिर् प्रेक्षणे' (९८८), 'सृप्लृ गतौ' (९८३)। 'डुभृञ् धारणपोषणयोः' (१०८७), जारं बिभर्तीति जारभरा। एवं श्वानं पचतीति श्वपचा, न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात्पक्षे कर्मण्यणपि भवति। **पचादिराकृतिगण इति**। तत्सम्बन्धिन आदिशब्दस्य प्रकारवचनत्वात्। तथा च

**भावबोधिनी**

पच। वच। वप। वद। चल। शल। तप। पत। नदट्। भषट्। वस। गरट्। चरट्। तरट्। चोरट्। ग्राहट्। जर। मर। क्षर। क्षय। सूदट्। देवट्। मोदट्। सेव। मेष। कोप। मेधा। नर्त। व्रण। दर्श। दंश। दम्भ। जारभरा। श्वपच। पचादिगण आकृतिगण है।

सभी धातुओं से अच् का विधान है। अण् का बाध करने के लिये और अनुबन्धों के आसंजन = लगाने के लिये 'पचादि' पढ़े गये हैं। जिससे 'श्वपचा' आदि सिद्ध होते हैं।

**विमर्श**—प्रस्तुत श्लोक काशिकाकार ने कहाँ से उद्धृत किया है, ज्ञात नहीं होता है। न्यासकार ने इसकी कोई व्याख्या नहीं की है। पदमंजरीकार ने यद्यपि व्याख्या नहीं की है परन्तु भाष्य में प्रतिपादित व्याख्यान प्रस्तुत किया है। भाष्य में यह वार्त्तिक है "अजपि सर्वधातुभ्यः" सभी धातुओं से अच् प्रत्यय होता है। तब पचादि के पाठ का क्या फल है? अनुबन्ध-आसंजन के लिये, जैसे—नदट्, चोरट्। टित् होने से "टिड्ढाणञ" से ङीप् होता है। और अपवाद के बाधन के लिये, जैसे—श्वपचः। यहाँ "कर्मण्यण्" सूत्र से अण् प्राप्त है, उसका बाध करके अच् होता है तब श्वपचा, जारभरा—आदि बनते हैं। यदि गणपाठ नहीं होता तो अण् होता है और स्त्रीलिङ्ग में ङीप् होता।

सूत्र की व्याख्या में जो नियम बीच-बीच में हैं वे सभी पाणिनीय गणपाठ में हैं। अतः उन्हें वार्त्तिक नहीं समझना चाहिये ॥ १३४ ॥

---

१. क्षर। मोरट्। क्रोध। दंश। दम्भ। एतेऽपि बहुत्रोपलभ्यन्ते।

२. श्लोकोऽयं न्यासे पदमञ्जर्यां वा न व्याख्यातः। पदमञ्जर्यां भाष्यवार्त्तिकानुसारि व्याख्यानं विहितम्।

७७४. इगुपधज्ञाप्रीकिरः कः ॥ १३५ ॥ ( २८९७ )

इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कप्रत्ययो भवति। विक्षिपः। विलिखः। बुधः। कृशः। जानातीति ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। देवसेवमेषादयः पचादौ पठितव्याः॥

७७५. आतश्चोपसर्गे ॥ १३६ ॥ ( २८९८ )

आकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे कप्रत्ययो भवति। णस्यापवादः। प्रस्थः। सुग्लः। सुम्लः॥

**न्यासः**

प्रकारार्थत्वात्। आकृतिगणत्वे चास्य चक्रधरादयः सिद्धा भवन्ति॥ १३४॥

**इगुपधज्ञाप्रीकिरः कः॥ विक्षिप इति।** कित्त्वाद् गुणाभावः। **ज्ञ इति।** 'आतो लोप इटि च' इत्याकारलोपः। **प्रिय इति।** 'प्रीञ् तर्पणे', इयङ्। **किर इति।** 'कॄ विक्षेपे', 'ॠत इद्धातोः' इतीत्त्वम्, रपरत्वम्। अथ कथं देवादयः सिध्यन्ति, यावता दिवादीनामिगुपधत्वात् के कृते दिवः, सिव इत्येवमादिना रूपेण भवितव्यम्? अत आह —**देवसेवेत्यादि।** आदिशब्दः प्रकारे॥ १३५॥

**आतश्चोपसर्गे॥ णप्रत्ययस्यापवाद इति।** 'श्याद्व्यध' इत्यादिना प्राप्तस्य। **सुग्ल इति।** 'ग्लै म्लै हर्षक्षये'॥ १३६॥

**पदमञ्जरी**

'शिवशमरिष्टस्य करे' इति कृञोऽच् प्रत्ययः कृतः। घटेश्च 'कर्मणि घटोऽठच्' इति। तथा यङन्तानां 'यङोऽचि च' इति यङोऽस्मिन्नचि लुगुक्तः। **भाष्ये** च 'अजपि सर्वधातुभ्यो वक्तव्यः' इत्युक्तम्। पचाद्यनुक्रमणं तु नदडित्यादावनुबन्धासञ्जनार्थम्, कर्मोपपदानाम् इगुपधानां च बाधकबाधनार्थम्, देवेडित्युभयार्थम्, अन्येषां तु प्रपञ्चार्थं द्रष्टव्यम्॥ १३४॥

**इगुपधज्ञाप्रीकिरः कः॥** इगुपधादीनां समाहारद्वन्द्वे नपुंसकत्वेन ह्रस्वप्रसङ्गादितरेतरयोगे द्वन्द्वः, व्यत्ययेन भ्यसः पञ्चम्येकवचनम्। तत्र कृशब्दस्य धात्वनुकरणत्वात्प्रकृतिवदनुकरणम्, विभक्त्यावित्वम्। **ज्ञ इति।** 'आतो लोप इटि च'। **प्रिय इति।** 'प्रीञ् तर्पणे' ( धा० पा० १८३६ ), इयङादेशः। **किर इति।** 'कॄ विक्षेप' ( १४०९ ), 'ॠत इद्धातोः'। **पचादिषु द्रष्टव्या इति।** यद्यप्यजपि तृजादिवत्सर्वधातुभ्यो भवति, तथाप्यपवादबाधनार्थमेते पचादिष्ववश्यं पाठ्या इत्यर्थः॥ १३५॥ १३६॥

**भावबोधिनी**

इगुपध ( इक् प्रत्याहार का वर्ण है उपधा में जिनके ऐसी ) धातुओं से तथा ज्ञा, प्री और कॄ—इन धातुओं से 'क' प्रत्यय होता है। उदा० विक्षिपः। [ वि + क्षिप् + क = अ, कित् होने से गुण का निषेध। इधर-उधर फेकने वाला ]' विलिखः। [ वि + लिख् + क = अ, कित् होने से गुण का निषेध। लिखने वाला ] बुधः। [ बुध् + क = अ, जानने वाला ] कृशः। [ दुर्बल होना ] जानाति—इस अर्थ में—ज्ञः। [ ज्ञा + क = अ, "आतो लोप इटि च" सूत्र से 'आ' का लोप ज्ञ् अ = ज्ञः। ] प्रीणाति—इस अर्थ में प्रियः। [ प्री + क = अ, "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" ( पा. सू. ६.४.७७ ) से 'ई' का इयङ् आदेश—प्र् इय् अ + प्रियः। ] किरति = विखेरता है—इस अर्थ में कॄ + क, "ॠत इद्धातोः" से ॠ का इ, रपर किर् + अ ]

[ दिव्, सिव मिष् धातुयें इगुपध हैं अतः इनसे 'क' प्रत्यय करने पर—दिवः सिवः मिषः ही बन सकते हैं। अतः ] 'देव सेव, मेष—आदि पचादिगण के अन्तर्गत पढ़ने चाहिये। [ पचादि में पाठ का परामर्श भाष्यकार का है। ]॥ १३५॥

उपसर्ग उपपद रहते आकारान्त धातु से 'क' प्रत्यय होता है। [ यह "श्याद्व्यधा० पा. सू. ३.१.१४१ से प्राप्त ] 'ण' प्रत्यय का अपवाद हैं। उदा० प्रस्थः। [ प्रस्था + क = अ, "आतो लोप इटि च" सूत्र से 'आ' का लोप—प्रस्थ् अ ]। प्रस्थान करने वाला ] सुग्लः। [ सुग्लै = सुग्ला + क, शेष पूर्ववत्। बहुत दुःखी होने वाला ] सुम्लः। [ सुम्लै = सुम्ला + क = अ, शेष पूर्ववत्। बहुत म्लान होने वाला। ]॥ १३६॥

**७५६. पाघ्राध्माधेट्दृशः शः ॥ १३७ ॥ ( २८९९ )**

**पादिभ्यो धातुभ्य उपसर्ग उपपदे शप्रत्ययो भवति। उत्पिबः। विपिबः। उज्जिघ्रः। विजिघ्रः। उद्धमः। विधमः। धेट्—उद्धयः। विधयः। उत्पश्यः। विपश्यः।**

**'उपसर्गे' इति केचिन्नानुवर्तयन्ति—पश्यतीति पश्यः ( छां० उप० ७.२८.२ )।**

**❀ जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः ❀ ( म० भा० ३.१.१३७ वा० १ )। व्याघ्रः ॥**

**७५७. अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ १३८ ॥ ( २९०० )**

**न्यासः**

**पाघ्राध्माधेट्दृशः शः ॥** 'पा पाने', 'घ्रा गन्धोपादाने', 'ध्मा शब्दाग्निसंयोगयोः' धेट् पाने—एषामाकारान्तलक्षणे के णे च प्राप्ते शो विधीयते। यद्युपसर्ग इत्यनुवर्त्तते तदा के; अथ निवृत्तम्—सोपसर्गेभ्यः के प्राप्त इत्यनुपसर्गेभ्यो णे। दृशेस्त्विगुपधलक्षणे के। **उत्पिब** इत्यादिषु प्रत्ययस्य शित्त्वात् सार्वधातुकसंज्ञायाम् 'कर्त्तरि शप्'। पाघ्रादिना यथायोगं पिबादयः।

**संज्ञायां प्रतिषेध इति।** प्रकृतत्वाच्शप्रत्ययस्य। तस्य प्रतिषेधस्य 'व्याघ्रादिभिः' इति वचनं लिङ्गम् ॥ १३७ ॥

**अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ अनुपसर्गादिति।** सुब्व्यत्ययेन बहु-

**पदमञ्जरी**

**पाघ्राध्माधेट्दृशः शः ॥** 'पा पाने' ( ९२५ ), 'घ्रा गन्धोपादाने' ( ९२६ ), 'ध्मा शब्दाग्निसंयोगयोः' ( ९२७ ) 'धेट् पाने' ( ९०२ ), 'दृशिर् प्रेक्षणे' ( ९८८ ), 'पा रक्षणे' (१०५६) इत्यस्य तु लुग्विकरणत्वादग्रहणम्। **उत्पिब इत्यादि।** पाघ्रादिसूत्रेण यथायोगं पिबादय आदेशाः। **व्याघ्र इति।** अत्र 'आतश्चोपसर्गे' इति क एव भवति; अत्र च 'व्याघ्रादिभिः' इति वचनं लिङ्गम् ॥ १३७ ॥

**अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥** 'अनुपसर्गात्' इति व्यत्ययेनैकवचन-

**भावबोधिनी**

पा, घ्रा, ध्मा, धेट् और दृश्—इन धातुओं से, उपसर्ग उपपद रहते 'श' प्रत्यय होता है। उदा० उत्पिबः। [ उत्पिबति—इस अर्थ में उत्पूर्वक पा + श = अ, शित् परे होने के कारण "पाघ्राध्मा" ( पा सू. ७.३.७८ ) से 'पा' का 'पिब' आदेश, "अतो गुणे" से 'अ' का पररूप—उत्पिबः। पीने वाला। इसी प्रकार ] विपिबः। उज्जिघ्रः [ उत् घ्रा + श = अ, 'घ्रा' का जिघ्र आदेश—'त्' का जश्त्व श्चुत्व—उज्जिघ्रः। सूँघने वाला। इसी प्रकार ] विजिघ्रः। उद्धमः। [ उद् + ध्मा + श = अ, ध्मा का 'धम' आदेश, उद्धमः। जोर से शब्द करने वाला ] विधमः। [ विशेष शब्द करने वाला ] धेट् का उदा० उद्धयः [ उद् + धे + श = अ, अय् आदेश। पीने वाला। इसी प्रकार ] विधयः। उत्पश्यः [ उत्पश्यति—इस अर्थ में उत्पूर्वक दृश् + श = अ, शित् परे होने से 'दृश्' का 'पश्य' आदेश—उत्पश्यः। ऊपर देखने वाला। ] विपश्यः [ विशेष रूप से देखने वाला। ]

कुछ व्याख्याकार 'उपसर्गे' की अनुवृत्ति नहीं मानते हैं। अतः केवल धातु से प्रत्यय होता है। जैसे—पश्यति—इस अर्थ में—पश्यः। [ दृश् + श = अ, दृश् का 'पश्य' आदेश। देखने वाला। ] ❀ घ्रा' धातु से संज्ञा में श प्रत्यय का प्रतिषेध कहना चाहिये। ❀ उदा० व्याघ्रः। [ व्याजिघ्रति—इस अर्थ में वि + आङ् + घ्रा से 'श' प्राप्त है उसका प्रतिषेध करके "आतश्चोपसर्गे" से 'क' होता है, धातु के 'आ' का लोप, वि आ घ्र् अ, यण्—व्याघ्रः = बाघ। यह एक जंगली जानवर होता है। इसी ने आचार्य पाणिनि को खा लिया था। ] ॥ १३७ ॥

"अनुपसर्गाल्लिम्प०" उपसर्गरहित 'लिम्प' आदि धातुओं से 'श' प्रत्यय होता है। उदा० लिम्पति—इस अर्थ

**अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययो भवति। लिम्पतीति लिम्पः। विन्दतीति विन्दः। धारयतीति धारयः। पारयतीति पारयः। वेदयतीति वेदयः। उदेजयतीत्युदेजयः। चेतयतीति चेतयः। सातिः सौत्रो धातुः – सातयः। साहयः।**

**अनुपसर्गादिति किम्? प्रलिपः। प्रविदः।**

**❀ नौ लिम्पेरिति वक्तव्यम् ❀ ( म० भा० ३.१.१३८ वा० १ )। निलिम्पा नाम देवाः।**

**न्यासः**

वचनस्य स्थान एकवचनम्। **लिम्पः, विन्द इत्यादि**। 'लिप उपदाहे', 'विद्लृ लाभे'। सनुम्कयोर्ग्रहणमुपदेशावस्थायामेव नुम् भवतीति ज्ञापनार्थम्। 'धृञ् धारणे' हेतुमण्णिजन्तः। **पारय इति**। 'पार तीर कर्मसमाप्तौ' चुरादिः। अथ वा 'पॄ पालनपूरणयोः' इति हेतुमण्णिजन्तः। 'विद वेदनाख्याननिवासेषु', चुरादिण्यन्तः। अथ वा—ज्ञानाद्यर्थानां विदादीनामन्यतमो हेतुमण्ण्यन्तः। 'एजृ कम्पने', हेतुमण्णिजन्तः। 'चिति संज्ञाने', चुरादिण्यन्तः। 'षह मर्षणे' हेतुमण्ण्यन्तः, चुरादिण्यन्तो वा। **लिम्पः, विन्द इति**। 'तुदादिभ्यः शः' 'शे मुचादीनाम्' इति नुम्।

**प्रलिपः, प्रविद इति**। इगुपधलक्षणः क एव।

**नौ लिम्पेरित्यादि**। निशब्द उपपदे लिम्पेर्धातोः शप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्वत्रस्थस्य चकारस्यानुक्तसमुच्चयार्थत्वात् कर्त्तव्यम्।

**पदमञ्जरी**

मित्याह—**अनुपसर्गेभ्य इति**। 'लिप उपदेहे' ( धा० पा० १४३३ ), विद्लृ लाभे' ( धा० पा० १४३२ ) आगामिना नुमा सनुम्कयोर्ग्रहणम्, तेन विध्यन्तराणामग्रहणम्। 'धृञ् धारणे' ( धा० पा० ९०० ), 'धृञ् अवस्थाने' ( धा० पा० १४१२ ) ण्यन्तयोर्द्वयोरपि ग्रहणम्। 'पार तीर कर्मसमाप्तौ' ( धा० पा० १९११,१२ ) 'विद चेतनाख्यानादिषु' (धा० पा० १७०८) चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः। 'एजृ कम्पने' (धा० पा० २३४) ण्यन्तः, 'चिती संज्ञाने' ( धा पा० ३९ ), चुरादिः, सातिर्हेतुमण्ण्यन्तः, 'षह मर्षणे' ( धा० पा० ८५२ ) चुरादिर्हेतुमण्ण्यन्तो वा। **लिम्पः, विन्द इति**। 'तुदादिभ्यः शः', 'शे मुचादीनाम्' इति नुम्। धारयादिषु शब्गुणायादेशाः।

**नौ लिम्पेरिति**। छन्दसि तु 'धर्त्ता च विधर्त्ता च विधारय' इति दृश्यते।

**भावबोधिनी**

में - लिम्पः। [ लिप् + श = अ, नुम्, अनुस्वार परसवर्ण—लिम्पः। लीपने वाला, व्याप्त करने वाला ] विन्दति इस अर्थ में—विन्दः। [ विद् + श = अ, नुम्—विन्दः। प्राप्त करने वाला। ] धारयः [ धारयति - इस अर्थ में—धारि + श = अ, गुण, अय् आदेश—धारयः। धारण करने वाला ] पारयति—इस अर्थ में—पारयः। [ पारि + श = अ, गुण, अय् आदेश। पार करने वाला, समर्थ होने वाला ] वेदयः वेदयति—इस अर्थ में—वेदि + श = अ गुण, अय् आदेश। ज्ञान कराने वाला ] उदेजयति—इस अर्थ में—उदेजयः। [ उद् एजि + श, गुण, अय्। कंपन कराने वाला। ] चेतयति —इस अर्थ में चेतयः। [ चित् + णिच् = चिति + श = अ, गुण, अयादेश—चेतय। होश में लाने वाला। ] 'साति' यह सूत्रपठित धातु है—सातयः। [ साति + श = अ, गुण, अय् ] साहयति—इस अर्थ में—साहयः। [ षह = सह + णिच्, उपधावृद्धि—साहि + श = अ, गुण, अय् आदेश—साहयः। सहन कराने वाला। ]

उपसर्गरहित से — इसका क्या फल है? प्रलिपः [ प्रलिप् + क = अ, कित् होने से गुणनिषेध। 'श' न होने से लुक् आदि नहीं होते हैं। ] प्रविदः। [ यहाँ भी 'क' होता है। अतः गुण नहीं होता है। ]

❀ 'नि उपसर्ग रहने पर 'लिम्प' से 'श' होता' है। ❀ उदा० निलिम्पा नाम देवाः। [ निलिप् + श = अ, नुम्, अनुस्वार, परसवर्ण, बहुवचन का रूप है। ]

❀ **गवादिषु विन्देः संज्ञायाम्** ❀ ( म० भा० ३.१.१३८ वा० २ )। **गोविन्दः। अरविन्दः॥**

**७५८. ददातिदधात्योर्विभाषा ॥ १३९ ॥ ( २९०१ )**

**दाञो धाञश्च विभाषा शप्रत्ययो भवति। णस्यापवादः। ददः, दायः। दधः, धायः। अनुपसर्गादित्येव—प्रदः। प्रधः॥**

**७५९. ज्वलिति-कसन्तेभ्यो णः ॥ १४० ॥ ( २९०२ )**

**इतिशब्दः आद्यर्थः। 'ज्वल दीप्तौ' ( धा० पा० ८०५ )—इत्येवमादिभ्यो धातुभ्यः कस गतौ' ( धा०**

**न्यासः**

**गवादिष्वित्यादि।** गवादिषूपपदेषु संज्ञायां विषये विन्देः शो भवति। कर्मण्यणोऽपवादः। स च चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यते ॥ १३८ ॥

**ददातिदधात्योर्विभाषा॥ णस्यापवाद इति।** 'श्याद्व्यध' इत्यादिना प्राप्तस्य। कस्य त्वपवादो न भवति, अनुपसर्गादित्यनुवृत्तेः। **ददः,दध इति**। शे कृते शप्। तस्य जुहोत्यादित्वाच् श्लुः, 'श्लौ' इति द्विर्वचनम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। **दाय इति**। 'आतो युक्'। **प्रद इति**। 'आतश्चोपसर्गे' इति कः। ननु च 'दद दाने' 'दध धारणे'—इत्येताभ्यामचि कृते ददो दध इति, दा धा—इत्येताभ्यामपि णे कृते दायो धाय इति भविष्यति, तत् किमित्यनेन सूत्रेण ? नैतदस्ति; अचि हि सति 'अच्कावशक्तौ' इत्यन्तोदात्तत्वं स्यात्। शे तु नञ्स्वर एव भवति—अददः, अदध इति ॥ १३९ ॥

**ज्वलितिकसन्तेभ्यो णः॥ ज्वलितीति।** ज्वल् इति = आदि येषामिति बहुव्रीहिः। विभक्तेस्त्वश्रवणम्,

**पदमञ्जरी**

**अरविन्द इति**। अराकाराणि दलान्यरशब्देनोच्यन्ते ॥ १३८ ॥

**ददातिदधात्योर्विभाषा॥ ददः, दध इति।** शपः श्लुः, द्विर्वचनम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। 'दद दाने' ( धा० पा० १७ ), 'दध धारणे' (धा० पा० ८) इत्येताभ्यामचि कृते ददः दध इति सिद्धम्, दाधाभ्यामपि णे कृते दायो धाय इति, इदं तु वचनं स्वरार्थम्—अददः अदध इति 'अच्कावशक्तौ' इत्यन्तोदात्तत्वं मा भूत्, नञ्स्वर एव यथा स्यादिति ॥ १३९॥

**ज्वलितिकसन्तेभ्यो णः॥ इति शब्द आद्यर्थ इति**। अनेकार्थत्वान्निपातानाम् 'उच्चावचेष्वर्थेषु निपतन्तीति

**भावबोधिनी**

❀ गो आदि उपपद रहने पर, संज्ञाविषय में 'विन्द' से श् प्रत्यय होता है। [ यह "कर्मण्यण्" का अपवाद है। ] ❀ उदा० गोविन्दः। [ गां विन्दति—इस अर्थ में 'गाम्' उपपद विन्द से 'श' = अ, उपपद-समास विभक्ति का लोप—गोविन्दः। गायें प्राप्त करने वाला ]। अरविन्दः [ अराणि विन्दति—इस अर्थ में—अराणि उपपद विन्द् + श = अ, उपपदसमास, विभक्तिलोप—अरविन्दः। [ अर के आकार वाले दलों को प्राप्त करने वाला—कमल। ] ॥ १३८ ॥

'दा' और 'धा' धातुओं से विकल्प से 'श' प्रत्यय होता है। यह 'ण' का अपवाद है। [ "श्याऽऽव्यधास्रु" इससे 'ण' प्राप्त है उसका अपवाद है। अतः पक्ष में 'ण' भी होता है। ] उदाहरण—ददः दायः। [ दा + श, शित् परे होने से शप् इसका 'जुहोत्यादिभ्यः श्लुः" ( २.४.७५ ) से श्लु = लोप हो जाता है। और "श्लु" ( ६.१.१७ ) इस सूत्र से द्वित्व होता है, अभ्यास का ह्रस्व– ददा + अ, "श्नाभ्यस्तयोरातः" ( ६.४.११२ ) सूत्र से 'आ का लोप—दद् अ = ददः। देने वाला। ] जब 'श' नहीं होता है तब आकारान्त मान कर 'ण' प्रत्यय, युक् आगम् दा य् अ = दायः ] दधः, धायः। [ धा + श, पूर्ववत् सब प्रक्रिया, अभ्यास का जश्त्व, आलोप करने पर—दधः। पक्ष में 'ण' करने पर भी पूर्ववत् सब प्रक्रिया होती है। धारण करने वाला। ] उपसर्गरहित से ही होता है—प्रदः, प्रधः। [ इनमें प्र उपसर्ग के कारण "आतश्चोपसर्गे" से 'क' प्रत्यय और 'आ' लोप होता है। ] ॥ १३९ ॥

'इति' शब्द 'आदि' अर्थ में है। 'दीप्ति अर्थ में ज्वल धातु है—इस प्रकार की ज्वल् आदि धातुओं से 'गमन अर्थ में 'कस' धातु है—इस धातु तक अर्थात् 'ज्वल' धातु से लेकर 'कस्' धातु तक जितनी हैं उनसे विकल्प से 'ण'

पा० ८६१ ) इत्येवमन्तेभ्यो विभाषा णप्रत्ययो भवति। अचोऽपवादः। ज्वालः, ज्वलः। चालः, चलः। अनुपसर्गादित्येव—प्रज्वलः।

ॐ तनोतेर्णस्योपसंख्यानं कर्तव्यम् ॐ ( म० भा० ३.१ १४० वा० १ )। अवतनोतीत्यवतानः॥

७६०. श्याऽऽद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च॥ १४१॥ ( २९०३ )

**न्यासः**

'सुपां सुलुक्' इति लुप्तत्वात्। **कसन्तेभ्य इति**। कसोऽन्ता इति तत्पुरुषः, अन्तशब्दः समीपवाची। अथ वा—कसोऽन्त एषामिति बहुव्रीहिः। अन्तशब्दः समीपवाची, मर्यादावाची वा। 'ज्वल दीप्तौ' इति द्विष्पठ्यते—घटादिषु, परस्ताच्च। **तेभ्य इति**। तत्रासत्यस्मिन् विशेषणे सन्देहः स्यात्—केभ्यो ज्वलादिभ्य इति? अतस्तन्निरासार्थं ज्वलादयो विशिष्यन्ते—कसन्ता ये ज्वलादय इति। घटाद्यन्तर्गणः पर्युदस्तो भवति। कसेः परत्वाद् ये पठ्यन्ते तन्निवृत्त्यर्थं कसग्रहणं न भवति, कसमधीत्य वृदिति पाठात्। ननु च घटादिषु ज्वलादीनां पाठो मित्संज्ञार्थः, तत्र विनापि कसन्तग्रहणं कसन्ता एव ग्रहीष्यन्ते, तदनर्थकमिदं विशेषणम्? नैतदस्ति; असति हि तस्मिन् पूर्वेषां ज्वलादीनामुभयार्थः पाठः स्यात्—मित्त्वार्थः, प्रत्ययार्थश्च; इतरेषां तु प्रत्ययार्थ एव। तस्मात् कसग्रहणं कर्त्तव्यम्। **अचोऽपवाद इति**। ज्वलादीनां पचाद्यन्तः पातित्वात्।

**तनोतेर्णस्योपसंख्यान कर्त्तव्यमिति**। णे विधातव्ये तनोतेरपि णस्य प्रतिपादनं कर्त्तव्यम्। प्रतिपादनं तूत्तरत्र चकारस्यानुक्तसमुच्चयार्थत्वात् कर्त्तव्यम्॥ १४०॥

**श्याऽऽद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च**॥ 'श्यैङ् गतौ'। आदित्याकारान्तानां दाधाप्रभृतीनां ग्रहणम्। 'व्यध ताडने', 'स्रु गतौ' आङ्पूर्वः, पुनः स एव संपूर्वः। 'इण् गतौ' अतिपूर्वः, 'षोऽन्तकर्मणि' अवपूर्वः।

**पदमञ्जरी**

निपाताः' इति **निरुक्तकारो**[१] निपातशब्दं निराह। ज्वलितीत्यविभक्तिको निर्देशः, ज्वलादिभ्य इत्यर्थः। कसिरन्ते येषां ते कसन्ताः, तत्र ये कसमधीत्य वृदिति पठन्ति तेषां मते कसन्तग्रहणं चिन्त्यप्रयोजनम्। ननु च 'ज्वल दीप्तौ' (धा० पा० ८०४,८३१) इति द्विः पठ्यते-घटादिषु, परस्ताच्च; तेषामसत्यस्मिन्विशेषणे सन्देहः स्यात्—किं पूर्वो ज्वलिरादिः? उत पर इति अतः कसः समीपभूतेभ्यो ज्वलादिभ्य इति विशेषणमर्थवत्, नैतत्सुष्ठूच्यते; यद्यन्तशब्दः समीपवचनः, बहुव्रीहौ तत्पुरुषे च कसेर्ग्रहणं न प्राप्नोति, पूर्वत्र ज्वलतावादावभिप्रेते तदनन्तर एव धातुरुपादीयेत; परोपदेशेनैव ज्वलतेर्ग्रहणसिद्धेः। घटादिपाठश्च मित्संज्ञायां चरितार्थ, इति स एवादिर्भविष्यति। **अचोऽपवाद इति**। तस्यापि सर्वधातुविषयत्वादिति भावः। 'भ्रमु चलने' ( धा० पा० ८५० ) इत्यस्य ज्वालादिपाठः किमर्थः, यावता पचाद्यचि भ्रम इति सिद्धम्, णेऽप्येतदेव रूपम्, 'नोदात्तोपदेशस्य' इति वृद्धिप्रतिषेधात्? इहाभ्रम इति 'अच्कावशक्तौ' इति स्वरो मा भूदिति॥ १४०॥

**श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च। अनुपसर्गादिति निवृत्तमिति**। उत्तरसूत्रे पुनरनुप-

**भावबोधिनी**

प्रत्यय होता है। यह अच् का अपवाद है [ क्योंकि ये पचादिगण में आती हैं। ] अतः 'ण' और 'अच्' दोनों के रूप होते हैं। ] उदाहरण—ज्वालः, ज्वलः। [ ज्वल्+ण=अ, उपधा की वृद्धि, ज्वालः। पक्ष में ज्वल्+अच्। ] चालः, चलः। [ चल् + ण, उपधावृद्धि, पक्ष में अच्। ] उपसर्गरहित से ही यह विकल्प होता है अतः—प्रज्वलः। [ प्रज्वल् + अच् ]। ॐ तनु धातु से ण का उपसंख्यान करना चाहिये। ॐ उदाहरण—अवतनोति—इस अर्थ में—अवतानः। [ अवतन्+ण=अ, उपधा की वृद्धि ]॥ १४०॥

१. निरु० १. २।

**'अनुपसर्गात्' इति 'विभाषा' इति च निवृत्तम्। श्यैङ्, आकारान्तेभ्यश्च धातुभ्यः व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष, श्वस—इत्येतेभ्यश्च णप्रत्ययो भवति। आकारान्तत्वादेव श्यायतेः प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम्। उपसर्गे कं (३.१ १३६) बाधित्वाऽयमेव भवति। अवश्यायः। प्रतिश्यायः। दायः। धायः। व्याधः। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः॥**

**न्यासः**

'हृञ् हरणे' अवपूर्वः। 'लिह आस्वादने', श्लिष आलिङ्गने', 'श्वस प्राणने'। अत्र ये सोपसर्गाः पठितास्तेभ्यः सोपसर्गेभ्य एव भवति; शेषेभ्यस्तु सोपसर्गेभ्यः, अनुपसर्गेभ्यश्च। **अनुपसर्गादिति निवृत्तमिति**। पुनरुत्तरत्रानुपसर्गग्रहणात्। **विभाषेति चेति**। निवृत्तमिति सम्बध्यते। विभाषाग्रहणं ह्यनुपसर्गेण सम्बद्धम्। अतस्तन्निवृत्तौ तस्यापि निवृत्तिर्भवति। **बाधकबाधनार्थमिति**। 'आतश्चोपसर्गे' इति विशेषविहितत्वात् कः सामान्यविहितस्य णस्य बाधकः, अतस्तद्बाधनार्थम्। अवश्यतेरप्युपादानस्यैतत् प्रयोजनं वेदितव्यम्। अथ वा—उपसर्गनियमार्थं तस्य ग्रहणम्, अवपूर्वादेव यथा स्यात्। **अवश्याय इति**। 'आतो युक्' ॥ १४१ ॥

**पदमञ्जरी**

सर्गग्रहणात्। **विभाषेति चेति**। निवृत्तमित्यपेक्ष्यते। विभाषाग्रहणं ह्यनुपसर्गग्रहणेन सम्बद्धम्, अतस्तन्निवृत्तावस्यापि निवृत्तिः। **श्यैङ् इति**। 'श्यैङ् गतौ' इत्यस्मात् शी आत् श्यादिति शीङो यणादेशेन ग्रहणं न भवति; व्याख्यानात्, झटिति प्रतीतावनारोहाच्च। **आकारान्तेभ्य इति**। एतेन अत्तेरच्छब्दान्तानां पतिप्रभृतीनामकारान्तानां च ग्रहणं न भवतीति दर्शयति। एतदपि व्याख्यानादेव। 'व्यध ताडने' (धा० पा० ११८१), 'स्रु गतौ' (धा० पा० ९४०) आङ्पूर्वः, संपूर्वश्च, इण् गतौ, (धा० पा० १०४५) अतिपूर्वः, 'षोऽन्तकर्मणि' (धा० पा० ११४७) 'हृञ् हरणे' (धा० पा० ८९९) अवपूर्वौ, 'लिह आस्वादने' (धा० पा० १०१६), 'श्लिष आलिङ्गने' (धा० पा० ११८६), 'श्वस प्राणने' (धा० पा० ११६९)। येऽत्र सोपसर्गास्तेभ्यः सोपसर्गेभ्य एव भवति, शेषेभ्यस्त्वविशेषेण। **बाधकबाधनार्थमिति**। 'आतश्चोपसर्गे इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः, तद्बाधनार्थमिदम्। एतेनावस्यतेरुपादानं व्याख्यातम्। **अवश्याय इति**। पूर्ववद्युक्॥ १४१॥

**भावबोधिनी**

'अनुपसर्गात्' [ उपसर्गरहित से ] और 'विभाषा' [ विकल्प ] इन दोनों की निवृत्ति हो जाती है। श्यैङ् धातु और आकारान्त धातुओं से, व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष् और श्वस—इन धातुओं से 'ण' प्रत्यय होता है। आकारान्त हो जाने से ही श्यै = श्या धातु से यह प्रत्यय संभव रहने पर पुनः स्वतन्त्र कथन बाधक के बाधन के लिये हैं। [ अर्थात् 'प्रस्तुत सूत्र सामान्यतया आकारान्त से 'ण' करता है। "आतश्चोपसर्गे" विशेष रूप से 'आकारान्त से 'क' प्रत्यय करता है। अतः यह अपवाद है। इसका भी बाध करने के लिये स्वतन्त्र रूप से उल्लेख है। ] उपसर्ग रहने पर 'क' का बाध करके यह 'ण' ही होता है। उदाहरण—अवश्यायः, प्रतिश्यायः। [ अव श्यै = श्या + ण = अ, "आतो युक् चिण्कृतोः" (७.३.३३) से युक् = य् आगम—आवश्या + य् + अ। इसी प्रकार प्रति + श्यै = श्या + ण = अ, युक् = य्—प्रतिश्यायः। नीचे बहना, जुकाम—ये अर्थ हैं। ] आकारान्त के उदाहरण—दायः, धायः। [ दा + ण = अ, युक् = य्, धा + ण = अ, युक् = य्। देने वाला। धारण करने वाला ] व्याधः [ विध्यति—इस अर्थ में व्यध + ण = अ, उपधावृद्धि। शिकारी ] आस्रावः। [ आङ् पूर्वक गत्यर्थक स्रु + ण, वृद्धि, आव् आदेश। इसी प्रकार सम् पूर्वक स्रु से ] संस्रावः। [ तेज निकलना, बहना ] अत्यायः [ अति + इण् = इ + ण = अ वृद्धि आय् आदेश—अति + आय् + अ, यण् अत्यायः। अतिक्रमण करने वाला। ] अवसायः [ 'षोऽन्तकर्मणि' है, अव पूर्वक सो = सा + ण = अ, युक् = य, = अवसायः। समाप्त करने वाला। ] अवहारः। [ अव पूर्वक हृ + ण = अ, वृद्धि, रपर—अवहारः। ले जाने वाला। ] लेहः। लिह् + ण = अ, गुण। चाटने वाला। ] श्लेषः [ श्लिष् + ण = अ, गुण। चिपकने वाला ] श्वासः [ श्वस् + ण = अ, उपधावृद्धि। साँस लेने वाला। ]॥ १४१॥

## ७६१. दुन्योरनुपसर्गे ॥ १४२ ॥ ( २९०४ )

**दुनोतेः, नयतेश्चानुपसर्गे णप्रत्ययो भवति । दुनोतीति दावः । नयतीति नायः ।**

**अनुपसर्ग इति किम् ? प्रदवः । प्रणयः ( ३.१.१३४ ) ॥**

## ७६२. विभाषा ग्रहः ॥ १४३ ॥ ( २९०५ )

**विभाषा ग्रहेर्धातोर्णप्रत्ययो भवति । अचः ( ३.१.१३४ ) अपवादः । ग्राहः, ग्रहः । व्यवस्थितविभाषा चेयम् । जलचरे नित्यम्—ग्राहः । ज्योतिषि नेष्यते, तत्र ग्रह एव ।**

**❀ भवतेश्चेति वक्तव्यम् ❀ ( ? ) । भवतीति भावः, भवः ॥**

## ७६३. गेहे कः ॥ १४४ ॥ ( २९०६ )

### न्यासः

**दुन्योरनुपसर्गे** ॥ **दुन्योरिति** सुव्यत्ययेन पञ्चम्यर्थे षष्ठी । **अनुपसर्गे** इत्यपि पञ्चम्यर्थे सप्तमी । अत एवाह–**दुनोतेर्नयतेश्चानुपसर्गादिति** । **दाव इति** । 'टु दु उपतापे' । **नाय इति** । 'णीञ् प्रापणे' ।

**प्रदवः, प्रणय इति** । पचाद्यच्, 'उपसर्गादसमासे' इति णत्वम् ॥ १४२ ॥

**विभाषा ग्रहः** ॥ **व्यवस्थितविभाषा चेयमिति** । एतत् **जलचर** इत्यादिना स्पष्टीकरोति ।

**भवतेश्चेति वक्तव्यमिति** । भवतेश्च विभाषा णो भवतीत्येतदर्थरूपं व्याख्येयम् । व्याख्यानं तु विभाषेति योगविभागात् कर्त्तव्यम् ॥ १४३ ॥

### पदमञ्जरी

**दुन्योरनुपसर्गे** ॥ **दाव इति** । वनवह्निः । कथं तत्रैव दव इति ? नयतिसाहचर्यात्सानुबन्धकस्य दुनोतेरिह ग्रहणम् । निरनुबन्धकाद्द्वतेः पचाद्यचि भविष्यति करणसाधनो वा 'ॠदोरप्' इत्यबन्तः ॥ १४२ ॥

**विभाषा ग्रहः** ॥ **व्यवस्थितविभाषा चेयमिति** । एतदेव स्पष्टयति—**जलचर इति** ।

**भव इति** । भवत्येव न तु कदाचिन्न भवतीति भवः=देवः, संसारश्च । भावाः=पदार्थाः ॥ १४३ ॥

### भावबोधिनी

उपसर्गरहित 'दु' तथा 'नी' धातुओं से 'ण' प्रत्यय होता है । उदाहरण--दुनोति—इस अर्थ में--दावः । [ दु + ण = अ, वृद्धि, आव् आदेश —द आव् अ ] नयति इस अर्थ में--नायः [ नी + ण=अ, वृद्धि आय् आदेश । कष्ट देने वाला । ले जाने वाला--ये अर्थ हैं । ]

'उपसर्गरहित' इसका क्या फल है ? प्रदवः, प्रणयः । [ यहाँ उपसर्गयोग के कारण 'ण' न होकर [ "नन्दि-ग्रहिपचादिभ्यः ( ३.१.१३४ ) सूत्र से 'अच्' प्रत्यय और गुण, अव्, अय् करने पर--प्रदवः, प्रणयः रूप बनते हैं । ] ॥ १४२ ॥

'ग्रह' धातु से विकल्प से 'ण' प्रत्यय होता है । यह अच् का अपवाद है । यह व्यवस्थित-विभाषा है । अतः जलचर ( पानी में रहने वाले जन्तु विशेष अर्थ में )—ग्राहः । [ ग्रह् + ण=अ उपधा की वृद्धि । 'मगर' अर्थ है । ] किन्तु ज्योतिष में यह नहीं होता है—'ग्रहः' ही बनता है [ ग्रह् + अच् ] ।

❀ भू धातु से भी 'ण' विकल्प से होता है । ❀ उदाहरण—भावः, भवः । [ भू + ण=अ, वृद्धि, आव् आदेश--भावः=पदार्थ । पक्ष में अच् करने पर गुण, अव् आदेश—भवः=शङ्कर और संसार । ] ॥ १४३ ॥

**ग्रहेर्धातोः कप्रत्ययो भवति गेहे कर्त्तरि। गृहं वेश्म। तात्स्थ्याद्दाराश्च। गृह्णन्तीति गृहा दाराः। गृहाणि = वेश्मानि ॥**

७६४. शिल्पिनि ष्वुन् ॥ १४५ ॥ ( २९०७ )

**धातोः ष्वुन्प्रत्ययो भवति शिल्पिनि कर्त्तरि।**

**❀ नृतिखनिरञ्जिभ्यः[1] परिगणनं कर्त्तव्यम् ❀ ( म० भा० ३.१.१४५ वा० १ )। नर्त्तकः। खनकः।**

**न्यासः**

**गेहे कः ॥ गेहे कर्त्तरीति।** एतेन 'गेहे' इति प्रत्ययार्थस्य कर्त्तुरुपाधिरयम्, न तूपपदमिति दर्शयति। एतच्चाश्वपत्यादौ गृहपतिशब्दपाठाद् विज्ञायते। **तात्स्थ्याद्दाराश्चेति।** गेहमिति प्रकृतेन सम्बन्धः। एतेन गौणेऽपि गेहे प्रत्ययो भवतीत्याचष्टे। एतच्च तन्त्रेण गेहशब्दस्य द्वितीयस्योच्चारणाल्लभ्यते। **गृहमिति।** ग्रह्यादिना संप्रसारणम् ॥ १४४ ॥

**शिल्पिनि ष्वुन् ॥ शिल्पिनि कर्त्तरीति।** पूर्ववदुपाधित्वं दर्शयन्नुपपदत्वमपाकरोति। एतच्च रजकस्य वस्त्रं ददातीति **भाष्यकारप्रयोगाल्लभ्यते।**

**नृतिखनिरञ्जिभ्यः परिगणनमिति।** एतच्च विभाषेत्यनुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यते।

**पदमञ्जरी**

**गेहे कः ॥ गेह इति।** प्रत्ययार्थस्य कर्त्तुर्विशेषणम्, नोपपदम्; 'गृहपतिना संयुक्तः' इति निर्देशादित्याह— **गेहे कर्त्तरिति। तास्त्थ्याद्दाराश्चेति।** गेहमित्यपेक्ष्यते, तेन गौणस्यापि गेहस्य ग्रहणमिति दर्शयति। तच्च तन्त्रावृत्त्योरन्यतराश्रयणेन लभ्यते, तत्र वेश्मनि पुंल्लिङ्गबहुवचनान्त एव—"गृहान्ह दाहको भवति, गृहानुत्तरथा संकाशयते, गृहान्गच्छ, गृहपत्नी, गृहानहं सुमनसः प्रपद्य इति।" नपुंसकलिङ्गोऽभिधेयवचनः, एवं दारेष्वपि। अन्ये तु–गृहशब्दो वेश्मन्येव मुख्यः,दारेषु गौण इति वदन्ति, तथा 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' ( मनु० ) इति वेश्मन्येव मुख्यतां दर्शयन्ति। यथा **वृत्तिकारेणोक्तं** तथा दारेष्वपि मुख्य एवेति लक्ष्यते ॥ १४४ ॥

**शिल्पिनि ष्वुन् ॥** पूर्वेण साहचर्यात् शिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणम्, नोपपदमित्याह—**शिल्पिनि कर्त्तरीति।** क्रियासु कौशलं शिल्पं तद्यस्यास्तीति शिल्पी।

**नृतिखनीत्यादि।** एतद्वचनमेव; तेनाह्वाता, आह्वायक इत्यादौ न भवति। **रञ्जेरनुनासिकलोपश्चेति।**

**भावबोधिनी**

गेह=घर कर्ता रहने पर 'गृह' धातु से 'क' प्रत्यय होता है। उदाहरण–गृहम्, वेश्म [ ग्रह्+क=अ, कित् होने से "ग्रहिज्यावयि०" ( पा. सू.६.१.१६ ) से रेफ का सम्प्रसारण, अ का पूर्वरूप—गृहम्=घर ) उसमें=घर में स्थित होने के कारण दारा=स्त्रियाँ भी 'गृह' कही जाती है। गृह्णन्ति—इस अर्थ में—गृहाः=दाराः गृहाणि = वेश्मानि।

**विमर्श**—घर में मुख्य रूप से रहने वाली होने के कारण दारा = स्त्री भी 'गृह' कही जाती है। यहाँ गृह शब्द पुल्लिङ्ग बहुवचन में होता है। 'घर' अर्थ में नपुंसक लिङ्ग होता है।

इसी अभिप्राय से यह प्रसिद्ध है—"गृहिणी गृहमुच्यते।" ॥ १४४ ॥

शिल्पी कर्ता रहने पर धातु से ष्वुन् प्रत्यय होता है।

❀ नृत, खन और रञ्ज—इनका परिगणन करना चाहिये, अर्थात् इन तीन से ही ष्वुन् होता है। ❀ उदा० नर्तकः, नर्तकी। [ नृत्+ष्वुन् = वु = अक, गुण, रपर, स्त्रीलिङ्ग में "षिद्गौरादिभ्यश्च" ( पा. सू. ४.१.४१ )

१. रङ्क्तेच = नीलकर पर्यायत्वे रञ्जक इत्यत्रायं ष्वुन्। धौविनि तु 'रजकः' इत्यत्र 'रजक-रजन-रजः सु कित्वात्सिद्धम्' इति षाष्ठवार्तिकसूचित क्वुन् प्रत्यय एवेति न परस्परवार्तिकरोधः।

नापि—नृपायां शूद्रतश्चौर्याज्जातो रज्जक उच्यते।
पुल्कसाद्वैश्यकन्यायां जातो रजक उच्यते ॥

इत्यौशनस्यां स्मृतौ दर्शितस्य भिन्नभिन्नजातिवाचकस्य शब्दद्वयस्य सिद्धिविरोध इति।

**रजकः । नर्त्तकी । खनकी । रजकी । रञ्जेरनुनासिकलोपश्च ।**

**७६७. गस्थकन् ।। १४६ ।। ( २९०८ )**

**गायतेस्थकन्प्रत्ययो भवति शिल्पिनि कर्त्तरि । गाथकः । गाथिका ।**

**७६६. ण्युट् च ।। १४७ ।। ( २९०९ )**

**चकारेण 'ग' इत्यनुकृष्यते । गायतेर्ण्युट् प्रत्ययो भवति शिल्पिनि कर्त्तरि । गायनः । गायनी । योगविभाग उत्तरार्थः ।।**

**न्यासः**

**रञ्जेरनुनासिकलोपश्चेति** । एषोऽपि तत एव **भाष्यकार**प्रयोगाल्लभ्यते । किञ्च 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति यद् रञ्जेर्मित्त्वं शास्ति, तज् ज्ञापयति—अक्ङित्यपि रञ्जेरनुनासिकलोपो भवतीति । मित्त्वस्य ह्येतदेव प्रयोजनम्—'मितां ह्रस्वः' इति ह्रस्वत्वं यथा स्यात् न चासत्यस्मिन्ननुनासिकलोपे वृद्धिरस्ति । न चासत्यां वृद्धौ ह्रस्वभाविन्युपधा भवति । तेन णौ रञ्जेर्यथानुनासिकलोपो भवति, तथा ष्वुनि च । परिगणनाद् ह्वाता, ह्वायक इत्यत्र न भवति । ष्वुनो नित्करणमाद्युदात्तार्थम्, षकारो ङीषर्थः ॥ १४५ ॥

**गस्थकन्** ।। **ग इति** । 'आतो धातोः' इत्याकारलोपं कृत्वा 'गै शब्दे' इत्यस्यायं निर्देशः । अत एवाह—**गायतेरिति** । ननु च 'गामादाग्रहणेष्वविशेषः' इति 'गाङ् गतौ' इत्यस्यापि ग्रहणेन भवितव्यम् ? नैतत्; यस्माद् गाथक इति थकन्प्रत्ययान्तेन गायत्यर्थविशेष एव शिल्पिनि कर्तृत्वं विज्ञायते, न तु गाङर्थविषये । थकनो नकार आद्युदात्तार्थः ॥ १४६ ॥

**ण्युट् च** ।। **गायन इति** । 'आतो युक् चिण्कृतोः' इति युक् । **गायनी** । टित्त्वान् ङीप् । **योगविभाग उत्तरार्थ इति** । उत्तरत्र चकारेण ण्युट एवानुवृत्तिर्यथा स्यात्, थकनो मा भूदिति । 'गो ण्युट्थकनौ' इत्येकयोगे थकन्नप्यनुकृष्येत ॥ १४७ ॥

**पदमञ्जरी**

एतत्तु ज्ञापकात्सिद्धम्, यदयम् 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञां शास्ति, तज्ज्ञापयति—रञ्जेरकित्त्वेऽप्यनुनासिकलोपो भवतीति ।। १४५ ।।

**गस्थकन्** ।। **गायतेरिति** । 'कै गै शब्दे' ( धा० पा० ९१६, ९१७ ), **'गामादाग्रहणेष्वविशेषः'** इति 'गाङ् गतौ' ( धा० पा० ९५० ) इत्यस्यापि ग्रहणं प्राप्तम्, अनभिधानान्न भवति । थकन्प्रत्ययो हि **गायत्यर्थ**विषयमेव शिल्पिनमभिधातुं समर्थः ।। १४६ ।।

**ण्युट् च** ।। णकारो युगर्थः, टकारो ङीबर्थः । **योगविभाग उत्तरार्थ इति** । उत्तरत्र ण्युट एवानुवृत्तिर्यथा स्यात्, थकनो मा भूदिति ।। १४७ ।।

**भावबोधिनी**

से ङीष् होता है—नर्तकी । ] खनकः, खनकी । [ खन् + ष्वुन्–शेष पूर्ववत् । ] रजकः, रजकी [ रञ्ज् + ष्वुन् = अक, ] रञ्ज का अनुनासिकलोप भी होता है—रजकः [ स्त्रीलिङ्ग में ङीष् करने पर—रजकी बनता है । यह धोबी के लिये प्रयुक्त होता है ] ।। १४५ ।।

शिल्पी कर्ता रहने पर 'गै' धातु से थकन् प्रत्यय होता है । उदा० गाथकः गाथकी । [ गै + थकन् ''आदेच उपदेशेऽशिति'' ( पा. सू. ६.१.४५ ) से ऐ का आ—गाथकः, स्त्रीलिङ्ग में ङीष्–गाथकी ] ।। १४६ ।।

शिल्पी कर्ता होने पर 'गै' धातु से ण्युट् प्रत्यय भी होता है । उदा० गायनः, गायनी । [ गै + ण्युट्=यु + अन, आय् आदेश । स्त्रीलिङ्ग में टित् होने से ङीप् ] यह अलग सूत्र बनाना उत्तरवर्त्ती सूत्र के लिये है ; अर्थात् उसमें केवल ण्युट् की अनुवृत्ति कराने के लिये यह सूत्र अलग बनाया गया है । ] ।। १४७ ।।

**७६७. हश्च व्रीहिकालयोः ॥ १४८ ॥ ( २९१० )**

**चकारेण ण्युडनुकृष्यते। जहातेर्जिहातेश्च धातोर्ण्युट् प्रत्ययो भवति, व्रीहौ काले च कर्त्तरि। हायना नाम व्रीहयः—जहत्युदकमिति कृत्वा। काले—हायनः संवत्सरः, जिहीते भावानिति कृत्वा॥**

**७६८. प्रसृल्वः समभिहारे वुन्॥ १४९ ॥ ( २९११ )**

**प्र-सृ-लू—इत्येतेभ्यो धातुभ्यः समभिहारे वुन्प्रत्ययो भवति। प्रवकः। सरकः। लवकः।**

**समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते। साधुकारिणि वुन्विधानात्सकृदपि यः सुष्ठु करोति तत्र**

**न्यासः**

**हश्च व्रीहिकालयोः॥ जहातेरिति।** 'ओहाक् त्यागे'। **जिहातेश्चेति।** 'ओहाङ गतौ'। अस्यात्र ग्रहण-मिष्यते। तयोः सामान्यग्रहणार्थ एव ककारो जहातेर्निर्दिश्यते। असति हि तस्मिन् यदीदमेकानुबन्धग्रहणम्, तदुपादाने द्व्यनुबन्धकस्य जिहातेर्न स्यात्। अथ द्व्यनुबन्धकस्य, जहातेर्न स्यात्। ककारे तु सति द्वयोरपि सानुबन्धकत्वात् सामान्येन ग्रहणमुपपद्यते। **व्रीहौ काले च कर्त्तरीति।** एतेन व्रीहिकालयोः प्रत्ययार्थविशेषणं दर्शयति। उपपदत्वं तु निरस्यति। एतच्च 'दामहायनान्ताच्च' इति निर्देशाद् विज्ञायते। **हायना इति।** 'आतो युक् चिण्कृतोः' इति युक्। **जहत्युदकमिति कृत्वेति।** व्रीहिषु हायनशब्दस्य प्रवृत्तिनिमित्तं दर्शयति। **जिहीते भावानिति।** एतेनापि संवत्सरे॥ १४८॥

**प्रसृल्वः समभिहारे वुन्॥** 'प्रसृल्वः' इति समाहारं कृत्वा निर्देशः। नुमागमस्तु सत्यपि नपुंसकत्वे न कृतः, अनित्यत्वादागमशासनस्य। **समभिहारे वुन्निति।** अन्यत्र समभिहारशब्दस्य पौनःपुन्यादिकमर्थ इति, इहापि स एवार्थ इति कस्यचित् भ्रान्तिः स्यात्, अतस्तान्निराकर्त्तुमाह—**समभिहारग्रहणेनेत्यादि।** लक्ष्यते प्रदर्श्यत इत्यर्थः। एतच्चानेकार्थत्वाद्धातूनां लभ्यते। शिल्पिनीत्यनुवृत्तेरित्यपरे। शिल्पी = साधुकारी। **साधु-**

**पदमञ्जरी**

**हश्च व्रीहिकालयोः॥ जहातेरिति।** 'ओहाक् त्यागे' ( धा० पा० १०९० )। **जिहातेरिति।** 'ओहाङ्गतौ' ( धा० पा० १०८९ )। प्रायेण **जिहीतेरिति** पाठः, स त्वयुक्तस्तिपः पित्त्वादीत्वाभावात्। जहातेः ककारोऽत्र सामान्यग्रहणार्थः, अन्यथा एकानुबन्धकत्वादस्यैव स्यात्। अथ हाङ इत्युच्येत, एवमपि तस्य ग्रहणं न स्यात्, तस्माद् द्वयोरपि ग्रहणम्। 'व्रीहिकालयोः' इति कर्त्तुर्विशेषणम्, नोपपदम्; त्रिचतुर्भ्यो हायनस्य 'दामहायनान्ताच्च' इति वचनादिति मत्वाह—**व्रीहौ काले च कर्त्तरीति। जहत्युदकमिति कृत्वेति।** व्रीहौ हायनशब्दस्य प्रवृत्ति-निमित्तं दर्शितम्। जाङ्गलदेशोद्भवाः केचिद् व्रीहयो हायना इत्याहुः। **जिहीते भावानिति।** भावाः पदार्थास्तान् जिहीते गच्छति परिच्छेदकत्वेन व्याप्नोतीत्यर्थः॥ १४८॥

**प्रसृल्वः समभिहारे वुन्॥** 'प्रसृल्व' इति पञ्चम्याः स्थाने जस्, 'ओस्सुपि' इति यणादेशः। **साधुकारित्वं लक्ष्यत इति।** प्रायःसहचरितत्वात् पुनःपुनरनुष्ठानं समभिहारः, यश्च यां क्रियां पुनःपुनरनुतिष्ठति तस्य तत्र

**भावबोधिनी**

'च' के बल से ण्युट् की अनुवृत्ति होती है। 'ओहाक् त्यागे' और 'ओहाङ् गतौ' = 'हा' धातुओं से ण्युट् प्रत्यय होता है व्रीहि और काल के कर्ता रहने पर। उदा० हायनाः यह व्रीहि का वाचक है—जहति उदकम् = पानी को छोड़ देते हैं – यह विग्रह है। [ ओहाक् त्यागे हा + ण्युट् = यु = अन—हायनाः। ] काल अर्थ में—हायनः = संवत्सर। जिहीते भावान् = पदार्थों को जाता है, प्राप्त करता है—इस विग्रह में बनता है। [ ओहाङ् = हा + ण्युट् = यु = अन ]॥ १४८॥

प्र, सृ और लु—इन धातुओं से समभिहार [ = पुनः पुनः करना ] अर्थ में वुन् प्रत्यय होता है। उदा० प्रवकः। [ प्रु + वुन् = अक, गुण, अवादेश प्रवकः [ अच्छी तरह खूब चलने वाला ] सरकः [ सृ + वुन् = वु = अक, गुण, रपर। अच्छी तरह सरकने वाला। ] लवकः [ लु + वुन् = वु = अक, गुण, अव् आदेश। काटने वाला ]।

'समभिहार' के ग्रहण से यहाँ 'अच्छी प्रकार से' इस अर्थ की प्रतीति होती है। साधुकारी = अच्छी तरह

**भवति। बहुशो यो दुष्टं करोति तत्र न भवति ॥**

## ७६९. आशिषि च ॥ १५० ॥ ( २९१२ )

**आशिषि गम्यमानायां धातुमात्राद् वुन्प्रत्ययो भवति। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः = प्रार्थनाविशेषः। सा चेह क्रियाविषयः। अमुष्याः क्रियायाः कर्त्ता भवेदित्येवमाशास्यते ॥**

॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ तृतीयाध्यायस्य प्रथमः पादः ॥

—:०:—

**न्यासः**

**कारिणि वुन्विधानमिति।** साधुकारित्वोपलक्षणस्य फलं दर्शयति। **सकृदपीत्यादि।** अनन्तरस्यैव स्पष्टीकरणम् ॥ १४९॥

**आशिषि च॥ आशिषि गम्यमानायामिति।** न वाच्यायाम्। 'कर्त्तरि कृत्' इति कर्त्तुरेव प्रत्ययान्तवाच्यत्वात्। **धातुमात्रादिति।** धातुसामान्यविवक्षितत्वात्, प्रसृत्वाञ्च निर्वर्त्तितत्वात्। अन्यस्य चेह धातुविशेषस्यानाश्रयणात्। धातुमात्राश्रयो भवति, न तु कुतश्चिदेव विशेषात्। **जीवतात्, नन्दतादिति।** आशिषि लोट्प्रयोगेण जीवकनन्दयोस्तत्समानार्थतां दर्शयति। का पुनरियमाशीर्नामेत्याह—**आशीः प्रार्थनाविशेष इति।** अप्राप्तस्याभीष्टस्य वस्तुनः प्रार्थना = आशीः। **सा चेह क्रियाविषयेति।** क्रिया विषयोऽस्या इति बहुव्रीहिः। एष चार्थो धातुग्रहणात्, धातोश्च क्रियावाचित्वाद् विज्ञायते। **अमुष्याः क्रियाया इति।** जीवनक्रियाया नन्दनक्रियायाश्च कर्त्ता भवेदित्येवमाशास्यते - जीवनं नन्दनञ्च ते भूयादिति ॥ १५० ॥

**॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां तृतीयाध्यायस्य प्रथमः पादः ॥**

**पदमञ्जरी**

प्रायेण कौशलमुपजायते, अतः प्रायःसाहचर्यात्साधुकारित्वं लक्ष्यते, लक्षणया तत्र वर्त्तत इत्यर्थः, तेन किं सिद्धं भवतीत्याह—**सकृदपीति** ॥ १४९ ॥

**आशिषि च॥ आशिषि गम्यमानायामिति।** न वाच्यायाम्; कर्त्तरि कृत्' इति कर्त्तुरेव वाच्यत्वात्। **प्रार्थनाविशेष इति।** अप्राप्तस्याभिलषितस्य प्राप्तुमिच्छा प्रार्थना = आशीः। **स चेत्क्रियाविषय** इति। 'धातोः' इत्यधिकाराद्, धातोश्च क्रियावचनत्वात्। **अमुष्याः क्रियाया इति।** जीवनादिकायाः, अनेन प्रयोक्तृधर्मत्वमाशिषो दर्शयति। **जीवतादिति।** आशिषि लोट्प्रयोगेणोदाहरणे आशिषं दर्शयति ॥ १५० ॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य प्रथमः पादः ॥**

**भावबोधिनी**

करने वाला—इस अर्थ में वुन् का विधान हो चुका है अतः एक बार भी जो अच्छी तरह कर लेता है उसमें भी यह प्रत्यय होता है। और जो बहुत बार खराब करता है उसमें यह नहीं होता है। ] ॥ १४९ ॥

'आशीः' अर्थ की प्रतीति रहने पर धातुमात्र से 'वुन्' प्रत्यय होता है। उदा० जीवकः = जीवतात् [ जीवित रहे—इस आशीर्लिङ्ग में—जीव् + वुन् = अकः। ] नन्दतात् इस अर्थ में—नन्दकः। [ नन्द् + वुन् = अक। आनन्दित रहे। ] आशीः = प्रार्थना विशेष यह क्रियाविषयक होती है। इस [ वक्ता द्वारा कही गयी ] क्रिया का कर्त्ता बने—यह आशा की जाती है।

**विमर्श**—जब किसी के लिये शुभेच्छा रखते हुये भावी सुखादि की कामना से किसी क्रिया के कर्ता बनने की बात कही जाती है, तब 'आशीः' होता है। जैसे 'जीवतात्'—यहाँ 'जीवित रहना क्रिया का कर्ता बने' यह आशा की जाती है। इसी अर्थ में वुन् प्रत्यय होता है। यह सभी धातुओं से होता है ॥ १५० ॥

॥ इस प्रकार श्री जयादित्यविरचित काशिका वृत्ति में तृतीय अध्याय का प्रथम पाद समाप्त हुआ ॥

**॥ इस प्रकार जयशङ्करलाल त्रिपाठि विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के तृतीय अध्याय का प्रथम पाद समाप्त हुआ ॥**

—:०:—

# अथ तृतीयाध्याये द्वितीयः पादः

## ७७०. कर्मण्यण् ॥ १ ॥ ( २९१३ )

**त्रिविधं कर्म—निर्वर्त्यम्, विकार्यम्, प्राप्यं चेति। सर्वत्र कर्मण्युपपदे धातोरण्प्रत्ययो भवति। निर्वर्त्यं**

**न्यासः**

**कर्मण्यण् ॥ कर्मणीति** नेदं स्वरूपग्रहणम्; 'अशब्दसंज्ञा' इति प्रतिषेधात्। यदि च कर्मप्रदेशेषु स्वरूपमेव गृह्यते, तदा संज्ञाविधानमनर्थकं स्यात्; नापि क्रियाग्रहणम्, तस्य हि ग्रहणे 'कर्त्रभिप्राये' इति निर्देशो नोपपद्यते, क्रियाकर्मणो हि ग्रहणे क्रियावाच्युपपदे प्रत्ययेन भवितव्यम्, न चेह क्रियावाच्युपपदमस्ति; तस्मात् 'कर्त्तुरीप्सिततमं कर्म' इति कर्म गृह्यते। तस्य प्रभेदं दर्शयितुमाह—**त्रिविधमित्यादि**। तत्र **निर्वर्त्यं** यदसदेवोत्पपद्यते, यथा—कुम्भं करोति, नगरं करोतीति। कुम्भादिकं ह्यविद्यमानमेवोत्पद्यत इति निर्वर्त्यं कर्म। **विकार्यं** यस्य सत एव कश्चिद्विकारो विधीयते, तद् यथा—काण्डं लुनाति, नगरं लुनातीति। सत एव काण्डादेर्लवनेन विकारो विधीयत इति विकार्यं कर्म। **प्राप्यम्**—नासत एवोत्पादनं क्रियते, नापि सत एव विकाराधानम्, केवलं क्रिया-

**पदमञ्जरी**

**कर्मण्यण् ॥ कर्मणीति**। नेदं स्वरूपग्रहणम्; अशब्दसंज्ञा इति प्रतिषेधात्। ननु चार्थस्येयं सञ्ज्ञा न शब्दस्य, अशब्दसञ्ज्ञेति नैवं विज्ञायते—शब्दस्य सञ्ज्ञा शब्दसञ्ज्ञेति, किं तर्हि ? शब्दे संज्ञा शब्दसंज्ञेति। शब्दशब्देन शब्दानामनुशासनं व्याकरणमुच्यते, असति च बाधे कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तम्। तस्मात्पारिभाषिकस्य कर्मणो ग्रहणमङ्गीकृत्य तस्यावान्तरभेदमाह—**त्रिविधं कर्मेति**। ता एव तिस्रो विधा दर्शयति—**निर्वर्त्यं विकार्यं प्राप्यं चेति**। यदसज्जायते सद्वा जन्मना यत्प्रकाशते तन्निर्वर्त्यम्, यथा—कुम्भं करोति, पुत्रं प्रसूत इति। यस्य तु सत एव कश्चिद्विकारः क्रियते तद्विकार्यम्, स च विकारः क्वचित्प्रत्यक्षगम्यः, यथा—काष्ठानि भस्म करोति, सुवर्णं कुण्डलं करोतीति, क्वचिच्छास्त्रगम्यः—व्रीहीन् प्रोक्षतीति, अत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो जन्यत इति शास्त्रादेव गम्यते। एतावता च भेदेन संस्कार्यमेतत्कर्मेति चातुर्विध्यं मीमांसका मन्यन्ते। क्रियाकृतविशेषाभावे तु प्राप्यं कर्म, यथा—वेदमधीते, चर्चां पारयतीति। ननु न 'कर्त्तुरीप्सिततमम्' इत्येतदेव कर्म त्रिविधम्, अन्यदप्यस्ति 'तथायुक्तं चानीप्सितम्' इति, तच्च द्विविधम्—द्वेष्यमितरच्च; तथा 'अकथितं च', एवं 'दिवः कर्म च', तथा 'अधिशीङ्स्थासां कर्म' इति। तदेवमवान्तरभेदविवक्षायां सप्तविधं कर्म। उक्तं च—

> निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
> तत्रेप्सिततमं कर्म चतुर्धान्यत्तु सञ्ज्ञितम् ॥
> औदासीन्येन यत्प्राप्यं यच्च कर्त्तुरनीप्सितम्।
> सञ्ज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥ ( वा० प० ३.७.४५,४६ ) इति।

तत्किमुच्यते त्रिविधं कर्मेति ? केचिदाहुः—कर्त्तुरीप्सिततममेवात्र कर्म गृह्यतेऽन्यत्राण् न भवतीति। अन्ये त्वाहुः—आदित्यं पश्यतीत्यादौ मा भूदित्येवमर्थं कर्मणि निर्वर्त्यमाने विक्रियमाण इति वक्तव्यमित्याशङ्क्य

**भावबोधिनी**

कर्म तीन प्रकार के होते हैं—१. निर्वर्त्य, २. विकार्य और ३. प्राप्य। सभी प्रकार के कर्म उपपद रहने पर धातु-

**तावत्—कुम्भकारः, नगरकारः। विकार्यम्—काण्डलावः। शरलावः। प्राप्यम्—वेदाध्यायः। चर्चापारः। ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्यत्र न भवति; अनभिधानात् ( म० भा० )।**

**❀ शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ❀ ( म० भा० ३.२.१ वा० ८ )।**

**न्यासः**

सम्बन्धमात्रं प्रतीयते, तद्यथा—वेदमधीते, चर्चां पारयतीति। अत्र ह्यध्ययनादिना वेदादेः सम्बन्धमात्रं प्रतीयते, न त्वसत एवोत्पादनम्। नापि सत एवान्यथालक्षणो विकार इति प्राप्यमेतत् कर्म। **सर्वत्रेत्यादि**। त्रिप्रकारे विशेषानुपादानात्। 'कर्मण्युपपदे' इति नाभिधाने कुतो मा भूत्? 'कर्त्तरि कृत्' इत्यस्य बाधा इति।

**शीलिकामीत्यादि**। 'शील समाधौ' चुरादिर्ण्यन्तः। 'कमु कान्तौ' कमिर्णिङन्तः। 'भक्ष अदने', चुरादिर्ण्यन्तः'। 'चर गत्यर्थः' आङ्पूर्वः। इकारोऽस्य धातुनिर्देशार्थः। एभ्योऽणि प्राप्ते णो वक्तव्यः = व्याख्येयः।

**पदमञ्जरी**

वार्त्तिककारेणोक्तम्—कर्मणि निर्वर्त्त्यमाने विक्रियमाण इति चेद्वेदाध्यायानामुपसंख्यानमित्यादि। तदनेन प्रदर्श्यते त्रिविधमपि कर्म गृह्यते, न पुनः प्राप्यं न गृह्यत इति, न तु सूत्रान्तरोक्तं व्यावर्त्त्यते। तथा च 'दिवः कर्म च' इत्यत्र समावेशस्य प्रयोजनमुक्तम्—मनसा देव इत्यत्र कर्मत्वादण्, करणत्वात्तृतीयेति। एवं च वृक्षावासः पर्वताधिवास इत्याद्यपि यथादर्शनं भवतीति। **अनभिधानादिति**। तच्चानभिधानं यत्राप्तैरुक्तं तत्रैव। अन्यत्र तु यथालक्षणं भवत्येव, तथा च पठति—'यथालक्षणमप्रयुक्ते' इति।

**शीलिकामीत्यादि**। 'शील समाधौ' ( धा० पा० ५२३ ), 'भक्ष अदने' ( धा० पा० १५५७ ) चुरादिः, 'कमु कान्तौ' ( धा० पा० ४४३ ) णिङन्तः, 'चर गत्यर्थे' ( धा० पा० ५५९ ) आङ्पूर्वः; णस्य णित्करणं

**भावबोधिनी**

मात्र से अण् प्रत्यय होता है। १. निर्वर्त्य का उदाहरण—कुम्भकारः, नगरकारः [ घड़ा बनाने वाला, नगर बनाने वाला। कुम्भं करोति, नगरं करोति—में कुम्भम् उपपद कृ + अण् नगरम् उपपद कृ + अण्, ऋ की वृद्धि और रपर 'उपपदमतिङ्' ( पा. सू. २.२.१९ ) से उपपद समास, विभक्ति लोप, प्रातिपदिक संज्ञा और सु विभक्ति, इसका रुत्व विसर्ग करने पर रूप बनता है। ] २. विकार्य का उदा० काण्डलावः, शरलावः। [ काण्डं लुनाति, शरं लुनाति—इस विग्रह में काण्डम् उपपद + लु + अण्, शरम् उपपद लु + अण्, 'ऊ' की वृद्धि, आव् आदेश, उपपदसमास, विभक्तिलोप काण्ड काटने वाला, घास काटने वाला] ३. प्राप्य—वेदाध्यायः, चर्चापारः [वेदम् अधीते,—इस अर्थ में 'वेदम् उपपद + अधिइङ् + अण्, धातु की वृद्धि आय् आदेश, यण्, उपपद समास, विभक्तिलोप—वेद + अध्याय, सवर्णदीर्घ, प्रातिपदिक संज्ञा, विभक्तिकार्य। वेद पढ़नेवाला। चर्चां पारयति—इस विगह में चर्चाम् उपपद पारि + अण्, णिलोप, उपपद-समास, विभक्तिलोप आदि करने पर—चर्चापारः। चर्चा - शास्त्रविषयक वार्ता करने वाला ] ग्रामं गच्छति [ = गाँव जाता है ], आदित्यं पश्यति [ = सूर्य को देखता है ], हिमवन्तं श्रुणोति [ हिमालय को सुनता है ]—इनमें [ कर्म उपपद रहने पर भी अण् ] नहीं होता है, क्योंकि अनभिधान है। [ महाभाष्य में यह स्पष्ट है कि उक्त प्रकार के अर्थ में अण् प्रत्ययान्त शब्दों का प्रयोग नहीं होता है। अतः उनका अनभिधान समझना चाहिये। ]

**विमर्श**—वाक्यपदीय आदि में कर्मस्वरूप का प्रतिपादन करते हुये उनके सात भेद कहे गये हैं :—१. निर्वर्त्य, २. विकार्य, ३. प्राप्य, ४. ईप्सिततम, ५. अनीप्सित, ६, अकथित और ७. अधि पूर्वक शीङ, स्था, आस् आदि अधिकरण कर्मसंज्ञक होता है, इसी प्रकार के अन्य शब्द पूर्व में मानकर कर्म बनाये जाते हैं। काशिकाकार अवान्तर भेदों में रुचि नहीं रखते हैं। वास्तव में इन तीन प्रकार के कर्म उपपद मानकर उन्हीं से अण् करना चाहिये जिनका अभिधान भाष्यादि में किया गया है। अनभिधान और अभिधान लोकव्यवहार के आधीन है। अतः आप्त आचार्यों के प्रयोग देख कर यह निर्णय करना चाहिये।

❀ शीलि, कामि, भक्षि और आचारि–इन धातुओं से 'ण' प्रत्यय करना चाहिये और पूर्वपद का प्रकृतिस्वर

**मांसशीलः, मांसशीला । मांसकामः, मांसकामा । मांसभक्षः, मांसभक्षा । कल्याणाचारः, कल्याणाचारा ।**

**न्यासः**

तत्रेदं व्याख्यानम्—'ज्वलितिकसन्तेभ्यो णः' इत्यतो मण्डूकप्लुतिन्यायेन णोऽनुवर्त्तते, 'विभाषा ग्रहः' इत्यतश्च विभाषाग्रहणम्, द्वावपीह कर्मण्युपपदे णाणौ विधीयेते । अत्र विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच् शीलीत्यादिभ्यो ण एव भविष्यतीति, परिशिष्टेभ्यस्त्वणेवेति । एतयोस्तु स्त्रियां विशेषः—अणि हि ङीब् भवति, णे तु टाप् । णकारः 'अचो ञ्णिति' वृद्ध्यर्थः । **पूर्वपदप्रकृतिस्वरत्वञ्चेति** । 'गतिकारकोपपदानां कृत्' इत्युत्तर-पदप्रकृतिस्वरत्वे प्राप्ते पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यम्=व्याख्येयम् । तत्रेदं व्याख्यानम्-'तत्पुरुषे तुल्यादौ' सूत्रे 'तत्पुरुषे' इति योगविभागः कर्त्तव्यः, तेन मांसशीलादिभ्यः पूर्वपदप्रकृतिस्वरत्वञ्च भविष्यतीति । मांसशब्दोऽन्तोदात्तः—'वृतॄवदिहनिकमिकषिभ्यः सः' इत्यनुवर्त्तमाने 'मनेर्दीर्घश्च' इति सप्रत्ययान्तत्वात्प्रत्ययस्वरेण । कल्याणशब्दो मध्योदात्तः–'लघावन्ते द्वयोश्च बह्वषो गुरुः' इत्यनेन । अस्यायमर्थः—अन्ते लघौ परतो द्वयोश्चान्तयोर्लघ्वोः परतो बह्वच्शब्दस्य यो गुरुः स उदात्तो भवति । 'बह्वष्' इति बह्वजित्यर्थः । ननु च शील्यादिभ्यः कर्मणि घञं कृत्वा तदन्तेन बहुव्रीहौ कृते सिध्यत्येव मांसशीलादि, तत् किं णविधानेन ? नैतदस्ति; बहुव्रीहौ सति बहुभक्षा इत्यत्र 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्युत्तरपदान्तोदात्तत्वं स्यात् । अवश्यञ्चाण्बाधनार्थो णो वक्तव्यः, अन्यथा हि यदा 'मांसं कामयते' इतीदं वाक्यं भवति तदाऽणपि स्यात् ।

**पदमञ्जरी**

**चरेर्वृद्ध्यर्थम् । पूर्वपदप्रकृतिस्वरत्वं चेति ।** कृदुत्तरपदप्रकृतिस्वरस्यापवादः । **मांसशीलेति** । अत्राणि सति ङीप्स्यात्, णेऽपि क्वचिदण्कृतं भवतीत्येतत्तु ताच्छीलिक एव णे भवति । 'मनेर्दीर्घश्च' ( दश० उ० ९.२३ ) इति सप्रत्ययान्तो मांसशब्दः । कल्याणशब्दः 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः । अस्यायमर्थः—अन्ते लघोः परतो द्वयोश्चान्तयोर्लघ्वोः परतो बह्वषः शब्दस्य यो गुरुः स उदात्तो भवति । बह्वष इति बह्वच इत्यर्थः । 'अष्' इत्यचः पूर्वाचार्यसञ्ज्ञा ।

**भावबोधिनी**

भी कहना चाहिये । ※ [ यहाँ 'इ' प्रत्यय धातु के निर्देश के लिये है । अतः उसका लोप हो जाता है । ] उदा० मांसशीलः, मांसशीला । [ मांसं शीलयति—यह विग्रह । 'शील समाधौ' चुरादिगणीय है । मांसम् उपपद शील्+ण= अ, उपपद समास, विभक्तिलोप—प्रातिपदिकसंज्ञाप्रयुक्तकार्य—मांसशीलः । स्त्रीलिङ्ग में टाप्—मांसशीला ] मांसकामः मांसकामा । [ मांसं कामयते—इस अर्थ में मांसम् उपपद णिङन्त कामि (=कमु कान्तौ, कमेर्णिङ्) + ण=अ, णिलोप, उपपदसमास, विभक्तिलोप—मांसकामः, स्त्रीलिंग में टाप्—मांसकामा । मांस चाहनेवाला और मांस चाहने वाली ] मांसभक्षः, मांसभक्षा [ मांसं भक्षयति—इस विग्रह में मांसम् उपपद भक्षि+ण्-अ, णिलोप, उपपदसमास, विभक्ति लोप—मांसभक्षः स्त्रीलिङ्ग में टाप्—मांसभक्षा । मांस खानेवाला, मांस खाने वाली । ] कल्याणाचारः कल्याणा-चारा । [ कल्याणम् आचरति—इस अर्थ में कल्याणम् उपपद आ चार्+ण=अ, उपधावृद्धि, उपपदसमास, विभक्तिलोप, दीर्घ, स्त्रीलिंग में टाप्=कल्याणाचारः, कल्याणचारा [ कल्याणकारी आचरण करने वाला और कल्याणकारी आचरण करने वाली । ]

[ अण् करने पर स्त्रीलिङ्ग में 'टिड्ढाणञ्' ( पा० सू० ४।१।१५ ) से ङीप् प्राप्त होता है । वह न हो, टाप् हो । इसके लिये 'ण' प्रत्यय किया गया है । ]

**ॐ ईक्षिक्षमिभ्यां चेति वक्तव्यम् ॐ ( वा० ९ ) । सुखप्रतीक्षः, सुखप्रतीक्षा । बहुक्षमः, बहुक्षमा ॥**

**न्यासः**

**ईक्षिक्षमिभ्याञ्चेति** । 'ईक्ष दर्शने', 'क्षमु सहने'—आभ्यां णो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु पूर्ववदेव कर्त्तव्यम् ॥ १ ॥

**पदमञ्जरी**

**ईक्षिक्षमिभ्यां चेति** । अत्रापि पूर्वपदप्रकृतिस्वरत्वं चेत्येव, वाक्यभेदस्तु वैचित्र्यार्थः । इह यो मासं भक्षयति मांसं तस्य भक्षो भवति, तत्र भक्षयतेः कर्मण्येरजन्तस्य बहुव्रीहिणा सिद्धम् । एवमन्यत्रापि । यः पुनरण्यन्तस्तस्य घञन्तस्य बहुव्रीहिः, नार्थ एतेन । ननु बहुभक्ष इत्यत्र बहोर्नञ्वदित्युत्तरपदान्तोदात्तत्वं एवं प्राप्नोति ? तर्हि भावेऽजन्तेन व्यधिकरणपदो बहुव्रीहिर्भविष्यति–बहुषु भक्षोऽस्य बहुभक्ष इति, तत्रोत्तरपदार्थस्य बहुत्वाभावाद्बहुस्वरो न भविष्यति ? सत्यम्; अण्बाधनार्थं तु वचनम्, अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन । पचादिभ्योऽच्, अनुपपदोऽकारस्तस्यावकाशः—पचतीति पचः, कर्मोपपदस्यावकाशः—काण्डलावः शरलावः; ओदनपाव इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति । तेनोपधावृद्धिः, उपपदसमासश्च नित्यो भवति । अचि तु षष्ठीसमासो विकल्पितः स्यात् । न च वाच्यं युगपद्विवक्षायां भवतु विप्रतिषेधः, केवले पच्यर्थे विवक्षितेऽचि कृते पश्चादोदनसम्बन्धे विवक्षिते ओदनपच इत्यपि प्राप्नोति ? एकत्वात्प्रयोगस्य । न हि तस्मिन्नेव प्रयोगे विवक्षितं चाविवक्षितं च कर्म भवति । तस्मादोदनपच इत्यसाधुरेव । गङ्गाधरः, श्रीधरः, वज्रधरः, भूधरः, स्रग्धरेति तु सञ्ज्ञाशब्दाः । यदा त्वजपि सर्वधातुभ्य इति पक्षः, तदापवादत्वादेव तस्याण् बाधकः । तथा 'इगुपधज्ञाप्रीकिरः कः' अनुपपदस्तस्यावकाशः—विक्षिपः, विलिखः, कर्मोपपदस्य स एव, काष्ठभेद इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति । तथा 'अनुपसर्गाल्लिम्पविन्द' इत्यनुपपदः शस्तस्यावकाशः—लिम्पतीति लिम्पः, कर्मोपपदस्य स एव; कुड्मलेप इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति । 'आतश्चोपसर्गे' इति कोऽनुपपदस्तस्यावकाशः—सुग्लः सुम्लः, कर्मोपपदस्य स एव; गोसन्दाय इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति ॥ १ ॥

**भावबोधिनी**

* ईक्ष् और क्षम् इनसे भी 'ण' प्रत्यय कहना चाहिये । ॐ उदा० सुखप्रतीक्षः सुखप्रतीक्षा [ सुखं प्रतीक्षते—इस विग्रह में सुखम् उपपद प्रति ईक्ष् धातु से ण = अ प्रत्यय, उपपदसमास विभक्तिलोप, सुख + प्रति + ईक्ष् = सवर्ण दीर्घ, प्रातिपदिक-सम्बन्धी कार्य, सुखप्रतीक्षः, स्त्रीलिङ्ग में टाप्—सुखप्रतीक्षा । सुख की प्रतीक्षा करने वाला और सुख की प्रतीक्षा करने वाली । ] बहुक्षमः बहुक्षमा । [ बहु क्षमते—इस विग्रह में ण = अ प्रत्यय उपपद-समास, विभक्तिलोप, स्त्रीलिङ्ग में टाप् । बहुत सहन करने वाला, और बहुत सहन करने वाली । ]

**विमर्श**—ऊपर कर्म के तीन भेद प्रदर्शित किये गये हैं । १. जो अविद्यमान होने वाला उत्पन्न होता है अथवा विद्यमान होता हुआ जन्म से प्रकाशित होता है, उसे 'निर्वर्त्य' कहते हैं । जैसे—घटं करोति । अविद्यमान घट को उत्पन्न करता है । ] पुत्रं प्रसूते । [ सूक्ष्म रूप से विद्यमान या उदर में विद्यमान पुत्र को जन्म देकर प्रकट रूप में लाती है । ये दोनों 'निर्वर्त्य' है । २. जो विद्यमान होता हुआ ही किसी विकार को प्राप्त करता है, वह विकार कभी प्रत्यक्षगम्य होता है और कभी शास्त्रगम्य । उस कर्म को 'विकार्य कहते हैं । जैसे—काष्ठानि भस्मं करोति । सुवर्णं कुण्डलं करोति । यहाँ एक वस्तु दूसरा रूप धारण करती है । किन्तु 'व्रीहीन् प्रोक्षति' यहाँ पर 'प्रोक्षण संस्कार' द्वारा व्रीहि में कोई अतिशय उत्पन्न कराया जाता है । और यह ज्ञान शास्त्र से ही होता है । अतः इसे 'विकार्य' कहा जाता है । ३. जहाँ क्रियाकृत कोई विशेष = अन्तर नहीं होता है उसे 'प्राप्य' कर्म कहा जाता है । जैसे—वेदम् अधीते, चर्चां पारयति । यहाँ अध्ययन क्रिया से 'वेद' रूप कर्म में कोई 'विशेष' उत्पन्न नहीं होता है । अतः इसे 'प्राप्य' समझना चाहिये । और भेदों का उल्लेख पहले किया जा चुका है ॥ १ ॥

**७७१. ह्वावामश्च ॥ २ ॥ ( २९१४ )**

'**ह्वेञ् स्पर्द्धायां शब्दे च**' ( धा० पा० १००९ ), '**वेञ् तन्तुसन्ताने**' ( धा० पा० १००७ ), '**माङ् माने**' ( धा० पा० १०८९ ) इत्येतेभ्यश्च कर्मण्युपपदेऽण् प्रत्ययो भवति। कप्रत्ययापवादः। स्वर्गह्वायः। तन्तुवायः। धान्यमायः॥

**७७२. आतोऽनुपसर्गे कः ॥ ३ ॥ ( २९१५ )**

**न्यासः**

**ह्वावामश्च** ॥ '**ह्वेञ् स्पर्द्धायाम्**' '**वेञ् तन्तुसंताने इति**। अथ 'वा गतिगन्धनयोः' इत्यस्य ग्रहणं कस्मान्न भवति ? अकर्मकत्वात्। कर्मणि चेहानुवर्त्तते। **माङ् माने इति**। ङकारानुबन्धवतो मा इत्यस्योपलक्षणार्थमेतत्। 'मेङ् प्रणिदाने' इत्यस्यापि ग्रहणमिष्यते; 'गामादाग्रहणेष्वविशेषः' इति वचनात्। ननु यदि गामादाग्रहणेष्वविशेषस्तदा 'मीञ् हिंसायाम्' 'डुमिञ् प्रक्षेपणे' इत्येतयोरपि ग्रहणं प्राप्नोति, यस्मात् 'मीनातिमिनोतिदीङां ल्यपि च' इति तयोरप्येज्विषय आत्त्वे कृते मेत्येतद्रूपं सम्पद्यते ? भवत्येवाभ्यामणेवेति पूर्वसूत्रेण प्राप्तस्य। **स्वर्गह्वाय इति**। 'आतो युक् चिण्कृतोः' इति युक् ॥ २ ॥

**आतोऽनुपसर्गे कः** ॥ **अनुपसर्ग इति**। व्यत्ययेन पञ्चमीप्रसङ्गेऽपि सप्तमी। धातुविशेषणञ्चैतत्। आत

**पदमञ्जरी**

**ह्वावामश्च** ॥ **वेञ् तन्तुसन्ताने इति**। 'वा गतिगन्धनयोः' ( धा० पा० १०५० ) इत्यस्य ग्रहणं न भवति; अकर्मकत्वात्। भ्रमणार्थो ह्यसौ—सर्वा दिश आवाति, 'वात आवातु भेषजम्' ( ऋ० १०·१८६·१ ) इति। सोपसर्गस्य तु सकर्मकत्वेऽप्यग्रहणम्; पूर्वेणैवाणः सिद्धत्वात्। 'वाता वान्तु दिशो दश' ( अथर्व० ४·१५·८ ) इति प्रयोगश्चिन्त्यः। अथापि क्वचित्कथञ्चित्सकर्मकत्वम्, तथापि ह्वेञा साहचर्यात्सानुबन्धकस्यैव वेञो ग्रहणम्। **माङ् माने इति**। ङितो मारूपस्योपलक्षणमेतत्, तेन 'मेङ् प्रणिदाने' ( धा० पा० ९६१ ) इत्यस्यापि ग्रहणम्। 'मा माने' ( धा० पा० १०६२ ) इत्यस्य तु संभावनार्थस्याकर्मकत्वादग्रहणम् ॥ २ ॥

**आतोऽनुपसर्गे कः** ॥ कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः। संप्रसारणभाजः = प्रसारणिनः। 'ज्या वयोहानौ' ( धा० पा० १४९९ ) ब्रह्म जिनातीति ब्रह्मज्यः, सर्वत्रग्रहणान्नावश्यमिहैव 'आतश्चोपसर्गे' आह्वः प्रह्वः, के हि संप्रसारणप्रसङ्गः, आह्व अ इति स्थिते संप्रसारणे पूर्वत्वे च कृते उवङादेशे आहुवः प्रहुव इति प्राप्नोति, एवं ब्रह्मजिय इति प्राप्नोति। ननु संप्रसारणे कृते आतो लोपस्तस्य स्थानिवद्भावादियङुवङौ न भविष्यतः, लोपो न सिद्ध्यति—अन्तरङ्गत्वात् पूर्वत्वं प्राप्नोति, समानाश्रये च 'वार्णादाङ्गं बलीय' ( व्या० परि०

**भावबोधिनी**

(१) 'ह्वेञ्' धातु स्पर्धा और शब्द अर्थ में हैं। (२) 'वेञ्' धातु तन्तुसन्तान = बुनना अर्थ में हैं। (३) 'माङ्' धातु मान=तौलना अर्थ में है। इन धातुओं से कर्म' उपपद रहते 'अण्' प्रत्यय होता है। यह [ अग्रिम सूत्र से प्राप्त ] 'क' प्रत्यय का अपवाद है। उदा० स्वर्गह्वायः [ स्वर्गम् ह्वयते—इस विग्रह में अण् प्रत्यय 'आदेच उपदेशऽशिति सूत्र से 'ए' का आत्व उपपद-समास, विभक्तिलोप – स्वर्गह्वा + अ, 'आतो युक् चिण्कृतोः' सूत्र से युक् = य् आगम—स्वर्ग ह्वा + य् + अ। स्वर्ग को बुलाने वाला ] तन्तुवायः। [ तन्तून् वयति—इस अर्थ में अण् प्रत्यय, उपपदसमास, विभक्तिलोप —तन्तु + वे + अ, 'ए' का आत्व, युक् आगम—तन्तु वा य् अ=तन्तुवायः। कपड़ा बुननेवाला जुलाहा। ] धान्यमायः। [ धान्यं मायते—इस दिवादिगणीय धातु के प्रयोग में अण् प्रत्यय, उपपदसमास, विभक्तिलोप—धान्यमा + अ, युक् = य् आगम— धान्यमायः। अनाज तौलने वाला ] ॥

**आकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गोदः। कम्बलदः। पार्ष्णित्रम्। अङ्गुलित्रम्।**

**अनुपसर्ग इति किम्? गोसंदायः। वडवासंदायः ( ३.२.१ )॥**

## ७७३. सुपि स्थः ॥ ४ ॥ ( २९१६ )

**सुबन्त उपपदे तिष्ठतेः कप्रत्ययो भवति। समस्थः। विषमस्थः।**

**न्यासः**

एवाह—**आकारान्तेभ्योऽनुपसर्गेभ्य** इति च। **गोद** इति। पूर्ववदाकारलोपः। **पार्ष्णित्रमिति**। 'त्रैङ् पालने' ॥ ३ ॥

**सुपि स्थः** ॥ सुपीति ग्रहणात् कर्मणीति न सम्बध्यते, तिष्ठतेरकर्मकत्वाच्च। **समस्थ** इत्यादौ सप्तम्यन्त उपपदे कः प्रत्ययः।

**पदमञ्जरी**

३९ ) इति? एवं तर्हि प्रागेव संप्रसारणादातो लोपो भविष्यति, परत्वाद् नित्यं संप्रसारणम्, कृताकृतप्रसङ्गित्वात्; आतो लोपस्त्वनित्यः, कृते संप्रसारणे पूर्वत्वेन बाध्यते—यस्य च निमित्तं लक्षणान्तरेण विहन्यते तदनित्यम्। तदेवं परत्वादातो लोपः, ततः संप्रसारणम्, तत इयङुवङौ प्रसक्तावाल्लोपस्य स्थानिवत्त्वान्न भविष्यतः। ननु योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः, आदिष्टाच्चैषोऽचः पूर्वम्—इदानीमेव ह्युक्तं पूर्वमल्लोपः पश्चात् संप्रसारणमिति? एवं तर्ह्याकारलोपस्यासिद्धत्वादुवङ् न भविष्यति। इहापि तर्हि जुहुवतुः जुहुवुः, आल्लोपस्यासिद्धत्वादुवङ् न प्राप्नोति? आभीयमसिद्धत्वमनित्यमित्यत्र न भविष्यति। अथ वा 'संप्रसारणाच्च' 'एङः पदान्तात्' इत्यत्र एङ इति योगविभागः—संप्रसारणादेङि परतः पूर्वपरयोः पूर्वमेकादेशो भवतीति। किमर्थमिदम्, न 'संप्रसारणाच्च' इत्येव सिद्धम्? ज्ञापनार्थम्—यत्र संप्रसारणात्पर एङ् संभवति तत्र 'आदेच उपदेशेऽशिति' इत्यात्वं न भवतीति। यदि स्यात्पूर्वत्वेन तस्य निवृत्तिविधानमनुपपन्नं स्यात्। तेन जुहुवतुरित्यत्रानैमित्तिकत्वेनान्तरङ्गमप्यात्वमकृत्वा एङ्भावादेव लिटि विहिते संप्रसारणे पूर्वत्वे न स्थानिवत्त्वं नासिद्धत्वमिति सिद्धमिष्टम्। आह्वः, प्रह्वः, ब्रह्मज्य इत्यत्र त्वाकारान्तलक्षणः प्रत्ययो नासत्यात्वे भवितुमर्हतीति पूर्वमात्वम्, ततः प्रत्ययः, आल्लोपः, संप्रसारणम्, असिद्धत्वादियङुवङोरभावः ॥ ३ ॥

**सुपि स्थः** ॥ सुपीति न सप्तमीबहुवचनस्य ग्रहणम्, किं तर्हि? प्रत्याहारस्य; 'सुप्तिङन्तं पदम्' 'सुप

**भावबोधिनी**

आकारान्त उपर्गरहित धातु से, कर्म उपपद रहते 'क' प्रत्यय होता है। यह सामान्य अण् का अपवाद है। उदा०—गोदः। [ गां ददाति—इस अर्थ में 'गाम्' उपपद 'दा' से क=अ प्रत्यय, उपपद समास, विभक्तिलोप, गोदा + अ, "आतो लोप इटि च" से 'आ' का लोप प्रातिपदिकसंज्ञा और विभक्तिकार्य—गोदः=गाय देने वाला ' ] कम्बलदः। [ कम्बल देने वाला। कम्बलं ददाति—यह विग्रह है। ] पार्ष्णित्रम्। [ पार्ष्णि त्रायते—यह विग्रह है। पैर के मूल भाग की रक्षा करने वाला। पार्ष्णि = पादमूलभाग। क प्रत्यय और उपपदसमास करने पर—पार्ष्णित्रै + अ, 'आदेच उपदेशेऽशिति' सूत्र से 'ऐ' का 'आ' त्रा और 'आ' का लोप कर देने पर पार्ष्णित्र् अ ] अङ्गुलित्रम्। [ अङ्गुलिं त्रायते—यह विग्रह है। शेष प्रक्रिया पूर्ववत्, अङ्गुलि की रक्षा करने वाला। ]

उपसर्गरहित होने पर—इसका क्या फल है? गोसन्दायः। [ गाय का दान करने वाला। गां सन्ददाति—इस विग्रह में उपसर्ग पूर्व होने के कारण 'क' न होकर 'कर्मण्यण्' सूत्र से अण् होता है, उपपदसमास, विभक्ति का लोप गो सम् दा + अ, "आतो युक् चिण्कृतोः' सूत्र से युक्=य् आगम, गो सम् दा य् अ, म् का अनुस्वार परसवर्ण—गोसन्दायः इसीप्रकार वडवा सन्ददाति में ] वडवासन्दायः। [ घोड़ी देने वाला। ] ॥ ३ ॥

सुबन्त उपपद रहते 'स्था' धातु से 'क' प्रत्यय होता है। उदा०—समस्थः, विषमस्थः [ समे तिष्ठति, विषमे तिष्ठति—इन विग्रहों में 'समे' और 'विषमे' को उपपद मानकर 'स्था' धातु से 'क'=अ प्रत्यय होता है। यहाँ कर्म को उपपद नहीं समझना चाहिये। ]

**अत्र योगविभागः कर्त्तव्यः—सुपीति । सुप्याकारान्तेभ्यः कप्रत्ययो भवति । द्वाभ्यां पिबतीति द्विपः । पादपः । कच्छपः ।**

**ततः स्थ इति । स्थश्च सुपि कप्रत्ययो भवति ।**

**किमर्थमिदम् ? कर्तरि पूर्वयोगः, अनेन भावेऽपि यथा स्यात्—आखूनामुत्थानम्—आखूत्थः[1] । शलभोत्थः ।**

**इत उत्तरं कर्मणीति ( ३.२.१ ) च सुपीति च द्वयमप्यनुवर्तते । तत्र सकर्मकेषु धातुषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति ॥**

**न्यासः**

**अत्रेत्यादि** । सुपीत्येको योगः, तत्र चात इत्यनुवर्त्तते । **सुपीत्यादिनास्य** योगस्यार्थमाचष्टे । **ततः स्थ इति** । द्वितीयो योग इति । **स्थश्च सुपीति** विवरणम् ।

**किमित्यादि** । पूर्वेण सिद्धमिति मन्यमानस्य प्रश्नः । **भावेऽपि यथा स्यादिति** । आरम्भसामर्थ्यात् कर्त्तरि तावन्न भविष्यति । न चार्थान्तरं निर्दिश्यते, तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भाव एव स्यात् । स एव हि धातूनां स्वार्थः । **आखूत्थमिति** । 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः ॥ ४ ॥

**पदमञ्जरी**

आत्मनः क्यच्', 'सुपो धातुप्रातिपदिकयोः', 'अव्ययादाप्सुपः' इत्यादौ तस्यैव प्रसिद्धत्वात् । **द्वाभ्यां पिबतीति** । ननु रूढिशब्दा द्विपादयः, ततश्चासन्तमप्यवयवामार्थमाश्रित्य कर्मोपपद एव कः करिष्यते ? नैतदेवम्; द्वाभ्यां पिबतीत्यादेरवयवार्थस्य सम्भवतोऽपरित्यागेनैव व्युत्पत्तौ सम्भवत्यामस्याः कल्पनाया अयुक्तत्वात् । यत्र त्वत्यन्तमसम्भवः, युक्ता तत्रैव सा कल्पना, यथा-तैलतपायिकादौ । **अनेन भावेऽपि यथा स्यादिति** । आरम्भसामर्थ्यात्तावदयं कर्त्तुरपकृष्यते, न चान्योऽर्थो निर्दिश्यते । अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति, स्वार्थश्च धातूनां भाव एव । ननु 'घञर्थे कविधानम्' ( वा० ३०६ ) इति भावे कः सिद्धः ? सत्यम्; नित्यसमासार्थन्तु वचनम्, अन्यथा पाक्षिकः षष्ठीसमासः स्याद् । नित्य एव तूपपदसमासो भवति, तथा चाखूनामुत्थानमित्यस्वपदेन विग्रहः कृतः । घञर्थे कविधानमित्यत्र स्थग्रहणं कर्तृवर्जिते कारकेऽपि यथा स्यादिति ॥ ४ ॥

**भावबोधिनी**

इस सूत्र में योगविभाग करना चाहिये—सुपि । इसका अर्थ है—सुबन्त उपपद रहते आकारान्त धातु से 'क' प्रत्यय होता है । उदा०—द्वाभ्यां पिबति इस विग्रह में—द्विपः । [ हाथी ] द्वाभ्याम् उपपद 'पा' धातु से 'क'=अ प्रत्यय ] पादपः [ पादेन = मूलेन पिबति इस विग्रह में 'पादेन' उपपद 'पा' से 'क' प्रत्यय । पादपः=वृक्ष । ] कच्छपः [ कच्छाभ्यां पिबति—इस विग्रह में 'क' प्रत्यय होता है । कछुआ । ]

इसके बाद दूसरा योग है—'स्थः' । और सुबन्त उपपद रहते 'स्था' धातु से 'क' प्रत्यय होता है ।

यह योग किसलिये है ? पहले वाला योग [ सुपि यह ] कर्ता अर्थ में होता है । इस दूसरे योग से भाव में भी प्रत्यय हो सकेगा—आखूनाम् उत्थानम्—इस अर्थ में—आखूत्थः [ आखूनाम् उपपद उद् + स्था' से क=अप्रत्यय, आलोप, "उदः स्थास्तम्भोः" सूत्र से 'स्' का पूर्वसवर्ण 'थ' और इसका चर्त्व करने पर 'त' उत्त्थः, उपपद समास और विभक्तिलोप कर देनेपर आखु + उत्थः में सवर्णदीर्घ—आखूत्थः । चूहों का उठना—यह भाव अर्थ है । इसी प्रकार शलभानाम् उत्थानम्—इस अर्थ में ] शलभोत्थः [ पतंगों का उठना । यहाँ भी शलभानाम् उपपद उद् + स्था + क, शेष पूर्ववत् होता है । ]

इस सूत्र के आगे 'कर्मणि' और 'सुपि' [=सुबन्त कर्म उपपद रहते ]—इन दोनों की अनुवृत्ति होती है । इन दोनों में जहाँ सकर्मक धातुयें हैं वहाँ 'कर्मणि' इसकी अनुवृत्ति होती है और अकर्मक धातु स्थल में 'सुपि' की अनुवृत्ति होती है ॥ ४ ॥

---

१, आखूत्थमिति न्यायसम्मतः पाठः ।

## ७७४. तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥ ( २९१९ )

**तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः कप्रत्ययो भवति। तुन्दपरिमृज आस्ते। शोकापनुदः पुत्रो जातः ( म० भा० )।**

**❀ आलस्यसुखाहरणयोरिति वक्तव्यम् ❀ ( म० भा० ३.२.५ वा० १ )। अलसस्तुन्दपरिमृज उच्यते। तुन्दपरिमार्ज एवान्यः। सुखस्याहर्त्ता शोकापनुदः। शोकापनोद एवान्यः।**

**❀ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ❀ ( म० भा० ३.२.५ वा० २ ) मूला न विभुजतीति मूल-**

### न्यासः

**तुन्दशोकयोः परिमृजापनुदोः ॥ परिमृजापनुदोरिति** सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी। 'मृजू शुद्धौ' परिपूर्वः। 'नुद प्रेरणे' अपपूर्वः। **आलस्येत्यादि**। प्रत्ययार्थोपाधिरयम्। अलस एवालस्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। आहरतीत्याहरणः। 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्। सुखस्याहरणः सुखाहरणः। आलस्यकर्त्तरि सुखस्याहरणेऽनेन को भवति, नान्यत्रेत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—अत्रापि पूर्ववद् विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा। तेनालस्यसुखाहरणयोरेव कर्त्रोः को भवति, नान्यत्रेति। **तुन्दपरिमार्ज एवान्य इति**। अनालस्ये त्वण् भवति। 'मृजेर्वृद्धिः'। **शोकापनोद इति**। यः प्रतिपक्षोपदेशेन शोकं केवलमपनुदति, न तु सुखमुत्पादयति। अत्राणेव तु भवति।

**कप्रकरण इत्यादि**। मूलविभुजादिभ्यस्तदर्थे चतुर्थी। आदिशब्दः प्रकारवचनः। मूलविभुजाद्यर्थं मूलविभुजादयः साधवो यथा स्युरित्येवमर्थं कप्रत्ययस्योपादानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—'ह्वावामश्च' इत्यतः 'आतोऽनुपसर्गे कः' इत्यत्र चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन मूलविभुजादिभ्यः

### पदमञ्जरी

**तुन्दशोकयोः परिमृजापनुदोः ॥ तुन्दपरिमृज इति**। मृजेरजादौ संक्रम इत्यत्र 'यस्मिन्विधिस्तदादौ' ( वा० १४ ) इत्येव सिद्धे आदिग्रहणं मुख्याजादिपरिग्रहार्थम्, तेन व्यपदेशिवद्भावेनाजादावत्र के वृद्धिर्न भवति।

**आलस्य इत्यादि**। आलस्ये गम्यमाने सुखोत्पादने च प्रत्यय इत्यर्थः। तत्र सामर्थ्यादलसे कर्त्तरि सुखस्य चाहर्तरि प्रत्ययो भवतीत्युक्तं भवति। **शोकापनोद एवान्य इति**। यस्संसारानित्यताद्युपदेशेन शोकमेव केवलमपनुदति, न तु सुखमुत्पादयति स शोकापनोदः। **मूलविभुजादिभ्य इति**। तादर्थ्य एषा चतुर्थी, मूलविभुजादि-

### भावबोधिनी

'तुन्द' और 'शोक' इन कर्मों के उपपद रहते 'परिमृज' और 'अपनुद' इन धातुओं से 'क' = अ प्रत्यय होता है। उदा० तुन्दपरिमृजः आस्ते। [ तुन्दं परिमार्ष्टि—इस अर्थ में 'तुन्दम्' उपपद परिमृज् + क = अ, कित् होने से गुण और वृद्धि का निषेध, उपपद समास, विभक्तिलोप तुन्दपरिमृजः = केवल बैठ कर तोंद सहलाने वाला = आलसी बैठा रहता है। ] शोकापनुदः पुत्रः जातः [ शोकम् अपनुदति—इस अर्थ में पूर्ववत् 'क' = अ प्रत्यय आदि कार्य होते हैं। शोक दूर करने वाला आनन्द लाने वाला पुत्र पैदा हुआ। ]

❀ आलस्य और सुख उत्पन्न कराना—इन्हीं अर्थों में होता है – ऐसा कहना चाहिये।'' ❀ आलस = आलसी तुन्दपरिमृजः ऐसा कहा जाता है इससे भिन्न अर्थ में तो अण् ही होता है—तुन्दपरिमार्जः। [ अण् करने पर 'मृजेर्वृद्धिः' सूत्र से वृद्धि और रपर होता है। ] सुख का आहर्ता = लाने वाला—'शोकापनुदः' कहा जाता है। इससे भिन्न अर्थ में तो—शोकापनोदः [ अण् होता है। अतः उपधा का गुण करने से 'नोद' बनता है। ]

❀ 'क' प्रत्यय के प्रकरण में 'मूलविभुज' आदि का उपसंख्यान करना चाहिये। ❀ उदा० मूलानि विभुजति—इस विग्रह में—मूलविभुजः रथः। मूलानि उपपद विभुज् + क = अ, उपपद समास, विभक्तिलोप, कित् होने से

**विभुजो रथः । नखमुचानि धनूंषि । काकगुहास्तिलाः । कौ मोदते कुमुदम् ॥**

**७७९. प्रे दाज्ञः ॥ ६ ॥ ( २९२० )**

**सोपसर्गार्थ आरम्भः । ददातेर्जानातेश्च धातोः प्रेणोपसृष्टात्कर्मण्युपपदे कप्रत्ययो भवति । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः ।**

**प्र इति किम् ? गोसंदायः ॥**

**न्यासः**

कप्रत्ययो भविष्यतीति । मूलं विभुजति । 'भुज कौटिल्ये' । नखानि मुञ्चन्तीति नखमुचानि । 'मुच्लृ मोक्षणे' । **काकगुहास्तिला इति** । 'गुहू संवरणे' । काकेभ्यो गूहितव्याः । तव्यदाद्यपवादः कर्मणि कः । **कौ मोदते कुमुदमिति** । तृजाद्यपवादः ॥ ५ ॥

**प्रे दाज्ञः ॥ सोपसर्गार्थ आरम्भ इति** । अनुपसर्गाद् 'आतोऽनुपसर्गे कः' इत्येवं सिद्धत्वात् । **ददातेरिति** । दारूपाणां धातूनामुपलक्षणमेतत् । अन्येषामपि दारूपाणां ग्रहणमिष्यते; 'गामादाग्रहणेष्वविशेषः' इति वचनात् । **प्रेणोपसृष्टादिति** । प्रेणोपसर्गेण सम्बद्धादित्यर्थः । सूत्रे 'प्रे' इति सुब्व्यत्ययेन तृतीयार्थे सप्तमी वेदितव्या । **पथिप्रज्ञ इति** । पन्थानं प्रजानातीत्यर्थः ॥ ६ ॥

**पदमञ्जरी**

सिद्धयर्थमित्यर्थः । आकृतिगणश्चायम्, तेन महीध्र-कुध्र-शिरोरुहादिसिद्धं भवति । **काकगुहा इति** । काकेभ्यो गूहितव्या इति कर्मणि कप्रत्यय इष्यते, अतो घञर्थे कविधानमित्यत्रेदं द्रष्टव्यम् ॥ ५ ॥

**प्रे दाज्ञः ॥ ददातेरिति** । उपलक्षणमेतत् । 'गामादाग्रहणेष्वविशेषः' ( व्या० परि० १२४ ) इति सर्वेषामेव दारूपाणां ग्रहणमिष्यते । **जानातेश्चेति** । जनेस्त्वल्लोपेनायं निर्देशो न भवति; 'खनो घ च' 'हनश्च वधः' इत्यादौ धातुनिर्द्देशेऽल्लोपस्याकरणात् । **प्रेणोपसृष्टादिति** । प्रशब्देनोपसर्गेण सम्बद्धादित्यर्थः । 'अनुपसर्गे' इति चानुवर्तते, तेन केवलेन प्रेणोपसृष्टादित्यर्थः । अतश्च गोसम्प्रदाय इत्यणेव भवति ॥ ६ ॥

**भावबोधिनी**

गुणनिषेध । जड़ों को उखाड़ डालने वाला रथ । ] नखमुचानि धनूंषि । [ नखानि मुञ्चन्ति इस अर्थ में क प्रत्यय होता है । काकगुहाः तिलाः । [ काकेभ्यः गूहितव्याः—इस कर्म अर्थ में 'क' प्रत्यय होता है । कौवों से छिपाये जाने योग्य तिल । ] कौ=पृथिवी में मोदते=आनन्दित होता है—कुमुदम् । कौ उपपद मुद्+क=अ, उपपद समास, विभक्तिलोप ]

**विमर्श**—पदमञ्जरीकार और सिद्धान्तकौमुदीकार ने 'मूलविभुजादिगण' आकृतिगण माना है और फलस्वरूप—महीध्रः, कुध्रः, गिलः आदि शब्दरूपों की सिद्धि की है । परन्तु प्रस्तुत सूत्र के महाभाष्य में और न्यास में आकृतिगण होने का उल्लेख नहीं है । परन्तु गणपाठ में 'आकृतिगणोऽयम्' ऐसा उल्लेख होने से कोई अनुपपत्ति नहीं है ॥ ५ ॥

उपसर्गसहित के लिये यह सूत्र बनाया जा रहा है । 'प्र' उपसर्ग से युक्त 'दा' और 'ज्ञा' धातुओं से कर्म उपपद रहते 'क' प्रत्यय होता है । यह अण् का अपवाद है । उदा० सर्वप्रदः [ सब कुछ देने वाला । सर्वं प्रददाति—यह विग्रह है । ] पथिप्रज्ञः । [ रास्ता अच्छी तरह जानने वाला । पन्थानं प्रजानाति यह विग्रह है । पन्थानम् उपपद प्र उपसर्ग पूर्वक 'ज्ञा' धातु से 'क' प्रत्यय, आ का लोप, उपपद समास, विभक्ति का लोप—पथिन् प्रज्ञ, नलोप—पथिप्रज्ञः । ]

'प्र' यह किसलिये है—गोसन्दायः । [ यहाँ 'प्र' उपसर्ग नहीं, सम् है । अतः 'क' न होकर अण् होता है । ] ॥ ६ ॥

**७७६. समि ख्यः ॥ ७ ॥ ( २९२१ )**

**सोपसर्गार्थ आरम्भः । सपूर्वात् 'ख्या'—इत्येतस्माद्धातोः कर्मण्युपपदे कप्रत्ययो भवति । अणोऽपवादः । गां संचष्टे गोसंख्यः ॥**

**७७७. गापोष्टक् ॥ ८ ॥ ( २९२२ )**

**'कर्मण्यनुपसर्गे' इति वर्त्तते । गायतेः पिबतेश्च धातोः कर्मण्युपपदेऽनुपसर्गे टक् प्रत्ययो भवति । कस्यापवादः । शक्रं गायति शक्रगः । सामगः । शक्रगी । सामगी ।**

**⊛ सुराशीध्वोः पिबतेरिति वक्तव्यम् ⊛ ( म० भा० ३.२.८ वा० १ ) । सुरापः । सुरापी । शीधुपः । शीधुपी । सुराशीध्वोरिति किम् ? क्षीरपा ब्राह्मणी । पिबतेरिति किम् ? सुरां पातीति सुरापा ।**

**न्यासः**

**समि ख्यः ॥ गां सञ्चष्ट इति ।** वाक्यविशेषेण 'चक्षिङः ख्याञ्' इति ख्याञादेशस्य ग्रहणम्, न 'ख्या प्रकथने' इत्येतस्येति दर्शयति । एतच्च संपूर्वस्य ख्यातेः प्रयोगासम्भवाल्लभ्यते ॥ ७ ॥

**गापोष्टक् ॥** 'लुग्विकरणालुग्विकरणायोर्लुग्विकरणस्यैव ग्रहणम्' इति 'पा' इति पानार्थस्य ग्रहणम्, रक्षणार्थस्य न । यद्यपि 'गामादाग्रहणेष्वविशेषः' उच्यते, तथापि पिबतिना साहचर्याद् 'गा' इत्यस्यालुग्विकरणस्य ग्रहणम्, न गत्यर्थस्येत्याह—**गायतेः पिबतेश्चेति ।** टकः कित्करणमातो लोपार्थम् । टित्कारणं ङीबर्थम्, न तु 'आद्यान्तौ टकितौ' इत्येवमर्थम् । कुत एतत् ? आद्यन्तयोरवयवत्वात् । न च प्रत्ययोऽवयवो युज्यते, 'परश्च' इति वचनात् । ननु च गापोरिति षष्ठी टकोऽवयवत्वञ्च बोधयिष्यते ? नैतदस्ति; पञ्चम्यर्थे त्वेषा षष्ठी, कर्तृविशेषणार्था वा—गापोः कर्त्तरीति । युक्तञ्चैतत्, एवं हि प्रत्ययपरत्वं बाधितं न भवति । किञ्चादित्वे हि टकः कित्करणमनर्थकं स्यात् ।

पिबतेरुपपदान्तस्य निवृत्त्यर्थमाह—**सुराशीध्वोरित्यादि ।** तत्र पिबतेरिह ग्रहणम्, न पातेरित्येतत्

**पदमञ्जरी**

**गापोष्टक् ॥ गायतेरिति ।** 'गामादाग्रहणेष्वविशेषः' ( व्या० परि० १२४ ) इति गाङो लुग्विकरणस्यापि ग्रहणं प्राप्तं पिबतिसाहचर्यात्तु न भवति । **सामगीति ।** टकः कित्त्वादातो लोपः, टित्त्वान् ङीप् ।

**सुराशीध्वोः पिबतेरिति वक्तव्यमित्यत्र** पिबतेरिति लुग्विकरणालुग्विकरणपरिभाषालभ्यस्यैवार्थस्य

**भावबोधिनी**

उपसर्गसहित के लिये यह सूत्र बनाया जा रहा है । 'सम्' पूर्वक 'ख्या' इस धातु से कर्म उपपद रहते 'क' प्रत्यय होता है । यह अण् का अपवाद है । उदा० गां सचष्टे—इस विग्रह में—सोसंख्यः । [ गाम् उपपद सम् उपसर्ग-विशिष्ट ख्या + क = अ, आलोप, उपपद-समास, विभक्तिलोप । गाय का कथन करने वाला । ]॥ ७ ॥

'कर्मणि अनुपसर्गे' [ कर्म उपपद रहते, उपसर्गरहित ]—इनकी अनुवृत्ति होती है । कर्म उपपद रहते उपसर्ग न रहते 'गा' और 'पिब' धातुओं से टक् प्रत्यय होता है । यह [ आकारान्त मानकर प्राप्त होने वाले ] 'क' प्रत्यय का अपवाद है । उदा० शक्रं गायति—इस विग्रह में—शक्रगः । [ शक्रम् उपपद 'गै' आत्व करने पर 'गा' से टक्=अ प्रत्यय, 'आ' का लोप, उपपदसमास, विभक्तिलोप—शक्रग् अ=शक्रगः इन्द्र को बुलाने वाला । ] सामगः [ सामानि गायति—इस विग्रह में पूर्ववत् प्रत्यय आदि करने पर रूप बनता है । साम का गान करने वाला ] [ टक् में ट् और क् दो अनुबन्ध = इत् हैं । क् का फल आलोप और ट् का फल स्त्रीलिंग में ङीप् करना है । वही उदाहरण दे रहे हैं—शक्रगी, सामगी । [ शक्रग + ङीप्, सामग + ङीप्, अ लोप । इन्द्र को बुलाने वाली । साम का गान करने वाली । ]

* सुरा तथा साधु उपपद रहते ही पा=पिब से ही टक् कहना चाहिये । * उदाहरण सुरापः सुरापी [ सुरां पिबति—इस विग्रह में सुराम् उपपद 'पा' + टक्=अ, आ का लोप, स्त्रीलिंग में ङीप् होता है । सुरा पीने वाला, सुरा पीने वाली ] शीधुपः, शीधुपी । [ शीधु पिबति—इस विग्रह में पूर्ववत् टक् आदि करने पर रूप बनते हैं । शीधु एक विशेष प्रकार की मदिरा होती है । ]

**अनुपसर्ग इत्येव—शक्रसंगायः । सामसंगायः ।**

**❀ बहुलं छन्दसीति वक्तव्यम् ❀ ( म० भा० ३.२.८ वा० २ ) । या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति । या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति ( म० भा० ।।**

## ७७८. हरतेरनुद्यमनेऽच् ॥ ९ ॥ ( २९२३ )

**हरतेर्धातोरनुद्यमने वर्तमानात्कर्मण्युपपदेऽच् प्रत्ययो भवति । अणोऽपवादः । उद्यमनम् = उत्क्षेपणम् ।**

**न्यासः**

प्रागेव व्यवस्थापितम् । इह 'विभाषा' इत्यनुवर्त्तते, सा तु व्यवस्थितविभाषा; तेन सुराशीध्वोरुपपदयोर्भविष्यति, नान्यत्र । **क्षीरपेति** । स्त्रीलिङ्गोदाहरणं स्त्रियां विशेष इति प्रदर्शनार्थम् ।

**बहुलमित्यादि** । पिबतेश्छन्दसि बहुलं टग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः व्याख्यानं तु – तस्यैव विभाषाग्रहणानुवृत्तस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । तस्य तु फलं सुरापेति पक्षे कप्रत्ययो भवति ॥ ८ ॥

**हरतेरनुद्यमनेऽच्** ॥ **उद्यमनमुत्क्षेपणमिति**[1] । अधःस्थितस्य वस्तुन उर्ध्वं नयनमित्यर्थः । **अंशहर इति** । अंशं स्वीकरोतीत्यर्थः, न तूत्क्षेपयति ।

**पदमञ्जरी**

कथनम्, उपपदपरिगणनं तु वाचनिकमेव । **क्षीरपेति** । स्त्रियामेव विशेषात् स्त्रीलिङ्गमुदाहृतम् ॥ ८ ॥

**हरतेरनुद्यमनेऽच्** ॥ **अचप्रकरण इति** । लिङ्गविशिष्टपरिभाषयैव घटग्रहणेन घटीग्रहणेऽपि सिद्धे घटीग्रहणम्

**भावबोधिनी**

सुरा और शीधु—ये ही उपपद रहते—इसका क्या फल है ? क्षीरपा ब्राह्मणी । [ क्षीरं पिबति—इस विग्रह में प्रस्तुत सूत्र नहीं लगता है । आकारान्त मानकर 'क' प्रत्यय होता है । अतः स्त्रीलिंग में ङीप् नहीं होता है । ] पा=पिब से ही इसका क्या फल है ? सुरां पाति इस विग्रह में टक् नहीं होता है क्योंकि यहाँ पीना अर्थ नहीं है, रक्षा करना अर्थ है । अतः सामान्य 'क' प्रत्यय होता है । फलस्वरूप स्त्रीलिंग में ङीप् न होकर टाप् होता है । ]

उपसर्गरहित में ही—अतः 'शक्रसंगायः सामसंगायः । [ यहाँ सम् उपसर्ग के कारण टक् न होकर सामान्य अण् प्रत्यय और युक् आगम आदि होता है । ]

*वेद में बहुल रूप से होता है, ऐसा कहना चाहिये ।* [ अतः टक् और क दोनों प्रत्यय होते हैं–] उदाहरण–'या ब्राह्मणी 'सुरापी' भवति नैनां देवाः पतिलोकं नयन्ति । या ब्राह्मणी 'सुरापा' भवति नैनां देवाः पतिलोकं नयन्ति ।' [ जो ब्राह्मणी सुरापान करनेवाली होती है उसे देवता लोग पतिलोक नहीं ले जाते हैं । जब टक् होता है तब 'टित् मानकर ङीप् होता है । जब 'क' होता है तब टाप् होता है । ] ॥ ८ ॥

कर्म उपपद रहते अनुद्यमन [ ऊपर न उठाना ] अर्थ में विद्यमान 'हृ' धातु से अच् प्रत्यय होता है । यह अण् का अपवाद है । उद्यमन=ऊपर ले जाना । उदाहरण—अंशं हरति—इस विग्रह में—अशम् उपपद हृ+अच्=अ, ऋ का का गुण, रपर उपपद-समास विमक्ति लोप । अंश ले लेने वाला राजा आदि । ] रिक्थहरः । [ रिक्थं हरति—इस अर्थ में पूर्ववत् अच् प्रत्यय होता है । धन ले लेने वाला । ]

उद्यमन=उत्क्षेपण अर्थ न हो—इसका क्या फल है ? भारहारः । [ भारं हरति—यह विग्रह है । यहाँ बोझा ढोने वाला उसे अपने से अलग करके नहीं उठाता है । अतः यह सूत्र नहीं लागू होता हैं । अच् न होकर 'कर्मण्यण्' सूत्र से अण् प्रत्यय, ऋ की वृद्धि रपर, उपपद समास आदि करने पर रूप बनता है । ]

* अच् प्रत्यय के प्रकरण में शक्ति, लाँगल, अंकुश, यष्टि, तोमर, घट, घटी और धनुः—ये उपपद रहते 'ग्रह' धातु से अच् प्रत्यय का उपसंख्यान करना चाहिये । उदा० शक्तिग्रहः । [ शक्ति पकड़ने वाला । शक्तिं गृह्णाति—इस

१. अनुद्यमनमुत्क्षेपणम्' मुद्रितपाठोऽशुद्धः ।

**अंशं हरतीत्यंशहरः। रिक्थहरः।**

**अनुद्यमन इति किम ? भारहारः।**

*** अच्प्रकरणे शक्तिलाङ्गलांकुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम् *** ( म० भा० ३.२.९ वा० १ )। **शक्तिग्रहः। लाङ्गलग्रहः। अंकुशग्रहः। यष्टिग्रहः। तोमरग्रहः। घटग्रहः। धनुर्ग्रहः।**

*** सूत्रे च धार्यर्थे *** ( वा० २ )। **सूत्रग्रहः। सूत्रं धारयतीत्यर्थः। सूत्रग्राह एवान्यः॥**

## ७७९. वयसि च ॥ १० ॥ ( २९२४ )

**वयसि गम्यमाने हरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति। उद्यमनार्थोऽयमारम्भः। कालकृता शरीरावस्था यौवनादिः=वयः। यदुद्यमनं क्रियमाणं संभाव्यमानं वा वयो गमयति तत्रायं विधिः। अस्थिहरः श्वा। कवचहरः क्षत्रियकुमारः॥**

### न्यासः

**अच्प्रकरण इत्यादि।** 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्। तस्य तु प्रयोजनम् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इत्यत्र वक्ष्यते। उपसंख्यानशब्दस्य प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम् उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन शक्त्यादिषूपपदेषु ग्रहेरज् भविष्यति।

**सूत्रे चेत्यादि।** धारेरर्थो धार्य्यर्थः। तत्र वर्त्तमानाद् ग्रहेः सूत्रे चोपपदेऽच उपसंख्यानं कर्त्तव्यम्। प्रतिपादनं तावत्तदेव। **सूत्रग्राह एवान्य इति।** यः सूत्रं केवलमुपादत्ते न धारयति, तत्राणेव भवति ॥ ९ ॥

**वयसि च ॥ उद्यमनार्थोऽयमारम्भ इति।** अनुद्यमने पूर्वेणैव सिद्धत्वात्। **अस्थिहर इति।** अस्थ्युत्क्षेपणसमर्थे वर्तत इत्यर्थः ॥ १० ॥

### पदमञ्जरी

परिभाषाया अनित्यत्वज्ञापनार्थम्। **सूत्रग्राह एवान्य इति।** यस्सूत्रं केवलमुपादत्ते, न तु धारयति तत्राणेव भवतीत्यर्थः ॥ ९ ॥

**वयसि च ॥ संभाव्यमानं वेति।** तेनासत्यपि कवचग्रहणे वयसि गम्यमाने **कवचहर** इति भवतीति भावः ॥ १० ॥

### भावबोधिनी

अर्थ में 'शक्तिम्' उपपद 'ग्रह' धातु से अच् प्रत्यय उपपद समास विभक्ति का लोप। इसी प्रकार आगे भी समझना चाहिये। ] लांगलग्रहः [ = सांकड़ पकड़ने वाला ] अंकुशग्रह। [ अंकुश पकड़ने वाला ] यष्टिग्रहः [ छड़ी पकड़ने वाला ] तोमरग्रहः। [ तोमर = आयुधविशेष को पकड़ने वाला ] घटग्रहः। [ घड़े को पकड़ने वाला ] घटीग्रहः। [ घटी छोटे घड़े को पकड़ने वाला ] धनुर्ग्रहः। [ धनुष को पकड़से वाला। ]

* धारण अर्थ में 'सूत्र' उपपद 'ग्रह' से अच् होता है। * उदा० सूत्रग्रहः। सूत्र को धारण करता है, यह अर्थ है। इस से भिन्न अर्थ में [ अण् होने से ] 'सूत्रग्राहः' यही बनता है ॥ ९ ॥

अवस्था प्रतीयमान रहने पर कर्म उपपद रहते 'हृ' से अच् प्रत्यय होता है। उद्यमन=उठाना अर्थ के लिये यह सूत्र बनाया जा रहा है। समय के द्वारा की गयी शरीर की अवस्था यौवन आदि को 'वयः' कहा जाता है। किया जाता हुआ या संभाव्यमान जो उद्यमन अवस्था की प्रतीति कराता है उसके विषय में यह सूत्र प्रवृत्त होता है। उदा० अस्थिहरः श्वा। [ अस्थि हरति—इस विग्रह में 'अस्थि' उपपद 'हृ' धातु से अच् प्रत्यय गुण, रपर उपपद समास आदि करने पर 'अस्थिहर' रूप बनता है। यह कुत्ता की बढ़ती हुई उम्र का सूचक है। ] कवचहरः कुमारः। [ कवच उठाने वाला कुमार। कवचं हरति इस अर्थ में अच् होने पर रूप बनता है। ] ॥ १० ॥

**७८०. आङि ताच्छील्ये ॥ ११ ॥ ( २९२५ )**

**आङ्पूर्वाद्धरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति ताच्छील्ये गम्यमाने । ताच्छील्यम्=तत्स्वभावता । पुष्पाहरः । फलाहरः । पुष्पाद्याहरणे स्वाभावकी फलानपेक्षा प्रवृत्तिरस्येत्यर्थः ।**

**ताच्छील्य इति किम् ? भारमाहरतीति भाराहारः ॥**

**७८१. अर्हः ॥ १२ ॥ ( २९२६ )**

**'अर्ह पूजायाम्' ( धा० पा० ७४० )—अस्माद्धातोः कर्मण्युपपदेऽच् प्रत्ययो भवति । अणोऽपवाद । स्त्रीलिङ्गे विशेषः । पूजार्हा । गन्धार्हा । मलार्हा ॥**

**७८२. स्तम्बकर्णयो रमिजपोः ॥ १३ ॥ ( २९२७ )**

**स्तम्ब, कर्ण—इत्येतयोः सुबन्तयोरुपपदयोर्यथासंख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति । रमेरकर्मकत्वात्,**

**न्यासः**

**आङि ताच्छील्ये ।** अनुद्यमनमिति निवृत्तम् । तेनाविशेषाल्लभ्यते—उद्यमने चायं विधिरिति । ननु चानुद्यमने पूर्वेणैव सिद्धम्, परत्वाद्धि तृन् प्राप्नोति, वासरूपविधानाद् तृजपि भवति ? नैतदस्ति; वक्ष्यति ह्येतत्—ताक्षीलिकेषु वासरूपेणतृजादयो न भवन्तीति । **ताक्षील्यम् तत्स्वभावतेति** । तत् पुनरमानसो धर्मः । फलनिरपेक्षया प्रवृत्तिरनुमीयते । **पुष्पाहर इत्यादिना** । ताछील्यमुदाहरति ॥ ११ ॥

**अर्हः ॥ स्त्रियां विशेष इति** । अणि हि सति ङीब् भवति, अचि तु सति टाप् ॥ १२ ॥

**स्तम्बकर्णयो रमिजपोः ॥ जपेः शब्दकर्मकत्वादिति** । गायत्रीं जपति; अनुवाकं जपतीत्यत्र शब्द-

**पदमञ्जरी**

**आङि ताच्छील्ये ॥ पुष्पाद्याहरणे** इत्यादिना ताच्छील्यमुदाहरणें दर्शयति । **स्वाभाविकोति** । स्वभावे भवा स्वाभाविकी, अध्यात्मादिः । स्वशब्दो द्वारादिषु पठ्यते, तदादिविधिश्च तत्रेष्यते । **भाष्यकारप्रयोगात्तु** द्वारादिकार्याभावः, स्वार्थिकस्वाभाविकशब्दौ भाष्ये प्रयुक्तौ । अस्य विवरणम्—**फलानपेक्षेति** । कथं पुनः फलमनपेक्ष्य तत्र प्रवर्त्तते, न हि स्वभावः पर्यनुयोगमर्हति ॥ ११ ॥ १२ ॥

**स्तम्बकर्णयो रमिजपोः ॥ रमेरकर्मकत्वादिति** । ननु 'व्याङ्परिभ्यो रमः' 'उपाच्च' इत्यत्रोदाहृतम्—

**भावबोधिनी**

ताच्छील्य उस प्रकार का शील = स्वभाव गम्यमान होने पर आङ्पूर्वक 'हृ' धातु से अच् प्रत्यय होता है । ताच्छील्य=उस प्रकार का स्वमान वाला होना । उदा० पुष्पाहरः । [ पुष्पाणि आहरति इस विग्रह में 'पुष्पाणि' उपपद आङ् उपसर्गसहित 'हृ' धातु से अच् प्रत्यय ऋ का गुण, रपर, उपपद समास विभक्ति का लोप, पुष्प + आहर सवर्णदीर्घ—पुष्पाहरः । फूल लाने वाला ] फलाहरः । [ फल लानेवाला । फलानि आहरति—यह विग्रह है । ] फूल आदि लाने में जिसकी स्वाभाविक = विना किसी फल की अपेक्षा के प्रवृत्ति होती है वह 'पुष्पाहरः' होता है—यह अर्थ है । ताच्छील्य में इसका क्या प्रयोजन है ? भारम् आहरति—इस विग्रह में भाराहारः [ बोझा लानेवाला । यहाँ ताच्छील्य गम्यमान न होने से अच् न होकर सामान्य अण् प्रत्यय, वृद्धि, रपर आदि होते हैं । ] ॥ १० ॥

कर्म उपपद रहते 'पूजा अर्थ' वाली अर्ह धातु से अच् प्रत्यय होता है । यह अण् का अपवाद है । स्त्रीलिंग के रूप में अन्तर पड़ता है । [ अर्थात् अच् करने पर टाप् और अण् करने पर ङीप् होता है । ] पूजार्हा । [ पूजा के योग्य । पूजाम् अर्हति—यह विग्रह है । अच् प्रत्यय, उपपद समास, विमक्तिलोप सवर्णदीर्घ और टाप् करने पर रूप बनता है । ] गन्धार्हा । [ गन्धम् अर्हति—गन्ध प्राप्ति के योग्य ] मालार्हा । [ मालाम् अर्हति । माला की प्राप्ति के योग्य । ] ॥ १२ ॥

'स्तम्ब' और 'कर्ण' ये सुबन्त उपपद रहते क्रमशः 'रम' और 'जप' धातुओं से अच् प्रत्यय होता है । 'रम्' धातु अकर्मक है और 'जप' धातु शब्दकर्मक ] होने से अकर्मक है अतः इन दोनों का कर्म सम्भव नहीं है । [इसलिये 'कर्मणि'

**जपेः शब्दकर्मकत्वात्कर्म न संभवातीति 'सुपि' इत्येतदिहाभिसंबध्यते ।**

*** हस्तिसूचकयोरिति वक्तव्यम् * ( म० भा० ३ २.१३ वा० १ ) । स्तम्बे रमते इति स्तम्बेरमः हस्ती । कर्णे जपतीति कर्णेजपः सूचकः ।**

**हस्तिसूचकयोरिति किम् ? स्तम्बे रन्ता । कर्णे जपिता मशकः ॥**

## ७८३. शमि धातोः संज्ञायाम् ॥ १४ ॥ ( २९२८ )

**शम्युपपदे धातुमात्रात्संज्ञायां विषयेऽच्प्रत्ययो भवति । शंकरः । शंभवः । शंवदः ।**

**धातुग्रहणं किम्, यावता धातोरिति वर्त्तत एव ? 'शमि संज्ञायाम्' इति सिद्धे धातुग्रहणं कृञो हेत्वादिषु**

**न्यासः**

कर्मकस्यैव प्रयोगदर्शनात् । **कर्म न सम्भवतीति** । कर्णस्याशब्दात्मकत्वादित्यभिप्रायः । इतिकरणो हेतौ । यत एव कर्णशब्दः कर्म न सम्भवति तेन सुपीत्येतदिह सम्बध्यते, न कर्मणीति ।

**हस्तिसूचकयोरित्यादि** । हस्तिसूचकग्रहणं प्रत्ययार्थस्यैव कर्त्तुर्विशेषणम् । 'स्तम्बकर्णयोरमिजपोः' इति योऽयमज्विधिः स हस्तिसूचकयोः कर्त्रोर्भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु—तस्यैव विभाषाग्रहणानुवृत्तस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । **स्तम्बेरमः, कर्णेजप इति** । 'तत्पुरुषे कृषि बहुलम्' इति सप्तम्या अलुक् । **सूचक इति** । पिशुनक इत्यर्थः ॥ १३ ॥

**शमि धातोः संज्ञायाम् ॥ धातुमात्रादिति** । धातुमात्रग्रहणेनापवादविषयेऽपि विधानं दर्शयति । एवं हि हि धातुमात्राद्भवति, यद्यप्यपवादं बाधित्वा तद्विषयेऽपि भवति । एष चार्थो धातुग्रहणाल्लभ्यते । 'शमि संज्ञायाम्' इत्यादिना धातुग्रहणस्य प्रयोजनं दर्शयन् धातुप्रतिपादिनमर्थं स्पष्टीकरोति—**शमि संज्ञायामिति** । सूत्रोपलक्षणमेतत् । शमि धातोः संज्ञायामित्यस्मिन् सूत्र इत्यर्थः । **हेत्वादिष्विति** । आदिशब्देन ताच्छील्यानुलोम्ययोर्ग्रहणम् ।

**पदमञ्जरी**

देवदत्तमुपरमतीति ? एवं मन्यते—'अनुपसर्गे' इति वर्तत इति । **जपेश्च शब्दकर्मकत्वादिति** । मन्त्रं जपतीत्यादौ तथैव प्रयोगदर्शनात् । **कर्म न संभवतीति** । केवलस्य रमेर्जपेश्च कर्णाद्यशब्दात्मकमिति भावः । सूचकः= पिशुनः । **स्तम्बेरम इति** । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । **कर्णे जपिता मशक इति** । उपांशुशब्दाथितेत्यर्थः ॥ १३ ॥

**शमि धातोः संज्ञायाम् ॥ धातुमात्रादिति** । मात्रग्रहणेनापवादविषयेऽपि विधानं भवतीति दर्शयति । **शङ्कर इति** । ऐहिकमामुष्मिकं मोक्षाख्यं च सुखं करोतीति शङ्करः । धातुग्रहणस्य प्रयोजनं दर्शयन्मात्रग्रहणप्रतिपादितमेवार्थं स्पष्टीकरोति—**शमि संज्ञायामिति** । अस्मिन्सूत्र इत्यर्थः । असति धातुग्रहणे शमिसंज्ञायामित्यस्या-

**भावबोधिनी**

इसका सम्बन्ध नहीं होता है । ] इसलिये 'सुपि' =सुबन्त उपपद रहते इसका सम्बन्ध इस सूत्र में होता है ।

* हाथी और सूचक —चुगलखोर इन अर्थों में ही कहना चाहिये । स्तम्बे 'रमते—इस विग्रह में 'स्तम्बे' उपपद 'रम्' धातु से अच् प्रत्यय उपपद समास 'तत्पुरुषे कृति बहुलम्' सूत्र से विभक्ति का अलुक् होता है । अतः सप्तमी सुनाई देती है । स्तम्ब = घासादि तिनको में अर्थात् उनके खाने में मस्त रहनेवाला हाथी । ] कर्णे जपति—इस विग्रह में 'कर्णे' उपपद समास विभक्ति का अलुक— कर्णेजपः=चुगली करनेवाला । हाथी और चुगलखोर —इन अर्थों में— यह किस लिये है ? स्तम्बे रन्ता । [ यहाँ अच् न होकर तृच् प्रत्यय है ] कर्णे जपिता=मच्छर । [ यहाँ भी तृच् होने पर इट् आगम करने पर रूप बनता है । ] ॥ १३ ॥

'शम्' उपपद रहते धातुमात्र से अच् प्रत्यय संज्ञाविषय में होता है । उदा० शंकरः [ शम् उपपद कृ + अच्, गुण, रपर, म् का अनुस्वार, वैकल्पिक परसवर्ण—शंकरः पक्ष में शंकरः = कल्याण करनेवाले भगवान् शिव ] शम्भवः [ शम् उपपद 'भू' + अच् गुण, अवादेश ) शम्वदः [ शम् उपपद 'वद्' + अच् । ] ये शब्द भी देवताओं की संज्ञा है । ]

**टप्रतिषेधार्थम्** । ( **म० भा०** ) **शंकरा नाम परिव्राजिका । शंकरा नाम शकुनिका । तच्छीला च** ॥

**७८४. अधिकरणे शेतेः ॥ १५ ॥ ( २९२९ )**

**'सुपि' इति संबध्यते । शेतेर्धातोरधिकरणे सुबन्त उपपदेऽच्प्रत्ययो भवति । खे शेते खशयः । गर्तशयः ।**

**❀ पार्श्वादिषूपसंख्यानम् ❀ ( म० भा० ३.२.१५ वा० १ ) । पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः ।**

**न्यासः**

शम्युपपदे करोतेः संज्ञायां हेत्वादिषु विवक्षितेषु 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः प्राप्नोति, अतस्तद्बाधनार्थं धातुग्रहणम् । शमि धातोरित्यस्यावकाशः करोतेरन्यो धातुः शम्युपपदः सम्भवति—शंवद इति, 'कृञो हेतुताच्छील्यानुलोम्ये' इत्यस्यावकाशः करोतिः शब्दान्तरोपपदः—श्राद्धं करोतीति श्राद्धकर इति; करोतेः शम्युपपदे संज्ञायामुभयमेव प्राप्नोति—शङ्करा नाम शकुनिकेति । सा हि तच्छीला, तत्संज्ञा च, तत्र परत्वाट्टः प्राप्नोति पुनर्धातुग्रहणाद् धातुमात्राद् विधीयमानं टं बाधित्वाऽजेव भवति ॥ १४ ॥

**अधिकरणे शेतेः ॥ सुपीति सम्बध्यत इति** । शेतेरकर्मकत्वात् । अधिकरणस्य चाकर्मकत्वे सम्भवति सुपीतीह सम्बध्यते, न कर्मणीति ।

**पार्श्वादिषूपसंख्यानमिति** । आरम्भोऽयमनधिकरणार्थः । पार्श्वाभ्यामिति तृतीयान्तमुपपदं दर्शयति । उरःशयः, पृष्ठशय इत्यत्रापि तृतीयान्तमेवोपपदं वेदितव्यम् ।

**पदमञ्जरी**

वकाशः—शम्भवः, शंवद इति, 'कृञो हेतुताच्छील्ये' इत्यस्यावकाशः—श्राद्धकर इति; शङ्करा इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्याद्, धातुग्रहणसामर्थ्यादजेव भवति । **कुण्डखाडबस्त्वाचार्यो मन्यते—गृणातेः शब्दकर्मण एतद्रूपम्**, पृषोदरादित्वाद्नकारस्य ककार इति, तन्मते धातुग्रहणं चिन्त्यप्रयोजनम् ॥ १४ ॥

**अधिकरणे शेतेः ॥ पार्श्वादिष्विति** । अनधिकरणार्थमिदम् । तद्विग्रहेण दर्शयति—**पार्श्वाभ्यामिति** ।

**भावबोधिनी**

चूंकि 'धातोः' इसकी अनुवृत्ति होती ही है अतः पुनः 'धातोः' इसका ग्रहण किस लिये है ? 'शमि संज्ञायाम्' इतने से ही रूप सिद्धि सम्भव है फिर भी धातु का ग्रहण 'कृ' धातु से हेतु आदि अर्थों में 'ट' प्रत्यय का प्रतिषेध करने के लिये है । उदा० शंकरा नाम परिव्राजिका । [ यहाँ "कृञो हेतुताच्छील्यानुलोम्येषु" सूत्र से 'ट' प्राप्त है, उसका बाध करके यह अच् ही होता है । अतः, टाप्=आ होता है । यदि 'ट' होता तो टित् होने से ङीप् होता और शंकरी रूप प्रसक्त होता । ] शंकरा नाम शकुनिका । [ यहाँ भी पूर्ववत् होता है । यह परिव्राजिका और शकुनिका की संज्ञा है । ] और इस प्रकार के स्वभाववाली - यह अर्थ भी है ॥ १४ ॥

'सुपि' [ सुबन्त उपपद रहते ] इसका सम्बन्ध होता है । अधिकरण सुबन्त उपपद रहते 'शी' धातु से अच् प्रत्यय होता है । उदा० खे शेते—इस अर्थ में खशयः । [ 'खे' उपपद शी + अच् गुण अय् आदेश, उपपदसमास विभक्ति का लोप—खशयः । आकाश में सोनेवाला । ] गर्तशयः [ गर्ते शेते—इस अर्थ में 'गर्ते' उपपद शी + अच् । गड्ढे में सोनेवाला । ]

* पार्श्व आदि उपपद रहते भी अच् का उपसंख्यान करना चाहिये । * उदा० पार्श्वाभ्यां शेते—इस विग्रह में पार्श्वशयः । उदरशयः । [ पेट में सोनेवाला ] पृष्ठशयः [ पीठ से सोनेवाला ]

❀ **दिग्धसहपूर्वाच्च** ❀ ( वा० २ )। दिग्धेन सह शेते दिग्धसहशयः।

❀ **उत्तानादिषु कर्तृषु** ❀ ( वा० ३ )। उत्तानः शेते उत्तानशयः। अवमूर्द्धा शेते अवमूर्द्धशयः।

❀ **गिरौ डश्छन्दसि** ❀ ( वा० ४ )। गिरौ शेते गिरिशः ( मै० सं० २.९.२ )॥

**७८५. चरेष्टः ॥ १६ ॥ ( २९३० )**

'अधिकरणे' इति वर्त्तते। चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति। कुरुषु चरतीति कुरुचरः। मद्रचरः। कुरुचरी। मद्रचरी। प्रत्ययान्तरकरणं ङीबर्थम्॥

**७८६. भिक्षासेनादायेषु च ॥ १७ ॥ ( २९३१ )**

अनधिकरणार्थ आरम्भः। भिक्षा, सेना, आदाय--इत्येतेषूपपदेषु चरेर्धातोष्टप्रत्ययो भवति। भिक्षाचरः।

**न्यासः**

**दिग्धसहशय इति।** दिग्धेन सह शेत इति 'तृतीया' इति योगविभागेन समासः। दिग्धस्य सहेन प्राक् प्रत्ययोत्पत्तेः पश्चादुपपदसमासः।

**गिरावित्यादि।** गिरावुपपदे शेतेश्छन्दसि विषये डो भवति। **गिरिश इति।** डित्वाट्टिलोपः। एतत् सर्वम् 'व्यत्ययो बहुलम्' इति बहुलवचनात् सिद्धम्॥ १५॥

**चरेष्टः॥ प्रत्ययान्तरकरणं ङीबर्थमिति।** टित्त्वान् ङीब् भवति॥ १६॥

**भिक्षासेनादायेषु च॥ अनधिकरणार्थ आरम्भ इति।** अधिकरणे पूर्वेणैव सिद्धम्। भिक्षाञ्चरतीति

**पदमञ्जरी**

**दिग्धसहशय इति।** दिग्धेन सह शेते इत्यचि कृते मयूरव्यंसकादित्वात्समासः। दिग्धसहशब्दो मयूरव्यंसकादिस्तस्योपपदसमासः। **अवमूर्द्धशय इति।** अवनतो मूर्द्धा यस्य अवमूर्द्धा अधोमुखः शेत इत्यर्थः। **गिरो डश्छन्दसीति।** यदि छन्दसीत्युच्यते, कथम्, 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' ( कुमार० १.६० ), 'आरोपितं यद्गिरिशेन पश्चात्' ( कुमार० १.३७ ) इति? निरंकुशाः कवयः। अन्ये त्वाहुः—इह यो गिरौ शेते गिरिस्तस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः। तथा चात्रैव वार्त्तिकम्—'तद्धितो वा' ( कात्या० वा० २००० ) इति। न च लोमादिष्वपि छन्दोग्रहणमस्ति, तेन भाषायामपि गिरिश इति भवति। एवं च कृत्वा **निघण्टुषु** पाठोऽप्युपपन्नो भवति। **गिरौ शेत इति।** गिरावास्त इत्यर्थः॥ १५-१६॥

**भिक्षासेनादायेषु च॥ भिक्षाचर इति।** चरतिरत्र तत्पूर्वके अर्जने वर्त्तते, चरणेन भिक्षामर्जयतीत्यर्थः।

**भावबोधिनी**

* 'दिग्धसह' पूर्व में जिसके हैं, ऐसी 'शी' से अच् कहना चाहिये*। दिग्धेन सह शेते—इस विग्रह में अच् प्रत्यय समास होता है—दिग्धसहशायः *उत्तान आदि कर्ता उपपद रहते 'शी' से अच् होता है।* उत्तानः शेते—इस अर्थ में—उत्तानशयः [ चित्त सोनेवाला। ] अवमूर्द्धा शेते—इस विग्रह में -अवमूर्धशयः [ शिर नीचे करके सोनेवाला। ]

* गिरि उपपद रहते 'ड' होता है वेद में। उदा० गिरौ शेते—गिरिशः। [ गिरौ उपपद शी + ड=अ, डित् प्रत्यय होने के कारण टि=ई का लोप हो जाने से—श् + अ, उपपद समास विभक्ति का लोप ]—गिरिशः॥ १५॥

'अधिकरणे' इसकी अनुवृत्ति होती है। अधिकरण अर्थवाला सुबन्त उपपद रहते 'चर्' धातु से 'ट' प्रत्यय होता है। उदा० कुरुषु चरति—इस विग्रह में 'कुरुषु' उपपद चर् + ट=अ, उपपद-समास विभक्तिलोप—कुरुचरः। [ कुरु देश में विचरण करनेवाला। ] मद्रचरः। मद्रेषु चरति इस अर्थ में है। [ मद्रदेश में घूमनेवाला। ] कुरुचरी, मद्रचरी [ इनमें स्त्रीलिंग में टित् होने से ङीप् होता है। ] अच् के स्थान पर 'ट' यह दूसरा प्रत्यय ङीप् करने के लिये है॥ १६॥

अधिकरण से भिन्न स्थल के लिये यह सूत्र बनाया गया है। भिक्षा, सेना और आदाय—इनके उपपद रहते 'चर्' धातु से 'ट' प्रत्यय होता है। उदा० भिक्षाचरः। [ भिक्षां चरति—इस अर्थ में 'भिक्षाम्' उपपद 'चर' धातु से 'ट'

**सेनाचरः । आदायचरः ॥**

**७८७. पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥ १८ ॥ ( २९३२ )**

**पुरस्. अग्रतस्. अग्रे—इत्येतेषूपदेषु सर्तेर्धातोष्टप्रत्ययो भवति । पुरः सरति पुरःसरः । अग्रतःसरः । अग्रेसरः ॥**

**७८८. पूर्वे कर्त्तरि ॥ १९ ॥ ( २९३३ )**

**पूर्वशब्दे कर्तृवाचिन्युपपदे सर्त्तेर्धातोष्टप्रत्ययो भवति । पूर्वः सरतीति पूर्वसरः ।**

**कर्त्तरिति किम् ? पूर्वं देशं सरतीति पूर्वसारः ॥**

**न्यासः**

**भिक्षाचरः ।** सेनाञ्चरतीति **सेनाचरः । आदायेति** ल्यबन्तमेतत् । आदाय चरतीत्यादायचरः । अत्रादातव्यकर्मणोऽविवक्षितत्वात् पूर्वकालमात्रे विवक्षिते प्रत्ययः । आदनं कृत्वा चरतीति यावत् । तेन सापेक्षत्वादसामर्थ्ये सति प्रत्ययो न सिध्यतीत्येतदचोद्यम् । अथापि कर्मापेक्षते ? एवमपि न दोषः; वचनसामर्थ्यादसामर्थ्येऽपि प्रत्ययो भवति ॥ १७ ॥

**पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥** पुरःशब्दः 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसिप्रत्ययान्तो व्युत्पादितः । **अग्रतः**शब्दोऽपि 'तसिप्रकरण आद्यादिभ्य उपसंख्यानम्' इति तसिप्रत्ययान्तः । **अग्रे इति ।** अग्रशब्दस्यैकारान्तत्वं निपात्यते--अग्रेसर इत्येतद्रूपं यथा स्यात् । ननु च सप्तम्या अलुकाप्येतत् सिध्यति ? सत्यम्; यदा सिध्यति तदासप्तम्यन्त उपपदे प्रत्ययः । यदाग्रः सरतीति, अग्रेण वा सरतीत्यसप्तम्यन्तस्तदा न सिध्यति; तदर्थमेकारान्तत्वं निपात्यते ॥ १८ ॥

**पूर्वे कर्त्तरि ॥ पूर्वशब्दे कर्तृवाचिन्युपपदे प्रत्यय इति ।** एतेन कर्तरीत्यनेनोपपदं विशिष्यते, न कर्ता प्रत्ययार्थो निर्दिश्यत इति दर्शयति; तस्य 'कर्तरि कृत्' इत्यनेनैव निर्देशात् । अयुक्तत्वादिह निर्देशस्येत्यभिप्रायः । ननु च पूर्वः सरतीत्यत्रासामर्थ्यमस्ति, तथा हि—पूर्वशब्दोऽयं व्यवस्थावचनः, अवयववाची वा । तत्र पूर्वस्मिन्

**पदमञ्जरी**

**सेनाचर इति ।** सेनां प्रविशन्नुच्यते । **आदायचर इति ।** आदाय गच्छतीत्यर्थः, भक्षयतीति वा । कथं सहचरः, सहचरीति ? पचादिषु चरडिति पठ्यते, सुप्सुपेति समासः ॥ १७ ॥

**पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥ अग्रे इत्येतेष्विति ।** एतेनाग्रशब्दस्यैकारान्तत्वं निपात्यत इति दर्शयति । एतच्चाग्रेशब्दस्य परनिपातनादेव विज्ञायते, अन्यथा 'अजाद्यदन्तम्' इति पूर्वनिपातः स्यात् । किमर्थं पुनरेकारान्तत्वं निपात्यते, यावता सप्तम्या अलुकाप्यग्रेसर इति सिद्धम् ? यदा तह्यग्रं सरति अग्रेण सरतीति वा विगृह्यते तदाप्य-

**भावबोधिनी**

प्रत्यय अनुबन्धलोप, उपपद समास विभक्तिलोप । भिक्षाचरः [ भीख मांगने वाला ] । [ सेनाचरः [ सेनां चरति—यह विग्रह है । पूर्ववत् 'ट' प्रत्यय आदि होता है । सेना में प्रवेश करनेवाला । ] आदायचरः । [ आदाय इस ल्यबन्त को उपपद मानकर 'चर' धातु से 'ट' प्रत्यय शेष प्रक्रिया पूर्ववत् । लेकर चल देनेवाला । ] ॥ १७ ॥

पुरस्, अग्रतस् और अग्रे —इनके उपपद रहते 'सृ' धातु से 'ट' प्रत्यय होता है । उदा० पुरः सरति—इस अर्थ में पुरः उपपद 'सृ' धातु से 'ट' प्रत्यय, ऋ का गुण, रपर उपपद समास आदि होता है । आगे चलनेवाला । ] अग्रतः सरः, अग्रेसरः [ दोनों का अर्थ है—आगे चलनेवाला ] ॥ १८ ॥

कर्तृवाची पूर्वशब्द उपपद रहते 'सृ' धातु से 'ट' प्रत्यय होता है । उदा० पूर्वः सरति—इस अर्थ में 'पूर्वः' उपपद 'सृ' धातु से 'ट' प्रत्यय, अनुबन्धलोप आदि होता है । पहला चलनेवाला, सरकनेवाला । यहाँ 'पूर्वः' यह कर्तृवाची है । पूर्वः चासौ सरः यह अभिप्राय है ।

कर्ता अर्थ में—इसका क्या फल है ? पूर्वं देशं सरति—इस अर्थ में 'ट' नहीं होता है अपितु अण् होता है—पूर्वसारः । [ पूर्व को जानेवाला । ] ॥ १९ ॥

## ७८९. कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥ ( २९३४ )

**कर्मण्युपपदे करोतेर्धातोष्टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने । हेतुः = ऐकान्तिकं कारणम् । ताच्छील्यम् = तत्स्वभावता । अनुलोम्यम् = आनुकूलता । हेतौ तावत्—शोककरी कन्या । यशस्करी**

**न्यासः**

कल्पेऽवधिरपेक्षणीयः—अस्मादयं पूर्व इति । इतरस्मिंस्त्ववयवो पदार्थः, यथा—पूर्वं कायस्येति, उभयोरपि सापेक्षितत्वात्, असामर्थ्ये सति प्रत्ययानुपपत्तिः ? नैष दोषः; पूर्वशब्दः सम्बन्धिशब्दः । सापेक्षेऽपि वृत्तिर्ननु भवत्येव, यथा—देवदत्तस्य गुरुकुलमिति ॥ १९ ॥

**कृञो हेतुताच्छील्यानुलोम्येषु** ॥ हेत्वादय एते, नोपपदानि । यदि ह्युपपदानि स्युः, 'शमि धातोः संज्ञायाम्' इत्यत्र धातुग्रहणमनर्थकं स्यात् । तद्धि कृञो हेत्वादिषु टप्रतिषेधार्थं कृतम् । यद्येषामुपपदत्वं स्यात् टप्रत्ययस्य प्राप्तिरेव नास्तीति धातुग्रहणमनर्थकं स्यात् । अतो नैषामुपपदत्वम्, नापि प्रत्ययार्थत्वम्; 'कर्तरि कृत्' इति कर्तुः प्रत्ययार्थत्वात् । न च तैर्बाधा युक्ता, विरोधाभावात् । तस्मात् प्रत्ययार्थविशेषणत्वमेषां युक्तम् । तत्र कर्तरि प्रत्ययो भवति यस्मिन्नभिधीयमाने तद्विशेषो हेत्वादयो गम्यन्ते । अत एवाह—**हेतौ ताच्छील्ये आनुलोम्ये च गम्यमान इति । हेतुरैकान्तिकं कारणमिति ।** एतेन लौकिकहेतोर्ग्रहणम्, न पारिभाषिकस्येति दर्शयति । पारिभाषिको हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः, यदि तस्येह ग्रहणं स्यात् कृञ इति नोपपद्यते; न ह्यण्यन्तात् प्रयोजककर्तरि प्रयोजक उत्पद्यते, अपि तु ण्यन्तादन्तर्भावितण्यर्थात् प्रत्यय उत्पद्यत इति चेत् ? नैतदस्ति; टप्रत्ययान्ताण्ण्यर्थस्याप्रतीतेः । ननु च लौकिकस्य हेतोर्ग्रहणे सति निमित्ततया कर्त्ता विशिष्यते, तच्चायुक्तम्; न हि कर्त्तुरनिमित्तत्वमस्ति यद्विशेषणेन व्यावर्त्येत ? नैष दोषः; सिद्धे कर्त्तुर्हि निमित्तत्वे पुनर्हेतुशब्द उपादीयमान ऐकान्तिकत्वं बोधयतीति—यः कर्त्ता यस्याः क्रियाया ऐकान्तिको हेतुरिति । अत एवोक्तम्—**हेतुरैकान्तिकं कारणमिति** । आनुलोम्यम् = अनुकूलयामीत्याराध्यचित्तानुप्रवर्त्तनम् । **यशस्करोति** । 'अतः कृकमिकंस' इत्यादिना विसर्जनीयस्य सत्वम् ॥ २० ॥

**पदमञ्जरी**

ग्रेसर इत्येव यथा स्यात् । कथं 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति ? 'कृत्यल्युटो बहुलम्' इति समर्थनीयम् ॥ १८–१९ ॥

**कृञो हेतुताच्छील्यानुलोम्येषु ॥ करोतेर्धातोरिति ।** प्रसिद्धतरत्वाद् द्वयनुबन्धकस्याप्यस्यैव ग्रहणम्, न तु 'कृञ् हिंसायाम्' ( धा० पा० १४८५ ) इत्यस्येति भावः । **आनुलोम्ये च गम्यमान इति ।** एतेन हेत्वादीनि नोपपदानीति दर्शयति, एतच्च 'शमिधातोः' इत्यत्र धातुग्रहणात्कृञो हेत्वादिषु टप्रतिषेधार्थाद्विज्ञायते । उपपदत्वे हि शम्युपपदे टप्रत्ययस्य प्राप्त्यभावादनर्थकं तत्स्याद् । अतो नैषामुपपदत्वम्, नापि प्रत्ययार्थत्वम्, 'कर्त्तरि कृत्, इत्यस्य बाधप्रसङ्गात् । न चासति विरोधे बाधा युक्ता । **हेतुरैकान्तिकं कारणमिति ।** एकान्तशब्दो विनयादिषु द्रष्टव्यः, नियतमव्यभिचारीत्यर्थः । एतेन लौकिकस्य हेतोर्ग्रहणमिति दर्शयति । न हि केवले कृञि प्रयोजककर्त्ता सम्भवतीति भावः । ननु लौकिकेनापि हेतुना कर्त्तुर्विशेषणमयुक्तम्, अव्यभिचारात्, न हि कर्तुरनिमित्तत्वमस्ति ? सत्यम्; पुनर्हेतुशब्दोपादानादैकान्तिकत्वमाश्रीयते, अन्यथा निमित्तमात्रमुपादीयेत । अनुकूलता = आराध्यचित्तानुवर्तनम् । **यशस्करी विद्येति** । 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सत्वम् ॥ २० ॥

**भावबोधिनी**

कर्म उपपद रहते 'कृ' धातु से 'ट' प्रत्यय होता है यदि हेतु, ताच्छील्य और आनुलोम्य की प्रतीति हो रही हो तो । हेतु = ऐकान्तिक = अव्यभिचारी कारण । ताच्छील्य = उस प्रकार के स्वभाववाला होना । आनुलोम्य = अनुकूल होना । (१) हेतु में उदा० शोककरी कन्या । [शोक की कारण कन्या । शोकं करोति–इस अर्थ में 'ट' प्रत्यय, उपपद समास विभक्तिलोप आदि के बाद टित् मानकर ङीप् होता है । ] यशस्करी विद्या । [ यशः करोति —यह विग्रह है । 'ट' प्रत्यय

**विद्या । कुलकरं धनम् । ताच्छील्ये—श्राद्धकरः । अर्थकरः । आनुलोम्ये—प्रैषकरः । वचनकरः ।**
**एतेष्विति किम् ? कुम्भकारः । नगरकारः ॥**

**७९०. दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृ-चित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ २१ ॥ ( २९३५ )**

**'कर्मणि' 'सुपि' इति च द्वयमप्यनुवर्त्तते । तत्र यथायोगं सम्बन्धः । दिवादिषूपपदेषु करोतेर्धातोष्टप्रत्ययो भवति । अहेत्वाद्यर्थं आरम्भः । दिवाशब्दोऽधिकरणवचनः 'सुपि' इत्यस्य विशेषणम् । दिवा करोति प्राणिनश्चेष्टा-युक्तानिति दिवाकरः । विभां करोतीति विभाकरः । निशाकरः । प्रभाकरः । भास्करः । सकारस्य निपातनाद्**

**न्यासः**

**दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ यथायोगमिति ।** दिवाशब्दस्य सुपीति सम्बन्धः, तस्याधिकरणस्य प्रधानत्वात् कर्मत्वानुपपत्तेः । शेषाणां तु सत्त्वप्रधानत्वात् करोतिसम्बन्धे कर्म चोपपद्यत इति कर्मणीत्यनेन सम्बन्धः । **अहेत्वाद्यर्थ आरम्भ इति ।** हेत्वादिषु पूर्वेणैव सिद्धत्वात् । **भास्कर इति ।** कथं पुनरत्र सकारः, यावता सकारस्य रुत्वविसर्जनीययोः कुप्वोः≍क≍पौ च' इति विसर्जनीयजिह्वामूलीययोरन्यतरेण भवितव्यमित्याह—**सकारस्य निपातनादित्यादि ।**

**पदमञ्जरी**

**दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ यथायोगमिति ।** तत्र दिवाशब्दोऽह्नीति सप्तम्यन्तस्यार्थे वर्तत इति तस्य कर्मत्वानुपपत्तेः 'सुपि' इत्यनेनाभिसम्बन्धः शेषाणां तु कर्मणीत्यनेन । यदि तु दोषामन्यमहः, दिवामन्या रात्रिरितिवद् वृत्तिविषये कर्मत्वमभ्युपगम्येत, तदा दिवाशब्दस्यापि कर्मणीत्यनेन संबन्धः । **सकारस्येति ।** भाष्करान्तेति भाशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते, तस्माद्भास्कर इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः । अथ वा—सकारस्य विसर्जनीयजिह्वामूलीयौ न भवतः, कुतः ? निपातनात् । भाष्करान्तेति सूत्रे सकारोच्चारणमेव

**भावबोधिनी**

उपपद समास आदि के बाद, "अतः कृकमिकंस०" ( पा० सू० ८/३/४६ ) से विसर्ग का सत्व होता है । यश की कारण विद्या है । कुलकरं धनम् । [ कुलं करोति—इस विग्रह में—पूर्ववत 'ट' प्रत्यय आदि होता है । कुल का कारण धन । अर्थात् जिसके पास धन होता है वह अकुलीन होने पर भी कुलीन मान लिया जाता है । ] (२) ताच्छील्य=उस प्रकार के स्वभाववाला होना—का उदा० श्राद्धकरः । [ श्राद्धं करोति—इस अर्थ में श्राद्धम् उपपद 'कृ' से 'ट' प्रत्यय आदि होता है । श्राद्ध करने के स्वभाववाला ] अर्थकरः । [ अर्थं करोति—इस अर्थ में अर्थम् उपपद 'कृ' धातु से 'ट' से प्रत्यय होता है । ] (३) आनुलोम्य—अनुकूल होना का उदा० प्रैषकरः [ प्रैषं करोति—इस अर्थ में प्रैषम् उपपद 'कृ' से 'ट' प्रत्यय होता है । ] वचनकरः । [ वचनं करोति—इस अर्थ में वचनम् उपपद 'कृ' से 'ट' प्रत्यय होता है । दोनों का आशय है—आज्ञा का पालन करनेवाला । ] इन्हीं अर्थों में—इसका क्या फल है ? कुम्भकारः, नगरकारः । [ कुम्भं करोति, नगरं करोति—यह विग्रह है । पूर्वोक्त कोई अर्थ नहीं है । अतः 'ट' न होकर अण् होता है । इसलिये ऋ की वृद्धि और रपर होता है । ] ॥ २० ॥

'कर्मणि' और 'सुपि' इन दोनों की अनुवृत्ति होती है । जिनके साथ उचित होता है उनके साथ इनका सम्बन्ध किया जाता है । [ इनमें 'दिवा' का 'सुपि' से सम्बन्ध होता है क्योंकि यह अधिकरण शक्ति-प्रधाम है । अतः 'कर्मणि' के साथ सम्बन्ध सम्भव नहीं है । शेष के साथ 'कर्मणि' का सम्बन्ध होता है । ] दिवा आदि उपपद रहते 'कृ' से 'ट' प्रत्यय होता है । पूर्वोक्त हेतु आदि से भिन्न अर्थ में 'ट' करने के लिये यह सूत्र बनाया गया है । दिवा शब्द अधिकरण शक्ति-प्रधान है । इसका 'सुपि' के साथ सम्बन्ध होता है । उदा० दिवा करोति प्राणिनः चेष्टायुक्तान् दिन में प्राणियों को चेष्टायुक्त करता है—यह अर्थ है । 'दिवा' उपपद 'कृ' से 'ट' प्रत्यय होता है । यह अव्यय है । अतः उपपद समास के बाद विभक्ति-लोप का प्रश्न नहीं है । दिवाकर=सूर्य ] विभाकरः । [ विभां करोति—यह अर्थ है ।

**विसर्जनीयजिह्वामूलीयौ न भवतः। कारकरः। अन्तकरः। अनन्तकरः। आदिकरः। बहुकरः। नान्दीकरः। किंकरः। लिपिकरः। लिबिकरः। बलिकरः। भक्तिकरः। कर्तृकरः। चित्रकरः। क्षेत्रकरः। संख्या-एककरः, द्विकरः, त्रिकरः। जङ्घाकरः। बाहुकरः। अहस्करः। यत्करः। तत्करः। धनुष्करः। अरुष्करः।**

**न्यासः**

भास्करान्तेति यत्सकारस्योच्चारणं तदेव निपातनम्। **बहुकर इति**। बहुशब्दो वैपुल्यवाची। **अहस्कर इति**। अहन्नित्यस्य 'रोऽसुपि' इति नकारस्य रेफः, तस्य विसर्जनीयः। तस्य 'अतः कृकमि' इत्यादिना सत्त्वम्। **धनुष्करः। अरुष्कर इति**। 'इसुसोः सामर्थ्ये', 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम्। अथानन्तग्रहणं किमर्थम्, अन्तग्रहणादेवानन्तशब्देऽपि तदन्तविधिना भविष्यति ? नैतदस्ति; सर्वस्मिन्नुपपदविधौ न हि तदन्तविधिरिष्यते। तथाहि **पदकारः**[1] पठति—'उपपदविधौ भयाढ्यादिग्रहणं तदन्तविधिं प्रयोजयति' इति। एवं तर्हि नान्तकरोऽनन्तकर इत्यन्तशब्देनापि नञ्समासो भविष्यति ? नैवं शङ्क्यम्; स्वरे दोषः स्यात्। सति शिष्टे हि 'तत्पुरुषे तुल्यार्थ' इत्यादिना प्रकृतिस्वरे हि नञ्स्वरः प्रसज्येत। तथा चानन्तकरशब्द आद्युदात्तः, 'निपाता आद्युदात्ताः' इति नञ उदात्तत्वात्; इष्यते च 'गतिकारकोपपदानां कृत्' इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। तस्मादनन्तग्रहणं कर्तव्यम्।

**पदमञ्जरी**

निपातनम्। **कारकर इति**। कर एव कारः, प्रज्ञादित्वात्स्वार्थेऽण्। **अनन्तकर इति**। अन्तकरशब्देन नञ्समासेऽप्येतद्रूपं सम्भवति, स्वरे हि दोषः स्यात्—सतिशिष्टोऽव्ययपूर्वपदप्रकृतिस्वरः प्रसज्येत, इष्यते हि गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। **बहुकर इति**। बहुशब्दो वैपुल्यवचनः, संख्यावचनस्य तु संख्याग्रहणेनैव सिद्धम्। **लिपिलिबिशब्दौ** पर्यायौ। **अहस्कर इति**। अहन् 'रोः सुपि' इति रेफः, पूर्ववत्सत्वम्। **धनुष्करः, अरुष्कर इति**। 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम्, कियत्तद्बहुषु कृञोऽज्विधानम्' ( वा० २४२ )

**भावबोधिनी**

यह भी सूर्य का वाची है। ] निशाकरः [ =चन्द्रमा ]। प्रभाकरः [ =सूर्य ]। भास्करः। [ भाः करोति—इस विग्रह में 'ट' प्रत्यय होता है। विसर्ग का स् होता है। ] निपातन के कारण विसर्ग के जिह्वामूलीय और विसर्ग नहीं होते हैं। यह भी सूर्य का वाचक है। ] कारकरः। [ काम करने वाला। 'कर' शब्द से स्वार्थ में 'प्रज्ञादिभ्यश्च' सूत्र से अण् प्रत्यय होता है। अतः कर + अण् = कार। कारं करोति—इस अर्थ में 'ट' प्रत्यय, आदि होता है। अन्तकरः [ अन्त करने वाला ]। अनन्तकरः [ अनन्त काम करने वाला, अथवा लगातार काम करने वाला। ] आदिकरः [ आरम्भ करने वाला ]। बहुकरः [ बहुत करने वाला ]। नान्दीकरः [ नाटकादि में मंगलपाठ करने वाला ]। किंकरः [ किं करोति—इस अर्थ में बनता है। नौकर ]। लिपिकरः [ प्रतिलिपि बनाने वाला। ] लिबिकरः। [ प्रतिलिपि बनाने वाला ]। बलिकरः। [ बलि प्रदान करने वाला ]। भक्तिकरः [ सेवा करने वाला ] कर्तृकरः। [ कर्ता को बनाने वाला। ] चित्रकरः। [ चित्र बनाने वाला ]। क्षेत्रकरः [ खेत करने वाला, किसान ]। संख्या-शब्द उपपद रहने के उदाहरण—एककरः [ एक को बनाने वाला ]। द्विकरः [ दो को बनाने वाला ]। त्रिकरः [ तीन को बनाने वाला ]। जङ्घाकरः [ जाँघ करने वाला अर्थात् दौड़ने वाला। ] अहस्करः। [ अहः करोति इस अर्थ में अहन् + कृ + ट, गुण रपर, 'रोः सुपि' सूत्र से 'न्' का 'र्' आदेश होता है, रेफ का विसर्ग और स् करने पर=अहस्करः। =सूर्य ]। यत्करः [ जिसको करने वाला ] तत्करः [ उसको करने वाला ] धनुष्करः। [ धनुष बनाने वाला ]। अरुष्करः। [ घाव करने वाला ]। [ धनुष्करः और अरुष्करः में प्रत्यय, उपपद समास के बाद विसर्ग का 'ष्' "नित्यं समासेऽनुत्तरपदस्थस्य" ( ८.३.४५ ) इस सूत्र से होता है। ]

---

१. 'पदकारः' इत्यस्य 'वार्त्तिककारः' इत्यर्थोऽवधेयः।

❀ कियत्तद्बहुषु कृञोऽज्विधानम् ❀ ( म० भा० ३.२.२१ वा० १ )। किंकरा। यत्करा। तत्करा। बहुकरा। अथ वा अजादिषु पाठः करिष्यते॥

## ७९१. कर्मणि भृतौ ॥ २२ ॥ ( २९३६ )

**'कर्मणि' इति स्वरूपग्रहणम्। कर्मवाचिनि कर्मशब्द उपपदे करोतेष्टप्रत्ययो भवति भृतौ गम्यमानायाम्। भृतिः = वेतनम्, कर्मनिर्वेशः। कर्म करोतीति कर्मकरः। भृतक इत्यर्थः।**

**भृताविति किम् ? कर्मकारः॥**

### न्यासः

**कियत्तद्बहुष्वज्विधानमित्यादि।** किमित्यादिषूपपदेष्वज्विधानं कर्त्तव्यम्, तत्कथमिह टोऽप्यनुवर्त्तते ? मण्डूकप्लुतिन्यायेनाजपि, विभाषाग्रहणमपि। तद्व्यवस्थितविभाषाविज्ञानात् कियत्तद्बहुषु कृञोऽजेव भवति, शेषेषु दिवादिषु ट एव। अहेत्वाद्यर्थत्वाच्चारम्भस्य यदा हेत्वादयो विशेषा न विवक्ष्यन्ते तदा कियत्तद्बहुषु कृञोऽज्विधानम्, तेषु विवक्षितेषु पूर्वसूत्रेण ट एव भवति। तथायं प्रयोग उपपन्नो भवति—जातिरियं किंकरीति। किंकरणशीला किंकरी, न किञ्चिदपि करोति। निष्प्रयोजनेति यावत्॥ २१॥

**कर्मणि भृतौ॥ कर्मणीति स्वरूपग्रहणमिति।** कुत एतत् ? कर्मग्रहणसामर्थ्यात् यदि पारिभाषिकस्य कर्मणो ग्रहणमिह स्यात् कर्मग्रहणमनर्थकं स्यात्; कर्माधिकारात्। करोतेश्च सकर्मकत्वात् तेनैव सम्बद्धो भविष्यति। तथा च प्रागुक्तम्—कर्मणि सुपीति द्वयमप्यनुवर्त्तते तत्र सकर्मकेषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति। तस्मात् स्वरूपग्रहणमेवैतत्। **कर्मनिर्वेश इति।** कर्म व्यापारः, तस्य निर्वेशः = मूल्यम्॥ २२॥

### पदमञ्जरी

इति वार्त्तिकेन सूत्रस्य बाधित्वाट्टस्याभावाद्धेत्वादिष्वन्यत्र किंकरीत्यसाधुरित्याहुः। क्वचिद् ग्रन्थः—**अथ वा पचादिषु पाठः करिष्यत इति।** तत्रायमर्थः—इह किमादिग्रहणमपनीय पचादिष्वेव 'कियत्तद्बहुषु कृञः' इति पठितव्यमिति॥ २१॥

**कर्मणि भृतौ॥ कर्मणीति स्वरूपग्रहणमिति।** अनुवृत्तेन कर्मणीत्यनेन विशेषणात्। **कर्मनिर्वेश इति।**

### भावबोधिनी

* किम्, यत्, तत् और बहु शब्द उपपद रहते 'कृ' से 'अच्' प्रत्यय होता है। उदाहरण—किंकरा [ अच् होने पर टाप् होता है। यदि 'ट' होता तो टित् मान कर ङीप् होने लगता। यही फल हुए अच् प्रत्यय का है। ] किंकरा = सेविका। यत्करा [ जिसको करने वाली ] तत्करा [ उसको करने वाली ]। बहुकरा [ बहुत करने वाली। ] अथवा अजादिगण में इनका पाठ कर दिया जायगा। [ अतः 'ट' करने पर भी ङीप् न होकर "अजाद्यतष्टाप्" सूत्र से टाप् ही होता है ]॥ २१॥

'कर्मणि' यह स्वरूप का ग्रहण है [ अर्थ का नहीं ]। कर्मवाची कर्म शब्द उपपद रहते 'कृ' धातु से 'ट' प्रत्यय होता है यदि भृति = वेतन की प्रतीति हो रही हो तो। भृति = वेतन, कर्म के बदले में दिया जाने वाला धन। कर्म करोति—इस अर्थ में कर्म उपपद 'कृ' से 'ट' प्रत्यय, उपपद समास विभक्ति का लोप। भृतक = नौकर—यह अर्थ है।

भृति = वेतन में—इसका क्या फल है ? कर्मकारः। [ यहाँ सामान्य कार्य करने वाला—अर्थ है। अतः 'ट' न होकर अण् होता है। ]॥ २२॥

### ७९२. न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥ ( २९३७ )

**शब्दादिषूपपदेषु करोतेष्टप्रत्ययो न भवति। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः॥**

### ७९३. स्तम्बशकृतोरिन् ॥ २४ ॥ ( २९३८ )

**स्तम्ब, शकृत्—इत्येतयोः कर्मणोरुपपदयोरिन्प्रत्ययो भवति।**

**❀ व्रीहिवत्सयोरिति वक्तव्यम् ❀ ( म० भा० ३.२.२४ वा० १ ) स्तम्बकरिः व्रीहिः। शकृत्करिः वत्सः। व्रीहिवत्सयोरिति किम्? स्तम्बकारः। शकृत्कारः॥**

### ७९४. हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥ ( २९३९ )

**दृति, नाथ—इत्येतयोः कर्मणोरुपपदयोः हरतेर्धातोः पशौ कर्त्तरि इन्प्रत्ययो भवति। दृतिं हरति दृतिहरिः**

**न्यासः**

**न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु॥ हेत्वादिषु टः प्राप्त इति। 'कृञो हेतु'** इत्यादिना॥ २३॥

**स्तम्बशकृतोरिन्॥ व्रीहिवत्सयोरिति वक्तव्यमिति।** कर्तृविशेषणं व्रीहिवत्सग्रहणम्। अनेन सूत्रेण य इन् विधीयते स व्रीहिवत्सयोः कर्त्रोर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः तत्रेदं व्याख्यानम्—इहापि विभाषेत्यनुवर्त्तते, सा च व्यवस्थितविभाषा। तेन व्रीहिवत्सयोः कर्त्रोरेव भविष्यति, नान्यत्र नित्यत्वादुत्तरपदादादचुदात्तत्वम्॥ २४॥

**हरतेर्दृतिनाथयोः पशौ॥ पशौ कर्त्तरीति।** एतेन पशुग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणमिति दर्शयति।

**पदमञ्जरी**

कर्म क्रिया, तस्य निष्क्रयाय देयं भक्तादिद्रव्यमित्यर्थः॥ २२–२३॥

**स्तम्बशकृतोरिन्॥ स्तम्बकरिरिति।** नित्त्वात्कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तं भवति॥ २४॥

**हरतेर्दृतिनाथयोः पशौ॥ पशौ कर्त्तरीति।** एतेन प्रत्ययार्थस्य कर्तुः पशुर्विशेषणम्, न तु तस्य बाधक इति

**भावबोधिनी**

शब्द, श्लोक, कलह, गाथा, वैर, चाटु, सूत्र, मन्त्र और पद—इनके उपपद रहते 'कृ' धातु से 'ट' प्रत्यय नहीं होता है। हेतु आदि अर्थों में प्राप्त 'ट' का प्रतिषेध होता है। [ अतः 'कर्मण्यण्' इस सूत्र से अण्, ऋ की वृद्धि, रपर आदि होता है। ] उदाहरण—शब्दकारः [ शब्दं करोति – इस अर्थ में ट' का निषेध होने पर 'अण्' होता है। शब्दकारः = शब्द बनाने वाला, वैयाकरण श्लोककारः=श्लोक बनाने वाला। कलहकारः=झगड़ने वाला। गाथाकारः= कहानियाँ बनाने वाला। वैरकारः=शत्रु। चाटुकारः = चापलूस। सूत्रकारः = सूत्र बनाने वाला। मन्त्रकारः=मन्त्रद्रष्टा ऋषि। पदकारः = मन्त्र के पदों का विभाग करने वाला॥ २३॥

स्तम्ब और शकृत्—इन कर्मों के उपपद रहते 'कृ' धातु से 'इन्' प्रत्यय होता है।

* व्रीहि तथा वत्स अर्थों में कहना चाहिये। ❀ उदाहरण—स्तम्बकरिः व्रीहिः। [ स्तम्बं करोति—इस अर्थ में स्तम्बम् उपपद कृ + इन्, ऋ का गुण, रपर आदि करने पर रूप बनता है। यह धानविशेष होता है। ] शकृत्करिः वत्सः। [ शकृत् करोति—इस अर्थ में पूर्ववत् 'इन्' प्रत्यय होने पर रूप बनता है। बछड़ावाची है। ]

व्रीहि तथा बछड़ा अर्थों में—इसका क्या फल है? स्तम्बकारः। शकृत्कारः। [ स्तम्बं करोति—इस अर्थ में 'इन्' प्रत्यय न होने पर 'कर्मण्यण्' से सामान्य अण् प्रत्यय और वृद्धि करने पर—स्तम्बकारः और शकृत्कारः रूप बनते हैं। ]॥ २४॥

'दृति' और 'नाथ' इनके कर्मों के उपपद रहते 'हृ' धातु से पशु कर्त्ता अर्थ रहने पर 'इन्' प्रत्यय होता है उदाहरण—दृतिं हरति—इस अर्थ में 'दृतिहरि पशुः। [ दृति=चमड़े की मशक को ले जाने वाला कुत्ता आदि पशु।

पशुः । नाथहरिः पशुः ।

पशाविति किम् ? दृतिहारः । नाथहारः ॥

**७९९. फलेग्रहिरात्मम्भरिश्च ॥ २६ ॥ ( २९४० )**

फलेग्रहिः, आत्मम्भरिः—इत्येतौ शब्दौ निपात्येते। **फलशब्दस्योपपदस्य एकारान्तत्वमिन्प्रत्ययश्च ग्रहेर्निपात्यते। फलानि गृह्णातीति फलेग्रहिर्वृक्षः। आत्मशब्दस्य उपपदस्य मुमागम इन्प्रत्ययश्च भृञो निपात्यते। आत्मानं बिभर्ति आत्मम्भरिः।**

**अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः। उदरम्भरिः॥**

**न्यासः**

प्रत्ययार्थत्वं तु 'कर्त्तरि कृत्' इति वचनात्। कुतः पुनरेतदवसितम्—प्रत्ययार्थस्य विशेषणमेवेति, न पुनर्बाधकमेवेति ? तदुच्यते—धातोः प्रत्ययस्य विधानात् तदर्थस्य येन सम्बन्धस्तत्र वाच्ये प्रत्ययेन भवितव्यम्। धात्वर्थः=क्रिया, तस्याश्च साधनेन सम्बन्धः, न वस्तुस्वरूपेण। साधनञ्च शक्तिः, न वस्तुस्वरूपम्। पशुशब्देन वस्तुस्वरूपेण स्वार्थमाचष्टे, न शक्तिस्वरूपेणेति। तेनाशक्तिस्वरूपे प्रत्याय्यमानः पशुर्नार्हति प्रत्ययार्थो भवितुम्। सोऽप्रत्ययार्थः सन्नशक्तित्वात् कथमिमं प्रत्ययार्थं बाधेत ? तस्मात् प्रत्ययार्थः, तेन कर्त्तरि विशिष्यत इति युक्तमुक्तम्—पशौ कर्त्तरीति। एष न्यायोऽन्यत्रापि प्रत्यार्थविशेषणे द्रष्टव्यः॥ २५॥

**फलेग्रहिरात्मम्भरिश्च ॥ २६ ॥**

**पदमञ्जरी**

दर्शयति। धातोर्हि प्रत्ययविधानात्तदर्थस्य येन सम्बन्धस्तत्र वाच्ये प्रत्ययो भवतुमर्हति। धात्वर्थस्य च क्रियायाः साधनेन सम्बन्धः। पशुशब्दस्तु चतुष्पाज्जातीयं वस्तुस्वरूपेणाचष्टे, न शक्तिमद्रूपेण, नतरां शक्तिरूपेणेति। न पश्वर्थः स्वरूपेण प्रत्ययार्थो भवितुमर्हतीति युक्तमुक्तम्—पशौ कर्तरीति। एवं सर्वत्र प्रत्ययार्थविशेषणं द्रष्टव्यम्॥ २५॥

**फलेग्रहिरात्मम्भरिश्च ॥ उपपदस्यैकारान्तमिति।** छन्दस्यकारान्तत्वमपि दृश्यते—'या वनस्पतीनां फलग्रहि_हिः' ( तै० सं० ५.१.१.४ ) इति। स कुक्षिम्भरिवच्चकारेण समुच्चेतव्यः॥ २६॥

**भावबोधिनी**

नाथम् = नासारज्जुं=नाक में डाली जाने वाली रस्सी को हरति=ले जाने वाला—इस अर्थ में—] नाथहरिः पशुः। [ बैल आदि जानवर ]।

पशु अर्थ में—इसका क्या फल है ? दृतिहारः नाथहारः। [ यहाँ पशु अर्थ न होने पर 'इन्' प्रत्यय न होकर 'अण्' होता है। अतः 'हृ' की वृद्धि और रपर होकर रूप बनते हैं। ] ॥ २५॥

'फलेग्रहि' और 'आत्मम्भरि' ये दोनों शब्द निपातित होते हैं। उपपद फल' शब्द का एकारान्तत्व और ग्रह' धातु से 'इन्' प्रत्यय निपातित होता है। उदा० फलानि गृह्णाति इस अर्थ में—फलेग्रहिः वृक्षः। [ फलानि उपपद 'ग्रह' से इन् प्रत्यय उपपद समास विभक्ति का लोप, एकारान्तत्व निपातित होता है—फलेग्रहिः। ] उपपद आत्म शब्द को 'मुम्' का आगम और 'भृ' धातु से इन् प्रत्यय निपातित होता है। उदा० आत्मानं बिभर्ति—इस अर्थ में इन्' प्रत्यय उपपदसमास, विभक्तिलोप, मुम् का आगम, ऋ का गुण रपर आदि करने पर रूप बनता है। फलों का ग्रहण = धारण करने वाला वृक्ष। अपना भरण पोषण करने वाला पुरुष। ]

अनुक्त के समुच्चय के लिये चकार है। [ अतः सूत्र में अनुक्त से भी इन् प्रत्यय होता है। ] कुक्षिम्भरिः। उदरम्भरिः। [ कुक्षिं बिभर्ति और उदरं बिभर्ति—इन अर्थों में भी 'इन्' प्रत्यय होता है। ] ॥ २६॥

का० तृ० ५५

**७९६. छन्दसि वनसनरक्षिमथाम् ॥ २७ ॥ ( ३४०८ )**

**'वन षण संभक्तौ'** ( धा० पा० ४६३,४६४ ), **'रक्ष पालने'** ( धा० पा० ६५८ ), **'मथे विलोडने'** ( धा० पा० ४२ )—इत्येतेभ्यः कर्मण्युपपदे छन्दसि विषये इन्प्रत्ययो भवति। ब्रह्म_वनिं त्वा क्षत्रवनिम् ( तै० सं० १.३.१.२ ) गोसनिं वाचमुदेयम् ( अ० वे० ३.२०.१० ) यौ पथिरक्षी श्वानौ ( अ० वे० ८.१.९ ) हवीर्मथीनाम् ( ऋ० ७.१०४.२० ) ॥

**७९७. एजेः खश् ॥ २८ ॥ ( २९४१ )**

**'एजृ कम्पने'** ( धा० पा० २३४ )—इत्यस्माद् ण्यन्तात्कर्मण्युपपदे खश्प्रत्ययो भवति।

**न्यासः**

**छन्दसि वनसनरक्षिमथाम् ॥ ब्रह्मवनिं त्वा क्षत्रवनिमिति।** ब्रह्म वनति, क्षत्रं वनतीत्यर्थविवक्षायामिन्प्रत्ययः। तदन्ताद् द्वितीया, तस्याः 'सुपां सुलुक्' इति लुक्। युष्मच्छब्दाद् द्वितीयाविभक्तेः 'त्वामौ द्वितीयायाः' इति त्वादेशः। **गोसनिमिति।** गां सनतीत्यर्थ इन्प्रत्ययः। तदन्तादमि परे पूर्वरूपत्वम्। पन्थानं रक्षत इति **पथिरक्षी।** द्विवचनमेतत्। पूर्वसवर्णदीर्घत्वम्। **हविर्मथीनामिति।** हविर्मथन्तीति विगृह्य प्रत्ययः। तदन्तात् षष्ठ्या बहुवचनम् ॥ २७ ॥

**एजे खश् ॥ ण्यन्तादिति।** एतेन प्रकृत्यन्तरस्यायमेजेरिका निर्देश इत्याशङ्कां निरस्यति। कुतः पुनर्ण्यन्तमवसितम्? खशः शित्करणात्। प्रकृत्यन्तरस्य ग्रहणे शित्करणमनर्थकं स्यात्। तद्धि सार्वधातुके सति तदाश्रयस्य शपो विधिर्यथा स्यादित्येवमर्थं क्रियते। न चैजेः प्रकृत्यन्तरस्य सत्यसति वा शपि कश्चिद् विशेषोऽस्ति, ण्यग्रहणे तु सति शित्करणमर्थवद् भवति। असति तस्मिन् णिलोपः स्यात्, तस्मिंस्तु सति सार्वधातुनिबन्धने शपि णिलोपो न भवति। आर्धधातुकत्वं णिलोप इत्येके, एतच्चायुक्तम्; उत्तरार्थं हि शित्करणं स्यात्। असति तस्मिन्नुत्तरसूत्रे धेट आत्वं स्यात्, ध्मश्च धमादेशो न स्यात्। तथा च स्तनन्धयः, नासिकन्धम इति न सिध्येत्। तस्माद्

**पदमञ्जरी**

**छन्दसि वनसनरक्षिमथाम् ॥ वन षण संभक्ताविति।** गणे सहपठितयोर्भौवादिकयोरेव ग्रहणम्, न तु 'वनु याचने' ( धा० पा० १४७० ) 'षणु दाने' ( धा० पा० १४६४ ) इति तानादिकयोरिति भावः। अत्र साहचर्यमेव हेतुः, निरनुबन्धकत्वं च। **ब्रह्मवनिमिति।** ब्रह्म वनति, क्षत्रं वनतीति विवक्षायामिन् प्रत्ययः, तदन्ताद् द्वितीयैकवचनम्। **गोसनिमिति।** गां सनतीति विग्रहः। **पथिरक्षी इति।** पन्थानं रक्षत इति विग्रहः हविर्मथन्तीति हविर्मथयस्तेषां हविर्मथीनाम् ॥ २७ ॥

**एजेः खश् ॥ ण्यन्तादिति।** एजेस्त्वयमिका निर्देशो न भवति; खशः शित्करणात्। तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति। न चैजेः प्रकृत्यन्तरस्य शपि सत्यसति वा विशेषोऽस्ति। न चैवमिहार्थत्वे सम्भवति,

**भावबोधिनी**

'वन तथा सन' ये संभक्ति अर्थ में है, रक्ष पालन अर्थ में है' 'मथे यह विलोडन - मथना अर्थ में है'—इन धातुओं से कर्म उपपद रहते 'इन्' प्रत्यय वेदविषय में होता है। उदा० ब्रह्मवनिं त्वा क्षत्रवनिम्। [ ब्रह्म वनति, क्षत्रं वनति—इन विग्रहों में 'ब्रह्म' तथा 'क्षत्रम्' उपपद 'वन' धातु से 'इन्' प्रत्यय होता है। उपपदसमास आदि के बाद द्वितीया एकवचन का रूप है। ] गोसनिं यौ पथिरक्षी श्वानौ। [ गां सनति इस विग्रह में 'इन्' प्रत्यय उपपदसमास आदि होता है। ] हविर्मथीनाम् [ हविर्मथन्ति - इस विग्रह में 'इन्' प्रत्यय, षष्ठी बहुवचन का रूप है। ] ॥ २७ ॥

कम्पन अर्थ में 'एजृ' धातु है' इस णिजन्त से कर्म उपपद रहते 'खश' प्रत्यय होता है। यह खकार [ "अरुर्द्वि-

**खकारोऽयं मुमर्थः । शकारः सार्वधातुकसंज्ञार्थः । अङ्गमेजयति अङ्गमेजयः । जनमेजयः ।**

*** खश्प्रकरणे वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातीनामुपसंख्यानम् *** ( म० भा० ३.२.२८ वा० १ ) । **वातमजा मृगाः । शुनिन्धयः । तिलतुन्दः । शर्द्धञ्जहा माषाः ॥**

**न्यासः**

व्याख्यानादेव ण्यन्तत्वमवसेयम् । **खकारोऽयं मुमर्थ इति** । 'खित्यनव्ययस्य' इत्यधिकृत्य 'अरुर्द्विषदजन्तस्य' इति मुमागमो यथा स्यात् । **शकारः सार्वधातुकसंज्ञार्थ इति** । 'तिङ्शित् सार्वधातुकम्' इति सार्वधातुकसंज्ञा यथा स्यात् । **अङ्गमेजय इति** । शप् , गुणायादेशौ ।

**खश्प्रकरणे इत्यादि** । वातादिषूपपदेषु 'अज गतिक्षेपणयोः', 'धेट् पाने', 'तुद व्यथने', 'ओहाक् त्यागे'— इत्येभ्यो धातुभ्यः खश्प्रकरण उपसंख्यानं कर्त्तव्यम् । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्— 'नाडीमुष्ट्योश्च' इत्यत्र चकारः, स चानुक्तसमुच्चयार्थः । तेन वातादिषूपपदेष्वजादिभ्यो धातुभ्यः खश् भविष्यति । **शुनिन्धय इति** । 'खित्यनव्ययस्य' इति ह्रस्वत्वम् । **शर्द्धञ्जहा इति** । जुहोत्यादिभ्यः शपः श्लुः; 'श्लौ' इति द्विर्वचनम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः ॥ २८ ॥

**पदमञ्जरी**

केवलोत्तरार्थत्वं युक्तम् । **खित्करणं मुमर्थमिति** । खित्कार्योपलक्षणमेतत् । शुनिन्धयः नाडिन्धयः, नासिकन्धय इति ह्रस्वत्वमपि प्रयोजनम् । **शकारः सार्वधातुकार्थ इति** । सार्वधातुकसंज्ञार्थ इत्यर्थः । **वातशुनीत्यादि** । वातादिषु यथासंख्यमुपपदेषु अजादिभ्यो धातुभ्यः खश् प्रत्ययो भवति । **शर्द्धंजहा इति** । 'ओहाक् त्यागे' ( धा० पा० १०९० ) जुहोत्यादित्वाच्छपः श्लौ द्विर्वचने 'श्नाभ्यस्तयोरातः' इत्याकारलोपः ॥ २८ ॥

**भावबोधिनी**

षदजन्तस्य मुम्" ( पा. सू. ६।३।३७ से ) मुम् आगम करने के लिये है । शकार [ "तिङ् शित् सार्वधातुकम्" सूत्र से सार्वधातुक संज्ञा के लिये है । उदाहरण अङ्गम् एजयति— अङ्गमेजयः, जनम् एजयति— जनमेजयः । [ जनान् एजयति = दुष्ट लोगों को कंपा देता है—इस विग्रह में 'जनान्' उपपद णिजन्त 'एजि' धातु से खश् प्रत्यय होता है । इसके 'ख्' और 'श्' की इत्संज्ञा लोप कर देने पर 'अ' बचता है । 'उपपदमतिङ्' सूत्र से उपपद समास विभक्तिलोप कर देने पर जन + एजि + अ । 'इ' का गुण और अय् आदेश कर देने पर 'एजय' यह खिदन्त परे है अतः "अरुर्द्विषदजन्तस्य" ( ६.३.६७ ) सूत्र से मुम् = म् आगम करने पर 'जन म् एजय = जनमेजय । प्रातिपदिक— सम्बन्धी कार्य करने पर रूप सिद्ध होता है । ]

* खश् प्रत्यय के प्रकरण में वात, शुनी, तिल और शर्ध इनके उपपद रहते क्रमशः—अज्, धेट् तुद् और हा 'इन धातुओं का भी उपसंख्यान करना चाहिये । * [ 'अज यह गति और क्षेपण अर्थ में हैं" 'धेट् यह पीना अर्थ में है', 'तुद' यह व्यथन अर्थ में है । और 'ओहाक् यह त्याग अर्थ में हैं । इन से खश् प्रत्यय वातादि उपपद रहने पर करना चाहिये । ] उदाहरण—वातमजाः मृगाः [ वातम् अजन्ति—इस विग्रह में 'खश्' प्रत्यय, उपपद समास आदि के बाद 'मुम्' = म् आगम होता है । प्रथमा बहुवचन का रूप है । ] शुनिन्धयः—[ शुनीं धयति—इस अर्थ 'खश्' प्रत्यय, उपपद समास आदि करने के बाद मुम् आगम करने पर म् का अनुस्वार, परसवर्ण 'खित्यनव्ययस्य' ( पा० सू० ६.३.६६ ) से ह्रस्व होता है— शुनिन्धयः ] तिलन्तुदाः [ तिलान् तुदति —इस अर्थ में खश् आदि पूर्वोक्त प्रक्रिया होती है । ] शर्धञ्जहाः माषाः [ यहाँ णिजन्ति हापयति अर्थ में मानकर 'शर्धं जहति' इसमें खश् प्रत्यय होता है शित् सार्वधातुक मानकर शप् और उसका श्लु करने पर 'हा' का द्वित्वादि होता है । उपपद समास और विभक्तिलोप कर देने पर—शर्ध जहा—मुम् आगम, म् का अनुस्वार और परसवर्ण करके प्रथमा बहुवचन का रूप है । शर्ध = अपान द्वार में स्थित शब्द को उत्पन्न कराने वाले उड़द । ] ॥ २८ ॥

## ७९८. नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥ ( २९४४ )

**नासिकास्तनयोः कर्मणोरुपपदयोर्ध्माधेटोर्धात्वोः खश्प्रत्ययो भवति । यथासंख्यमत्र नेष्यते ।**

*** स्तने धेटः * ( म० भा० ३.२.३० वा० १ ) । स्तनन्धयः ।**

*** नासिकायां तु ध्मश्च धेटश्च * ( वा० ३ ) । नासिकन्धमः । नासिकन्धयः ।**

**तच्चैतन्नासिकास्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्यापूर्वनिपातनाल्लभ्यते । धेटष्टित्वात् स्त्रियां ङीप् प्रत्ययो भवति—स्तनन्धयी ॥**

**न्यासः**

**नासिकास्तनयोर्ध्माधेटोः ॥ स्तने धेट इत्यादिना** यथायोगमुपपदसम्बन्धं दर्शयन्नुदाहरणानि दर्शयति । **नासिकन्धम इति** । पाघ्रादिसूत्रेण धमादेशः ।

**तच्चैतदित्यादि** । यथासंख्याभावे हेतुमाह । स्तनशब्दो हि नासिकापेक्षयाल्पाच्तरः; तस्य पूर्वनिपाते कर्त्तव्ये योऽयमपूर्वनिपातः कृतः स लक्षणव्यभिचारं सूचयति । यथेह पूर्वनिपातशास्त्रं व्यभिचरति; स्वविषये न प्रवर्त्तते, तथा यथासंख्यलक्षणमपीति । अतोऽस्माल्लक्षणव्यभिचारचिह्नाद् यथासंख्याभावो लभ्यते ॥ २९ ॥

**पदमञ्जरी**

**नासिकास्तनयोर्ध्माधेटोः ॥ नासिकन्धम इति** । पाघ्रादिसूत्रेण धमादेशः । **तच्चैतदित्यादिना** यथासंख्याभावे हेतुमाह, तच्चैतत् यथासंख्याभावलक्षणं कार्यम् । एतेन च व्याख्यातॄणां मूलत्वेन **सूत्रकारस्याप्यत्र** किंचिदभिप्रेतमित्येतावत्प्रदर्श्यते । **तेनैतन्न नोदनीयम्**—उत्तरसूत्रवत्प्रत्येकमभिसम्बन्धः कस्मान्न भवति, विपर्ययो वा कस्मान्न भवतीति । **स्तनन्धयति** । अत्रैव ङीबिष्यते, नान्यत्रेत्याहुः ॥ २९ ॥

**भावबोधिनी**

'नासिका' और 'स्तन' कर्म उपपद रहते 'ध्मा' तथा 'धेट्' इन धातुओं से 'खश्' प्रत्यय होता है । यहाँ यथासंख्य इष्ट नहीं है । [ अतः दोनों से प्रत्यय होता है । ]

* स्तन उपपद रहते धेट् से खश् होता है । * स्तनन्धयः । [ स्तनं धयति = स्तन पान करता है—इस विग्रह में 'स्तनम्' उपपद 'धेट्' से खश् प्रत्यय ए का अय् उपपद समास और मुम् आगम—स्तन म् धय् म् का अनुस्वार तथा परसवर्ण । स्तनपान करने वाला बालक । ]

* नासिका उपपद रहते ध्मा तथा धेट् दोनों से खश् होता है । * उदाहरण —नासिकन्धमः । नासिकन्धयः । [ नासिकां धमति—इस विग्रह में खश् प्रत्यय, ''पाघ्राध्मास्ना०' ( पा० सू० ७।३।७८ ) से ध्मा का धम आदेश, उपपद समास विभक्तिलोप, मुम् म् का अनुस्वार और परसवर्ण, नासिका का ह्रस्व आदेश—नासिकन्धमः । इसी प्रकार नासिकां धयति— इस अर्थ में खश् = अ, धे + अ ए का अय् आदेश उपपद समास, विभक्तिलोप, मुम् ] और वह यथासंख्य का अभाव अल्प अच् वाले का पूर्वनिपात न होना रूपी लक्षणव्यभिचार से ज्ञात होता है । [ भाव यह है कि 'स्तन' और 'नासिका' में 'स्तन' अल्प अच् वाला है । अतः 'अल्पाच्तरम्' इस सूत्र के अनुसार 'स्तन' शब्द ही पूर्व में होना चाहिये था किन्तु वैसा न करके 'नासिका' इसका पूर्व प्रयोग पाणिनि ने किया है । यह सूचित करता है कि यहाँ उपपद और धातु में यथासंख्य नहीं है ।अतः दोनों उपपद रहते दोनों धातुओं से खश् होना चाहिये, यह पाणिनि का मत है । वर्त्तिककार ने 'स्तन' उपपद रहते केवल 'धेट्' से 'खश्' माना है । 'नासिका' उपपद रहते 'धेट्' तथा 'ध्मा' दोनों से खश् माना है । ] धेट् का ट् इत् है अतः स्त्रीलिङ्ग में [ ''टिड्ढाणञ्'' सूत्र से] ङीप् प्रत्यय होता है—स्तनन्धयी। [ दुधमहीं बच्ची ] ॥ २९ ॥

## ७९९. नाडीमुष्ट्योश्च ॥ ३० ॥ ( २९४५ )

**नाडी, मुष्टि—इत्येतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् प्रत्ययो भवति। अत्रापि घ्यन्तस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन संख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः। घटिन्धमः। घटिन्धयः। खरिन्धमः। खरिन्धयः ( म० भा० )। वातन्धमः पर्वतः। वातन्धयः॥**

## ८००. उदि कूले रुजिवहोः ॥ ३१ ॥ ( २९४६ )

**'रुजो भङ्गे' ( धा० पा० १४१७ ) 'वह प्रापणे' ( धा० पा० १००५ )—इत्येताभ्यामुत्पूर्वाभ्यां कूले**

### न्यासः

**नाडीमुष्ट्योश्च ॥ अत्रापीत्यादिना** नाडीमुष्टिशब्दो हि घ्यन्तः, तस्य हि 'द्वन्द्वे घि' इति पूर्वनिपाते प्राप्ते योऽयमपूर्वनिपातः कृतः स पूर्वनिपातलक्षणव्यभिचारचिह्नम्, अत इहापि संख्यातानुदेशो न भवतीत्यपि सूचयति। अथ प्रत्येकमुपपदाभ्यां धातोः प्रत्येकं सम्बन्धः। स चोदाहरणेनैव वृत्तावभिव्यक्त। **अनुक्तसमुच्चयार्थश्चकार इति।** तेन घटीखारीवातशब्देष्वप्युपपदेषु ध्माधेटोः खश् भवति। यद्येवम्, वैषम्यादेव संख्यातानुदेशो न भविष्यतीति निरर्थकस्तदभावार्थो घ्यन्तस्यापूर्वनिपातः ? उच्यते—वाक्ये भेदेन द्वे ह्यत्र, एकेन वाक्येन नाडी-मुष्टी—इत्येतयोर्ध्माधेटोः खश् भवतीति। अतः 'नाडीमुष्ट्योः' इत्येकं वाक्यम्, चकारस्यानुक्तसमुच्चयार्थत्वाद् घटीखारीवातशब्देष्वप्युपपदेषु ध्माधेटोः खश् भवतीति द्वितीयम्। तत्र पूर्वस्मिन् वाक्ये समानत्वमस्तीति स्यादेव संख्यातानुदेशः॥ ३०॥

**उदि कूले रुजिवहोः ॥ उदीति** सत्सप्तमीयम्—उदि सति। तत्रोत्कूलशब्दयोर्विषयव्यवस्था द्रष्टव्या। 'ते प्राग्धातोः' इति वचनाद् धातोरनन्तरमुत्शब्दः, तस्मात् पूर्वः कूलशब्द इति। अथ वा—उदिति परसप्तमी—उदि परतः कूलशब्दस्योपपदत्व इति। अथोच्छब्दस्याप्युपपदसंज्ञा कस्मान् न भवति, प्रत्येकं सप्तम्युच्चारणात् ?

### पदमञ्जरी

**नाडीमुष्ट्योश्च ॥ घटिन्धमः, खरिन्धम इति।** घटी=घटः, खरी=गर्दभी, जातिलक्षणो ङीष्। **खारी**-त्यन्ये पठन्ति स च परिमाणवचनः। वातशब्दो न दृष्टः॥ ३०॥

**उदि कूले रुजिवहोः ॥** यत्र प्रत्येकमुपपदत्वमिच्छति तत्र समुदायात्सप्तमीमुच्चारयति, यथा—नाडीमुष्ट्यो-रिति। इह तु विपर्ययः कृतः; तस्मात् 'उदि' इति सत्सप्तमी। 'कूले' इति त्वर्थनिरपेक्षैवोपपदसंज्ञायां लिङ्गम्।

### भावबोधिनी

'नाडी' तथा 'मुष्टि' ये कर्म उपपद रहते 'ध्मा' तथा 'धेट्' धातुओं से खश् प्रत्यय होता है। इसमें भी घि-संज्ञक 'मुष्टि' का पूर्वनिपात न करना 'द्वन्द्वे घि' इस सूत्र का उल्लंघन है अतः इससे यथासंख्य की प्रवृत्ति नहीं होती है [ अतः दोनों उपपद रहते दोनों धातुओं से खश् प्रत्यय होता है। ] उदाहरण—नाडिन्धमः [ नाडीं धमति —इस विग्रह में खश् उपपद समास, मुम् ह्रस्व आदि होता है। ] नाडिन्धयः। [ नाडीं धयति—इस विग्रह में खश् उपपद समास आदि प्रक्रिया होती है। ] मुष्टिम् धमति' और मुष्टिम् धयति —यह विग्रह है। ह्रस्व के अतिरिक्त सभी प्रक्रिया होती है। सूत्र में अनुक्त का समुच्चय करने के लिये चकार है। अतः ये भी होते हैं—घटिन्धमः घटिन्धयः [ घटीं धमति और घटीं धयति—ये विग्रह हैं। ] खरिन्धमः, खरिन्धयः [ खरीं धमति, और खरीं धयति—ये विग्रह है। खरी=गधी। कहीं कहीं खारिन्धमः, खारिन्धयः— यह भी पाठ है। खारी एक परिमाणविशेष है। ] वातन्धमः पर्वतः। वातन्धयः। [ इसमें भी सभी प्रक्रिया होती है। पदपञ्जरीकार इसका पाठ नहीं मानते हैं। ] ॥ ३० ॥

'रुज भङ्ग अर्थ में है' 'वह प्रापण=पहुँचाना अर्थ में है—' उत् पूर्वक इन धातुओं से 'कूल' कर्म उपपद रहते

**कर्मण्युपपदे खश् प्रत्ययो भवति । कूलमुद्रुजतीति कूलमुद्रुजो रथः । कूलमुद्वहः ॥**

**८०१. वहाभ्रे लिहः ॥ ३२ ॥ ( २९४७ )**

**वह, अभ्र—इत्येतयोः कर्मणोरुपपदयोः लिहेर्धातोः खशप्रत्ययो भवति । वहं लेढीति वहंलिहो गौः । अभ्रंलिहो वायुः ॥**

**८०२. परिमाणे पचः ॥ ३३ ॥ ( २९४८ )**

**परिमाणं प्रस्थादि, तस्मिन्कर्मण्युपपदे पचेः खशप्रत्ययो भवति । प्रस्थं पचति प्रस्थम्पचा स्थाली । द्रोणम्पचः, खारिम्पचः कटाहः ॥**

**न्यासः**

एषा ह्याचार्यस्य शैली यत्र प्रत्येकमुपपदत्वमस्ति तत्र समुदायात् सप्तमीमुच्चारयति, यथा—'नाडीमुष्ट्योः' इति । इह तु विपर्ययः कृत इति न भवत्युपपदत्वम् । अपि च रुजिवहोः सकर्मकत्वात् कर्मणीतीहोपतिष्ठते । न चोच्छशब्दस्य कर्मत्वं सम्भवति असत्त्ववाचित्वात् । कुतस्तस्योपपदत्वम् ! **कूलमुद्रुज इति** । तुदादित्वाच्छः । **कूलमुद्वह इति** । शप् ॥ ३१ ॥

**वहाभ्रे लिहः ॥ वहंलिह इति** । 'लिह आस्वादने', अदादित्वाच्छपो लुक्, 'सार्वधातुकमपित्' इति ङित्त्वाद् गुणाभावः ॥ ३२ ॥

**परिमाणे पचः ॥ प्रस्थम्पचा, द्रोणम्पचेति** । प्रस्थद्रोणपरिमिते व्रीह्यादौ प्रस्थद्रोणशब्दावुपचारेण वर्त्तेते, न प्रस्थादावेव परिमाणविशेषे काष्ठादिमये । क्लेदवाची ह्यत्र पचिः । न च मुख्यस्य प्रस्थादेर्विक्लेदः सम्भवति, अतो न तस्य सम्बन्ध उपपद्यते । स्वरूपग्रहणमप्यत एव न भवति; न हि स्वरूपप्रधानेन परिमाणेन विक्लेदवचनस्य पचेः सम्बन्धः सम्भवति । यद्यपि हि प्रस्थादिशब्दः परिमेये वर्त्तते, तथापि परिमाणव्यपदेशो न तस्य विरुध्यते; प्रथमं परिमाणवृत्तित्वात् ॥ ३३ ॥

**पदमञ्जरी**

तत्र च 'ते प्राग्धातोः' इति उच्छशब्दस्य धातोः प्राक् प्रयोगः । ततः पूर्वः कूलशब्दः । तदेतद्दर्शितम्—**उत्पूर्वाभ्यां कूले कर्मण्युपपद इति** ॥ ३१-३२ ॥

**परिमाणे पचः ॥** परिमाणशब्दः काष्ठादिनिर्मिते प्रस्थादौ वर्त्तते, न तस्य विक्लेदवाचिना पचिना कर्मत्वेनान्वयः । अतो न स्वरूपग्रहणम्, किं तर्हि ? तद्विशेषाः प्रस्थादयो गृह्यन्ते, ते च परिमाणे परिमेये व्रीह्यादौ च वर्त्तन्ते । तत्र परिमाणनिष्ठानां न पचिनान्वय इति परिमेयनिष्ठेषु प्रत्ययः । न तर्हि परिमाणवाचित्वम्, न; परिमाणाध्यारोपेण परिमेये प्रस्थादिशब्दस्य प्रवृत्तेः ॥ ३३ ॥

**भावबोधिनी**

खश् प्रत्यय होता है। उदा० कूलम् उद्रुजति—इस अर्थ में कूलमुद्रुजः रथः । [ कूलम् उद्रुजति इस अर्थ में खश् प्रत्यय, उपपदसमास, विभक्तिलोप—कूल उद्रुज्+अ मुम् आगम करने पर रूप बनता है । तुदादिगणीय होने से श=अ होता है । पररूप हो जाता है । किनारा तोड़ने वाला रथ ] कूलमुद्वहः । [ कूलम् उद् वहति—इस अर्थ में खश् प्रत्यय और उपपदसमास आदि होता है । किनारा उखाड़ने वाला । ] ॥ ३१ ॥

'वह' और 'अभ्र' ये उपपद रहते 'लिह्' धातु से खश् प्रत्यय होता है ।उदा० वहं लेढि इस अर्थ में वहंलिहः [ खश् उपपद समास विभक्तिलोप और मुम् किया जाता है । 'लिह्' धातु अदादिगणीय है । अतः शप् का लुक् हो जाने से "सार्वधातुकमपित्" सूत्र से अपित् को ङिद्वत् मानने के कारण गुण का निषेध होता है । ] अभ्रंलिहः वायुः [ अभ्रं लेढि—इस अर्थ में पूर्वोक्त प्रक्रिया करने पर रूप बनता है । बादलों को उड़ा देने=चाटने वाली हवा ] ॥ ३२ ॥

परिमाण=प्रस्थ आदि, इन के उपपद रहते पच् धातु से खश् प्रत्यय होता है । उदा० प्रस्थं पचति इस अर्थ में 'प्रस्थम्पचा स्थाली' बनता है । द्रोणम्पचः, खादिम्पचः कटाहः । [ द्रोणं पचति, खारीं पचति—यह विग्रह है । खश् प्रत्यय, उपपदसमास, मुम् आगम आदि होता है ] ॥ ३३ ॥

**८०३. मितनखे च ॥ ३४ ॥ ( २९४९ )**

**मित, नख-इत्येतयोः कर्मणोरुपपदयोः पचेः खश्प्रत्ययो भवति । अपरिमाणार्थं आरम्भः । मितं पचति मितम्पचा ब्राह्मणी । नखम्पचा यवागूः ॥**

**८०४. विध्वरुषोस्तुदः ॥ ३५ ॥ ( २९५० )**

विधु, अरुष्-इत्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खश्प्रत्ययो भवति । विधुन्तुदः राहुः । अरुन्तुदः ॥

**८०५. असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥ ( २९५१ )**

असूर्य, ललाट—इत्येतयोः कर्मणोरुपपदयोः दृशितपोर्धात्वोः खश्प्रत्ययो भवति । असूर्यम्पश्या राजदाराः । ललाटन्तप आदित्यः ।

'असूर्य' इति चासमर्थसमासोऽयम्; दृशिना नञः संबन्धात्—सूर्यं न पश्यन्तीति । गुप्तिपरं चैतत्—

**न्यासः**

**मितनखे च ॥ अपरिमाणार्थ आरम्भ इति ।** परिमाणे पूर्वेणैव सिद्धत्वात् । मितनखशब्दयोरपरिमाणवचनत्वात् । सर्वदैव हि मितशब्दः परिमेयद्रव्यवचनः, नखशब्दो हि प्राण्यङ्गवचनः ॥ ३४ ॥

**विध्वरुषोस्तुदः ॥ अरुन्तुद इति ।** अरुश्शब्दस्य 'अरुर्द्विषदजन्तस्य' इत्युकारात् परो मुमागमः, 'संयोगान्तलोपः' 'मोऽनुस्वारः', 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णः ॥ ३५ ॥

**असूर्यललाटयोर्दृशितपोः ॥ असूर्यम्पश्या इति ।** पाघ्रादिसूत्रेण पश्यादेशः । **दृशिना नञः सम्बन्धादिति ।** असामर्थ्यं हेतुः । अत्र हि दर्शनं प्रतिषिध्यते, न तु सूर्य एव । तस्माद् दृशिनैव नञः सम्बन्धः, न सूर्येणेत्यसामर्थ्यम् ।

**पदमञ्जरी**

**मितनखे च ॥ नखम्पचेति ।** पचिरत्र तापवचनः ॥ ३४ ॥

**विध्वरुषोस्तुदः ॥ अरुन्तुद इति ।** 'अरुर्द्विषदजन्तस्य मुम्' इति उकारात्परो मुम्, संयोगान्तस्य लोपः ॥ ३५ ॥

**असूर्यललाटयोर्दृशितपोः ॥ असूर्यम्पश्या इति ।** पाघ्रादिसूत्रेण पश्यादेशः । **गुप्तिपरं चैतदिति ।** यद्वचनम्—

**भावबोधिनी**

'मित' और 'नख' ये कर्म उपपद रहने पर 'पच्' धातु से 'खश्' प्रत्यय होता है । परिमाण से भिन्न अर्थ के लिये यह सूत्र बनाया गया है । उदा० मितं पचति—इस विग्रह में—मितम्पचा ब्राह्मणी । ] थोड़ा पकाने वाली ब्राह्मणी ] नखम्पचा यवागूः । [ नाखूनों को गरम कर देने वाला हलुआ । प्रक्रिया पूर्ववत् ही है । ] ॥ ३४ ॥

'विधु' और 'अरुष्' इन कर्मों के उपपद रहते 'तुद' धातु से खश् प्रत्यय होता है । उदा० विधुन्तुदः राहुः । [विधुं तुदति—इस विग्रह में खश् प्रत्यय, उपपदसमास विभक्तिलोप, मुम्, म् का अनुस्वार और परसवर्ण करने पर रूप सिद्ध होता है । ] अरुन्तुदः [ मर्मस्थलपीड़क । अरुः तुदति—इस अर्थ में खश् = अ प्रत्यय, उपपद समास विभक्ति लोप करने पर अरुष् + तुद् में मुम् आगम "मिदचोऽन्त्यात् परः" सूत्र के अनुसार 'उ' के बाद होता है—अरु म् ष् + तुद्—यहाँ 'संयोगान्तस्य लोपः' सूत्र से 'ष्' का लोप, म् का अनुस्वार, परसवर्ण, यहाँ समास के पूर्व भी अन्तर्वर्तिनी विभक्ति मानकर 'अरु म् ष्' का पदत्व सम्भव होने से संयोगान्तलोप होता है । ] ॥ ३५ ॥

'असूर्य' तथा 'ललाट' इनके उपपद रहते क्रमशः 'दृश्' और 'तप्' धातुओं से खश् प्रत्यय होता है । उदा० असूर्यम्पश्याः राजदाराः [ सूर्य को भी न देखने वाली अर्थात् सदैव पर्दे में रहने वाली रानियाँ ] ललाटन्तपः सूर्यः । [ मस्तक को तपा देने वाला सूर्य । सूर्यं न पश्यन्ति तथा ललाटं तपति—यह विग्रह खश् प्रत्यय, उपपदसमास करने पर असूर्य + दृश् + अ, शप् = अ "पाघ्राध्मा०" ( ७।३।७८ ) इस सूत्र से दृश् का 'पश्य' आदेश, अ का पररूप मुम्, अनुस्वार तथा परसवर्ण करने पर रूप बनता है—असूर्यम्पश्य । स्त्रीलिङ्ग में टाप् = आ होकर प्रथमा बहुवचन का रूप है । इसी प्रथमा 'ललाटन्तपः' भी बनता है । ]

'असूर्यं' यह असमर्थ समास है क्योंकि नञ् का सम्बन्ध 'दृश' धातु के साथ है [ सूर्य के साथ नहीं ]—सूर्यं

**एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति ॥**

**८०६. उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥ ३७ ॥ ( २९५२ )**

**उग्रम्पश्य, इरम्मद, पाणिन्धम-इत्येते शब्दा निपात्यन्ते । उग्रं पश्यतीत्युग्रम्पश्यः । इरया माद्यतीति इरम्मदः । पाणयो ध्मायन्ते एष्विति पाणिन्धमाः पन्थानः ॥**

**न्यासः**

**सूर्यं न पश्यन्तीति** दृशिना नञः सम्बन्धं दर्शयति । यदा सूर्यः प्रतिषिध्यते तदा न भवितव्यमेव प्रत्ययेन, अनभिधानात् । समासश्चायमसामर्थ्येऽपि भवति, गमकत्वात् । अस्मादेव वचनाद्वा । ननु च यथा राजदाराः सूर्यं न पश्यन्तीति तथान्यदपि परपुरुषादिकम्, तत्रायुक्तं सूर्येणैकेन विशेषणेनेत्यत आह **गुप्तिपरञ्चैतदिति** । यदेतदसूर्यम्पश्या राजदारा इति वचनमेतद् गुप्तिप्रधानम्; गुप्तिप्रतिपादनाय प्रयुक्तत्वात् । **एवं नामेत्यादिना** गुप्तिपरत्वमस्य दर्शयति ॥ ३६ ॥

**उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥ उग्रम्पश्येति** । 'कर्मण्यण्' इति प्राप्ते दृशेः खश् निपात्यते । पूर्ववत् पश्यादेशः । **इरम्मद इति । इरया माद्यतीति** । 'मदी हर्षे' । तृजादिषु प्राप्तेषु खश् निपात्यते । तत्र दिवादित्वाच्छ्यनि प्राप्ते तदभावो निपात्यते । **पाणिन्धमा इति** । अधिकरणे ल्युटि प्राप्ते खश् निपात्यते । पूर्ववद्धमादेशः ॥ ३७ ॥

**पदमञ्जरी**

'असूर्यम्पश्या राजदाराः' इति, एतद् गुप्तिप्रधानम्; तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुद्धयत इति भावः । गुप्तिपरत्वमेव प्रकटयति **एवं नामेति** ॥ ३६ ॥

**उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥ उग्रं पश्यतीति** । क्रियाविशेषणमेतत् । **इरम्मद इति** । 'मदी हर्षे' ( धा० पा० १२०८ ) दिवादित्वाच्छ्यनि प्राप्ते तदभावो निपातनात् । इरा = उदकम् । **पाणिन्धमाः पन्थान इति** । ते पुनर्येषु गच्छद्भिः सर्पाद्यपनोदनाय पाणयो ध्मायन्ते = शब्द्यन्ते ॥ ३७ ॥

**भावबोधिनी**

न पश्यन्ति । और यह गोपन = छिपाना अर्थ का प्रतिपादक है—इस प्रकार से छिपी रहने वाली हैं कि अपरिहार्य दर्शन वाले सूर्य को भी नहीं देखती हैं ।

**विमर्श**—'असूर्यम्पश्या' यहाँ सूर्यं न पश्यति—यह विग्रह है । प्रसज्य-प्रतिषेध होने से नञ् का सम्बन्ध 'दृश्' क्रिया के साथ है । तब सूर्य के साथ समास नहीं होना चाहिये ? इसका समाधाने यह दिया है कि यहाँ सामर्थ्य न होने पर भी लक्ष्यानुरोध से समास किया जाता है । यहाँ सूर्य को भी नहीं देखतीं है -इसका तात्पर्य अत्यधिक गोपनीयता से है । अतः यदि कभी सूय को देख भी ले तो भी प्रयोग में अनुपपत्ति नहीं समझनी चाहिये । खश् प्रत्यय शित् होने से सार्वधातुक है । अतः शप् और 'पश्य' आदेश दोनों कार्य होते हैं ॥ ३६ ॥

उग्रम्पश्य, इरम्मद और पाणिन्धम— इनकी निपातन से सिद्ध होती है । उदा० उग्रं पश्यति—इस अर्थ में—उग्रम्पश्यः । [ यहाँ भी खश् करने पर शप् और 'पश्य' आदेश होता है । ] इरया माद्यति—इस अर्थ में खश् प्रत्यय उपपदसमास, विभक्तिलोप, इरामद नुम् ह्रस्व करने पर इरम्मदः = बिजली ] पाणयः ध्मायन्ते येषु—पाणिन्धमाः पन्थानः [ जिनमें हाथ बजाये जाये जाते हैं ऐसे रास्ते । यहाँ भी खश् करने पर शप् और 'ध्मा' का 'धम' आदेश मुम् अनुस्वार परसवर्ण करने पर रूप बनता है ॥ ३७ ॥ ]

## ८०७. प्रियवशे वदः खच् ॥ ३८ ॥ ( २९५३ )

**प्रिय. वश–इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् प्रत्ययो भवति । प्रियं वदतीति प्रियंवदः । वशंवदः । चकारः 'खचि ह्रस्वः' ( ६.४.९४ ) इति विशेषणार्थः । खकारो मुमर्थः । प्रत्ययान्तरकरणमुत्तरार्थम् ।**

**❀ खचप्रकरणे गमेः सुप्युपसंख्यानम् ❀ ( म० भा० ३.२.३८ वा० १ ) मितंगमो हस्ती । मितंगमा हस्तिनी ।**

**❀ विहायसो विह च ❀ ( वा० २ ) । विहायसा गच्छति विहंगमः ।**

**न्यासः**

**प्रियवशे वदः खच् ॥ चकारः 'खचि ह्रस्वः' इति विशेषणार्थ इति ।** 'खे ह्रस्वः' इत्युच्यमाने खश्यपि स्यात् । ननु चैकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति न भविष्यति ? एवं तर्हि परिभाषाश्रयणाच्चकारकरणमेव लघ्विति च मन्यते । ननु च प्रियंवदो वशंवद इति खश्यपि सिद्ध्यति, किमर्थम् प्रत्ययान्तरकरणमित्याह— **प्रत्ययान्तरकरणमुत्तरार्थमिति ।** 'द्विषत्परयोस्तापेः' इत्यत्र खचि ह्रस्वस्तापेर्यथा स्यात् । णिलोपश्चेत्याद्यर्थं प्रत्ययान्तरं क्रियते । अथोत्तरत्रैव खच् कस्मान्न क्रियते ? अत्रापि खच् भवतीति विज्ञानार्थम् । तेन गमेरपि सुप्युपपदे खच् सिद्धो भवति ।

यदि 'खच्प्रकरणे गमेः सुप्युपसंख्यानम्', तत्रोपसंख्यानशब्दस्य प्रतिपादनार्थं प्रत्ययान्तरं क्रियते । प्रतिपादनन्त्विदमेव वेदितव्यम् ।

**विहायसो विह चेति** . गमेर्विहायःशब्द उपपदे खचप्रत्ययः, तत्सन्नियोगेन विहायःशब्दस्य विहादेशः ।

**पदमञ्जरी**

**प्रियवशे वदः खच् ॥ चकारः खचि ह्रस्वः इति विशेषणार्थ इति ।** 'खे ह्रस्वः' इत्युच्यमाने 'एजेः खश्' अङ्गमेजयः, जनमेजयः —अत्रापि प्राप्नोति ? 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' ( व्या० परि० ५२ ) इत्यत्र न भविष्यति ।। इह तर्हि—'कुलात्खः' कुलीनः, यस्येति लोपनिवृत्तये ह्रस्वः स्यात् ? तत्र धातुप्रत्ययस्य ग्रहणं तत्प्रकरणसाहचर्यादिष चिन्त्यप्रयोजनश्चकारः । **प्रत्ययान्तरकरणमुत्तरार्थमिति ।** 'द्विषन्तपः' इत्यत्र ह्रस्वणिलोपौ यथा स्याताम्, शप् च मा भूदिति । यद्येवम्, उत्तरत्रैव कर्तव्ये इह करणे किं प्रयोजनम् ? अन्येभ्योऽपि भवतीति ज्ञापनार्थम् । तेन 'गमेः सुप्युपसंख्यानम्' इति न वक्तव्यं भवति ।

**मितङ्गम इति ।** असंज्ञार्थमिदम्, संज्ञायां तु 'गमश्च' इति वक्ष्यमाणेनैव सिद्धम् ॥ ३८ ॥

**भावबोधिनी**

'प्रिय' और 'वश' इन कर्मों के उपपद रहते 'वद' धातु से खच् प्रत्यय होता है । उदा० प्रियं वदति—इस विग्रह में—प्रियम्वदः । [ प्रियम् उपपद वद धातु से खच् प्रत्यय, उपपदसमास विभक्तिलोप—प्रियवद खिदन्त परे मानकर मुम् आगम्, म् का अनुस्वार और परसवर्ण । प्रिय बोलने वाला । ] वशंवदः [ वश में बोलने वाला । वशं वदति—यह विग्रह है । ] चकार 'खचि ह्रस्वः' ( पा० सू० ६।४।९४ ) इस विशेषण के लिये है । खकार [ खित् मानकर ] मुम् करने के लिये है । [ खश् प्रत्यय से ही निर्वाह सम्भव था फिर भी ] खच् यह दूसरा प्रत्यय करना उत्तर सूत्र में अनुवृत्ति के लिये है ।

❀ खच् प्रकरण में सुबन्त उपपद रहते गम् से भी उपसंख्यान करना चाहिये । * मितङ्गमः हस्ती, मितङ्गमा हस्तिनी । [ थोड़ा चलने वाला हाथी, थोड़ा चलने वाली हथिनी । मितं गच्छति—इस अर्थ में 'मितम्' उपपद 'गम्' धातु से खच् प्रत्यय तथा पूर्वोक्त प्रक्रिया होती है । स्त्रीलिङ्ग में टाप् भी होता है । ]

❀ विहायस् का विह आदेश और खच् प्रत्यय होता है । ❀ विहायसा गच्छति—इस विग्रह में खच् प्रत्यय

**❀ खच्च डिद्वा वक्तव्यः ❀ ( वा० ३ ) । विहंगः । विहंगमः ।**

**❀ डे च विहायसो विहादेशो वक्तव्यः ❀ ( वा० ४ ) । विहगः ।।**

**८०८. द्विषत्परयो स्तापेः ।। ३९ ।। ( २९५४ )**

**द्विषत्परयोः कर्मणोरुपपदयोस्तापेर्धातोः खच्प्रत्ययो भवति । 'तप दाहे' ( धा० पा० १८१९ ) चुरादिः, 'तप संतापे' ( धा० पा० ९८६ ) भ्वादिः—द्वयोरपि ग्रहणम् । द्विषन्तं तापयति द्विषन्तपः । परन्तपः । 'द्विषत्परयोः' इति द्वितकारको निर्देशः । तेन स्त्रियां न भवति द्विषतीं तापयति द्विषतीतापः ।।**

**न्यासः**

**खच्च डिद्वा वक्तव्य इति** । डित्त्वाट्टिलोपः स्यात्, 'विहायसो विह च' इत्यतोऽस्य भेदेन पाठात् । डित्त्वस्यानित्यत्वज्ञापनार्थम्; अन्यथा विहङ्गम इति न सिध्येत् ।

**डे चेत्यादि** । डप्रत्यये च गमेर्विहायसो विहादेशः । **विहग इति** । न पुनरत्र डप्रत्ययः ? अस्मादेव वचनाद्भवति । अथ वा वक्ष्यत्युत्तरतः 'डप्रकरणेऽन्येष्वपि दृश्यते' इति ॥ ३८ ॥

**द्विषत्परयोस्तापेः ॥ द्वयोरपि ग्रहणमिति** । ण्यन्तावस्थायां विशेषाभावात् । **द्वितकारको निर्देश इति** । 'द्विषत्परयोः' इति निर्देशे द्वौ तकारौ, तत्रैको द्विषच्छब्दस्यावयवः; तेन द्विषच्छब्दो विशिष्यते—द्विषच्छब्द उपपदे तकारान्त इति । **तेन स्त्रियां न भवतीति** । स्त्रीप्रत्ययान्तस्तकारान्तो न भवति । असति तु द्वितीये तकारे 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति स्त्रियामपि स्यात् । **द्विषतीति** । 'उगितश्च' इति ङीप । उगित्त्वन्तु द्विषच्छब्दस्य 'द्विषोऽमित्रे' इति शत्रन्तत्वात् ॥ ३९ ॥

**पदमञ्जरी**

**द्विषत्परयोस्तापेः ।। द्विषन्तप इति** । मुमि संयोगान्तलोपः । **द्वितकारको निर्देश इति** । तत्रैकेन द्विषच्छब्दो विशेष्यते—तकारान्तो यो द्विषच्छब्द इति, सौत्रत्वान्निर्देशस्य विशेषणस्य परनिपातः । **तेन स्त्रियां न भवतीति** । अन्यथा लिङ्गविशिष्टपरिभाषया स्यादेव प्रसङ्ग इति भावः ॥ ३९ ॥

**भावबोधिनी**

उपपद-समास, विभक्तिलोप, 'विहायस्' का 'विह' आदेश—विह + गम, मुम्, अनुस्वार, परसवर्ण—विहङ्गमः = आकाश से जाने वाला पक्षी । ] ❀ और खच् प्रत्यय विकल्प से डित् समझना चाहिये । * विहङ्गः, विहङ्गमः । [ जब डित् होता है तब टि = अम् का लोप होने से 'विहं ग् + अः' यही बनता है । डित् न होने पर विहङ्गमः यह रूप बनता है । ]

* और ड परे रहते 'विहायस्' का 'विह' आदेश कहना चाहिये । * विहगः । [ इस वचन के आधार पर ही 'ड' प्रत्यय होता है अतः डित् मानकर टिलोप होता है । खित् परे न होने से मुम् नहीं होता है । विहंगम विहंग और विहग तीनों का अर्थ है—पक्षी ] ॥ ३८ ॥

'द्विषत्' और 'पर' कर्मों के उपपद रहते 'ताप्' धातु से खच् प्रत्यय होता है । 'तप धातु दाह अर्थ में चुरादिगणीय है' 'तप सन्ताप अर्थ में भ्वादिगणीय है' - इन दोनों का ग्रहण होता है । उदाहरण—द्विषन्तं तापयति - इस अर्थ में द्विषन्तपः । [ द्विषन्तं तापयति—इस विग्रह में खच् प्रत्यय, उपपदसमास, विभक्तिलोप,—मुम् का आगम अन्त्य अच् के बाद—द्विष म् त् तप यहाँ पर अन्तर्वर्तिनी विभक्ति मानकर संयोगान्तलोप, म् का अनुस्वार परसवर्ण—द्विषन्तपः । शत्रु को कष्ट देने वाला । ] परन्तपः [ परं तपति—इस विग्रह में यह बनता है । दूसरे को कष्ट देने वाला ] 'द्विषत्परयोः' यह दो तकारों वाला निर्देश है । [ इससे तकारान्त जो 'द्विषत्' उसी से परे 'तप' से खच् प्रत्यय होता है । ] इस कारण स्त्रीलिङ्ग में खच् नहीं होता है—द्विषतीं तापयति—द्विषतीतापः । [ यहाँ तकारान्त न होकर ङीबन्त है अतः खच् आदि नहीं होते हैं । ] ॥ ३९ ॥

**८०९. वाचि यमो व्रते ॥ ४० ॥ ( २९९६ )**

**वाक्शब्दे कर्मण्युपपदे यमेर्धातोः खच्प्रत्ययो भवति व्रते गम्यमाने । 'व्रते' इति शास्त्रितो नियम उच्यते । वाचंयम आस्ते ।**

**व्रत इति किम् ? वाग्यामः ॥**

**८१०. पूःसर्वयोर्दारिसहोः ॥ ४१ ॥ ( २९९८ )**

**पुर्, सर्व–इत्येतयोः कर्मणोरुपपदयोर्यथासंख्यं दारिसहोर्धात्वोः खच्प्रत्ययो भवति । पुरं दारयति पुरन्दरः । सर्वंसहो राजा ।**

**न्यासः**

**वाचि यमो व्रते ॥ शास्त्रित इति ।** शास्त्रे कृत इति विगृह्य शास्त्रशब्दात् प्रातिपदिकाद्धात्वर्थे णिच्, तदन्तात् क्ते विहिते शास्त्रित इति । शास्त्रविहित इत्यर्थः । अथ वा-शास्त्रिण इतः शास्त्रितः, शास्त्रविद इतः = जातः, प्रवृत्तः । अथ वा–शास्त्रशब्दस्तारकादिषु द्रष्टव्यः । शास्त्रमस्य सञ्जातमिति शास्त्रितः । **वाचंयम इति ।** वाचं यच्छतीति विगृह्य खचि'वाचंयमपुरन्दरौ च' इति पूर्वपदस्य मुमभावो निपात्यते । ननु च प्रत्ययोऽपि तेनैव निपातनेन भविष्यति, तत् किमनेन ? नैतदस्ति; यच्छतीति पचाद्यचि विहिते ततश्च 'वाचो यमः' इति षष्ठीसमासे कृते वाचंयम इति सिध्यति । सम्पद्यत एव, तत्र तु निपातनमनर्थकं स्यात् । एवञ्च सति नित्यमुपपदसमासो न स्यात् । अतः खच्प्रत्ययो विधेयः, निपातनमपि कर्त्तव्यम् ॥ ४० ॥

**पूःसर्वयोर्दारिसहोः ॥ दारीति ।** 'दॄ विदारणे' इत्यस्य णिचा निर्देशः । **पुरन्दर इति ।** पूर्वपदे मुम्भावो निपात्यते ।

**पदमञ्जरी**

**वाचि यमो व्रते ॥ शास्त्रित इति ।** शास्त्रशब्दाद्विधाने धात्वर्थे णिच्, तदन्तात्कर्मणि क्तः । शास्त्रे विहितः, शास्त्रेण वा = शास्त्रितः । **नियम इति ।** सङ्कल्पविशेषः । **वाचंयम इति ।** 'वाचंयमपुरन्दरौ च' इति पूर्वपदस्यामन्तत्वम् । तत एव तर्हि निपातनात्प्रत्ययो भविष्यति । व्रतादन्यत्रापि तर्हि प्राप्नोति ? तत्रैव व्रतग्रहणं करिष्यते—'वाचंयमो व्रते पुरन्दरश्च' इति, तदेतच्चिन्त्यप्रयोजनम् । एतेन **पुरन्दरो** व्याख्यातः ।

**वाग्याम इति ।** योऽशक्त्यादिना वाचं यच्छति तत्राणेव भवति ॥ ४० ॥

**पूःसर्वयोर्दारिसहोः ॥** 'दॄ विदारणे' ( धा० पा० १४९३ ) इत्यस्य ग्रहणम्; न 'दॄ भये' ( धा० पा० ८०८ ) 'दृङ् आदरे' ( धा० पा० १४११ )—इत्येतयोरित्युपदेशः । असंज्ञार्थं सहिग्रहणम्, संज्ञायां तु वक्ष्यति । **सर्वंसहो**

**भावबोधिनी**

वाक् शब्द कर्म उपपद रहते 'यम्' धातु से खच् प्रत्यय होता है व्रत के प्रतीत होने पर । 'व्रत' यह शास्त्रित = शास्त्र में अथवा शास्त्र से विहित 'नियम' कहा जाता है । वाचंयमः आस्ते । [ वाचं यच्छति—इस अर्थ में खच् प्रत्यय, उपपद समास विभक्तिलोप, 'वाचंयमपुरन्दरौ' इस सूत्रनिर्देश के कारण पूर्वपद को अकारान्त निपातित किया जाता है । इसी आधार पर मुम् भी होता है । ]

व्रत अर्थ में—इसका क्या फल है ? वाग्यामः । [ यहाँ खच् न होकर अण् होता है । अतः उपधावृद्धि होती है । क् का जश्त्व होकर 'ग्' होता है—वाग्यामः । ] ॥ ४० ॥

'पुर्' और 'सर्व' इन कर्मों के उपपद रहते क्रमशः 'दारि' और 'सह' धातुओं से खच् प्रत्यय होता है । उदाहरण पुरं दारयति—इस अर्थ में—पुरन्दरः । [ पुरम् उपपद 'दृ' से खच् प्रत्यय, ऋ का गुण रपर, उपपद समास 'वाचंयम-पुरन्दरौ' इस निर्देश के कारण पूर्व का अमन्तत्व निपातित होता है । यह इन्द्रवाचक है । ] सर्वंसहः राजा । [ सर्वं सहते—इस अर्थ में बनता है । ]

**❀ भगे च दारेरिति वक्तव्यम् ❀ (?)। भगन्दरः॥**

**८११. सर्वकूलाभ्रकरीषेषु कषः॥ ४२॥ ( २९५९ )**

**सर्व, कूल, अभ्र, करीष-इत्येतेषु कर्मसूपपदेषु कषेर्धातोः खच् प्रत्ययो भवति। सर्वं कषति सर्वंकषः खलः। कूलंकषा नदी। अभ्रंकषो गिरिः। करीषंकषा वात्या॥**

**८१२. मेघर्त्तिभयेषु कृञः॥ ४३॥ ( २९६० )**

**मेघ, ऋति, भय-इत्येतेषु कर्मसूपपदेषु कृञः खच्प्रत्ययो भवति। मेघंकरः। ऋतिंकरः। भयंकरः। उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति अभयंकरः॥**

**८१३. क्षेमप्रियमद्रेऽण् च॥ ४४॥ ( २९६१ )**

**क्षेम, प्रिय, मद्र—इत्येतेषु कर्मसूपपदेषु करोतेरणप्रत्ययो भवति, चकारात्खच्च। क्षेमकारः, क्षेमंकरः।**

**न्यासः**

**भगे च दारेरिति वक्तव्यमिति।** भगे चोपपदे दारेः खज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'उग्रम्पश्येरम्मदपाणिन्धमाश्च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन भगे चोपपदे दारेः खज् भवतीति॥ ४१॥

**सर्वकूलाभ्रकरीषेषु कषः॥ सर्वङ्कष इति।** 'कष खष शिष जष झष शक वष मष रुष रिष हिंसार्थाः' ॥ ४२॥

**मेघर्त्तिभयेषु कृञः॥ उपपदविधावित्यादि।** ननु चाभयशब्दो नञ्समासे सिध्यत्येव ? नैवं शक्यम्, सति शिष्टत्वाद्धि 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिस्वराद्युदात्तत्वं स्यात्, 'गतिकारकोपपदानाम्' इत्यादिनान्तोदात्तत्वं चेष्यते। तस्मात् कर्त्तव्यम्। अपवादत्वात् खजयमणं बाधते, हेत्वादिविवक्षायाञ्च परत्वाट्टप्रत्ययमपि॥ ४३॥

**क्षेमप्रियमद्रेऽण् च॥** अथ 'क्षेमप्रियमद्रे वा' इत्येवं कस्मान्नोक्तम्, किमण्ग्रहणेन ? खचि विकल्प्यते,

**पदमञ्जरी**

**राजेति।** सर्वं संपादयितुं समर्थ इत्यर्थः॥ ४१॥ ४२॥

**मेघर्त्तिभयेषु कृञः॥ करोतेरिति।** कृणोतेस्तु पूर्ववदेवाग्रहणम्। शिवंकर इत्यपि छन्दसि दृश्यते—शिव

**भावबोधिनी**

* और भाग उपपद रहते 'दार' = दृ से खच् कहना चाहिये। ❀ उदाहरण—भगन्दरः। [ भगं दारयति—इस अर्थ में पूर्ववत् खच् आदि होता है। यह एक गुदा रोग का वाचक है। ]॥ ४१॥

सर्व, कूल, अभ्र और करीष—इन कर्मों के उपपद रहते 'कष' धातु से खच् प्रत्यय होता है। उदाहरण—सर्वं कषति—इस विग्रह में सर्वङ्कषः खलः। [ सबको कष्ट देने वाला दुष्ट ] कूलं कषति—इस अर्थ में—कूलङ्कषा नदी [ किनारा काट देने वाली नदी ] अभ्रं कषति—इस अर्थ में—अभ्रङ्कषः गिरिः [ मेघों को खींचने वाला = बरसाने वाला पहाड़ ] करीषं कषति—इस अर्थ में करीषंकषा वात्या। [ करीष को उड़ा देने वाली आँधी ]॥ ४२॥

मेघ, ऋति, भय—इन कर्मों के उपपद रहते 'कृ' धातु से खच् प्रत्यय होता है। उदाहरण मेघंकरः ऋतिंकरः। भयंकरः। [ मेघं करोति, इस विग्रह में 'मेघम्' उपपद 'कृ' से खच् प्रत्यय, 'ऋ' का गुण, रपर, उपपद समास, विभक्तिलोप, मुम् आगम करने पर रूप बनता है। ]

❀ उपपदविधि में भय आदि का ग्रहण तदन्तविधि को प्रयोजित कराता है अर्थात् तदन्तविधि भी होती है। ❀ अभयङ्करः। [ अभयं करोति—इस अर्थ में बना है। भय और भयशब्दान्त दोनों का ग्रहण होता है। ]॥ ४३॥

क्षेम, प्रिय, मद्र—इन कर्मों के उपपद रहते 'कृ' धातु से अण् प्रत्यय और चकार से खच् प्रत्यय भी होता है।

**प्रियकारः, प्रियंकरः । मद्रकारः, मद्रंकरः । 'वा' इति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम् ॥**

## ८१४. आशिते भुवः करणभावयोः ॥ ४५ ॥ ( २९६२ )

**अत्र 'सुपि' इत्युपतिष्ठते । आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच् प्रत्ययो भवति । आशितो भवत्यनेन आशितम्भव ओदनः । भावे—आशितस्य भवनम् आशितम्भवं वर्तते ॥**

**न्यासः**

'कर्मण्यण्' इत्यनेनैवाण् भविष्यतीत्यत आह—**वेति वक्तव्य इत्यादि** । 'क्षेमप्रियमद्रे वा' इत्युच्यमाने पक्षे वाग्रहणाद् यथाप्राप्तमपीष्यते । ततो हेत्वादिषु विवक्षितेषु 'कृञो हेतुताच्छील्य' इत्यादिना टः स्यात्, अतस्तद्बाधनार्थम् । तेन हेत्वादिविवक्षायां टप्रत्ययं बाधित्वाऽण् भवति ॥ ४४ ॥

**आशिते भुवः करणभावयोः** ॥ अत्र सुपीत्युपतिष्ठते, न कर्मणीति; भवतेरकर्मकत्वात् । **आशितशब्दे सुबन्त इत्यादि** । अथ विपर्ययः कस्मान्न भवति, करणभावयोरुपपदयोराशिते प्रत्ययार्थ इति ? असम्भवात् । आशित इत्यश्नातेः कर्त्तोच्यते, तस्य भवतिना सम्बन्धो नोपपद्यते । न हि योऽश्नातेः कर्त्ता स भवतेः प्रत्ययार्थो भवितुमुत्सहते । तस्मादाशितशब्दस्योपपदत्वम्, इतरयोस्तु प्रत्ययार्थत्वम् । एवञ्च घञ्ल्युटोरपवादो भवति । वाऽसरूपविधिना ल्युडपि भवत्येव—आशितभवन ओदन इति । घञस्तु सरूपत्वाद् बाधक एव ॥ ४५ ॥

**पदमञ्जरी**

एको ध्येयः शिवंकर इति ॥ ४३ ॥ ४४ ॥

**आशिते भुवः करणभावयोः** ॥ **अत्र सुपीत्युपतिष्ठते इति** । न तु कर्मणीति, भवतेरकर्मकत्वात् । सोपसर्गात्प्राप्त्यर्थाच्च खचा न भवितव्यम्, अनभिधानादिति भावः । आशितशब्दोऽयम् 'अश भोजने' ( धा० पा० १५२३ ) इत्यस्मादाङ्पूर्वादविवक्षते कर्मणि क्तप्रत्ययान्तो गृह्यते—आशितः कर्त्तेति, यस्याद्युदात्तत्वं विधास्यते । यस्तु 'ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति भावकर्माधिकरणेषु क्तः, न तदन्तो गृह्यते, अनभिधानादित्याहुः । अन्ये त्वश्नेर्ण्यन्तात्प्रयोज्ये कर्मणि क्तप्रत्यये कृते य आशितशब्दः स गृह्यते । एवमाशितः कर्तेति यस्याद्युदात्तत्वं तत्रापि प्रयोज्य एव भूतपूर्वगत्या कर्त्तोच्यते, 'गतिबुद्धिप्रत्यवसानार्थ' इति अणौ कर्तुर्णौ कर्मसंज्ञाविधानात् । तथा च कृषन्नित्फाल आशितं कृष्णोतीति आद्युदात्तस्यावग्रहो न दृश्यते । कर्तृग्रहणं तु तत्र भावनिवृत्त्यर्थमिति । **आशितम्भव ओदन इति** । यावतौदनेनातिथ्यादिराशितो भवति स एवमुच्यते ॥ ४५ ॥

**भावबोधिनी**

उदा० क्षेमकारः क्षेमंकरः [ क्षेमं करोति—इस विग्रह में अण् प्रत्यय, 'ऋ' की वृद्धि, रपर, उपपदसमास विभक्ति का लोप —क्षेमकारः । खच् प्रत्यय करने पर 'ऋ' का गुण रपर और मुम् का आगम होता है—क्षेमंकरः । कल्याण करने वाला—यह अर्थ है । ] प्रियकारः, प्रियंकरः । प्रिय करने वाला ] मद्रकारः, मद्रंकरः । [ कल्याण करने वाला ] । 'वा' यही कहना चाहिये था [ क्योंकि खच् के विकल्प में 'कर्मण्यण्' से सामान्य अण् प्रत्यय होता ] फिर भी अण् प्रत्यय करना हेतु आदि अर्थों में 'ट' का प्रतिषेध करने के लिये है—अर्थात् ये ही दो प्रत्यय होते हैं । ॥ ४४ ॥

इसमें 'सुपि' [ सुबन्त ] की उपस्थिति होती है । सुबन्त 'आशित' शब्द उपपद रहते 'भू' धातु से करण और भाव अर्थों में खच् प्रत्यय होता है । उदा० आशितः भवति अनेन —इस विग्रह में 'आशितंभवः ओदनः [ जिससे खाया हुआ = तृप्त हुआ जाता है ऐसा चावल । करण अर्थ में खच् प्रत्यय, 'भू' के ऊ का गुण, अव् आदेश आशित + भव, मुम् करने पर रूप बनता है । ] भाव में उदा० आशितस्य भवनम्—इस विग्रह में—आशितंभवं वर्तते । [ खाया हुआ होना हो रहा है । ] ॥ ४५ ॥

## ८१५. संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥ ४६ ॥ ( २९६३ )

'कर्मणि' इति 'सुपि' इति च प्रकृतं संज्ञावशाद्यथासंभवं सम्बध्यते। भृ, तॄ, वृ, जि, धारि, सहि, तपि, दम—इत्येतेभ्यो धातुभ्यः संज्ञायां विषये खच्प्रत्ययो भवति। विश्वम्भरा वसुन्धरा। रथंतरं साम। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुंतपः। अरिन्दमः।

संज्ञायामिति किम्? कुटुम्बं बिभर्त्तीति कुटुम्बभारः॥

## ८१६. गमश्च ॥ ४७ ॥ ( २९६४ )

### न्यासः

**संज्ञायां भृतॄवृजिधारिसहितपिदमः।। संज्ञावशादिति।** संज्ञाशब्दा हि द्विविधा भवन्ति—केचिदवयवार्थानुगताः, यथा-सप्तपर्ण इति; केचित् विपरीताः, यथा-तैलपायिकेति। तदिह यत्रावयवार्थानुगमोऽस्ति विश्वम्भरः, शत्रुन्तप इत्यादिषु, तत्र कर्मणीति सम्बध्यते—विश्वं बिभर्त्तीति विश्वम्भरः। यत्र त्ववयवार्थानुगमो नास्ति, यथा—रथन्तरं सामेति, तत्र व्युत्पत्त्यर्थं सुपीति सम्बध्यते—रथेन तरतीति, रथे तरतीति वा। **पतिंवरेति।** 'वृञ् वरणे', 'वृङ् सम्भक्तौ'। पतिं वृणीते, पतिं वृणुत इति विग्रहः। शत्रुं जयतीति **शत्रुञ्जयः। धारीति।** धृञो ण्यन्तस्य ग्रहणम्। युगं धारयतीति **युगन्धरः।** पूर्ववद्ध्रस्वत्वम्। शत्रुं सहत इति **शत्रुंसहः।** शत्रुं तपतीति **शत्रुन्तपः।** अरिं दाम्यतीति **अरिन्दमः।** यद्यपि दमिरकर्मकः, तथाप्यन्तर्भावितण्यर्थत्वात् सकर्मको भविष्यति। अरिं दमयतीत्यर्थः॥ ४६॥

### पदमञ्जरी

**संज्ञायां भृतॄवृजिधारिसहितपिदमः॥ संज्ञावशादित्यादि।** 'शत्रुन्तपः' इत्यादौ यत्र कर्मार्थानुगमस्तत्र कर्मणीति सम्बध्यते। यत्र तु न रथन्तरमित्यादौ तत्र सुपीति। **अरिन्दम इति।** अन्तर्भावितण्यर्थो दमिः सकर्मको भवति॥ ४६॥

### भावबोधिनी

'कर्मणि' और 'सुपि' ये दोनोंअनुवृत्त होते हैं और संज्ञावश यथासंभव सम्बद्ध होते हैं। भृ, तॄ, वृ, जि, धारि, सहि, तप, दम—इन धातुओं से संज्ञाविषय में खच् प्रत्यय होता है। उदा० विश्वम्भरा वसुन्धरा। [ विश्वं बिभर्ति—इस अर्थ में 'विश्वम् उपपद 'भृ' से खच् प्रत्यय, ऋ का गुण, रपर, उपपदसमास, विभक्तिलोप, मुम् आगम, टाप् आदि करने पर—'विश्वम्भरा' रूप बनता है। संसार का पालन करने वाली=पृथ्वी। ] रथन्तरं साम। [ रथेन रथे वा तरति—इस विग्रह में खच् प्रत्यय, 'ॠ' का गुण, रपर, उपपदसमास, विभक्तिलोप, मुम्, अनुस्वार, परसवर्ण—रथन्तरम्—यह सामवेद के एक अंश की संज्ञा है।] पतिंवरा कन्या। [पतिं वृणीते वृणुते वा—इस विग्रह में 'पतिम्' उपपद 'वृ' से खच् प्रत्यय, ऋ का गुण रपर, उपपदसमासादि के बाद टाप् होता है।] शत्रुञ्जयः हस्ती। शत्रुं जयति इस अर्थ में 'शत्रुम्' उपपद 'जि' धातु से खच् प्रत्यय, 'इ' का गुण, अयादेश, उपपदसमास, विभक्तिलोप, मुम् अनुस्वार तथा परसवर्ण करने पर रूप बनता है। यह हाथी की संज्ञा है। ] युगन्धरः पर्वतः। [ युगं धारयति—इस विग्रह में 'युगम्' उपपद' णिजन्त 'धारि' से खच् प्रत्यय, णिलोप, उपपदसमास आदि करने पर रूप बनता है। ] शत्रुंसहः। [ शत्रुं सहते ]। शत्रुन्तपः। [ शत्रुं तपति ] अरिन्दमः [ अरिं दमयति। सभी संज्ञावाचक हैं। ]

संज्ञा अर्थ में—इसका क्या फल है? कुटुम्बं बिभर्ति—इस विग्रह में—कुटुम्बभारः। [ यहाँ संज्ञा अर्थ न होने से खच् न होकर अण् होता है ]॥ ४६॥

**गमेर्धातोः सुप्युपपदे संज्ञायां विषये खच्प्रत्ययो भवति। सुतंगमो नाम यस्य सौतङ्गमिः पुत्रः। योगविभाग उत्तरार्थः॥**

## ८१७. अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः॥ ४८॥ ( २९६९ )

**'संज्ञायाम्' इति नानुवर्तते। अन्त, अत्यन्त, अध्वन्, दूर, पार, सर्व, अनन्त—इत्येतेषु कर्मसूपपदेषु गमेर्डप्रत्ययो भवति। अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः। डकारष्टिलोपार्थः; डित्यभस्याप्यनुबन्धकरणसामर्थ्यादिति।**

**ॐ डप्रकरणे सर्वत्र-पन्नयोरुपसंख्यानम् ॐ ( म० भा० ३.२.४८ वा० १ )। सर्वत्रगः। पन्नगः।**

### न्यासः

**गमश्च॥ यस्य सौतङ्गमिः पुत्र इति।** पुत्रस्य सौतङ्गमित्वव्यपदेशेन पितुः सुतङ्गमसंज्ञानुमीयत इति दर्शयति। सत्यां हि पितुः सुतङ्गमसंज्ञायां तत्पुत्रस्य सौतङ्गमिशब्देनाभिधानं भवति, नासत्याम्। अथ योगविभागः किमर्थः, पूर्वसूत्र एव गमेर्ग्रहणं क्रियतामित्याह—**योगविभाग उत्तरार्थ इति।** गमेरेवोत्तरत्रानुवृत्तिर्यथा स्यात्, भृत्रादीनां मा भूत्। एकयोगे हि तेऽप्यनुवर्तेरन्॥ ४७॥

**अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः॥ डकारष्टिलोपार्थ इति।** डिति 'टेः' इति टिलोपो यथा स्यात्। कथं पुनः सत्यपि डकारे टिलोपो लभ्यते, यावता भसंज्ञकस्य हि टिलोप उच्यते, न चेह भसंज्ञास्तीत्याह—**डित्यभस्यापीत्यादि।** यदि सत्यपि डिति टिलोपो मा भूत्, तदा तस्य वैयर्थ्यं स्यादिति भावः। ननु च श्रवणार्थं भविष्यति, तत् कुतो वैयर्थ्यं स्यात्? एवं मन्यते—'प्रावृट्शरत्कालदिवाञ्जे' इति कृतटिलोपस्य जनेर्डप्रत्ययान्तस्यायं निर्देशं करोति, ततोऽवसीयते डकारस्याश्रवणार्थतेति। **सर्वत्रेत्यादि।** उपसंख्यानशब्दस्य प्रतिपादनमर्थः।

### पदमञ्जरी

**गमश्च॥ योगविभाग उत्तरार्थ इति।** उत्तरत्र गमेरेवानुवृत्तिर्यथा स्याद्, भृतृप्रभृतीनां मा भूत्॥ ४७॥

**अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः॥ अनुबन्धकरणसामर्थ्यादिति।** श्रवणार्थस्तु डकारो न भवति, 'पादस्य पदाज्यातिगोपहतेषु' इति कृतटिलोपस्य डप्रत्ययान्तस्य निर्देशात्। अत्रात्यन्तानन्तग्रहणमनर्थकम्, अन्तशब्दोऽत्र गृह्यते, तेन कर्मणो विशेषणात्तदन्तविधिर्भविष्यति। उपपदविधौ तु न सर्वत्र तदन्तविधिः, उपपदविधौ तदाद्यादिग्रहणमिति नियमात्। पन्नं=पतितं यथा गच्छतीति **पन्नगः।** 'सुदुरोरधिकरणे' ( वा० २५४ ) इति

### भावबोधिनी

सुबन्त उपपद रहते संज्ञाविषय में 'गम्' धातु से खच् प्रत्यय होता है। उदा० 'सुतंगमः' नाम वाला है जिसका पुत्र वह—सौतंगमिः। [ सुतं गच्छति—इस अर्थ में 'सुतम्' उपपद 'गम्' धातु से खच् प्रत्यय, शेष प्रक्रिया पूर्ववत् होती है। ] योगविभाग = यह अलग सूत्र बनाना अग्रिम सूत्र में अनुवृत्ति के लिये है॥ ४७॥

'संज्ञायाम्' इसकी अनुवृत्ति नहीं होती है। अन्त, अत्यन्त, अध्वन्, दूर, पार, सर्व, अनन्त—इन कर्मों के उपपद रहने पर 'गम्' धातु से 'ड' प्रत्यय होता है। उदा० अन्तंगः [ अन्तं गच्छति—इस विग्रह में 'अन्तम्' उपपद 'गम्' धातु से 'ड' प्रत्यय, डित् होने से टि = अम् का लोप, उपपदसमास, विभक्तिलोप—अन्तगः। अन्त तक जाने वाला ] अत्यन्तगः। [ अत्यन्त तक जाने वाला ] अध्वगः। [ मार्ग तक जाने वाला ] दूरगः। [ दूर जाने वाला ] पारगः। [ पार जाने वाला ] सर्वगः। [ सर्वत्र जाने वाला ] अनन्तगः। [ अनन्त तक जाने वाला ]। 'ड' यह टि = अम् के लोप के लिये है। डित् परे रहते अभंज्ञक का भी लोप होता है क्योंकि 'ड्' यह अनुबन्ध लगाया गया है।

ॐ 'ड' के प्रकरण में 'सर्वत्र' तथा 'पन्न' इनका उपसंख्यान करना चाहिये। ॐ उदा० सर्वत्रगः, पन्नगः। [ सर्वत्र गच्छति, पन्नम् = पतितं गच्छति—इस विग्रह में गम् से 'ड' प्रत्यय, टिलोप होता है। ]

❀ **उरसो लोपश्च** ❀ ( **वा० २** ) । **उरसा गच्छतीत्युरगः** ।

**सुदुरोरधिकरणे** ❀ ( **वा० ३** ) । **सुखेन गच्छत्यस्मिन्निति सुगः** । **दुर्गः** ।

❀ **निरो देशे**[1] ❀ ( **वा० ४** ) । **निर्गो देशः** ।

**अपर आह—**❀ **डप्रकरणेऽन्येष्वपि दृश्यत इति** ❀ ( **वा० ५** ) **स्त्र्यगारगः** । **ग्रामगः** । **गुरुतल्पगः** ॥

**न्यासः**

तत्रेदं प्रतिपादनम्–'गमश्च' इत्यतश्चकारोऽनुवर्त्तते । तस्यानुक्तसमुच्चयार्थत्वात् सर्वत्रेत्यादावुपपदे डो भविष्यतीति । सर्वत्रशब्दश्चात्र सुपीत्यनेन सम्बध्यते, न तु कर्मणीत्यनेन; तस्याधिकरणशक्तिप्रधानत्वात् कर्मत्वानुपपत्तेः । पन्नशब्दः क्रियाविशेषणत्वात् कर्मणीत्यनेन सम्बध्यते । प्रतिपादितं हि 'करणे च स्तोकाल्प' इत्यादिसूत्रे क्रियाविशेषणस्य कर्मत्वम् ।

**उरसो लोपश्चेति** । 'अलोऽन्त्यस्य' इति सकारस्य ।

**सुदुरोरधिकरण इति** । ल्युडपवादो डो विधीयते । वाऽसरूपविधिना । सोऽपि भवति—सुगमनम्, दुर्गमनमिति । अधिकरण इति किम् ? कर्मणि मा भूत् । 'ईषद्दुःसुषु' इत्यादिना खलेव भवति–सुगमः, दुर्गम इति ।

**निरो देश इति** । निर्शब्द उपपदे गमेर्डो भवति देशेऽधिकरणे । निर्गम्यतेऽस्मिन् देशे निर्गो देशः । देशादन्यत्र ल्युडेव भवति— निर्गमनमिति ॥ ४८ ॥

**पदमञ्जरी**

कर्मणि खलेव भवति सुगमः, दुर्गम इति । **अन्यत्रापि दृश्यत इति** । एवं च सूत्रमपि प्रपञ्चार्थम् ॥ ४८ ॥

**भावबोधिनी**

❀ उरस् के अस् का लोप भी होता है । ❀ उरसा गच्छति—इस विग्रह में—उरगः [=सांप । उरस् के स् का लोप हो जाने पर 'उरगः' बचता है । ❀ सु और दुर् उपपद रहते गम् धातु से अधिकरण अर्थ में 'ड' होता है । ❀ उदा० सुखेन गच्छति अस्मिन्—इस विग्रह में— सुगः । दुःखेन गच्छति अस्मिन्—इस विग्रह में – दुर्गः । जहाँ सुख से जाया जाय । जहाँ दुख से जाया जाय । ]

❀ निर् उपपद रहते देश अर्थ में 'गम्' से 'ड' होता है । ❀ उदा० निर्गः देशः । [ निर्गम्यते अस्मिन् देशे—इस विग्रह में निर् उपपद गम् से 'ड' प्रत्यय, शेष प्रक्रिया पूर्ववत् । ]

अन्य आचार्य कहते हैं—❀ "ड प्रत्यय के प्रकरण में अन्य=अनुक्त में भी देखा जाता है ।" ❀ उदा० स्त्र्यगारगः [ स्त्र्यगारं गच्छति यह विग्रह है । ] ग्रामगः । [ ग्रामं गच्छति—यह विग्रह है । ] गुरुतल्पगः । [ गुरुतल्पं गच्छति यह विग्रह है । ]

**विमर्श** —सु तथा दुर् उपपद 'गम्' से अधिकरण अर्थ में जो 'ड' किया जा रहा है वह ल्युट् का अपवाद है । अपवाद के विषय में "वाऽसरूपोऽस्त्रियाम्" ( पा. सू. ३।१ ९४ ) यह नियम लागू होने से यह 'ड' वैकल्पिक है । अतः पक्ष में ल्युट् = अन भी होता है । तब सुगमनम्, दुर्गमनम् ये भी रूप होते हैं । यदि कर्म अर्थ हो तो "ईषद्दुःसुषु" ( ३.३.१२६ ) इस सूत्र से खल् ही होता है—सुगमः, दुर्गमः ।

निर् उपपद रहने पर देश से भिन्न अर्थ में ल्युट् = अन ही होता है—निर्गमनम् ।

अन्य किसी आचार्य के अनुसार अनुक्त शब्दों में भी 'ड' होता है । अतः यह सूत्र तथा वार्त्तिक सभी केवल प्रपञ्च के लिये ही हैं, ऐसा समझना चाहिये ॥ ४८ ॥

१. ❀ 'निसो देशे ❀ निसो देशे डो वक्तव्यः' इति भाष्ये पाठः ।

**८१८. आशिषि हनः ॥ ४९ ॥ ( २९९६ )**

**'ड' इति वर्तते। आशिषि गम्यमानायां हन्तेर्धातोः कर्मण्युपपदे डप्रत्ययो भवति। तिमिं वध्यात् तिमिहः। शत्रुहः।**

**आशिषीति किम् ? शत्रुघातः।**

**❀ दारावाहनोऽणन्तस्य च टः संज्ञायाम् ❀ (म० भा० ३.२.४९ वा० १)। दारावुपपदे आङ्पूर्वाद्धन्तेरण् प्रत्ययो भवति, अन्तस्य च टकारादेशो भवति, संज्ञायां विषये। दारु आहन्ति दार्वाघाटः।**

**❀ चारौ वा ❀ ( म० भा०, वा० २ )। आङ्पूर्वाद्धन्तेश्चारावुपपदेऽण्, अन्तस्य वा टकारादेशः। चार्वाघाटः, चार्वाघातः।**

**न्यासः**

**आशिषि हनः ॥ आशिषीति।** प्रत्ययार्थमेतत्। तस्मिन् कर्तरि प्रत्ययो भवति यस्मिन् विधीयमान आशीर्गम्यते। **तिमिं वध्यादिति।** आशीर्लिङ्। प्रयोगवतो वाक्यस्योपन्यासस्तु समानार्थत्वात् तिमिहशब्दस्य प्रख्यानार्थः।

**दारावाहन इत्यादि।** टकारादेश एवोपसंख्यायते। अप्रत्ययस्तु 'कर्मण्यण्' इत्यनेनैव सिद्धः। अथान्य-ग्रहणं किमर्थम्, यावता 'अलोऽन्त्यस्य' इत्यन्तस्य भविष्यतीति ? न; षष्ठीनिर्दिष्टस्यालोऽन्त्यविधयो भवन्ति। न चेह हन्तेः षष्ठ्या निर्देशः किं तर्हि ? पञ्चम्याः। नन्वर्थाद् विभक्तिविपरिणामो भविष्यति—हन इत्यस्याः पञ्चम्याः षष्ठी सम्पद्यते ? एवं तर्हि विस्पष्टार्थमन्तग्रहणम्। **दार्वाहन्तीति।** दारुशब्दोऽत्र द्वितीयान्तः। **'स्वमोर्नपुंसकात्'** इति लुप्तत्वान्न द्वितीया श्रूयते।

**चारौ वेति।** अत्राप्यादेशो विकल्पेन विधीयते। अण् तु 'कर्मण्यण्' इति नित्यमेव सिद्धः। **चार्वाघाट**

**पदमञ्जरी**

**आशिषि हनः ॥ दाराविति।** दारुशब्द इत्यर्थः। शब्दापेक्षया पुंल्लिङ्गः, टविधानार्थं वचनम्, अण्

**भावबोधिनी**

'ड' इसकी अनुवृत्ति होती है। आशीः प्रतीत होने पर कर्म उपपद रहते 'हन्' धातु से 'ड' प्रत्यय होता है। उदा० तिमिं वध्यात्—इस अर्थ में—तिमिहः। शत्रुहः [ शत्रुं वध्यात्—इस अर्थ में है। यहाँ शत्रुम् उपपद 'हन्' धातु से 'ड' प्रत्यय, टिलोप, उपपदसमास—शत्रुहः। शत्रु को मार डाले—यह अर्थ है। ]

आशीः अर्थ की प्रतीति रहने पर—इसका क्या फल है ? शत्रुघातः। [ यहाँ आशीः अर्थ न होने के कारण 'ड' न होकर घञ् हुआ है। ] ❀ दारु उपपद रहते आङ्पूर्वक 'हन्' से अण् प्रत्यय होता है और अन्त्य का 'ट' आदेश होता है, संज्ञाविषय में।❀ उदा० दारु आहन्ति इस अर्थ में—दार्वाघाटः। [ दारु इस कर्म के उपपद रहते आहन् से 'अण्' प्रत्यय तथा 'न्' का 'ट्' आदेश करने पर—दारु आहट् अ, उपधावृद्धि, 'ह्'का कुत्व घ करके 'उ' का यण् 'व्'—दार्वाघाटः। ]

❀चारु उपपद रहते आङ्पूर्वक 'हन्' से 'अण्' प्रत्यय होता है और अन्त्य = न् का विकल्प से 'ट्' होता है।❀ उदा० चार्वाघाटः, चार्वाघातः। [ चारु आहन्ति—इस अर्थ में पूर्ववत् 'अण्' प्रत्यय, उपधावृद्धि, "होहन्तेर्ञ्णिन्नेषु" सूत्र से 'ह्' का कुत्व 'घ' और वैकल्पिक 'ट्' करने पर—'चार्वाघाटः', पक्ष में "हनस्तोऽचिण्णलोः" सूत्र से 'त्' करने पर 'चार्वाघातः' ये दो रूप बनते हैं। ]

का० तृ० ५६

❀ **कर्मणि समि च** ❀(वा० ३) । **कर्मण्युपपदे संपूर्वाद्धन्तेरण्प्रत्ययः, अन्तस्य च वा टकारादेशः । वर्णान्संहन्ति वर्णसंघाटः, वर्णसंघातः । पदानि संहन्ति पदसंघाटः, पदसंघातः ॥**

## ८१९. अपे क्लेशतमसोः ॥ ५० ॥ ( २९६७ )

**अपपूर्वाद्धन्तेः क्लेशतमसोः कर्मणोरुपपदयोर्डप्रत्ययो भवति । क्लेशापहः पुत्रः । तमोऽपहः सूर्यः । अनाशीरर्थ आरम्भः ॥**

## ८२०. कुमारशीर्षयोर्णिनिः ॥ ५१ ॥ ( २९६८ )

**'हनः' इति वर्तते । कुमार, शीर्ष—इत्येतयोरुपपदयोः हन्तेर्णिनिः प्रत्ययो भवति । कुमारघाती । शीर्षघाती । निपातनाच्छिरसः शीर्षभावः ॥**

### न्यासः

इति । 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम् । 'हनस्तोऽचिण्णमुलोः' इति तत्वम् । **कर्मणि समि** चेत्येतद्वाक्यं कर्मण्युपपद इत्यस्यैव विशेषणम् ॥ ४९ ॥

**अपे क्लेशतमसोः** ॥ 'उदि कूले रुजिवहोः' इत्यत्रोच्छब्दस्योपपदत्वे यो न्याय उक्तः स इहाप्यपशब्दस्य वेदितव्यः । **अनाशीरर्थ आरम्भ इति** । आशिषि पूर्वेणैव सिद्धत्वात् ॥ ५० ॥

**कुमारशीर्षयोर्णिनिः** ॥ **कुमारघातीति** । पूर्ववत् तत्वकुत्वे । **निपातनाच्छिरसः शीर्षभाव इति** । कुमारशीर्षयोरित्यत एव निपातनाच् शिरसः शीर्षभावो भवति, न पुनः 'शीर्षञ्छन्दसि' इत्यनेन । तत्र हि शीर्षन्निति शिरःशब्दसमानार्थं शब्दान्तरं निपात्यते, अन्यथा शीर्षघातीतिच्छन्दस्येव स्यात्, न भाषायाम् । 'कुमारशीर्षयोः' इति च निर्देशो नोपपद्यते, स हि नकारान्तः; अकारान्तेन चायं निर्देशो भवति, न नकारान्तेनेति । णिनेर्द्वितीय इकारो नकारस्येत्संज्ञापरित्राणार्थः, णकारो वृद्ध्यर्थः ॥ ५१ ॥

### पदमञ्जरी

'कर्मण्यण्' इत्येव सिद्धः । अन्तग्रहणं विस्पष्टार्थम्, 'अलोऽन्त्यस्य' इत्येव सिद्धम् ॥ ४९ ॥ ५० ॥

**कुमारशीर्षयोर्णिनिः** ॥ 'सुप्यजातौ' इति सिद्धेऽताच्छील्यार्थमिदं वचनम्, शिरसः शीर्षभावार्थं च ॥ ५१ ॥

### भावबोधिनी

❀ कर्म उपपद रहते सम्पूर्वक हन् से अण् प्रत्यय होता है और अन्त्य का वैकल्पिक 'त्' होता है । ❀ वर्णान् संहन्ति—इस अर्थ में वर्णसंघाटः, वर्णसंघातः [ ये दो रूप होते हैं । प्रक्रिया पूर्ववत् ही है । ] पदानि संहन्ति—इस अर्थ में—पदसंघाटः, पदसंघातः । [ ये दो रूप होते है । प्रक्रिया पूर्ववत् ही है । ] ॥ ४९ ॥

'क्लेश' और 'तमः' कर्म उपपद रहते उपपूर्वक 'हन्' से 'ड' प्रत्यय होता है । उदा० क्लेशापहः पुत्रः । तमोऽपहः सूर्यः । [ क्लेशम् अपहन्ति—इस अर्थ में क्लेशम् उपपद अप हन् से 'ड' प्रत्यय टि=अन् का लोप, उपपदसमास, सवर्णदीर्घ—क्लेशापहः । क्लेश को दूर करने वाला पुत्र । अन्धकार दूर करने वाला सूर्य । ] आशीर्वाद से भिन्न अर्थ के लिये यह सूत्र बनाया गया है ॥ ५० ॥

'हनः' इसकी अनुवृत्ति होती है । 'कुमार' तथा 'शीर्ष' इनके उपपद रहते 'हन्' धातु से णिनि प्रत्यय होता है । उदा० कुमारघाती । शीर्षघाती । शिरस् का शीर्ष आदेश निपातन से होता है । [ कुमारं हन्ति इस अर्थ में 'कुमारम्' उपपद 'हन्' से णिनि=इन् प्रत्यय, उपधावृद्धि, ह्' का कुत्व 'घ' 'न्' का 'त्'—घातिन् प्रथमा-एकवचन में कुमारघाती । इसी प्रकार शिरः हन्ति इस अर्थ में णिनि प्रत्यय शिरस् का शीर्ष आदेश तथा पूर्वोक्त प्रक्रिया करने पर शीर्षघाती रूप बनता है । ] ॥ ५१ ॥

**८२१. लक्षणे जायापत्योष्टक् ॥ ५२ ॥ ( २९६९ )**

**हन्तेर्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्तरि टक् प्रत्ययो भवति । जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली ।**

**अथ वा—लक्षणे द्योत्ये टक्प्रत्ययः ॥**

**८२२. अमनुष्यकर्तृके च ॥ ५३ ॥ ( २९७० )**

**अमनुष्यकर्तृके वर्तमानाद्धन्तेर्धातोः कर्मण्युपपदे टक प्रत्ययो भवति । जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । श्लेष्मघ्नं मधु । पित्तघ्नं घृतम् ।**

**न्यासः**

**लक्षणे जायापत्योष्टक्** ॥ लक्ष्यते चिह्न्यतेऽनेनेति लक्षणम् । तदस्यास्तीति तस्मिन् लक्षणवति । एतेन मत्वर्थीयाकारप्रत्ययान्तो लक्षणशब्दः सूत्र उपात्त इति दर्शयति, स च कर्त्तुः प्रत्ययस्य विशेषणमिति दर्शयन्नाह— **लक्षणवति कर्त्तरीति** । अथ लक्षणशब्दस्योपपदत्वं कस्मान्न भवति ? केचिदाहुः—'हन्तेः सकर्मकत्वात् कर्मणीतीहोपतिष्ठते, तत्र यदीह लक्षणस्योपपदत्वं स्यात्, तत् कर्मणा विशिष्येत । न च लक्षणं हन्तेः कर्मोपपद्यते, स हि हिंसायां वर्त्तते, हिंसा च प्राणिविषया । जायापत्योः प्राणिधर्मत्वात् कर्मत्वमुपपद्यते' इति, एतच्चानुपपन्नम्; मत्वर्थीयाकारप्रत्ययान्तस्य लक्षणशब्दस्य प्राणिन्यपि वृत्तेः । व्याख्यानादेव लक्षणस्यानुपपदत्वं विज्ञायते । अनभिधानद्वा । लक्षणवत्युपपदे जायापतिभ्यां प्रत्ययार्थेन भवितव्यम् । न च लक्षणशब्दस्योपपदत्वेन हन्तिना टक्प्रत्ययान्तेन जायापत्योः कर्त्रोरभिधानं दृष्टम् । **जायाघ्न इति** । कित्त्वाद् 'गमहन' इत्यादिनोपधालोपः, पूर्ववत् कुत्वम् । **पतिघ्नीति** । टित्त्वान् ङीप् ॥ ५२ ॥

**अमनुष्यकर्तृके च ॥ अमनुष्यकर्तृक इति** । अमनुष्यः कर्त्ता यस्य स तथोक्तः, एतच्च धात्वर्थविशेषणम्,

**पदमञ्जरी**

**लक्षणे जायापत्योष्टक्** ॥ **लक्षणवतीति** । एतेनार्शआद्यच्प्रत्ययान्तो लक्षणशब्द इति दर्शयति । एतच्च सूत्रारम्भादेवावसीयते, केवले हि लक्षणे उत्तरेणैव सिद्धः प्रत्ययः । **जायाघ्नो ब्राह्मण इति** । यस्य तिलकालकादि जायामरणलिङ्गमस्ति स तां हन्तीति गौणो गदः । एतेन **पतिघ्नी** व्याख्याता । 'गमहन' इत्युपधालोपः, टित्त्वान्ङीप् ॥ ५२ ॥

**अमनुष्यकर्तृके च** ॥ अमनुष्यशब्दो रक्षःपिशाचादिषु रूढ इति पूर्वमुक्तम्, इह तु मनुष्यादन्यः सर्व एव

**भावबोधिनी**

'जाया' तथा 'पति' कर्म उपपद रहते लक्षणवान् कर्ता अर्थ में 'हन्' से टक् प्रत्यय होता है । उदा० जायाघ्नः ब्राह्मणः । पतिघ्नी वृषली । [ जायां हन्ति—इस अर्थ में 'जायाम्' उपपद हन् से टक् = अ प्रत्यय, कित् होने के कारण "गमहनजन ०" सूत्र से उपधा 'अ' का लोप, 'होहन्तेर्ञ्णिन्नेषु' सूत्र से 'ह्' का कुत्व घ—घ्न् + अ, उपपद समास, विभक्तिलोप—जायाघ्नः । पतिं हन्ति—पतिघ्नी वृषली । ]

[ सूत्रस्थ 'लक्षण' से लक्षणवान् अर्थ करने में मत्त्वर्थ की कल्पना करनी पड़ती है अतः दूसरा पक्ष प्रस्तुत है—]

अथवा लक्षण अर्थ द्योत्य रहने पर भी टक् होता है । [ उदा० पतिघ्नी रेखा । हाथ की रेखा से पति की मृत्यु सूचित होती है । अतः इससे भी टक् होता है । ] ॥ ५२ ॥

मनुष्यभिन्न कर्ता वाले अर्थ में वर्तमान 'हन्' धातु से कर्म उपपद रहते 'टक्' प्रत्यय होता है । उदा० जायाघ्नः तिलकालकः । [ जायां हन्ति —इस अर्थ में 'जायाम्' उपपद 'हन्' से टक् प्रत्यय, उपधालोप, कुत्व, उपपदसमास —जायाघ्नः । ] पतिघ्नी पाणिरेखा । [ पतिं हन्ति—यह विग्रह है । ] श्लेष्मघ्नं मधु । पित्तघ्नं घृतम् । [ यहाँ मनुष्यभिन्न तिलकालक, पाणिरेखा, मधु और घृत कर्ता हैं । अतः टक् प्रत्यय होता है । ]

**अमनुष्यकर्तृके इति किम्? आखुघातः शूद्रः। इह कस्मान्न भवति—चौरघातो हस्ती? 'कृत्यल्युटो बहुलम्' ( ३.३.११३ ) इति बहुलवचनादण् भवति ॥**

**८२३. शक्तौ हस्तिकपाटयोः ॥ ५४ ॥ ( २९७१ )**

**शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति। मनुष्यकर्तृकार्थ आरम्भः। हस्तिनं हन्तुं शक्तः हस्तिघ्नो मनुष्यः। कं पाटयति = प्रविशत इति कपाटघ्नश्चौरः।**

**न्यासः**

धात्वर्थो हन्तेरित्यत आह-**अमनुष्यकर्तृके धात्वर्थं इत्यादि**। अथामनुष्यकर्तृकग्रहणमुपपदविशेषणं कस्मान्न भवति? कर्मणीत्यनुवर्त्तते, कर्मणश्चामनुष्यकर्त्रा सह सम्बन्धानुपपत्तेः। साधनस्य हि क्रियायाः सम्बन्धः, न कारकान्तरेण। प्रत्ययार्थस्य कर्त्तुरिदं विशेषणं कस्मान्न विज्ञायते? तस्यामनुष्यकर्तृकत्वाभावात्। न हि कर्त्तुः कर्त्ता सम्भवति, अपि तु क्रियायाः। ननु च कर्तृग्रहणं न कर्त्तव्यम्, विनापि हि तेनामनुष्यकर्त्तरि प्रत्ययो लभ्यत एव? **नैवं शक्यम्;** कर्तृग्रहणमन्तरेणामनुष्यग्रहणं केवलमुपादीयमानमुपपदविशेषणमपि विज्ञायते। तस्मात् कर्तृग्रहणं कर्त्तव्यम्। तस्मिन् सत्यमनुष्यकर्तृग्रहणं तस्य विशेषणं न सम्भवतीत्यतो धात्वर्थ एव तेन विशेषयितुं युक्तः। **इह कस्मान्न भवतीति**। हस्तिकर्तृकत्वादमनुष्यकर्तृको धात्वर्थः। एतस्माद् भवितव्यमेव टक्प्रत्ययेनेति मन्यते ॥ ५३ ॥

**शक्तौ हस्तिकपाटयोः ॥ शक्तौ गम्यमानायामिति**। अनेनोपपदत्वं शक्तेर्निराकरोति। **हस्तिकपाटयोः कर्मणोरुपपदयो**रित्यनेनापि हस्तिकपाटयोः प्रत्ययार्थविशेषणत्वम्। अथैवं कस्मान्न विज्ञायते—शक्तावुपपदे हस्तिकपाटयोः कर्त्रोरिति? आरम्भसामर्थ्यादेव हि विज्ञायमाने हस्तिकपाटयोर्मनुष्यकर्तृके धात्वर्थे हन्तिर्वर्त्तते। तथा च पूर्वेणैव सिद्धेऽस्यारम्भवैयर्थ्यं स्यात्। उपपदत्वे तु तयोः शक्तौ गम्यमानायां मनुष्ये कर्त्तरि प्रत्ययो विज्ञायत इति न भवत्येष दोषः।

**पदमञ्जरी**

गृह्यते। ननु यथा पूर्वसूत्रे लक्षणग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणम्, एवमिहाप्यमनुष्यग्रहणं भविष्यतीति नार्थः कर्तृग्रहणेन? 'अमनुष्ये' इत्युच्यमाने उपपदत्वमपि विज्ञायेत, तस्मात्कर्तृग्रहणम्। कृतघ्नशब्दो मूलविभुजादिषु द्रष्टव्यः॥ ५३ ॥

**शक्तौ हस्तिकपाटयोः ॥ विषेण हस्तिनं हन्तीति**। नन्वत्राप्यशक्तस्य कर्तृत्वानुपपत्तेरस्त्येव शक्तिः? सत्यम्; शक्तिग्रहणसामर्थ्यात् प्रकर्षविज्ञानादन्यनिरपेक्षस्वबलेनैव हन्तुं या शक्तिः सा गृह्यते, तद्दर्शयति—**हस्तिनं हन्तुं समर्थो हस्तिघ्नो मनुष्य इति**। एवं च हस्तिनं हन्तु मा वा वधीत् सामर्थ्ययोगाद्धस्तिघ्न इत्युच्यते।

**कं पाटयति प्रविशत इति**। कपाटशब्दं व्युत्पादयति। कवाटमिति तु प्रसिद्धः, तत्राटतेः पचाद्यच्।

**भावबोधिनी**

मनुष्यभिन्न कर्ता अर्थ वाला—इसका क्या फल है? आखुघातः शूद्रः। [ आखुं हन्ति—इस अर्थ में टक् न होकर अण् होता है क्योंकि यहाँ शूद्र = मनुष्य कर्ता है। ] इसमें क्यों नहीं होता है—चौरघातः हस्ती। [ चौरं हन्ति—इस अर्थ में ] 'कृत्यल्युटो बहुलम्' इस सूत्र में बहुलवचन से अण् प्रत्यय होता है। [ टक् नहीं होता है। ] ॥ ५३ ॥

शक्ति प्रतीत रहने पर 'हस्ती' और 'कपाट' कर्म उपपद रहते 'हन्' धातु से टक् प्रत्यय होता है। मनुष्यरूपी कर्ता वाले के लिये यह सूत्र बनाया गया है। उदा० हस्तिनं हन्तुं शक्तः—इस अर्थ में हस्तिघ्नः मनुष्यः। [ हाथी को मार डालने में समर्थ पुरुष ] कं पाटयति = प्रविशते—इति कपाटः, तं हन्ति = विदारयति इस अर्थ में—कपाटघ्नः चौरः [ किवाड़ फाड़ने वाला चोर ]।

**शक्ताविति किम् ? विषेण हस्तिनं हन्ति हस्तिघातः ॥**

### ८२४. पाणिघताडघौ शिल्पिनि ॥ ५५ ॥ ( २९७२ )

**पाणिघ, ताडघ–इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि । पाणि, ताड–इत्येतयोः कर्मणोरुपपदयोर्हन्तेर्धातोः कः प्रत्ययो भवति, तस्मिंश्च परतो हन्तेष्टिलोपः, घत्वं च निपात्यते । पाणिघः । ताडघः ।**

**शिल्पिनीति किम् ? पाणिघातः । ताडघातः ।**

**❋ राजघ उपसंख्यानम् ❋ ( म० भा० ३.२.५५ वा० ) । राजानं हन्ति राजघः ॥**

### ८२५. आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ५६ ॥ ( २९७३ )

**आढ्यादिषु कर्मसूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु करोतेर्धातोः करणे कारके ख्युन्प्रत्ययो भवति ।**

**न्यासः**

**विषेण हस्तिनं हन्तीति ।** विषेणेत्यशक्तिकत्वं दर्शयति । यो हि स्वयं हन्तुं न समर्थः स विषादिनोपायान्तरेण हन्ति ॥ ५४ ॥

**पाणिघताडघौ शिल्पिनि ।। पाणिघताडघाविति ।** टप्रत्ययो घत्वं टिलोपश्च निपात्यते ॥ ५५ ॥

**आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ अच्वाविति** बहुव्रीहिः–न विद्यते च्विर्यस्मिंस्तत्राच्वौ । तत्पुरुषो वा–च्वेरन्योऽच्विः । अच्व्यन्त इत्यर्थः । अच्वावित्याढ्यादीनां विशेषणम् । एकवचनं तु प्रत्येकं तैरभिसम्बध्यते । **आढ्यादिष्वित्यादिना** कर्तृविशेषणत्वमाढ्यादीनामपाकरोति । **करणे कारक** इत्यनेनापि करणस्योपपदत्वं निरस्यति । अथैवं कस्मान्न विज्ञायते—करण उपपद आढ्यादिषु कर्तृष्विति ? तत्र केचिदाहुः—आढ्यादयोऽत्र शब्दप्रधानाः, न च तथाभूतानां कर्तृत्वमुपपद्यते । शब्दप्रधानत्वं पुनस्तेषां च्व्यन्तेष्वच्वाविति प्रतिषेधाद्विज्ञायते । शब्द एव हि च्व्यन्तो भवति, नार्थः । च्व्यन्तता शब्दस्यैव विद्यते, नार्थस्य । तत्र

**पदमञ्जरी**

'कवङ् चोष्णे' इति योगविभागात्कोः कवादेशः ॥ ५४–५५ ॥

**आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ आढ्यादिष्विति ।** अनेन आढ्यादीनामुपपदत्वं दर्शयति । **करणे कारके** इत्यनेनापि करणस्य प्रत्ययार्थत्वम् । अथैवं कस्मान्न विज्ञायते—

**भावबोधिनी**

शक्ति=सामर्थ्य प्रतीत रहने पर—इसका क्या फल है ? विषेण हस्तिनं हन्ति—[ विष द्वारा हाथी को मार डालता है । यहाँ स्वयं नहीं अपितु विष से मारता है । अतः यह सूत्र लागू न होकर अण् होता है है—] हस्तिघातः ।। ५४ ।।

शिल्पी कर्ता रहने पर 'पाणिघ' तथा 'ताडघ' ये शब्द निपातित होते हैं । पाणि और ताड – इन कर्मों के उपपद रहते हन् धातु से 'क' प्रत्यय होता है, उसके परे रहते हन् के टि=अन् का लोप होता है और 'ह' का घत्व भी निपातित होता है । उदा० पाणिघः, ताडघः । [ प्राचीन काल के किसी वाद्य आदि को बजाने वाला । ]

शिल्पी अर्थ में—इसका क्या फल है ? पाणिघातः, ताडघातः । [ यहाँ सामान्य अर्थ है । अतः अण् प्रत्यय होता है । ] *'राजघ' इसका उपसंख्यान करना चाहिये ।* राजानं हन्ति—इस अर्थ में—राजघः । [ राजानम् उपपद हन् से टक्=अ प्रत्यय, टिलोप और कुत्व होता है । राजा को मार डालने वाला— ] ।। ५५ ।।

च्वि के अर्थ में वर्तमान किन्तु अच्व्यन्त आढ्य, सुभग, स्थूल आदि कर्म उपपद रहते करण अर्थ में 'कृ' धातु से

**च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः —च्व्यन्ताः, अच्व्यन्ताश्च। तत्र च्व्यन्ताः पर्युदस्यन्ते–अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। सुभगंकरणम्। स्थूलंकरणम्। पलितंकरणम्। नग्नंकरणम्। अन्धंकरणम्। प्रियंकरणम्।**

**च्व्यर्थेष्विति किम्? आढ्यं तैलेन कुर्वन्ति, अभ्यञ्जयन्तीत्यर्थः। प्रकृतेरविवक्षायामभूत-प्रादुर्भावेऽपि**

**न्यासः**

यद्येतेऽर्थप्रधानाः स्युः, च्व्यर्थेष्विति, विशेषणमनुपपन्नं स्यात्, अच्वाविति च प्रतिषेधोऽनर्थकः स्यात्। पर्युदासोऽप्यनर्थकः स्यात्, पर्युदसनीयाभावात्। कथं पुनः शब्दप्रधानानां प्रत्ययार्थविशेषणत्वं नोपपद्यते, शब्दस्याकर्तृकत्वादनुपपत्तेरिति? न; तस्याप्याढ्य इत्येवंशब्दः सुखयति, सुभगशब्दः सुखयतीत्यादिप्रयोगेषु कर्तृत्वदर्शनात्। व्याख्यानादेवार्थनिश्चयोऽद्वेष्यः। करणस्य प्रत्ययार्थत्वेन निर्देशात् 'कर्त्तरि कृत्' इति न व्याप्रियते। ननु च नेमे च्व्यर्थाः, ते नियोगत एव च्व्यन्ताः, इह त्वच्व्यन्ता आढ्यादयो न सम्भवन्त्येव, तत् किं पर्युदस्यन्त इत्याह— **च्वेर्विकल्पेन विधानादित्यादि**। विकल्पेन विधानं तु 'समर्थानां प्रथमाद्वा' इत्यतो वाग्रहणानुवृत्तेः।

**आढ्यं तैलेन कुर्वन्तीत्यादि**। न ह्यसौ प्रागनाढ्यस्तैलेनाढ्यः क्रियते, किं तर्हि? आढ्यस्तैलेनाभ्यज्यते। अनेकार्थत्वाद्धातूनां करोतिरत्राभ्यञ्जने वर्त्तते। तेनाभूतप्रादुर्भावो नास्तीति भवति प्रत्युदाहरणम्। अथ वा— भवतु नामाभूतप्रादुर्भावः, तथापि युक्तमेवेदं प्रत्युदाहरणमिति दर्शयितुमाह—**प्रकृतेरविवक्षायामित्यादि**। न ह्यभूत-

**पदमञ्जरी**

करण उपपदे आढ्यादिषु कर्तृष्विति? उच्यते—'च्व्यर्थेष्वच्वौ' इति वचनाद् आढ्यादिशब्दाः स्वरूपप्रधानाः, न च शब्दानां कर्तृत्वमुपपद्यते। ननु च श्रवणेन करोति सुखमाढ्यशब्द इत्यत्र शब्दस्यापि कर्तृत्वं सम्भवति? एवं तर्हि व्याख्यानात्तथा नाश्रीयते। अच्वाविति तत्पुरुषो बहुव्रीहिर्वा, अच्व्यन्त इत्यर्थः। प्रत्येकं सम्बन्धात्त्वेकवचनम्। कथं पुनश्च्व्यर्थाश्च भवन्त्यच्व्यन्ताश्च भवन्तीत्याह—**च्वेर्विकल्पेन विधानादिति। आढ्यङ्करणमिति।** ख्युनः खकारो मुमर्थः, लिङ्गविशिष्टपरिभाषया (व्या० परि० २९) स्त्रीलिङ्गेष्वाढ्यादिषूपपदेषु ह्रस्वार्थश्च। नकारः स्वरार्थः। योरनादेशः।

**अभ्यञ्जयन्तीत्यर्थ इति**। अनेकार्थत्वाद्धातूनाम्। तेनात्र प्रागनाढ्यः सन्नाढ्यः क्रियत इति अभूततद्भावाभावः। भवतु वाऽभूततद्भावः, तथापि युक्तमेवेदं प्रत्युदाहरणमित्याह—**प्रकृतेरविवक्षायामिति**। प्रकृतिरेव

**भावबोधिनी**

ख्युन् प्रत्यय होता है। चूँकि च्वि का विधान विकल्प से होता है, अतः च्व्यर्थ दो प्रकार के होते हैं—(१) च्विप्रत्ययान्त और (२) अच्विप्रत्ययान्त। इनमें च्विप्रत्ययान्त के साथ पर्युदास नञ् सम्बद्ध किया जाता है—अनाढ्यम् आढ्यं कुर्वन्ति अनेन—इस विग्रह में 'आढ्यङ्करणम्'। [ जो धनवान् नहीं है उसे धनवान् बनाया जाता है जिससे वह—इस करण अर्थ में 'आढ्यम्' उपपद 'कृ' से ख्युन् प्रत्यय, अनुबन्धलोप के बाद 'यु' का 'अन' आदेश, 'कृ' का गुण, रपर, णत्व—करण। उपपद समास विभक्तिलोप, खिदन्त पर होने से मुम् आगम, म् का अनुस्वार, परसवर्ण—आढ्यङ्करणम्। इसी प्रकार आगे के शब्दों की भी सिद्धि समझनी चाहिये। ] सुभगंकरणम्। [ असुभगं सुभगं करोति अनेन—जो कल्याणयुक्त नहीं है उसे कल्याणयुक्त जिससे किया जाता है। ] स्थूलंकरणम्। [ अस्थूलं स्थूलं कुर्वन्ति अनेन - जो स्थूल नहीं है उसे स्थूल बनाया जाता है जिससे वह। ] पलितंकरणम्। [ अपलितं पलितं कुर्वन्ति अनेन - जो बूढ़ा नहीं है उसे बूढ़ा बनाया जाता है जिससे वह। नग्नंकरणम्। [ अनग्नं नग्नं करोति अनेन—जो नंगा नहीं है उसे नंगा किया जाता है जिससे वह। ] अन्धंकरणम्। [ अनन्धम् अन्धं कुर्वन्ति अनेन - जो अन्धा नहीं है उसे अन्धा किया जाता है जिससे वह। ] प्रियंकरणम् [ अप्रियं प्रियं करोति अनेन जो प्रिय नहीं है उसे प्रिय किया जाता है जिससे वह। ]

च्वि के [ अभूततद्भाव ] अर्थ-वाले—इसका क्या फल है? आढ्यं तैलेन कुर्वन्ति। [ तेल से आढ्य को करते हैं। ] अभ्यञ्जन = खूब मालिश करते हैं—यह अर्थ है। [ यहाँ अभूत-तद्भाव च्व्यर्थ नहीं है। ] प्रकृति की अविवक्षा

**प्रत्युदाहरणं भवति । अच्वाविति किम् ? आढचीकुर्वन्त्यनेन ।**

**ननु च ख्युना मुक्ते ल्युटा भवितव्यम्, न च ल्युटः ख्युनश्च विशेषोऽस्ति ( म० भा० ) तत्र किं प्रतिषेधेन ? एवं तर्हि प्रतिषेधसामर्थ्यात् ख्युन्यसति ल्युडपि न भवति । तेन ल्युटोऽप्ययमर्थतः प्रतिषेधः । उत्तरार्थश्च च्विप्रतिषेधः क्रियते ॥**

**न्यासः**

प्रादुर्भाव इत्येवं सर्वोऽभूतप्रादुर्भावश्च्व्यर्थो भवति, किन्तु विशिष्ट एव; यस्मात् तत्र प्रकृतिग्रहणं दर्शयिष्यते । प्रकृतिः कार्यस्य पूर्वावस्था । तेन यत्राश्रितं कार्यं पूर्वारम्भश्च कार्यस्य भाव्यमानतया विवक्ष्यते तत्र स अभूत-प्रादुर्भावः, स एव च्व्यर्थः । एतदुक्तं भवति—यदा कार्यस्य पूर्वावस्था विवक्ष्यते तदा च्व्यर्थो भवति, नाभूत-प्रादुर्भावविवक्षायामिति । इह तु पूर्वावस्थामपरामृश्यानाश्रितपूर्वारम्भे कार्येऽभूततद्भावमात्रं विवक्षितम् । तेन सत्यप्यभूततद्भावे च्व्यर्थो न भवति । अतो भवत्येतत् प्रत्युदाहरणम्—**आढचीकुर्वन्तीति** । 'अभूततद्भावे कृभ्वस्तियोगे' इत्यादिना च्विः, 'अस्य च्वौ' इतीत्वम् । **ल्युटा भवितव्यमिति** । 'करणाधिकरणयोश्च' इत्यनेन ल्युड्विधानात् । यदि ल्युटा भवितव्यं ततः किमित्याह—**न चेत्यादि** । उभयत्रापि तदेव रूपम्, स एव स्वरः । रूपं तावदभिन्नम्, उभयत्रापि समासस्य नित्यार्थत्वात्; तथा हि ख्युन्युपपदसमासेन भवितव्यम्, ल्युट्यपि गतिसमासेन ? 'अनव्ययस्य' इति च प्रतिषेधान् मुमा न भवितव्यमिति रूपभेदो नास्ति । स्वरोऽपि न भवति भेदकः; ख्युनि सति यत्रैव नित्स्वरो भविष्यति, ल्युट्यपि लित्स्वरस्तत्रैव । **प्रतिषेधसामर्थ्यादिति** । आढ्यीकरण-मित्यस्य रूपस्य निरासाय 'अच्वौ' इति प्रतिषेधः क्रियते । एवं तस्य निरासः कृतो भवति यदि ख्युना मुक्ते ल्युडपि भवति, अन्यथा हि स्यादेव । तदेव रूपमिति प्रतिषेधः स्यादिति वैयर्थ्यमिति भावः । **अर्थत इति** । न शब्दतः । अर्थस्तु प्रतिषेधसामर्थ्यमेव । **उत्तरार्थश्चेति** । उत्तरसूत्रस्योपयोगं दर्शयति । तत्र खिष्णुच्खुकञ्भ्यां

**पदमञ्जरी**

परिणामित्वेन यत्र विवक्ष्यते, यथा—तन्तवः पटो भवतीति, तदा च्विप्रत्ययः, तथा च वार्त्तिकम् 'प्रकृतिविवक्षा-ग्रहणं च' इति, प्रकृतिः=कार्यस्य पूर्वावस्था ।

**अच्वाविति किमिति** । अस्य वक्ष्यमाणोऽभिप्रायः, तमाविष्करोति—**ननु चेति** । **ल्युटात्र भवितव्यमिति** । 'करणाधिकरणयोश्च' इति । न च ल्युटः ख्युनश्च विशेषोऽस्तीति, ल्युटि तावदाढ्यीकरणमिति रूपम्, स्वरोऽपि लित्स्वरेणोत्तरपदाद्युदात्तत्वम्; ख्युन्यपि नित्स्वरेणाद्युदात्तत्वम्, 'खित्यनव्ययस्य' 'अरुर्द्विषदजन्तस्य मुम्' इति ह्रस्वत्वम्, मुम् चानव्ययस्य विधीयते, च्व्यन्ताश्चाव्ययम्; 'ऊर्यादिच्विडाचश्च' इति निपातत्वात् । स्त्रियामप्युभ-यत्र 'टिड्ढाणञ्' इत्यादिना ङीब् भवति, अतो रूपे स्वरे च नास्ति विशेषः । **उत्तरार्थश्चेति** । उत्तरसूत्रे खिष्णुच्-

**भावबोधिनी**

में अभूत-प्रादुर्भाव में भी प्रत्युदाहरण होता है । [ भाव यह है कि जब प्रकृति=कार्य की पूर्वावस्था ही परिणामी=भाव्यमानत्वेन विवक्षित होती है जैसे—तन्तवः पटः भवति । तब च्वि प्रत्यय होता है । इस लिये अभूत का तद्भाव रहने पर भी च्व्यर्थ नहीं माना जा सकता । इस कारण यहाँ दिया गया प्रत्युदाहरण ठीक ही है । ]

अच्व्यन्त में—इसके ग्रहण का क्या फल है ? आढ्यीकुर्वन्ति अनेन ! [ यहाँ अनाढ्यम् आढ्यम् कुर्वन्ति—इस विग्रह में "अभूत-तद्भावे कृभ्वस्तियोगे कर्तरि च्विः" सूत्र से च्वि प्रत्यय होता है, उसका सर्वापहारी लोप हो जाता है, "अस्य च्वौ" सूत्र से 'अ' का 'ई' हो जाने पर उक्त रूप बनता है । यहाँ 'च्वि' है । अतः ख्युन् प्रत्यय नहीं होगा । ]

शंका—ख्युन् के न होने पर "करणाधिकरणयोश्च" सूत्र से ल्युट् होना चाहिये । यह कि—ल्युट् तथा ख्युन् में कोई भेद नहीं है, तब प्रतिषेध से क्या लाभ ? यदि ऐसी बात है तब तो प्रतिषेध-सामर्थ्य से जब ख्युन् नहीं होता है तब ल्युट् भी नहीं होता है । इस कारण अर्थतः यह ल्युट् का भी प्रतिषेध है । उत्तरवर्त्ती सूत्र के लिये च्वि का प्रतिषेध किया जाता है ।

**८२६. कर्त्तरि भुवः खिष्णुच्खुकञौ ॥ ५७ ॥ ( २९७४ )**

**आढ्यादिषु सुबन्तेषूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके खिष्णुच्, खुकञ्—इत्येतौ प्रत्ययौ भवतः। अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः, आढ्यम्भावुकः; सुभगम्भविष्णुः, सुभगम्भावुकः। स्थूलम्भविष्णुः, स्थूलम्भावुकः। पलितम्भविष्णुः, पलितम्भावुकः। नग्नम्भविष्णुः, नग्नम्भावुकः। अन्धम्भविष्णुः, अन्धम्भावुकः। प्रियम्भविष्णुः, प्रियम्भावुकः।**

**न्यासः**

मुक्ते तृजादिभिर्भवितव्यमित्यस्ति विशेषः। ख्युनः खकारो मुमर्थः, नकारः स्वरार्थः ॥ ५६ ॥

**कर्त्तरि भुवः खिष्णुच्खुकञौ ॥ कर्त्तरि कारक इति।** कर्तृग्रहणं करणनिवृत्त्यर्थम्। ननु चास्वरितत्वा-

**पदमञ्जरी**

खुकञ्भ्यां मुक्ते तृजादिभिर्भवितव्यमित्यस्ति विशेषः, कथं तर्हि पूर्वमुक्तम्—प्रतिषेधसामर्थ्यादिति? अस्मिन्सूत्रे प्रतिषेधसामर्थ्यादिति भावः। केवलोत्तरार्थत्वे हि तत्रैव 'अच्वौ' इत्यवक्ष्यत्, यथा वक्ष्यते—इह किंचित्त्रपो इति। **भाष्ये** तूत्तरार्थमेव स्थितम् ॥ ५६ ॥

**कर्त्तरि भुवः खिष्णुचखुकञौ ॥** कर्तृग्रहणं करणनिवृत्त्यर्थम्, उत्तरार्थं च, खकारो मुमर्थः, चकारः स्वरार्थः,

**भावबोधिनी**

**विमर्श**—प्रस्तुत सूत्र च्वि के अर्थवाले के च्विप्रत्ययान्त न होने पर आढ्य आदि उपपद रहते ख्युन् प्रत्यय करता है।

च्वि के अर्थ में हो किन्तु च्विप्रत्ययान्त न हो, यह कैसे संभव है? इसका समाधान यह है कि 'च्वि' प्रत्यय वैकल्पिक है। अतः जब च्वि नहीं होता है तब भी उसका अर्थ रहता है। अतः यहाँ विरोध की शंका नहीं करनी चाहिये।

जब प्रकृति = कार्य की पूर्वावस्था की परिणामी रूप से विवक्षा होती है तभी च्वि का अर्थ माना जाता है; जैसे—तन्तवः पटः भवति। इससे भिन्न में च्व्यर्थ नहीं होता है। अतः प्रकृति की अविवक्षा में अभूत के प्रादुर्भाव में भी यह च्व्यर्थता नहीं मानी जाती। इसी कारण—आढ्य तैलेन कुर्वन्ति -यह प्रत्युदाहरण ठीक ही है।

यह ख्युन् करण अर्थ में है। और ल्युट् भी करण अर्थ में होता है। अतः जब ख्युन् नहीं होता है तब ल्युट् ही हो जाय। इन दोनों प्रत्ययों में रूप में कोई भेद नहीं है क्योंकि दोनों में 'यु' का 'अन' होता है। 'अनव्ययस्य' इस प्रतिषेध के कारण ख्युन् में मुम् आगम भी नहीं होगा। लित् और नित् दोनों में आद्युदात्त ही होता है। इस लिये ख्युन् न होने पर ल्युट् भी सम्भव नहीं, तब प्रतिषेध किस लिये है? इस शंका का समाधान यह है कि जब ख्युन् नहीं होगा तब ल्युट् भी नहीं होगा। ख्युन् का प्रतिषेध शब्दतः है और ल्युट् का अर्थतः। 'च्वि' के प्रतिषेध का फल यहाँ नहीं है उत्तर सूत्र में ही है ॥ ५६ ॥

च्वि के अर्थ में वर्तमान किन्तु अच्विप्रत्ययान्त आढ्य, सुभग आदि सुबन्त उपपद रहते 'भू' धातु से 'कर्ता' अर्थ में 'खिष्णुच्' तथा 'खुकञ्' ये दो प्रत्यय होते हैं। उदा० —अनाढ्यः आढ्यः भवति—आढ्यंभविष्णुः, आढ्यंभावुकः [ जो आढ्य नहीं है वह आढ्य होता है—इस अर्थ में च्वि के अभावपक्ष में 'आढ्यः' उपपद 'भू' से खिष्णुच्=इष्णु प्रत्यय, धातु के 'ऊ' का गुण, अव् आदेश,—उपपद समास, विभक्ति का लोप, खिदन्त परे मान कर मुम् आगम—आढ्यंभविष्णुः। खुकञ्=उक होने पर ञित् मान कर 'ऊ' की वृद्धि, आव् आदेश—भावुक। मुम् आगम—आढ्यंभावुकः। इसी प्रकार की प्रक्रिया आगे सभी में है। ] सुभगंभविष्णुः, सुभगंभावुकः। [ असुभगः सुभगः भवति—यह विग्रह है। जो सौभाग्यशाली नहीं है वह सौभाग्यशाली होता है। ] स्थूलंभविष्णुः स्थूलंभावुकः। [ अस्थूलः स्थूलः भवति—यह विग्रह है। ] पलितम्भविष्णुः, पलितम्भावुकः। [ अपलितः पलितः भवति—यह विग्रह है। ] नग्नंभविष्णुः, नग्नंभावुकः। [ अनग्नः नग्नः भवति—यह विग्रह है। ] अन्धंभविष्णुः अन्धंभावुकः। [ अनन्धः अन्धः भवति—यह विग्रह है। ] प्रियंभविष्णुः प्रियम्भावुकः। [ अप्रियः प्रियः भवति—यह विग्रह है। ]

**कर्तरीति किम् ? करणे मा भूत । च्व्यर्थेष्वित्येव—आढ्यो भविता । अच्वावित्येव—आढ्यीभविता ॥**

**उदात्तत्वाद्भुवः सिद्धमिकारादित्वमिष्णुचः ।**
**नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ॥ ( म० भा० ३.२.५७ )**

**न्यासः**

देवानुवृत्तिर्न स्यात् ? सत्यमेतत्; द्वेष्यमपि कश्चिद् विजानीयाद्--यथैवाढ्यादयोऽनुवर्त्तन्ते तथा तत्सम्बन्धकरणमपीति । उत्तरार्थश्च कर्तृग्रहणम् ।

**उदात्तत्वादित्यादि** । उदात्तादितरोऽनुदात्तः, तेन भवतेर्विहितस्यार्द्धधातुकस्य 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधो न भवति । बलादिलक्षणेटा भवितव्यम्, ततश्च तेनैवेकारादित्वं सिद्धम्, ततो न कर्त्तव्यं खिष्णुच इकारादित्वमिति भावः । इकारादित्वकरणस्य प्रयोजनमाह—**नञस्त्वित्यादि** । यदि खिष्णुच इकारादित्वं न क्रियते ततो यद्यपीटि कृते सतीकारादित्वं तस्य भवति, तथापि तस्य लाक्षणिकत्वात् 'कृत्योकेष्णुच्चार्वादयश्च' इत्यत्रेष्णुज्ग्रहणेन न ग्रहणं स्यात् । ततश्चानाढ्यम्भविष्णुरिति नञ उत्तरस्योत्तरपदस्यान्तोदात्तत्वं न स्यात्, इष्यते च । अतो नञ उत्तरस्योत्तरपदान्तोदात्तत्वम्, तेनेकारादित्वमिष्णुचः क्रियते । ननु च सत्यपीकारादित्वे अलंकृञादिसूत्रे विहितस्यैवेष्णुचो ग्रहणेन भवितव्यम्, नेतरस्य, तस्यैकानुबन्धकत्वात्, अस्य द्व्यनुबन्धकत्वात् ?

**पदमञ्जरी**

ञकारो वृद्ध्यर्थश्च । किमर्थं खिष्णुजिकारादिः क्रियते, न ख्स्नुरित्येवोच्येत, तत्रायमप्यर्थः--स्वरार्थश्चकारो न कर्त्तव्यो भवति, प्रत्ययस्वरेणैव सिद्धम् ? केनेदानीमिकारादित्वं सिद्ध्यति ? तत्राह—**उदात्तत्वादिति । भवति**रयमुदात्तः, तस्योदात्तत्वादिड् भविष्यति । **नञस्त्विति**। 'नञः' इति पञ्चमी, नञ उत्तरस्य खिष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः । यद्ययमिकारादिर्न क्रियेत, ततः सत्यपीटि 'कृत्योकेष्णुच्चार्वादयश्च' इत्यस्य ग्रहणं न स्याद्, अस्य चकाराभावात् । अथास्यापि चकारः क्रियेत ? एवमपि लाक्षणिकत्वात् षत्वणत्वयोश्चासिद्धत्वादिष्णुजिति रूपाभावाद् ग्रहणं न स्यादेव, तत इकारादित्वं क्रियते । ननु च सत्यपीकारादित्वे 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' ( व्या० परि० ५४ ) 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ग्रहणम्' ( व्या० परि० ५२ ) इति वा अलंकृञादीष्णुच एव ग्रहणेन भवितव्यम्, नास्य ? इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीति मन्यते ।

**भावबोधिनी**

कर्ता अर्थ में हो—इसका क्या लाभ है ? करण अर्थ में ये प्रत्यय न हों । च्वि के अर्थों में ही होता है—आढ्यः भविता । [ यहाँ यथार्थकथन है । अतः नहीं होता है । ] च्विप्रत्ययान्त न होने पर—इसका क्या फल है ? आढ्यीभविता । [ यहाँ च्वि प्रत्यय किया जा चुका है । इसी लिये 'अस्य च्वौ'—सूत्र से 'अ' का 'ई' हुआ है । अतः यह सूत्र लागू नहीं होगा । ]

'भू' धातु उदात्त है अतः [ इट् का आगम होने से ही ] इष्णुच् का इकारादि होना सिद्ध है । [ तब खिष्णुच् ऐसे इकारादि निर्देश का क्या प्रयोजन है ? ] नञ् से उत्तरवर्ती के स्वर की सिद्धि के लिये इकारादि होना इष्ट है ।

**विमर्श**—यहाँ शंका यह है कि 'ख्स्नु' यही प्रत्यय करना चाहिये था, 'खिष्णुच्' यह इकारादि करने का क्या लाभ है ? साथ ही 'भू' धातु उदात्त है अतः 'एकाच उपदेशेऽनुदात्तात्'' इस इट्निषेधक सूत्र की प्रवृत्ति न होने से 'आर्धधातुकस्येड् वलादेः'' सूत्र से इट् का आगम होकर 'ख्स्नु' इकारादि हो ही जाता । तब इकारादि करने का प्रयोजन है ? ''कृत्योकेष्णुच्चार्वादयश्च'' ( पा सू. ६.२.१६० ) सूत्र नञ् से उत्तरवर्ती कृत्य, उक, इष्णुच् अन्तवाले शब्द उदात्त होते हैं, इसमें इष्णुच् का ग्रहण है अतः 'अनाढ्यम्भविष्णुः' यह नञ् से उत्तर पद का अन्तोदात्त करने के लिये इष्णुच् यह इकारादि किया गया है । यद्यपि यह फल भी इट् आगम करके सिद्ध किया जा सकता है तथापि 'लाक्षणिक और प्रतिपदोक्त में प्रतिपदोक्त का ही ग्रहण होता है,' इस वचन के अनुसार 'इष्णुच्' यही लिया जायगा, न कि इट् आगम करने के बाद बनाया गया इकारादि । महाभाष्य में प्रदर्शित श्लोक से यहाँ थोड़ा सा भेद है । भाव समान है ॥ ५७ ॥

## ८२७. स्पृशोऽनुदके क्विन् ।। ५८ ।। ( ४२३ )

**स्पृशेर्धातोरनुदके सुबन्त उपपदे क्विन्प्रत्ययो भवति । ननु च सकर्मकत्वात् स्पृशेः कर्मैवोपपदं प्राप्नोति ? नैष दोषः; कर्तरीति पूर्वसूत्रादनुवर्तते, तत्कर्तृप्रचयार्थं विज्ञायते । सुबन्तमात्रे चोपपदे कर्तृप्रचयो लभ्यते । घृतं स्पृशति घृतस्पृक् । मन्त्रेण स्पृशति मन्त्रस्पृक् । जलेन स्पृशति जलस्पृक् ।**

**अनुदक इति किम् ? उदकस्पर्शः । नकारः 'क्विन्प्रत्ययस्य कुः' ( ८.२.६२ ) इति विशेषणार्थः ॥**

**न्यासः**

इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीत्यदोषः । खकारो मुमर्थः, चकार स्वरार्थः, ञकारो वृद्धयर्थः ॥ ५७ ॥

**स्पृशोऽनुदके क्विन् ॥** 'सुपि स्थः' इत्यत्रोक्तम् --'कर्मणि' 'सुपि' इति द्वयमनुवर्त्तते, तत्र सकर्मकेषु कर्मणीत्युपतिष्ठते, अन्यत्र सुपीति । स्पृशिरयं सकर्मकः, अतः स्पृशेर्धातोरनुदके सुबन्त उपपद इत्युक्ते पूर्वापर-व्याहृतिं मन्यमान आह—**ननु चेत्यादि नैष** इत्यादिना परिहारः । कथं पुनः कर्तृग्रहणे कर्तुश्च प्रचयार्थे विज्ञायमाने सुबन्त उपपदे प्रत्ययो लभ्यत इत्याह—**सुबन्तमात्र इत्यादि** । सुबन्तमात्र उपपदे सत्येकः प्रचयार्थः कर्त्ता कर्मण्युपपदे सति भवति, अपरः करणादावुपपदे; तत्र भेदे सति सत्सम्बन्धभेदेन भिद्यमानस्य कर्त्तुः प्रचयो लभ्यते । **घृतस्पृगिति** । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्, गकारे 'वावसाने' इति चर्त्वं ककारः । **नकारः क्विन्प्रत्ययस्य कुरित्यादि** । 'क्विप्रत्ययस्य कुः' इत्युच्यमाने क्विपोऽपि ग्रहणं स्यात्, अतो नकारोऽनुबध्यते ।

**पदमञ्जरी**

यद्येवम्, खण्गुजयमस्तु, तत्र षत्वणत्वयोश्चकारस्य च करणसामर्थ्यादिटि कृतेऽस्यापि ग्रहणं सिद्धमिति चिन्त्य-प्रयोजनमिकारादित्वम् ॥ ५७ ॥

**स्पृशोऽनुदके क्विन् ॥ ननु चेत्यादि** । 'सुपि स्थः' इत्यत्रोक्तम्—सकर्मकेषु कर्मणीत्युपतिष्ठतेऽन्यत्र सुपीति, ततश्च सुबन्त उपपदे क्विन् प्रत्यय इत्युक्तमनुपपन्नमिति भावः । **तत्कर्तृप्रचयार्थमिति** । 'कर्त्तरि कृत्' इत्येव कर्त्तरि क्विनः सिद्धत्वात्कर्त्रनुवृत्तेर्नान्यत्प्रयोजनमस्तीति भावः । **कर्तृप्रचयो लभ्यत इति** । कर्मण्युपपद एकः कर्त्ता, करणादौ चापर इत्येवं प्रचयो भवति । **घृतस्पृगिति** । 'क्विन्प्रत्ययस्य कुः' इति शकारस्य षकारः सोष्मत्वेनान्तरतम्यात्, 'झलां जशोऽन्ते' । क्विनः ककारो गुणवृद्धिप्रतिषेधार्थः, इकारः 'वेरपृक्तस्य' इति विशेष-णार्थः । नकारः किमर्थः, एकाज्भ्यो ह्ययं विधीयते तत्र धातुस्वरेणैव सिद्धम् ? यस्तर्ह्यनेकाज्—दधृगिति, वक्ष्यत्येतद्धृषेर्द्विर्वचनमन्तोदात्तत्वञ्चेति ? एवं तर्हि 'क्विन्प्रत्ययस्य कुः' इति विशेषणार्थः । 'क्विप्रत्ययस्य'

**भावबोधिनी**

उदक—भिन्न सुबन्त उपपद रहते 'स्पृश्' धातु से क्विन् प्रत्यय होता है । यह कि—स्पृश् धातु सकर्मक है अतः कर्म ही उपपद प्राप्त होता है ? यह दोष नहीं है, क्योंकि पूर्ववर्ती सूत्र से 'कर्तरि' इसकी अनुवृत्ति होती है । वह कर्तृ-प्रचय के लिये समझा जाता है । सुबन्तमात्र उपपद रहने पर कर्तृप्रचय का लाभ होता है । [ अर्थात् कर्म उपपद रहते एक कर्ता, करण आदि उपपद रहते दूसरा कर्ता । इस प्रकार अनेक कर्ता उपस्थित हो जाते हैं । ] उदा० घृतं स्पृशति — इस विग्रह में—घृतस्पृक् । [ यहाँ कर्म उपपद कर्ता अर्थ है । ] मन्त्रेण स्पृशति —इस अर्थ में मन्त्रस्पृक् । [ यहाँ करण उपपद कर्ता है । ] जलेन स्पृशति—इस अर्थ में—जलस्पृक् । ] यहाँ भी करण उपपद कर्ता है । इस प्रकार कर्तृप्रचय हो जाता है । क्विन् प्रत्यय का सर्वापहारी लोप, उपपदसमास, विभक्तिलोप करने पर–घृतस्पृश् । ''क्विन् प्रत्ययस्य कुः'' इससे 'श्' का कुत्व होता है, विकल्प से चर्त्व करने पर—घृतस्पृक्, घृतस्पृग् दो रूप बनते हैं ।

उदक उपपद न रहे—इसका क्या फल है ? उदकस्पर्शः । [ यहाँ क्विन् न हो कर सामान्य अण् होता है । ] न्' यह अनुबन्ध ''क्विन् प्रत्ययस्य कुः'' इस सूत्र के विशेषण के लिये है । [ यदि 'क्वि' ऐसा रहता तब तो क्विन् और क्विप् दोनों में कुत्व की प्रवृत्ति होने लगती । इसे रोकने के लिये 'न्' यह अनुबन्ध लगाया गया है ] ।। ५८ ।।

## ८२८. ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥ ( ३७३ )

**ऋत्विगादयः पञ्च शब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते, अपरे त्रयो धातवो निर्दिश्यन्ते। ऋतुशब्दे उपपदे यजेर्धातोः क्विन् प्रत्ययो निपात्यते—ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति ऋत्विक्। रूढिरेषा यथाकथञ्चिदनुगन्तव्या। धृषेः क्विन्प्रत्ययः, द्विर्वचनम्, अन्तोदात्तत्वं च निपात्यते-धृष्णोतीति दधृक्। सृजेः कर्मणि क्विन्, अमागमश्च निपात्यते—सृजन्ति तामिति स्रक्। दिशेः कर्मणि क्विन्निपात्यते-दिशन्ति**

**न्यासः**

प्रकृतेराद्युदात्तार्थो नकारो न भवति; स्पृशेरेकाच्त्वात्, तत्स्वरेणैव सिद्धत्वात्। ककारो गुणप्रतिषेधार्थः, वकारः 'वेरपृक्तस्य' इति विशेषणार्थः॥ ५८॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ॥ ऋतौ यजतीति।** वसन्तादिक ऋतौ यजति, यस्मिन् याग ऋतुर्देवता स याग ऋतुस्तं यजतीति। **ऋतुप्रयुक्तो वा यजतीति।** यस्मिन् याग ऋतुः प्रयोजकस्तमृतुप्रयुक्तो यजतीति। अस्मिन् पक्षे प्रयुक्तमात्रस्य लोपो निपात्यते। **ऋत्विगिति।** यजादित्वात् संप्रसारणम्। **यथाकञ्चिदनुगन्तव्येति।** येन केनचित् प्रकारेण व्युत्पादयितव्यम्, न त्ववयवार्थस्तन्त्रमिति दर्शयति। **अन्तोदात्तत्वं निपात्यत इति।** नियतस्वरबाधनार्थम्। **दधृगिति।** अभ्यासस्य 'उरत्' इत्यत्त्वम्, हलादिःशेषः,

**पदमञ्जरी**

इत्युच्यमाने सन्देहः स्यात्—क्वेः क्विपो वा निर्देश इति। क्वेरपि निर्देशे पकारस्य 'अनचि च' इति द्विर्वचनम्॥ ५८॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ऋतौ यजतीति।** वसन्तादिके। **ऋतुं यजतीति।** यस्मिन्यागे ऋतुर्देवता, यथा—'वसन्ताय कपिञ्जलानालभते' न ( वाज० सं० २४.२० ) 'पिशङ्गास्त्रयो वासन्ताः' तै० स० ५.६.२३.१ ) इत्यृतुपशूनालभते, 'ग्रीष्मो हेमन्त उत नो सवन्तः शरद्वर्षाः' ( तै० स० ५.७.२.४ ) इत्यादौ तदभिप्रायमेतत्। **ऋतुप्रयुक्तो वेति।** 'वसन्ते वसन्ते ज्योतिषा यजेत' ( ? ) इत्यादौ यत्कर्तृत्वं वद-

**भावबोधिनी**

ऋत्विक्, दधृक्, स्रक्, दिक् और उष्णिक्—ये पाँच शब्द क्विन्-प्रत्ययान्त निपातित किये जाते हैं। अन्य तीन—अञ्चु, युजि, क्रुञ्च—ये तीन धातुयें निर्दिष्ट हैं। उदा० ऋतु शब्द उपपद रहते यज धातु से क्विन् प्रत्यय निपातित होता है—ऋतौ यजति, [ वसन्तादि ऋतु में याग करता है। ], ऋतुं वा यजति, [ जिस याग में ऋतु देवता होता है उसका याग करता है। ] ऋतुप्रयुक्तः वा यजति [ जिस याग में ऋतु प्रयोक्ता होता है उस याग को करता है। ]—इन अर्थों में ऋत्विक बनता है। यह रूढि किसी प्रकार समझ लेनी चाहिये। [ ऋतु उपपद यज् से क्विन् प्रत्यय, सर्वापहारी लोप, उपपदसमास, ''वचिस्वपियजादीनां किति'' ( पा. सू. ६ १.१५ ) से 'य्' का सम्प्रसारण 'इ' और 'अ' का पूर्वरूप—ऋतु + इज्, यण् करने पर -ऋत्विज्। ''क्विन् प्रत्ययस्य कुः'' सूत्र से ज् का कुत्व ग् और 'वाऽवसाने' सूत्र से विकल्प से चर्त्व क् = ऋत्विक्, ऋत्विग् रूप होते हैं। ] 'धृष्' धातु से क्विन् प्रत्यय, सर्वापहारी लोप धातु का द्वित्व, धृष्धृष्। ''उरत्'' ( पा. सू. ७.४.६६ ) से ऋ का अ, रपर, हलादिशेष, जश्त्व—दधृड्, ''क्विन् प्रत्ययस्यः कुः'' ( पा. सू. ८.२.६२ ) से कुत्व करके ड् का ग्, वैकल्पिक चर्त्व करने पर ग् का क् होता है अतः दो रूप बनते हैं। ] सृज् धातु से कर्म में क्विन् प्रत्यय और अम् आगम निपातित होते हैं—सृजन्ति ताम्—यह विग्रह है—स्रक्। [ सृज् + क्विन्, सर्वापहारी लोप, अम् आगम—सृ अ ज्, यण्, कुत्व ] दिश् धातु से कर्म में क्विन् प्रत्यय निपातित होता है—दिशन्ति ताम्—इस अर्थ में—दिक्। [ दिश् + क्विन्, सर्वापहारी लोप, श् का ज् और ज् का

**तामिति दिक् । उत्पूर्वात्स्निहः क्विन्, उपसर्गान्तलोपः, षत्वं च निपात्यते-उष्णिक् । अञ्चु, युजि, क्रुञ्च- इत्येतेषां धातूनां क्विन्प्रत्ययो भवति । निपातनैः सह निर्देशादत्रापि किञ्चिदलाक्षणिकं कार्यमस्ति । अञ्चतेः सुबन्तमात्र उपपदे क्विन्प्रत्ययो भवति—प्राङ्, प्रत्यङ्, उदङ् । युजेः क्रुञ्चेश्च केवलादेव—युङ्, युञ्जौ, युञ्जः । सोपपदात्तु 'सत्सूद्विष०' ( ३.२.६१ ) इत्यादिना क्विप् भवति । अश्वयुक्, अश्वयुजौ, अश्वयुजः । क्रुङ्, क्रुञ्चौ, क्रुञ्चः । नलोपः कस्मान्न भवति ? निपातनसाहचर्यात् ॥**

**न्यासः**

जश्त्वम् । **षत्वञ्च निपात्यत इति ।** 'सात्पदाद्योः' इति प्रतिषेधान्न प्राप्नोतीति कृत्वा । 'ष्णिह प्रीतौ', उत्स्निह्यतीत्युष्णिक् । **निपातनैः सह निर्देशादित्यादिना** निपातनैः सहैषां यो निर्देशः स एषामपि किञ्चिदलाक्षणिकं कार्यं यथा स्यादित्येवमर्थः । तेनैषु किञ्चिदलाक्षणिकं कार्यं भवति । इदं त्वत्रालाक्षणिकं—यः सकर्मकस्यापि सुबन्तमात्र उपपदे भवति । **प्राङिति ।** 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्, हल्ङ्याादिसंयोगादिलोपौ, नकारस्य पूर्ववत् कुत्वम् । **केवलादिति ।** सत्यपि कर्मणि सुपीत्यधिकारे निरुपपदादेव भवति; निपातनैः सहेति निर्देशात् । क्विन्विधानसामर्थ्याद्वा । उपपदे हि सदादिसूत्रेण क्विपा भवितव्यम् । **सोपपदादित्यादि ।** न च सोपपदाद् युजेः क्विपि क्विनि वा विशेषोऽस्ति; 'चोः कुः' इति कुत्वस्य सिद्धत्वात् । अनुपपदत्वे 'युजेरसमासे' इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं सार्थकं भवति ॥ ५९ ॥

**पदमञ्जरी**

भिप्रायमेतत् । **षत्वञ्चेति ।** अन्यथा 'सात्पदाद्योः' इति निषेधः स्यात् । **सुबन्तमात्र इति ।** अन्यथा सकर्मकत्वात्कर्मण्येव स्यात् । **केवलादेवेति ।** एतत्तु क्विन्विधानसामर्थ्यादपि लभ्यते, न हि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोऽस्ति, कुत्वस्य 'चोः कुः' इत्यनेनैव सिद्धत्वात् । अनुपपदे तु 'युजेरसमासे' इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं भवति सार्थकम् । यदि तु निपातनसाहचर्यात् सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत, तदा 'सत्सूद्विष' इत्यत्र युजिग्रहणं शक्यमकर्त्तुम् । **नलोपः कस्मान्न भवतीति ।** 'कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः' ( धा० पा० १८५, १८६ ) इति नोपधावेतौ धातू । तथा निकुचितिरिति नलोपो दृश्यते, चुत्वेन तु जकारस्य श्रवणम्, तस्यासिद्धत्वाच्चकारे परतः 'चोः कुः' इति कुत्वं न भवति । कुञ्चौ कुञ्च इत्यादौ नकारोपधं तु पठतां स्यात्, तत्र सङि झलीति वचनान्न भवतीति वक्तव्यम् । सङिति प्रत्याहारः सनः सशब्दादारभ्या महिङो ङकारात् । अन्ये तु कुञ्चिरेक एव धातुः, तस्य ककारात्परो रेफोऽपि क्विन्सन्नियोगेन निपात्यते इत्याहुः । तदेतत् 'चोः कुः' इत्यत्र **वामनो** वक्ष्यति ॥ ५९ ॥

**भावबोधिनी**

कुत्व, चर्त्व । ] उत् पूर्वक स्निह् धातु से क्विन्, उपसर्ग के अन्त्य 'त्' का लोप और स् का ष् निपातित होता है—उष्णिक् । [ उत् स्निह्यति—इस अर्थ में क्विन्, सर्वापहारी लोप, त् का लोप, स् का ष् - उष्णिह् । कुत्व करने पर उष्णिक् । ] अञ्चु, युज् और क्रुञ्च—इन धातुओं से क्विन् प्रत्यय होता है । निपातन शब्दों के साथ इनका निर्देश होने से कुछ अलाक्षणिक [ सूत्र से न होने वाला ] भी कार्य होता है । सुबन्तमात्र उपपद रहते 'अञ्च्' धातु से क्विन् प्रत्यय होता है—प्राङ्, प्रत्यङ्, उदङ् । [ प्र अञ्चति, प्रति अञ्चति, उद् अञ्चति —इस विग्रह में क्विन्, सर्वापहारी लोप, "अनिदितां हल उपधायाः क्ङिति" ६.४.२४ से नलोप 'उगिदचां सर्वनामस्थानेऽधातोः" ( पा.सू. ७.१.८७ ) से नुम् प्र अ न् च् + सु, सवर्णदीर्घ, सुलोप, संयोगान्तलोप— प्रान्' 'न्' का कुत्व 'ङ्' करने पर—प्राङ् । प्रति + अङ् = प्रत्यङ् । उद् + अङ् = उदङ् । ] युज् तथा क्रुञ्च् से अकेले से ही क्विन् होता है—युङ्, युञ्चौ युञ्चः । [ युज् + क्विन्, लोप, सु युज् + सु, "युजेरसमासे" ( पा. सू. ७.१.७१ ) से नुम्, सुलोप, संयोगान्तलोप, कुत्व —युङ् । ] उपसर्गयुक्त 'युज्' से तो "सत्सूद्विषद्रुह" ( ३.२.६१ ) आदि सूत्र से क्विप् प्रत्यय ही होता है—अश्वयुक्, अश्वयुजौ, अश्वयुजः । [ समास के कारण नुम् नहीं होता है । ] क्रुङ्, क्रुञ्चौ, क्रुञ्चः । इसमें [ 'अनिदितां हलः" सूत्र से 'न्' का लोप क्यों नहीं होता है ? निपातन के साहचर्य से न लोप नहीं होता है ॥ ५९ ॥

## ८२९. त्यदादिषु दृशोऽनालोचने कञ्च ॥ ६० ॥ ( ४२९ )

**त्यदादिषूपपदेषु दृशेर्धातोरनालोचनेऽर्थे वर्तमानात्कञ् प्रत्ययो भवति, चकारात्क्विन् च। त्यादृक्, त्यादृशः। तादृक्, तादृशः। यादृक्, यादृशः। कञो ञकारो विशेषणार्थः–ठक्-ठञ्-कञिति ( ४.१.१५ )।**

**अनालोचन इति किम् ? तं पश्यति तद्दर्शः। तादृगादयो हि रूढिशब्दप्रकाराः, नैवात्र दर्शनक्रिया विद्यते।**

### न्यासः

**त्यदादिषु दृशोऽनालोचने कञ्च ॥** अनालोचनमिह चक्षुर्ज्ञानमात्रमभिप्रेतम्। यदि तत्र दृशिर्न वर्त्तत एवं प्रत्ययो भवति, नान्यथा। **त्यादृक्, त्यादृश इति।** 'दृक्दृशवतुषु' इत्यनुवर्त्तमाने 'आ सर्वनाम्नः' इत्यात्वम्। **कञो ञकारः 'टिड्ढाणञ्' इति विशेषणार्थ इति।** यदि कञो ञकारो न कर्तव्यस्तदोदात्तार्थो नकारः कर्तव्यः। एवञ्च कञ्कन्नित्येवं कर्तव्यम्। ततश्चैवमुच्यमाने 'यावादिभ्यः कन्' यावकेत्यत्रापि ङीप् प्रसज्येत, अतस्तद्विशेषणार्थो ञकारः कर्तव्य इति। ननु च दृशेर्दर्शनक्रियत्वात् तादृक् तादृश इत्यादिषु दर्शनक्रियाऽस्त्येव, तथा ह्येषां व्युत्पत्तौ तं पश्यत्येवंप्रकारं वाक्यमुपदिश्याचार्याः प्रत्ययं कुर्वन्ति। वाक्यसमानार्था वृत्तिर्भवति, सा च दर्शनक्रिया ज्ञानार्थिका। तत् कथमत्र दृशिरनालोचने वर्त्तत इत्याह—**तादृगादयो हि रूढिशब्दप्रकारा इत्यादि।** रूढिशब्देषु नावयवार्थेन भवितव्यम्, किं तर्हि ? समुदायार्थेन। अत एवात्रावयवार्थो नोपादीयते। व्युत्पत्त्यर्थस्तु

### पदमञ्जरी

**त्यदादिषु दृशोऽनालोचने कञ्च।** 'पश्यार्थैश्च' इत्यत्र वक्ष्यति -आलोचनं=चक्षुस्साधनं विज्ञानमिति, इह तु ज्ञानमात्रप्रतिषेधं मन्यते। **यादृक्, तादृगिति।** 'दृग्दृशवतुषु' इति वर्त्तमाने 'आ सर्वनाम्नः' इत्यात्वम्। **ञकारो विशेषणार्थ इति।** आद्युदात्तत्वस्य नकारेणापि सिद्धत्वात् ञकारोपधस्य प्रयोजनं विशेषणमेवेत्यर्थः. न तु स्वरो न प्रयोजनमित्युच्यते। तं पश्यति तद्दर्श इति चक्षुर्विज्ञानेऽणेव भवति। कथं पुनः प्रयुज्यमानस्यैव दृशेरनालोचनार्थत्वमित्याह—**तादृशादयो**[1] **रूढिशब्दा इति।** ततः किमित्याह—**नैवात्रेति।** रूढिशब्दा ह्यसताप्यवयवार्थेन व्युत्पाद्यन्ते, यथा—तैलपायिकादयः। एतदर्थमेवानालोचन इत्युक्तम्। दृश्यर्थाभावेऽयं विधिः, सति तु दृश्यर्थेऽणेव भवतीति। **भाष्ये** तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता—तमिवेमं पश्यन्ति जनाः सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यतीति। तत्र कर्मव्यापारमात्रे वा दृशेर्वृत्तिः, कृत्स्नधात्वर्थाध्यारोपो वा सौकर्यातिशयप्रतिपादनायेति द्रष्टव्यम्।

### भावबोधिनी

त्यद् आदि उपपद रहते अनालोचन=चक्षुर्ज्ञानभिन्न अर्थ में विद्यमान 'दृश्' धातु से 'कञ्' प्रत्यय होता है और 'च' के बल से 'क्विन्' भी होता है। उदा० त्यादृक्, त्यादृशः। [ 'त्यद्' उपपद दृश् से क्विन्, सर्वापहारी लोप, "आ सर्वनाम्नः" ( पा. सू. ६.३.९१ ) से अन्त्य 'द' का 'आ' सवर्णदीर्घ—त्यादृश्, कुत्व करने पर त्यादृक्। कञ्=अ होने पर त्यादृश्+अ=त्यादृशः। ] तादृक्, तादृशः। [ 'तद्' उपपद 'दृश्' से क्विन् होने पर पूर्ववत्, 'द्' का आ, दीर्घ करने पर कुत्व—तादृक्। कञ्=अ करने पर तादृशः। उस के जैसा। ] यादृक्, यादृशः [ यत् उपपद दृश् है। प्रक्रिया पूर्ववत् है। कञ् का 'ञ्' "टिड्ढाणञ्" ( ४.१.१५ ) में ठक्, ठञ् और कञ् को विशेषित करने के लिये है अर्थात् कञ्प्रत्ययान्त से ही ङीप् करने के लिये है। [ यदि केवल क' रहता तो 'याविका' आदि कन् प्रत्यय स्थल में भी ङीप् की प्रसक्ति होने लगती है। ]

अनालोचन अर्थ में—इसका क्या फल है ? तं पश्यति -इस अर्थ में—तद्दर्शः। [ 'तम्' उपपद 'दृश्' से ये प्रत्यय न होकर 'अण्' होता है। ] तादृक् आदि शब्द रूढ़ि शब्दों के भेद हैं। अतः इनमें [ अवयवार्थ की प्रतीति न होने से ] दर्शन क्रिया नहीं रहती है।

१. तादृगादयो' इति काशिकापाठः।

**❀ समानान्ययोश्चेति वक्तव्यम् ❀ (म० भा० ३.२.६० वा० १)। सदृक्, सदृशः। अन्यादृक्, अन्यादृशः।**
**❀ दृशेः क्सश्च वक्तव्यः ❀ ( वा० २ )। यादृक्षः, तादृक्षः, अन्यादृक्षः, कीदृक्षः॥**

**८३०. सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ ६१ ॥ ( २९७५ )**

**'सुपि' इत्यनुवर्तते। कर्मग्रहणं तु 'स्पृशोऽनुदके क्विन्' ( ३.२.५८ ) इत्यतः प्रभृति न व्याप्रियते। सदादिभ्यो धातुभ्यः सुबन्ते उपपदे उपसर्गेऽपि, अनुपसर्गेऽपि क्विप्प्रत्ययो भवति। उपसर्गग्रहणं ज्ञापनार्थम्—**

**न्यासः**

विद्यमानोऽप्यवयवार्थं नोपादत्ते, यथा—व्याजिघ्रतीति व्याघ्र इत्यादौ। तस्मादिह यद्यपि व्युत्पत्त्यर्थं वाक्यस्य दर्शनक्रियोपादीयते, तथाप्यसौ वृत्तौ नास्त्येव। तथा हि- तादृक् तादृश इत्यादिभ्यः शब्देभ्यः सदृशवस्तुविषये प्रत्यय उपजायते, न तु दर्शनक्रियाविषय इति युक्तैव दृशेरनालोचने वृत्तिः।

**समानान्ययोश्चेति वक्तव्यमिति।** समानान्ययोश्च शब्दयोरुपपदयोर्दृशेः क्विन्कञौ प्रत्ययौ भवत इत्येतदर्थं रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम् - पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन समानान्ययोरुपपदयोर्दृशेः क्विन्कञौ प्रत्ययौ भविष्यतः। **सदृश इति।** 'समानस्य' इत्यनुवर्तमाने 'दृग्दृशवतुषु' इति सभावः॥ ६०॥

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्। कर्मग्रहणं तु 'स्पृशोऽनुदके क्विन्' इत्यतः प्रभृति न व्याप्रियत इति।** ननु सकर्मका अपि धातवः सन्ति, तत् कथं न व्याप्रियत इति? एवं मन्यते—'स्पृशोऽनुदके क्विन्' इत्यादिषु यत् 'कर्त्तरि' इत्यनुवर्तते तत् कर्तृप्रचयार्थं विज्ञायते, तेन सुपीति व्याप्रियते, न कर्मणीति। एवं हि कर्तृप्रचयो लभ्यते, नान्यथा। अथ उपसर्गग्रहणम् किमर्थम्, यावतोपसर्गाः सुबन्ता एव, तत्र सुब्ग्रहणेनैवोपसर्गग्रहणं सिद्धमित्याह—**उपसर्गग्रहणं ज्ञापनार्थमिति। अन्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवतीति।**

**पदमञ्जरी**

**समानान्ययोश्चेति।** 'समानस्य दृग्दृशवतुषु' सभावविधानात्सिद्धम्।

**क्सश्चेति।** त्यदादिषु समानान्ययोश्च। **तादृक्षः, सदृक्षः, अन्यादृक्ष इति।** 'दृक्षे चेति वक्तव्यम्' ( वा० ८९, ९१ ) इति सभाव आत्वं च॥ ६०॥

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्॥ अतः प्रभृतीति। भाष्यकारप्रयोगात्**

**भावबोधिनी**

❀ 'समान' और 'अन्य' उपपद रहते भी 'दृश्' से क्विन् और कञ् प्रत्यय होते है। ❀ उदा० सदृक्, सदृशः। [ 'समान' उपपद दृश् से क्विन् प्रत्यय, सर्वापहारी लोप 'समानस्य दृक्-दृशवतुषु' वचन से 'समान' का 'स' होता है—सदृश्, कुत्व करने पर -सदृक्। कञ् = अ करने पर—सदृशः। ] अन्यादृक्, अन्यादृशः। [ 'अन्य' उपपद 'दृश्' से क्विन् तथा कञ् प्रत्यय होते है। आत्व होता है—अन्यादृक् अन्यादृशः। ]

"दृश् से क्स् भी कहना चाहिये। * उदा० यादृक्षः। [ जैसा ] तादृक्षः [ वैसा ] अन्यादृक्षः [ दूसरे जैसा ], कीदृक्षः [ कैसा। 'किम्' उपपद 'दृश्' से 'क्स' - स् प्रत्यय, उपपद-समास, विभक्तिलोप—किम् दृश् + स, षत्व कत्व, क्षत्व करने के बाद किम् + दृक्ष यहाँ 'दृक्षे चेति वक्तव्यम्' इस वार्तिक के अनुसार 'इदंकिमोरीश्की'' ( पा. सू. ६.३.९० ) से 'किम्' का 'की' आदेश होता है—कीदृक्षः। अन्य शब्दों में भी शेष प्रक्रिया क्विन् और कञ् के समान ही समझनी चाहिये। ]॥ ६०।

'सुपि' इसकी अनुवृत्ति होती है। "स्पृशोऽनुदके क्विन्" ३।२।५८ इससे आगे 'कर्मग्रहण का व्यापार नहीं है। सुबन्त उपपद रहते 'सत्' आदि धातुओं से, उपसर्ग रहने पर और न रहने पर भी क्विप् प्रत्यय होता है। [ यद्यपि उपसर्ग भी सुबन्त होते हैं अतः उपसर्गग्रहण किस लिये हैं ? ] उपसर्ग का ग्रहण ज्ञापन के लिये है—अन्यत्र सुबन्त के ग्रहण में उपसर्ग

**अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति, 'वदः सुपि क्यप् च' ( ३.१.१०६ ) इति। 'सू' इति द्विषा ( धा० पा० १०१४ ) साहचर्यात् सूतेः (धा० पा० १०३२ ) आदादिकस्य ग्रहणम्, न सुवतेः ( धा० पा० १४०९ ) तौदादिकस्य। 'युजिर् योगे' ( धा० पा० १४४५ ), 'युज समाधौ' (धा० पा० ११७८) द्वयोरपि ग्रहणम्। 'विद ज्ञाने' ( धा० पा० १०६५ ), 'विद सत्तायाम्' ( धा० पा० ११७२ ), 'विद विचारणे ( धा० पा० १४५१ ) त्रयाणामपि ग्रहणम्, न लाभार्थस्य विदेः ( धा० पा० १४३३ ), अकारस्य विवक्षितत्वात्।**

**सत्—शुचिषत्। अन्तरिक्षसत् ( ऋ० ४.४०.५ )। उपसत् ( तै० स० ६.२.३.२ )। सूः-अण्डसूः। शतसूः। प्रसूः ( तै० सं० ४.७.३.२ )। द्विष—मित्रद्विट्। प्रद्विट्। द्रुह—मित्रध्रुक् ( मै० सं० ४.३.४ )।**

**न्यासः**

क्वान्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवतीत्याह—**वदः सुपि क्यप् चेति**। ननु च 'वदः सुपि क्यप् च' इत्यत्र 'गदमदचरयमश्चानुपसर्गे' इत्यतोऽनुपसर्गग्रहणमनुवर्तते। एवञ्चोपसर्गे प्रत्ययो न भविष्यति, तत् किं ज्ञापनार्थेनोपसर्गग्रहणेन ? विस्पष्टार्थमुपसर्गग्रहणमित्येके। तत्रानुपसर्गग्रहणं नानुवर्तयितव्यमिति वा ज्ञापनार्थमुपसर्गग्रहणम्। विकल्पप्रदर्शनार्थं कर्त्तव्यमित्यन्ये।

अपरे त्वाहुः—ज्ञापकप्रयोजनदिगियमिति **वृत्तिकारो** दर्शयति। इदं तु स्पष्टं ज्ञापकस्य प्रयोजनम्—'स्पृशोऽनुदके क्विन्' इत्यत्र सुपीत्यधिकारादसति ज्ञापक उपसर्गग्रहणे सुबन्तेऽप्युपसर्गे स्यात्—उपस्पृशति, संस्पृशतीति; अस्मात् ज्ञापकान्न भवति। **साहचर्यादित्यादि**। यदि 'सू' इत्ययं धातुरादादिकत्वं व्यभिचरति 'द्विष अप्रीतौ' इत्येष तु न व्यभिचरति, अतोऽनेन साहचर्यात् 'सू' इत्यादादिकस्य 'षूङ् प्राणिगर्भविमोचने' इत्यस्य ग्रहणम्, न 'षू प्रेरणे' इत्यस्य तौदादिकस्य। ननु च सदिना तौदादिकसाहचर्यादस्यापि ग्रहणं भवति ? नैतदस्ति; यथैव हि 'सू' इत्येष तौदादिकत्वं व्यभिचरति, तथा सदिरपि, तस्य भ्वादिषु पाठात्, तत् कथं तेन साहचर्यात् तौदादिकस्येह ग्रहणं स्यात् ! **न सुवतेरिति**। अनादादिकसूरूपस्य धातोरुपलक्षणमेतत्। 'षूञ् प्राणिप्रसवे' इत्येतस्यापि दैवादिकस्य ग्रहणं न युक्तम्; न्यायस्य च तुल्यत्वात्। **द्वयोरपि ग्रहणमिति**। विशेषानुपादनात्। **न लाभार्थस्येति**। विद्लृ लाभे' इत्येतस्य। **अकारस्य विवक्षितत्वादिति**। इह लाभार्थस्यानुपादाने हेतुः 'विद' इति सूत्रेऽकारान्तोच्चारणं विवक्षितमिति, तेन विदेरकारान्तस्य गणे पाठात् स एव गृह्यते, न लृकारान्तः।

**शुचिषदिति**। सद्लृ विशरणार्थः। **मित्रध्रुगिति**। 'द्रुह जिघांसायाम्' 'वा द्रुहमुह' इत्यादिना घत्वम्, 'झलां जशोऽन्ते' इति गकारः तस्य 'वावसाने' इति ककारः, 'एकाचो बशो भष्' इत्यादिना भष्भावः।

**पदमञ्जरी**

प्रभृतिशब्दयोगे पञ्चमी। **वदः सुपि क्यप् चेति**। प्रयोजनदिगियं दर्शिता। अत्र ह्यनुपसर्ग इति वर्त्तते, तस्मात् 'स्पृशोऽनुदके क्विन्' इत्यादौ प्रयोजनं द्रष्टव्यम्। **सुवतेरिति**। न्यायस्य तुल्यत्वाद्दैवादिकस्याप्यग्रहणम्।

**शुचिषदिति**। छान्दसोऽयं प्रयोगः—हंसः शुचिषदिति ( ऋ० ४.५८.५ )। 'पूर्वपदात्' इति षत्वम्।

**भावबोधिनी**

का ग्रहण नहीं होता है—"वदः सुपि क्यपि च ( पा. सू. ३.१.१०६ )। "द्विष्' अदादिगणीय के साहचर्य से 'सू' यह भी अदादिगणीय ही ली जाती है, न कि तुदादिगणीय 'सू'। 'युजिर्' योग अर्थ में है तथा 'युज' समाधि अर्थ में है'—इन दोनों का ग्रहण होता है। 'विद ज्ञान अर्थ में है', 'विद सत्ता अर्थ में है', 'विद विचार करना अर्थ में हैं'—इन तीनों का ग्रहण होता है, किन्तु 'लाभ' अर्थवाली 'विद्लृ लाभे' का नहीं, कारण यह है कि [ सूत्र में 'विद' का ] अकार विवक्षित है। उदाहरण—(१) सत्—शुचिषत्। [ शुचौ सीदति। ] अन्तरिक्षसत्। [ अन्तरिक्षे सीदति। ] उपसत् [ उपसीदति। यहाँ 'षद्लृ विशरण-गत्यवसादनेषु' धातु है। सुबन्त और उपसर्ग-पूर्वक 'सद्' से क्विप् होता है। सर्वापहारी लोप के बाद चर्त्व होता है। ] (२) सू—अण्डसूः। [ अण्डं सूते। ] शतसूः। [ शतं सूते। ] प्रसूः [ प्रसूते। क्विप् और लोप करने पर केवल धातु शेष बचता है। ] (३) द्विष्—मित्रद्विट् [ मित्रं द्वेष्टि। 'मित्रम्' उपपद 'द्विष्'

**प्रध्रुक्** । **दुह-गोधुक्** । **प्रधुक्** । **युज्—अश्वयुक्** । **प्रयुक्** । **विद-वेदवित्** । **प्रवित्** । **ब्रह्मवित्** । **भिद-काष्ठभित्** । **प्रभित्** । **छिद-रज्जुच्छिद्** । **प्रच्छिद्** । **जि-शत्रुजित्** । **प्रजित्** । **नी-सेनानीः** । **प्रणीः** । **ग्रामणीः** । **अग्रणीः** । **कथमत्र णत्वम् ? 'स एषां ग्रामणीः' ( ५.२.७८ ) इति निपातनात्** । **नयतेः 'पूर्वपदात् संज्ञायामगः' ( ८.४.३ ) इति णत्वम्** । **राज-राट्** । **विराट्** । **सम्राट्-'मो राजि समः क्वौ' ( ८.२.३५ ) इति मत्वम्** । **'अन्येभ्योऽपि दृश्यते' ( ३.२.१७८ ), 'क्विप् च' ( ३.२.७६ ) इति सामान्येन वक्ष्यति, तस्यैवायं प्रपञ्चः ॥**

**न्यासः**

**गोधुगिति** । 'दुह प्रपूरणे', 'दादेर्धातोर्घः' इति घत्वम् । **अश्वयुगिति** । 'चोः कुः' इति कुत्वं गकारः, तस्य पूर्ववत् ककारः । **शत्रुजिदिति** । 'ह्रस्वस्य पिति कृति तुक्' । **कथमत्र णत्वमिति** । 'पूर्वपदात् संज्ञायामगः' इति संज्ञायां विधीयमानेन णत्वेनासंज्ञायामिह न भवितव्यमिति भावः । **सम्राडिति** । 'राजृ दीप्तौ', 'व्रश्चभ्रस्ज' इत्यादिना षत्वम् । 'झलां जशोऽन्ते' इति जश्त्वं शकारस्य डकारः, तस्य 'वावसाने' इति चर्त्वं टकारः, 'मो राजि समः क्वौ' इति मकारः । क्विपः ककारो गुणवृद्धिनिषेधार्थः । पकारस्तुगर्थः । 'वेरपृक्तस्य' इति वकारलोपः । इकारः 'वेरपृक्तस्य' इति सामान्यग्रहणार्थः ॥ ६१ ॥

**पदमञ्जरी**

**शुचिसदिति** पाठे लौकिकः प्रयोगः । **कथमत्र णत्वमिति** । ग्रामणीविषयः प्रश्नः । **प्रणीरित्यत्र** तु 'उपसर्गादसमासेऽपि' इति णत्वमस्त्येव । **ज्ञापकादिति** । पूर्वपदस्थान्निमित्तादुत्तरस्य नयतिनकारस्यासञ्ज्ञायामपि णत्वं

**भावबोधिनी**

से क्विप्, सर्वापहारी लोप, मित्रद्विष्, जश्त्व, चर्त्व करने पर—मित्रद्विट् । ] प्रद्विट् [ प्रद्वेष्टि । सिद्धि पूर्ववत् ] (४) द्रुह—मित्रध्रुक् [ मित्रं द्रुह्यति । 'मित्रम्' उपपद 'द्रुह्' से क्विप् और उसका लोप करके उपपदसमास विभक्तिलोप—मित्रद्रुह्, "वा द्रुह-मुह" ( पा. सू. ८.२.३३ ) से 'ह्' का 'घ' 'झलां जशोऽन्ते" से 'घ्' का जश्त्व 'ग्', "वाऽवसाने" से 'ग्' का चर्त्व करके 'क्' "एकाचो बशो भष झषन्तस्य स्ध्वोः" सूत्र से भष्भाव द्वारा 'द' का 'ध'—मित्रध्रुक् । इसी प्रकार—] प्रध्रुक् । (५) दुह्—गोधुक् । [ गां दोग्धि—विग्रह में 'गाम्' उपपद 'दुह्' से क्विप्, सर्वापहारी लोप, "दादेर्धातोर्घः" ( पा. सू. ८।२।३२ ) से 'ह' का घ; जश्त्व से घ का ग, चर्त्व से ग का क्, भष्भाव द्वारा 'द' का 'ध'—गोधुक् इसी प्रकार से—] प्रधुक् । [ प्रकर्षेण दोग्धि यह विग्रह है । ] (६) युज्—अश्वयुक् । प्रयुक् । [ अश्वं युनक्ति, प्रकर्षेण युनक्ति यह विग्रह है । ] (७) विद—वेदवित् । [ वेदं वेत्ति—आदि विग्रह है । ] प्रवित्, ब्रह्मवित् । [ इनमें भी पूर्ववत् होता है । ] (८) भिद्—काष्ठभित् । [ काष्ठं भिनत्ति । ] प्रभित् । [ प्रकर्षेण भिनत्ति । ] (९) छिद्—रज्जुच्छिद् । [ रज्जुं छिनत्ति ] प्रच्छित् [ प्रकर्षेण छिनत्ति । ] (१०) जि—शत्रुजित् । शत्रुं जयति—इस विग्रह में क्विप् उसका लोप, उपपदसमास, विभक्तिलोप 'शत्रुजि' यहाँ "ह्रस्वस्य पिति कृति तुक्" (पा. सू. ६।१।७१) से तुक्=त् करने पर—शत्रुजित् । इसी प्रकार—] प्रजित् । (११) नी—सेनानीः । [ सेनां नयति—यह विग्रह है । ] प्रणीः । [ प्रकर्षेण नयति—यह विग्रह है, प्रत्यय और समास आदि के बाद "उपसर्गादसमासेऽपि" ( पा. सू. ८।४।१४ ) से णत्व ] ग्रामणीः । [ ग्रामं नयति । ] अग्रणीः । [ अग्रं नयति—यह विग्रह है । प्रक्रिया पूर्ववत् है । ] यहाँ णत्व कैसे होता है ? [ क्योंकि "पूर्वपदात् संज्ञायामगः" ( पा. सू. ८।४।३ ) यह सूत्र संज्ञाविषय में ही णत्व करता है । ] "स एषां ग्रामणीः" ( पा. सू. ५।२।७८ ) ऐसा पाणिनि का प्रयोग होने से निपातनात् "पूर्वपदात् संज्ञायामगः" सूत्र से 'नी' का णत्व होता है । (१२)—राज्—राट् [ यहाँ उपसर्ग नहीं है ] विराट् । [ विशेषेण राजते । ] सम्राट् । [ संराजते—यह विग्रह है । सम् पूर्वक 'राज्' से क्विप्, सर्वापहारी लोप, उपपद समास—सम् राज्, "व्रश्च भ्रस्जसृज०" ( पा. सू. ८।२।३६) से 'ज्' का 'ष्', जश्त्व करने पर 'ष' का 'ड्' चर्त्व करने पर 'ड्' का 'ट्' ] "मो राजि समः क्वौ" ( पा. सू. ८।३।३५ ) से 'सम्' के 'म्' का 'म्' ही रहता है, अनुस्वार नहीं होता है । "अन्येभ्योपि दृश्यन्ते" ( पा. सू. ३।२।७५ ) और "क्विप् च" ( पा. सू. ३।२।७६ ) यह सामान्य रूप से आगे कहा जायगा, उसी का प्रपञ्च=विस्तार [ प्रस्तुत सूत्र द्वारा निपातन ] है ॥ ६१ ॥

**८३१. भजो ण्विः ॥ ६२ ॥ ( २९७६ )**

**'उपसर्गे' 'सुपि' इति वर्तते। भजेर्धातोः सुबन्त उपपदे उपसर्गेऽपि, अनुपसर्गेऽपि ण्विप्रत्ययो भवति। अर्धं भजते अर्धभाक्। उपसर्गेऽपि—प्रभाक्॥**

**८३२. छन्दसि सहः ॥ ६३ ॥ ( ३४०९ )**

**'उपसर्गे' 'सुपि' इत्येव। छन्दसि विषये सहेर्धातोः सुबन्त उपपदे ण्विप्रत्ययो भवति। ( तुराषाट् ऋ० ३.४८.४ ) जलाषाट् 'सहेः साडः सः' ( ८.३.५६ ) इति षत्वम्, 'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इति दीर्घत्वम्॥**

**८३३. वहश्च ॥ ६४ ॥ ( ३४१० )**

**वहेर्धातोश्छन्दसि विषये सुबन्त उपपदे ण्विप्रत्ययो भवति। प्रष्ठवाट्। दित्यवाट्। योगविभाग उत्तरार्थः॥**

**न्यासः**

**भजो ण्विः**॥ अर्द्धभागिति। 'वेरपृक्तस्य' इति वकारलोपः। प्रत्ययलोपलक्षणेन 'अत उपधायाः' इति वृद्धिः, 'चोः कुः' इति कुत्वम्। णकारो वृद्ध्यर्थः। इकारः 'वेरपृक्तस्य' इति सामान्यग्रहणार्थः॥ ६२॥

छन्दसि सहः॥ **जलाषाडिति**। 'हो ढः' इति ढत्वम्, तस्य जश्त्वम्—डकारः, तस्य 'वावसाने' इति टकारः॥ ६३॥

**वहश्च**॥ **पृष्ठवाडिति**। पूर्ववद् वृद्धिः, ढत्वजश्त्वचर्त्वानि। योगविभाग उत्तरार्थः—उत्तरत्र वहेरनुवृत्तिर्यथा स्यात्, सहेर्मा भूत्। एकयोगे हि सति द्वयोरप्यनुवृत्तिः स्यात्॥ ६४॥

**पदमञ्जरी**

भवतीति सामान्येन ज्ञापकमित्यर्थः। तेनाग्रणीरित्यत्रापि भवति। कर्मण्यणि तु न भवति, नीरूपविषयत्वाज् ज्ञापनस्य। अन्ये तु 'अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्' इति वचनाज्ज्ञापनमपि तद्विषयम्, तत्रापि नीरूपविषयमिति स्थिताः॥ ६१॥ ६२॥

**छन्दसि सहः**॥ तुरासाहं पुरोधाय ( कुमार० २.१ ), पृतनाषाद् द्विषो योद्धुं पुरुहूतः, पृतनाषाड् इति

**भावबोधिनी**

'उपसर्ग' तथा 'सुपि' इनकी अनुवृत्ति होती है। सुबन्त उपपद रहते, उपसर्ग रहने पर और न रहने पर, भज धातु से 'ण्वि' प्रत्यय होता है। उदा० अर्धं भजते —इस विग्रह में--अर्धभाक्। [ ण्वि प्रत्यय, सर्वापहारी लोप, उपधा-वृद्धि, उपपदसमास आदि कार्य होता है। ] उपसर्ग रहने पर भी—प्रभाक्। [ प्रकर्षेण भजति —यह विग्रह है। ]।।६२॥

''उपसर्ग' और 'सुपि' इनकी अनुवृत्ति होती है। वेदविषय में, सुबन्त उपपद रहते 'सह्' धातु से 'ण्वि' प्रत्यय होता है। उदा० जलाषाट्। [ जलं सहते-यह विग्रह है। 'ण्वि' प्रत्यय, सर्वापहारी लोप, उपधावृद्धि, उपपदसमास—जलसाह् ] ''सहेः साडः सः'' से 'स' का 'ष' तथा ''अन्येषामपि दृश्यते'' सूत्र से दीर्घ होने पर जलाषाह्। [ ''हो ढः'' से 'ह्' का 'ढ्' तथा जश्त्व और चर्त्व करने पर रूप बनता है। ]॥ ६३॥

वेदविषय में सुबन्त उपपद रहते 'वह्' धातु से 'ण्वि' प्रत्यय होता है। उदा० दित्यवाट्। [ दित्यं वहति – यह विग्रह है। ण्वि प्रत्यय, सर्वापहारी लोप, उपधावृद्धि, उपपदसमास, विभक्तिलोप–दित्यवाह्। 'ह्' का ढत्व, जश्त्व, चर्त्व। ] उत्तरवर्ती सूत्र में अनुवृत्ति के लिए यह सूत्र अलग बनाया गया है॥ ६४॥

**८३४. कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥ ( ३४११ )**

**कव्य, पुरीष, पुरीष्य—इत्येतेषु उपपदेषु छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति। कव्यवाहनः पितॄणाम् (तै० सं० २.५.८.६)। (अग्नेः) (वा० सं० ११.४४) पुरीषवाहनः। पुरीष्यवाहनः (मै० सं २.७.४)॥**

**८३५. हव्येऽनन्तःपादम् ॥ ६६ ॥ ( ३४१२ )**

**हव्यशब्दे उपपदे छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति, अनन्तःपादं चेद्बहिर्वर्तते। अग्निश्च हव्यवाहनः ( ऋ० वे० ७.२०.१ )।**

**अनन्तःपादमिति किम् ? हव्यवाडग्निरजरः पिता नः ( ऋ० ५.४.२ )॥**

**८३६. जनसनखनक्रमगमो विट् ॥ ६७ ॥ ( ३४१३ )**

**'छन्दसि', 'उपसर्गे', 'सुपि' इत्यनुवर्तते। 'जन जनने' ( धा० पा० ११०६ ), 'जनी प्रादुर्भावे' ( धा० पा० ११५० )—द्वयोरपि ग्रहणम्। तथा 'षणु दाने' ( धा० पा० १४६५ ), 'वन षण संभक्तौ' ( धा० पा० ४६३,६४ )—द्वयोरपि ग्रहणम्। जनादिभ्यो धातुभ्यः सुबन्त उपपदे छन्दसि विषये विट् प्रत्ययो**

**न्यासः**

**कव्यपुरीषपुरीष्येषु ञ्युट्।।** पूर्वेण ण्वौ प्राप्ते ञ्युड् विधीयते। टकारो ङीबर्थः, ञकारः स्वरार्थो वृद्ध्यर्थश्च। युमात्रं प्रत्ययः, तस्य 'युवोरनाकौ' इत्यनादेशः॥ ६५॥

**हव्येऽनतःपादम्॥ अनन्तःपादमिति।** अन्तःशब्दो मध्यशब्देन समानार्थः। अन्तःपादमिति पादस्य मध्य इत्यर्थः। 'अव्ययं विभक्ति' इत्यादिना विभक्त्यर्थेऽव्ययीभावः—न अन्तःपादमनन्तःपादमिति। एतच्च वहेः प्रकृतत्वात् तस्यैव विशेषणं विज्ञायत इत्यत आह—**अनन्तःपादञ्चेद् बहिर्वर्त्तत इति।** छन्दसीत्यनुवृत्तेः पादशब्द ऋक्पादं बोधयति। ऋक्पादमध्ये बहिर्न वर्त्तत इत्यर्थः। प्रत्युदाहरणे पादमध्ये वहिर्वर्त्तत इति 'वहश्च' इति ण्विरेव भवति॥ ६६॥

**जनसनखनक्रमगमो विट्॥ द्वयोरपि ग्रहणमिति।** विशेषानुपादानात्। **तथेत्यादि।** यथानन्तरयोरुक्तयो-

**पदमञ्जरी**

भाषायां प्रयोगाश्चिन्त्याः॥ ६३॥ ६४–६६॥

**जनसनखनक्रमगमो विट्॥ विशेषणार्थश्चेति।** 'विवनोः' इत्युच्यमाने हि क्विबादीनामपि ग्रहणं स्यात्।

**भावबोधिनी**

काव्य, पुरीष तथा पुरीष्य ये उपपद रहते 'वह' धातु से ञ्युट् प्रत्यय वेदविषय में होता है। उदा० कव्यवाहनः पितॄणाम्। [ कव्यं वहति—इस अर्थ में 'कव्यम्' उपपद 'वह्' धातु से ञ्युट् यु = यु = अन प्रत्यय, उपधावृद्धि, उपपद समास आदि होता है। पितरों के लिए कव्य = पिण्डादि ले जाने वाला।' ] पुरीषवाहनः। [ पुरीषं वहति ] पुरीष्य-वाहनः [ पुरीष्यं वहति। ]॥ ६५॥

'हव्य' शब्द उपपद रहते वेदविषय में 'वह्' धातु से ञ्युट् प्रत्यय होता है, यदि हविः पाद के मध्य में न हो तो। उदा० अग्निश्च हव्यवाहनः। [ हव्यम् उपपद 'वह' से ञ्युट् = यु - अन ]।

'अनन्तः पाद' इसका क्या फल है ? हव्यवाडग्निरजरः पिता नः। [ यहाँ पाद के मध्य में 'हविः' शब्द है। अतः ञ्युट् न होकर "वहश्च" ( ३।२।६४ ) से 'ण्वि' ही होता है और उसका सर्वापहारी लोप करके ह का ढ, ढ का ड् और ट् करने पर हव्यवाट्' बनता है। ]॥ ६६॥

'छन्दसि', 'उपसर्गे' और 'सुपि' इनकी अनुवृत्ति होती है। जन धातु जनन अर्थ में है', और 'जनी' यह प्रादुर्भाव अर्थ में है' इन दोनों का ग्रहण होता है। 'षणु यह दान अर्थं में है' और 'वन षण—ये संभक्ति अर्थ में हैं।' दोनों का ग्रहण होता है। सुबन्त उपपद रहते 'जन्' आदि धातुओं से वेदविषय में विट् प्रत्यय होता है।

**भवति। टकारः सामान्यग्रहणाविघातार्थः—'वेरपृक्तस्य' ( ६.१.६७ ) इति; विशेषणार्थश्च—'विड्वनोरनुनासिकस्यात्' ( ६.४.४१ ) इति। जन—अब्जाः। गोजाः ( ऋ० ४.४०.५ )। सन–गोषा इन्द्रो नृषा असि ( ऋ० ९.२.१० )। खन—विसखाः ( ऋ० ६.१.२ )। कूपखाः। क्रम—दधिक्राः ( ऋ० ४.३८.१० )। गम–अग्रेगा उन्नेतॄणाम् ( तै० सं० १.३.६ १ )॥**

## ८३७. अदोऽनन्ने ॥ ६८ ॥ ( २९७७ )

**न्यासः**

र्धात्वोरुभयोर्ग्रहणमिति, तथानयोरपि सम्भक्तार्थयोरित्यर्थः। **टकारः सामान्यग्रहणाविघातार्थं इति**। असति टकारे 'वेरपृक्तस्य' इत्यत्रैकानुबन्धपरिभाषयाऽस्यैव ग्रहणं स्यात्, न विजादीनाम्। टकारे त्वस्यापि द्व्यनुबन्धकत्वात् सर्वेषां ग्रहणमुपपद्यते। **विशेषणार्थश्चेति**। 'विड्वनोरनुनासिकस्यात्' इत्यत्र विशेषणार्थष्टकारः; 'विवनोः' इत्युच्यमाने हि क्विबादीनामपि ग्रहणं स्यात्। वकारः 'वेरपृक्तस्य' इति विशेषणार्थः। 'अपृक्तस्य' इत्येतस्मिन्नुच्यमाने तकारादीनामपि ग्रहणं स्यात्; तथा चाकारोदित्येवमादौ लोपः स्यात्। **अब्जा इति**। अप्सु जायत इति अब्जाः। एवं **गोजाः**। गां सनोतीति **गोषाः**। 'सनोतेरनः' इति षत्वम्। नरं सनोतीति **नृषाः**। विलं खनतीति **विलखाः**। दधि क्रामतीति **दधिक्राः**। अग्रे गच्छतीयि **अग्रेगाः**। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। सर्वत्र 'वेरपृक्तस्य' इति लोपः, 'विड्वनोः' इत्यात्वम् ॥ ६७ ॥

**अदोऽनन्ने ॥ ६८ ॥**

**पदमञ्जरी**

अथात्र निरनुबन्धकत्वादस्यैव ग्रहणम्? 'वेरपृक्तस्य' इत्यत्राप्यस्यैव ग्रहणं स्यात्। अथात्र क्विबादीनामपि ग्रहणं स्यात्? 'विड्वनोरनुनासिकस्यात्' इत्यत्रापि स्यादिति समानं वच इति भावः। **गोषा इति**। 'सनोतेरनः' इति षत्वम्। **अग्रेगा इति**। पूर्ववदलुक् ॥ ६७ ॥

**अदोऽनन्ने ॥ ६८ ॥**

**भावबोधिनी**

'ट्' यह सामान्यग्रहण के अविघात के लिए है—"वेरपृक्तस्य" ( ६।१।६७ )। [ यदि 'ट्' नहीं रहता तो 'एक अनुबन्ध वाले का ग्रहण नहीं होता है' इस परिभाषा से इसी 'वि' का ग्रहण होता 'विच्' आदि का नहीं हो पाता। जब 'ट्' अनुबन्ध है तब यह भी दो अनुबन्धों वाला हो जाता है। अतः सामान्यतया दोनों गृहीत हो जाते हैं। ] और विशेषण के लिए भी है—"विड् वनोरनुनासिकस्यात्" ( पा० सू० ६।४।४१ )। [ यदि 'विवनोः' ऐसा कहा जाता तब तो क्विप् आदि का भी ग्रहण होने लगता। जब 'विट्' ऐसा रखा तब क्विप् आदि का ग्रहण नहीं होगा। ] उदा० अब्जाः। [ अप्सु जायते – यह विग्रह है। 'अप्सु' उपपद 'जन्' से 'विट्' प्रत्यय, सर्वापहारी लोप, उपपद समास, विभक्तिलोप—अप् + जन्' यहाँ "विड्वनोरनुनासिकस्यात्" इस सूत्र से 'न्' का आत्व होता है। सवर्णदीर्घ, जश्त्व —अब्जाः। पानी में पैदा होने वाला। ] गोजाः। [ गोषु जायन्ते–इस विग्रह में पूर्ववत् बनता है। ] सन्—गोषा इन्द्रो नृषा असि। [ गां सनोति, नरं सनोति —ये विग्रह हैं। उपपद मानकर विट् प्रत्यय, सर्वापहारी लोप, 'न्' का आत्व उपपद समास, मूर्धन्यादेश—गोषा, नृषा ] खन्–विलखाः। कूपखाः। [ विलं खनति कूपं खनति—ये विग्रह हैं। विट् प्रत्यय, सर्वापहारी लोप, 'न्' का आत्व आदि करने पर रूप बनता है। ] क्रम्—दधिक्राः [ दधि क्रामति —यह विग्रह है। विट् प्रत्यय, अनुनासिक 'म्' का आत्व आदि पूर्ववत् करना चाहिए। ] गम्—अग्रेगाः उन्नेतॄणाम्। [ अग्रे गच्छति यह विग्रह है। 'अग्रे' उपपद गम्' धातु से विट् प्रत्यय, सर्वापहारी लोप, 'म्' का आत्व, सवर्णदीर्घ, उपपद समास, "तत्पुरुषे कृति बहुलम्" ( ६।३।१४ ) से सप्तमी का अलुक्—अग्रेगाः ] ॥ ६७ ॥

**'छन्दसि' इति निवृत्तम्। अदेर्धातोरनन्ने सुप्युपपदे विट् प्रत्ययो भवति। आममत्ति आमात्। सस्यात्।**

**अनन्न इति किम्? अन्नादः॥**

## ८३८. क्रव्ये च ॥ ६९ ॥ ( २९७८ )

**क्रव्यशब्दे उपपदे अदेर्धातोर्विट् प्रत्ययो भवति। क्रव्यमत्ति क्रव्यात्। पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम्। तेनाण् न भवति।**

**कथं तर्हि क्रव्यादः? कृत्तविकृत्तशब्दे उपपदेऽण्, तस्य च पृषोदरादिपाठात् क्रव्यभावः। कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद उच्यते, आममांसभक्षः क्रव्यादिति॥**

**न्यासः**

**क्रव्ये च॥ पूर्वेणैव सिद्ध इति।** क्रव्यशब्दस्यानर्थकत्वात्।

**कथं तर्हि क्रव्याद इति।** यदि वचनं वाऽसरूपविधिबाधनार्थमिति भावः। **कृत्तविकृत्तेत्यादिना** कृत्तविकृत्तशब्द उपपदेऽत्राण्, न तु क्रव्यशब्द इति दर्शयति। यदि तर्हि कृत्तविकृत्तशब्द उपपदेऽण्, कथं क्रव्यादशब्दः सिध्यति, कृत्तविकृत्ताद इति भवितव्यमित्याह—**तस्य चेत्यादि**। ननु च कृत्तविकृत्तशब्दे उपपदेऽणि कृते तत्र चोपपदस्य क्रव्यभाव इति रूपं भवति, क्रव्यशब्द उपपदेऽणि कृते तदेव, क्वात्र विशेषः; यतः क्रव्यशब्द उपपदेऽण् प्रतिषिध्यते? इत्यत आह—**कृत्तविकृत्त इत्यादि**। एतेनार्थभेदं दर्शयति—यो हि कृत्तविकृत्तशब्देन पक्वमांसभक्षः स एव क्रव्याद उच्यते, यस्त्वपक्वमांसभक्षः स क्रव्यादुच्यते॥ ६९॥

**पदमञ्जरी**

**अन्नाद इति।** भाषायामणेव भवति। छन्दसि त्वकारादनुपपदादित्यणि प्राप्ते पचाद्यजिष्यते तेनान्नाद इत्यन्न अद इत्यवग्रहो भवति॥ ६८॥

**क्रव्ये च॥ [1]वाऽसरूपबाधनार्थमिति।** तथा च वार्त्तिकम्—अदोऽनन्ने क्रव्यग्रहणं वाऽसरूपनिवृत्त्यर्थमिति ( काव्य० वा० २०३४ )। **कथं तर्हीति।** यदि वाऽसरूपविधिबाधनार्थमिति भावः। **कृत्तविकृत्तेति**। कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तमिति 'पूर्वकाल' इति समासः, तस्य पक्वशब्देन पुनः स एव समासः, ततो मांसशब्देन पुनर्विशेषणसमासः। **पृषोदरादित्वात्क्रव्यभाव इति।** यद्येवम्, क्रव्याद इत्यस्य रूपस्यावर्जनीयत्वादलं वाऽसरूपबाधनार्थेनानेन, वार्त्तिकविरोधश्चैवं वदत इत्याशङ्क्याह—**कृत्तविकृत्तेत्यादि**। अर्थभेदादुभयमपि नास्ति किलेत्ययमभिप्रायः॥ ६९॥

**भावबोधिनी**

'छन्दसि' इसकी निवृत्ति हो जाती है। अन्न से भिन्न सुबन्त उपपद रहते अद् धातु से विट् प्रत्यय होता है। उदा० आमम् अत्ति—इसमें आमात्। सस्यम् अत्ति—इसमें सस्यात्। [ अन्नम् तथा सस्यम् उपपद मानकर विट् प्रत्यय, सर्वापहारी लोप, उपपदसमास, विभक्तिलोप, सवर्णदीर्घ, चर्त्व करने पर उक्त रूप सिद्ध होते हैं। ]

अन्न से भिन्न उपपद रहने पर- इसका क्या फल है? अन्नादः। [ अन्नम् इस अर्थ में प्रस्तुत सूत्र से विट् न होने पर सामान्य अण् प्रत्यय होने पर रूप बनता है। ]॥ ६८॥

'क्रव्य' शब्द उपपद रहते 'अद्' धातु से विट् प्रत्यय होता है। उदा० क्रव्यम् अत्ति—इस विग्रह में क्रव्यात्। पूर्व सूत्र से ही सिद्ध रहने पर यह पृथक् वचन असरूप प्रत्यय का बाध करने के लिए है। अतः [ इसके उपपद रहते ] अण् नहीं होता है।

तो 'क्रव्यादः' यह कैसे बनता है? 'कृत्त' 'विकृत्त' शब्द को उपपद मानकर अण् होता है। इस शब्द का क्रव्य आदेश "पृषोदरादीनि यथोपदिष्टम्" (पा० सू० ६।३।१०९) से होता है। [ अतः यह क्रव्य उपपद नहीं है—ऐसा समझना चाहिए। ] कृत्तविकृत्त पके मांस को खाने वाला—'क्रव्याद' कहा जाता है। [ इस प्रकार पका मांसभक्षी 'क्रव्याद' और कच्चा मांसभक्षी 'क्रव्यात्' ऐसा प्रयोग समझना चाहिए। ]॥ ६९॥

---

१. 'असरूपबाधनार्थम्' इति काशिका।

**८३९. दुहः कब् घश्च ॥ ७० ॥ २९७९ ॥**

दुहेर्धातोः सुप्युपपदे कप्प्रत्ययो भवति, घकारश्चान्तादेशः। कामदुघा धेनुः। अर्घदुघा। धर्मदुघा॥

**८४०. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७१ ॥ (३४१४)**

श्वेतवह्, उक्थशस्, पुरोडाश–इत्येतेभ्यो ण्विन् प्रत्ययो भवति मन्त्रे विषये। धातूपपदसमुदाया निपात्यन्ते अलाक्षणिककार्यसिद्ध्यर्थम्। प्रत्ययस्तु विधीयत एव। श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातोः कर्मणि कारके ण्विन्प्रत्ययो भवति। श्वेता एनं वहन्ति, श्वेतवा इन्द्रः। उक्थशब्दे कर्मणि करणे वा उपपदे शंसतेर्धातोर्ण्विन्प्रत्ययो भवति, नलोपश्च निपात्यते। उक्थानि शंसति, उक्थैर्वा शंसति उक्थशा यजमानः (ऋ० ४.२.१६)। 'दाशृ दाने' (धा० पा० ८८२) इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः। पुरो दाशन्त एनं पुरोडाः (ऋ० ३.२८.२)।

**न्यासः**

दुहः कब् घश्च ॥ कामदुघा। घर्मदुघा। कामं दोग्धीति कामदुघा। धर्मं दोग्धीति धर्मदुघा ॥ ७० ॥

**मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ एतेभ्य इति।** श्वेतवह इत्येवमादिभ्यः प्रकृत्युपपदसमुदायेभ्यः। **धातूपपदसमुदाया निपात्यन्त इति।** श्वेतवा इत्येवमादयः। किं पुनः कारणं धातूपपदसमुदाया निपात्यन्ते, न पुनः पृथगेवोपपदानि धातवश्च निर्दिश्यन्ते? इत्याह—**अलाक्षणिककार्यसिद्ध्यर्थमिति।** श्वेतवा इत्येवमादिषु 'अवयाः श्वेतवाः पुरोडाश्च' इति रुत्वं निपात्यते। **उक्थसा इति।** 'ससजुषो रुः' इति रुत्वमस्त्येव। **शंसतेरिति।** 'शन्स स्तुतौ' इत्यस्य। ण्विनो नित्करणमाद्युदात्तार्थम्। णित्करणं वृद्ध्यर्थम्। इकारः 'वेरपृक्तस्य' इति विशेषणार्थः।

**पदमञ्जरी**

दुहः कब्घश्च ॥ **कामदुघेति।** काम्यन्ते इति कामाः, तान् दुग्धे कामदुघा। अर्घः = मधुपर्कः ॥ ७० ॥

**मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्**[1] ॥ **एतेभ्य इति।** श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्य इत्यर्थः। **धातूपपदसमुदाया इति।** किमर्थमित्याह—**अलाक्षणिकेति।** 'श्वेतवाः' इत्यादिषु 'अवयाः श्वेतवाः पुरोडाश्च' इति निपातनाद्रुत्वम्। **उक्थशा इति।** नलोपे 'अत उपधायाः' इति वृद्धिः, रुत्वम्।

**भावबोधिनी**

सुबन्त उपपद रहते 'दुह्' धातु से कप् प्रत्यय होता है और 'ह' का 'घ' आदेश होता है। उदा० कामदुघा धेनुः। [ कामं=मनोरथं दोग्धि—इस विग्रह में 'कामम्' 'दुह्' धातु से कप्=अ; 'ह्' का 'घ' आदेश और टाप् = आ करने पर रूप बनता है। इसी प्रकार अर्घं दोग्धि, धर्मं दोग्धि—इन विग्रहों में भी समझना चाहिए। ] ७० ॥

श्वेतवह्, उक्थशस्, पुरोडाश—इन शब्दों से ण्विन् प्रत्यय होता है मन्त्रविषय रहने पर। अलाक्षणिक कार्य की सिद्धि के लिये धातु तथा उपपद के समुदाय निपातित किये जाते हैं। प्रत्यय का विधान तो किया ही जाता है। कर्तृवाची श्वेत शब्द उपपद रहते 'वह्' धातु से कर्मकारक में ण्विन् प्रत्यय होता है। उदा० श्वेता एनं वहन्ति—इस विग्रह में—'श्वेतवाः इन्द्रः' यह बनता है। [ श्वेतवह्, यहाँ 'श्वेतवहादीनां डस् पदस्येति वक्तव्यम्' इस वार्तिक से ण्विन् का अपवाद 'डस्' प्रत्यय, डित् होने से टि=अस् का लोप—श्वेत व् अस् "अत्वसन्तस्य चाधातोः" पा० सू० ६।४।१४ से दीर्घ होने पर 'श्वेतवास्' स् का रुत्व और विसर्ग—श्वेतवाः। ] कर्म अथवा करण में उक्थशब्द उपपद 'शंस्' धातु से ण्विन् प्रत्यय और 'न' का लोप निपातित किया जाता है। उक्थानि उक्थैः वा शंसति—इस विग्रह में उक्थ+शस् + डस्=अस् टिलोप, उपधादीर्घ—उक्थशाः। ] 'दाशृ यह दान अर्थ में है' इसके पूर्व में 'पुरः' शब्द है, 'द' का 'ड' होता है और कर्म अर्थ में डस् प्रत्यय होता है—पुरस् डाश्+अस्, टि - आश् का लोप, पुरस्+डस्, उपधादीर्घ, पुरस् के स् का रुत्व तथा उत्व करने पर 'पुरोडाः' रूप बनता है। ] पुरो दशन्ति एनम्—इस विग्रह में—पुरोडाः बनता है। ※ श्वेतवह्

१. मुद्रितपदमञ्जर्यां तु 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' इति सूत्रं प्रतीकरूपेणात्रोपात्तम्, तत्तु अनवधानमूलकमेवेति बोध्यम्।

**॥ श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ॥** ( म० भा० ३.२.७१ वा० )। श्वेतवोभ्याम्। श्वेतवोभिः। पदस्येति किम्? श्वेतवाहौ। श्वेतवाहः ॥

**८४१. अवे यजः ॥ ७२ ॥ ( ३४१९ )**

**अवे उपपदे यजेर्धातोर्ण्विन् प्रत्ययो भवति, मन्त्रे विषये। त्वं यज्ञे वरुणस्यावया असि ( काठ० सं० ३५.६५ )। योगविभाग उत्तरार्थः ॥**

**न्यासः**

**श्वेतवाहादीनामित्यादि।** यदि तर्हीदमुच्यते, नार्थः 'अवयाः श्वेतवाः पुरोडाश्च' इत्यनेन वचनेन, रुत्वार्थेन तस्य दीर्घत्वात्? ननु च 'अत्वसन्तस्य चाधातोः' इति दीर्घत्वं सिद्धमेव? यत्र तर्हि तेन न सिध्यति तदर्थं यथा स्यात्। क्व पुनस्तेन न सिध्यति? सम्बुद्धौ। यदि तर्हि तदुच्यते तदा डस् न वक्तव्यः, तेनैव निपातनेन श्वेतवाहादीनामसन्तता निपातयिष्यते? नैतदस्ति; सम्बुद्धौ दीर्घत्वं न स्यादित्युक्तम्। अथासन्तता निपातयिष्यत इति वक्तव्यम्, तथा च सति श्वेतवोभ्यामित्यत्रोत्वं स्यात्। तस्मात् डस् वक्तव्यः, निपातनमपि कर्त्तव्यम् ॥ ७१ ॥

**अवे यजः ॥ योगविभाग उत्तरार्थ इति।** उत्तरसूत्रे यजेरेवानुवृत्तिर्यथा स्यात् ॥ ७२ ॥

**पदमञ्जरी**

**डस्पदस्येति।** प्रत्येकमभिसम्बद्ध्यते, भाविपदत्वाश्रयेण चेदमुच्यते, यत्र डसन्तस्य पदत्वं भविष्यति तत्र ण्विनोऽपवादो डस्प्रत्ययो वक्तव्य इत्यर्थः। यद्येवम्, अनेन डसि कृते सौ 'अत्वसन्तस्य' इति दीर्घे रुत्वे च श्वेतवा इत्यादि सिद्धम्, नार्थः 'अवयाः श्वेतवाः' इति निपातनेन? एवं तर्हि सम्बुद्ध्यर्थं निपातनम्—हे श्वेतवा इन्द्रेति, 'अत्वसन्तस्य' इत्यत्र हि 'असम्बुद्धौ' इति वर्तते, डसपि वक्तव्यः। उत्वार्थम्—श्वेतवोभ्याम्, उक्थशोभ्यामिति। एवं चोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्तव्यं यदि मन्त्रे दर्शनमस्ति ॥ ७१ ॥

**अवे यजः ॥ अवया इति।** निपातनाद्रुत्वम्। **योगविभाग उत्तरार्थ इति।** 'पुरोडाशवहयजो ण्विन्' इत्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात्, यजेश्चावपूर्वस्यैवानुवृत्तिः स्यात्, केवलस्यैव चेष्यते, तदर्थो योगविभाग इत्यर्थः ॥ ७२ ॥

**भावबोधिनी**

आदि का पदत्व जहाँ होने वाला रहता है वहाँ ( ण्विन् का अपवाद ) डस् प्रत्यय कहना चाहिये। * [अतः प्रथमा-एकवचन में और तृतीया-द्विवचन आदि में ण्विन् न होकर डस् होता है। प्रथमा-एकवचन का उदा० दिया जा चुका है। अत्र तृतीया द्विवचन के उदा० प्रस्तुत हैं—] श्वेतवोभ्याम्, श्वेतश्वोभिः। [ 'श्वेतवह् भ्याम्' की विवक्षा में ही डस् प्रत्यय करने से टिलोप, स् का रुत्व, उत्व और गुण होता है। ]

जहाँ पद होने वाला है उससे 'डस्' होता है - इसका क्या लाभ है? श्वेतवाहौ, श्वेतवाहः। ] यहाँ पदत्व भावी नहीं है। अतः ण्विन्, उपधावृद्धि आदि कार्य होते हैं। ]

**विमर्श**—प्रस्तुत सूत्र तथा अग्रिम सूत्र के लक्ष्यों में जहाँ पदत्व भावी रहता है वहाँ ण्विन् का अपवाद डस् प्रत्यय होने से टिलोप आदि होता है। जहाँ पदत्व नहीं होता है वहाँ ण्विन् और उपधावृद्धि आदि होते है ॥ ७१ ॥

'अव' उपपद 'यज्' धातु से ण्विन् प्रत्यय होता है मन्त्रविषय में। उदा० त्वं यज्ञे वरुणस्यावया असि। [ अव उपपद 'यज्' से ण्विन् का अपवाद डस् = अस् प्रत्यय, टि = अज् का लोप—य् अस्, उपपदसमास—अवयस्। सु परे रहते "अत्वसन्तस्य चाधातोः" सूत्र से उपधा का दीर्घ—अवयास्, स् का रुत्व विसर्ग—अवयाः। ] यह अलग सूत्र उत्तरवर्त्ती में अनुवृत्ति के लिये है ॥ ७२ ॥

## ८४२. विजुपे छन्दसि ॥ ७३ ॥ ( ३४१७ )

**'उप' उपपदे यजेश्छन्दसि विषये विच्प्रत्ययो भवति। उपयड्भीरूर्ध्वं वहन्ति। उपयट्त्वम्। छन्दोग्रहणं ब्राह्मणार्थम्। विचश्चित्करणं सामान्यग्रहणाविघातार्थम्—'वेरपृक्तस्य' ( ६.१.६७ ) इति।**

**किमर्थमिदमुच्यते, यावता 'अन्येभ्योऽपि दृश्यते' ( ३.२.७५ ) इति यजेरपि विच् सिद्ध एव ? यजेर्नियमार्थमेतत्—उपयजेश्छन्दस्येव, न भाषायामिति ॥**

## ८४३. आतो मनिन्क्वनिब्वनिपश्च ॥ ७४ ॥ ( ३४१८ )

**'छन्दसि' इति वर्तते। सुपि', 'उपसर्गेऽपि' इति च। आकारान्तेभ्यो धातुभ्यः सुप्युपपदे छन्दसि**

**न्यासः**

**विजुपे छन्दसि ॥ उपयड्भीरिति।** व्रश्चादिना षत्वम्, पूर्ववज् जश्त्वम्—डकारः। **उपयट्त्वमिति।** त्वप्रत्यये परतः 'खरि च' इति चर्त्वं टकारः। ननु च 'मन्त्रे' इत्यनुवर्तिष्यते, मन्त्रश्च च्छन्द एव, तत् किमर्थं छन्दसिग्रहणं क्रियत इत्याह—**छन्दोग्रहणं ब्राह्मणार्थमिति।** असति च्छन्दोग्रहणे मन्त्रग्रहणानुवृत्तेरपि ब्राह्मणे न स्यात्, न हि मन्त्रग्रहणेन ब्राह्मणं गृह्यते; ग्रन्थान्तरत्वात्। मन्त्रव्याख्याने ग्रन्थविशेषे ब्राह्मणशब्दो वर्तते, न तु मन्त्रे; तस्माद् ब्राह्मणेऽपि यथा स्यादित्येवमर्थं छन्दसीत्युक्तम्। **विचश्चित्करणमित्यादि।** असति चित्करण एष एकानुबन्धः स्यात्। ततश्च 'वेरपृक्तस्य' इत्यत्रैकानुबन्धकपरिभाषयाऽस्यैव ग्रहणं स्यात्, न क्विबादीनाम्। चित्करणे तु सत्येकानुबन्धो न कश्चिदस्तीति सर्वे गृह्यन्ते ॥ ७३ ॥

**आतो मनिन्क्वनिब्वनिपश्च ॥** मनिनो नकार आद्युदात्तार्थः। क्वनब्वनिपोः पकारावनुदात्तार्थौ, इकार

**पदमञ्जरी**

**विजुपे छन्दसि ॥** अथ छन्दोग्रहणं किमर्थम्, यावता मन्त्र इत्यनुवृत्तेरेव भाषायां न भविष्यति, तत्राह—**छन्दोग्रहणं ब्राह्मणार्थमिति।** मन्त्रव्यतिरिक्तो वेदभागः = ब्राह्मणम्, यथोक्तम्—'तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः' ( जै० सू० १.३३.३४ ) इति।

**किमर्थं पुनरिदमिति।** उत्तरसूत्र एव विज्ग्रहणं छन्दोग्रहणं च क्रियतामिति प्रश्नः। **नियमार्थमिति।** ननु दृशिग्रहणादेव भाषायां न भविष्यति, सत्यम्; तस्यैव प्रपञ्चार्थमिदम् ॥ ७३ ॥

**आतो मनिन्क्वनिब्वनिपश्च ॥** अश्व इव तिष्ठति **अश्वत्थामा,** पृषोदरादित्वात्सकारस्य तकारः। **सुधीवा,**

**भावबोधिनी**

'उप' उपपद रहते 'यज्' धातु से विच् प्रत्यय वेदविषय में होता है। उदा० उपयड्भीरूर्ध्वं वहन्ति। [ 'उप' पूर्वक 'यज्' से विच् प्रत्यय, सर्वापहारी लोप—उपयज्। 'व्रश्चभ्रस्ज०' सूत्र से 'ज' का 'ष्' 'झलां जशोऽन्ते' से 'ष्' का 'ड' और "वाऽवसाने" से वैकल्पिक चर्त्व 'ड' का 'ट्' करने पर–उपयट्, उपयड् रूप बनते हैं। ] उपयट्त्वम्। [ यहाँ 'खरि च' से नित्य चर्त्व 'ट' होता है। 'छन्दः' का ग्रहण ब्राह्मणभाग के लिये है। मन्त्रभाग के लिये नहीं। 'विच्' के 'च्' की इत्संज्ञा करना सामान्यग्रहण के अविघात के लिये है "वेरपृक्तस्य।" [ यदि चित् नहीं किया जाता तो एक अनुबन्ध वाले 'वि' का ही ग्रहण 'वेरपृक्तस्य' में होता, क्विप् आदि दो अनुबन्धों वाले का नहीं। जब इसमें भी दो अनुबन्ध लगाये गये तब सभी का सामान्यतया ग्रहण होता है। ]

यह सूत्र किस लिये बनाया जा रहा है, क्योंकि 'अन्येभ्योऽपि दृश्यते" इस सूत्र के अनुसार 'यज्' से भी विच् प्रत्यय सिद्ध ही हो जाता है ? यज् का नियम करने के लिये यह सूत्र है—उपयज् से छन्द में ही विच् होता है, अतः भाषा में विच् नहीं होता है ॥ ७३ ॥

'छन्दसि' इसकी अनुवृत्ति होती है 'सुपि' तथा 'उपसर्गेऽपि' इनकी भी अनुवृत्ति होती है। सुबन्त उपपद रहते

**विषये मनिन्, क्वनिप्, वनिप्—इत्येते प्रत्यया भवन्ति। चकाराद्विच् भवति। सुदामा ( ऋ० ६.२०.७ )। अश्वत्थामा। क्वनिप्—सुधीवा। सुपीवा। वनिप्—भूरिदावा ( ऋ० ९.८७.४ )। घृतपावा ( अथर्व० १३. १०.२४ )। विच् खल्वपि—कीलालपाः ( ऋ० १०.९१ १४ )। शुभंयाः ( ऋ० ४.३.६ )। रामस्योपदाः॥**

**८४४. अन्येभ्योऽपि दृश्यन्ते ॥ ७५ ॥ ( २९८० )**

**'छन्दसि' इति निवृत्तम्। अन्येभ्योऽपि धातुभ्योऽनाकारान्तेभ्यो मनिन्, क्वनिप्, वनिप्—इत्येते प्रत्यया दृश्यन्ते, विच्च। सुशर्मा। क्वनिप्-प्रातरित्वा ( ऋ०.१.१२५.१ ) प्रातरित्वानौ ( काठ० सं० ३०.१ )। वनिप्-**

**न्यासः**

उच्चारणार्थः, क्वनिपः पकारः पित्कार्यार्थः, चकारो विचोऽनुकर्षणार्थः। शोभनं ददातीति **सुदामा**। 'सर्वनामस्थाने च' इत्यादिना दीर्घः। अश्व इव तिष्ठतीत्यश्वत्थामा। पृषोदरादित्वात् सकारस्य तकारः। शोभनं दधातीति **सुधीवा**। शोभनं पिबतीति **सुपीवा**। घुमादिनेत्त्वम्। भूरि ददातीति **भूरिदावा**। घृतं पिबतीति **घृतपावा**। कीलालं पिबतीति **कीलालपाः** ॥ ७४ ॥

**अन्येभ्योऽपि दृश्यन्ते ॥ सुशर्मेति**। 'शॄ हिंसायाम्'। शोभनं शृणातीति विग्रहः। **प्रातरित्वा इति**। इणः

**पदमञ्जरी**

**सुपीवेति**। घुमास्थादिसूत्रेण ईत्वम्। चकारो विचोऽनुकर्षणार्थः। यद्येवम्, उत्तरत्रानुवृत्तिर्न स्यात्? एवं तर्हि चकारोऽप्युत्तरत्रानुवर्तिष्यते ॥ ७४ ॥

**अन्येभ्योऽपि दृश्यते ॥ अपिशब्दः सर्वविधिव्यभिचारार्थ इति**। विधीयतेऽनेनेति विधिः = उपाधिः।

**भावबोधिनी**

आकारान्त धातुओं से वेदबिषय में मनिन्, क्वनिप् और वनिप्—ये प्रत्यय होते हैं। और 'च' के कारण 'विच्' यह भी होता है। उदा० सुदामा। [ शोभनं ददाति—इस विग्रह में 'सु' उपपद दा + मनिन् = मन्, उपपदसमास, प्रातिपदिकत्वात् सु परे रहते "सर्वनामस्थाने चासम्बुद्धौ" सूत्र से उपधा का दीर्घ, सुलोप, नलोप करने पर रूप बनता है। ] अश्वत्थामा। [ अश्व इव तिष्ठति—यह विग्रह है। मनिन् = मन् प्रत्यय, 'स्था' के स् का 'त्' आदेश "पृषोदरादीनि यथोपदिष्टम्" ( पा० सू० ६।३।१०९ ) के अनुसार—अश्वत्थामन्। विभक्तिकार्य करने पर रूप बनता है। ] क्वनिप्—सुधीवा [ शोभनं दधाति—इस विग्रह में क्वनिप् = वन् प्रत्यय उपपदसमास—सुधावन् "घुमास्था"—सूत्र से 'आ' का ई, प्रातिपदिकत्व-सम्बन्धी कार्य करने पर—'सुधीवा' रूप बनता है। ] सुपीवा। [ शोभनं पिबति—इस विग्रह में क्वनिप् = वन्, आ का ई, विभक्तिसम्बन्धी कार्य—सुपीवा। ] वनिप्—भूरिदावा। [ भूरि ददाति—इस अर्थ में क्वनिप् = वन् प्रत्यय, उपपदसमास तथा विभक्ति-सम्बन्धी कार्य करने पर—भूरिदावा। ] घृतपावा। [ घृतं पिबति—इस विग्रह में वनिप् = वन् प्रत्यय आदि पूर्वोक्त प्रक्रिया होती है। ] विच् भी होता है—कीलालपाः। [ कीलालं पिबति—इस विग्रह में विच् प्रत्यय, सर्वापहारी लोप, उपपद-समास, प्रातिपदिकत्व-सम्बन्धी कार्य, सु का विसर्ग कीलालपाः ] शुभंयाः। [ शुभं याति यह विग्रह है। ] रामस्योपदाः। [ उपददाति—इस विग्रह में 'उपदा' बना है। ] ॥ ७४ ॥

'छन्दसि' इसकी निवृत्ति हो जाती है। अन्य धातुयें जो आकारान्त नहीं हैं, उनसे भी मनिन्, क्वनिप्, वनिप् और विच्—ये प्रत्यय होते हैं। उदा० सुशर्मा [ शोभनं शृणाति—यह विग्रह है, मनिन् = मन् प्रत्यय करने पर सुशॄमन्। 'ॠ' का गुण, रपर—सुशर्मन्। 'शॄ' यह हिंसा अर्थ में है। ] क्वनिप्—प्रातरित्वा, प्रातरित्वानौ। [ प्रातः एति इस अर्थ में 'प्रातः' उपपद 'इण्' = इ' से क्वनिप् = वन् प्रत्यय, "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक् = त् आगम, उपपद समास—प्रातरित्वन्। प्रथमा-एकवचन में दीर्घ आदि करने पर—प्रातरित्वा, द्विवचन में—प्रातरित्वानौ। [ क्वनिप्

**विजावाग्रे ( ऋ० ३.१.२३ ) अग्रेगावा ( मै० सं० ४.१४.९ ) । विच् खल्वपि—रेडसि पर्णं नयेः ( वा० सं० ६.१८ ) । अपिशब्दः सर्वोपाधिव्यभिचारार्थः । निरुपपदादपि भवति—धीवा ( अथर्व० ३.५.६ ), पीवा ( मै० सं० २.५१ ) । दृशिग्रहणं प्रयोगानुसरणार्थम् ॥**

## ८४५. क्विप् च ॥ ७६ ॥ ( २९८३ )

**सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप प्रत्ययो भवति । उखायाः स्रंसते**

**न्यासः**

प्रातःशब्द उपपदे क्वनिप्, 'ह्रस्वस्य पिति कृति' इति तुक् । **विजावा इति** । 'जनी प्रादुर्भावे', विजायत इति वनिप्, 'विड्वनोरनुनासिकस्य' इत्यात्वम् । **अग्रेगावा इति** । 'गम्लृ सृप्लृ गतौ', पूर्ववदात्वम् । **रेडसीति** । 'रिष हिंसायाम्', पूर्ववज्जश्त्वं डकारः । **दृशिग्रहणं प्रयोगानुसारणार्थमिति** । तेन प्रयोगे गम्यमाने यत्र दृश्यन्ते मनिन्नादयस्तत्रैवैते साधवः, अतो नापूर्वतमः क्रियते । एतेन 'ते न सर्वतो विधेयाः' इत्युक्तं भवति । यद्यन्येभ्योऽपि दृश्यन्ते, पूर्वसूत्रमनर्थकम्, मनिन्नादयः सर्वधातुभ्यो दृश्यन्त इत्येवं वाच्यम् ? नैतदस्ति; अकारान्तेभ्यो धातुभ्यो नियोगतस्ते भवन्ति, अनाकारान्तेभ्यः क्वचिदेव । अपि तु पूर्वयोगश्छन्दसि, अयं तु भाषायामपि ॥ ७५ ॥

**क्विप् च ॥ निरुपदेभ्यश्चेति** । एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते । **उखास्रत्** ।

**पदमञ्जरी**

**सर्वोपाधिव्यभिचारार्थ** इति युक्तः पाठः । **दृशिग्रहणं प्रयोगानुसरणार्थमिति** । 'यथा प्रयोगे दृश्यन्ते तथैव भवन्ति' इति वचनव्यक्त्याश्रयेणेति भावः ॥ ७५ ॥

**क्विप् च ॥ निरुपपदेभ्यश्चेति** । एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते, न तु सुपीत्यस्य निवृत्तेः, उत्तरसूत्रे 'सुप्युपसर्गेऽपीति वर्त्तते' इति वक्ष्यमाणत्वात्, 'छन्दसि भाषायाञ्च' इति पूर्वसूत्र एव 'छन्दसि' इत्यस्य निवृत्तत्वात् । **उखास्रदिति** । 'स्रन्सु ध्वंसु भ्रन्सु अवस्रन्सने' ( धा० पा० ७५४–७५६ ) 'अनिदिताम्'

**भावबोधिनी**

कित् है अतः धातु का गुण नहीं होता है । ] वनिप् - विजावा । [ विजायते—इस विग्रह में वि + जन् + वन्, "विड्वनोरनुनासिस्यात्" ( पा. सू. ६.४.४१ ) से धातु के 'न्' का 'आ' दीर्घ—विजावन् + सु, दीर्घ, सुलोप, न का लोप—विजावा । ] अग्रेगावा । [ अग्रे गच्छति—इस विग्रह में अग्रे उपपद गम् + वनिप् = वन 'म्' का 'आ', उपपदसमास, विभक्ति का अलुक्—अग्रेगावन् । विभक्ति-कार्य करने पर रूप बनता है—अग्रेगावा । ] विच् भी होता है—रेडसि पर्णं नयेः । [ रिष् = विच्, सर्वापहारी लोप, उपधागुण, प्रातिपदिकसम्बन्धी कार्य 'ष्' का जश्त्व—रेड् । ]

सूत्रस्थ 'अपि' शब्द सभी प्रकार की उपाधियों के व्यभिचार के लिये है । [ अतः पूर्वसूत्रोक्त स्थितियों के रहने अथवा न रहने पर—हर दशा में ये प्रत्यय होते हैं । ] 'दृश्' का ग्रहण प्रयोगों का अनुसरण कराने के लिये है । [ अतः जैसा जैसा प्रयोग में देखा जाता है, वैसा वैसा कार्य करना चाहिये, इसको सूचित करने के लिये 'दृश्यन्ते' का ग्रहण है । ] ॥ ७५ ॥

सभी धातुयें, वे सोपपद हों अथवा निरुपपद हों, उनसे वेद में तथा भाषा में क्विप् प्रत्यय होता है । उदा० उखायाः स्रंसते —इस विग्रह में—उखास्रत् [ ओखली से गिरने वाला । यहाँ क्विप् प्रत्यय और उसका सर्वापहारी लोप करके उपपदसमास तथा विभक्ति का लोप करने पर—उखास्रंस् । "अनिदितां हल उपधायाः क्ङिति" ( पा. सू. ६.४.२४ ) से अनुनासिक का लोप, "वसुस्रंसुध्वंसनुडुहांदः" ( पा. सू. ८.२.७२ ) से 'स्' का 'द्', वैकल्पिक चर्त्व करने

**उखास्रत् । पर्णध्वत् । वाहाद् भ्रश्यति वाहाभ्रट्–'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इति दीर्घः ॥**

**८४६. स्थः क च ॥ ७७ ॥ ( २९८७ )**

**'सुपि' 'उपसर्गेऽपि' इति च वर्तते । 'स्था'—इत्येतस्माद्धातोः सुप्युपपदे कप्रत्ययो भवति, क्विप् च । किमर्थमिदमुच्यते, यावता 'सुपि स्थः' ( ३.२.४ ) इति कः सिद्ध एव, 'अन्येभ्योऽपि दृश्यते' ( ३.२.१७८ ) इति क्विप् ? बाधकबाधनार्थं पुनर्वचनम् । 'शमि धातोः संज्ञायाम्' (३.२.१४) अचं बाधते—शंस्थः । शंस्थाः ॥**

**न्यासः**

**पर्णध्वदिति** । 'स्रन्सु ध्वन्सु अवस्रन्सने', 'अनिदिताम्' इत्यादिनानुनासिकलोपः । 'वसुस्रन्सुध्वंस्वनुडुहां दः' इति दत्वम्, 'वाऽवसाने' इति चर्त्वम् । **वाहाभ्रडिति** । 'भ्रन्शु अधःपतने' व्रश्चादिसूत्रेण षत्वम्, पूर्ववज्जश्त्वम्, चर्त्वञ्च, 'अन्येषामपि दृश्यते' इति दीर्घः ॥ ७६ ॥

**स्थः क च ॥ बाधकबाधनार्थमित्यादि** । कक्विपोर्बाधकोऽच्, तस्यापि बाधनार्थम् । अचस्तु बाधकत्वम् 'शमि धातोः संज्ञायाम्' इत्यत्र धातुग्रहणात् । तद्धि यतोऽपवादो विहितस्ततोऽपि शम्युपपदे संज्ञायामजेव यथा स्यादित्येवमर्थं कृतम् । एवञ्च 'स्थः क च' इत्येतद् यदि नोच्येत, ततो यथा कृञो हेत्वादिषु टप्रतिषेधार्थं धातुग्रहणं तथा तिष्ठतेरपि कक्विपोर्बाधनार्थं विज्ञायते । तथा च सति शम्युपपदे संज्ञायां तिष्ठतेरजेव स्यात्, न कक्विपौ । अस्मिंस्तु योगे सत्यचं बाधित्वोभावेव भवतः । **शंस्थ इति** । 'आतो लोप इटि च' इत्याकारलोपः ॥७७॥

**पदमञ्जरी**

इत्युपधालोपः, 'वसुस्रन्सु' इत्यादिना दत्वम् । **वाहाभ्रडिति** । 'भ्रंसु अधःपतने' ( धा० पा० ७५६ ) व्रश्चादिना षत्वम्, 'अन्येषामपि दृश्यते' इति दीर्घः । उखायाः स्रन्सते, पर्णानि ध्वंसते, वाहाद् भ्रश्यतीति विग्रहः । ध्वंसिरन्तर्भावितण्यर्थः सकर्मकः । क्वचित्तु वृत्तावेव विग्रहवाक्यानि पठ्यन्ते ॥ ७६ ॥

**स्थः क च ॥** केत्यविभक्तिको निर्देशः । **अन्येभ्योऽपि दृश्यत इति** । क्विबिति सिद्ध एवेत्यपेक्षते । ननु तच्छीलादिग्रहणं तत्रानुवर्त्तते, तस्मात् 'क्विप् च' इति क्विप् सिद्ध एवेति वक्तव्यम् । यद्वा तच्छीलादिग्रहणं तत्र न सम्बन्धनीयमिति मन्यते । नन्वेवमपि 'सुपि स्थः' इति विशेषविहितः कः सामान्यविहितं क्विपं बाधेत ? वाऽसरूपविधिना सोऽपि भविष्यति । **'शमि धातोः संज्ञायाम्' अचं बाधत इति** । अन्यथा यथा कृञो हेत्वादिषु टं बाधते धातुग्रहणात्तथा तिष्ठतेरपि कक्विपौ बाधेत, अतस्तमप्यचं बाधित्वा कक्विपावेव यथा स्यातामिति पुनर्वचनमित्यर्थः । **शंस्था इति** । क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थादिसूत्रेणेत्वमत्र प्राप्नोति, भाष्यकारप्रयोगात्तु न भवति । केचित्तु—ईत्वमवकारादाविति वचनं पठन्ति, तेषां सुपीवा सुधीवा, अत्रापि न स्यात् ॥७७॥

**भावबोधिनी**

पर—उखास्रत् ] पर्णध्वत् । [ पर्णानि ध्वंसन्ते यह विग्रह है । प्रक्रिया पूर्ववत् ही है । ] वाहाद् भ्रश्यति –इस विग्रह में —वाहभ्रट् । [ क्विप् प्रत्यय, सर्वापहारी लोप, उपपदसमास, विभक्तिलोप, ''व्रश्चभ्रस्ज०' सूत्र से 'श्' का 'ष्' जश्त्व ड् और चर्त्व करने पर ट्—वाहभ्रट् ] ''अन्येषामपि दृश्यते'' ( पा. सू. ६.३.१३७ ) से दीर्घ करने पर – वाहाभ्रट् रूप बनता है ॥ ७६ ॥

'सुपि' और 'उपसर्गेऽपि' इन की अनुवृत्ति होती है । सुबन्त उपपद रहते 'स्था' इस धातु से 'क' और 'क्विप्' दो प्रत्यय होते हैं । यह सूत्र क्यों कहा जा रहा है क्योंकि 'सुपि स्थः' ( पा. सू. ३.२.४ ) से 'क' प्रत्यय तो सिद्ध ही है, और ''अन्येभ्योऽपि दृश्यन्ते'' ( पा० सू० ३.२.७५ ) इससे क्विप् भी सिद्ध है ? [ क तथा क्विप् के ] बाधक [ अच् प्रत्यय ] का बाध करने के लिये पुनः यह सूत्र बनाया गया है । ''शमि धातोः संज्ञायाम्'' ( पा. सू. ३।२।१४ ) इससे प्राप्त अच् का बाध करता है—शंस्थः, शंस्थाः । [ शं तिष्ठति—इस विग्रह में अच् प्राप्त है । उसका बाध करके क अ प्रत्यय उपपदसमास, ''आतो लोप इटि च'' ( पा० सू० ६.४.६४ ) से 'आ' का लोप शंस्थ् अ, प्रथमा-बहुवचन में शंस्थ+सु = स् का रुत्व, विसर्ग—शंस्थः । क्विप् करने पर सर्वापहारी लोप होकर 'स्' का विसर्ग होता है—शंस्थाः । ]

**८४७. सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥ ( २९८८ )**

**अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोर्णिनिप्रत्ययो भवति । उष्णभोजी । शीतभोजी ।**

**अजाताविति किम् ? ब्राह्मणानामन्त्रयिता । ताच्छील्य इति किम् ? उष्णं भुङ्क्ते कदाचित् । सुपीति वर्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम् ( म० भा० ) ।**

**ॐ उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानम् ॐ ( म० भा० ३.२.७८ ) । उदासारिण्यः । प्रत्यासारिण्यः ।**

**ॐ साधुकारिणि च ॐ ( वा० १ ) । साधुकारी । साधुदायी ।**

**न्यासः**

**सुप्यजातौ णिनिस्ताच्छील्ये ॥ ब्राह्मणानामन्त्रयितेति** । 'मत्रि गुप्तभाषणे', 'इदितो नुम् धातोः' इति नुम्, चुरादिणिच्, ततः 'तृन्' इति ताच्छीलिकस्तृन् । **सुपीत्यादि** । ननु च 'सुपि' इत्यनुवर्त्तमाने पुनः सुब्ग्रहणमनर्थकम् ? नानर्थकम्, पूर्वकं हि सुब्ग्रहणमुपसर्गेण सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । अत उपसर्गनिवृत्त्यर्थं पुनः सुब्ग्रहणं क्रियते ।

**उत्प्रतिभ्यामित्यादि** । सुब्ग्रहणस्य चोपसर्गनिवृत्त्यर्थत्वादुपसर्गे न प्राप्नोतीति वचनम् । उत्प्रतिभ्यां परो य आङ् तस्मिन्नुपपदे सर्त्तेर्धातोरुपसंख्यानम् = प्रतिपादनं कर्त्तव्यम् । तत्रेदं प्रतिपादनम्—'अन्येभ्योऽपि दृश्यन्ते' इत्यतोऽत्रापिशब्दः सर्वोपाधिव्यभिचारार्थोऽनुवर्त्तते, तेनोदासारिण्य इत्यत्रोपसर्गे णिनिर्भवति ।

**साधुकारिणि चेति** । अताच्छील्यार्थ आरम्भः । चकारेणोपसंख्यानमित्यनुकृष्यते, तस्य प्रतिपादनमेवार्थः । प्रतिपादनं तु—पूर्ववदपिशब्दं सर्वोपाधिव्यभिचारार्थमाश्रित्य कर्त्तव्यम् । अथ वा—यदयम् **'तच्छीलतद्धर्म-**

**पदमञ्जरी**

**सुप्यजातौ णिनिस्ताच्छील्ये ॥ ब्राह्मणानामन्त्रयितेति** । ताच्छील्यस्य विवक्षितत्वात्तृन् प्रत्युदाहृतः, 'न लोकाव्यय' इति षष्ठीप्रतिषेधः ।

**उत्प्रतिभ्यामिति** । पुनः सुब्ग्रहणस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भः ।

**साधुकारिणि चेति** । अताच्छील्यार्थमिदम्, तच्चैतज्ज्ञापकात्सिद्धं यदयम् 'आक्वेस्तच्छील' इत्यत्र तच्छीलेत्यभिधाय साधुकारिग्रहणं करोति, तज्ज्ञापयति—साधुकारिण्यताच्छील्येऽपि णिनिर्भवतीति ।

**भावबोधिनी**

अजातिवाची सुबन्त उपपद रहते, ताच्छील्य [= उस प्रकार का स्वभाव वाला होना ] प्रतीयमान रहने पर धातुमात्र से णिनि प्रत्यय होता है । उदा० उष्णभोजी । शीतभोजी [उष्णं भुङ्क्ते तच्छीलः, शीतं भुङ्क्ते तच्छीलः—ये विग्रह है । उष्णम् उपपद भुज् + णिनि = इन् उपधागुण, उपपदसमास, विभक्तिलोप, प्रातिपदिक संज्ञा, सु विभक्ति—उष्णभोजिन् + सु उपधादीर्घ, सुलोप, नलोप करने पर रूप बनता है । गरम-गरम खाने की आदत वाला । ]

जातिवाची उपपद न हो—इसका क्या फल है ? ब्राह्मणान् आमन्त्रयिता । [ यहाँ ब्राह्मण यह जातिवाची उपपद है । अतः णिनि न होकर 'तृच्' प्रत्यय होता है—आमन्त्रयितृ + सु, अनङ् आदि करने पर रूप बनता है । ]

ताच्छील्य में—इसका क्या लाभ है ? उष्णं भुङ्क्ते कदाचित् । [ यहाँ स्वभाव नहीं प्रतीत होता है । अतः प्रत्यय नहीं होता है । ] यद्यपि 'सुपि' इसकी अनुवृत्ति हो ही रही थी फिर भी दुबारा 'सुपि' इसका ग्रहण 'उपसर्ग' की निवृत्ति के के लिये है अर्थात् उपसर्गपूर्वक से णिनि नहीं होता है ।

ॐ उत् तथा प्रति से परे आङ् पूर्वक 'सृ' से णिनि का उपसंख्यान करना चाहिये । उदासारिण्यः, प्रत्यासारिण्यः । [ उत् आ सृ + णिनि = इन्, वृद्धि, रपर, स्त्रीलिङ्ग में ङीप्, प्रथमाबहुवचन का रूप है । ]

* साधुकारी अर्थ में भी णिनि कहना चाहिये । * साधुकारी, साधुदायी । [ साधु करोति, साधु ददाति ये विग्रह हैं । साधु + कृ + णिनि = इन्, वृद्धि, रपर साधुकारिन् ] साधु + दा + इन्, "आतो युक् चिण्कृतोः" ( पा. सू. ७।३।३३ ) से युक् = य् आगम—साधुदायिन् । ]

**❀ ब्रह्मणि वदः ❀ ( वा० २ ) । ब्रह्मवादिनो' वदन्ति ( तै० सं० २.५.४.१ ) ।**

## ८४८. कर्तर्युपमाने ॥ ७९ ॥ ( २९८९ )

**कर्तृवाचिनि उपमान उपपदे धातोर्णिनिप्रत्ययो भवति । उपपदकर्त्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थ आरम्भः, जात्यर्थो वा ।**

**कर्तरीति किम् ? अपूपानिव भक्षयति माषान् । उपमान इति किम् ? उष्ट्रः क्रोशति ॥**

### न्यासः

तत्साधुकारिषु' इति तच्छीलेत्यभिधाय तत्साधुकारिग्रहणं करोति, तज्ज्ञापयति—साधुकारिण्यताच्छील्येऽपि णिनिर्भवतीति ।

**ब्रह्मणि वद इति** । अयमप्यताच्छील्यार्थ आरम्भः, जात्यर्थो वा । ताच्छील्येऽजातौ पूर्वेणैव सिद्धत्वाद् वाऽसरूपनिवृत्त्यर्थो न हि भवति । ब्रह्माणं वदति **ब्रह्मवादीति** । णिनेर्णकारो वृद्ध्यर्थः । द्वितीय इकारो नकारस्येत्संज्ञापरित्राणार्थः ॥ ७८ ॥

**कर्त्तर्युपमाने** । धातोः कर्त्तरि प्रत्ययविधानात् तस्यैवोपपदकर्त्तोपमानं विज्ञायत इत्याह—**उपपदकर्त्तेत्यादि** । उपपदवाच्यः कर्त्ता = उपपदकर्त्ता, शाकपार्थिवादित्वाद् मध्यमपदलोपी समासः । **उष्ट्रक्रोशीति** । 'क्रुश आह्वाने रोदने च' । **ध्वाङ्क्षरावीति** । 'रु शब्दे' । अताच्छील्यार्थ आरम्भः, जात्यर्थो वेति; ताच्छील्येऽजातौ च पूर्वेणैव सिद्धत्वात् ।

**भक्षयतीति** । 'भक्ष अदने' चौरादिकः ॥ ७९ ॥

### पदमञ्जरी

**ब्रह्मणि वद इति** । ब्रह्म = वेदः । इदमप्यताच्छील्यार्थम् ॥ ७८ ॥

**कर्त्तर्युपमाने** ॥ उपमानस्योपमेयापेक्षत्वात् कर्तरि च प्रत्ययविधानात्तस्यैवोपपदकर्त्तोपमानं विज्ञायेत इत्याह—**उपपदकर्त्तेति । उष्ट्रक्रोशीति ।**

इवशब्दो गतार्थत्वाद्वृत्तौ नैव प्रयुज्यते ।
समास उपमानानां शस्त्रीश्यामादिके यथा ॥ ७९ ॥

### भावबोधिनी

* ब्रह्म उपपद रहते 'वद' से णिनि प्रत्यय होता है । * ब्रह्मवादिनो वदन्ति । [ ब्रह्म वदन्ति—इस अर्थ में 'ब्रह्म' उपपद 'वद्' से णिनि=इन्, उपधावृद्धि, उपपदसमास, विभक्तिलोप ब्रह्मवादिन् + जस् = अस्, स् का रुत्व, विसर्ग—ब्रह्मवादिनः । ] ॥ ७८ ॥

कर्तृवाची उपमान उपपद रहते धातु से णिनि प्रत्यय होता है । उपपद कर्ता प्रत्ययार्थ कर्ता का उपमान होता है । उदाहरण—उष्ट्र इव क्रोशति—इस विग्रह में उष्ट्रक्रोशी । [ उष्ट्रः उपपद क्रुश् + णिनि=इन्, उपधागुण, उपपदसमास, विभक्तिकार्य—उष्ट्रक्रोशिन् । ऊँट के समान चिल्लाने वाला ] ध्वाङ्क्षरावी । [ ध्वाङ्क्ष इव रौति—यह विग्रह है । ध्वाङ्क्ष रु + णिनि=इन् 'उ' की वृद्धि, आव् आदेश, उपपदसमास, विभक्तिलोप—ध्वाङ्क्षराविन् । कौवा के समान चिल्लाने वाला । ] ताच्छील्य से भिन्न अर्थ के लिये अथवा जातिवाची उपपद के लिये यह सूत्र बनाया गया है ।

कर्ता में—यह किस लिए है ? अपूपान् इव माषान् भक्ष्यति । [ यहाँ कर्ता नहीं कर्म उपमान होने से यह प्रत्यय नहीं होता है । ] उपमान रहने पर—यह किस लिये है ? उष्ट्रः क्रोशति । [ यहाँ उपमान नहीं है । अतः णिनि नहीं होता है । ] ॥ ७९ ॥

## ८४९. व्रते ॥ ८० ॥ ( २९९० )

**व्रत इति शास्त्रितो नियम उच्यते । व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनिः प्रत्ययो भवति । समुदायोपाधिश्चायम्, धातूपपदप्रत्ययसमुदायेन व्रतं गम्यते । स्थण्डिलशायी । अश्राद्धभोजी । कामचारप्राप्तौ नियमः— सति शयने स्थण्डिल एव शेते नान्यत्र, सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति ।**

**व्रते इति किम् ? स्थण्डिले शेते देवदत्तः । अताच्छील्यार्थं आरम्भः, जात्यर्थो वा ॥**

## ८५०. बहुलमाभीक्ष्ण्ये ॥ ८१ ॥ ( २९९१ )

**आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं णिनिप्रत्ययो भवति । आभीक्ष्ण्यम् = पौनःपुन्यम् । तात्पर्यम् =**

**न्यासः**

**व्रते ॥ समुदायोपाधिश्चायमिति ।** प्रत्ययार्थविशेषणशङ्कां निराकरोति । प्रत्ययार्थविशेषणे हि तस्मिन् व्रत एव कर्त्तरि प्रत्यय प्रसज्येत, न तद्वति देवदत्ते । **धातूपपदेत्यादिना** समुदायोपाधित्वं व्रतस्य दर्शयति । **कामचारप्राप्तौ नियम इति ।** कामचारः=इच्छाप्रवृत्तिः, तत्प्राप्तौ सत्यां नियमः । अनियमत्वाद् यथेष्टं सामान्येन शसने भोजने च प्रवृत्तौ प्राप्तायामयमर्थान्तराद्व्यावर्त्यविशेषे स्थण्डिलादौ न प्राप्नोति, तस्माद् व्यवस्थाप्यते । नियमश्चात्र द्विविधः सम्भवति—स्थण्डिले शेत एवाश्राद्धं भुङ्क्त एवेत्येवंरूपो वा स्यात्, स्थण्डिल एव शेतेऽश्राद्धमेव भुङ्क्ते इत्येवंरूपो वा, तत्र पूर्वके नियमे यदैव स्थण्डिले न शेतेऽश्राद्धञ्च न भुङ्क्ते तदैव व्रतलोपः प्राप्नोति । तस्माद् द्वितीयो नियमो युक्त इति मन्यमान आह —**सति शयन इत्यादि** ॥ ८० ॥

**बहुलमाभीक्ष्ण्ये ॥ आभीक्ष्ण्यं पौनःपुन्यमिति ।** पुनः पुनर्भावः पौनःपुन्यमिति, अव्ययानां भमात्रे टिलोपः ।

**पदमञ्जरी**

**व्रते ॥ समुदायोपाधिश्चायमिति ।** न प्रत्ययार्थविशेषणम् । तथा हि सति व्रत एव कर्तरि प्रत्ययः स्यान्न तद्वतीति भावः । समुदायोपाधित्वमेव स्पष्टयति—**धातूपपदेत्यादि ।** कामचारः=इच्छाप्रवृत्तिः, तत्प्राप्तौ सत्यां नियमः, स च द्विविधः सम्भवति—स्थण्डिले शेते एव अश्राद्धं भुङ्क्ते एवेत्येवंरूपो वा स्यात्, स्थण्डिल एव शेते अश्राद्धमेव भुङ्क्ते इत्येवंरूपो वा । तत्र पूर्वके नियमे यदैवासावशक्त्यादिनाऽश्राद्धं न भुङ्क्ते तदैव व्रतलोपः प्राप्नोति । न चैवंविधं शास्त्रमस्ति –स्थण्डिले शयितव्यमेव, अश्राद्धं भोक्तव्यमेवेति । अस्ति तु स्थण्डिल एव शयितव्यम्, अश्राद्धमेव भोक्तव्यमिति । 'व्रते' इति तु शास्त्रितो नियमः—इत्युक्तम्, तस्माद् द्वितीयो नियमो विज्ञायत इत्याह - **सति शयन इत्यादि** ॥ ८० ॥

**बहुलमाभीक्ष्ण्ये ॥ आभीक्ष्ण्यं पौनःपुन्यमिति ।** पुनः पुनर्भवितरि वर्तमानाभ्यामव्ययाभ्यां भावे ष्यञ्,

**भावबोधिनी**

'व्रत' यह शास्त्र में विहित नियम को कहा जाता है । व्रत की प्रतीति रहने पर सुबन्त उपपद रहते धातु से णिनि प्रत्यय होता है । 'व्रत' यह प्रकृतिप्रत्ययसमुदाय की उपाधि है, धातु, उपपद और प्रत्यय इन सभी के समुदाय के द्वारा 'व्रत' की प्रतीति रहती है । उदा० स्थण्डिलशायी । [ स्थण्डिले शेते—इस अर्थ में णिनि = इन्, उपपदसमास, विभक्तिलोप, स्थण्डिल शी + इन्, 'ई' की वृद्धि, आय् आदेश—स्थण्डिलशायिन् । कच्चे चबूतरे पर शयन करने के व्रतवाला । ] अश्राद्धभोजी । [ श्राद्धं न भुङ्क्ते—इस विग्रह में बनता है । श्राद्धभोजन न करने के नियम वाला । ] कामचार = इच्छानुसार कार्य की प्रवृत्ति प्राप्त होने पर नियम होता है— 'यदि सोना है तो स्थण्डिल पर ही सोता है अन्यत्र नहीं ।' 'यदि भोजन करना है तो अश्राद्ध भोजन ही करता है, श्राद्धभोजन नहीं करता है ।'

'व्रत में' यह किस लिये है ? स्थण्डिले शेते देवदत्तः । [ यह सामान्य कथन है । अतः णिनि नहीं होता है । ] यह भी ताच्छील्य से भिन्न के लिए और जातिवाची उ पद के लिए बनाया गया है ॥ ८० ॥

आभीक्ष्ण्य प्रतीयमान रहने पर धातु से बहुलरूप से णिनि प्रत्यय होता है । आभीक्ष्ण्य = पुनः पुनः होना ।

**आसेवैव, ताच्छील्यादन्यत् । कषायपायिणो गान्धाराः । क्षीरपायिण उशीनराः । सौवीरपायिणो बाह्लीकाः ।**
**बहुलग्रहणात् कुल्माषखाद इत्यत्र न भवति ॥**

**८५१. मनः ॥ ८२ ॥ ( २९९२ )**

**'सुपि' इति वर्तते । मन्यतेः सुबन्त उपपदे णिनिप्रत्ययो भवति । दर्शनीयमानी । शोभनमानी । बहुलग्रहणानुवृत्तेर्मन्यतेर्ग्रहणम्, न मनुतेः । उत्तरसूत्रे हि खश्प्रत्यये विकरणकृतो विशेषः स्यात् ॥**

**न्यासः**

**तात्पर्यमासेवैवेति** । तदेवाभीक्ष्ण्यम् । पर्यायान्तराभ्यां स्पष्टीकरोति **ताच्छील्यादन्य इति** । एतेन 'सुप्यजातौ' इत्यादिनाऽऽभीक्ष्ण्ये न सिध्यतीत्यसामर्थ्यमुद्भावयन्नस्य योगस्य फलं दर्शयति—**कषायपायिण इति** । यत्र देशे कषायं पुनः पुनः पिबतामारोग्यं भवति, अतस्ते कषायं पिबन्तीति, न तु ताच्छील्यात् । **क्षीरपायिण इति** । तेऽपि तथोक्तादेव कारणात् पानान्तराभावाद्वा ताच्छील्याभावेऽप्यगत्या क्षीरं पिबन्ति । **सौवीरपायिण इति** । अत्राप्येतदेवानन्तरोक्तं पुनः पुनः सौवीरपाणस्य कारणम् । सर्वत्र 'आतो युक् चिण्कृतोः' इति युक् । 'प्रातिपदिकान्तनुम्' इत्यादिना णत्वम् । **कुल्माषखाद इति** । 'कर्मण्यण्' ॥ ८१ ॥

**मनः ॥ मन्यतेर्ग्रहणमिति** । 'मन ज्ञाने' इत्येतस्य दैवादिकस्य । **न मनुतेरिति** । 'मनु अवबोधने' इत्येतस्य तानादिकस्य ग्रहणं न भवति । ननु च यदेव मन्यतेर्णिनिप्रत्यये कृते दर्शनीयमानीति रूपं भवति, तदेव मनुतेरपि, तत् कोऽत्र विशेषो यतो मन्यतेर्ग्रहणमिष्यते, न मनुतेरित्यत आह—**उत्तरसूत्रे हीत्यादि** । यद्यपीह

**पदमञ्जरी**

अव्ययानां भमात्रे टिलोपः । **ताच्छील्यादन्यदिति** । एतेन 'सुप्यजातौ' इत्यनेनागतार्थत्वं दर्शयति । फलानपेक्षा प्रवृत्तिः = ताच्छील्यम् । गान्धारादयस्तु वातादिसाम्यार्थं देशाचारवशेन कषायादिपाने प्रवर्तन्ते । उदाहरणेषु 'आतो युक् चिण्कृतोः' इति युक्, 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वम् ॥ ८१ ॥

**मनः ॥ मन्यतेर्ग्रहणमिति** । 'मन ज्ञाने' ( धा० पा० ११७६ ) इत्यस्य दैवादिकस्य । **न मनुतेरिति** । 'मनु अवबोधने' ( धा० पा० १४७१ ) इत्यस्य तानादिकस्य । तिपि गुणेन भवितव्यम् । यदि नेष्यते, 'संज्ञापूर्वको विधिरनित्यः' ( व्या० परि० ६४ ) । किं पुनः कारणं प्रयत्नेन मनोतेर्ग्रहणं निवार्यते, यावता इह द्वयोरपि णिनिः तदेव रूपम्, न चार्थभेद इत्याह—**उत्तरसूत्र इति** ॥ ८२ ॥

**भावबोधिनी**

तात्पर्य = आसेवा ही है, यह ताच्छील्य से भिन्न है । [ अतः आदत न होने पर भी प्रायिकत्व की प्रतीति में यह होता है । ] उदा० कषायपायिणः गान्धाराः । [ कषायं पुनः पुनः पिबन्ति—यह विग्रह है । कषायम् उपपद 'पा + णिनि = इन्, ''आतो युक् चिण् कृतोः'' ( पा० सू० ७।३।३३ ) से युक् = य् आगम, उपपदसमास, विभक्तिलोप -कषायपायिन् । कषाय वस्तु बार-बार पीने से जिनका स्वास्थ्य ठीक रहता है, ऐसे गान्धारदेशवासी । ] क्षीरपायिणः उशीनराः । [ क्षीरं पिबन्ति पुनः पुनः—यह विग्रह है । पूर्ववत् णिनि उपपदसमास, आदि करने पर रूप बनता है । उशीनर देश के लोग बार-बार दूध पीने वाले हैं । ] सौवीरपायिणो बाल्हीकाः [ सौवीरं पुनः पुनः पिबन्ति—यह विग्रह है । सिद्धि की प्रक्रिया पूर्ववत् ही है । बाल्हीक देश के निवासी कांजी पीने वाले होते हैं । ]

बहुल के ग्रहण से—'कुल्माषखादः' यहाँ णिनि नहीं भी होता है । [ ''कर्मण्यण्'' सूत्र से अण् ही होता है । ] ॥ ८१ ॥

'सुपि' इसकी अनुवृत्ति होती है । सुबन्त उपपद रहते 'मन्' धातु से णिनि प्रत्यय होता है । उदा० दर्शनीयमानी । शोभनमानी । [ दर्शनीयं मन्यते, शोभनं मन्यते—ये विग्रह हैं । सुबन्त उपपद मन् + णिनि = इन् । उपधावृद्धि, उपपदसमास, विभक्तिलोप —दर्शनीयमानिन्, शोभनमानिन् । ] 'बहुल' की अनुवृत्ति होने के कारण दिवादिगणीय 'मन' का ग्रहण होता है तनादिगणीय 'मन्' का नहीं । अग्रिम सूत्र में खश् प्रत्यय में ( दोनों धातुओं से होने वाले 'श्यन्' तथा 'उ' ) विकरण को मानकर रूप में अन्तर पड़ सकता है । [ अतः दोनों में दिवादिगणीय ही समझनी चाहिये ] ॥ ८२ ॥

## ८५२. आत्ममाने खश्च ॥ ८३ ॥ ( २९९३ )

**आत्मनो मननम् = आत्ममानः । आत्ममाने वर्तमानान्मन्यतेःसुप्युपपदे खश्प्रत्ययो भवति । चकाराण्णिनिश्च । यदा प्रत्ययार्थः कर्ताऽऽत्मानमेव दर्शनीयत्वादिना धर्मेण युक्तं मन्यते, तदायं विधिः । दर्शनीयमात्मानं मन्यते दर्शनीयम्मन्यः, दर्शनीयमानी । पण्डितम्मन्यः, पण्डितमानी ।**

### न्यासः

विशेषो नास्ति, उत्तरसूत्रे तु विकरणकृतो विशेषोऽस्ति, तत्र हि मन्यतेः खशि कृते दिवादित्वाच्छ्यन् भवति, मनुतेस्तु तनादित्वादुप्रत्ययः ॥ ८२ ॥

**आत्ममाने खश् च ॥ आत्ममान इति ।** मननम् = मानः, भावे घञ् । आत्मनो मानः आत्ममानः । 'कर्तृकर्मणोः कृति' इति षष्ठी, 'कृद्योगा च षष्ठी समस्यते' इति समासः । अथ कर्तरि षष्ठी कस्मान्न भवति ? आत्मग्रहणसामर्थ्यात् । न ह्यात्मनोऽन्यस्य पदार्थस्य मतिः सम्भवति, तस्या आत्मगुणत्वात् । अथात्मशब्दोऽयं न सुखादिगुणमाचष्टे, किं तर्हि ? पराभावम् । परो यो न भवति स आत्मेति, तथाप्यात्मग्रहणमनर्थकम् । एवं हि मन्तुर्या मतिस्तत्र वर्त्तमानादित्येषोऽर्थः स्यात्, स चायुक्तः, सर्वा हि मतिः परमपि मन्यमानस्य मन्तुरेव भवति, तस्मात् कर्मण्येव षष्ठी । **यदा प्रत्ययार्थः कर्त्तेत्यादि** । कथं पुनरेष

### पदमञ्जरी

**आत्ममाने खश्च ॥ चकाराण्णिनिश्चेति** । वाऽसरूपविधिना सिद्धोऽपि णिनिरविच्छेदाय समुच्चीयते । तेन 'करणे यजः' इत्यत्र णिनेरेवानुवृत्तिर्भवति, नानन्तरस्य खशः । आत्मशब्दोऽयं परव्यावृत्तिं कुर्वाणो यस्तत्प्रतियोगिनमर्थमाचष्टे स स्वशब्दपर्यायो गृह्यते, न चेतनद्रव्यवचनः । मननं मानः, भावे घञ्, आत्मनो मान आत्ममानः—कर्मणि षष्ठ्या समासः । तत्र कस्येत्यपेक्षायां प्रत्ययार्थस्य सन्निहितस्य मन्तुरेवात्मन इति गम्यते, तदाह—**प्रत्ययार्थः कर्त्तेति** । दर्शनीयत्वादिना धर्मेणेति विशिष्टमिति शेषः । कर्तरि षष्ठ्यास्तु समासो न भवति, सर्वस्या एव मतेर्मन्तृकर्तृकत्वाव्यभिचाराद् । एवं चेतनद्रव्यवचनेऽप्यात्मशब्दे कर्तरि षष्ठ्यामव्यभिचारादविशेषणं कर्मणि षष्ठ्या, न तु चेतनान्तरे कर्मणि प्रत्ययप्रसङ्गः, तस्मात्स्वशब्दपर्याय एवात्मशब्दः । **दर्शनीयम्मन्य इति ।** शरीरधर्ममपि दर्शनीयत्वादिकमात्मधर्ममेव मन्यन्ते संसारिणः शरीरशरीरिणोरन्यययोगोलकयोरिवाभेदं मन्यमानाः । **पण्डितम्मन्य इति** । एकस्याप्यात्मनस्स्वरूपेण कर्तृत्वं पण्डितत्वादिविशिष्टरूपेण कर्मत्वं च युज्यत एव ।

### भावबोधिनी

आत्मनः मननम् = अपने को मानना = आत्ममान । आत्ममान अर्थात् अपने को मानना—इस अर्थ में विद्यमान 'मन' धातु से सुबन्त उपपद रहते 'खश्' प्रत्यय होता है । और 'च' के बल से णिनि भी होता है । जब प्रत्यय का अर्थ कर्ता अपने को ही दर्शनीयत्व [ देखने योग्य होना ] आदि धर्म से युक्त मानता है तब यह खश् प्रत्ययविधि होती है । उदा० दर्शनीयम् आत्मानं मन्यते—इस विग्रह में—दर्शनीयम्मन्यः, दर्शनीयमानी [ रूप होते हैं । दर्शनीयम् उपपद 'मन्' से खश् = अ प्रत्यय विकल्प से करने पर "दिवादिभ्य, श्यन्" ( ३।१।६९ ) से श्यन् = य विकरण, मन य + अ, पररूप करके उपपद समास, विभक्तिलोप—दर्शनीयमन्य, खिदन्त परे होने से 'अरुर्द्विषदजन्तस्य मुम्' ६।३।६५ से मुम् = म् आगम तथा प्रातिपदिकत्वसम्बन्धी कार्य करने पर—दर्शनीयम्मन्यः । खश् न होने पर णिनि = इन् उपधावृद्धि—दर्शनीयमानिन्, विभक्तिसम्बन्धी कार्य करने पर—दर्शनीयमानी । अपने को खूबसूरत मानने वाला । ] पण्डितम्मन्यः, पण्डितमानी । [ आत्मानं पण्डितं मन्यते—इस विग्रह में 'पण्डितम्' उपपद मन् से खश् = अ, श्यन् = य आदि करके उपपद समास के बाद मुम् = म् आगम करके रूप बनता है—पण्डितम्मन्यः । पक्ष में णिनि होने पर—पण्डितमानी । अपने को पण्डित मानने वाला । ]

**आत्ममान इति किम् ? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ।**

**अतः सार्वकालिका विधयो वेदितव्याः ॥**

## ८५३. भूते ॥ ८४ ॥ ( २९९५ )

**'भूते'** इत्यधिकारः **'वर्तमाने लट्'** ( ३ २.१२३ ) इति **यावत् । यदित ऊर्ध्वमनुक्रमिष्यामः 'भूते' इत्येवं तद्वेदितव्यम् । धात्वधिकाराच्च 'धात्वर्थे भूते' इति विज्ञायते । वक्ष्यति—'करणे यजः'** ( ३.२.८५ ) **अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी ।**

**भूत इति किम् ? अग्निष्टोमेन यजते ॥**

**न्यासः**

एवार्थः, कर्म कर्त्ता च युज्यते ? शक्तिभेदाद्, यथा—पीयमानं मधु मदयतीति । खशः खकारः 'अरुर्द्विषदजन्तस्य' इति मुमर्थः । शकारः सार्वधातुकसंज्ञार्थः ॥ ८३ ॥

**भूते ॥** भूतशब्दोऽयमतिक्रान्तवचनः, अस्ति च स्वरूपवचनः, तत्र न ज्ञायते—कस्मिन् भूते प्रत्यय इति ? अतस्तत्परिज्ञानायाह —**धात्वधिकाराच्चेत्यदी** । चशब्दो हेतौ । यस्माद् धातोरिति वर्त्तते तस्माद्धात्वर्थभूत इति विज्ञायते । ननु च धात्वधिकाराद्धातोरेव भूत इत्येतद् विशेषणं युक्तम् ? न; असम्भवाद् । धातोर्ह्यस्मिन्नभिधेये गुणीभूतस्य भूत इत्येतद् विशेषणमनुपपन्नम् अतस्तत्रासम्भावात् तदर्थस्यैव तद्विशेषणं विज्ञायते ॥ ८४ ॥

**पदमञ्जरी**

**यथोक्तमाचार्यैः—**

अस्मत्प्रयोगसम्भिन्ना ज्ञानस्यैव च कर्तरि ।
भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ इति ।

खशः खकारो मुमर्थः, दर्शनीयम्मन्या कुमारीत्यादौ ह्रस्वार्थश्च । शकारः सार्वधातुकसंज्ञार्थः, दिवादित्वाच्छ्यन् । स्वरस्तु सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते इति खश एव भवति, न नित्स्वरः । **दर्शनीयमानी देवदत्तो यज्ञदत्तस्येति** । कर्मणि षष्ठी, तदपेक्षयास्यापि दर्शनीयशब्दस्य गमकत्वात् समासः ॥ ८३ ॥

**भूते ॥** यस्य सत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते, तत्र न ज्ञायते कस्मिन् भूत इति, किं साधने भूते ? किं वा धात्वर्थे ? तत्राह—**धात्वधिकाराच्चेति** । चशब्दः पूर्वोक्तेनार्थेनास्य सङ्गतिं द्योतयति । **धात्वर्थभूत इति** । ननु धात्वधिकाराद्धातौ भूत इति युक्तम्, न धात्वर्थे भूत इति ? उच्यते—प्रयोगे प्रत्ययस्य द्योत्यं भूतत्वमर्थस्यैव विशेषणं भवितुमर्हति, विशेषणान्तरवत्, न तु शब्दस्य; तस्य स्वाभिधेयप्रतिपादने व्यग्रत्वाद्विशेषणसम्बन्धं प्रत्ययोग्यत्वात् । किञ्च—नित्यो धातुरनित्यत्वेऽपि भूतात्प्रत्ययविधिरनुपपन्नः, उच्चारितलक्षणे भूतत्वे विशेषणं व्यर्थं तर्ह्यनुच्चारितात्प्रत्ययविधिः सम्भवति । नित्यश्चायं भूतशब्दोऽतिक्रान्तवाचीति निष्ठायामितरेतराश्रयत्वादप्रसिद्धिरित्यचोद्यम् ॥ ८४ ॥

**भावबोधिनी**

आत्ममानं = अपने को मानना—इसका क्या प्रयोजन है ? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य । [ यज्ञदत्त को दर्शनीय मानने वाला देवदत्त । यहाँ अपने से भिन्न को मानने के कारण खश् प्रत्यय न होकर केवल णिनि ही होता है । ] यहाँ से सभी कालों में होने वाली विधियाँ समझनी चाहिये ॥ ८३ ॥

'भूते' यह अधिकार "वर्तमाने लट्" पा० सू० ३।२।१२३ तक चलता है । इसके आगे जिनको कहा जायगा, उन्हें भूतकाल अर्थ में समझना चाहिये । और 'धातोः' इसका अधिकार होने के कारण 'धात्वर्थ क्रिया के भूत = बीती हुयी होने पर'—ऐसा ज्ञात होता है । आगे कहा जायगा —"करणे यजः" ( ३।२।८५ ) करण उपपद रहते यज् धातु से णिनि होता है, भूतकाल में । उदा० अग्निष्टोमेन इष्टवान्—इस अर्थ में—अग्निष्टोमयाजी ।

भूते—यह किसलिये है ? अग्निष्टोमेन यजते । [ यहाँ वर्तमान काल होने से णिनि प्रत्यय नहीं होता है । ] ॥ ८४ ॥

**८५४. करणे यजः ॥ ८५ ॥ ( २९९६ )**

**णिनिरनुवर्त्तते, न खश् । यजतेर्धातोः करण उपपदे णिनिप्रत्ययो भवति भूते । अग्निष्टोमयाजी । अग्निष्टोमः फलभावनायां करणं भवति ॥**

**न्यासः**

**करणे यजः ॥ णिनिरनुवर्त्तते, न खशिति ।** णिनेरेव स्वरितत्वात् । क्व पुनर्यागः करणमित्याह— **अग्निष्टोमः फलभावनायामित्यादि ।** फलं स्वर्गः, तस्य या भावनोत्पादना = यजमानसम्बन्धी व्यापारः, तत्राग्निष्टोमयागः करणं भवति । ननु चाग्निष्टोमव्यतिरेकेण यजमानस्य व्यापारो भावनाख्यो नास्त्येव, यत्र यागः करणमिष्यते, तथा ह्यग्निष्टोमाख्येनैव ह्यसौ यागेन स्वर्गाख्यं फलमुत्पादयति ? नैतदेवम्; विशेषव्यापारे हि सामान्यव्यापारोऽस्ति, विशेषस्य सामान्यव्यभिचारात् । सामान्यव्यापार एव ह्यादौ फलार्थिनो बुद्धौ सन्निविशते । तथा हि—प्रतिपत्ता फलं समीहमानः स्वयमेव फलकामः सन् 'स्वर्गो मनसि कर्त्तव्यः' इति सामान्यव्यापारं बुद्धावारोपयति, ततः 'अग्निष्टोमेन स्वर्गकामो यजेत' इति शास्त्रस्याग्निष्टोमेन करणेन स्वर्गं भावयेदितीममर्थं प्रतिपद्य स्वर्गभावनां प्रति करणत्वेनाग्निष्टोममाश्रयति । तस्मात् सामान्यव्यापारे स्वर्गस्योत्पादो विशेषव्यापारोऽग्निष्टो-

**पदमञ्जरी**

**करणे यजः ॥ णिनिरनुवर्तते, न खशिति ।** अत्रोक्तो हेतुः । **अग्निष्टोमयाजीति ।** ननु चाग्निष्टोमशब्दः कर्मनामधेयम्, तत्कथमग्निष्टोमस्य यजिं प्रति करणत्वम्, न हि तदेव तत्र करणं भवति; इदं तु युक्तमुदाहरणम्—सोमेनेष्टवान् सोमयाजी, सान्नाय्येनेष्टवान् सान्नाय्ययाजीति ? तत्राह—**अग्निष्टोमः फलभावनायां करणं भवतीति ।** सत्यं याग एवाग्निष्टोमः; यागोऽपि फलभावनायां करणम्, फलस्य स्वर्गादेर्भवतो या भावना उत्पादना तस्यामित्यर्थः । ननु दीक्षणीयादिरुदवसानीयान्तो ज्योतिष्टोमाख्यो याग एव स्वर्गभावना न तदतिरिक्तः कश्चिद्व्यापारो यजनस्यास्ति यत्र यागः कारण्यमश्नुते ? उच्यते, द्विविधो यजमानव्यापारः—सामान्यरूपः, विशेषरूपश्चेति । तत्र सामान्यरूप आभ्यन्तर औदासीन्यप्रच्युतिरूपः कृतिप्रयत्नादिपदाभिलप्यः; बाह्यस्तु दीक्षणीयादिरुदवसानीयान्तः प्रसिद्ध एव । एवमोदनं पचतीत्यादिष्वप्यात्मगुणः प्रयत्नः, बाह्यश्चाधिश्रयणादिर्द्रष्टव्यः । फलं हि प्रेप्सन् तदर्थं प्रयतते, नोदास्ते; यतोऽयमुपायं जिज्ञासते, जानीते च, ज्ञात्वा चोपायमनुतिष्ठति । सैषा स्वर्गादिफलोद्देशेन प्रवृत्ता कृतिर्भावनेत्युच्यते । सा च भाव्यम्, करणम्, इतिकर्तव्यतां चेति त्रितयमपेक्षते—इदमनेनेत्थं भावयेदिति । यथाह—

भावनापेक्ष्यमाणा हि साधनं किं फलस्य मे ।
साधनानुग्रहः को वेत्यनुस्यूतमपेक्षते ॥ इति ।

सैषा सामान्यरूपा वृत्तिर्न शास्त्रकटाक्षमपेक्षते । विशेषरूपा त्वपेक्षते, तथा हि—फलार्थी तदुपायं जिज्ञासते, तदुपायं जिज्ञासमानः शृणोति—ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र च पुरुषप्रवर्तनारूपो विधिः श्रूयते, न चापुरुषार्थे पुरुषः प्रवर्तत इति विध्यवरुद्धा भावना भाव्यापेक्षायां समानपदोपात्तमपि दुःखरूपं धात्वर्थमपहाय

**भावबोधिनी**

केवल 'णिनि' इसकी अनुवृत्ति होती है, 'खश्' इसकी नहीं । करण उपपद रहते 'यज्' धातु से 'णिनि' प्रत्यय भूतकाल अर्थ में होता है । उदा० अग्निष्टोमयाजी । [ अग्निष्टोमेन इष्टवान्—इस विग्रह में करण उपपद 'यज्' से णिनि=इन् प्रत्यय, उपधावृद्धि, उपपदसमास, विभक्तिलोप करने पर अग्निष्टोमयाजिन् । विभक्तिसम्बन्धी कार्य करने पर रूप बनता है । अग्निष्टोम याग कर चुकने वाला । ] अग्निष्टोम फलभावना में करण होता है । [ याग का फल = स्वर्गादि की प्राप्ति है, उसकी जो भावना = यजमान द्वारा किया जाने वाला क्रियाकलापरूप व्यापार, इसमें अग्निष्टोमयाग करण बनता है । इसी आशय से कहा गया है । इसका विशेष विवेचन न्यास तथा पदमंजरी में देखें । ] ॥ ८५ ॥

## ८५९. कर्मणि हनः ॥ ८६ ॥ ( २९९७ )

**कर्मणि उपपदे हन्तेर्धातोर्णिनिप्रत्ययो भवति भूते काले । पितृव्यघाती । मातुलघाती ।**
**※ कुत्सितग्रहणं कर्तव्यम् ※ ( ? ) । इह मा भूत्—चौरं हतवान् ॥**

**न्यासः**

माख्यो यागः स्वर्गभावनायां करणं भवति । ननु चानुष्ठीयमानत्वाच्चास्य कर्मत्वमिति तत् कथं करणत्वमुपपद्यते ? नैतदस्ति; यद्यप्यसौ स्वर्गभावनां प्रति साध्यत्वेनेप्सिततमत्वादनुष्ठीयमानः कर्मत्वमनुभवति, तथापि तस्य शक्तिभेदात् करणत्वं न विरुध्यते, यथा—निपीयमानेन मधुना मत्त इत्यत्र कर्मभावमनुभवतोऽपि मधुनः करणभावो भवति । तदेवमग्निष्टोमयाजीत्यस्यायमर्थः—अग्निष्टोमेन करणेन स्वर्गं भावितवानिति । स्वर्गशब्दस्तु वृत्तावन्तर्हितत्वान्न प्रयुज्यते ॥ ८५ ॥

**कर्मणि हनः ॥ पितृव्यघातीति ।** 'हनस्तोऽचिण्णलोः' इति तत्वम् । 'हो हन्तेर्ञ्णिन्नेषु' इति घत्वम्, 'सौ च' इति दीर्घत्वम् । **कुत्सितग्रहणं कर्त्तव्यमिति ।** 'कुत्सित' इति प्रत्ययार्थस्य विशेषणम् । गृह्यतेऽनेनेति ग्रहणम् । तत् पुनर्व्याख्यानम् । एतदुक्तं भवति—येन कुत्सितः कर्त्ता प्रत्ययार्थो गृह्यते तद् व्याख्यानं कर्त्तव्यमिति । तत्रेदं व्याख्यानम्—वक्ष्यमाणबहुलग्रहणमपकृष्येह सम्बन्धः क्रियते, तेन पितृव्यवधादिकां प्रतिषिद्धां क्रियां कुर्वाणो यः कर्त्ता कुत्स्यते तत्रैव, नान्यत्र ॥ ८६ ॥

**पदमञ्जरी**

पदान्तरोपात्तमपि पुरुषोपसर्जनमपि सुखरूपं स्वर्गमेवावलम्बते । ततः करणापेक्षायां समानपदोपात्तो धात्वर्थः करणं भवति, पश्चात्सन्निधिसमाम्नातं दीक्षणीयादीतिकर्तव्यतयान्वेतीत्येषा **मीमांसकमर्यादा** । यत्र तु न विध्यवरोधो भावनायास्तत्र धात्वर्थ एव भाव्यो भवति, यथा—पचति पाकं करोति, गच्छति गमनं करोतीत्यादि निर्दिश्यते । ननु भावनया सम्पद्यमानस्य बाह्यव्यापारस्य कथं तत्र करणत्वम् ? को दोषः ? करणं खलु सर्वत्र कर्तृव्यापारगोचरः, कुठारेण छिनत्तीत्यत्रापि उद्यमननिपातनरूपेण कर्तृव्यापारेणाप्यमानस्यैव कुठारस्य तत्र करणत्वम्, तदेव कथं द्विधाभवनरूपेण फलेनावच्छिन्नयोस्तयोश्छेदनरूपत्वं न स्वरूपत्वम्, न स्वरूपेण रजके दर्शनात्, सोऽपि हि वस्त्रमुद्यच्छते निपातयति च । अथ द्विधाभवनाभावान्न छिनत्तीत्युच्यते, तदेवमुद्यमननिपातयोश्छेदरूपत्वं कुठारगोचरत्वनिबन्धनमिति तस्य तत्र करणत्वम्, तथेहापि भावनायां स्वर्गभावनारूपत्वमग्निष्टोमाख्ययागगोचरत्वनिबन्धनमिति तस्य तत्र करणत्वम् । तदिदमुक्तम्—फलभावनायां करणमिति । इयं हि फलं धात्वर्थं च सम्पादयति, तत्र फलभावनारूपत्वे बाह्यो व्यापारः करणमित्यर्थः । नन्वेवमपि यज्यर्थं प्रति अग्निष्टोमः करणं न भवति ? मा भूत्तत्र करणत्वम्, करणं तावत् सम्बन्धि च यजिना सामानाधिकरण्येन । अथ वा—भावनापि धातोरेव वाच्या, न प्रत्ययस्य; तत्र धात्वर्थैकदेश एकदेशान्तरस्य करणम्, अग्निष्टोमशब्दश्च तत्रैकदेशान्तरे वर्तत इति न किञ्चिदनुपपन्नम् ॥ ८५ ॥

**कर्मणि हनः ॥ कुत्सितग्रहणमिति ।** पितृव्यवधादिना यः कर्त्ता कुत्स्यते तत्रायं प्रत्यय इति वक्तव्यमित्यर्थः ॥ ८६ ॥

**भावबोधिनी**

कर्म उपपद रहते 'हन्' धातु से णिनि = इन् प्रत्यय भूतकाल अर्थ में होता है । उदा० पितृव्यघाती, मातुलघाती । [ पितृव्यं हतवान्, मातुलं हतवान्, इन विग्रहों में कर्म उपपद मानकर 'हन्' से णिनि प्रत्यय, उपधावृद्धि 'हनस्तोऽचिण्णलोः'' सूत्र से 'न्' का 'त्' और ''हो हन्तेर्ञ्णिन्नेषु'' सूत्र से 'ह' का 'घ', उपपदसमास विभक्तिलोप करने पर पितृव्यघातिन्—मातुलघातिन्—से 'सु' प्रत्यय और दीर्घ आदि होता है । ]

* कुत्सित ग्रहण करना चाहिये अर्थात् जिस वध की निन्दा की जाय उसी को करने पर यह प्रत्यय होता है ।* यहाँ न हो—चौरं हतवान् । [ अतः चौरघाती नहीं बनेगा क्योंकि चोर का वध निन्दनीय नहीं है । ] ॥ ८६ ॥

## ८५६. ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥ ( २९९८ )

**'कर्मणि' इति वर्तते । ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्धातोः क्विप् प्रत्ययो भवति भूते । ब्रह्महा । भ्रूणहा । वृत्रहा ।**

**किमर्थमिदमुच्यते, यावता सर्वधातुभ्यः क्विब्विहित एव ? ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् । चतुर्विधश्चात्र नियम इष्यते—(१) ब्रह्मादिष्वेव हन्तेर्नान्यस्मिन्नुपपदे, पुरुषं हतवानिति; (२) ब्रह्मादिषु हन्तेरेव नान्यस्मात् स्यात्, ब्रह्माधीतवानिति; (३) ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव, नान्यः प्रत्ययः; (४) तथा भूतकाल एव, नान्य-**

**न्यासः**

**ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ब्रह्महेति ।** पूर्ववद्दीर्घत्वम् ।

**सर्वधातुभ्यः क्विब्विहित एवेति ।** 'क्विप् च' इत्यनेन । **चतुर्विधश्चात्र नियम इति ।** धातुनियमः, उपपदनियमः, प्रत्ययनियमः, कालनियमः । चकारोऽवधारणे—चतुर्विध एव । **ब्रह्मादिष्वेव हन्तेर्नान्यस्मिन्नुपपद इति**—धातुनियमं दर्शयति । अत एव यत एवकारकरणं ततोऽन्यत्रावधारणमिति । उपपदेभ्यः पर एवकारः प्रयुज्यमानो हन्ति नियमयति । प्रायिकश्चायं नियमः, क्वचिदन्यस्मिन्नुपपदे दृश्यते—मधुहेति । प्रायिकत्वञ्च तस्य वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते । **ब्रह्मादिषु हन्तेरेव नान्यस्मादिति**—उपपदनियमः । अत्र हि हन्तेः पर एवकारः श्रूयमाण उपपदं नियमयति—ब्रह्मादिषु हन्तेर्भूते क्विबेव । **नान्यः प्रत्यय इति**—कालनियमः । ब्रह्माद्युपपदे हन्तेः क्विपि विहिते भूतकालस्य नियमितत्वात् । यदि ब्रह्मादिषु क्विबेव नान्यः प्रत्यय इति, तदा निष्ठापि न प्राप्नोति—ब्रह्माणं हतवानिति ? नैष दोषः; 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इत्यणादय एव बाध्यन्ते, न निष्ठा । एवमपीह वृत्रस्य हन्तुरिति तृज् न प्राप्नोति ? प्रायिकत्वान्नियमस्य न दोषः । **तथा भूतकाल एव, नान्यस्मिन्निति** प्रत्ययनियमः, भूतकाले प्रत्ययो नियम्यत इति कृत्वा । कथं पुनरेकदा चत्वारो

**पदमञ्जरी**

**ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ चतुर्विधश्चात्रेति ।** धातूपपदकालप्रत्ययविषयः । **भाष्ये** तूपपदविषयनियमद्वयं प्रदर्शितम्, तदुपलक्षणम्, न तु नियमान्तरव्यावृत्त्यर्थमिति गम्यते । ब्रह्मादिष्वेव हन्तेरिति धातुनियमः, अत्रापि नियमे भूत इत्याश्रयणात् कालान्तरे उपपदान्तरेऽपि भवत्येव—पुरुषं हन्ति हनिष्यति वा पुरुषहेति । ब्रह्मादिषु हन्तेरेवेत्युपपदनियमः, अत्रापि भूत इत्याश्रयणात् कालान्तरे धात्वन्तरादपि भवत्येव—वृत्रं जयति जेष्यति वा वृत्रजिदिति । भूतकाले क्विबेवेति कालनियमः । **नान्यः प्रत्यय इति ।** यथा 'कर्मणि हनः' 'कर्मण्यण्' इति । उपपदान्तरे तु भूतेऽपि प्रत्ययान्तरं भवत्येव—पितृव्यं हतवान्पितृव्यघातीति, सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते । निष्ठा तु भवत्येव—वृत्रं हतवानिति । तथा भूत एवेति प्रत्ययनियमः;-अत्रापि ब्रह्मादिषु हन्तेरित्या-

**भावबोधिनी**

'कर्मणि' इसकी अनुवृत्ति होती है । 'ब्रह्म' आदि कर्म उपपद रहने पर 'हन्' धातु से क्विप् प्रत्यय भूतकाल अर्थ में होता है । उदा० ब्रह्महा । भ्रूणहा । वृत्रहा । [ ब्रह्म हतवान्, भ्रूणं हतवान्; वृत्रं हतवान् —ये विग्रह हैं । कर्म को उपपद मानकर क्विप् प्रत्यय और उसका सर्वापहारी लोप करके उपपदसमास आदि के बाद—ब्रह्महन् सु, भ्रूणहन्+सु वृत्रहन्+सु—में उपधा दीर्घ, सुलोप, नलोप करने पर रूप बनते हैं । ]

यह सूत्र क्यों कहा जा रहा है क्योंकि क्विप् प्रत्यय तो सभी धातुओं से कहा ही गया है ? ब्रह्म आदि उपपद रहते हन् धातु से क्विप्-वचन नियमार्थ है । यहाँ चार प्रकार का नियम इष्ट है—(१) ब्रह्म आदि ही उपपद हों अन्य उपपद न हों तो 'हन्' से क्विप् हो । अतः—पुरुषं हतवान्—यहाँ नहीं होगा । (२) ब्रह्मादि उपपद रहते 'हन्' धातु से ही क्विप् हो अन्य किसी धातु से नहीं । अतः 'ब्रह्म अधीतवान्'—यहाँ क्विप् नहीं होता है । ( ३ ) ब्रह्म आदि उपपद रहते 'हन्' धातु से भूतकाल में क्विप् प्रत्यय ही होता है, दूसरा प्रत्यय नहीं । ( ४ ) और भूतकाल में ही प्रत्यय होता

स्मिन्; ब्रह्माणं हन्ति हनिष्यति वेति । तदेतद्वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षणाल्लभ्यते ॥

**८५७. बहुलं छन्दसि ॥ ८८ ॥ ( ३४१९ )**

**पूर्वेण नियमादप्राप्तः क्विब्विधीयते । छन्दसि विषये उपपदान्तरेऽपि हन्तेर्बहुलं क्विप्प्रत्ययो भवति । मातृहा सप्तमं नरकं प्रविशेत् । पितृहा ( छां० ७.१५२ ) । न च भवति—मातृघातः, पितृघातः ॥**

**८५८. सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥ ( २९९९ )**

**'कर्मणि' इति वर्तते, तदसम्भवात्सुशब्दं वर्जयित्वा परिशिष्टानां विशेषणं भवति । स्वादिषु कर्मसूपपदेषु करोतेर्धातोः क्विप्प्रत्ययो भवति । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ।**

**न्यासः**

नियमा लभ्यन्त इत्याह—**तदेतदित्यादि** । 'बहुलं छन्दसि' इति वक्ष्यमाणं बहुलग्रहणं पुरस्तादपकृष्यानेन योगेन सम्बध्यते—ब्रह्मभ्रूणवृत्रेषु क्विब् बहुलमिति, तेनायं चतुर्विधो नियमो लभ्यते ॥ ८७ ॥

**बहुलं छन्दसि ॥ ८८ ॥**

**सुकर्मपापमन्त्रपुण्येषु कृञः ॥ सुशब्दं वर्जयित्वेति ।** तस्यासत्त्ववचनात् कर्मत्वानुपपत्तेः । **स्वादिषु कर्मस्विति** । बाहुल्यमाश्रित्योक्तम्, यथा—ब्राह्मणग्रामः, भट्टग्राम इति । कुत एतत् ? सुशब्दं वर्जयित्वेत्यनन्तराणामेवाभिधानात् ।

**पदमञ्जरी**

श्रयणादुपपदान्तरे धात्वन्तराच्च कालान्तरेऽपि भवत्येव । कथं पुनरेकस्मिन्नेव योगे चतुर्विधो नियमो लभ्यते ? इत्याह—**तदेतदिति** । अगृह्यमाणविशेषत्वादेव चतुर्विधो नियमो लब्धुं शक्यते, तत्रैव तूपोद्बलकमेतदुक्तं वेदितव्यम् ॥ ८७ ॥ ८८ ॥

**सुकर्मपापमन्त्रपुण्येषु कृञः ॥ स्वादिष्विति ।** सुशब्दं वर्जयित्वेत्यनन्तरमेवाभिधानादतद्गुणसंविज्ञानो बहुव्रीहिः, बाहुल्याश्रयणेनैवमुक्तम्, आढ्यो ग्राम इतिवत् ।

**भावबोधिनी**

है अन्य किसी काल में नहीं ।' अतः 'ब्रह्माणं हन्ति, अथवा ब्रह्माणं हनिष्यति'—इनमें वर्तमान या भविष्यत् काल में प्रत्यय नहीं होता है । यह सब आगे कहे जाने वाले 'बहुल' ग्रहण का पहले अपकर्ष कर लेने से ज्ञात हो जाता है । [ अर्थात् अग्रिम सूत्र का 'बहुलम्' इस सूत्र में भी सम्बद्ध करके उक्त व्याख्यान सम्भव हो जाता है । ] ॥ ८७ ॥

पूर्व सूत्र में प्रदर्शित नियम से अप्राप्त क्विप् का विधान किया जा रहा है । वेदविषय में अन्य उपपद रहते भी 'हन्' से क्विप् प्रत्यय बहुल रूप से होता है । उदा० मातृहा सप्तमं नरकं प्रविशेत् । पितृहा । [ मातरं हतवान्, पितरं हतवान्—यह विग्रह है । क्विप् प्रत्यय और उसका सर्वापहारी लोप, तथा दीर्घ आदि करने पर रूप बनते हैं । ] और यह क्विप् नहीं भी होता है—मातृघातः, पितृघातः । [ यहाँ अण् होता है । अतः उपधावृद्धि ह्' का 'घ' 'न' का 'त' करने पर रूप बनता है । ] ॥ ८८ ॥

'कर्मणि' इसकी अनुवृत्ति होती है । यह असंभव होने से 'सु' का विशेषण न बनकर अन्य सभी का बनता है । सु आदि कर्म उपपद रहते 'कृ' धातु से क्विप् प्रत्यय होता है । उदा० सुकृत् । [ शोभनं कृतवान् यह विग्रह हैं । क्विप् प्रत्यय, सर्वापहारी लोप, उपपदसमास, "ह्रस्वस्य पिति कृति तुक्" ( पा० सू० ६।१।७१ ) से तुक्=त् आगम करने पर रूप बनता है । इसी प्रकार—कर्म कृतवान्, पापं कृतवान्, मन्त्रं कृतवान्, पुण्यं कृतवान्—इन विग्रहों में ये रूप बनते हैं । ] कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । [ जिसने अच्छा किया । जिसने कर्म किया । जिसने पाप किया । जिसने मन्त्र बनाया । जिसने पुण्य किया । ]

**अयमपि नियमार्थं आरम्भः। त्रिविधश्चात्र नियम इष्यते—धातुनियमं वर्जयित्वा कालोपपदप्रत्ययनियमः। धातोरनियतत्वादन्यस्मिन्नप्युपपदे भवति—शास्त्रकृत्, भाष्यकृत् ॥**

## ८५९. सोमे सुञः ॥ ९० ॥ ( ३००० )

**'कर्मणि' इति वर्तते। सोमे कर्मण्युपपदे सुनोतेर्धातोः क्विप् प्रत्ययो भवति। सोमसुत्, सोमसुतौ, सोमसुतः।**

### न्यासः

**त्रिविधश्चात्र नियम इति।** एवदपि बहुलग्रहणानुवृत्तेर्लभ्यते। **कालोपपदप्रत्ययविषय इति।** कालोपपदप्रत्यया विषया यस्य स तथोक्तः। स पुनः कालनियमः, उपपदनियमः, प्रत्ययनियमश्चेति। तत्र कालनियमः—स्वादिषु कृञो भूत एव क्विबेव भवति, नान्यः प्रत्यय इति; न भवति—कर्म कृतवान् कर्मकार इति। उपपदनियमः—स्वादिषु कृञ एव, नान्यस्माद्धातोरिति; न हि भवति क्विप्—मन्त्रमधीतवानिति, अणेव भवति मन्त्राध्याय इति। प्रत्ययनियमः—स्वादिषु कृञो भूत एव क्विप्, न वर्त्तमाने, भविष्यति वा, तेन मन्त्रं करोति मन्त्रं करिष्यतीति वेत्यर्थविवक्षायां मन्त्रकृदिति न भवति। **शास्त्रकृदिति।** 'क्विप् च' इति क्विप् ॥ ८९ ॥

**सोमे सुञः ॥ धातुकालोपपदप्रत्ययविषय इति।** पूर्ववद् बहुव्रीहिः। कालादिनियमोऽन्यपदार्थः। तत्र काल-

### पदमञ्जरी

**त्रिविधश्चेति।** एतद्बहुलग्रहणानुवृत्तेरेवलभ्यते। **कालोपपदप्रत्ययविषय इति।** तत्र कालनियमात् कर्म कृतवान् कर्मकार इत्यण् न भवति। उपपदनियमात् मन्त्रमधीमधीतवान्मन्त्राध्याय इत्यणेव भवति, न तु क्विप् प्रत्ययनियमात् मन्त्रं करोति करिष्यति वेति विवक्षायामणेव भवति, न तु क्विप्। **शास्त्रकृदिति।** 'क्विप् च' इति क्विप् ॥ ८९ ॥

**सोमे सुञः ॥ धातुकालोपपदप्रत्ययविषय इति।** तत्र भूतकालस्य क्विपि नियतत्वात् सोमं सुतवान्सोमसाव

### भावबोधिनी

वह सूत्र भी नियम के लिए बनाया गया है। यहाँ तीन प्रकार का नियम इष्ट है—धातु के नियम को छोड़कर १—काल, २—उपपद और ३—प्रत्यय का नियम है। धातु के नियत न होने के कारण अन्य शब्द उपपद रहने पर भी यह होता है। जैसे—शास्त्रकृत्। भाष्यकृत्। [ शास्त्रं कृतवान्, भाष्यं कृतवान्—इन विग्रहों में क्विप् प्रत्यय होता है। उसका सर्वापहारी लोप, उपपदसमास तुक् आगम आदि होने पर रूप बनता है। ]

**विमर्श**—पूर्ववर्ती सूत्र के समान प्रस्तुत सूत्र भी नियमार्थ बनाया गया है। यह तीन प्रकार के नियम करता है : ( १ ) कालनियम—सु आदि उपपद रहते कृञ् से केवल भूतकाल अर्थ में ही क्विप् ही होता है, अन्य काल में नहीं। ( २ ) उपपदनियम—स्वादि उपपद रहते हुए कृञ् से ही क्विप् होता है, अन्य धातु से नहीं। ( ३ ) प्रत्ययनियम—सु आदि उपपद रहते कृञ् से भूतकाल में ही क्विप् होता है, वर्तमान या भविष्यत् में नहीं होता है।

यहाँ यह ध्यान रखना चाहिए कि जिसके साथ एवकार ( =ही ) लगाया जाता है, उससे भिन्न में अवधारण किया जाता है। इसी आधार पर न्यासकारादि ने धातुनियम, प्रत्ययनियम, कालनियम, उपपदनियम प्रस्तुत किये हैं ॥ ८९ ॥

'कर्मणि' इसकी अनुवृत्ति है। सोम यह कर्म उपपद रहते 'सु' धातु से क्विप् प्रत्यय होता है। उदा० सोमसुत्, सोमसुतौ, सोमसुतः। [ सोमं सूतवान्—इस 'सोमम्' उपपद 'सु' ( षु ) से क्विप्, सर्वापहारी लोप, 'उपपदसमास, विभक्तिलोप, तुक् आगम—सोमसुत्। द्विवचन में—सोमसुतौ, बहुवचन में सोमसुतः। ]

अयमपि नियमार्थ आरम्भः । चतुर्विधश्चात्र नियम इष्यते—धातुकालोपपदप्रत्ययविषयः ॥

**८६०. अग्नौ चेः ॥ ९१ ॥ ( ३००१ )**

**'कर्मणि' इत्येव। अग्नौ कर्मण्युपपदे चिनोतेर्धातोः क्विप्प्रत्ययो भवति। अग्निचित्, अग्निचितौ, अग्निचितः। अत्रापि पूर्ववच्चतुर्विधो नियम इष्यते।**

**न्यासः**

नियमः—सोमे सुनोतेः क्विबेव भूते, नान्यः प्रत्ययः; न हि भवति—सोमं सुतवान् सोमसाव इति । धातुनियमः—सोम एव सुनोतेः क्विप्, नान्यस्मिन्नुपपद इति; इह न भवति—सुरां सुतवान् सुरासुदिति । उपपदनियमः—सोमे सुनोतेरेव, नान्यस्माद्धातोरिति; इह न भवति क्विप्–सोमं क्रीतवानिति, सोमक्राय इत्यणेव तु भवति । प्रत्ययनियमः—सोमे सुनोतेर्भूत एव क्विप्, नान्यत्रेति; तेन सोमं सुनोति सोष्यति वेत्यर्थविवक्षायां सोमसुदिति न भवति ॥ ९० ॥

**अग्नौ चेः ॥ अत्रापि पूर्ववदित्यादि** । तत्र कालनियमः—अग्नौ चिनोतेर्भूते क्विबेव, नान्य इति; तेनाग्निं चितवानित्यर्थविवक्षायामग्निचाय इति न भवति । धातुनियमः—अग्नावेव चिनोतेर्नान्यस्मिन्नुपपद इति; तेनेष्टकाचिदिति न भवति । उपपदनियमः—अग्नौ चिनोतेरेव नान्यस्माद्धातोरिति; तेनाग्निक्रदिति न भवति । प्रत्ययनियमः—अग्नौ चिनोतेर्भूत एव क्विप्, नान्यस्मिन् काले, तेन वर्त्तमानभविष्यतोरग्निचिदिति न भवति ॥ ९१ ॥

**पदमञ्जरी**

इत्यण् न भवति । तथा धातोः सोम एवोपपदे नियतत्वात्सुरां सुतवान्सुरासाव इत्यणेव भवति । तथा सोमस्य सुनोतावेव धातौ नियतत्वात्सोमं क्रीतवान् सोमक्रीरिति क्विब् न भवति, अणेव तु भवति । तथा क्विपो भूते नियतत्वात् सोमं सुनोति सोष्यति वेति विवक्षायां क्विब् न भवति, अणेव तु भवति ॥ ९० ॥

**अग्नौ चेः ॥ अत्रापीत्यादि** । तत्र भूतकालस्य क्विपि नियतत्वादग्निं चितवानग्निचाय इत्यण् न भवति । धातोश्चाग्नावुपपदे नियतत्वादिष्टकाचिदिति न भवति । अग्नेश्चिनोतावेव नियतत्वादग्निभृदिति न भवति । क्विपश्च भूत एव नियतत्वादग्निं चिनोति चेष्यति वेत्यत्राभावः ॥ ९१ ॥

**भावबोधिनी**

यह सूत्र भी नियम करने के लिए बनाया गया है । यहाँ चार प्रकार का नियम इष्ट है—धातुनियम, कालनियम, उपपदनियम और प्रत्ययनियम ।

[ १—धातुनियम—सोम ही उपपद रहते 'सू' से क्विप् होता है, अन्य उपपद रहते नहीं । २—कालनियम—सोम उपपद रहते 'सू' से क्विप् ही भूतकाल में होता है, दूसरा प्रत्यय नहीं । ३—उपपदनियम—सोम उपपद रहते 'सू' से ही प्रत्यय होता है, अन्य धातु से नहीं । ४—प्रत्ययनियम—सोम उपपद रहते भूतकाल में ही क्विप् होता है, अन्य काल अर्थ में नहीं । ]

यहाँ भी वही ध्यान रखना चाहिए कि जहाँ एवकार=ही है उससे भिन्न में नियम किया जाता है ॥ ९० ॥

'कर्मणि' ( कर्म उपपद रहते ही ) 'अग्नि' कर्म उपपद रहते 'चि' धातु से क्विप् प्रत्यय होता है । उदा० अग्निचित्, अग्निचितौ, अग्निचितः । [ अग्निं चितवान्—यह विग्रह है । क्विप् सर्वापहारी लोप, उपपदसमास, विभक्तिलोप, तुक् आगम—सोमसुत् । ] इसमें भी पूर्ववर्ती सूत्रों के समान ( धातु, काल, उपपद और प्रत्यय का ) चार प्रकार का नियम इष्ट है।

[ १—धातुनियम—अग्नि ही उपपद रहते 'चि' धातु से क्विप् होता है । अन्य उपपद रहते नहीं । २—कालनियम—अग्नि उपपद रहते 'चि' धातु से क्विप् ही होता है अन्य प्रत्यय नहीं । ३—उपपदनियम—'सोम' उपपद रहते 'सु' धातु से ही क्विप् होता है, अन्य से नहीं । ४—प्रत्ययनियम—अग्नि उपपद रहते 'चि' धातु से भूत में ही क्विप् होता है, अन्य काल में नहीं ।

यहाँ भी जहाँ एवकार = हीं है उससे भिन्न में नियम समझना चाहिये ॥ ९१ ॥

**८६१. कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥ ( ३००२ )**

'चेः कर्मणि' इति वर्तते। कर्मण्युपपदे चिनोतेः कर्मण्येव कारके क्विप् प्रत्ययो भवति अग्न्याख्यायाम्, धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते। श्येन इव चीयते श्येनचित्। कङ्कचित्।

आख्याग्रहणं रूढिसम्प्रत्ययार्थम्। अग्न्यर्थो हीष्टकाचय उच्यते श्येनचिदिति।

**८६२. कर्मणीनिर्विक्रियः ॥ ९३ ॥ ( ३००३ )**

कर्मण्युपपदे विपूर्वात्क्रीणातेर्धातोरिनिप्रत्ययो भवति। 'कर्मणि' इति वर्तमाने पुनः कर्मग्रहणं कर्तुः

**न्यासः**

**कर्मण्यग्न्याख्यायाम्** ॥ 'कर्मणि हनः' इत्यत उपपदविशेषणे कर्मग्रहणेऽनुवर्त्तमाने यत् पुनरिह कर्मग्रहणं तस्य प्रत्ययार्थत्वं विज्ञायत इत्याह—**कर्मण्येव कारक इति**। **धातूपपदेत्यादिना** समुदायोपाधित्वमेतदग्न्याख्या-ग्रहणस्य दर्शयति।

**आख्याग्रहणं रूढिसम्प्रत्ययार्थमित्यादि**। अग्निशब्दोऽयमग्निसामान्यवाची, अत्रासत्याख्याग्रहणे विशेषो न विज्ञायते—कस्येह ग्रहणमिति, रूढिसम्प्रत्ययार्थमाख्याग्रहणं क्रियते। किं पुनः कारणं तदर्थमाख्याग्रहणं क्रियत इत्याह—**अग्न्यर्थो ही त्यादि**। अग्न्यर्थो य इष्टकानां रचनाविशेषः स श्येनचिदित्युच्यते, तत्रैवायं प्रत्यय इष्यते। स कथं तत्रैव लभ्यते? यस्य ग्रहणं क्रियते, तस्मिंश्च सति प्रसिद्धो गृह्यमाणोऽग्न्यर्थो य इष्टकानां रचना-विशेषः स एव प्रत्ययार्थो वाच्यतया विज्ञायते, नान्यः ॥ ९२ ॥

**कर्मणीनिर्विक्रियः** ॥ **कर्मणीति वर्त्तमान इत्यादि**। 'कर्मणि हनः' इत्यतः। **पुनः कर्मग्रहणमित्यादि**।

**पदमञ्जरी**

**कर्मण्यग्न्याख्यायाम्** ॥ 'कर्मणि हनः' इत्यतोऽनुवृत्तं कर्मग्रहणमुपपदम्, इदं तु कर्मप्रत्ययार्थमित्याह—**कर्मण्येव कारक इति**। एवकारः पौनर्वचनिकः। उपपदं तावत्कर्मप्रत्ययार्थोऽपि कर्मैवेति। **आख्याग्रहणं रूढिसम्प्रत्ययार्थमिति**। अग्निशब्दो लोके ज्वलने रूढः, वेदे त्वग्न्यर्थ इष्टकाचयेऽपि प्रचुरः प्रयोगः—'य एवं विद्वानग्निं चिनुते,' ( तै० सं० ५, ५, २, १ ) 'अग्निं चेष्यमाणः' ( मै० ३, २, २ )। इति, स मुख्यो जघन्यो वा भवतु; इह त्वसत्याख्याग्रहणे लोकप्रसिद्धिवशेन ज्वलन एव गृह्येत, मा ग्राहि, इष्टकाचय एव गृह्यतामित्याख्या-ग्रहणमित्यर्थः ॥ ९२ ॥

**कर्मणीनिर्विक्रयः** ॥ **कर्मणीति वर्तमान इति**। 'कर्मणि हनः' इत्यतः कर्त्तुः कुत्सानिमित्ते कर्मणीति

**भावबोधिनी**

'चेः कर्मणि' इनकी अनुवृत्ति होती है। कर्म उपपद रहते 'चि' धातु से 'कर्म' कारक में ही क्विप् होता है यदि अग्नि की आख्या हो तो, धातु, उपपद और प्रत्यय इन तीनों के समुदाय से यदि अग्नि की आख्या प्रतीत होती हो तो। उदा० श्येन इव चीयते—श्येनचित्। कंकचित्। ]

आख्या का ग्रहण रूढि का ज्ञान कराने के लिये है। अग्नि के लिये जो इष्टकाओं का चयन होता है वह 'श्येन-चित्' ऐसा कहा जाता है।

**विमर्श**—लोक में 'अग्नि' शब्द आग अर्थ में प्रसिद्ध है किन्तु वेद में अग्नि के लिये होने वाले इष्टकाचय को भी 'अग्नि' कहा जाता है, यह रूढि = परम्पराप्राप्त प्रयोग है। इसका ज्ञान कराने के उद्देश्य से ही 'आख्या' का ग्रहण किया गया है। इसीलिये श्येन इव चीयते—यह विग्रह है। यहाँ 'श्येन' कर्म उपपद 'चि' से क्विप् प्रत्यय, सर्वापहारी लोप आदि कार्य होता है। कङ्क इव चीयते—इस विग्रह में—कंकचित्। श्येनचित् तथा कंकचित्—इनसे इष्टकाचय अर्थ प्रतीत होता है ॥ ९२ ॥

कर्म उपपद रहते 'वि' पूर्वक 'क्री' धातु से 'इनि' प्रत्यय होता है। 'कर्मणि' इसकी अनुवृत्ति रहने पर भी पुनः

**कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्। सोमविक्रयी। रसविक्रयी। इह न भवति—धान्यविक्रायः।**

## ८६३. दृशेः क्वनिप् ॥ ९४ ॥ ( ३००४ )

**'कर्मणि' इत्येव। दृशेर्धातोः कर्मण्युपपदे क्वनिप् प्रत्ययो भवति। मेरुदृश्वा। परलोकदृश्वा। 'अन्येभ्योऽपि दृश्यन्ते ( ३.२.७५ ) इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम् ॥**

## ८६४. राजनि युधिकृञः ॥ ९५ ॥ ( ३००५ )

**'कर्मणि' इत्येव। राजन्शब्दे कर्मण्युपपदे युध्यतेः करोतेश्च क्वनिप्प्रत्ययो भवति। ननु च युधिर-**

### न्यासः

यत् कर्म क्रियासम्बन्धमनुभवत् कर्त्तुः कुत्सामावहति तत् कुत्सानिमित्तं कर्म यथा स्यादित्येवमर्थम्। कर्मग्रहणेऽनुवर्त्तमाने पुनः कर्मग्रहणमनन्तरसूत्रे यत् कर्मप्रत्ययार्थत्वेऽनिष्टं कर्मग्रहणं तन्निवृत्त्यर्थम्। कर्मग्रहणं कस्मान्न भवति ? तस्य स्वरितत्वादेवानुवृत्तेः। **सोमविक्रयीति**। सोमविक्रयणं शास्त्रे प्रतिषिध्यत इति सोमाख्यं कर्म विक्रयणक्रियया सम्बध्यमानं विक्रेतुः कुत्सामावहति। **धान्यविक्राय इति**। 'कर्मण्यण्' ॥ ९३ ॥

**दृशेः क्वनिप्** ॥ **प्रत्ययान्तरनिवृत्त्यर्थमिति**। प्रत्ययान्तरमणादि, तस्य निवृत्त्यर्थम्। निवृत्ते सत्यपि प्रत्ययः प्रत्ययान्तरत्वे ( ? ) भवत्येव—परलोकं दृष्टवानिति। अत्र च कारणं ब्रह्मभ्रूणसूत्र एव उक्तम् ॥ ९४ ॥

**राजनि युधिकृञः** ॥ ननु च युधिरयमकर्मकः, तत् कथं तस्य कर्मणीत्युपपद्यत इत्यभिप्रायेणाह-

### पदमञ्जरी

यत्कर्म क्रियासम्बद्धं कर्तुः कुत्सामावहति तत्रेत्यर्थः। सोमादीनां विक्रयः शास्त्रे निषिद्धः ॥ ९३ ॥

**दृशेः क्वनिप् ॥ प्रत्ययान्तरनिवृत्त्यर्थमिति**। प्रत्ययान्तरं सह निर्दिष्टं मनिनादि, अणादि च। सोपपदान्निष्ठा तु भवत्येव—परलोकं दृष्टवानीति ॥ ९४ ॥

**राजनि युधिकृञः ॥ ननु च युधिरकर्मक इति**। तत्कथं राजन्शब्दे कर्मवाचिन्युपपद इत्युक्तमिति भावः।

### भावबोधिनी

जो 'कर्मणि' इसका ग्रहण है वह कर्ता के कुत्सानिमित्त कर्म में जैसे प्रत्यय हो, कर्ममात्र में न हो, इसके लिये है। उदा० सोमविक्रयी। [ सोमं विक्रीणीते—यह विग्रह है। 'सोमम्' उपपद 'विक्री + इन्, धातु के 'ई' का गुण, अय् आदेश, उपपदसमास विभक्ति का लोप—सोमविक्रयिन्। सोम को बेचना शास्त्र में निषिद्ध है। अतः उसे बेचने वाले की निन्दा प्रतीत होती है। ] रसविक्रयी। [ रसं विक्रीणीते—यह विग्रह है। रस = सोम रस को बेचने वाला। ] यहाँ नहीं होता है—धान्यविक्रायः। [ धान्यं विक्रीणीते—इस विग्रह 'इनि' न होकर 'कर्मण्यण्' सूत्र से अण्, 'ई' की वृद्धि ऐ, आय् आदेश, उपपदसमास आदि करने पर रूप बनाता है ] ॥ ९३ ॥

'कर्मणि' इसकी अनुवृत्ति होती है। कर्म उपपद रहते 'दृश्' धातु से क्वनिप् = वन् प्रत्यय होता है। उदा० मेरुदृश्वा। परलोकदृश्वा। [ मेरुम् दृष्टवान्, परलोकं दृष्टवान्—ऐसी विग्रह है। क्वनिप् = वन् प्रत्यय उपपदसमास विभक्ति-लोप करने पर—मेरुदृश्वन्, परलोकदृश्वन्। सु प्रत्यय करने पर दीर्घ, सुलोप, नलोप करने पर रूप बनता है। ]

"अन्येभ्योऽपि दृश्यन्ते' ( पा० सू० ३.२.७५ ) इससे क्वनिप् प्रत्यय की सिद्धि रहने पर भी पुनः यहाँ क्वनिप् करना दूसरे अण् आदि प्रत्ययों को रोकने के लिये है। [ यहाँ यह ध्यान रखना चाहिये सोपपद से निष्ठा प्रत्यय = क्त, क्तवतु तो होते ही हैं—परलोकं दृष्टवान्। ] ॥ ९४ ॥

'कर्मणि' इसी की अनुवृत्ति होती है। राजन् शब्द कर्म उपपद रहते 'युध्' और 'कृ' धातुओं से क्वनिप् = वन् प्रत्यय होता है। [ युध् तो अकर्मक है [ अतः कर्म उपपद कैसे होगा ] ? ण्यर्थ को अन्तर्भावित मान कर सकर्मक हो जाता

**कर्मकः ? अन्तर्भावितण्यर्थः सकर्मको भवति । राजयुध्वा । राजानं योधितवानित्यर्थः । राजकृत्वा ॥**

## ८६५. सहे च ॥ ९६ ॥ ( ३००६ )

**सहशब्दे चोपपदे युधिकृञोर्धात्वोः क्वनिप्प्रत्ययो भवति । असत्त्ववाचित्वान्नोपपदं कर्मणा विशेष्यते । सहयुध्वा । सहकृत्वा ॥**

## ८६६. सप्तम्यां जनेर्डः ॥ ९७ ॥ ( ३००७ )

**सप्तम्यन्ते उपपदे जनेधातोर्डः प्रत्ययो भवति । उपसरे जातः उपसरजः । मन्दुरजः ॥**

### न्यासः

**अन्तर्भावितण्यर्थ इत्यादि ।** अन्तर्भावितः=अनुप्रवेशितो ण्यर्थो यस्मिन्निति बहुव्रीहिः । राजा युध्यते, तं प्रयुङ्क्ते पुरुषो योद्धुं वेति । तत्रासौ पुरुषस्य व्यापारः प्रेषणादिकोऽर्थो ण्यर्थो यदा बुद्धया युध्यतेरन्तर्भाव्यते तदासौ प्रयोज्यकर्मणा सकर्मको भवति । **योधितवानिति ।** ण्यन्तस्य प्रयोगः । 'निष्ठायां सेटि' इति णिलोपः ॥ ९५ ॥

**सहे च ॥ असत्त्ववाचित्वान्नोपपदं कर्मणा विशेष्यत इति,** तदर्थस्य कर्मत्वानुपपत्तेः ॥ ९६ ॥

**सप्तम्यां जनेर्डः ॥** सप्तमीति प्रत्ययग्रहणम् । तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं भवतीत्याह— **सप्तम्यन्त उपपद इति ।** स्वरूपग्रहणमत एव न भवति । **उपसरज इति ।** डित्करणसामर्थ्यादभसंज्ञकस्यापि टिलोपः । **मन्दुरज इति ।** 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः ॥ ९७ ॥

### पदमञ्जरी

**अन्तर्भावितण्यर्थ इति ।** अनेकार्थत्वाद्धातूनां लक्षणया वा यदा ण्यर्थमपि युधिरेवान्तर्भावयति तदा प्रयोज्येन कर्मणा सकर्मको भवतीत्यर्थः ॥ ९५ ॥

**सहे च ॥ असत्त्ववचनत्वान्नोपपदं कर्मणा विशेष्यत इति ।** अतश्च 'कर्मणि' इति नानुवर्तते इति भावः । न पुनरनुवर्तमानस्यैवात्रासम्बन्धः, उत्तरत्राप्यनुपयोगात् ॥ ९६ ॥

**सप्तम्यां जनेर्डः ॥ मन्दुरज इति ।** 'वाजिशाला तु मन्दुरा' (इत्यमरः २. २. ७) । 'ङ्यापोस्संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः ॥ ९७ ॥

### भावबोधिनी

है । उदाहरण—राजयुध्वा । [राजानं योधितवान्—इस विग्रह में 'राजानम्' उपपद 'युध्' से क्वनिप् = वन्, उपपदसमास विभक्तिलोप, न् लोप—राजयुध्वन्+सु । दीर्घ, सुलोप, नलोप—राजयुध्वा ] राजकृत्वा । [ राजानं कृतवान्—यहाँ भी 'राजानम्' उपपद 'कृ' से क्वनिप्=वन् प्रत्यय उपपदसमास विभक्तिलोप, नलोप—राजकृ+वन्, "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक्=त् आगम—राजकृत्वन्+सु, दीर्घ, सुलोप, नलोप—राजकृत्वा । राजा को बनाने वाला । ] ॥ ९५ ॥

और 'सह' शब्द उपपद रहते 'युध्' तथा 'कृ' धातुओं से क्वनिप् = वन् प्रत्यय होता है । सह शब्द असत्त्व= अद्रव्य का वाची है अतः उपपद को कर्म से विशेषित नहीं किया जाता है । उदा० सहयुध्वा । [ सह योधितवान्—यह विग्रह है । ] सहकृत्वा । [ सह कृतवान्—यह विग्रह है । प्रक्रिया पूर्ववत् है । साथ में लड़ाने वाला । साथ में करने वाला । ] ॥ ९६ ॥

सप्तम्यन्त उपपद रहते 'जन्' धातु से 'ड'=अ प्रत्यय होता है ॥ उदा० उपसरे जातः—उपसरजः । मन्दुरायां जातः—मन्दुरजः । [ 'उपसरे' तथा 'मन्दुरायाम्' को उपपद मानकर 'जन्' धातु से ड=अ प्रत्यय, डित् होने से टि= अन् का लोप, उपपदसमास आदि कार्य करने पर रूप बनता है । उपसर=प्रथम गर्भग्रहण में उत्पन्न । मन्दुरा= घुड़शाला में उत्पन्न । ] ॥ ९७ ॥

## ८६७. पञ्चम्यामजातौ ॥ ९८ ॥ ( ३००८ )

**पञ्चम्यन्ते उपपदे जातिवर्जिते जनेर्डः प्रत्ययो भवति । बुद्धिजः । संस्कारजः । दुःखजः । अजाताविति किम् ? हस्तिनो जातः । अश्वाज्जातः ॥**

## ८६८. उपसर्गे च संज्ञायाम् ॥ ९९ ॥ ( ३००९ )

**उपसर्गे चोपपदे जनेर्डः प्रत्ययो भवति संज्ञायां विषये । समुदायोपाधिः संज्ञा । अथेमा मानवीः प्रजाः ।**

## ८६९. अनौ कर्मणि ॥ १०० ॥ ( ३०१० )

**अनुपूर्वाद् जनेः कर्मण्युपपदे डः प्रत्ययो भवति । पुमांसमनुजातः पुमनुजः । स्त्र्यनुजः ।**

### न्यासः

**पञ्चम्यामजातौ ॥ बुद्धिज इति ।** 'जनिकर्त्तुः प्रकृतिः' इति बुद्धेरपादानत्वादपादाने पञ्चमी, तदस्योपपदत्वम् । बुद्ध्यादिशब्दा जातिशब्दा न भवन्ति; बुद्ध्यादीनामात्मगुणत्वात् ॥ ९८ ॥

**उपसर्गे च संज्ञायाम् ॥ समुदायोपाधिरिति ।** धातूपसर्गप्रत्ययसमुदायेन यदि संज्ञा गम्यत एवं प्रत्ययार्थो भवति, नान्यथेति दर्शयति—**प्रजेति ।** प्राणिसमुदायस्यैषा संज्ञेति । यद्यस्य सूत्रस्य प्रजेत्येतदेवोदाहरणम्, तदा 'प्रे जनः संज्ञायाम्' इति वक्तव्ये प्रजेति सिध्यत्येव, किमुपसर्गग्रहणेन ? उपसर्गग्रहणमुत्तरार्थम्; 'अनौ कर्मणि' इत्युपसर्गे यथा स्यात्, कर्मप्रवचनीये मा भूत् । अथानन्त्यस्य प्रयोगविषयस्यान्यस्मिन्नुपपदे कदाचित् प्रत्ययो दृश्यते यदि, तदैतदर्थमपि ॥ ९९ ॥

**अनौ कर्मणि । अनुपूर्वाज्जनेरित्यादि ।** अथानुशब्दस्योपपदत्वं कस्मान्न भवति ? यतो न भवति स हेतुः 'उदि कूले रुजिवहोः' इत्यत्र व्याख्यात इति पुनर्नाख्यायते । **पुमनुज इति ।** लुप्तेऽपि सुपि प्रत्ययलक्षणेन पदत्वम्, तेन संयोगान्तलोपो भवति ॥ १०० ॥

### पदमञ्जरी

**पञ्चम्यामजातौ ॥** बुद्ध्यादय आत्मगुणाः, खेदः=रागः, 'खेदात् स्त्रीषु प्रवृत्तिरिति [ भाष्ये ] दर्शनात्' ॥९८॥
**उपसर्गे च संज्ञायाम् ॥** प्रजेति प्राणिजातस्यैषा संज्ञा ॥ ९९ ॥

**अनौ कर्मणि । पुमांसमनुजात इति ।** पुमांसमनुरुद्धच जात इत्यर्थः, तेनास्य सकर्मकत्वम् **पुमनुज** इति पुंसः संयोगान्तलोपः ॥ १०० ॥

### भावबोधिनी

जातिवर्जित पञ्चम्यन्त उपपद रहते 'जन्' धातु से 'ड'=अ प्रत्यय होता है । उदा० बुद्धिजः । [ बुद्धेः जातः—यह विग्रह है । बुद्धि से पैदा होने वाला ] संस्कारजः । [ संस्कारात् जातः । संस्कार से पैदा होने वाला । ] दुःखजः । [ दुःखात् जातः । दुःख से उत्पन्न । ]

'जातिवर्जित' इसका क्या फल है ? हस्तिनः जातः । [ हाथी से उत्पन्न ] । अश्वात् जातः । [ घोड़े से उत्पन्न । यहाँ हस्ती तथा अश्व दोनों जातिवाची हैं । अतः प्रत्यय नहीं होता है । ] ॥ ९८ ॥

संज्ञा—विषय में, उपसर्ग उपपद रहते 'जन्' धातु से 'ड' प्रत्यय होता है । उपपद, धातु और प्रत्यय इनके समुदाय से संज्ञा की प्रतीति होनी चाहिये । उदा० अथेमा मानवीः प्रजा । [ प्र जन् + ड=अ, टिलोप, उपपदसमास टाप् = आ करने पर रूप बनता है । ] ॥ ९९ ॥

कर्म उपपद रहते 'अनु' पूर्वक 'जन्' धातु से 'ड' प्रत्यय होता है । उदा० पुमांसम् अनुजातः— इस विग्रह में— पुमांसम् उपपद अनुजन् + ड=अ, उपपदसमास, बिभक्तिलोप पुम् अनुज=पुमनुजः ] स्त्र्यनुजः । [ स्त्रियम् अनुजातः—यह विग्रह है । पूर्ववत् प्रत्यय आदि होता है । ] ॥ १०० ॥

**८७०. अन्येष्वपि दृश्यते ॥ १०१ ॥ ( ३०११ )**

**अन्येष्वप्युपपदेषु कारकेषु जनेर्डप्रत्ययो दृश्यते । सप्तम्यामित्युक्तम्, असप्तम्यामपि दृश्यते । न जायते इत्यजः । द्विर्जाताः द्विजा ।**

**'पञ्चम्यामजातौ' ( ३.२.९८ ) इत्युक्तम्, जातावपि दृश्यते—ब्राह्मणजो धर्मः । क्षत्रियजं युद्धम् ।**

**'उपसर्गे च संज्ञायाम्' ( ३.२.९९ ) इत्युक्तम्, असंज्ञायामपि दृश्यते । अभिजाः, परिजाः केशाः ।**

**'अनौ कर्मणि' ( ३.२.१०० ) इत्युक्तम्, अकर्मण्यपि दृश्यते–अनुजातः अनुजः ।**

**अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि भवति कारकान्तरेऽपि । परितः खाता परिखा । आखा ॥**

**न्यासः**

**अन्येष्वपि दृश्यते ॥ अपिशब्द इत्यादि ।** सर्व उपाधय उपपदादयः; तेषां व्यभिचारो यथा स्यादित्येवमर्थोऽपिशब्दः । **धात्वन्तरादपीति ।** 'खनु अवदारणे' इत्येतस्मात् । **कारकान्तरेऽपीति ।** कर्तुरन्यस्मिन् कारके कर्मणि ॥ १०१ ॥

**पदमञ्जरी**

**अन्येष्वपि दृश्यते ॥ द्विर्जात इति ॥**

मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनम् ।
तत्रास्य माता सावित्री पिता वाचार्य उच्यते ॥ ( मनु० २. १६९ )॥ १०१ ॥

**भावबोधिनी**

अन्य कारक भी उपपद रहते 'जन्' से 'ड'=अ प्रत्यय होता है । 'सप्तम्यन्त' यह कहा जा चुका है, अतः सप्तम्यन्तभिन्न उपपद रहते भी 'ड' देखा जाता है । उदा० न जायते—इस विग्रह में—अजः । [ न पैदा होने वाला । नञ् उपपद जन्+ड = अ, टि–लोप, समास, 'नलोपो नञः' सूत्र से न्' का लोप करने पर—अजः । ] द्विः जातः—इस विग्रह में –द्विजः । [ दो बार उत्पन्न होने वाला, पहले गर्भ से दूसरी बार संस्कार से, उसे द्विज कहा जाता है । द्वि उपपद जन्+ड=अ, प्रक्रिया पूर्ववत् । ]

अजातिवाची पञ्चम्यन्त उपपद रहते—यह कहा गया है, अतः जातिवाची पञ्चम्यन्त भी उपपद रहते प्रत्यय देखा जाता है । उदा० ब्राह्मणजः धर्मः, क्षत्रियजं युद्धम् । [ ब्राह्मणात् जातः, क्षत्रियात् जातम्—ये विग्रह हैं । ब्राह्मण और क्षत्रिय जातिवाची पञ्चम्यन्त उपपद मानकर भी 'ड' होता है । ]

'उपसर्गपूर्वक संज्ञा में' ऐसा कहा गया अतः 'असंज्ञा में 'भी' देखा जाता है । उदा० अभिजाः; परिजाः केशाः । [ अभितः जायन्ते, परितः जायन्ते—ये विग्रह हैं । 'अभि' और 'परि' पूर्वक जन्+ड=अ, टिलोप आदि करने पर रूप होता है । ]

'अनु' पूर्वक 'जन्' से कर्म उपपद रहते' कहा गया है, अतः कर्मभिन्न उपपद रहते भी देखा जाता है—अनुजातः–इस विग्रह में—अनुजः ।

सूत्र में 'अपि' शब्द पूर्वोक्त सभी उपाधियों के व्यभिचार के लिये हैं । [ अतः उन उपाधियों के अभाव में भी होता है । ] इस लिये 'जन्' से भिन्न धातु से भी होता है और उक्त कारकों से भिन्न उपपद रहते भी होता है । परितः खाता—इस विग्रह में—परिखा । आ समन्तात् खाता—इस विग्रह में—आखा । [ 'परि' तथा 'आङ्' पूर्वक 'खन्' धातु से भी ड = अ, टि = अन् का लोप, उपपदसमास, टाप्=आ करने पर रूप बनता है । ] ॥ १०१ ॥

८७१. निष्ठा ॥ १०२ ॥ ( ३०१३ )

**'क्तक्तवतू निष्ठा' ( १.१.२६ ) इत्युक्तम्, स निष्ठासंज्ञकः प्रत्ययो भूते भवति । कृतम्, कृतवान् । भुक्तम्, भुक्तवान् ।**

**निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः—संज्ञायां क्तक्तवतू भाव्येते, सतोश्चानयोः संज्ञया भाव्यम् ? नैष दोष; भाविनी संज्ञा विज्ञायते—स भूते भवति यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति । सामर्थ्यात् क्तक्तवत्वोर्विधानमेतत् ।**

न्यासः

**निष्ठा** ॥ **कृतमिति** । अत्र कित्वाद् गुणाभावः । **कृतवानिति** । 'उगिदचाम्' इति नुम् । 'अत्वसन्तस्य चाधातोः' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ ।

**निष्ठायामित्यादि** । निष्ठासंज्ञके प्रत्यये विधातव्येऽप्रसिद्धनिष्पत्तिकस्य निष्ठासंज्ञकस्य प्रत्ययस्य निष्ठेति चास्याः संज्ञाया अप्रसिद्धिः, कुतः ? इतरेतराश्रयत्वात् । कथमितरेतराश्रयत्वमित्याह—**संज्ञायामित्यादि** । निष्ठेत्येवं संज्ञामुच्चार्य क्तक्तवत्वोरिह भूते विधानम्, विद्यमानयोश्च तयोः संज्ञया भवितव्यमितीतरेतराश्रयत्वम्, इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्पन्ते । यदि तौ क्तक्तवतू स्वरूपेण विज्ञातौ भवत एवञ्च 'क्तक्तवतू निष्ठा' इत्यन्यस्य संज्ञा विधातुं शक्यते, नान्यथा । अतः संज्ञाया अप्रसिद्धिः तस्याश्चाप्रसिद्धौ तयोरप्रसिद्धिः । **भाविनीति** । भविष्यन्तीत्यर्थः । यथा–अस्य सूत्रस्य शाटकं वयेति । भाविनीशब्दोऽयम् 'गमेरिनिः' 'आङि णित्' 'भुवश्च' इतीनिप्रत्ययान्तो व्युत्पादितः । स च 'भविष्यति गम्यादयः' इति भविष्यत्काले विहितः । तेन भाविनीत्यस्य भविष्यन्तीत्येवार्थो लभ्यते । **सामर्थ्यादित्यादि** । स भूते भवति यस्योत्पन्नस्य निष्ठेत्येषा

पदमञ्जरी

**निष्ठा** ॥ **क्तक्तवतू निष्ठेत्युक्तमिति** । ककारः कित्कार्यार्थः, उकार उगित्कार्यार्थः, 'अत्वसन्तस्य' इति विशेषणार्थश्च । **निष्ठायामित्यादि** । अप्रसिद्धिः = अनिष्पत्तिः, कस्य ? संज्ञायाः, संज्ञिनो वा । कथमित्याह–**संज्ञयेति** । यदि द्विः क्तक्तवतूपग्रहणं क्रियेत–इह, संज्ञाविधौ च, ततो न स्यादितरेतराश्रयत्वमिति संज्ञयेत्युक्तम् । **सतोश्च तयोरिति** । लोके शास्त्रे वा न तावल्लोके सानुबन्धावेतौ स्तः शास्त्रेऽपि यद्यपि 'ञीतः क्तः' 'नपुंसके भावे क्तः' इति क्तः स्वरूपेण विहितोऽस्ति, भूते तु काले नास्ति, क्तवतुस्तु न क्वाप्यस्तीति भावः । **भाविनी संज्ञेति** । संज्ञिनो भावित्वात् संज्ञापि भाविनी सूत्रशाटकवत्, तद्यथा–अस्य सूत्रस्य शाटकं वयेति तन्तुवाय उक्तः, स पश्यति यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, मन्ये स वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । **सामर्थ्यादिति** । 'क्तक्तवतू निष्ठा' इति वचनात् अन्यस्योत्पन्नस्य निष्ठेति संज्ञाया अभावः=

भावबोधिनी

'क्त और क्तवतु' इनकी निष्ठा संज्ञा होती है' यह कहा जा चुका है कि वह निष्ठासंज्ञक प्रत्यय भूतकाल अर्थ में होता है । उदा० कृतम्, कृतवान् । भुक्तम्, भुक्तवान् । [ 'कृ + क्त = त, कृ + क्तवतु = तवत्, प्रातिपदिक संज्ञा के फलस्वरूप सु, 'उगिदचां सर्वनामस्थाने'' इससे उपधा का दीर्घ, सुलोप तथा न् लोप पर—'कृतवान्' रूप बनता है । भुज् + क्तवतु= तवत्, ज् का कुत्व और ग् का क् करने पर भुक्तवत् सु, शेष पूर्ववत् । ]

निष्ठा में इतरेतराश्रय होने से अप्रसिद्ध है—संज्ञा में क्त, क्तवतु किये जाते हैं और विद्यमान क्त तथा क्तवतु की निष्ठा संज्ञा होती है, [ अर्थात् संज्ञा होने पर क्त और क्तवतु का ज्ञान होता हैं, और जब विद्यमान = उद्देश्यभूत क्त, तथा क्तवतु रहते हैं तब उनकी निष्ठा संज्ञा होती है । इस प्रकार अन्योन्याश्रित होने से दोनों की अप्रसिद्धि = अनिष्पत्ति होने लगेगी ? यह दोष नहीं है, भाविनी संज्ञा का ज्ञान किया जाता है—वह भूतकाल अर्थ में होता है, उत्पन्न हुए जिसकी 'निष्ठा' यह संज्ञा की जाती है । सामर्थ्यवश क्त और क्तवतु का यह निष्ठा संज्ञाविधान है ।

❀ आदिकर्मणि निष्ठा वक्तव्या ❀ ( म० भा० ३.२.१०२ वा० ३ )। प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः॥

## ८७२. सुयजोर्ङ्वनिप् ॥ १०३ ॥ ( ३०९१ )

सुनोतेर्यजतेश्च ङ्वनिप् प्रत्ययो भवति। सुत्वा। यज्वा॥

**न्यासः**

संज्ञा भवति। न चान्यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। अपि तु क्तक्तवत्वोरेवेति सामर्थ्यम्।

**आदिकर्मणीत्यादि**। कर्मशब्दोऽत्र क्रियावाची। आदिभूते क्रियारम्भादिभूते प्रथमे क्रियालक्षण इत्यर्थः। यावत्क्रियालक्षणैः सकलः कटः परिसमाप्तिमुपैति क्रियालक्षणानां तावतामपवर्गे भूतकालो भवति। आद्ये क्रियालक्षणे समुदायस्यापरिनिष्पन्नत्वात् वर्त्तमानकाल एवेति। तत्र वर्त्तमाने निष्ठा न प्राप्नोति, अतो वक्तव्यो व्याख्येयः। तत्रेदं व्याख्यानम्—यदयम् 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' इत्यादिकर्मणि निष्ठायाः कित्त्वं विकल्पयति। यद्वा—'आदिकर्मणि क्तः कर्त्तरि च' इत्यादि, तज् ज्ञापयति—आदिकर्मणि निष्ठा भवतीति। **प्रकृतः कटमिति**। प्रशब्दोऽत्रादिकर्म द्योतयति। य एवार्थः प्रकरोति कटं देवदत्त इति, स एवार्थः प्रकृतः कटं देवदत्त इति॥ १०२॥

**सुयजोर्ङ्वनिप्॥ सुत्वेति**। 'ह्रस्वस्य पिति कृति' इति तुक्, 'सर्वनामस्थाने च' इत्यादिना दीर्घः, 'नलोपः प्रतिपदिकान्तस्य' इति नकारलोपः॥ १०३॥

**पदमञ्जरी**

सामर्थ्यम्। **आदिकर्मणीति**। कर्मशब्दः क्रियावाची। एकफलोद्देशप्रवृत्तक्षणसमूहरूपा च क्रिया, तत्राद्ये क्रियाक्षणेऽपवृक्तेऽपि धात्वर्थरूपायाः क्रियाया अनपवृक्तत्वाद्वचनम्। न्याय्या त्वाद्यपवर्गातान्याय्या त्वेषा भूतकालता, कुतः? आद्यपवर्गात्। आदिभूतक्रियाक्षणोऽपवृक्तः तस्मिन्नेव चावयवे समूहरूपो धात्वर्थः परिसमाप्तः। उक्तं च—

समूहः स तथाभूतः प्रतिभेदं समूहिषु।
समाप्यते ततो भेदे कालभेदस्य सम्भवः॥ ( वा० प० ३. ८. ५ ) इति।

तथा च प्राकार्षीत्कटं देवदत्त इति लुङपि प्रयुज्यते। कटावयवे वा कटशब्दो द्रष्टव्यः, ततः केषाञ्चित्कटावयवक्षणानामपरिसमाप्तेः प्रकरिष्यति कटं देवदत्त इति लृट्प्रयोगोऽप्यविरुद्धः।

अपर आह—ज्ञापकात्सिद्धं यदयम् 'आदिकर्मणि क्तः' 'कर्तरि च' 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति चाह, तज्ज्ञापयति—भवत्यादिकर्मणि क्त इति। नैतदस्ति ज्ञापकम्, 'ञीतः क्तः' इति योऽयं वर्तमाने क्तस्तद्विषयमेतत्स्यात्? यदि तद्विषयमेव स्याद्वर्तमानग्रहणमेव कुर्यात्॥ १०२॥

**सुयजोर्ङ्वनिप्। सुनोतेरिति**। 'सु स्रु गतौ' (धा० पा० ९४०), 'सु प्रसवैश्वर्ययोः ( धा० पा० ९४१ )—

**भावबोधिनी**

"आदिकर्म में निष्ठा कहनी चाहिये। ❀ उदा० प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः [ 'प्र' उपसर्ग पूर्व 'कृ' से क्त और क्तवत् प्रत्यय होते हैं। ]

**विमर्श**—'आदिकर्म' में कर्म शब्द क्रियावाचक है। कोई भी क्रिया अनेक क्षणों में सम्पन्न होने वाली होती है उसके आदि क्षणों में वह क्रिया भूतकालिक नहीं होती है फिर भी उसे वैसा मानकर निष्ठा प्रत्यय कर लेने चाहिये। जैसे कट चटाई बनाने में काफी समय लगता है। तब भी उसके प्रारम्भिक काल में ही निष्ठा प्रत्यय हो जाता है। यहाँ क्रिया की समाप्ति प्रतीत न होकर उसका आरम्भ प्रतीत होता है। ॥ १०२॥

'सु' तथा 'यज्' धातुओं से ङ्वनिप् प्रत्यय होता है। उदा० सुत्वा, यज्वा। [ सु + ङ्वनिप् = वन्, "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक् = त् आगम, सु प्रत्यय, दीर्घ आदि करने पर सुत्वा रूप बनता है। इसी प्रकार यज् + ङ्वनिप् = वन्, प्रक्रिया पूर्ववत्। ]॥ १०३॥

## ८७३. जीर्यतेरतृन् ॥ १०४ ॥ ( ३०९२ )

**'भूते' ( ३.२.८४ ) इति वर्तते। जीर्यतेरतृन् प्रत्ययो भवति भूते। जरन्। जरन्तौ। जरन्तः। वाऽसरूपेण निष्ठा—जीर्णः, जीर्णवानिति ॥**

## ८७४. छन्दसि लिट् ॥ १०५ ॥ ( ३०९३ )

**'भूते' इत्येव। छन्दसि विषये धातोर्लिट् प्रत्ययो भवति। अ॒हं सूर्य॑मु॒भय॑तो॑ ददर्श ( वा० सं० ८.९ )। अ॒हं द्यावा॑पृथि॒वी आत॑तान ( तै० ब्रा० १.२.१.३३ )।**

**ननु च 'छन्दसि लुङ्लङ्लिटः' ( ३.४.६ ) इति सामान्येन लिड् विहित एव? धातुसम्बन्धे स विधिः, अयं त्वविशेषेण ॥**

### न्यासः

**जीर्यतेरतृन् ॥ जरन्निति।** अतृनो नित्त्वादाद्युदात्तत्वं भवति। 'उगिदचाम्' इति नुम् ॥ १०४ ॥

**छन्दसि लिट् ॥ ददर्शेति।** दृशेर्लिट्, णल्, द्विर्वचनम्, 'उरत्' इत्यत्वम्, रपरत्वं, हलादिशेषः, लघूपधगुणः। **आततानेति।** 'तनु विस्तारे' आङ्पूर्वः, 'अत उपधायाः' इति वृद्धिः। **धातुसम्बन्धे स विधिरिति।** 'धातुसम्बन्धे प्रत्ययाः' इत्यतो धातुसम्बन्धग्रहणानुवृत्तेः। **अयं त्वविशेषेणेति।** भूतमात्रे। लिट इकारटकारावुत्तरसूत्रे विशेषणार्थौ। 'लः कानज् वा' इत्युच्यमानेऽन्येषामपि लकाराणां ग्रहणं स्यात्। टकारष्टेरेत्त्वार्थः ॥ १०५ ॥

### पदमञ्जरी

इत्यनयोरेव निरनुबन्धकयोर्ग्रहणं प्राप्तम्; अनभिधानादुभयपदिना साहचर्याद्वा न भवति। ङकारः सुनोतेर्गुणप्रतिषेधार्थः, इकार उच्चारणार्थः, पकारः स्वरार्थस्तुगर्थश्च ॥ १०३ ॥ **१०४ ॥**

**छन्दसि लिट् ॥ आततानेति।** 'णलुत्तमो वा' इति णित्त्वपक्षे वृद्धिः। **धातुसम्बन्धे स विधिरिति।** 'धातुसम्बन्धे प्रत्ययाः' इत्यधिकारात्। लिट इकारटकारौ विशेषणार्थौ, 'लिटः कानज्वा' 'लिटचभ्यासस्योभयेषाम्' इत्यादौ 'ल' इत्युच्यमानेऽन्येषामपि लङादीनां ग्रहणं स्यात्, निरनुबन्धकत्वादस्यैव ग्रहणं भविष्यति। परोक्षे लिटोऽपि तर्हि न प्राप्नोति? टकारष्टेरेत्वार्थश्च ॥ **१०५ ॥**

### भावबोधिनी

'भूते' इसकी अनुवृत्ति होती है। 'जॄ' धातु से 'अतृन्' प्रत्यय भूतकाल अर्थ में होता है। उदा० जरन्, जरन्तौ, जरन्तः। [ जॄ+अतृन्, ऋ का गुण, रपर जरतृन्, सु प्रत्यय करने पर नुम्=न्, सुलोप आदि करने पर 'जरन्' रूप बनता है। यह भूतकाल अर्थ में ही होता है। ] "वाऽसरूपोऽस्त्रियाम्" इस नियम के अनुसार निष्ठा=क्त और क्तवतु प्रत्यय भी होते हैं—जीर्णः, जीर्णवान्। [ जॄ+क्त=त, "ॠत इद्धातोः" सूत्र से 'इ' तथा रपर, दीर्घ, णत्व करने पर रूप बनता है—जीर्णः। क्तवतु की प्रक्रिया कृतवान् के समान समझनी चाहिये। ]॥ १०४ ॥

'भूते' इसकी अनुवृत्ति होती है। वेदविषय में धातु से लिट् प्रत्यय भूतकाल में होता है। उदा० सूर्यम् उभयतो ददर्श। [ दृश्+लिट्=तिप्=णल्=अ, द्वित्वादि प्रक्रिया करने पर रूप बनता है। ] अहं द्यावापृथिवी आततान। [ तन्+लिट्=तिप्=णल्=अ, द्वित्व आदि करने पर रूप बनता है। ]

"वेद में लुङ्, लङ् और लिट् होते हैं" ( पा. सू. ३.४.६ ) सूत्र से सामान्य भूत में लिट् किया ही जा चुका है, तब इस सूत्र की क्या आवश्यकता? वह विधान तो 'धातुसम्बन्धे' इसके अन्तर्गत है और यह सामान्यरूप से है। [ अतः उससे इसका काम सम्भव नहीं है। अतः यह सूत्र आवश्यक है। ] १०५ ॥

## ८७५. लिटः कानज्वा ॥ १०६ ॥ ( ३०९४ )

छन्दसि लिटः कानजादेशो भवति वा। अ॒ग्निं चि॑क्या॒नः ( मै० सं० ३.३.९ ) । सोमं॑ सुषु॒वा॒णः ( मै० सं० ४.४.१० )। वरु॑णं सुषु॒वा॒णः ( तै० सं० २.१.९.१ )। न च भवति—अ॒हं सूर्य॑मुभ॒यतो॑ ददर्श ( वा० सं० ८.९ ) अहं॒ द्यावा॑पृथि॒वी आत॑तान ( तै० ब्रा० १.२.१.३३ )।

**लिड्ग्रहणं किम्, न पूर्वस्यैव प्रकृतस्यादेशविधाने विभक्तिविपरिणामो भविष्यति ? लिण्मात्रस्य यथा स्यात्। योऽपि परोक्षे विहितस्तस्याप्ययमादेशो भवति ॥**

**न्यासः**

**लिटः कानज् वा ॥** कानचश्चित्करणमन्तोदात्तार्थम्। कित्करणं कित्कार्यार्थम्। तत् पुनः 'बन्ध बन्धने' इत्येवमादयः संयोगान्ताः प्रयोजयन्ति; नान्ये। असंयोगान्तेभ्यः 'असंयोगाल्लिट् कित्' इति सिद्धः, संयोगान्ता अपि कित्त्वं भाषायां प्रयोजयन्ति, न छन्दसि। तत्राह—'छन्दस्युभयथा' इति लिटः सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वमस्त्येव। न कित्त्वे ङित्त्वे वा च्छन्दसि कश्चिद् विशेषोऽस्ति। भाषायां तु यद्यसंयोगान्तेभ्यः कित्त्वं न स्याद् योऽयम् 'ऋच्छत्यॄताम्' इति गुणः प्रतिषेधविषय आरभ्यते स यथेह न भवति—निपपरतुः, निपपरुरिति, तथेहापि स्यात्—निपपुराण इति; कित्त्वे च सति न भवति। भाषायां तु कित्त्वमर्थवद् भवति। 'पॄ पालनपूरणयोः', निपूर्वात् कानच्। द्विर्वचनात् परत्वाद् 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्; रपरत्वञ्चेति। 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् पॄशब्दो द्विरुच्यते। उरत्त्वरपरत्व-हलादिशेषाः, अट्कुप्वादिना णत्वम्। भाषायां कानज् भवतीत्यस्मादेव ज्ञापकादवसीयते। **चिक्यान इति।** अभ्यासादुत्तरस्य चिनोतेश्चकारस्य 'विभाषा चेः' इति कुत्वम्, 'एरनेकाचः' इत्यादिना यणादेशः। **सुषुवाण इति।** सुनोतेरिति 'अचि श्नुधातु' इत्यादिनोवङादेशः, 'आदेशप्रत्यययोः' इति षत्वम्।

**विभक्तिविपरिणामो भविष्यतीति।** यद्यपि लिडिति प्रथमान्तं प्रकृतं तथाप्यर्थाद् विभक्तिविपरिणामो भविष्यति। आदेशसम्बन्धादुत्तरस्य लिटः षष्ठ्यन्तता भविष्यति। तस्मादन्तरेणापि लिड्ग्रहणं प्रकृतत्वाल्लिट एव कानजादेशो भविष्यतीति लिड्ग्रहणं न कर्त्तव्यमिति भावः। **योऽपीत्यादि।** योऽपि 'परोक्षे लिट्' इत्यनेन लिड् विहि-

**पदमञ्जरी**

**लिटः कानज्वा ॥ चिक्यान इति।** 'चिञ् चयने' ( धा० पा० १२५१ ), 'विभाषा चेः' इति कुत्वम्, 'एरनेकाचः' इति यणादेशः। **न च भवतीति।** वावचनस्य प्रयोजनं दर्शयति। वाऽसरूपविधिश्च लादेशेषु नास्ति, 'हशश्वतोर्लङ् च' इति वचनादित्युक्तम्। नन्वनन्तरसूत्रविहितस्य लिटो नित्यमादेशोस्तु, यस्तु 'छन्दसि लुङ्लङ्लिटः' इति लिट्, तत्र तिङां श्रवणं भविष्यति ? न; तस्य धातुसम्बन्धविषयत्वादधातुसम्बन्धे तिङां श्रवणं न स्यात्। लिण्मात्रस्य च ग्रहणमित्यनन्तरमेव वक्ष्यति।

**पूर्वस्यैवेत्यादि।** प्रत्ययान्तरं तु कानज् न भवति, वावचनाद्वाऽसरूपविधिनैव लुङादीनां सिद्धत्वादिति भावः। **लिण्मात्रस्येति। भाष्ये** त्वन्तरस्यैव लिटोऽयमादेशः, लिड्ग्रहणं च प्रत्ययान्तरत्वं मा विज्ञायीति। वावचनं

**भावबोधिनी**

वेद में लिट् का कानच् आदेश विकल्प से होता है। उदा० अग्निं चिक्यानः। सोमं सुषुवाणः। वरुणं सुषुवाणः। [ चि + लिट्=कानच्=आन, द्वित्वादि कार्य "विभाषा चेः" सूत्र से 'च' का 'क' चिकि + आन, "एरनेकाचोऽसंयोगपूर्वस्य" सूत्र से यण्—चिक्यान। यह कृदन्त होने से प्रातिपदिक है अतः सु प्रत्यय और उसका विसर्ग आदि होता है। सु + लिट्=कानच्=आन, द्वित्व आदि कार्य सु सु + आन, स का ष, "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" ( पा. सू. ६.४७७ ) से 'उ' का उवङ् करके सुषुवान, णत्व, सु तथा उसका विसर्ग होता है। ] वैकल्पिक होने से कानच् नहीं भी होता है—अहं सूर्यमुभयतो ददर्श। अहं द्यावापृथिवी आततान। [ यहाँ ददर्श और आततान में लिट् है, कानच् नहीं है। ]

लिट् का ग्रहण किसलिये है, क्योंकि पूर्व सूत्र के प्रकृत=अनुवृत्त का आदेश के विधान में विभक्तिपरिवर्तन हो जायगा अर्थात् प्रथमान्त के स्थान पर षष्ठ्यन्त हो जायगा ? लिट् मात्र का कानच् हो, इसके लिये दूसरी बार उल्लेख है। जो भी परोक्ष भूत में किया गया हो उसका यह आदेश होता है ॥ १०६ ॥

**८७६. क्वसुश्च ॥ १०७ ॥ ( ३०९५ )**

**छन्दसि लिटः क्वसुरादेशो भवति । जक्षिवान् ( अथर्व० ४.७.३ ) । पपिवान् ( ऋ० १.६१.७ ) । न च भवति – अहं सूर्यमुभयतो ददर्श ( वा० सं० ८.९ ) । योगविभाग उत्तरार्थः ॥**

**न्यासः**

तस्तस्यापि लिङ्ग्रहणे सति कानजादेशो भवति । असति तु तस्मिन् 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इत्यस्यैव स्यात्, न परोक्षे लिटः । अथासति लिङ्ग्रहणे प्रत्ययान्तरं कानच् कस्मान्न विज्ञायते ? अशक्यमेवं विज्ञातुम्, प्रत्ययान्तरे हि 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधो न स्यात् । ततश्चाग्निं चिक्यान इत्यत्राग्नि-शब्दात् षष्ठी स्यात् ॥ १०६ ॥

**क्वसुश्च** ॥ क्वसोरुगित्करणं नुमर्थम् । कित्करणं कानच इव द्रष्टव्यम् । असति हि तस्मिन् 'ऋच्छत्यृताम्' इति यथेह गुणो न भवति—तेरतुः, तेरुरिति; तथेहापि तितीर्वानिति । 'तॄ प्लवनतरणयोः', 'ॠत इद्धातोः' इतीत्वम्, 'हलि च' इति दीर्घः, द्विर्वचनमभ्यासकार्यम् । **जक्षिवानिति** । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः, 'वस्वेकाजाद्घसाम्' इतीट्, 'घसिभसोर्हलि च' इत्युपधालोपः, 'खरि च' इति घकारस्य ककारः, 'शासिवसिघसीनाञ्च' इति षत्वम्, 'कुहोश्चुः' इत्यभ्यासस्य चुत्वम्—झकारः, 'अभ्यासे चर्चः' इति झकारस्य जकारः । **पपिवानिति** । 'पा पाने' । पूर्ववदिट् । 'आतो लोप इटि च' इत्याकारलोपः । **योगविभाग उत्तरार्थ इति** । उत्तरसूत्रे क्वसोरेवानुवृत्तिर्यथा स्यात्, कानचो मा भूत् ॥ १०७ ॥

**पदमञ्जरी**

चोत्तरार्थमिति स्थितम् । कानचश्चित्करणं स्वरार्थम् । कित्करणं किमर्थम्, न 'असंयोगाल्लिट् कित्' इत्येव सिद्धम्, तेन ईजानस्तेपान इत्यादौ संप्रसारणैत्वाभ्यासलोपादिकार्यं भविष्यति ? संयोगान्तार्थम्—'बन्ध बन्धने' ( धा० पा० १०५८ ) 'वृ॒त्रस्य॒ यद्ब॑द्बधा॒नस्य॑ रोदसी ( ऋ० १, ५२, १० ), त्वमर्ण॑वान् बद्बधानाँ॑ अरम्णा' ( ऋ० ५, ३२, १ ) । अत्र 'अनिदिताम्' इति नलोपः, छान्दसत्वादभ्यासधकारस्य हलादिशेषेण निवृत्त्यभावे 'झलां जश् झशि' इति जश्त्वं दकारः । ननु छान्दसः कानच् लिट् च छन्दसि सार्वधातुकमपि भवति, 'छन्दस्युभयथा' इति वचनात्, तत्र 'सार्वधातुकमपित्' इति ङित्त्वं ङितीत्युपधालोपो भविष्यति ? न च संयोगान्तेषु कित्त्वङित्त्वयोर्विशेषोऽस्ति । ऋकारान्तगुणप्रतिषेधार्थं तु, 'ऋच्छत्यृताम्' इति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति– परितस्तरे इति, एवमिहापि स्यात्—'परितिस्तिराणः' ( ऋ० १. १०८. ४ ) इति, तस्मात्कित्करणम् । कित्करणसामर्थ्याद्भाषायामपि कानजस्तीत्येतत्तु भाष्यविरोधादुपेक्ष्यम् ॥ १०६ ॥

**क्वसुश्च** । क्वसोरुकार उगित्कार्यार्थः, जक्षिवानित्यादौ 'उगिदचाम्' इति नुम्, उपसेदुषीत्यादौ 'उगितश्च' इति ङीप्, 'वसोः संप्रसारणम्' इत्यत्र सामान्यग्रहणमप्युकारस्य प्रयोजनम् । कित्करणं किमर्थं न 'असंयोगाल्लिट् कित्' इत्येव सिद्धम् ? संयोगान्तार्थम् । अञ्जेः आजिवान्– उपधालोपो भवति, छान्दसः क्वसुः लिट् । छन्दसि

**भावबोधिनी**

वेदविषय में लिट् का क्वसु आदेश भी होता है । उदा० जक्षिवान् । पपिवान् [ अद् + लिट् = क्वसु=वस् "लिट्यन्यतरस्याम्" सूत्र से 'अद्' का घस्लृ आदेश—घस् + वस्, द्वित्व, हलादिशेष-जघस् + वस् । 'वस्वेकाजाद्घसाम्' सूत्र से इट् आगम "घसिभसोर्हलि च" सूत्र से उपधा 'अ' लोप—जघ् स् + इवस् । "खरि च" सूत्र से 'घ्' का चर्त्व 'क्' "शासिवसिघसीनां च" सूत्र से 'स्' का 'ष्' ज क् ष् + इवस्, क् + ष् का क्ष्—जक्षिवस् प्रातिपदिक संज्ञा, सु नुम् दीर्घ सु लोप, स् लोप करने पर—जक्षिवान् । इसी प्रकार पा + लिट् = क्वसु = वस्, द्वित्व आदि कार्य पपा + वस् "वस्वेकाजाद्घसाम्" सूत्र से इट् आगम "आतो लोप इटि च" से आ का लोप पप् इ वस्, प्रातिपदिकसंज्ञा, नुम् दीर्घ आदि करने पर रूप बनता है—पपिवान् और यह क्वसु नहीं भी होता है—अहं सूर्यमुभयतो ददर्श । [ यहां 'ददर्श' यह लिट् का ही रूप है । ] पूर्व सूत्र में मिलाकर एकही सूत्र क्यों नहीं बनाया गया ? योगविभाग अग्रिम सूत्र में अनुवृत्ति के लिये है, अर्थात् उसमें केवल क्वसु की अनुवृत्ति होती है ॥ १०७ ॥

## ८७७. भाषायां सदवसश्रुवः ॥ १०८ ॥ ( ३०९७ )

**सद, वस, श्रु—इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति। आदेशविधानादेव लिडपि तद्विषयोऽनुमीयते। उपसेदिवान् कौत्सः पाणिनिम् ( म० भा० )। तेन मुक्ते यथाप्राप्तं प्रत्यया**

**न्यासः**

**भाषायां सदवसश्रुवः ॥** ननु चेह प्रकरणे भूतसामान्ये लिड् विहितः, तेनासौ भाषायां नास्त्येव, तदसत्तस्य कथं क्वसुरादेशः शक्यते विज्ञातुमित्याह—**आदेशविधानादेवेत्यादि**। यदेतद् भाषायां लिटः क्वसोरादेशविधानमत एव विज्ञानाद् भूतसामान्ये भाषायां लिडित्यनुमीयते; अन्यथा ह्यादेशविधानमनर्थकं स्यात्। न ह्यविद्यमानस्य स्थानिन आदेश उपपद्यते। यदि तर्ह्यादेशविधानाल् लिड् भाषायामनुमीयते, ततश्च सदादिभ्यो भाषायां नित्यं लिट् प्राप्नोति, तस्य 'विभाषा क्वसुः' इति पक्षे तिङः श्रवणं प्रसज्येत, लुङादेशश्च स्वविषये पाक्षिको न स्यात्, नित्यत्वाल्लिटः ? नैष दोषः, आदेशेन हि लिङ्गेन लिडनुमीयते, तेन यदादेशो नास्ति तदा तदनुमानमपि नास्त्येव। तदसत्त्वे लिटः कुत आदेशा येषां श्रवणं प्रसज्येत ? यत्र पक्षे लिड् नास्ति तत्र स्वविषये लुङादयो भवन्तः केन निवार्यन्ते ? **उपसेदिवानिति**। 'षद्लृ विशरणे'। 'अत एकहल्मध्ये' इत्यादिनैत्त्वाभ्यासलोपौ, 'वस्वेकाजाद्धसाम्' इतीट्, नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। **उपासददिति**। वाग्रहणाद् यस्मिन् पक्षे लिड् नास्ति तस्मिन् पक्षे भूतसामान्ये लुङ्, तिप्, 'इतश्च' इतीकारलोपः,

**पदमञ्जरी**

सार्वधातुकमपि तत्र 'सार्वधातुकमपित्' इति। तत्त्वङितीत्युपधालोपो भविष्यति। ऋकारान्तगुणप्रतिषेधार्थन्तु, 'ऋच्छत्यॄताम्' इत्ययं गुणः प्रतिषेध आरभ्यते स यथेह भवति—तेरतुस्तेरुरिति, तथा तितीर्वानित्यत्रापि स्यात्। कित्करणसामर्थ्याद्भाषायामपि क्वसुर्भवतीत्येत्तु **भाष्यविरोधादुपेक्ष्यम्**। उत्तरसूत्रानर्थक्यं च, यदि भाषायामपि क्वसुर्भवति ॥ १०७ ॥

**भाषायां सदवसश्रुवः ॥ आदेशविधानादेवेत्यादि**। यदि भाषायां सदादिभ्यो भूतसामान्ये लिण्न स्यात्, ततस्तादृशस्य लिट आदेशविधानमनुपपन्नं स्यादिति मन्यते। ननु च 'लिटः कानज्वा' इत्यत्र पुनर्लिड्ग्रहणस्य प्रयोजनमुक्तम्—योऽपि परोक्षे लिड्विहितस्तस्याप्ययमादेशो भवतीति, तच्चेत्सत्यम्, इहापि यः परोक्षे लिट् स भाषायामपि सदादिभ्यः सम्भवतीति तस्यैवेदमादेशविधानं स्यात् ? उच्यते—लङ्लिड्विषयेऽपि परस्तादनुवृत्तेर्भवतीति वक्ष्यति ततो नानेन परोक्षे लिट आदेशाभिधानम्, किं तर्हि ? भूतसामान्ये, ततश्चादेशविधानादेव लिडपि तद्विषयोऽनुमातव्यः। यद्येवम्, तस्य पक्षे क्वस्वादेशः पक्षान्तरे तिङां श्रवणं प्राप्नोति ? न वावचनेन क्वसुरभिसम्बद्ध्यते क्वसुर्वा भवतीति, किं तर्हि ? लिडभिसम्बद्ध्यते, भाषायां सदादिभ्यो वा लिट्; तस्य नित्यं

**भावबोधिनी**

सद्, वस्, श्रु--इन तीन से परे लिट् का क्वसु आदेश विकल्प से होता है भाषा = लौकिकसंस्कृत में। आदेश का विधान करने के कारण ही लिट् भी भाषाविषय में ही होता है--यह अनुमान किया जाता है। उदा० उपसेदिवान् कौत्सः पाणिनिम्। [ उपसद् + लिट् = क्वसु = वस् "लिटि धातोरनभ्यासस्य" सूत्र से धातु का द्वित्व सद् सद् = वस्, "अत एकहल्मध्येऽनादेशादेर्लिटि" सूत्र से अ का एत्व तथा अभ्यास का लोप--सेद + वस् पूर्ववत् इट् आगम, प्रातिपदिकसंज्ञा, सु, "उगिदचाम्" सूत्र से नुम् = न् आगम, "सान्तमहतः संयोगस्य" सूत्र से उपधा का दीर्घ, "हल्ङ्यादिभ्यः" सूत्र से सुलोप, "संयोगान्तस्य लोपः" सूत्र से 'स्' का लोप करने पर सेदिवान् बनता है। 'उप' उपसर्ग जुड़ा है। ] जब यह क्वसु नहीं होता है तब यथाप्राप्त प्रत्यय भी होते हैं--उपासदत्। [ यहाँ लुङ् है। उपासीदत्। [ यहाँ लङ् है। ] उपससाद। [ यहाँ लिट् है। ] अनूषिवान् कौत्सः पाणिनिम्। [ वस् + लिट् = क्वसु = वस्, द्वित्व, हलादिशेष वस् + वस्, "वचिस्वपियजादीनाम्" सूत्र से द्वितीय 'व्' का और "लिट्यभ्यासस्योभयेषाम्" सूत्र से प्रथम 'व्' का सम्प्रसारण,

**भवन्ति—उपासदत्, उपासीदत्, उपससाद। अनूषिवान् कौत्सः पाणिनिम्; अन्ववात्सीत्, अन्ववसत्, अनूवास। उपशुश्रुवान्कौत्सः पाणिनिम्, उपाश्रौषीत्, उपाशृणोत्, उपशुश्राव।**

**लुङ्लङ्विषयेऽपि परस्तादनुवृत्तेः क्वसुर्भवति॥**

**न्यासः**

पुषादिना च्लेरङ्। **उपासीददिति**। 'अनद्यतने लङ्', पाघ्रादिसूत्रेण सीदादेशः। **उपससादेति**। 'परोक्षे लिट्' तिप्, णल्, 'अत उपधायाः' इति वृद्धिः। **अनूषिवानिति**। 'वस निवासे', लिटः क्वसुर्द्विर्वचनम्, वच्यादि-सूत्रेण संप्रसारणम्। 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य संप्रसारणम्, 'शासिवसिघसीनाञ्च' इति षत्वम्, 'अकः सवर्णे दीर्घः' अनुशब्देन सह पुनर्दीर्घः। **अन्ववात्सीदिति**। लुङ्, 'अस्तिसिचोऽपृक्ते' इतीट्, 'एकाचः' इतीट्प्रतिषेधः, 'सः स्यार्द्धधातुके' इति तत्वम्, 'वदव्रज' इत्यादिना वृद्धिः। **अन्ववसदिति**। लङ्। **अनूवासेति**। लिट्, पूर्ववत् संप्रसारणादिकार्यम्। **उपशुश्रुवानिति**। 'श्रु श्रवणे', लिटः क्वसुः, द्विर्वचनम्। **उपाश्रौषीदिति**। लुङ्, 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः, पूर्ववदिट्प्रतिषेधः, 'अस्तिसिचोऽपृक्ते' इतीट्, उपसर्गेण 'अकः सवर्णे दीर्घः'। **उपाशृणोदिति**। लङ्, 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च, 'सार्वधातुकार्द्धधातुकयोः' इति गुणः। **उपशुश्रावेति**। लिट्, तिप्,णल्, 'अचो ञ्णिति' इति वृद्धिः, आवादेशः। इहानेन सूत्रेण यत् कार्यं विधीयते तद् भूतसामान्ये। 'अनद्यतने लङ्' इत्यनेन लङ्, 'परोक्षे लिट्' इत्यनेन लिट्, भूतानद्यतनपरोक्षे परौ च लङ्लिटौ भवतः। विशेषविहितत्वाच्च लङ्लिटोरस्य सदादिकार्यस्य बाधकौ प्राप्नुतः। तस्य कार्यस्य भूत-सामान्यमवकाशः; लङ्लिटोः सदादिभ्योऽन्येभ्यो धातुभ्यः, सदादिभ्यो भूतविशेषे भूतानद्यतनपरोक्षे; भूतानद्यतने चोभयप्राप्तौ यथोक्तकारणद्वयात् लङ्लिटौ स्याताम्।

न चैतत् सूत्रविहितं कार्यमपीति यश्चोदयेत्, तं प्रत्याह—**लुङ्लङ्विषयेऽपीत्यादि**। लिड्ग्रहणस्य वा-ग्रहणस्य चास्य सूत्रस्य पुरस्ताद् 'अनद्यतने लङ्', 'परोक्षे लिट्' इत्यत्र चानुवृत्तिः क्रियते। तत्र चानुवृत्तिसामर्थ्यात्

**पदमञ्जरी**

क्वसुरादेशो भवतीति। **वृत्तिग्रन्थोऽप्यस्मिन्नेवार्थे योजनीयः। उपासददिति**। लृदित्त्वादङ्। **उपासीददिति**। पाघ्रादिसूत्रेण सीदादेशः। **अनूषिवानिति। यजादित्वात् सम्प्रसारणम्** 'शासिवसिघसीनां च' इति षत्वम्। **अन्ववात्सीदिति**। 'सः स्यार्द्धधातुके' इति तत्वम्। **अनूवासेति**। 'लिटचभ्यासस्योभयेषाम्' इत्यभ्यासस्य संप्रसारणम्। **लुङ्लङ्विषयेऽपि परस्तादनुवृत्तेर्भवतीति**। अन्यथा भूतसामान्ये लुङ् विहितस्तत्रैव धातुविशेषेऽनेनादेशविधाने-

**भावबोधिनी**

'अ' का पूर्व—उ उ स् + वस्, "शासिवसिघसीनाम्" से स् का ष, सवर्णदीर्घ--ऊष् + वस्--पूर्ववत् इट् करने पर ऊषिवस्। प्रातिपदिकत्वात् नुम्, दीर्घ आदि करने पर--ऊषिवान् बनता है।] जब क्वसु नहीं होता है तब अन्य प्रत्यय भी होते हैं] अन्ववात्सीत् [ यहाँ लुङ् हैं--अनु अ वस् + लुङ् = तिप् सिच्, इ का लोप, "अस्तिसिचोऽपृक्ते" से ईट् = ई आगम—अनु अ वस् स् ईत्, "वदव्रजहलन्तस्याचः" सूत्र से वृद्धि, "सस्यार्धधातुके" से प्रथम स् का त्—अनु अवात् स् ईत्, यण्—अन्ववात्सीत्।] अन्वसत् [ यहाँ लङ् है। अनूवास। [ यहाँ लिट् है। इसमें भी क्वसु के समान सम्प्रसारणादि होता है।] उपशुश्रुवान् कौत्सः पाणिनिम्। [ उप पूर्वक श्रु = लिट् = क्वसु = वस्, द्वित्व हलादिशेष उप शु श्रु + वस् एकाच् अनिट् है। अतः इट् आगम नहीं होता है। सु, नुम्, दीर्घ, सु लोप, संयोगान्त सलोप--शुश्रुवान्। क्वसु न होने पर ] उपाश्रौषीत्। [ यहाँ लुङ् है। अट् आगम, सिच् 'इ' लोप, ईट् आगम, वृद्धि--उप अ श्रौ स् ई त्, षत्व, सवर्णदीर्घ—उपाश्रौषीत्।] उपाशृणोत्। [ यहाँ लङ् है "श्रुवः शृ च" सूत्र से 'श्रु' का 'शृ' आदेश और 'श्नु' प्रत्यय—उप अ शृ नु ति। इलोप, गुण, णत्व, दीर्घ--उपाशृणोत्।] उपशुश्राव [ यहाँ लिट् है। श्रु + लिट् = तिप् = णल् वृद्धि, औ, आव् आदेश—उपशुश्राव।]

लुङ्, लङ् के विषय में भी, बाद वाले इस सूत्र से अनुवृत्ति होने के कारण, क्वसु प्रत्यय होता है।

## ८७८. उपेयिवाननाश्वाननूचानश्च ॥ १०९ ॥ ( ३०९८ )

**उपेयिवान्, अनाश्वान्, अनूचान् — इत्येते शब्दा निपात्यन्ते। उपपूर्वादिणः क्वसुः, द्विर्वचनमभ्यासदीर्घत्वम् ( ७.४.६९ ), तत्सामर्थ्यादेकादेशप्रतिबन्धः, तत्र 'वस्वेकाजाद्घसाम्' ( ७.२.६७ ) इत्यनेकाच्त्वा-**

**न्यासः**

लङ्चप्येतत् सदादिकार्यं भवति। अत्रैवं सम्बन्धः कर्त्तव्यः—अनद्यतने लङ् भवति, सदादिभ्यो वा लिट्, लिटश्च क्वसुरादेशो नित्यमिति। परोक्षे लिड् भवति, सदादिभ्यो वा, लिटः क्वसुरादेशो नित्यम्। 'परोक्षे लिट्' इत्यस्य तु लिटः क्वसुर्न भवति; यस्मात् सदादिसूत्रे विहितस्य लिटः क्वसुरिष्यते, सूत्रान्तरविहितश्चायम् ॥ १०८ ॥

**उपेयिवाननाश्वाननूचानश्च ॥ उपपूर्वादिणः क्वसुरिति।** लिडादेश इति वेदितव्यः। **अभ्यासदीर्घत्वमिति।** 'दीर्घः इणः किति' इत्यनेन। **तत्सामर्थ्यादित्यादि।** दीर्घत्वविधानसामर्थ्यादकः सवर्णे दीर्घत्वमेकादेशः

**पदमञ्जरी**

नानुमितो लिडपवादः। तथा भूतविशेषे लङ्लिटौ लुङ एवापवादौ। सदादिभ्यस्तु भूतविशेषे एतत्सूत्रविहितं च कार्यं प्राप्नोति, लङ्लिटौ च; अपवादविप्रतिषेधाल्लङ्लिटावेव स्याताम् ॥ १०८ ॥

**उपेयिवाननाश्वाननूचानश्च ॥ उपपूर्वादिणः क्वसुरिति।** निपात्यत इत्यर्थः। लिडादेशश्चायम्; अन्यथा द्विर्वचनाभ्यासदीर्घत्वे अपि निपातयितव्ये स्याताम्। तथा ग्राममुपेयिवानित्यत्र 'न लोकाव्यय' इति षष्ठीप्रतिषेधो न स्यात्। **द्विर्वचनमिति।** इडागमात्पूर्वं नित्यत्वात्क्रियत इत्यर्थः। **अभ्यासदीर्घत्वमिति।** 'दीर्घ इणः किति' इत्यनेन। **तत्सामर्थ्यादिति।** यदि ह्येकादेशः स्याद्दीर्घविधानमनर्थकं स्याद्; एकादेशेनैव दीर्घस्य सिद्धत्वात्।

**भावबोधिनी**

**विमर्श**—भूतसामान्य में लङ्, अनद्यतनभूत में लुङ्, परोक्षभूत में लिट्—यह व्यवस्था है। प्रस्तुत सूत्र भूतसामान्य में लिट् का क्वसु आदेश करता है। अतः जहाँ अनद्यतन भूतकाल होगा वहाँ लङ् और लिट् होने लगेगें। विशेष में विहित होने के कारण लङ् और लिट् इस 'सद'० सूत्र से विहित कार्य=क्वसु के बाधक होगें। 'सद्' सूत्र के कार्य के लिये भूतसामान्य में अवकाश है और सदादि धातुओं से भिन्न में लङ्, लिट् का अवकाश है। अब यदि सद् आदि धातुओं से भूतविशेष में भूतानद्यतन परोक्ष और भूतानद्यतन में दोनों ( क्वसु और लङ्, लिट् ) की प्राप्त होती है—इसमें लङ् लिट् ही होने लगेंगे।

अब यदि इस सूत्र से विहित कार्य भी करना इष्ट है तो उसके लिये यह उपाय है कि इस सूत्र से 'लिट्' और 'वा' की अनुवृत्ति आगे के 'अनद्यतने लङ्'' आदि सूत्रों में भी करनी चाहिये। इस अनुवृत्ति के सामर्थ्य से लङ् में भी 'सद् आदि का कार्य होता है। इनमें इस प्रकार से सम्बन्ध करना चाहिये (१) अनद्यतन भूत में लङ् होता है, 'सद् आदि धातुओं से विकल्प से लिट् होता है और लिट् का क्वसु आदेश नित्य होता है। इस प्रकार लङ् और क्वसु दोनों हो जायेंगे। (२) परोक्ष भूत में लिट् होता है, सद्' आदि धातुओं से विकल्प से होता है, और लिट् का क्वसु नित्य होता है। इस प्रकार लिट् और क्वसु दोनों के रूप होंगे। यह ध्यान रखना चाहिये कि ''परोक्षे लिट्'' से किये जाने वाले लिट् का 'क्वसु' आदेश नहीं होता है क्योंकि 'सदादि' धातुओं वाले सूत्र से विहित ही लिट् का क्वसु आदेश किया गया है।

लुङ्—विधायक सूत्र में भी 'वा' तथा 'लिट्' की अनुवृत्ति मानकर उसे भी विकल्प पक्ष में किया जाता है ॥ १०८ ॥

उपेयिवान्, अनाश्वान् और अनूचान—ये शब्द निपातन से सिद्ध होते हैं। उपपूर्वक 'इण्=इ' धातु से लिट् का क्वसु=वस् प्रत्यय, द्वित्व, [ ''दीर्घः इणः किति' ( पा० सू० ७.४.६९ ) से दीर्घ, इसी सामर्थ्य के कारण सवर्णदीर्घ रूप एकादेश का प्रतिबन्ध होता है, ऐसा हो जानेपर अनेकाच् हो जाने से ''वस्वेकाजाद्घसाम्'' ( पा० सू० ७.२.६७ ) से

**दिण् न प्राप्नोति, स निपात्यते । अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः ( ६.४.८१ )। उपेयिवान् ।**

**क्रादिनियमात् ( ७. २. १३ ) प्राप्तश्च 'वस्वेकाजाद्घसाम्' ( ७. २. ६७ ) इति प्रतिषिद्धः, स पुनरिट् प्रतिप्रसूयते, तेनाजादौ न भवति—उपेयुषः, उपेयुषा ।**

**न्यासः**

प्रतिषिध्यते, प्रवृत्तिविघातोऽस्य क्रियत इत्यर्थः । यदि ह्येकादेशः स्याद् दीर्घत्वविधानमनर्थकं स्यात्; एकादेशेनैव दीर्घत्वसिद्धेः । ननु चाभ्यासदीर्घस्येयतुः, इयुरित्ययमवकाशः स्याद्—यत्र धातुरूपस्य 'इणो यण्' इति यणादेशः क्रियते ? नैषोऽस्यावकाशः, अत्र हि 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावेन भवितव्यम् । कथम् ? सवर्णदीर्घत्वे हि पूर्वापरविधित्वात् पूर्वविधिरिति शक्यते व्यपदेष्टुम् । यो ह्युभयस्थानी निष्पद्यते लभतेऽसावन्यतरव्यपदेशम् । न चात्र 'न पदान्त' इत्यादिसूत्रेण दीर्घविधिं प्रति स्थानिवद्भावप्रतिषेधोऽस्ति; यस्मात् 'स्वरदीर्घयलोपेषु लोपाजादेशौ न स्थानिवदेव' इति स्थानिवद्भावादकः सवर्णे दीर्घत्वेनात्र भवितव्यम् । तदेतदभ्यासदीर्घत्वमनवकाशत्वात् सवर्णदीर्घत्वं बाधत इति स्थितमेतत्—सामर्थ्यादेकादेशः प्रतिषिध्यत इति—**तत्रेत्यादि ।** एकादेशप्रविबन्धके हि सत्यनेकाच्त्वं भवति, तेन 'वस्वेकाजाद्घसाम्' इत्यनेनेडागमो न प्राप्नोतीति स निपात्यते । **धातुरूपस्य यणादेश इति ।** 'इणो यण्' इत्यनेन, तर्हीदं निपातनमेव । सत्यजादावपि परतो वसोः सम्प्रसारणमिति । सम्प्रसारणे कृते सतीट् प्राप्नोति; विशेषानुपादानादित्याह—**क्रादिनियमादित्यादि ।** यस्मात् 'कृसृभृवृस्तुद्रु' इत्यादिना य इट् प्राप्नोति स 'वस्वेकाजाद्घसाम्' इति प्रतिषिद्धः, स एवानेन निपातनेन प्रतिप्रसूयते । प्रतिषिद्धः स पुनः प्रवर्त्तते, न त्वपूर्वं विधीयते - **तेनाजादौ न भवतीति ।** अपिपूर्वस्य हि विधानेन विशेषानुपादनादजादावपि प्रसङ्गः स्यात्, न तु लक्षणप्रतिषेधस्येटः प्रसव; तस्य वलादित्वात्—**उपेयुषेति ।** सम्प्रसारणे कृते धातोर्यणादेशः, 'आदेशप्रत्यययोः'

**पदमञ्जरी**

ननु चाभ्यासदीर्घत्वस्येयतुरित्यादिरवकाशः स्यात्, अत्र हि इ इ अतुस् इति स्थिते दीर्घत्वमेकादेशश्च प्राप्नोति, 'इणो यण्' इति यणादेशश्च; तत्र 'वार्णादाङ्गं बलीयः' ( व्या० परि० ३९ ) इति बह्वाश्रयत्वेनैकादेशस्य बहिरङ्गत्वाद्वा यणेव भवति, ततश्च दीर्घविधानमर्थवद्भवति ? एवं मन्यते—अत्रापि पूर्वपरविधिरेकादेशः पूर्वविधिरिति, तत्र कर्त्तव्ये यणादेशस्य स्थानिवत्त्वात्स्यादेवैकादेशः; तदेवमभ्यासदीर्घत्वमनवकाशत्वात्सवर्णदीर्घत्वं बाधत इति । तस्मात्सुष्ठूक्तम्—**तत्सामर्थ्यादेकादेशप्रतिबन्ध** इति । **तत्रेति ।** एवं सतीत्यर्थः । **स निपात्यत इति ।** निपातनाश्रयणमिडर्थम् । अन्यत्सर्वं पूर्वत्रैवेण्ग्रहणादेव सिद्धमित्यर्थः ।

यदि तर्हीडर्थमेतन्निपातनं संप्रसारणविषयेऽपि प्राप्नोति; अत्र वलादेरिति विशेषानुपादानात्, यथा वक्ष्यति—नित्याश्चायं वल्निमित्तो विघातीति, तत्राह—**क्रादिनियमात्प्राप्तश्चेति ।** चशब्दो हेतौ । नात्रापूर्व इड् विधीयते,

**भावबोधिनी**

इट् नहीं प्राप्त होता है, वह निपातन से किया जाता है—उप ई इ + इ वस् [ 'इणो यण्' सूत्र से द्वितीय 'इ' का यण् = य् आदेश, और अभ्यास 'ई' का श्रवण होता है—उप ई य् इ वस्, गुण, प्रातिपदिकसंज्ञा, सु, नुम्, दीर्घ, सुलोप, संयोगान्त स् लोप—उपेयिवान् ।

"कृ-सृ-भृ-वृ-स्तु-द्रु-श्रुवो लिटि" ( पा० सू. ७.२.१३ ) इस नियम से जो इट् प्राप्त होता है उसका प्रतिषेध "वस्वेकाजाद्घसाम्" इससे हो जाता है, वही इट् पुनः [ निपातन द्वारा ] किया जाता है, इस कारण अजादि प्रत्यय परे रहने पर इट् नहीं होता है—उपेयुषः, उपेयुषा । [ द्वितीया बहुवचन में शस् = अस् है और तृतीया एकवचन में टा = आ है । यहाँ अजादि प्रत्यय परे हैं अतः भसंज्ञा होने के कारण 'वस्' के 'व' का सम्प्रसारण 'उ' और 'अ' का पररूप होता है— उपेय् उस् + अस्, उपेय् उस् + आ, 'आदेशप्रत्यययोः' सूत्र से मूर्धन्यादेश—उपेयुषस्, स् का विसर्ग—उपेयुषः, उपेयुषा । ]

**न चात्रोपसर्गस्तन्त्रम्, अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव—समीयिवान्, ईयिवान् । वावचनानुवृत्तेश्च पूर्ववल्लुङादयोऽपि भवन्ति । उपागात् । उपैत् । उपेयाय ।**

**न्यासः**

इति षत्वम् । **न चात्रोपसर्गस्तन्त्रमिति ।** उपसर्गोऽत्र न प्रधानमित्यर्थः । तन्त्रत्वं तस्य 'बहुलं छन्दसि' इत्यतो बहुलग्रहणानुवृत्तेर्लभ्यते । **उपागादिति ।** लुङ्, 'इणो गा लुङि' इति गादेशः । 'गातिस्था' इत्यादिना सिचो लुक् । **उपैदिति ।** लङ्, तिप्, अदादित्वाच्छपो लुक्, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः । **उपेयायेति ।** लिट्, तिप्, णल्, 'अचो ञ्णिति' इति वृद्धिः. आयादेशः, स्थानिवद्भावात् द्विर्वचनमिकारस्येति, 'अभ्यासस्यासवर्णे' इतीयङ्, इकारेण सह 'आद् गुणः' ।

**पदमञ्जरी**

किं तर्हि ? वोऽयं वलादिलक्षण इट् क्रादिनियमेन प्राप्तः 'वस्वेकाजाद्धसाम्' इति नियमेन प्रतिषिद्धः, स एव प्रतिप्रसूयते=प्रतिबन्धापनयनेन पुनः प्रवर्त्त्यते । तेनाजादावतिप्रसङ्गो न भवतीत्यर्थः । अन्ये तु—अभ्यासदीर्घत्वे कृते धात्विकारस्य व्यञ्जनं यणादेशं निपातयन्ति, ईय्वसु इति स्थिते 'वस्वेकाजाद्धसाम्' इत्येवेट् सिद्धः, स च वलादिलक्षण इति नास्त्यतिप्रसङ्गः ।

अपर आह—पूर्वसूत्र एवेण्ग्रहणं कर्त्तव्यम्, नार्थो निपातनाश्रयणेन । अत्र यदुक्तम्—ईयतुरित्यत्राभ्यासदीर्घत्वे कृते एकादेशात्पूर्वं 'वार्णादाङ्गं बलीयः' ( व्या० परि० ३९ ) इति यणि कृतेऽपि तस्य स्थानिवत्त्वादेकादेशः प्राप्नोति, ततश्चावश्यमभ्यासदीर्घत्वेन बाधितव्य एकादेश इति, तन्न; न हि स्थानिवद्भावेन रूपमतिदिश्यते, रूपाश्रयश्च पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति । किञ्च, यणादेशेन बाधितस्यैकादेशस्य पुनस्स्थानिवद्भावेनापि प्रवृत्त्यभावो बाधितत्वादेव । किमतो यद्येवमिदं ततो भवति ? इणः क्वसौ विहिते द्विर्वचनं च प्राप्नोति, 'वस्वेकाजाद्घसाम्' इतीडागमश्च । किमत्र कर्त्तव्यम् ? परत्वादिट् नित्यं द्विर्वचनं कृतेऽपीटि प्राप्नोति, अकृतेऽपि प्राप्नोतीति । इडपि नित्यः, कृते द्विर्वचनेऽभ्यासदीर्घत्वे एकादेशे च एकाच्त्वात्प्राप्नोति; इदानीमेव ह्युक्तम्—अभ्यासदीर्घत्वेन न बाधितव्य एकादेश इति । तदेवमुभयोर्नित्ययोः परत्वादिट्, द्विर्वचनम्, अभ्यासदीर्घत्वं परस्य यणादेशः ईयतुरित्यादिवत्सिद्धमुपेयिवानिति । बिभिद्वानित्यादौ नित्यत्वात्पूर्वं द्विर्वचनमेव भवति ।

**न चात्रोपसर्गस्तन्त्रमिति ।** एवमाचार्याणामुपदेश इति भावः । **अनुपसर्गाच्चेति ।** 'ईयिवांसमतिस्त्रिधः' ( ऋ० ३-९-४ ) इति हि छन्दसि दृश्यते । **लङादयो भवन्तीति ।** लङ्लिड्विषयेऽपि परस्तादनुवृत्तेरयं विधिर्भवतीति दर्शयति । **उपागादिति ।** 'इणो गा लुङि', 'गातिस्थाघुपाभूभ्यः' इति सिचो लुक् । **उपैदिति ।** अदादित्वाच्छपो लुक्, 'आडजादीनाम्', 'आटश्च' । **उपेयायेति ।** तिपो णलि वृद्धचायादेशौ, 'द्विर्वचनेऽचि' इति स्थानिवद्भावादिकारस्य द्विर्वचनम्, 'अभ्यासस्यासवर्णे' ।

**भावबोधिनी**

यहाँ 'उप' यह उपसर्ग तन्त्र=प्रधान नहीं है क्योंकि अन्य उपसर्गपूर्वक से भी होता है और उपसर्गरहित से भी होता है—समीयिवान्, ईयिवान् ।

'वा' की अनुवृत्ति होती है अतः पूर्वसूत्र के समान यहाँ भी लङ् आदि होते ही हैं। उपागात् । [ उप इण् + लङ् = तिप् "इणो गा लुङि" सूत्र से गाङ् आदेश, अट्, च्लि का सिच्, इसका लुक् और ति के इ का लोप—अगात् । ] उपैत् । [ उप इ + लङ्=तिप् आट्, वृद्धि, शप् "अदिप्रभृतिभ्यः शपः" से शप् का लुक्, इ का लुक्, वृद्धि—उपैत् । ] उपेयाय । [ उप इ + लिट् = तिप् = णल् = अ, द्वित्व, "अचो ञ्णिति" सूत्र से वृद्धि—उप इ ऐ + अ, आय् आदेश उप इयाय, गुण—उपेयाय । ]

**अश्नातेर्नञ्पूर्वात् क्वसुर्निपात्यते, इडभावश्च । अनाश्वान् । नाशीत् । नाश्नात् । नाश ।**
**वचेरनुपूर्वात् कर्त्तरि कानज्निपात्यते । अनूचानः । अन्ववोचत् । अन्वब्रवीत् । अनूवाच ॥**

**न्यासः**

**अनाश्वानिति** । 'अश भोजने' लिट्, क्वसुः, द्विर्वचनम्, 'अश' इत्यस्य 'अत आदेः' इत्यभ्यासस्य दीर्घत्वम्, इडभावश्च, 'वस्वेकाजाद्घसाम्' इत्यनेन प्राप्तस्येटोऽभावो निपात्यते । न आश्वान् अनाश्वान्—नञ्समासः, 'नलोपो नञः' इति नलोपः, 'तस्मान्नुडचि' इति नुडागमः । **नाशीदिति** । लुङ्, 'च्लेः सिच्', 'इट ईटि' इति सिचो लोपः, पूर्ववदाट्, वृद्धिः, नञा सह सवर्णदीर्घत्वम् । **नाश्नादिति** । लङ्, क्र्यादित्वा चश्ना, आडागमः । **नाशेति** । लिट्, तिप्, णल्, द्विर्वचनम्, पूर्ववदभ्यासदीर्घत्वम्, धातुना नञा सहाकः सवर्णे दीर्घत्वम् ।

**वचेरित्यादि** । 'वच परिभाषणे'—इत्यस्माद् 'ब्रुवो वचिः' इति वच्यादेशाद्वा वचेरनुपूर्वात् कानच् कर्त्तर्यात्मनेपदसंज्ञको न प्राप्नोति; परस्मैपदित्वात्, इतरस्मात् कर्त्रभिप्रायक्रियाफलस्य विवक्षितत्वात्, अतः स निपात्यते । वच्यादिसूत्रेण धातोः संप्रसारणम्, 'लिटचभ्यासस्योभयेषाम्' इत्यभ्यासस्य पश्चादनुशब्देन सहाकः सवर्णे दीर्घत्वम् । **अन्ववोचदिति** । लुङ्, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङ्, 'वच उम्' 'आद् गुणः' । **अन्वब्रवीदिति** । ब्रुवो लङ्, शपो लुक्, 'ब्रुव ईट्' । **अनूवाचेति** । लिट्, णल्, 'अत उपधायाः' इति वृद्धिः, पूर्ववदभ्यासस्य संप्रसारणमेकादेशः ॥ १०९ ॥

**पदमञ्जरी**

**अश्नातेरिति** । 'अश भोजने' ( धा० पा० १५२३ ) । **नञ्पूर्वादिति** । तेनान्यपूर्वात्केवलाच्च न भवति । **नाशीदिति** । तिपि सिचि 'नेटि' इति वृद्धिप्रतिषेधः, 'आडजादीनाम्' 'आटश्च', नञा सह सवर्णदीर्घत्वम् । **नाशेति** । तिपि णलि द्विर्वचने 'अत आदेः' इत्यभ्यासदीर्घः, नञा परेण च सवर्णदीर्घत्वम् ।

**वचेरिति** । 'ब्रुवो वचिः' इत्यस्य । तथा च लङि अन्वब्रवीदित्युदाहरिष्यते । अन्ये तु 'वच परिभाषणे' ( धा० पा० १०६३ ) इत्यस्यापि ग्रहणमिच्छन्ति । **कर्त्तरीति** । न भावकर्मणोः । एतच्च निपातनाल्लभ्यम् । **अन्ववोचदिति** । 'वच उम्' । **अन्वब्रवीदिति** । 'ब्रुव ईट्' । **अनूवाचेति** । पूर्ववदभ्याससंप्रसारणम् ॥ १०९ ॥

**भावबोधिनी**

नञ्पूर्वक 'अश्' धातु से ( लिट् का ) क्वसु प्रत्यय और इट् का अभाव निपातित होता है—अश् + क्वसु = वस्, द्वित्व, हलादिशेष, "अत आदेः" से अभ्यास का दीर्घ—आश्वस्, प्रातिपदिकसंज्ञा, सु नुम्, दीर्घ आदि करने पर—आश्वान्, नञ्समास, 'नलोपो नञः' से न् का लोप, "तस्मान्नुडचि" सूत्र से नुट् = न् आगम अ न् आश्वान् = अनाश्वान् । नाशीत् । [ अश् + लुङ्, = तिप्, आट् वृद्धि, च्लि, सिच्, इट्, तिप् के 'इ' का लोप इट्—आश् इ स् ईत् "इट ईटि" सूत्र से सिच्लोप, सवर्णदीर्घ, आशीत्, नञ् के साथ समास, सवर्णदीर्घ—नाशीत् । ] नाश्नात् । [ अश् + लङ्, तिप् आट्, "क्र्यादिभ्यः श्ना" से श्ना = ना विकरण 'इ' लोप—आश्नात्, नञ् समास, सवर्ण-दीर्घ—नाश्नात् । ] नाश । [ अश् + लिट् तिप्, णल् = अ, द्वित्वादि, "अत आदेः" सूत्र से अभ्यास का दीर्घ, आ अश् अ, सवर्णदीर्घ, नञ्समास—न + आश, पुनः सवर्णदीर्घ—नाश । ]

अनुपूर्वक 'वच्' से कर्ता अर्थ में 'कानच्' प्रत्यय नियमित होता है । अनूचान [ ब्रू = वच् + लिट् = कानच् = आन. द्वित्व, अभ्यासकार्य व वच् = आन, "वचिस्वपियजादीनाम्' से द्वितीय 'व्' का और "लिट्यभ्यासस्योभयेषाम्" सूत्र से अभ्यास 'व्' का सम्प्रसारण, अ का पूर्वरूप उ उच् + आन, सवर्णदीर्घ—ऊचान, अनु के साथ समास करने पर पुनः सवर्णदीर्घ—अनूचानः । ] अन्ववोचत् । [ अनु ब्रू = वच + लुङ् + तिप्, अट् 'च्लि' "अस्यतिवक्तिख्यातिभ्योऽङ्" सूत्र से च्लि का अङ् = अ आदेश—अनु अ वच् + अ + ति, "वच उम्" सूत्र से 'उम्' = आगम मित् होने से 'व' के बाद अनु अ व उच् + अ ति, गुण, यण्, इलोप—अन्ववोचत् । ] अन्वब्रवीत् । [ अनु ब्रू + लङ्, तिप्, अट् शप् और उसका लुक्, "ब्रुव ईट्' सूत्र से ईट् आगम 'ति' में 'इ' का लोप—अनु अ ब्रू + ई त्, अ का गुण, अव् आदेश—अनु अ ब्र् अव् ईत्, 'उ' का यण्—अन्वब्रवीत ] अनूवाच । [ ब्रू + लिट् "ब्रुवो वचिः" इसी सूत्र से यहाँ सर्वत्र 'ब्रू' का 'वच्' होता है—वच् + लिट् = तिप् = णल् = अ, द्वित्व, अभ्यासकार्य, व वच + अ, उपधावृद्धि, "लिट्यभ्यासस्योभयेषाम्" सूत्र से अभ्यास = प्रथम 'व्' का सम्प्रसारण, 'अ' का पूर्वरूप—अनु उवाच् अ, सवर्णदीर्घ—अनूवाच । ]

**८७९. लुङ् ॥ ११० ॥ ( २२१८ )**

**'भूते' इत्येव । भूतेऽर्थे वर्त्तमानाद् धातोर्लुङ् प्रत्ययो भवति । अकार्षीत् । अहार्षीत् ।**

**❀ वसतेर्लुङ् रात्रिविशेषे जागरणसन्ततौ वक्तव्यः ❀ ( म० भा० ३.२११० वा० ३४ ) । क्व भवानुषितः ? अहमत्रावात्सम् ।।**

**न्यासः**

लुङ् ॥ ङकारः 'नित्यं ङितः' इति विशेषणार्थः । उकारः 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति विशेषणार्थः । भूतसामान्ये चायं लुङ् वेदितव्यः; भूतविशेषेऽनद्यतन्यां लङ्लिटोर्विधानात् । **अकार्षीदिति** । 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः, पूर्ववदीट् ।

**वसतेरित्यादि** । 'वस निवासे' इत्यस्मादनद्यतने लङि प्राप्ते लुङ् वक्तव्यः । दिवसः सकलोऽतिक्रान्तायाा रात्रेश्चतुर्थो याम आगामिन्याश्च प्रथमो यामः—इत्येषोऽनद्यतनः कालः । तत्र रात्रिविशेषेऽतिक्रान्तायाश्च रात्रेश्चतुर्थे यामे प्रत्युत्थितः क्व भवानुषितः ? इति केनचित् पृष्टः कश्चित्, स तस्मिन् रात्रिशेषे दिवा वा प्रतिवचनं प्रयच्छन् लुङं प्रयुङ्क्ते—**अहमत्रावात्समिति** । स च न प्राप्नोति; यस्मादसौ ततो रात्रिशेषात् पूर्वभागं प्रहरत्रयलक्षणमधिशयितः, सोऽस्यानद्यतनकालः, ततश्चानद्यतने लङ् स्यात्; तस्माल्लुङ् वक्तव्यः = व्याख्येयः । व्याख्यानं त्विहापि बहुलग्रहणमाश्रित्य कर्त्तव्यम् । **जागरणसन्ततावित** । यद्यसौ रात्रिशेषं सकलं सन्तत्याऽविच्छेदेन जागरितवानेवं लुङ् भवति । मुहूर्त्तमपि यद्यस्मिन् रात्रिविशेषे शयितवांस्ततो लङेव—अहमत्रावसमिति । **अवात्समिति** । लुङ्, मिप्, 'तस्थस्थ' इत्यादिनाम्भावः, 'वदव्रजे' त्यादिना वृद्धिः, 'सः स्यार्धधातुके' इति

**पदमञ्जरी**

**लुङ्** ॥ इह भूतसामान्ये लुङ् विधीयते, तस्य विशेषेऽनद्यतने लङ्लिटावपवादौ, तद्विषयेऽपि लुङ् दृश्यते, आगमाम घोषात्, अपाम पयः, अशेयिष्महि पूतीकतृणेषु 'अभून्नृपो विबुधसखः परन्तपः' ( भ० १.१ ) इति चिरवृत्तं कथयतः प्रयुञ्जते ? नैष दोषः; विशेषे सामान्यमस्ति, तत्र विशेषाविवक्षायां सामान्याश्रयणेन वस्तुतोऽनद्यतनेऽपि लुङुपपद्यते, तद्रूपविवक्षायामेव तु लङ्लिटौ, विवक्षोपारूढो ह्यर्थः शब्दप्रयोगनिमित्तः, न वस्तुतः सन्निति । गतमेतत् । **वसेरिति** । 'वस निवासे' ( धा० पा० १००५ ) रात्रेश्चतुर्थे यामे पृष्टो यदा वाक्यं प्रयुङ्क्ते तदा तस्यातिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ्प्रयोगे लुङ् वक्तव्यः । लङ्निवृत्तिपरं चैतत् लुङ् भूतसामान्यविवक्षया सिद्धः ।

**जागरणसन्ततावित** । यदा प्रयोक्ता सकलमतिक्रान्तं रात्रिप्रहरत्रयं जागरितवान् तदा लुङ्प्रयोगः । यदा

**भावबोधिनी**

**विमर्श**—यद्यपि काशिका में यह स्पष्ट नहीं लिखा है कि वे तीन शब्दरूप किस लकार में नियमित होते हैं तथापि 'क्वसु' आदेश से यहाँ लिट् का अर्थ समझना चाहिये । साथ ही वैकल्पिक होने से पक्ष में पूर्वसूत्र के समान ही लुङ्, लङ् और लिट् के भी रूप समझने चाहिये । अतः उपेयिवान् = समीप पहुँचा, अनाश्वान + नहीं खाया, अनूचान् + बाद में बोला—ये अर्थ होते हैं ॥ १०९ ॥

'भूते' इसकी अनुवृत्ति होती है । सामान्य भूतकाल अर्थ में विद्यमान धातु से लुङ् प्रत्यय होता है । उदा० अकार्षीत् । अहार्षीत् । [ कृ + लुङ्=तिप् ''लुङ्लङ्लृङ्क्ष्वडुदात्तः'' सूत्र से अट् आगम, 'च्लि लुङि' से च्लि प्रत्यय, ''च्लेः सिच्'' से सिच्=स् आदेश अ कृ+स्+ति, ''इतश्च'' से 'इ' का लोप, ''अस्तिसिचोऽपृक्ते'' से ईट् आगम 'अ कृ स् ई+त् ''सिचि वृद्धिः परस्मैपदेषु'' सूत्र से ऋ की वृद्धि, रपर, स् का ष्–अकार्षीत्=किया । इसी प्रकार अहार्षीत्=हरण किया ।]

❀ रात्रिविशेष में पूरी तरह जागते रहने पर 'वस्' धातु से लुङ् होता है । ❀ उदा० क्व भवान् उषितः ? [ आप कहाँ रहे ? ] अहम् अत्र अवात्सम् । [ मैं यहां रातभर जागता रहा । वस् + लुङ् = मिप्, अट् आगम, च्लि और इसका सिच्=स्, मिप् का अम् आदेश ''तस्थस-थ-मिपां तांतंतामः'' इस सूत्र से = अ वस् स् + अम्, ''वदव्रजहलन्तस्याचः'' से अच् की वृद्धि और ''सस्यार्धधातुके'' सूत्र से 'स्' का 'त्' —अवात्सुअम् । ] ॥ ११० ॥

## ८८०. अनद्यतने लङ् ॥ १११ ॥ ( २२०५ )

**'भूते' इत्येव । 'अनद्यतने' इति बहुव्रीहिनिर्देशः । अविद्यमानाद्यतने भूतेऽर्थे वर्त्तमानाद्धातोर्लङ् प्रत्ययो भवति । अकरोत् । अहरत् ।**

**न्यासः**

सकारस्य तत्वम् ॥ ११० ॥

**अनद्यतने लङ् ॥ अनद्यतन इति** । यद्ययं तत्पुरुषः स्यात् तदा पर्युदासो वा स्यात्, प्रसज्यप्रतिषेधो वा । तदा पूर्वस्मिन् पक्षेऽद्यतनाद् योऽन्यस्तस्मिन् भवितव्यम् । एवञ्च **अद्य ह्यो वाभुक्ष्महीत्य**त्राप्यद्यतनव्यामिश्रे प्राप्नोति । अस्ति ह्यद्यतनानद्यतनसमुदायोऽनद्यतनादन्यः, इतरस्त्वद्यतने न भवतीत्येषोऽर्थो जायते, ततश्च भूतसामान्ये स्यात् । अनद्यतन इति अद्यतनभूतविशेषे प्रतिषेधः, न भूतसामान्ये । न हि भूतसामान्यं भूतविशेषः, तस्मात् तत्पुरुषपक्षो दोषवानिति मत्वाह—**अनद्यतन इति बहुव्रीहिनिर्देश इति** । अविद्यमानोऽद्यतनो यस्मिन्निति सोऽनद्यतनभूतधात्वर्थः, अत्र वर्त्तमानाल्लङ् भवति, स त्वद्यतनानद्यतनसमुदाये, तत्राद्यतनैकदेशस्य सद्भावाद् । भूतसामान्येऽपि न भवत्येव, विद्यते हि सामान्ये विशेषः; तस्यान्तर्भूतविशेषत्वाद् । यत्राद्यतनगन्धोऽप्यस्ति तत्र लङ न भवितव्यमित्येषोऽर्थो बहुव्रीहौ सति लभ्यते । यदि तर्हि बहुव्रीहिरयम्, एवं सत्यद्यतनेऽपि प्राप्नोति, न ह्यद्यतने द्वितीयोऽद्यतनोऽस्ति ? नैतदेवम्; अद्यतनसामान्ये मुहूर्त्तादिरद्यतनविशेषस्य विद्यमानत्वात् । तस्मादद्यतनोऽविद्यमानाद्यतन इति न शक्यते वक्तुम् ।

**पदमञ्जरी**

सुप्त्वा प्रबुद्धय प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ॥ ११० ॥

**अनद्यतने लङ्** ॥ 'अनद्यतने' इति तत्पुरुषपक्षे पर्युदासश्चेद्व्यामिश्रेऽपि प्राप्नोति—अद्य श्वो वाऽभुक्ष्महीति, भवति ह्यद्यतनानद्यतनसमुदायोऽद्यतनादन्यः, प्रसज्यप्रतिषेधे तु योऽत्राद्यतनस्तदाश्रयः प्रतिषेधो भवति, किन्तु भूतसामान्ये प्राप्नोति, भूतविशेषे हि प्रतिषेधः । न च सामान्यं विशेषो भवति । पर्युदासेऽप्ययं दोषो द्रष्टव्यः । बहुव्रीहौ न विद्यतेऽद्यतनो यस्मिन् सोऽनद्यतनो भूतो धात्वर्थः, तत्र वर्त्तमानाल्लङ् भवति, ततश्चाद्यतन समुदायेऽद्यतनस्यैकदेशस्य सम्भवान्न भवति प्रसङ्गः । भूतसामान्येऽपि न भवत्येव, विद्यते हि सामान्ये विशेषः, अतो बहुव्रीहिरेवायं युक्त इत्याह—**अनद्यतन इति बहुव्रीहिनिर्देश इति** । बहुव्रीहिणा विवक्षितार्थस्य प्रतिपादनं बहुव्रीहेर्वोच्चारणमित्यर्थः । यदि बहुव्रीहिनिर्देशः, एवं सत्यद्यतने प्राप्नोति, न ह्यद्यतनेऽद्यतनो विद्यते ? अद्यतनेऽपि मुहूर्त्तादिरद्यतनो विद्यते, मुहूर्त्तादावपि क्षणादिः, कथम् ? व्यपदेशिवद्भावेन यथा मुख्ये भेदे आधाराधेयभावो भवति—तटे तिष्ठतीति, तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते, न तु तत्त्वतः अवयवव्यतिरिक्तोऽत्र समुदाय आधारोऽस्ति । तदुक्तं **हरिणा**—

कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।
न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥ ( वा० प० ३.३.८५ ) इति ।

**भावबोधिनी**

'भूते' इसकी अनुवृत्ति होती है । 'अनद्यतन' यह बहुव्रीहि का निर्देश है—अविद्यमान है अद्यतन जिसमें ऐसे भूतकाल अर्थ में वर्तमान धातु से लङ् प्रत्यय होता है । उदा० अकरोत् । अहरत् । [ कृ + लङ् = तिप्, अट् आगम, "तनादिकृञ्भ्यः उः" इस सूत्र से 'उ' प्रत्यय ऋ का गुण, रपर 'उ' का गुण, "इतश्च" से 'इ' का लोप—अकरोत् = किया । यह आज से भिन्न काल में होता है । इसी प्रकार हृ + लङ् = तिप्, अट्, शप् = अ, ऋ का गुण, रपर, इ का लोप—अहरत् । ]

**बहुव्रीहिनिर्देशः किमर्थः ? अद्य ह्यो वा अभुक्ष्महीति व्यामिश्रे मा भूत् ( म० भा० ) ।**

**ॐ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः ॐ । अरुणद् यवनः साकेतम् । अरुणद् यवनो माध्यमिकामिति ॥**

**न्यासः**

**अद्य ह्यो वाभुक्ष्महीति ।** लुङ्, 'भुजोऽनवने' इत्यात्मनेपदम्, महिङ्, 'लिङ्सिचोरात्मनेपदेषु' इति सिचः कित्त्वाद् गुणाभावः । 'चोः कुः' इति कुत्वम्—जकारस्य गकारः, तस्य 'खरि च' इति चर्त्वं ककारः, पूर्ववत् षत्वम् ।

**परोक्षे चेत्यादि ।** परोक्षशब्दो रूढिशब्द इन्द्रियातिक्रान्तेऽर्थे वर्त्तते । तत्र परोक्षे लोकविज्ञाते = लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य शब्दरूपस्य यः प्रयोक्ताः तस्य दर्शनविषये लङ् वक्तव्यः = व्याख्येयः । व्याख्यानं तु—तस्यैव बहुलग्रहणमाश्रित्य कर्त्तव्यम् । ननु च विप्रतिषिद्धमिदमुच्यते—परोक्षेऽर्थे दर्शनविषय इति, परोक्षो ह्यर्थोऽतीन्द्रिय उच्यते, इन्द्रियविषयभावापन्नस्तु दर्शनविषयः, ततो यदि परोक्षः, कथं दर्शनविषयः ? यदि दर्शनविषयः कथं परोक्षः ? नैतदस्ति; शक्यदर्शनविषय इत्युक्तम्, अननुभूतत्वात् परोक्ष इत्यविरोधः । **अरुणदिति ।** 'रुधिर् आवरणे', रुधादित्वात् श्नम्, तिप्, हल्ङ्यादिना तिलोपः । साकेतावरोधस्तदानीन्तनप्रयोक्तुर्दर्शनविषयत्वात्

**पदमञ्जरी**

**अद्य ह्य इति ॥** अद्य ह्यश्चेत्यर्थः । गामश्वं पुरुषं नयमान इतिवच्चशब्दस्याप्रयोगः । **अभुक्ष्महीति ।** 'भुजोऽनवने' इत्यात्मनेपदम्, महिङि 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वाद् गुणाभावः, 'चोः कुः' इति कुत्वम्—गकारः, 'खरि च' इति चर्त्वम् —ककारः, सिचः सस्य षत्वम् ।

**परोक्षे चेत्यादि ।** परोक्षशब्दोऽयमतीन्द्रियार्थे वर्त्तते, लोकविज्ञाते = लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य शब्दरूपस्य यः प्रयोक्ता तस्य दर्शनविषये लङ् वक्तव्यः । ननु विप्रतिषिद्धमिदम्—यदि परोक्षः, कथं दर्शनविषयः ? अथ दर्शनविषयः, कथं परोक्षः ? शक्यदर्शनत्वाद्दर्शनविषयः, क्वचिद्व्यासङ्गादननुभूतत्वात्परोक्ष इति विरोधाभावः । **अरुणदिति ।** 'रुधिर् आवरणे' ( धा० पा० १४३८ ) रुधादित्वात् श्नम्, तिपो हल्ङ्यादिना लोपः । साकेतरोधस्तदानीं प्रयोक्तुर्दर्शनविषयः, शक्यदर्शनत्वात् । लोकप्रसिद्धश्च, क्वचिद्व्यासङ्गादननुभूतत्वात् परोक्षश्च । परोक्ष इति किम् ? उदगादादित्यः, इणो गादेशादिकार्यम् ।

लोकविज्ञा इति लुङ् किम् ? चकार कटं देवदत्तः । प्रयोक्तर्दर्शनविषये इति किम् ? जघान कंसं किल

**भावबोधिनी**

बहुव्रीहि का निर्देश किस लिये है ? अद्य ह्यो वा अभुक्ष्महि । [ आज और कल खाया ] इस प्रकार के दो कालों के मिश्रण की स्थिति में लङ् न हो सके । [ अनद्यतन वाला भूत न होने से लङ् न होकर लुङ् होता है—भुज् + लुङ् = महिङ्, अट् 'च्लि' का सिच् = स्, अभुज् स् महि, "लिङ्सिचोरात्मनेपदेषु" पा० सू० से कित् होने से गुण नहीं होता है, 'चोः कुः,' सूत्र से कुत्व करने पर 'ज्' का 'ग्' और "खरि च" से चर्त्व करने पर 'ग्' का 'क्' "अभुक् स् महि" स् का ष्, क् + ष् = क्ष् —अभुक्ष्महि । ]

* परोक्ष लोकविज्ञात = लोकप्रसिद्ध अर्थ जो प्रयोक्ता के दर्शन का विषय है, उसमें लङ् कहना चाहिए । * [ परोक्ष का प्रयोग चक्षु इन्द्रिय से अतिक्रान्त पदार्थ केलिये होता है । ऐसा परोक्ष यदि लोक में प्रसिद्ध है और प्रयोक्ता के देखने का विषय है तब वह प्रयोक्ता लङ् का प्रयोग कर सकता है । ] उदा० अरुणत् यवनः साकेतम् । [ यवन राजा मिनिण्डर ने साकेत को घेर लिया । ] अरुणत् यवनः माध्यमिकाम् । [ यवन राजा ने माध्यमिकाम् नगरी को घेर लिया । [ यहाँ लङ् के प्रयोक्ता महाभाष्यकार पतञ्जलि स्वयं हैं और यवनाक्रमण की घटना उनकी देखी हुई है परन्तु कार्यव्यासक्ति के कारण उन्होंने अनुभव नहीं किया अतः परोक्षता भी है, अतः उन्होंने लङ् का प्रयोग किया है । रुध् + लङ् = तिप्, अट्, "रुधादिभ्यः श्नम्" से श्नम् = नं विकरण मित् होने से 'उ' के बाद आता है । अ रु न ध् + ति, इ-लोप के बाद "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" पा० सू० से 'त' का लोप, 'न' का 'ण' 'ध्' का जश्त्व और वैकल्पिक चर्त्व करने पर अरुणत्, अरुणद् ]॥ १११ ॥

## ८८१. अभिज्ञावचने लृट् ॥ ११२ ॥ ( २७७३ )

**अभिज्ञा=स्मृतिः, तद्वचने उपपदे भूतानद्यतने लृट् प्रत्ययो भवति। लङोऽपवादः। अभिजानासि देवदत्त! कश्मीरेषु वत्स्यामः।**

**वचनग्रहणं पर्यायार्थम्—अभिजानासि, स्मरसि, बुध्यसे, चेतयसे इति॥**

## ८८२. न यदि ॥ ११३ ॥ ( २७७४ )

**न्यासः**

लोकप्रसिद्धश्च, कार्यव्यासङ्गादननुभूतत्वात् परोक्षश्च। परोक्ष इति किम्? उदगादादित्यः। 'गातिस्था' इत्यादिना सिचो लुक्। पूर्ववदादेशादि कार्यम्। लोकविज्ञात इति किम्? चकार कटं देवदत्तः। प्रयोक्तुर्दर्शनविषय इति किम्? जघान कंसं किल वासुदेवः। हन्तेः परोक्षे लिट्, द्विर्वचनम्, 'अभ्यासच्च' इति कुत्वम् – हकारस्य घकारः। कंसवधश्चिरकालवृत्तत्वादिदानीन्तनप्रयोक्तुर्दर्शनविषयो न भवति। यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान् अहन् कंसं वासुदेव इति। मूलोदाहरणेऽपि प्रयोक्ता साकेतावरोधतुल्यकालो वेदितव्यः। तस्यैव ह्यसौ दर्शनविषयः, नान्यस्य' ॥ १११ ॥

**अभिज्ञावचने लृट् ॥ वत्स्याम इति।** लृट्, मस्, 'स्यतासी लृलुटोः' इति स्यः, पूर्ववत् सकारस्य तत्वम्, 'अतो दीर्घो यञि' इति दीर्घः। **वचनग्रहणमित्यादि।** असति हि वचनग्रहणेऽभिज्ञाशब्द एवोपपदे स्यात्। तस्मिंस्तु यावन्तोऽभिज्ञावचनास्तेषु सर्वेषु भवति॥ ११२ ॥

**न यदि ॥ यदीति।** सती सप्तमीयम्। अभिज्ञावचनञ्चानुवर्त्तते। तेन यत्र यच्छब्दोऽस्ति तत्र नियोगतो-

**पदमञ्जरी**

वासुदेवः, हन्तेः परोक्षे लिट्, द्विर्वचनम्, 'अभ्यासाच्च' इति कुत्वम्—हकारस्य घकारः। कंसवधश्चिरकालान्तरवृत्तत्वादिदानीं प्रयोक्तुर्दर्शनविषयो न भवति। यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान्—आहत कंसं वासुदेव इति। मूलोदाहरणेऽपि प्रयोक्ता साकेतरोधेन तुल्यकालो वेदितव्यः, तस्येव ह्यसौ दर्शनविषयः, नान्यस्य॥ १११॥

**अभिज्ञावचने लृट्। वत्स्याम इति।** वसेर्लृट्, मस्, 'स्यतासी लृलुटोः' इति स्यप्रत्ययः, 'सः स्यार्द्धधातुके' इति सस्य तकारः, 'अतो दीर्घो यञि' इति दीर्घः।

**वचनग्रहणमित्यादि।** असति वचनग्रहणेऽभिज्ञाशब्द एवोपपदे स्यात्, तस्मिंस्तु सति यावन्तोऽभिज्ञानवचनास्तेषु भवति। **बुद्ध्यसे, चेतयसे इति।** अर्थप्रकरणादिना स्मृतिरूपे ज्ञाने यदानयोर्वृत्तिस्तदात्रापि भवतीति भावः॥ ११२॥

**न यदि ॥ यदीति** सतिसप्तमीयम्। अभिज्ञावचनं चानुवर्त्तते, तेन यत्र यच्छब्दोऽस्ति, तत्र यदभिज्ञावचनं

**भावबोधिनी**

अभिज्ञा = स्मृति, स्मृतिवाचक उपपद रहने पर अनद्यतन भूत काल अर्थ में धातु से लृट् प्रत्यय होता है। यह लङ् का अपवाद है। उदा० अभिजानासि देवदत्त! कश्मीरेषु वत्स्यामः। [ देवदत्त! तुम्हें याद है कि हम लोग कश्मीर में रहे थे। यहाँ स्मृतिवाची 'अभिजानासि' है अतः लङ् के विषय में भी लृट् होता है। वस् + लृट् = मस्, ''स्यतासी लृलुटोः'' सूत्र से 'स्य' बस् + स्य + मस् ''अतो दीर्घो यञि'' सूत्र से 'अ' का दीर्घ और ''सस्यार्धधातुके'' सूत्र से 'स्' का त् 'व त् स्या मस्' स् का विसर्ग वत्स्यामः = रहे थे। ]

'अभिज्ञावचने' में वचन का ग्रहण पर्याय का ग्रहण कराने के लिए है -अभिजानासि, स्मरसि, बुध्यसे, चेतयसे [ आदि किसी का भी प्रयोग रहने पर यह होता है ] ॥ ११२ ॥

**यच्छब्दसहितेऽभिज्ञावचन उपपदे लट् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। अभिजानासि देवदत्त! यत्कश्मीरेष्ववसाम। वासमात्रं स्मर्यते, न त्वपरं किञ्चिल्लक्ष्यते। तेनोत्तरसूत्रस्य नायं विषयः॥**

## ८८३. विभाषा साकाङ्क्षे ॥ ११४ ॥ (२७७९)

**'यदि' इति नानुवर्त्तते। उभयत्रविभाषेयम्। अभिज्ञावचने उपपदे यच्छब्दसहिते केवले च विभाषा लट् प्रत्ययो भवति, साकाङ्क्षश्चेत्प्रयोक्ता। लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति। अभिजानासि**

**न्यासः**

ऽभिज्ञावचनं तत्सहितं न भवतीत्याह—**यच्छब्दसहित इत्यादि। अवसामेति।** वसेर्लङ्, 'नित्यं ङितः' इति सलोपः, पूर्ववद्दीर्घः। **वासमात्रमित्यादिना** उत्तरसूत्रस्य नायं विषय इति दर्शयति। यदि हि तत्रापरं लक्षणमपेक्ष्यते तदोत्तरसूत्रे पाक्षिको विधिः स्यात्, स नेष्यते, तस्मान्नापेक्ष्यते॥ ११३॥

**विभाषा साकाङ्क्षे॥ उभयत्रविभाषेयमिति।** प्राप्ते चाप्राप्ते च। असति हि यच्छब्दे 'अभिज्ञावचने लृट्' इति प्राप्ते, सति यच्छब्दे 'न यदि' इति प्रतिषेधादप्राप्ते। आकाङ्क्षणम्=आकाङ्क्षा, आकाङ्क्षया सह वर्त्तते साकाङ्क्षः। आकाङ्क्षा च सम्बन्धज्ञानमुच्यते, तच्चेतनावतो धर्मः, तस्मात् साकाङ्क्ष इति प्रयोक्तुर्विशेषणं विज्ञायत इत्याह—**साकाङ्क्षश्चेत् प्रयोक्तेति।** अस्यैवार्थं स्पष्टीकर्त्तुमाह—**लक्ष्यलक्षणयोरित्यादि।** तत्र यदि ह्येतदपेक्ष्यत एतदुक्तं भवति—लक्ष्यलक्षणयोर्यः सम्बन्धस्तद्विषयज्ञानं यदि प्रयोक्तुरुपपन्नं भवति। यदि प्रयोक्ता

**पदमञ्जरी**

तन्नियोगतो यच्छब्देन सहितं भवतीत्यभिप्रेत्याह—**यच्छब्दसहित इत्यादि। अवसामेति।** वसेर्लङ्, मस्, 'नित्यं ङितः' इति सलोपः, दीर्घः, वासमात्रमित्यादिनोत्तरसूत्रस्य नायं विषय इति दर्शयति। यदि तत्रापरं किञ्चिल्लक्ष्यमपेक्ष्येत तदोत्तरसूत्रेण पाक्षिको विधिस्स्यात्, तच्च नेष्यते, तस्मान्न तस्य विषयः॥ ११३॥

**विभाषा साकाङ्क्षे॥ उभयत्रविभाषेयमिति।** प्राप्ते चाप्राप्ते च। असति यच्छब्दे 'अभिज्ञावचने लृट्' इति लृटि प्राप्ते सति यच्छब्दे प्रतिषेधे प्राप्ते। आकाङ्क्षणम्=आकाङ्क्षा, आकाङ्क्षया सह वर्त्तते साकाङ्क्षः। आकाङ्क्षा च चेतनावतो धर्मः, तस्मात्साकाङ्क्ष इत्येतत्प्रयोक्तृविशेषणम्, तेन सकर्मक इत्यादिवत्समासः। **साकाङ्क्षश्चेत्प्रयोक्तेति।** 'अङ्गयुक्तं तिङाकाङ्क्षम्' इत्यत्र तु प्रयोक्तृगताकाङ्क्षाध्यारोपेण तिङन्तमाकाङ्क्षमिति वक्ष्यते। इह तु मुख्ये प्रयोक्तरि सम्भवति, गौणकल्पनया धात्वर्थविशेषणमयुक्तमिति भावः। ईदृशे पुनर्विषये प्रयोक्ता साकाङ्क्षो भवतीत्याह—**लक्ष्यलक्षणयोः सम्बन्धे इति।** यत्रैको धात्वर्थो लक्ष्यः, अपरो लक्षणम्, तत्र

**भावबोधिनी**

'यत्' शब्द के साथ अभिज्ञावाचक उपपद रहने पर (भूतकाल अर्थ में पूर्वसूत्र से प्राप्त) लृट् नहीं होता है। पूर्व सूत्र से प्राप्त लृट् का निषेध किया जाता है। उदा०—अभिजानासि देवदत्त! यत् कश्मीरेषु अवसाम। [देवदत्त तुम याद करते हो कि हम लोग कश्मीर में रहते थे। यहाँ पूर्वसूत्र से लृट् प्राप्त होता है उसका निषेध हो जाने पर लङ् होता है—वस्+लङ्, अट्, शप्=अ, मस्—अ वस् अ मस्, दीर्घ, "नित्यं ङितः" सूत्र से 'स्' का लोप— अवसाम=रहते थे।] यहाँ केवल रहने का स्मरण किया जा रहा है और कुछ नहीं लक्षित होता है, अतः यह अग्रिम सूत्र का विषय नहीं है॥ ११३॥

'यदि' इसकी अनुवृत्ति नहीं होती है। यह उभयविभाषा है, अर्थात् प्राप्त रहने पर और प्राप्त न रहने पर यह विकल्प किया जा रहा है। अभिज्ञा=स्मरण का वाचक उपपद रहने पर 'यत्' शब्द के साथ और केवल में (भूत में) लृट् का प्रयोग विकल्प से होता है यदि प्रयोक्ता साकांक्ष=आकाङ्क्षायुक्त हो तो। लक्ष्य और लक्षण के सम्बन्ध में

**देवदत्त ! कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे । अभिजानासि देवदत्त ! मगधेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे । यदि खल्वपि अभिजानासि देवदत्त ! यत्कश्मीरेषु वत्स्यामः, यत्तत्रौदनं भोक्ष्यामहे । अभिजानासि देवदत्त ! यत्कश्मीरेष्ववसाम, यत्तत्रौदनमभुञ्ज्महि । वासो लक्षणम्, भोजनं तु लक्ष्यम् ॥**

**८८४. परोक्षे लिट् ॥ ११५ ॥ ( २१७१ )**

**'भूतानद्यतने' इति वर्त्तते । तस्य विशेषणं परोक्षग्रहणम् । भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद्धातोर्लिट् प्रत्ययो भवति ।**

**न्यासः**

लक्ष्यलक्षणयोः सम्बन्धमपेक्षत इति यावत् । **भोक्ष्यामह इति ।** भुजः पूर्ववदात्मनेपदम्, स्यप्रत्ययश्च, टेरेत्वम्, 'चोः कुः' इति कुत्वम्—जकारस्य गकारः, 'खरि च' इति चर्त्वम्--ककारः, सकारस्य षत्वम् । किं पुनर्लक्ष्यं लक्षणञ्च, ययोः सम्बन्धे प्रयोक्तुराकाङ्क्षेत्याह—**वासो लक्षणमिति ।** परिज्ञातत्वाल् लक्षणम्, तेन हि जनो लक्ष्यते । **भोजनं तु लक्ष्यमिति ।** अपरिज्ञातत्वात्; न तु लक्षणम् । परिज्ञातं ह्यपरिज्ञातस्य लक्षणमिति भवति, यथा --अग्नेर्धूम इति ॥ ११४ ॥

**परोक्षे लिट् ॥ ननु चेत्यादि ।** धात्वर्थो हि पूर्वापरीभूतावयवा साध्यमाना क्रिया । यच्च साध्यमानं तदसत् । तच्चासदिन्द्रियाणामविषयः, तेषां सद्विषयत्वात् । यच्चेन्द्रियाणामविषयः तत् परोक्षमिति स एव हि धात्वर्थः परोक्षः, ततः परोक्षग्रहणमनर्थकम् व्यवच्छेद्याभावादिति भावः ।

**पदमञ्जरी**

द्वयोर्लक्ष्यलक्षणभावेन सम्बन्धे सति प्रयोक्तुराकाङ्क्षा भवति, तत्र न वासमात्रं प्रतिपाद्य प्रयोक्ता चरितार्थो भवति, किन्तु तेन प्रसिद्धेन भोजनादिकं स्मारयितुं प्रवर्त्तते ॥ ११४ ॥

**परोक्षे लिट् ॥** परोक्षशब्दोऽयमतीन्द्रियवाची प्रसिद्धः । व्युत्पत्तिस्तु परमक्षणः परोक्षम्, मयूरव्यंसकादित्वात्समासः, 'अच्प्रत्यन्ववपूर्वात्' इत्यत्राजिति योगविभागादच् समासान्तः । वृत्तिविषये चाक्षिशब्दः सर्वेन्द्रियवचनः, न चक्षुःपर्यायः; अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षमापद्येत । एवं च कृत्वा दर्शनपर्यायोऽक्षिशब्दो न भवतीति 'अक्ष्णोऽदर्शनात्' इत्येवाच् समासान्तोऽस्तु । अन्ये तु 'प्रतिपरसमनुभ्योऽक्ष्णः' ( ग० सू० ५८.५.४.१०७ ) इति शरत्प्रभृतिषु पाठादच् समासान्त इत्याहुः । स च यद्यप्यव्ययीभावे विधीयते, तथापि परशब्देनाव्ययीभावासम्भवात्समासान्तरे विज्ञायते । एवं तु 'क्रियायां परोक्षायाम्' ( म० भा० ३.२.११५ ) इति भाष्यप्रयोगे टिल्लक्षणो ङीप् प्राप्नोति, तस्मादजन्त एवायम् । तत्र परतः परशब्दस्य परो भावोऽस्मादेव निर्देशाद्भवति, परशब्दादुत्तरस्याक्षिशब्दस्यादेरुत्वं वा ।

**भावबोधिनी**

प्रयोक्ता की आकांक्षा होती है । उदा० अभिजानासि देवदत्त ! कश्मीरेषु वत्स्यामः, तत्र ओदनं भक्ष्यामहे । अभिजानासि देवदत्त ! मगधेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे । [ देवदत्त ! तुम याद करते हो कि हम लोग कश्मीर में रहते थे, वहां चावल खाते थे । देवदत्त ! तुम्हें याद है, हम लोग मगध में रहते थे, वहाँ चावल खाते थे । यहाँ 'रहना' लक्षण है और 'चावल-भक्षण' लक्ष्य है । अतः साकांक्षता के कारण यह सूत्र प्रवृत्त होता है क्योंकि 'रहने के' के बाद 'क्यों ?' यह आकांक्षा है, उसका उत्तर है- चावल खाने के लिए । ] यत्-सहित में भी होता है—अभिजानासि देवदत्त ! यत् कश्मीरेषु वत्स्यामः, यत् तत्र ओदनं भोक्ष्यामहे । [ यहाँ 'यत्' है । पक्ष में लङ् भी होता है—] अभिजानासि देवदत्त ! यत् कश्मीरेषु अवसाम, यत् तत्र ओदनम् अभुञ्ज्महि । [ अवसाम और अभुञ्ज्महि—यहाँ लङ् है । ] वास = रहना लक्षण है और 'भोजन' करना लक्ष्य है ॥ ११४ ॥

'भूतानद्यतने' इसकी अनुवृत्ति होती है । इसके विशेषण 'परोक्षे' का यहाँ ग्रहण है । भूत अनद्यतन परोक्ष अर्थ में वर्तमान धातु से लिट् प्रत्यय होता है ।

**ननु च धात्वर्थः सर्वः परोक्ष एव ? सत्यमेतत् । अस्ति तु लोके धात्वर्थेनाऽपि कारकेषु प्रत्यक्षाभिमानः । स यत्र नास्ति तत्परोक्षमित्युच्यते । चकार । जहार । उत्तमविषयेऽपि चित्तव्याक्षेपात् परोक्षता सम्भवत्येव, तद्यथा—सुप्तोऽहं किल विललाप ।**

**न्यासः**

**सत्यमेतदिति** । यदनन्तरमुक्तम् । यदि सत्यमेतत् तदा कस्य व्यवच्छेदार्थं परोक्षग्रहणं कृतमित्याह—**अस्ति त्वित्यादि** । यत्र साध्यानि प्रत्यक्षाणि तत्रानिष्पन्ने क्रियात्मनि धात्वर्थे प्रत्यक्षाभिमानो लोकस्य भवति । ननु च साधनान्यपि नैव प्रत्यक्षाणि; शक्तिस्वभावत्वात्, शक्तेश्च कार्यानुमेयत्वात्, न ह्यशक्तौ कार्यं करोतीति कार्यकरणे शक्तिरनुमीयते; तत् किमुच्यते साधनानि प्रत्यक्षाणि ? नैष दोषः; 'द्रव्याश्रिता हि शक्तयः' इति द्रव्यस्य प्रत्यक्षत्वादाश्रयधर्ममाश्रितेषु शक्त्यात्मकेषूपचार्याण्येतान्यपि प्रत्यक्षाणीत्युच्यन्ते । अथ वा—तदपि साधनाश्रयं द्रव्यशक्तिमतोर्भेदस्याविवक्षितत्वात् साधनशब्देनोच्यते; तदनेन परोक्षग्रहणेन प्रत्यक्षाभिमानोऽस्ति, स एव परोक्ष इत्युच्यते, तदाह—**स यत्र नास्तीति** । आत्मविषय उत्तमस्य च धात्वर्थस्य परोक्षत्वं नोपपद्यते; तत्साधनानां प्रत्यक्षत्वात् । तत्र लोकस्य प्रत्यक्षत्वात्, ततश्चोत्तमेन सिध्यतीति चोद्यमाशङ्क्याह—**उत्तमविषयेत्यादि** । आत्मसाध्या हि क्रिया, यत्र चित्तविक्षेपान्नोपपद्यते, तदासौ परोक्षा भवति तेनोत्तमविषयेऽपि परोक्षभावः । तद् भवत्येव । **विललापेति** । लपेर्विपूर्वस्योत्तमे णलि रूपम् ।

**पदमञ्जरी**

**ननु चेत्यादि** । एकफलोद्देशेन प्रवृत्तत्वादैक्यमिवापन्नो विततरूपः क्षणप्रवाहो धात्वर्थः, स कार्त्स्न्येनैकस्मिन्क्षणे न सम्भवतीति सद्वस्तुविषयैरिन्द्रियैर्न गृह्यते, ततश्चैकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेऽपि समूहरूपो धात्वर्थः सर्वः परोक्ष एव, ततश्चाव्यभिचारादविशेषणमिति भावः । **सत्यमेतदिति** । अनन्तरोक्तं मन्यते । किमर्थं तर्हि परोक्षग्रहणमित्याह—**अस्त्विति** । यत्र साधनशक्त्याश्रयभूतं फूत्कारसीत्कारादिविशिष्टं संरब्धरूपं द्रव्यं प्रत्यक्षम्, तत्र धात्वर्थ एव प्रत्यक्षाभिमानो लौकिकानाम् । अभिमानः=मिथ्याज्ञानम्; तद्व्यावृत्तये परोक्षग्रहणम् । यदि तर्हि यत्र साधनशक्त्याश्रयं द्रव्यं परोक्षम्, तत्र लिड् भवति तर्हि उत्तमो न प्राप्नोति, तत्र हि बुद्धीन्द्रियशरीरादिसंघातः कर्ता, स चात्मनः प्रत्यक्ष एव । 'परस्मैपदानाम्' इति तु णलादेशवचनं 'णलुत्तमो वा' इति च, 'छन्दसि लुङ्लङ्लिटः' 'अत्यन्तापह्नवे' ( वा० २७१ ) इति चापरोक्षे यो लिट् तद्विषयं भविष्यतीत्यत आह—**उत्तमविषयेऽपि चित्तव्याक्षेपादिति** । मदस्वप्नादिभिश्चित्ते व्याक्षिप्ते भवति वै कश्चित्स्वकृतमेव न जानाति, पश्चादेव त्वया कृतमिति पार्श्वस्थेभ्यः श्रुत्वा प्रयुंक्ते—सुप्तोऽहं किल विललापेति । किलेत्यज्ञानं सूचयति ।

**भावबोधिनी**

**प्रश्न**—सभी धात्वर्थ=क्रिया परोक्ष ही होती है ? ( क्योंकि क्रिया का दर्शन करना सम्भव नहीं है तब 'परोक्षे' इस विशेषण की क्या उपयोगिता ? )

**उत्तर** यह सच है, क्योंकि लोक में धात्वर्थ के द्वारा भी कारकों में प्रत्यक्षत्व का अभिमान=मिथ्याज्ञान होता है । ऐसा जहाँ नहीं रहता है वहाँ वह परोक्ष ऐसा कहा जाता है । उदा० चकार । जहार । [ कृ + लिट् = तिप् = णल् = अ, रपर, हलादि शेष, "कुहोश्चुः" से कवर्ग का चवर्ग च कृ + अ, ऋ की वृद्धि, रपर—चकार । इसी प्रकार हृ + लिट् में भी समझना चाहिए । ]

[ उत्तम पुरुष का अपना परोक्षत्व कैसे होता है—इसका उपपादन करते हैं—] चित्त की विक्षिप्तता से उत्तम पुरुष के विषय में भी परोक्षत्व सम्भव ही है । [ क्योंकि ज्ञान में इन्द्रियार्थ का सन्निकर्ष कारण होता है । यदि इन्द्रिय योग्य नहीं है तो प्रत्यक्ष ज्ञान सम्भव नहीं हो सकता । ] जैसे—सुप्तोऽहं किल विललाप । [ सोते हुए मैंने विलाप किया । [ शयनकाल में बाह्य इन्द्रिय व्यापार न होने से प्रत्यक्षत्व का अभाव=परोक्षत्व हो जाता है । ]

**❋ अत्यन्तापह्नवे च लिड् वक्तव्यः ❋। कलिङ्गेषु स्थितोऽसि ? नाहं कलिङ्गान् जगाम। दक्षिणापथं प्रविष्टोसि ? नाहं दक्षिणापथं प्रविवेश॥**

**८८५. हशश्वतोर्लङ् च ॥ ११६ ॥ ( २७७६ )**

**भूतानद्यतनपरोक्षेऽर्थे लिटि प्राप्ते हशश्वतोरुपपदयोर्लङ् प्रत्ययो भवति, चकाराल्लिट् च। इति हाकरोत्। इति ह चकार। शश्वदकरोत्। शश्वच्चकार॥**

**८८६. प्रश्ने चासन्नकाले ॥ ११७ ॥ ( २७७७ )**

**'भूतानद्यतनपरोक्षे' इति वर्त्तते। तस्य विशेषणमेतत्। प्रष्टव्यः=प्रश्नः। आसन्नकाले पृच्छ्यमाने**

**न्यासः**

**अत्यन्तापह्नव इत्यादि।** प्रत्यक्षमेतत्। अपह्नवः=अपलापः। स क्वचिदत्यन्तो भवति यः सर्वापह्नवः, क्वचिदनत्यन्तो य एकदेशापह्नवः। तत्र योऽत्यन्तः स सर्वापह्नवः, तत्र लिड् वक्तव्यः, व्याख्येय इत्यर्थः। व्याख्यानं त्विहापि बहुलग्रहणमाश्रित्य कर्त्तव्यम्। कश्चित् केनचित् पृष्टः—**कलिङ्गेषु स्थितोऽसीत्यादि।** स एवाह—**नाहं कलिङ्गान् जगामेति।** अत्र केवलं न कलिङ्गविषयस्यापह्नवोऽपि तु गमनस्यापीति विद्यतेऽत्यन्तापह्नवः। यस्तु स्थानमात्रस्यापह्नवो न गमनस्यापि, तदानत्यन्तापह्नवे लङेव भवति—न हि कलिङ्गेषु प्रत्यतिष्ठ इति। तथा कश्चित् केनचित् पृष्टः दक्षिणापथं प्रविश्य त्वयेदं कार्यं कृतमिति ? स एवाह—**नाहं दक्षिणापथं प्रविवेशेति।** अत्रापि विद्यतेऽत्यन्तापह्नवः। तथा हि—न केवलं दक्षिणापथविषयं कार्यं प्रतिषिध्यते, अपि तु प्रवेशनमपि॥ **११५॥ हशश्वतोर्लङ् च ॥ ११६॥**

**प्रश्ने चासन्नकाले॥ प्रष्टव्यः प्रश्न** इत्यनेन प्रश्नशब्दं कर्मसाधनं दर्शयति। करणसाधने हि पृच्छ्यतेऽनेनेति शब्दः प्रश्नशब्देनोच्यते। तथा च सति तस्योच्चार्यमाणत्वादात्मलाभस्य सर्वदैवासन्नकाल

**पदमञ्जरी**

**अत्यन्तापह्नव इति।** अपह्नवः=अपलापः। कलिङ्गो नाम जुगुप्सितो देशः, तत्र प्रविश्य त्वया चिरकालं स्थितमिति कश्चिदुक्तस्सन्नाह—नाहं कलिङ्गान् जगामेति। न केवलमवस्थानमेव प्रतिषिध्यते, किं तर्हि ? तद्धेतुभूतगमनमपीति भवत्यत्यन्तापह्नवः। तथा दक्षिणापथं प्रविश्यायाज्ययाजनादिकं त्वया कृतमिति कश्चिदुक्तः सन्नाह—नाहं दक्षिणापथं प्रविवेशेति। अत्राप्ययाज्ययाजनादेर्हेतुभूतः प्रवेश एव प्रतिषिद्ध्यत इत्यत्यन्तापह्नवः। क्वचित् **दक्षिणापथं प्रविष्टोऽसीति** वृत्तावेव पठ्यते, तत्र प्रविश्येदं कृतवानित्यर्थः॥ **११५॥ ११६॥**

**प्रश्ने चासन्नकाले॥ भूतानद्यतनपरोक्ष इति वर्त्तत इति।** अयमर्थोऽनुवर्त्तत इत्यर्थः, न पुनरेवंविधस्समासः प्रकृतोऽस्ति। **प्रष्टव्यः प्रश्न इति।** कर्मसाधनं प्रश्नशब्दं दर्शयति। करणसाधने तु प्रश्नक्रियासाधनभूते धाता-

**भावबोधिनी**

❋ अत्यन्त अपलाप = अपह्नव के विषय में भी लिट् कहना चाहिए। ❋ उदा० कलिङ्गेषु स्थितोऽसि ? नाहं कलिङ्गान् जगाम। [ किसी ने पूछा - कलिङ्ग उड़ीसा में रहे हो। उत्तर देने वाला पूरी तरह झूठ बोल देता है—मैं कभी भी कलिङ्ग उड़ीसा नहीं गया। अतः अहम् के साथ भी लिट् का प्रयोग हो गया। ] दक्षिणापथं प्रविष्टोऽसि ? नाहं दक्षिणापथं प्रविवेश। [ किसी ने पूछा—दक्षिणापथ में प्रविष्ट हुए हो ? उत्तर देने वाला झूठ बोला—मैं दक्षिणापथ में प्रविष्ट नहीं हुआ। यहाँ भी लिट् होता है ]॥ ११५॥

भूत अनद्यतन परोक्ष अर्थ में लिट् के प्राप्त रहते 'ह' और 'शश्वत्' उपपद रहते लङ् होता है, और 'च' के बल से लिट् भी होता है। उदा० इति 'ह' अकरोत। इति ह चकार। [ यहाँ लङ् और लिट् दोनों का विधान हुआ है। ] शश्वद् अकरोत्। शश्वत् चकार। [ यहाँ भी दोनों लकार होते हैं। ह=निश्चित रूप से। शश्वत्=सदा ]॥ ११६॥

'भूत-अनद्यतन परोक्षे' इनकी अनुवृत्ति होती है। उसका यह [ सूत्रोक्त शब्द ] विशेषण है। प्रष्टव्य प्रश्न=

**भूतानद्यतनपरोक्षेऽर्थे वर्त्तमानाद्धातोर्लङ्लिटौ प्रत्ययौ भवतः। कश्चित्कञ्चित्पृच्छति—अगच्छद्देवदत्तः? जगाम देवदत्तः? अयजद् देवदत्तः? इयाज देवदत्तः?**

**प्रश्न इति किम्? जगाम देवदत्तः। आसन्नकाल इति किम्? भवन्तं पृच्छामि—'जघान कंसं किल वासुदेवः'॥**

**८८७. लट् स्मे ॥ ११८ ॥ ( २७७८ )**

**'भूतानद्यतनपरोक्षे' इति वर्त्तते। स्मशब्द उपपदे भूतानद्यतनपरोक्षे लट् प्रत्ययो भवति। लिटोऽपवादः। नडेन स्म पुराधीयते। ऊर्णया स्म पुराधीयते॥**

**न्यासः**

इत्यासन्नकालग्रहणमनर्थकं स्यात्। भावसाधनेऽप्यर्थान्तरवाचिभ्यो धातुभ्यो न स्यात्। **अगच्छदिति**। 'गम्लृ सृप्लृ गतौ', 'इषुगमियमां छः' इति छत्वम्। **इयाजेति**। 'लिट्यभ्यासस्योभयेषाम्' इति संप्रसारणम्। **जघानेति**। कंसवधोऽत्र पृच्छ्यमानः। स चेदानीन्तनप्रयोक्तुरपेक्षया विप्रकृष्टकालः। पञ्चवर्षाभ्यन्तरमासन्नकाल इति **नैयायिका** वर्णयन्ति। पञ्चवर्षातीतस्तु विप्रकृष्ट इति भवति। कंसवधोऽत्र विप्रकृष्टकालः॥ ११६ ॥ ११७॥

**लट् स्मे ॥ नडेन स्म पुराधीयत इति।** इङोऽधिपूर्वाल्लट्, 'भावकर्मणोः' इत्यात्मनेपदम्, टेरेत्वम्, 'सार्वधातुके यक्', 'अकृत्सार्वधातुकयोः' इति दीर्घः। उपसर्गेण सहाकः सवर्णे दीर्घत्वम्। अथ वा—कर्त्तर्यात्मनेपदम्, अदादित्वात्वाच्छपो लुक् 'आत्मनेपदेष्वनतः' इत्यदादेशः, धातोरियङ् यथायोगं पूर्ववत्॥ ११८॥

**पदमञ्जरी**

वासन्नकाल इत्यर्थस्स्यात्, तत्रासन्नकाल इत्यनर्थकम्, न ह्यनुच्चारितात्प्रत्ययविधानम्, उच्चारितश्चासन्नकाल एव। भावसाधनेऽप्यासन्नकाले प्रश्ने वर्त्तमानादित्यर्थस्स्यात्, ततश्चार्थान्तरवाचिभ्यो लङ् न स्यात्, अतः कर्मसाधनोऽयं प्रश्नशब्दः। तत्र पञ्चवर्षाभ्यन्तरमासन्नकालम्, पञ्चवर्षातीतं तु विप्रकृष्टकालमिति वर्णयन्ति॥ ११७॥

**लट् स्मे ॥ नडेन स्म पुराधीयते इति।** अधिपूर्वादिङः कर्मणि लकारः, कर्माविवक्षायां वा भावे, नडेनेति कर्त्तरि तृतीया। अथ वा—अधीयते इति कर्त्तरि बहुवचनम्, 'आत्मनेपदेष्वनतः' इत्यदादेशः, नडेनेति सहयोगे तृतीया। अन्ये तु व्याचक्षते—पुराकल्पे नडाख्यं तृणविशेषं हस्ते गृहीत्वाधीयाना अधीयते स्मेति॥ ११८॥

**भावबोधिनी**

पूछने योग्य। समीपकालिक प्रश्न गम्यमान रहने पर भूत अनद्यतन अर्थ में वर्तमान धातु से लङ् और लिट् प्रत्यय होते हैं। कोई किसी से पूछता है—अगच्छत् देवदत्तः? जगाम देवदत्तः? [ क्या देवदत्त चला गया? ] अयजत् देवदत्तः? इयाज देवदत्तः? क्या देवदत्त ने यज्ञ किया—यहां लङ् और लिट् दोनों होते हैं। गम्+लङ्=तिप्, शप्=अ, "इषुगमियमां छः" सूत्र से 'म्' का 'छ्', तुक्=त् आगम, श्चुत्व, इलोप—अगच्छत्। यज्+लङ्=तिप्, अट्, शप्, इलोप—अयजत्। गम्+लिट्=तिप्=णल्=अ द्वित्व, हलादिशेष, "कुहोश्चुः" सूत्र से 'ग्' का ज्' "अत उपधायाः" सूत्र से उपधा की वृद्धि—जगाम। यज्+लिट् द्वित्वादि करने पर ययाज्+अ, "लिट्यभ्यासस्योभयेषाम्" सूत्र से अभ्यास 'य्' का सम्प्रसारण 'इ', 'अ' पूर्वरूप—इयाज।]

'प्रश्न प्रष्टव्य' इसका क्या फल है? जगाम देवदत्तः। [ देवदत्त चला गया। यह साधारण वाक्य है। प्रश्न नहीं है। अतः विकल्प न होकर नित्य लिट् ही होता है। ] आसन्नकाल इसका क्या फल है? भवन्तं पृच्छामि—जघान कंसं किल वासुदेवः। [ आप से पूछता हूँ—कृष्ण ने कंस को मार डाला। यहाँ अति प्राचीन घटना के विषय में पूछा गया है। अतः केवल लिट् ही होता है ]॥ ११७॥

'भूतानद्यतनपरोक्षे' इसकी अनुवृत्ति होती है। 'स्म' शब्द उपपद रहते भूत अनद्यतन परोक्ष काल अर्थ में लट् प्रत्यय होता है। यह लिट् का अपवाद है। उदाहरण—नडेन स्म पुराऽधीयते। [ नडने पहले पढ़ा था। ] ऊर्णया स्म पुराधीयते। [ ऊर्णा ने प्राचीन काल में पढ़ा ]॥ ११८॥

## ८८८. अपरोक्षे च ॥ ११९ ॥ ( २७७९ )

**अपरोक्षे च भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्म-उपपदे लट् प्रत्ययो भवति । एवं स्म पिता ब्रवीति । इति स्मोपाध्यायः कथयति ॥**

## ८८९. ननौ पृष्टप्रतिवचने ॥ १२० ॥ ( २७८० )

**'अनद्यतने परोक्षे' इति निवृत्तम् । भूतसामान्ये विधिरयम् । 'ननु' शब्द उपपदे प्रश्नपूर्वके प्रतिवचने भूतेऽर्थे लट् प्रत्ययो भवति । लुङोऽपवादः । अकार्षीः कटं देवदत्त ? ननु करोमि भोः । अवोचस्तत्र किञ्चिद्देवदत्त ? ननु ब्रवीमि भोः ।**

### न्यासः

**अपरोक्षे च ॥ ब्रवीतीति ।** 'ब्रुव ईट्' । **कथयतीति ।** 'कथं वाक्यप्रबन्धे', चुरादावदन्तः, तस्माण्णिच्, 'अतो लोपः', 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति । अथ किमर्थं पुनरिदमारब्धम् ? पूर्वेण परोक्षे विधानादपरोक्षे न प्राप्नोति, अतस्तत्रापि यथा स्यादित्येवमर्थम् । ननु च पूर्वयोगे परोक्षग्रहणं निवर्त्तिष्यते, तस्मिन् निवृत्ते पूर्वेणैव परोक्षे चापरोक्षे च भविष्यति ? सत्यमेतत्; चोद्यमपि कश्चिद् विजानीयाद् यदि परोक्षग्रहणं निवृत्तं तत्सम्बद्धमनद्यतनग्रहणमपि निवृत्तमिति, तदन्यथा मा विज्ञायीति पूर्वसूत्रे परोक्षग्रहणमनुवर्त्तते, तस्मिंश्चानुवर्त्तमाने कर्त्तव्यमेतत्, अन्यथा ह्यपरोक्षे न स्यात् ॥ ११९ ॥

**ननौ पृष्टप्रतिवचने । पृष्टप्रतिवचन इति ।** प्रश्नः पृष्टम्, भावे निष्ठा । पृष्टपूर्वकप्रतिवचनं पृष्टप्रतिवचनम् शाकपार्थिवादित्वान्मध्यपदलोपी समासः । **'अनद्यतने परोक्ष' इति निवृत्तमिति ।** अस्वरितत्वात् । **अकार्षीः कटं देवदत्त** इत्येष प्रश्नः । **ननु करोमि भो** इत्येतत् प्रश्नपूर्वकं प्रतिवचनम् । **अवोचस्तत्र किञ्चिद्देवदत्ते**त्येष प्रश्नः । **ननु ब्रवीमि भो** इत्येतत् प्रश्नपूर्वकं प्रतिवचनम् ।

### पदमञ्जरी

**अपरोक्षे च ॥** पूर्वसूत्रेण परोक्षे विधानादपरोक्षे न प्राप्नोतीत्ययमारम्भः, पूर्वसूत्र एव परोक्षग्रहणं निवर्त्तिष्यते । यद्येवम्, तत्सम्बन्धादनद्यतनग्रहणमपि निवर्तेत मा निवृतदित्येवमर्थमिदम्, द्वयोर्हि प्रकृतयोरेकनिवृत्तिर्यत्नेन क्रियमाणा इतरस्यानिवृत्तिमनुमापयति ॥ ११९ ।

**ननौ पृष्टप्रतिवचने ।** पृष्टमिति कर्मणि क्तः, पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनम् । वृत्तौ तु वस्तुमात्रं दर्शितम् । **प्रश्नपूर्वके प्रतिवचन इति ।** उदाहरणे पूर्वांशः प्रश्नः, उत्तर उदाहरणम् । पृष्टग्रहणार्थकं प्रश्नपूर्वकमेव

### भावबोधिनी

और अपरोक्ष अनद्यतन भूत अर्थ में वर्तमान धातु से 'स्म' उपपद रहने पर लट् होता है । उदा० **एवं स्म पिता ब्रवीति ।** [ पिता जी ऐसा कहते थे । 'स्म' के योग में लट् होता है —ब्रू + लट् = तिप्, "ब्रुव ईट्" सूत्र से ईट् आगम, 'ऊ' का गुण, अवादेश —ब्र् अव् ई ति ] इति स्म उपाध्यायः कथयति । [ ऐसा उपाध्याय जी कहते थे । यहाँ चुरादिगणीय 'कथ' धातु से स्वार्थिक णिच् = इ प्रत्यय, "अतो लोपः" सूत्र से 'अ' का लोप, इसका स्थानिवद्भाव "अचः परस्मिन् पूर्वविधौ" सूत्र से हो जाता है, अतः 'अत उपधायाः" सूत्र से उपधा की वृद्धि नहीं होती है । 'स्म' के योग में लट्, कथि + लट् = तिप्, शप् = अ, गुण, अय् आदेश कथयति । ] ॥ ११९ ॥

"अनद्यतने परोक्षे' इनकी निवृत्ति हो जाती है । भूतकाल सामान्य में यह विधान है । 'ननु' शब्द उपपद रहने पर प्रश्नपूर्वक प्रतिवचन = प्रत्युत्तर में भूत अर्थ में लट् प्रत्यय होता है । यह लुङ् का अपवाद है । उदा० अकार्षीः कटं देवदत्त ? ननु करोमि भोः । [ देवदत्त ! तुमने चटाई बना ली ? हाँ जी, बना ली । ] अवोचः तत्र किंचिद् देवदत्त ? ( देवदत्त तुमने वहाँ कुछ कहा ? ) ननु ब्रवीमि । ( हाँ जी, कहा । )

**पृष्टप्रतिवचन इति किम् ? नन्वकार्षीन्माणवकः ॥**

## ८९०. नन्वोर्विभाषा ॥ १२१ ॥ ( २७८१ )

**'भूते' इत्येव । नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट् प्रत्ययो भवति भूते । अकार्षीः कटं देवदत्त ? न करोमि भोः । नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ॥**

## ८९१. पुरि लुङ् चास्मे ॥ १२२ ॥ ( २७८२ )

**अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्त्तते । पुराशब्द उपपदे स्म-शब्दवर्जिते भूतानद्यतनेऽर्थे विभाषा**

**न्यासः**

नन्वकार्षीदिति । प्रश्नपूर्वकं प्रतिवचनं न भवतीति लुङेव भवति । ननु च प्रतिवचनं सर्वं प्रश्नपूर्वकमेव, तदनर्थकं पृष्टग्रहणम्, व्यवच्छेद्याभावात् ? नैतदिष्टम्; प्रतिवचनशब्दोऽयमस्त्येव पृष्टान्वाख्याने—यः प्रश्नमन्तरेण न भवति; अस्त्यव्ययीभावे—वचनं वचनं प्रति प्रतिवचनम्, यथार्थे 'अव्ययम्' इति वीप्सायामव्ययीभावः; अस्ति समाधिवचनः—प्रतिपूर्वस्य वचेः समाधाविति दर्शनात्, तथा हि वक्तारो वदन्ति—यदनेनाभिहितं तन्मया प्रत्युक्तमिति, परिष्कृतमित्यर्थः; तदेवमनेकार्थे प्रतिवचनशब्दः, यदि पृष्टग्रहणं न क्रियते सर्वेष्वर्थेषु स्याद् । अस्मिंस्तु क्रियमाणे प्रश्नपूर्वो यः प्रतिवचनशब्दः, स एव गृह्यते, नान्य इति भवत्यानर्थक्यम् ॥ १२० ॥

**नन्वोर्विभाषा ॥** नाकार्षमिति । पूर्ववदम्भावः ॥ १२१ ॥

**पुरि लुङ् चास्मे । पुराशब्द इति ।** एतेन पुराशब्द इहोपपदत्वेनोपात्तो न पूरिति दर्शयति । यद्येतदेव अस्याकारान्तत्वात् पुरीति सप्तम्यन्तो निर्देशो नोपपद्यते । 'आतो धातोः' इति योगविभागादाकारलोपाददोषः । अथ 'पॄ पालनपूरणयोः' इत्येतस्माद् भ्राजादिसूत्रेण क्विपि विहितः 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे च कृते यः पूःशब्दः सम्पद्यते तस्येहाप्युपपदत्वेनोपादानमिति कस्मान्न विज्ञायते ? तस्यानद्यतनवृत्त्यसम्भवात् । पुराशब्दस्तु

**पदमञ्जरी**

प्रतिवचनम् ? तन्न; विरुद्धमपि वचनं प्रतिवचनं, वचनाभिमुखं प्रतिवचनमित्यपि सम्भवात् । तस्मात् पृष्टग्रहणम् । अत्यन्तासन्नकाले चायं विधिरिष्यते, तत्र निर्वृत्तायामपि पाकादिक्रियायां तत्कृतस्य श्रमादेरनुवृत्तिः । एवं च श्रमादिदर्शनेन सैव क्रिया वर्त्तत इति शक्यं वक्तुमिति । 'वर्तमाने लट्' इत्येव सिद्धेः प्रत्याख्यातमिदम्—'ननौ पृष्टप्रतिवचने' इत्यशिष्यम्, क्रियासमाप्तेरविवक्षितत्वादिति ॥ १२० ॥ १२१ ॥

**पुरि लुङ् चास्मे ॥ अनद्यतनग्रहणमित्यादि ।** लुङ्ग्रहणं चात्र लिङ्गम् । यदि हि भूतमात्रेऽयं विधिः स्यात्

**भावबोधिनी**

पृष्ट का प्रतिवचन इसका क्या फल है ? ननु अकार्षीत् माणवकः ? [ क्या माणवक ने काम कर लिया ? अब प्रतिवचन नहीं है । अतः लट् नहीं होता है । ] ॥ १२० ॥

'भूते' इसकी अनुवृत्ति होती है । 'न' शब्द और 'नु' शब्द उपपद रहते पृष्ट=प्रश्न के प्रतिवचन=उत्तर में विकल्प से लट् प्रत्यय होता है भूतकाल अर्थ में । ] उदा० अकार्षीः कटं देवदत्तः ? न करोमि भोः । न अकार्षम्[ देवदत्त क्या चटाई बना ली ? नहीं बनाई । ] यहाँ 'करोमि' और 'अकार्षम्' यह लट् और लुङ् दोनों होते है । ] अकार्षीः कटं देवदत्त ? अहं नु करोमि, अहं नु अकार्षम् [ देवदत्त ! तुमने चटाई बना ली ? हाँ मैंने बना ली । ]

[ 'अकार्षीः कटं देवदत्त ?' यह प्रश्न वाक्य 'अहं नु करोमि' 'अहं नु आकर्षम्' के साथ भी जोड़ना चाहिये । ऐसा करने पर ही पृष्ट का प्रतिवचन होता है तभी यह सूत्र प्रवृत्त होता है । ] ॥ १२१ ॥

मण्डूकप्लुति से यहाँ 'अनद्यतन' की अनुवृत्ति होती है । 'पुरा' शब्द उपपद रहने पर 'स्म' शब्द छोड़ देने पर

**लुङ् प्रत्ययो भवति लट् च। ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति। वसन्तीह पुरा छात्राः। अवात्सुः पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः।**

**अस्म इति किम् ? नडेन स्म पुराधीयते ॥**

## ८९२. वर्त्तमाने लट् ॥ १२३ ॥ ( २१५३ )

**प्रारब्धोऽपरिसमाप्तश्च वर्तमानः, तस्मिन्वर्त्तमानेऽर्थे वर्त्तमानाद्धातोः लट् प्रत्ययो भवति। पचति। पठति ॥**

**न्यासः**

तत्रैव वर्त्तत इति तस्यैव ग्रहणं युक्तम्। 'लुङ् च' इति चकारेण लडनुकृष्यत इति दर्शयति। **यथाविषयमिति।** 'यथाऽसादृश्ये' इति वीप्सायामव्ययीभावः। **अन्येऽपीति।** लङादयः। **वसन्तीति।** लट्। **अवात्सुरिति।** लुङ्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः, 'वदव्रज' इत्यादिना वृद्धि, पूर्ववत् सकारस्य तत्वम्। **अवसन्निति।** लङ्। **ऊषुरिति।** लिट्, 'परस्मैपदानाम्' इत्यादिना झेर्जुस्, द्विवचनम्, वच्यादिसूत्रेण संप्रसारणम्, लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य च; 'शासिवसिघसीनाञ्च' इति षत्वम् ॥ १२२ ॥

**वर्त्तमाने लट् ॥ प्रारब्धोऽपरिसमाप्तश्चेति।** प्रारब्धो यः साधयितुं प्रस्तुतः, न च समाप्तिमुपगतः स वर्त्तमान इत्युच्यते। वर्त्तमानग्रहणं धात्वधिकारात् तदर्थस्यैव विशेषणं विज्ञायत इत्याह– **वर्त्तमान इत्यादि।**

**पदमञ्जरी**

विभाषा लटो विधानात्तेन मुक्ते लुङपि भविष्यति, किं लुङ्ग्रहणेन ? अनद्यतनग्रहणानुवृत्तौ तु लटा मुक्ते लङेव स्यादिति कर्त्तव्यं लुङ्ग्रहणम्। **अन्येऽपीति।** लङ्लिटौ, अभिज्ञावचने लृट्—अभिजानासि देवदत्त वत्स्यन्तीह पुरा छात्रा इति ॥ १२२ ॥

**वर्त्तमाने लट् ॥ प्रारब्धोऽपरिसमाप्तश्चेति।** अधिश्रयणादिरधःश्रयणपर्यन्त ओदनफलावच्छिन्नो विततरूपो व्यापारनिचयः पचेरर्थः। एवं सर्वत्र स यावता कालेन निवर्त्तते स कालो वर्त्तमानः, तद्योगाद्वर्त्तमानो धात्वर्थ इत्यर्थः। तेन निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य च भावित्वान्निष्पन्नानिष्पन्नव्यतिरेकेण राश्यन्तरस्याभावाद्वर्त्तमानाभाव इति चोद्यं परिहृतम्। इहाध्ययने प्रवृत्ता यदा भोजनादिक्रियां कुर्वन्तो नाधीयते तदा अधीयत इति प्रयोगो न प्राप्नोति ? नैष दोषः; आ फलनिष्पत्तेरध्ययनमपरिसमाप्तमन्तरालवर्ति तु भोजनादिकं नान्तरीयकं तस्यैव वावयवक्रिया। यमपि भवान्मुक्तसंशयं वर्त्तमानकालं न्याय्यं मन्यते—भुङ्क्ते देवदत्त इति, अत्राप्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबति, तत्र चेद्युक्ता वर्त्तमानकालता, इहापि युक्ता दृश्यताम्। उक्तं च—

व्यवधानमिवोपैति निवृत्त इव दृश्यते।
क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ॥

**भावबोधिनी**

भूत अनद्यतन अर्थ में विकल्प से लुङ् प्रत्यय होता है और लट् होता है। जब ये दोनों नहीं होते हैं तब अन्य प्रत्यय भी विषयानुसार होते हैं। उदा० वसन्ति इह पुरा छात्राः। अवात्सुः इह पुरा छात्राः। अवसन् इह पुरा छात्राः। ऊषुः इह पुरा छात्राः। [ यहाँ पहले छात्र रहते थे। पुरा के योग में लट्, लुङ्, लङ् और लिट् सभी का प्रयोग हुआ है। ]

'स्म' न रहने पर—इसका क्या फल है ? नडेन स्म पुरा अधीयते। [ नडने पहले पढ़ा था। यहाँ 'स्म' होने के कारण यह सूत्र नहीं लागू होगा। अतः केवल लट् होता है 'स्म' के योग में। ] ॥ १२२ ॥

प्रारब्ध और अपरिसमाप्त [ प्रारम्भ हो चुका और समाप्त नहीं हुआ ] काल वर्तमान है, उस वर्तमानकाल अर्थ में विद्यमान धातु से लट् प्रत्यय होता है। उदा० पचति। पठति। [ पच् + लट् = तिप्, 'कर्तरि शप्' से शप् = अ — पचति = पकाता है। पठ् + लट् = तिप्, शप् = अ — पठति = पढ़ता है। ]

## ८९३. लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥ ( ३१०० )

**लटः शतृशानचावित्येतावादेशौ भवतः, अप्रथमान्तेन चेत्तस्य सामानाधिकरण्यं भवति । पचन्तं देवदत्तं**

**न्यासः**

न ह्यधात्वर्थे धातोर्वृत्तिः सम्भवति । लटष्टकारः 'टित आत्मनेपदानां टेः' इति विशेषणार्थः । अकारः 'विदो लटो वा' इति विशेषणार्थः; इकारे ह्युच्चारिते लिडादीनां ग्रहणं स्यात् ॥ १२३ ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे** ॥ शतृशानचोः शकारौ सार्वधातुकार्थौ । ऋकार उगित्कार्यार्थः । अप्रथमासमानाधिकरण इति पर्युदासोऽयम् । प्रथमाशब्दोऽयं विभक्तिविशेषे सौरौजस्पर्यन्ते शास्त्रे रूढः । प्रथमाया अन्या द्वितीयादिका विभक्तिः = अप्रथमा । समानशब्दोऽयं साधारणवचनः; यथा—देवदत्तयज्ञदत्तौ समानधनाविति । अधिकरणशब्दोऽयमभिधेयवचनः । समानञ्च तदधिकरणञ्चेति कर्मधारयः । अप्रथमया समानाधिकरणम् = अप्रथमासमानाधिकरणम् । 'तृतीया' इति योगविभागात् समासः । ततः, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । अप्रथमासमानाधिकरणभावेन शतृशानचोर्भावो लक्ष्यते । अप्रथमेति पर्युदासवृत्त्या द्वितीयादेर्विभक्तेर्ग्रहणम्, तेन प्रत्ययग्रहणपरिभाषया तदन्तविधिर्भविष्यतीत्याह—**अप्रथमान्तेन चेदित्यादि** । **तस्येति** । लटः । **सामानधिकरण्यमिति** । समानाभिधेयमिति । यदि द्वितीयान्तेन शब्देन सामानाधिकरण्यम् =

**पदमञ्जरी**

न च विच्छिन्नरूपोऽपि स विरामान्निवर्तते[1] ।
सर्वैव हि क्रियाऽन्येन सङ्कीर्णेवोपलभ्यते ॥
तदन्तरालदृष्टा वा सर्वैवावयवक्रिया ।
सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते ॥ ( वा० प० ३.९.८२.८४ ) इति ।

एतदप्यनेनैवोक्तं प्रारब्धोऽपरिसमाप्तश्च वर्तमान इति । इह तिष्ठन्ति पर्वताः, स्रवन्ति सिन्धव इति पर्वतादिस्थित्यादेः सर्वदाभावाद् भूतभविष्यदभावात्तत्प्रतिद्वन्द्विरूपस्य वर्तमानस्याप्यभाव इति लण् न प्राप्नोति ? नैष दोषः; कालत्रयवर्तिनां राज्ञां याः क्रियाः पालनादिका भूतादिभेदेन भिन्नास्ताः पर्वतस्थित्यादेर्भेदिकाः, ततश्च ये सम्प्रति राजानस्तत्क्रियाभेदेन भिन्नाया पर्वतादिस्थितेर्वर्तमानत्वम् । एवं च कृत्वा भूतभविष्यत्कालयोगोऽप्युपपद्यते —तस्थुः पर्वता नलदुष्यन्तादिकाले, स्थास्यन्ति पर्वताः कल्किविष्णुकाले । लटष्टकारष्टेरेत्वार्थः ॥ १२३ ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे** ॥ शकारः सार्वधातुकसंज्ञार्थः, ऋकार उगित्कार्यार्थः, चकारः स्वरार्थः । प्रथमाशब्दस्सुपामाद्ये त्रिके प्रसिद्धः, प्रथमाया अन्याऽप्रथमा = द्वितीयादिः, तत्र प्रत्ययग्रहणपरिभाषया तदन्तविधिः, अप्रथमान्तं द्वितीयाद्यन्तमित्यर्थः । अधिकरणम्=अभिधेयम्, समानम्=साधारणम्, अभिधेयं यस्य तत्समानाधिकरणम्, अप्रथमान्तेन समानाधिकरणमप्रथमासमानाधिकरणम् । तृतीयेति योगविभागात्समासः । द्विपदो वा बहुव्रीहिः अप्रथमासमानाधिकरणं यस्येति । 'यस्य च भावेन' इति सप्तमी अप्रथमासमानाधिकरणे लटि सति, तस्य लट इति षष्ठ्यर्थे सप्तमी । एष पर्युदासपक्षो दर्शितः । प्रसज्यप्रतिषेधपक्षे तु नञो भवतिना संबन्धः । प्रथमाशब्देन प्रथमान्तं गृह्यते । शेषं समानम् ।

**भावबोधिनी**

लट् के शतृ और शानच्—ये आदेश होते हैं यदि उस लट् का अप्रथमान्त = द्वितीयान्त आदि के साथ सामानाधिकरण्य ( = समानाभिधेयता = समान अर्थ वाला होना ) हो तो । उदा० पचन्तं देवदत्तं पश्य । [ पकाते हुये देवदत्त को देखो । यहाँ पच् + लट् = शतृ = अत् शप् = अ, "उगिदचां सर्वनामस्थाने" सूत्र से नुम् = न् आगम प्रातिपदिक संज्ञा, द्वितीया, एकवचन में अम् प्रत्यय—पचन्त् + अम् । 'पचन्तं देवदत्तम्' ये दोनों एक ही अर्थ के वाचक =

---

१. न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते—वाक्यपदीये पाठः ।

**पश्य । पचमानं देवदत्तं पश्य । पचता कृतम् । पचमानेन कृतम् ।**

**अप्रथमासमानाधिकरणे इति किम् ? देवदत्तः पचति ।**

**न्यासः**

समानाभिधेयत्वं सम्भवत्येवं शतृशानचौ भवतः, नान्यथेति वाक्यार्थः । एवं विवृण्वताऽप्रथमासमानाधिकरणेऽत्र पर्युदास आश्रितः, न प्रसज्यप्रतिषेध इति दर्श्यते, अन्यथा हि यदि प्रसज्यप्रतिषेध आश्रितः स्यात् प्रथमान्तेन चेत् सामानाधिकरण्यं न भवतीत्येवं ब्रूयात् । किं पुनः स्याद् यदि प्रसज्यप्रतिषेध आश्रितः ? प्रथमासमानाधिकरण उत्तरपदे शतृशानचौ न स्याताम्—भज्यत इति भक्तिः, कुर्वन् भक्तिरस्य कुर्वद्भक्तिः, कुर्वाणो भक्तिरस्य कुर्वाण-भक्तिः । ये च प्रथमासमानाधिकरणवृत्तयस्तद्धितास्तेषु न स्याताम्—'प्रशंसायां रूपप्' कुर्वद्रूपम्, कुर्वाणरूपमिति; 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' कुर्वत्कल्पः । ननु पर्युदासेऽपि भवत्येष दोषः, न ह्यत्राप्रथमान्तेन सामाना-धिकरण्यमस्ति ? नैष दोषः; वक्ष्यति ह्येतत्—लडित्यनुवर्त्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन क्वचित् प्रथमासमानाधिकरणेऽपि भवत इति । प्रसज्यप्रतिषेधे तु प्रतिषेधं विधाय प्रतिषिद्धस्य च पुनर्विधानमयुक्तम् । **देवदत्तं पश्येति ।** द्वितीयान्तेन सामानाधिकरण्यं दर्शयति । **पचतेति ।** तृतीयान्तेन । विभक्तेर्विपरिणामं कृत्वा देवदत्तेनेति सम्बन्धात् । ननु च लडादेशस्यात्राप्रथमान्तेन सामानाधिकरण्यम्, न लटः; तस्य प्रयोगा-

**पदमञ्जरी**

तत्राद्ये पक्षे कुर्वतोऽपत्यं कौर्वतः, पाचतः, कुर्वतो भक्तिः कुर्वद्भक्तिः, कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोः शतृशानचौ न स्याताम्, न ह्यत्र द्वितीयाद्यन्तेन सामानाधिकरण्यम्, न हि कुर्वतो देवदत्तस्य भक्तिः कुर्वतो देवदत्तस्यापत्यमित्यत्र समासतद्धितौ भवतः, सापेक्षत्वात् पदान्तरनिरपेक्षत्वे प्रथमान्तेन सामानाधिकरण्याभावः । प्रसज्यप्रतिषेधे तु प्रथमान्तेन सामानाधिकरण्याभावाददोषः । अस्तु तर्हि स एव ? एवमपि कुर्वतो भक्तिरस्य कुर्वद्भक्तिः, कुर्वाणभक्तिरत्र न प्राप्नोति, ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तेषु न स्यात्—कुर्वत्तरः, कुर्वाणतरः; कुर्वद्रूपः, कुर्वत्कल्प इति ? पर्युदासेऽप्येष दोषो द्रष्टव्यः ।

एवं तर्हि 'प्रत्ययोत्तरपदयोश्च' इति लक्षणशेषः कर्त्तव्यः, तत्र पृथगुत्तरपदग्रहणम् 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' ( व्या० परि० १२८ ) इति समासार्थाया विभक्तेर्लुकि कृते प्रत्ययलक्षणप्रतिषेधात्प्रत्यया-परत्वार्थम् । ननु च प्रत्ययोत्तरपदयोः सतोः शतृशानचौ भवतः, तयोश्च कृत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तौ सत्यां तद्धिताः, समासश्च, समासे च सत्युत्तरपदं तदितरेतराश्रयं भवति ? नैष दोषः; ङ्याप्प्रातिपदिकात्तद्धिताः, ते लकारस्य कृत्त्वाद्भविष्यन्ति, उत्तरपदेऽपि विधानसामर्थ्यात्तिङादेशं बाधित्वा लान्तस्य प्रातिपदिकत्वमाश्रित्य सुबुत्पत्तौ समास इति सिद्धम् । एवमपि वीक्षमाणस्यापत्यं वैक्षमाणिरित्यकृते शानचि अकारान्तत्वाभावादत इञोऽप्रसङ्गः, पचतितरामित्यत्र शतृशानचौ प्राप्नुतः, तथा पचतिरूपमित्यादौ 'तिङश्च' इत्येतत्तु लङादिविषय-मेव स्यात् ।

तदेवं सर्वत्र दोषसद्भावे समासोऽपि तावन्न्याय्यो भवतीति पर्युदासमाश्रित्याह —**अप्रथमान्तेन चेदित्या-दि । तस्येति ।** लटः । कथं पुनर्लटो द्वितीयाद्यन्तेन सामानाधिकरण्यम्, यावता 'लः कर्मणि च' इत्यनेन कर्तृ-

**भावबोधिनी**

समानाधिकरण हैं । ] पचमानं देवदत्तं पश्य । [ पच् + लट् = शानच् = आन, शप् = अ,—पच् + आन, "आने मुक्" सूत्र से मुक् = म् का आगम—पचमान + अम्. पूर्वरूप —पचमानम् । यहाँ भी सामानाधिकरण्य है । ] पचता कृतम् । पचमानेन कृतम् । [ यहाँ पकाते हुये देवदत्त ने किया । यह अर्थ है । अतः तृतीयान्त के साथ सामानाधिकरण्य होने से लट् का शतृ और शानच् होता है । ]

प्रथमान्त-भिन्न का सामानाधिकरण्य—इसका क्या फल है ? देवदत्तः पचति । [ यहाँ प्रथमान्त का सामाना-धिकरण्य होने से शतृ और शानच् नहीं होते हैं । ]

**'लट्' इति वर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्--क्वचित् प्रथमासमानाधिकरणेऽपि भवति। सन्ब्राह्मणः। अस्ति ब्राह्मणः। विद्यमानो ब्राह्मणः। विद्यते ब्राह्मणः। जुह्वत्। जुहोति। अधीयानः। अधीते।**

**न्यासः**

भावात्। आदेशधर्मस्य स्थानिन्युपचारात् लटोऽप्युपचारितं सामानाधिकरण्यं भवतीत्यदोषः। अथ लड्ग्रहणं किमर्थम्, यावतानन्तरसूत्रेण लडित्यनुवर्त्तत एव? स्यादेतत्; प्रथमान्तञ्चैतत्। षष्ठीनिर्देशेन चेहार्थः, तस्मात् षष्ठीनिर्देशार्थं पुनर्लड्ग्रहणं कर्त्तव्यमिति, एतच्चायुक्तम्, प्रथमान्तस्यापि लड्ग्रहणस्यार्थाद् विभक्तिविपरिणामो भविष्यतीति षष्ठ्यन्तं विज्ञास्यत इत्यत आह—**लडिति वर्त्तमान इत्यादि**। अप्रथमासमानाधिकरणे शतृशानचोर्विधानम्, ततोऽधिके=ह्यधिकार्थे प्रथमासमानाधिकरणेऽपि क्वचित् तयोर्विधानं यथा स्यादित्येवमर्थं पुनर्लड्ग्रहणम्। तेन क्वचित् प्रथमासमानाधिकरणे भवतः—कुर्वन् ब्राह्मणः। **सन् ब्राह्मण इति**। 'अस भुवि', अदादित्वाच्छपो लुक्। 'श्नसोरल्लोपः' इत्यकारलोपः। **विद्यमान** इत्यादौ सर्वत्र ब्राह्मण इत्यपेक्षते। 'विद सत्तायाम्', दिवादिरात्मनेपदी, श्यन्। **जुह्वदिति**। 'हु दाने', 'हुश्नुवोः सार्वधातुके' इति यणादेशः, 'नाभ्यस्ताच्छतुः' इति नुमागमाभावः। **अधीयान इति**। 'इङ अध्ययने', अधिपूर्वः। पूर्ववत् 'अचिश्नु' इत्यादिना इयङ्।

**पदमञ्जरी**

कर्मणोर्विधीयमानो लकारः क्रियां प्रति गुणभूते कर्तृकर्मणी प्रतिपादयति, तथा च क्रियाप्रधानत्वादाख्यातस्य क्रियान्तरयोगाभावाच्छक्त्यन्तरावेशाभावः, न हि भवति पचत्योदनं देवदत्तं पश्य पच्यते ओदनेन तृप्तः अपचदोदनं देवदत्तं पश्य पच्यते ओदनेन तृप्त इति, यथा—अन्येषु कृत्सु पाकं पश्य, पाकेन तृप्त इति? सत्यम्; तिङ्भाविनो लकारस्यायं स्वभावः यदुक्तगुणभूते कर्तृकर्मणी प्रतिपादयति, शत्रादिविषयस्य क्रियोपसर्जनकर्त्राद्यभिधानम्, ततश्च क्रियान्तरयोगे सति तन्निमित्तं द्वितीयाद्यन्तसामानाधिकरण्यमुपपद्यते। यद्यपि केवलस्य लटः प्रयोगाभावादप्रथमान्तेन सामानाधिकरण्यं न क्वचिदुपलब्धम्, तथापि तदादेशयोः शतृशानचोर्दर्शनात् स्थानिनो लकारस्यापि तद्योग्यत्वमनुमीयते, तेन लटः प्रक्रियार्थं विहितस्य काल्पनिकप्रथमान्तेन सामानाधिकरण्यमस्तीति दोषाभावः।

अथ लड्ग्रहणं किमर्थम्—आदेशौ यथा स्यातां प्रत्ययान्तरं मा भूतामिति? नैतदस्ति; पूर्वसूत्रत एव लड्ग्रहणं स्वरयिष्यते, तस्येहानुवृत्तस्यार्थात् षष्ठ्या विपरिणामे तस्यैवादेशौ भविष्यतः, न प्रत्ययान्तरमत आह—**लडिति वर्तमाने पुनर्लड्ग्रहणमिति। क्वचित्प्रथमासामानाधिकरण्येऽपि भवत इति।** अप्रथमासमानाधिकरणत्वाभावोपलक्षणमिदम्, तेन कौर्वतः, कुर्वद्भक्तिरित्यादयोऽपि भवन्ति। **सन्निति**। 'अस् भुवि' (धा० पा० १०६५), 'श्नसोरल्लोपः'। **विद्यमान इति**। 'विद सत्तायाम्' (धा० पा० ११७१), दिवादिरनुदात्तेत्। **जुह्वदिति**। 'नाभ्यस्ताच्छतुः' इति **नुमभावः**।

**भावबोधिनी**

[ "वर्तमाने लट्" पूर्व सूत्र से ] **'लट्'** इसकी अनुवृत्ति संभव रहने पर भी पुनः इस सूत्र में जो "लट्" इसका ग्रहण किया गया है, वह कुछ अधिक का विधान करने के लिये है—( इस कारण ) कहीं-कहीं प्रथमान्त के सामानाधिकरण्य में भी ये प्रत्यय होते हैं—सन् ब्राह्मणः। [ अस् + लट् = शतृ = अत्, शप् का लुक्, उगित् होने से नुम् = न का आगम असन्त् + सु "श्नसोरल्लोपः" सूत्र से 'अ' का लोप, सुलोप, संयोगान्तलोप—सन् ब्राह्मणः। जब यह आदेश नहीं होता है तब तिप् होता—] अस्ति ब्राह्मणः। [ जब शानच् होता है तब—] विद्यमानो ब्राह्मणः [ शानच् न होने पर 'त' ] विद्यते ब्राह्मणः। जुह्वत्। [ हु + लट् = शतृ अत्, शप् का श्लु, "श्लौ" सूत्र से द्वित्वादि कार्य करने के बादजु हु + अत्, "हुश्नुवोः सार्वधातुके" सूत्र से 'उ' का यण्, नुम् आगम की प्राप्ति किन्तु "नाभ्यस्ताच्छतुः" सूत्र से निषेध–जुह्वत्। शतृ न होने पर तिप्—]जुहोति। अधीयानः [ अधि इ + लट् = शानच् = आन, "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" सूत्र से 'इ' का इयङ्=इय, अधि + इय आन, सवर्णदीर्घ–अधीयान, प्रातिपदिकत्वात् सु, विसर्ग। शानच् न होने पर–] अधीते।

**⁂ माङ्याक्रोशे ⁂ ( ? ) । मा पचन् । मा पचमानः ।**

**केचिद्विभाषाग्रहणमनुवर्त्तयन्ति—'नन्वोर्विभाषा' ( ३.२.१२१ ) इति । सा च व्यवस्थिता । तत्र यथा-दर्शनं प्रयोगा नेतव्याः ॥**

**न्यासः**

**माङ्याक्रोश इति** । माङ्युपपद आक्रोशे गम्यमाने लटः शतृशानचौ भवतः । **मा पचन्, मा पचमान-इति** । ननु चात्रैव माङि लुङा भवितव्यम्, एतस्मादेवाधिकविधानात् ? पुनर्लङ्ग्रहणादाक्रोशे न भवतीत्यदोषः । 'माङि लुङ्' इत्यस्य यत्राक्रोशो नास्ति सोऽवकाशः ।

**केचिद् विभाषाग्रहणमनुवर्त्तयन्तीति** । सन् ब्राह्मणोऽस्ति ब्राह्मण इत्यादौ विकल्पेन शतृशानचौ यथा स्यातामित्येवमर्थम् । केचिदिति वचनात् केचिन्नानुवर्त्तयन्तीत्युक्तं भवति । तेषामयमभिप्रायः—यदि प्रथमा-समानाधिकरणे नित्यं तौ भवतस्तदाऽप्रथमासमानाधिकरणग्रहणं न कुर्यात्, 'शतृशानचौ' इत्येवं ब्रूयात् । तत्राप्य-यमर्थः –सामान्येन प्रथमासमानाधिकरणेऽन्यत्र शतृशानचोर्विधानात् पुनर्ग्रहणं न कर्त्तव्यं भवति । तस्मादप्रथमा-समानाधिकरणग्रहणसामर्थ्यादप्रथमासमानाधिकरण एव नित्यौ तौ भवतः, प्रथमासमानाधिकरणेष्वन्यथेति । यदि तर्हि विभाषाग्रहणमनुवर्त्तयन्ति, यथा सन् ब्राह्मणः, अस्ति ब्राह्मणः, विद्यमानो ब्राह्मणः, विद्यते ब्राह्मण इत्यादौ विकल्पेन भवतः; तथा कुर्वद्भक्तिः कुर्वाणभक्तिरित्येवमादावपि स्यातामित्यत आह **सा चेत्यादि । तत्रेति ।** व्यवस्थितविभाषायां सत्याम् । **यथादर्शनमिति** । यथा लक्ष्यस्य दर्शनं तदनुरूपाः प्रयोगा उन्नेयाः । एतदुक्तं भवति –लक्ष्यदर्शनवत् स्यात् । क्वचिन्नित्यं तौ शतृशानचौ वेदितव्यौ, क्वचित् पाक्षिकौ, क्वचिदविद्यमानाविति । तत्र कुर्वद्भक्तिः, कुर्वाणभक्तिः, कुर्वत्तरः, कुर्वत्तम इत्यादौ नित्यम्; सन् ब्राह्मणः, अस्ति ब्राह्मण इत्यादौ पाक्षिकौ; तरप्तमबादिप्रत्यये परे तावविद्यमानावेव । पचतितरामिति पचतिशब्दात् 'तिङश्च' इति तरप्, 'किमेत्' इत्या-

**पदमञ्जरी**

**माङ्याक्रोश इति** । माङि लुङोऽपवादः, तथा पुनर्लङ्ग्रहणाद्योऽपि भूते लट् 'ननौ पृष्टप्रतिवचने' इति तस्यापि भवतः – ननु मां कुर्वन्तं पश्य, ननु मां कुर्वाणम्पश्येति । एतच्च 'ननौ पृष्टप्रतिवचने' इत्यत्र **भाष्य-कारेणोक्तम्** ।

**केचिदित्यादि** । न चैवं पचन्तम्पश्येत्यादावपि विकल्पप्रसङ्ग इत्यत आह– **व्यवस्थितविभाषा चेयमिति । यथादर्शनमिति** । प्रथमासमानाधिकरणे विकल्पः पचन्तं पश्येत्यादौ 'प्रत्ययोत्तरपदयोश्च' नित्यम्पचतितरा-मित्यादौ नैव भवतः, अन्यथा तिङोऽपि स्थानिवद्भावात्स्यात्प्रसङ्गः । न तर्हीदानीमिदं वक्तव्यम्—अप्रथमा-समानाधिकरण इति ? वक्तव्यं च । किं प्रयोजनम् ? नित्यार्थम् । नन्वेतदपि विभाषयैव सिद्धम् ? सत्यम्; स एवार्थो वचनेन स्पष्टीक्रियते । एतेन **'सम्बोधने च' 'लक्षणहेत्वोः'** इति च व्याख्यातम् ॥ १२४ ॥

**भावबोधिनी**

⁂ माङ् उपपद रहते आक्रोश की प्रतीति रहने पर भी शतृ और शानच् होते हैं ।⁂ उदा० मा पचमान् । पचमान । [ यद्यपि माङ् के योग मेंलुङ् का विधान है परन्तु इसी वचन के फलस्वरूप आक्रोश में शतृ और शानच् होने से लुङ् नहीं होता है । ]

कुछ आचार्य इसमें 'नन्वोर्विभाषा' इस पूर्व सूत्र से 'विभाषा' की अनुवृत्ति करते हैं और वह विभाषा व्यवस्थित है । इस कारण जिस प्रकार के प्रयोग देखे जाते हैं उसी प्रकार की प्रक्रिया समझनी चाहिये ।

**विमर्श** —'लटः शतृशानचौ अप्रथमासमानाधिकरणे—" यह सूत्र वहीं शतृ या शानच् आदेश करता है जहाँ प्रथमासामानाधिकरण्य नहीं होता है । समान = साधारण, अधिकरण = अभिधेय=अर्थ । समानं च तद् अधिकरणं च—यह कर्मधारय है । अप्रथमया समानाधिकरणम् = अप्रथमासमानाधिकरणम् ।' यह न्यासकार मानते हैं । पदमंजरीकार यहाँ बहुव्रीहि मानते हैं ?—समानम् अधिकरणं यस्य, अप्रथमान्तेन समानाधिकरणम् अप्रथमासमानाधिकरणम् । अथवा द्विपद बहुव्रीहि है—अप्रथमासमानाधिकरणं यस्य तत् ।

**८९४. सम्बोधने च ॥ १२५ ॥ ( ३१०२ )**

**प्रथमासमानाधिकरणार्थ आरम्भः । सम्बोधने च विषये लटः शतृशानचौ प्रत्ययौ भवतः । हे पचन् । हे पचमान ॥**

**८९५. लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥ ( ३१०६ )**

**लक्ष्यते = चिह्न्यते येन तल्लक्षणम् । जनकः = हेतुः । धात्वर्थविशेषणं चैतत् । लक्षणे हेतौ चार्थे वर्त्त-**

**न्यासः**

दिनामि कृते न भवतः ॥ १२४ ॥

**संबोधने च ॥ प्रथमासमानाधिकरणार्थ आरम्भ इति** । अवधारणमिह द्रष्टव्यम् । पूर्वयोगो ह्यप्रथमासमानाधिकरणार्थः, क्वचित् प्रथमासमानाधिकरणार्थश्च; अयं तु प्रथमासमानाधिकरणार्थ एव । यदि तर्हि पूर्वसूत्रं प्रथमासमानाधिकरणार्थमपि, तर्ह्येवं सति तौ यथा अन्यत्र प्रथमासमानाधिकरणेऽपि भवतस्तथा सम्बोधनेऽपि भविष्यत इत्यपार्थकम् ? नापार्थकम्; तस्यैव प्रपञ्चार्थत्वात् । **हे पचन्निति** । 'न ङिसम्बुद्धयोः' इति नलोपप्रतिषेधान्नलोपाभावः । **हे पचमान इति** । 'एङ् ह्रस्वात् सम्बुद्धेः' इति सुलोपः ॥ १२५ ॥

**लक्षणहेत्वोः क्रियायाः ॥ धात्वर्थविशेषणञ्चेतदिति** । धात्वधिकारात् । अथोपपदे कस्मान्न भवतः ?

**पदमञ्जरी**

**सम्बोधने च ॥ हे पचन्निति** । संयोगान्तलोपस्यासिद्धत्वान्नलोपाभावः । अत्र सम्बोधने प्रथमा, अयमादेशश्चेत्युभयं मिलितं सम्बोधनं द्योतयति ॥ १२५ ॥

**लक्षणहेत्वोः क्रियायाः ॥ लक्ष्यते = चिह्न्यते येनेति** । चिह्नयतिरवधारयत्यादिवच्चुरादिषु द्रष्टव्यः । **धात्वर्थविशेषणं चैतदिति** । नोपपदं क्रियाया इति वचनात् । उपपदं हि धातोर्भवति, स च क्रियावचन इति

**भावबोधिनी**

यहाँ 'यस्य च भावेन भावलक्षणम्'' इस सूत्र से सप्तमी होती है। अप्रथमासमानाधिकरण लट् रहने पर उस लट् के शतृ शानच् होते हैं । यह आशय नञ् पर्युदास में होता है । जब प्रसज्यप्रतिषेध नञ् माना जाता है तब 'भवति' क्रिया के साथ नञ् का सम्बन्ध होता है—'प्रथमासमानाधिकरणे शतृशानचौ न भवतः । 'प्रथमा' से सर्वत्र प्रथमान्त लिया जाता है । इस कारण 'देवदत्तः पचति' यहाँ लट् का शतृ न होकर तिप् ही होता है क्योंकि प्रथमान्त देवदत्त कर्तृवाची है और लट् भी कर्तृवाची है, दोनों समानाधिकरण हैं । 'पचन्तं देवदत्तम्' 'पचता देवदत्तेन' आदि में द्वितीयान्त तथा तृतीयान्त का समानाधिकरण होने से लट् के शतृ या शानच् हो जाते हैं ।

कहीं-कहीं प्रथमान्त के सामानाधिकरण्य में भी शतृ-शानच् होते हैं । इसके दो समाधान हैं—

( १ ) 'वर्तमाने लट्' इस सूत्र से 'लट्' की अनुवृत्ति करके षष्ठ्यन्त रूप से उसका विपरिणाम करके निर्वाह संभव रहने पर भी जो इस सूत्र में दुबारा लटः का ग्रहण है वह कुछ अधिक कार्य करने के उद्देश्य है—कहीं-कहीं प्रथमान्त के समानाधिकरण में भी लट् के शतृ और शानच् होते हैं ।

( २ ) 'नन्वोर्विभाषा'' सूत्र से विभाषा की अनुवृत्ति इस सूत्र में भी कर लें । और इसे व्यवस्थितविभाषा मान लें । अतः प्रयोगदर्शन के आधार पर शतृ-शानच् होने अथवा न होने का निर्णय करना चाहिए । इस प्रकार 'सन् ब्राह्मणः', 'अस्ति ब्राह्मण.' आदि में पाक्षिक आदेश है, कुर्वद्भक्तिः, कुर्वाणभक्तिः—आदि में नित्य हैं । तरम् और तमप् के साथ कभी नहीं होते हैं—पचतितराम् परस्मैपदी से शतृ और आत्मनेपदी से शानच् होता है ॥ १२४ ॥

प्रथमान्त के समानाधिकरण में शतृ-शानच् करने के लिए यह सूत्र बनाया गया है । और सम्बोधन-विषय में लट् के शतृ तथा शानच् आदेश होते हैं । उदा० हे पचन् ! हे पचमान ! [ 'हे पकाने वाले !' यहाँ सु प्रत्यय का लोप हो जाता है ] ॥ १२५ ॥

जिसके द्वारा लक्षित = चिह्नित किया जाता है वह लक्षण है । जनक = हेतु है । ये धात्वर्थ के विशेषण हैं ।

**मानाद्धातोः परस्य लटः शतृशानचावादेशौ भवतः, तौ चेल्लक्षणहेतू क्रियाविषयौ भवतः। लक्षणे—शयाना भुञ्जते यवनाः। तिष्ठन्तोऽनुशासति गणकाः। हेतौ-अर्जयन्वसति। अधीयानो वसति।**

**लक्षणहेत्वोरिति किम्? पचति। पठति। क्रियाया इति किम्? द्रव्यगुणयोर्मा भूत्—यः कम्पते**

**न्यासः**

क्रियाया इति वचनात्। यद्युपपदे स्यातां तदा क्रियाग्रहणमनर्थकं स्यात्। उपपदं हि धातोर्भवति, स च क्रियावचन इत्यन्तरेणापि क्रियाग्रहणं लक्षणहेतू क्रियाविषयौ विज्ञास्येते। तत् क्रियाग्रहणेन धात्वर्थविशेषणत्वे हि तयोः क्वचिद् धात्वर्थो द्रव्यस्य हेतुर्भवति, लक्षणं वा; क्वचिद् गुणस्य, क्वचित् क्रियायाः। अतो द्रव्यादिनिवृत्त्यर्थं क्रियाग्रहणं युक्तम्, अतः **क्रियाया इति** वचनम्। **क्रियाविषयाविति**। क्रियाया इत्येतद् विवरणम्। क्रिया विषयो ययोस्तौ तथोक्तौ। एतेन 'क्रियायाः' इति येयं षष्ठी सा सुब्व्यत्ययेन सप्तम्याः स्थाने विहितेति सूचयति। **शयाना भुञ्जत इति**। शीङोऽदादित्वाच्छपो लुक्, 'शीङः सार्वधातुके' इति गुणः। अत्र शयनं लक्षणम्, भुजिक्रिया विषयः। तेन हि भुजिक्रिया लक्ष्यते तत्र शीङ् वर्त्तते। **तिष्ठन्तोऽनुशासतीति**। तिष्ठतेः पाघ्रादिसूत्रेण तिष्ठादेशः। अत्रावस्थानं लक्षणम्, तेनानुशासनक्रिया लक्ष्यते। **अर्जयन् वसतीति**। 'अर्ज प्रतियत्ने', चौरादिकः। अत्रार्जनं वासस्य हेतुः। **अधीयानो वसतीति**। अत्राध्ययनम्॥

**पचति, पठतीति**। नात्र क्रियाया लक्ष्यलक्षणभावो विवक्षितः। **यः कम्पते सोऽश्वत्थ इति**। अत्र हि कम्पनं लक्षणं भवतीति तेनाश्वत्थो लक्ष्यते, न तु क्रियाविषयम्, किं तर्हि? द्रव्यविषयम्; अश्वत्थस्य द्रव्य-

**पदमञ्जरी**

क्रियाग्रहणमनर्थकमुपपदत्वे स्यात्। क्रियायाश्च लक्षणापेक्षया कर्मत्वम्, हेत्वपेक्षया तु शेषत्वम्, तत्रोभयानुग्रहाय कर्मणोऽपि शेषत्वविवक्षया शेषलक्षणैव षष्ठी, वृत्तौ तु वस्तुमात्रं प्रादर्शि। **क्रियाविषयाविति। शयाना भुञ्जत इति**। अत्र शयनं लक्षणं भोजनस्य। **तिष्ठन्तोऽनुशासतीति**। अत्रापि स्थानमनुशासनस्य। **अर्जयन्वसतीति**। 'अर्ज प्रतियत्ने' (धा० पा० १७२५) चुरादिराङ्पूर्वः।

**लक्षणहेत्वोरिति किमिति**। क्रियासम्बन्धिन्यर्थे वर्तमानादिति विज्ञायमाने लक्षणहेत्वोरपि भविष्यत इति प्रश्नः, अतिप्रसङ्गेन तूत्तरम्। **पचति च पठति चेति**। अत्र द्वयोः क्रिययोरेकस्मिन्साधने समुच्चयात्तद्द्वारेण परस्परसम्बन्धोऽप्यस्तीत्युभयत्रापि प्रसङ्गः। **यः कम्पते सोऽश्वत्थ इति**। बहुषु वृक्षेषु तिष्ठत्सु कम्पनेनाश्वत्थो

**भावबोधिनी**

लक्षण और हेतु अर्थों में वर्तमान धातु से परे लट् के शतृ और शानच् आदेश होते हैं, यदि वे लक्षण और हेतु क्रियाविषयक हों तो। लक्षण में उदा० शयाना भुञ्जते यवनाः। [ यवन लेटे-लेटे खाना खाते हैं। ] यहाँ शयनक्रिया लक्षण है और भोजनक्रिया लक्ष्य है। अतः लक्षण क्रिया 'शीङ्' से शानच् होता है शी+शानच्=आन, ''शीङः सार्वधातुके'' सूत्र से 'ई' का गुण, अय् आदेश—शयान। प्रथमा बहुवचन का रूप है ] तिष्ठन्तः अनुशासति गणकाः। [ यहाँ 'स्थान'=बैठना 'अनुशासन' का लक्षण होने से 'स्था से शतृ और 'स्था' का 'तिष्ठ' आदेश करने पर प्रथमा बहुवचन का रूप है।] हेतु अर्थ में—उदा० अर्जयन् वसति। [ पैदा करते हुए रहता है। यहाँ 'अर्जन' यह 'वास का हेतु है। अतः चुरादिगणीय 'अर्ज=अर्जि' से शतृ प्रत्यय का रूप है। ] अधीयानो वसति। [ यहाँ 'अध्ययन' 'वास' का हेतु है। अतः अधि ईङ्+लट्=शानच्=आन, 'इ' का इयङ् आदेश करने पर अधि इय आन, सवर्णदीर्घ—'अधीयानः' बनता है। ]

लक्षण और हेतु में—इसका क्या फल है? पचति। पठति। [ यहाँ उक्त दोनों में से किसी की भी प्रतीति न होने से शतृ नहीं होता है। ] क्रिया के ( लक्षण और हेतु )—इसका क्या फल है? द्रव्य या गुण ( के लक्षण या हेतु ) में न हो—यः कम्पते सः अश्वत्थः [ जो काँपता है=हिलता है वह अश्वत्थ=पीपल है। यहाँ द्रव्य लक्षित होने से

**सोऽश्वत्थः । यदुत्प्लवते तल्लघु । यन्निषीदति तद् गुरु । लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारलिङ्गम् ॥**

## ८९६. तौ सत् ॥ १२७ ॥ ( ३१०७ )

**तौ शतृशानचौ सत्संज्ञौ भवतः । 'तौ'—ग्रहणमुपाध्यसंसर्गार्थम् । शतृशानज्मात्रस्य संज्ञा भवति ।**

**न्यासः**

विषयत्वात् । **यदुत्प्लवते तल्लघ्विति** । अत्रोत्प्लवनेन लघुसंज्ञको गुणो लक्ष्यत इति गुणविषयं तत्, न तु क्रियाविषयम् । वर्षतीति धावति, हन्तीति पलायत इत्यत्र यद्यपि वर्षणहननाभ्यां धावनपलायनक्रिये लक्ष्येते तथापि शतृशानचौ न भवतः; 'नन्वोर्विभाषा' इत्यतो व्यवस्थितविभाषेत्यनुवर्त्तते; इतिकरणेन हेतुभावस्य द्योतितत्वात् । **पूर्वनिपातलक्षणव्यभिचारलिङ्गमिति** । 'द्वन्द्वे घि' इत्यनेन घ्यन्तस्य यः पूर्वनिपातः क्रियते तस्य व्यभिचारः । स्वविषये सत्यपि तस्य क्वचिदभावः । तस्य व्यभिचारस्य लिङ्गमयं निर्देशः । यदि ह्यव्यभिचारी घ्यन्तस्य निपातः स्याद्, 'हेतुलक्षणयोः' इति निर्देशं कुर्यात् । व्यभिचारे तु सति धूमाग्नी इत्येवमादय उपपन्ना भवन्ति ॥ १२६ ॥

**तौ सत्** ॥ ननु च प्रकृतत्वादेव शतृशानचोरियं संज्ञा स्यात्, तत् किं तौग्रहणमित्याह —**तौग्रहणमित्यादि** । उपाधिना विशेषणेनासंसर्गार्थं तौग्रहणमित्यर्थः । उपाधिस्तु वर्त्तमानकालः, तत्र शतृशानचोर्विहितत्वात् । उपाध्यसंग्रहार्थे तौग्रहणे सति किं भवतीत्याह—**शतृशानज्मात्रस्येत्यादि** । मात्रग्रहणमुपाधिसंग्रहव्यवच्छेदार्थम् । असति

**पदमञ्जरी**

लक्ष्यते, तच्च द्रव्यम् । **यदुत्प्लवते तल्लघ्विति** । अत्राप्युत्प्लवनेन लाघवं गुणो लक्ष्यते । निषदनं=निमज्जनं तेन गौरवं गुणो लक्ष्यते । इह तु योऽधीयान आस्ते स देवदत्त इति आसिक्रियाया एवाध्ययनक्रियालक्षणम्, न देवदत्तस्य, आसिक्रिया तु तस्य लक्षणम् । एवं यस्तिष्ठन्मूत्रयति स ब्राह्मणब्रुव इति, अत्रापि स्थितिक्रिया मूत्रणक्रियाया एव लक्षणम्, सैव तु देवदत्तस्याशौचादेर्लक्षणं न स्थितिक्रियेति सूत्रेणैव सिद्ध आदेशः । कथं शयाना वर्धते दूर्वा, आसीनं वर्धते विषमिति, न ह्यासनशयने वृद्धेर्लक्षणम्, किं तर्हि ? स्वभावमात्रकथनमेतत् ? भवति वै स्वभावाख्यानमपि लक्षणम्, यथा—चैतन्यलक्षणं पुरुष इति । **पूर्वनिपातव्यभिचारलिङ्गमिति** । 'द्वन्द्वे घि', 'अल्पाच्तरम्' इति यौ पूर्वनिपातौ तयोर्व्यभिचारे लिङ्गमित्यर्थः । तेन धूमाग्नी, मृदङ्गशङ्खपणवा इत्यादिप्रयोगोपपत्तिः ॥ १२६ ॥

**तौ सत्** ॥ तौग्रहणं किमर्थम्, संज्ञाविधिर्यथा स्यात् सदित्यस्य प्रत्ययस्य विधिर्मा भूदिति ? नैतदस्ति प्रयोजनम्, पूर्वसूत्रे शतृशानचौ स्वरयिष्येते, तत्सामर्थ्यात्तयोरनुवृत्तयोः संज्ञैव भविष्यति, तत्राह—**तौग्रहणमुपाध्यसंसर्गार्थमिति** । लट्स्थानिकत्वाद् वर्त्तमानकालविहितत्वं चोपाधिः, तेनोपाधिनाऽसंबन्धार्थः, तौग्रहणमित्यर्थः, किं सिद्धमित्याह—**शतृशानज्मात्रस्येति** । असति तौग्रहणे यादृशौ शतृशानचौ प्रकृतौ लट्स्थानिकौ

**भावबोधिनी**

शतृ शानच् नहीं होते हैं । ] यत् उत्प्लवते तल्लघु । [ यहाँ उत्प्लवन - ऊपर उठना से लघुसंज्ञक गुण लक्षित होता है । अतः ये आदेश नहीं होते हैं । ] यम् निषीदति स गुरुः । [ जिसके पास बैठता है, सीखता है वह गुरु है । यहाँ हेतु गुरु द्रव्य है । अतः आदेश नहीं होता है । ] [ लक्षण और हेतु —इनमें हेतु अल्प अच् वाला । इसी का पूर्वनिपात होना चाहिये था किन्तु ऐसा न करके ] 'लक्षणहेत्वोः' यह निर्देश पूर्वनिपात के व्यभिचार=अनियतता का प्रमाण है । [ इस लिये 'द्वन्द्वेघि' या 'अल्पाच्तरम्' आदि को अनिवार्य नहीं मानना चाहिये । इसी कारण 'धूमाग्नी' 'मृदङ्गशङ्खपणवाः' आदि में पूर्वनिपात का परिपालन नहीं किया जाता है । ]॥ १२६ ॥

उन शतृ और शानच् की 'सत्' यह संज्ञा होती है । 'तौ' यह उपाधि के असंसर्ग के लिये है । अतः केवल

**ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । ब्राह्मणस्य करिष्यन् । ब्राह्मणस्य करिष्यमाणः ।**

**सत्प्रदेशाः—'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' ( २.२.११ ) इत्येवमादयः ॥**

## ८९७. पूङ्यजोः शानन् ॥ १२८ ॥ ( ३१०८ )

**न्यासः**

हि तौग्रहणे यादृशौ प्रकृतौ तादृशयोरेव संज्ञा स्यात् । कीदृशौ च तौ ? वर्त्तमानकालविहितौ । ततश्च लृडादेशयोर्भविष्यत्कालविहितयोः सदिति संज्ञा न स्यात् । ननु च 'लृटः सद्वा' इति सच्छब्देन तौ विधीयेते, ततो वचनसामर्थ्यात् तु भविष्यतः ? न ब्रूमः—विधानं तयोर्न सिध्यतीति, किं तर्हि ? विहितयोरुत्तरकालसंज्ञा न सिध्यति । ततश्च ब्राह्मणस्य करिष्यन्, ब्राह्मणस्य करिष्यमाण इत्यत्र 'पूरणगुण' इत्यादिना षष्ठीसमासप्रतिषेधो न स्यात् । सद्ग्रहणं तु सच्छब्देनैव वर्त्तमानशतृशानजन्ते षष्ठीसमासप्रतिषेधार्थं स्यात् । तौ-ग्रहणे शतृशानचोर्विशेषणमनपेक्ष्य रूपमात्रे संज्ञाऽऽख्यायत इति वर्त्तमानकाले विधानासंसक्तयोरपि संज्ञा सिध्यतीति ॥ १२७ ॥

**पूङ्यजोः शानन् ॥** वर्त्तमानविहिताः शतृशानच्प्रभृतयः । एते लादेशा वा स्युः ? प्रत्यया वा ? तत्र यदि इह लट इत्यनुवर्त्तते तदा लादेशाः, अथ नानुवर्त्तते ततः प्रत्ययाः । तस्यादेशाः क्रियेरंस्तदा 'नन्वोर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्त्तयितव्यं जायेत; अन्यथा पवते देवदत्तः, यजते देवदत्त इति तिङ्श्रवणं कुर्यात् । प्रत्ययपक्षे तु वाऽसरूपविधिना यदा लड् भवति तदा प्रत्ययश्रवणं तिङ्श्रवणमुपपद्यते । किञ्च, आदेशपक्षे 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावकर्मणोरपि शानन्नादयः स्युः कर्त्तर्येव चेष्यन्ते । प्रत्ययपक्षे तु 'कर्त्तरि

**पदमञ्जरी**

वर्त्तमानकालौ च तादृशयोरेव संज्ञा स्यात्, ततश्च लृडादेशयोर्न स्यात् । 'लृटस्सद्वा' इत्येतत्तु वचनं सत्संज्ञकप्रतिरूपयोर्विधानार्थं स्यात्, यथा —अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति तदाकाराः क्रियन्ते । विहितयोस्तूत्तरकालं संज्ञा न सिध्यति, ततश्च ब्राह्मणस्य पक्ष्यन्, ब्राह्मणस्य पक्ष्यमाण इति समासप्रतिषेधो न स्यात्; तस्यां दशायां सत्संज्ञाया अभावात् । एवं भूतकालयोरपि न स्यात् । 'वर्तमानसामीप्ये वर्त्तमानवद्वा' इति वचनाद् भूतेऽपि शतृशानचौ भवतः । एवं तत्रापि वर्त्तमानवदित्यतिदेशेन विधानमेव तयोर्भूते सिद्धचति, न तु संज्ञा । प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते, न तथा 'ननौ पृष्टप्रतिवचने' इत्यपि लटः शतृशानचौ भवत इत्युक्तम्, तयोरपि संज्ञा न भवेत्, तौग्रहणे सति तयोरपि संज्ञा भवति—ननु मां ब्राह्मणस्य कुर्वन्तम्पश्य ननु मां ब्राह्मणस्य कुर्वाणम्पश्येति । अथ क्रियमाणेऽपि तौग्रहणे कथमिव कालान्तरविहितयोः संज्ञा सिद्धचति, यावता प्रकृतस्यैव वस्तुनस्सर्वनाम्ना परामर्शः ? सत्यम्; तौग्रहणसामर्थ्यात्तु विशेषणांशपरित्यागेन शतृशानचोः रूपमात्रं परामृश्यते ॥ १२७ ॥

**पूङ्यजोः शानन् ॥** इहैते शानन्नादयो यदि लटोऽनुवृत्तिमाश्रित्य तस्यैवादेशाः क्रियेरन्, वेति वक्तव्यम्, पवमानः यजमानः, पवते यजत इत्यपि यथा स्यात्, वाऽसरूपविधिना तिङो भविष्यन्ति, न लादेशेषु वाऽसरूपविधिरस्तीत्युक्तम् । साधनाभिधानम्—साधनस्य चाभिधानं प्राप्नोति 'लः कर्मणि भावे च चाकर्मकेभ्यः' इति भावकर्मणोरपि प्रसङ्गः । परस्स्वरश्च न सिद्धचति—कतीह पवमानाः, 'अदुपदेशाल्लसार्वधातुकम्' इत्यनुदात्तत्वं

**भावबोधिनी**

शतृ और शानच् की यह 'सत्' संज्ञा होती है । उदा० ब्राह्मणस्य कुर्वन्, ब्राह्मणस्य कुर्वाणः । [ यहाँ सत् संज्ञा के फलस्वरूप "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" ( पा. सू. २.२.११ ) से षष्ठीसमास का निषेध हो जाता है । ] ब्राह्मणस्य करिष्यन्, करिष्यमाणः । [ 'लृटः सद् वा' सूत्र से लृट् के विकल्प से शतृ और शानच् होते हैं । लृट् के होने के कारण "स्यतासी लृलुटोः" सूत्र से 'स्य' विकरण और इट् आगम भी होता है । यहाँ भी उक्त सूत्र से षष्ठीसमास का निषेध होता है । ]

सत् संज्ञा के प्रदेश—"पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" ( पा. सू. २.२.११ ) आदि सूत्र हैं ॥ १२७ ॥

**पूङो यजेश्च धातोः शानन् प्रत्ययो भवति। पवमानः। यजमानः।**

**यदि प्रत्ययाः शानजादयो न लादेशाः, कथं सोमं पवमानो नडमाघ्नान इति षष्ठीप्रतिषेधः? तृन्निति प्रत्याहारनिर्देशात्। क्व संनिविष्टानां प्रत्याहारः? 'लटः शतृ-शानचावप्रथमासमानाधिकरणे' ( ३.२.१२४ ) इत्यतः प्रभृति आ तृनो नकारात्।**

**॥ द्विषः शतुर्वा वचनम् ॥ ( म० भा० २.३.६९ )। चौरस्य द्विषन्। चौरं द्विषन् ॥**

**न्यासः**

कृत्' इति कर्त्तर्येव भवन्ति, न भावकर्मणोः इह कतीह मण्डयमाना इत्युत्तरसूत्रे चानशि कृते 'तास्यनुदात्तेन्ङिद्-दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इति निघातः स्यात्, प्रत्ययपक्षे तु न भवति; अलसार्वधातुकत्वात्। चानशः 'लः परस्मैपदम्' 'तङानावात्मनेपदम्' इत्यात्मनेपदसंज्ञा प्रसज्येत, ततश्चात्मनेपदिभ्य एव स्यात् - कतीह निघ्नाना इति। प्रत्ययपक्षे त्वलादेशान्न भवत्यात्मनेपदसंज्ञाप्रसङ्गः। तदेवमादेशपक्षे बहवो दोषाः प्रतिविधेयाः, प्रतिविधानेऽपि तेषां प्रतिपत्तिगौरवं भवतीति मत्वा प्रत्ययपक्षमाश्रित्याह—**शानन्प्रत्ययो भवतीति**। शकारः सार्वधातुकसंज्ञार्थः। **पवमान इति**। 'पूङ् पवने', शप्, 'आने मुक्।'

**यदीत्यादि**। 'न लोकाव्यय०' इत्यादौ तृन्निति तृन एव प्रत्ययस्य निर्देश इति मन्यमानस्य प्रश्नः। **तृन्निति प्रत्याहारनिर्देशादिति। सोमं पवमानः, नडमाघ्नान इति**। षष्ठीप्रतिषेध इत्यनेन सम्बन्धनीयम्। यदि तृन्निति प्रत्ययग्रहणं स्यात् तदा शानन्प्रभृतीनां प्रत्ययार्थे सति 'सोमं पवमानः' इत्यादौ षष्ठीप्रतिषेधो न स्यात्। न च तृन्निति प्रत्ययस्य ग्रहणम्, किं तर्हि? प्रत्याहारस्य। तत्र च शानन्नादयोऽन्तर्भूता इति भवत्येव षष्ठीप्रतिषेधः।

**द्विषः शतुर्वा वचनमिति**। 'द्विषोऽमित्रे' इत्यनेन यः शतृ विधीयते तस्य प्रत्याहारेऽस्मिन्नन्तर्भावात्

**पदमञ्जरी**

प्राप्नोति। आत्मनेपदसंज्ञा–'तङानावात्मनेपदम्' इत्यात्मनेपदसंज्ञा च प्राप्नोति, ततश्च परस्मैपदिभ्यश्चानश न स्यात्–कतीह नन्दमानाः। तस्मादशक्या एवैते लादेशा विज्ञातुमिति मत्वाह—**शानन्प्रत्ययो भवतीति**। शकार-स्सार्वधातुकसंज्ञार्थः, नकारस्स्वरार्थः।

**यदीत्यादि**। 'न लोकाव्यय' इत्यत्र स्वरूपस्य ग्रहणं मन्यमानस्य प्रश्नः। **तृन्निति प्रत्याहारनिर्देशादिति**। षष्ठीप्रतिषेध इत्यनुषङ्गः।

**द्विषश्शतुर्वा वचनमिति**। 'द्विषोऽमित्रे' इति योऽयं शतृप्रत्ययस्तस्य प्रयोगे वा षष्ठी भवति, प्रत्याहारेऽन्त-

**भावबोधिनी**

'पूङ्' और 'यज्' धातु से वर्तमान काल में शानन् प्रत्यय होता है। [ यह लट् का आदेश नहीं है। ] उदा० पवमानः, यजमानः। [ पू + शानन् = आन, शप् = अ, गुण अव् आदेश—पव + आन, "आने मुक्" सूत्र से मुक् = म् आगम—पवमान। इसी प्रकार यज् + शानन् = आन, शप् = अ, मुक्--यजमान। प्रथमा एकवचन का रूप है। ]

यदि शतृ, शानच्, शानन् ये स्वतन्त्र प्रत्यय हैं, लादेश=लट् के आदेश नहीं हैं, तब 'सोमं पवमानः, नडम् आघ्नानः'—आदि लक्ष्यों में [ "न लोकाव्यय०" सूत्र से ] षष्ठी का निषेध किस प्रकार होता है? 'तृन्' यह प्रत्याहार का निर्देश है। कहाँ सन्निविष्टों का प्रत्याहार है? "लटः शतृ" इसके 'तृ' से लेकर आगे 'तृन्' ( पा. सू. ३.२.१३५ ) के 'न्' तक तृन् प्रत्याहार है। [ अतः लादेश मानकर "न लोकाव्यय" सूत्र से षष्ठीनिषेध नहीं करना है अपि तु 'तृन्' के अन्तर्गत मानकर। इस लिये कोई दोष नहीं है। ]

* द्विष् से होने वाले शतृ का षष्ठीनिषेध विकल्प से होता है। * [ अतः 'द्विषोऽमित्रे' से शतृ होता है उसका विकल्प से ग्रहण होने के पक्ष में षष्ठी और द्वितीया दोनों होती हैं। ] चौरस्य द्विषन्, चौरं द्विषन् ॥ १२८ ॥

### ८९८. ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥ ( ३१०९ )

ताच्छील्यम् = तत्स्वभावता । वयः=शरीरावस्था, यौवनादिः । शक्तिः=सामर्थ्यम् । ताच्छील्यादिषु धातोश्चानश् प्रत्ययो भवति । ताच्छील्ये तावत् - कतीह मुण्डयमानाः । कतीह भूषयमाणाः । वयोवचने— कतीह कवचं पर्यस्यमानाः । कतीह शिखण्डं वहमानाः । शक्तौ—कतीह निघ्नानाः । कतीह पचमानाः ( म० भा० ) ।

### ८९९. इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥ ( ३११० )

इङो धारेश्च धात्वोः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्त्तरि । अकृच्छ्रः = सुखसाध्यो यस्य कर्तुर्धात्वर्थः

**न्यासः**

तद्योगे षष्ठीप्रतिषेधः स्यात्, ततश्चौरस्य द्विषन्निति पक्षे न स्यात् । तस्माद् 'द्विष अप्रीतौ' इत्यस्य शत्रन्तस्य प्रयोगे द्वितीयायां प्राप्तायां वा षष्ठी वक्तव्या ॥ १२८ ॥

**ताच्छील्यवयोवचनशक्तिषु चानश् ॥ मण्डयमाना इति ।** 'मडि भूषायाम्', इदित्वान्नुम् । हेतुमण्णिच् । **भूषयमाणा इति ।** 'भूष अलङ्कारे', चुरादिणिच् । **कवचं पर्यस्यमाना इति ।** दिवादित्वाच्छ्यन् । तदेव वयो गम्यते यत्र स्थिताः कवचं पर्यस्यन्ते । कवचम् = सन्नाहम् । **शिखण्डं वहमाना इति ।** अत्रापि तथाविधं वयो गम्यते यत्र वर्तमानाः शिखण्डं वहन्ति । शिखण्डः = चूडा । **वचनग्रहणं** वैचित्र्यार्थम्, विनापि हि तेन वयसि गम्यमाने प्रत्ययो लभ्यत एव, यथा च 'वयसि च' इत्यत्र । **निघ्नाना इति ।** हननशक्तिरिति गम्यते ॥ १२९ ॥

**इङ्धार्योः शत्रकृच्छ्रिणि ॥ अकृच्छ्रिणि कर्त्तरीति ।** एतेनाकृच्छ्रिणीति प्रत्ययार्थस्य कर्तुरेतद् विशेषण-

**पदमञ्जरी**

भावान्नित्यं प्रतिषेधे प्राप्ते वचनम् । यस्यापि तृन्निति स्वरूपग्रहणं तेनाप्येतद्वक्तव्यम् —पक्षे षष्ठी यथा स्यान्नित्यं मा भूदिति । शेषविज्ञानात्सिद्धम्, कर्मणि शेषत्वेन विवक्षिते षष्ठी, कर्मरूपेण विवक्षिते द्वितीयेति ॥ १२८ ॥

**ताच्छील्यवयोवचनशक्तिषु चानश् ॥ मण्डयमाना इत्यादि ।** 'मडि भूषायाम्', ( धा० पा० १५८७ ) 'भूष अलङ्कारे' ( धा० पा० १७३० ) चुरादी, 'असु क्षेपणे' ( धा० पा० १२०९ ), पर्यासः = सन्नहनम्, शिखापर्यायः शिखण्डशब्दः । वचनग्रहणं विस्पष्टार्थम् ॥ १२९ ॥

**इङ्धार्योः शत्रकृच्छ्रिणि ॥ अकृच्छ्रः सुखसाध्यो यस्य धात्वर्थ इति ।** अस्तीति शेषः । 'अत इनिठनौ'

**भावबोधिनी**

ताच्छील्य = उस प्रकार के स्वभाव वाला होना । वयः = शरीर की अवस्थायें, यौवन, वार्धक्य आदि । शक्ति = सामर्थ्य । ताच्छील्य, वयोवचन और सामर्थ्य अर्थों में धातु से चानश् प्रत्यय होता है । (१) ताच्छील्य में उदा०— कति इह मुण्डयमानाः, कति इह भूषयमाणाः । [ यहाँ कितने मुण्डन कराने वाले हैं ? कितने यहाँ सजने धजने वाले हैं ? यहाँ मुण्डन कराना और सजना यह उनका स्वभाव होना प्रतीत होता है । ] ( २ ) वयोवचन का उदा०—कति इह कवचं पर्यस्यमानाः । कति इह शिखण्डं वहमानाः । [ यहाँ कितने कवच धारण करने वाले हैं ? यहाँ कितने शिखण्ड= चोटी धारण करने वाले हैं ? कवच धारण करना यौवन = वयः का सूचक है । अतः वयोवचन के कारण प्रत्यय होता है । ] ( ३ ) शक्ति सामर्थ्य में उदा० —कति इह निघ्नानाः । [ यहाँ कितने वध करने वाले हैं ? ] कति इह पचमानाः । [ यहाँ कितने खाना पकाने वाले हैं ? इनमें वध करने और खाना बनाने के सामर्थ्य की प्रतीति होने से प्रत्यय होता है । चानश् का 'च्' स्वर के लिये और 'श्' सार्वधातुकत्व के लिये है । अतः शप् आदि होकर रूप बनते हैं । ] ॥ १२९ ॥

'इङ्' और 'धारि' इन धातुओं से अकृच्छ्री = कष्टसाध्यक्रिया-रहित कर्ता अर्थ में शतृ प्रत्यय होता है । अकृच्छ्र = जिस कर्ता का धात्वर्थ ( = क्रिया) सुखसाध्य है वह कर्ता अकृच्छ्री है । उदा० —अधीयन् पारायणम् । ( 'पारायण'

**सोऽकृच्छ्री । अधीयन् पारायणम् । धारयन्नुपनिषदम् ।**

अकृच्छ्रिणीति किम् ? कृच्छ्रेणाधीते । कृच्छ्रेण धारयति ॥

## ९००. द्विषोऽमित्रे ॥ १३१ ॥ ( ३१११ )

अमित्रः = शत्रुः, अमित्रे **कर्त्तरि द्विषेर्धातोः शतृप्रत्ययो भवति । द्विषन्, द्विषन्तौ, द्विषन्तः ।**
**अमित्रे इति किम् ? द्वेष्टि भार्या पतिम् ॥**

## ९०१. सुञो यज्ञसंयोगे ॥ १३२ ॥ ( ३११२ )

**यज्ञेन संयोगो यज्ञसंयोगः । यज्ञसंयुक्तेऽभिषवे वर्त्तमानात्सुनोतेर्धातोः शतृप्रत्ययो भवति । सर्वे सुन्वन्तः ।**

**न्यासः**

मिति दर्शयति । अकृच्छ्रः = **सुखसाध्यो यस्य धात्वर्थः सोऽकृच्छ्रीति** । 'अत इनिठनौ' इतीनिः । **अधीयन्निति** । पूर्ववदियङ् । **धारयन्निति** । 'धृङ् अवस्थाने ।' चुरादिणिच् ॥ १३० ॥

**द्विषोऽमित्रे ॥ अमित्रः शत्रुरिति** । शत्रावेवामित्रशब्दस्य रूढत्वात् ।

**द्वेष्टीति** । अदादित्वाच्छपो लुक् ॥ १३१ ॥

**सुञो यज्ञसंयोगे ॥ यज्ञसंयोग इति** । कर्मसाधनः संयोगशब्दः । अत एव वृत्तावाह—**यज्ञसंयुक्तेऽभिषव इति** । संयुक्तः = सम्बद्धः, यज्ञेन संयुक्तो यज्ञसंयुक्तः । कदा चाभिषवो यज्ञसंयुक्तो भवति ? यदा यज्ञाङ्गं भवति । **सुन्वत**

**पदमञ्जरी**

इतीनिः; अपुत्रा भार्यादिवद् बहुव्रीहिणैव सिद्धे तत्पुरुषान्मत्वर्थीय कृतः; लघुत्वम्प्रति सर्वत्रानादरात् । इङ आत्मनेपदित्वाद्धारयतेश्च कर्त्रभिप्राये शता न सिद्धयति, लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः ॥ १३० ॥

**द्विषोऽमित्रे ॥** असन्देहार्थम् 'मित्रे द्विषः' इति सूत्रान्यासादकारप्रश्लेषो विज्ञायत इत्याह—**अमित्रश्शत्रुरिति** । अमेर्द्विषतीति त्रच्प्रत्ययः, न पुनरयं नञ्समासः, परवल्लिङ्गप्रसङ्गात् लोकाश्रयत्वाल्लिङ्गस्य । स्वरे दोषः, चित्स्वरो हीष्यते । बह्वृचास्तु मध्योदात्तममित्रशब्दमधीयते—'अमित्रस्य व्यथया मन्युमिन्द्रः, ( ऋ० ६.२५.२ ) 'अमैरमित्रमर्दय ( ऋ० ८.७९.१० ) ।' द्विषेस्स्वरितत्वात्कर्त्रभिप्राये शता न प्राप्नोतीत्ययमारम्भः ॥ १३१ ॥

**सुञो यज्ञसंयोगे ॥** कर्मसाधनस्संयोगशब्द इत्याह—**यज्ञसंयुक्तेऽभिषव इति । सर्वे सुन्वन्त इति** । प्रयोगः ।

**भावबोधिनी**

ग्रन्थ को सरलता से पढ़ने वाला । ) धारयन् उपनिषदम् । ( उपनिषद् के अभिप्राय को बिना कष्ट के धारण करने वाला । यहाँ अधि इङ् + शतृ = अत्, "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" सूत्र से 'इ' का 'इयङ्' करने पर अधि इय अत्, सवर्णदीर्घ, प्रातिपदिक संज्ञा सु, "उगिदचां सर्वनामस्थाने" से नुम् आगम —अधीयन्त् सु, सुलोप, संयोगान्तलोप— अधीयन् । धारि + शतृ = अत्, गुण, अय् आदेश आदि करने पर धारयन् । ]

**विमर्श**—अधि पूर्वक 'इङ्' धातु आत्मनेपदी है अतः यहाँ शतृ न होकर शानच् होना चाहिये, यह शंका हो सकती है । समाधान यह है कि यह शतृ लट् के स्थान पर नहीं होता है अपि तु यह एक स्वतन्त्र प्रत्यय है और 'अकृच्छ्री= सुखसाध्य क्रिया का कर्ता' यह अर्थ प्रतीत होता है । अतः 'अधीयन्' का अर्थ है—विना कष्ट के ही अध्ययन करने वाला । इसी प्रकार 'धारयन्' का अर्थ है —विना कष्ट के धारण करने वाला । जब अधि + इङ् से लट् होता है तब उसका शानच् ही होता है और—'अधीयानः' यह रूप बनता है इसका अर्थ है—अध्ययन करता हुआ ॥ १३० ॥

अमित्र=शत्रु, शत्रु कर्ता रहने पर द्विष् धातु से शतृ प्रत्यय होता है । उदा०—द्विषन्, द्विषन्तौ, द्विषन्तः । [ द्विष् + शतृ = अत्, नुम् आदि करने पर रूप बनते हैं । ] अमित्र अर्थ में—इसका क्या फल है ? द्वेष्टि भार्या पतिम् । [ यहाँ नहीं हो सकता क्योंकि यहाँ अमित्र = शत्रु अर्थ नहीं है । ] ॥ १३१ ॥

यज्ञ के साथ संयोग = यज्ञसंयोग । यज्ञ के साथ संयुक्त अभिषव अर्थ में वर्तमान 'सु' धातु से शतृ प्रत्यय होता है । उदा० सर्वे सुन्वन्तः । [ षु = सु + शतृ = अत्, "स्वादिभ्यः श्नुः" से श्नु = नु विकरण सुनु + अत्, "हुश्नुवोः

**सर्वे यजमानाः सत्त्रिण उच्यन्ते । संयोगग्रहणं प्रधानकर्तृप्रतिपत्त्यर्थम्, याजकेषु मा भूत् ।**

**यज्ञसंयोग इति किम् ? सुनोति सुराम् ॥**

**९०२. अर्हः प्रशंसायाम् ॥ १३३ ॥ ( ३११३ )**

**प्रशंसा = स्तुतिः । अर्हतेर्धातोः प्रशंसायां शतृप्रत्ययो भवति । अर्हन्निह भवान्विद्याम् । अर्हन्निह भवान् पूजाम् ।**

**प्रशंसायामिति किम्? अर्हति चौरो वधम् ॥**

**९०३. आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३४ ॥ ( ३११४ )**

**'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुतः क्विप्' ( ३.२.१७७ ) इति क्विपं वक्ष्यति । आ एतस्मात्**

**न्यासः**

**इत्यादि । 'स्वादिभ्यः श्नुः' । सर्वे यजमाना इति ।** सुन्वन्त इत्यनेन यजमानाः सत्त्रिणो यज्ञस्य ये स्वामिनस्तेऽभिधीयन्ते, न तु याज्ञिका इति दर्शयति । कथं पुनरेषोऽर्थो लभ्यते, यावता यथाभिषवस्य यजमानाः कर्तारस्तथा याजका अपीत्याह—**संयोगग्रहणमित्यादि ।** इह 'सुञो यज्ञे' इत्येतद् वेदितव्यम्, एवमपि ह्युच्यमान यज्ञसंयुक्तताभिषवस्य लभ्यत एव; यज्ञविषयश्चैष सुनोत्यर्थो भवतीत्यर्थस्य प्रतिपत्तेः, तस्मात् संयोगग्रहणमिति न कर्तव्यमेतत् ? क्रियते प्रधानकर्तृप्रतिपत्त्यर्थम् । यागस्य ये कर्त्तारो भूत्वा फलं प्राप्नुवन्तः सुन्वन्तस्ते प्रधानकर्त्तारः, ते पुनर्यजमानाः, न याजकाः ॥ १३२ ॥

**अर्हः प्रशंसायाम् ॥ १३३ ॥**

**आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ तच्छीलादिषु कर्तृष्विति ।** अनेन तच्छीलादीनां

**पदमञ्जरी**

तस्य विषयमाह—**सर्वे यजमानास्सत्त्रिण उच्यन्ते इति ।** सत्रेषु हि ये यजमानास्ते ऋत्विज इति सर्वे प्रधानकर्त्तारः । इह 'सुञो यज्ञे' इत्येव सिद्धम्, यज्ञविषयश्चेत्सुनोत्यर्थो भवतीत्यर्थः, तत्किं संयोगग्रहणेन ? तत्राह—**संयोगग्रहणमिति ।** 'लटः शतृशानचौ' इत्यनेनाप्यप्रधाने कर्त्तरि न भवति, संयोगग्रहणसामर्थ्यात्प्रधानकर्त्ता = अधिकारी ॥ १३२ ॥

**अर्हः प्रशंसायाम् । अर्हति चौरो वधमिति ।** 'लटः शतृशानचौ' इत्यनेनापि न भवति, प्रथमासमानाधिकरणत्वात् । अस्तु वा 'अदुपदेशाल्लसार्वधातुकम्' इत्यनुदात्तः ॥ १३३ ॥

**आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ तदित्यादि ।** 'धातोः' इति वर्तते, धातुश्च शब्दः, न तस्य

**भावबोधिनी**

सार्वधातुके" सूत्र से यण्—सुन्वत्, प्रातिपदिकसंज्ञा, जस्, नुम् आदि करने पर प्रथमा बहुवचन में—सुन्वन्तः । सभी लोग यज्ञ में सोमरस निचोड़ने वाले । ] सभी यजमान सत्त्री कहे जाते हैं । संयोग का ग्रहण प्रधान कर्ता का ज्ञान कराने के लिये है, सामान्य याजक अर्थ में न हो ।

यज्ञसंयोग में—इसका क्या प्रयोजन है ? सुनोति सुराम् । [ मदिरा का अभिषव करता है । यहाँ अभिषव तो है किन्तु यज्ञ के साथ उसका संयोग नहीं है । अतः यह शतृ नहीं होता है । ] ॥ १३२ ॥

प्रशंसा = स्तुति । 'अर्ह' धातु से प्रशंसा अर्थ में शतृ प्रत्यय होता है । उदा०—अर्हन् इह भवान् विद्याम् । [ आप विद्या ग्रहण करने के योग्य = पात्र हैं । ] अर्हन् इह पूजां भवान् । [ आप पूजा के योग्य हैं । इनमें स्तुति प्रतीत हो रही है । अतः अर्ह् + शतृ = अत् नुम् आदि करने पर रूप बनता है । ]

प्रशंसा अर्थ में—इसका क्या फल है ? अर्हति वधं चौरः । [ चोर वध के योग्य है । इसमें प्रशंसा न होकर निन्दा है । अतः यह प्रत्यय नहीं होता है । ] ॥ १३३ ॥

"भ्राजभास" ( ३.२.१७७ ) से क्विप् प्रत्यय कहा जायगा । इस क्विप् शब्द के उच्चारण = विधान से पहले

**क्विप्संशब्दाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ चायमाङ्, तेन क्विपोऽप्ययमर्थनिर्द्देशः।**

**तदिति धात्वर्थः शीलादिविशेषणत्वेन निर्दिश्यते। तच्छीलः=यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्त्तते। तद्धर्मा=तदाचारः, यः स्वधर्मे ममायमिति प्रवर्त्तते विनापि शीलेन। तत्साधुकारी=यो धात्वर्थं साधु करोति। उत्तरत्रैवोदाहरिष्यामः॥**

**९०४. तृन्॥ १३५॥ (३११५)**

**सर्वधातुभ्यस्तृन्प्रत्ययो भवति तच्छीलादिषु कर्तृषु। तकारः स्वरार्थः। तच्छीले तावत्—कर्ता कटान्। वदिता जनापवादान्। तद्धर्मणि मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्। अन्नमपहर्त्तार आह्वरका**

**न्यासः**

प्रत्ययार्थविशेषणतां दर्शयति। **अभिविधौ चायमाङिति**। अभिविधिः=अभिव्याप्तिः। अत्राङ् न मर्यादायाम्, तेन वक्ष्यमाणस्य क्विपोऽप्ययमर्थनिर्देश इति। सोऽपि तच्छीलादिष्वेव भवति। **तदित्यादि**। 'धातोः' इति वर्तते, न च धातोः शीलादिविशेषणमुपपद्यते, तस्मात् तस्य योऽर्थः स शीलादीनां त्रयाणां विशेषणभावेन तच्छीलादिशब्देन निर्दिश्यते। स धात्वर्थः शीलं यस्य स तच्छीलः। स एव धर्मो यस्य स तद्धर्मा। साधु करोतीति साधुकारी, तस्य धात्वर्थस्य साधुकारीति यावत्। **स्वभावत इति**। भवत्यस्मात् फलनिरपेक्षा वृत्तिरिति भावः। स्वभावश्चैतनिको धर्मः, स पुनः शीलमेव। **फलनिरपेक्ष इति**। फलाकाङ्क्षारहितः। **तत्रेति**। धात्वर्थे। **तदाचार इति**। धर्मशब्दोऽत्राचारे वर्तत इति दर्शयति। स धात्वर्थ आचारो यस्य स तथोक्तः। **विनापि शीलेनेति**। तच्छीलात् तदाचारस्यान्यथात्वं दर्शयति। **यो धात्वर्थं साधु करोतीति**। अत्रापि विना शीलेनेति सम्बध्यते। **साध्विति**। प्रशस्तमित्यर्थः। क्रियाविशेषणत्वान्नपुंसकत्वम्॥ १३४॥

तृन्॥ **मुण्डयितार इति**। मुण्डां कुर्वन्तीति 'मुण्डमिश्र' इत्यादिना णिच्, इष्ठवद्भावेन टिलोपः। **वधू-**

**पदमञ्जरी**

शीलादिप्रतिविशेषणत्वमुपपद्यते, तस्मात्तस्य योऽर्थः स शीलादीनां त्रयाणां विशेष्याणां विशेषणत्वेन त्रिभिस्तच्छब्दैर्निर्दिश्यते। तत्र धात्वर्थे शीलं यस्य स धात्वर्थो धर्मो यस्य तस्य धात्वर्थस्य साधुकारीत्येवमित्यर्थः।

**तद्धर्मा तदाचार इति**। धर्मशब्दस्याचारे प्रसिद्धत्वात्। **विनापि शीलेनेति**। तच्छीलाद्भेदं दर्शयति। **यो धात्वर्थं साधु करोतीति**। विनापि शीलेनेत्यनुषङ्गः॥ १३४॥

**तृन्॥ मुण्डयितार इति**। श्राविष्ठायनानां गोत्रविशेषाणामेष कुलधर्मः॥ **अपहर्त्तार इति**। अह्वरदेशे

**भावबोधिनी**

तक और यहाँ से लेकर आगे जिन प्रत्ययों का विधान किया जायगा उन्हें तच्छील वाले कर्ता आदि अर्थों में समझना चाहिये। यह सूत्रस्थ 'आङ्' अभिविधि (अभिव्याप्ति) अर्थ में है अतः 'क्विप्' प्रत्यय के भी ये अर्थ होते हैं।

तत्—यह धात्वर्थ शील आदि का विशेषण होते हुये निर्दिष्ट है। तच्छील=जो फल की अपेक्षा न करता हुआ स्वाभाविक रूप से उस कार्य में प्रवृत्त होता है। [ तत्=सः=धात्वर्थः शीलं यस्य सः तच्छीलः, उस प्रकार के कार्य करने के स्वभाव वाला। ] तद्धर्मा=उसका आचरण करने वाला, जो अपने धर्म में 'यह मेरा है' ऐसा मानकर बिना स्वभाव के भी प्रवृत्त होता है। [ अर्थात् स्वभाव नहीं है किन्तु अपना कर्तव्य मानकर वैसा कार्य करने वाला। ] तत्साधुकारी=जो धात्वर्थ को अच्छी प्रकार से करने वाला है। इनके उदाहरण आगे ही दिये जायेंगे॥ १३४॥

तच्छील आदि कर्ता अर्थ में सभी धातुओं से तृन् प्रत्यय होता है। तकार [ "तित्स्वरितम्" सूत्रानुसार स्वरित ] स्वर के लिये है। ( १ ) तच्छील अर्थ में उदा० कर्ता कटान्। [ कृ+तृन्, ऋ का गुण, रपर—कर्तृ न्, प्रातिपदिक संज्ञा, सु प्रत्यय ऋ का आनङ् और लोप आदि करने पर रूप बनता है—कर्ता। कर्ता कटान्=चटाई बनाने की आदत वाला। ] वदिता जनापवादान्। [ लोकापवाद कहने के स्वभाववाला। वद्+तृन्, इट् के अतिरिक्त पूर्वोक्त सब प्रक्रिया। ] ( २ ) तद्धर्मा में उदा० मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्। यहाँ 'मुण्डां कुर्वन्ति' इस अर्थ में

भवन्ति श्राद्धे सिद्धे। उन्नेतारस्तौल्वलायना भवन्ति पुत्रे जाते। तत्साधुकारिणी—कर्ता कटम्। गन्ता खेटम्।

❀ तृन्विधावृत्विक्षु चानुपसर्गस्य ❀ ( म० भा० ३.२.१३५ वा० १ )। होता। पोता। अनुपसर्गस्येति किम्? उद्गाता। प्रतिहर्ता। तृजेव भवति। स्वरे विशेषः।

❀ नयतेः षुक् च ❀ ( वा० २ )। नेष्टा।

**न्यासः**

**मूढां श्राविष्ठायना मुण्डयन्तीति**। एतेषां कुलधर्मः। **आह्वरकाः श्राद्धे सिद्धेऽन्नमपहरन्तीति**। एतेषामाचारः। यः कटं साधु करोतीति स कर्त्ता कटमिति। खेटं यो लीलया गच्छति स साधु गच्छति।

**तृन्विधावित्यादि**। अताच्छील्यार्थ आरम्भः। अस्मिंस्तृन्विधावनुपसर्गस्य धातोस्तृन् वक्तव्य ऋत्विक्षवभिधेयेषु। **होतेति**। 'हु दाने'। **पोतेति**। 'पूङ् पवने'। **उद्गातेति**। 'कै गै शब्दे'। **स्वरे विशेष इति**। तृचि सति 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरेणान्तोदात्तत्वं भवति, तृनि तु सति 'गतिरनन्तरः' इत्यनुवर्तमाने 'तादौ च निति कृत्यतौ' इति पूर्वपदस्य प्रकृतिस्वरः प्रसज्येत।

**नयतेः षुक् चेति**। कृते गुणे षुगागमो वेदितव्यः; अन्यथा ह्यलघूपधत्वाद् गुणो न स्यात्। गुणोऽपि वा वक्तव्यः। अत्र ऋत्विगिति वर्तते। अयमप्यताच्छील्यार्थ आरम्भः।

**पदमञ्जरी**

भवा **आह्वरकाः**, 'रोपधेतोः प्राचाम्' इति वुञ्, तेषामेव देशधर्मः। **श्राद्धे सिद्धे**। निर्वृत्ते। **उन्नेतार इति**। अयमपि कुलधर्मः।

**तृन्विधाविति**। अताच्छील्याद्यर्थ आरम्भः। **तृजेव भवतीति**। तृन्तृचौ 'शंसिक्षदादिभ्यः संज्ञायां चानिटौ' इत्यनेन। **स्वरे विशेष इति**। तृनि 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरस्स्यात्, तृचि तु कृत्स्वरो भवति। 'तृन्तृचौ' इत्यस्यैव विषयव्यवस्थार्थमिदम्। अनुपसर्गेभ्यस्तृन्, सोपसर्गेभ्यस्तृजिति प्रपञ्चार्थं वा, तथा च प्रशास्तेति। तृच्यपीण्नास्ति।

**नयतेः षुक् चेति**। गुणे कृते षुग् वेदितव्यः, प्रकृत्यन्तरं वा; नेषति ( ऋ० ५.४६.१ ), नेषतुः, नेषिथेति दर्शनात्।

**भावबोधिनी**

णिजन्त बनाकर मुण्डि + तृन्, इट्, गुण, अय् आदेश— मुण्डयितृ। प्रथमा बहुवचन का रूप है। श्राविष्ठायनों का यह कुल धर्म है। ] अन्नम् अपहर्तार आह्वरका भवन्ति श्राद्धे। [ यह भी आह्वरकों का कुलधर्म है। अतः अपहृ + तृन् का रूप बनता है। ] उन्नेतारः तौल्वलायना भवन्ति पुत्रे जाते। [ तौल्वलायनों का यह कुलधर्म है अतः उत् नी + तृन् होकर रूप बनता है। ] ( ३ ) उस क्रिया को अच्छी तरह से करने वाले अर्थ में—कर्ता कटम्। गन्ता खेटम् [ चटाई अच्छी तरह बनाने वाला। खेट में आराम से जाने वाला। यहाँ कृ + तृन्, गम् + तृन्। ]

❀ तृन् की विधि में ऋत्विकों में भी कहना चाहिये किन्तु उपसर्गरहित का ही करना चाहिये। ❀ उदा० होता। पोता [ हु + तृन्, पू + तृन्। ] उपसर्गरहित का—इसका क्या प्रयोजन है? उद्गाता, प्रतिहर्ता [ इनमें 'उद्गा' से और 'प्रतिहृ' से ] तृच् ही होता है। तृच् और तृन् में केवल स्वर में भेद है। [ तृन् होने पर पूर्वपद का प्रकृतिस्वर प्रसक्त होता है उसे रोककर तृच् करने पर प्रकृतिस्वर करके अन्तोदात्त होता है। ]

* 'नी' धातु से तृन् और षुक होते हैं। ❀ उदा० नेष्टा। [ नी + तृन्, गुण, षुक् = ष् आगम ने + ष् + तृ, ष्टुत्व,—विभक्ति कार्य करने पर—नेष्टा। ले जाने के स्वभाववाला, धर्मवाला, अच्छी तरह से ले जाने वाला। ]

❀ **त्विषेर्देवतानामकारश्चोपधाया अनिट्त्वं च** ❀ ( वा० ५ ) **त्वष्टा।**

❀ **क्षदेश्च नियुक्ते** ❀ ( वा० ६ ) । **क्षत्ता। क्वचिदधिकृत उच्यते।**

❀ **छन्दसि तृच्च** ❀ ( वा० ७ ) । **क्षत्तृभ्यः संग्रहीतृभ्यः** ( वा० सं० १६.२६ ) । **स्वरे विशेषः॥**

## ९०५. अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥ १३६ ॥ ( ३११६ )

**अलंकृञादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। अलंकरिष्णुः। निराकरिष्णुः।**

**न्यासः**

**त्विषेरित्यादि।** 'त्विष दीप्तौ' इत्यस्माद् देवतायामभिधेयायां तृन् वक्तव्यः, अकारश्चोपधाया आदेशो भवति। **अनिट्त्वं चेति।** एतस्य सर्वशेषत्वे चास्य पोतेत्यत्रानिट्त्वं सिद्धं भवति।

**क्षदेरित्यादि।** 'क्षद' इति सौत्रो धातुः। 'गुधृवीपचिवचियमिसदिक्षदिभ्यः स्त्रः' इत्याद्युणादिसूत्रपाठात्। अस्मान्नियुक्तेऽधिकृते वाच्ये तृन् वक्तव्यः, अनिट्त्वञ्च। **क्वचिदिति।** द्वारे, रथे वा।

**छन्दसि तृच्चेति।** चकारात् तृंश्च। **स्वरे विशेष इति।** तृच्यन्तोदात्तत्वं भवति, तृनि तु सत्याद्युदात्तत्वम्। उणादिषु निपातितत्वाद् होत्रादय इति सिद्धम्। तत्र हि 'नप्तृनेष्टृत्वष्टृक्षत्तृपोतृहोतृभ्रातृजामातृमातृपितृदुहितृ' इत्येते निपातिताः॥ १३५॥

**अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्॥** अलम्पूर्वः करोतिः; पुनः स एव निराङ्पूर्वः, 'जनी प्रादुर्भावे' प्रपूर्वः; 'पचि व्यक्तीकरणे';[1] 'पद गतौ', पतिमन्ये पठन्ति; 'शल हुल पत्लृ गतौ', 'मदी तृप्तिसाधने'—एते पदादय उत्पूर्वाः। 'रुच दीप्तौ'; 'त्रपूष् लज्जायाम्' अपपूर्वः, 'वृतु वर्तने', 'वृधु वृद्धौ',

**पदमञ्जरी**

**अनिट्त्वं चेति।** त्विषः स्वत एवानिट्त्वादुक्तवक्ष्यमाणसर्वोपसंख्यानशेषभूतमिदम्। तेन पोता, क्षत्तेत्यनिट्त्वं भवति।

**क्षदेरिति।** धातुष्वपठितोऽपि क्षदिरस्मादेव वचनादभ्युपगम्यते, आत्मनेपदी चायम्। 'उक्षाणां वा वेहतं वाक्षदन्तः' ( ऐ० ब्रा० ३.४.१५ पृ० ९५ ) इति बह्वृचब्राह्मणप्रयोगात्। **क्वचिदधिकृत इति।** द्वाररक्षणे, रथप्राजने च॥ १३५॥

**अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्॥** कृञिति करोतेर्ग्रहणम्, प्रसिद्धेः, न हिंसार्थस्य। 'जनी प्रादुर्भावे' (धा० पा० ११४९) 'डुपचष्पाके' ( धा० पा० ९९६ )। 'पचि व्यक्तीकरणे' ( धा० पा० १७४) इत्यस्येदित्त्वान्नुमा भाव्यमिति नायं निर्देशः सम्भवति। 'शल हुल पत्लृ गतौ' (धा० पा० ८४३–४५ )

**भावबोधिनी**

❀ देवता अर्थ रहने पर 'त्विष्' धातु से तृन् प्रत्यय होता है, उपधा इ का अ होता है और इट् का अभाव होता है। ❀ त्वष्टा [ त्विष्+तृन्, 'इ' का अ' त्वष्+तृन् ष्टुत्व, सु विभक्तिसम्बन्धी कार्य—त्वष्टा। ]

❀ नियुक्त - अधिकृत अर्थ में 'क्षद्' से तृन् प्रत्यय होता है। ❀ क्षत्ता। [ क्षद्+तृन्, चर्त्व ] कहीं पर अधिकृत [ नियुक्ति ] को क्षत्ता कहा जाता है।

❀ वेद में तृच् भी होता है। ❀ क्षत्तृभ्यः संगृहीतृभ्यः। [ क्षद्+तृच्, संगृह+तृच् इट् आगम, दीर्घ—संग्रहीतृ, विभक्तिसम्बन्धी कार्य। ] तृन् और तृच् में स्वर में भेद होता है॥ १३५॥

'अलं कृञ्' आदि धातु रूपों से तच्छील वाले आदि कर्ता अर्थों में इष्णुच् प्रत्यय होता है। उदा० अलंकरिष्णुः। [ अलम् उपपद कृ+इष्णुच्, ऋ का गुण रपर। सजाने के स्वभाववाला। ] निराकरिष्णुः। [ निर् आ कृ+इष्णुच्,

१. प्रामादिकमेतत्, इदित्त्वान्नुमो दुर्वारतया 'डुपचष्पाके' इत्येव ग्राह्यम्।

**प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ।**

**❀ अलंकृञो मण्डनार्थाद्युचः पूर्वविप्रतिषेधेनेष्णुज् वक्तव्यः ❀** ( ? ) ॥

## ९०६. णेश्छन्दसि ॥ १३७ ॥ ( ३११७ )

**ण्यन्ताद्धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति ।** **दृषदं धारयिष्णवः** ( शाङ्खा० आ० १२.२ ) **वीरुधः पारयिष्णवः** ( ऋ० १०.९७.३ ) ॥

### न्यासः

'षह मर्षणे', 'चर गत्यर्थः'—एभ्य इष्णुज् भवति तृणोऽपवादः । यदा त्वलम्पूर्वः करोतिर्मण्डने वर्तते, तदा 'कृधमण्डार्थेभ्यश्च' इति युच् प्राप्नोति; पूर्वविप्रतिषेधश्च वक्तव्यः; अन्यथा मण्डनादन्यत्र सावकाशमिष्णुचं परत्वाद् बाधेत । येऽत्र सोपसर्गाः पठ्यन्ते, तेभ्य एतदुपसर्गपूर्वेभ्य एव भवति, अन्येभ्यस्त्वनियमेन ॥ १३६ ॥

**णेश्छन्दसि** ॥ **धारयिष्णवः, पारयिष्णव इति ।** 'धृङ् अवस्थाने', 'पॄ पालनपूरणयोः'; हेतुमण्णिच्, 'अयामन्त०' इत्यादिनायादेशः ॥ १३७ ॥

### पदमञ्जरी

'उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ' इति **भट्टिकाव्ये** प्रयोगः ( भट्टि० ५.१ )। 'पद गतौ' ( धा० पा० १८९८ ), इत्यन्ये पठन्ति । 'मदी हर्षे' ( धा० पा० ८१५ ) 'मद तृप्तियोगे' ( धा० पा० १७०५ ) इत्ययं तु चुरादिः, तस्योन्मदेलि निर्देशो न सम्भवति । 'रुच दीप्तौ' ( धा० पा० ७४५ ), 'त्रपूष् लज्जायाम्' ( धा० पा० ३७४ ), 'वृतु वर्तने' ( धा० पा० ७५८ ) 'वृधु वृद्धौ' ( धा० पा० ७५९ ), 'षह मर्षणे' ( धा० पा० ८५२ ), 'चर गत्यर्थः' ( धा० पा० ५५९ )। येऽत्र सोपपदा उपात्तास्तत्रोपात्तादेव रूपाद् भवति, तत एतन्न नोदनीयम्—'उदः पचपतमद' इति वक्तव्यम्, किं स्वरूपतः ? प्रत्येकमुत्पूर्वपाठेनेति, तेन समुत्पतिष्णुरिति न भवतीत्याहुः । ये तु निरुपपदा उपात्तास्तेभ्यो यथादर्शनं भवति ॥ १३६ ॥

**णेश्छन्दसि** ॥ **पारयिष्णव इति ।** 'अयामन्ताल्वाय्येत्न्विष्णुषु' इत्ययादेशः ॥ १३७ ॥

### भावबोधिनी

ऋ का गुण, रपर, हटाने के स्वभाववाला ] प्रजनिष्णुः [ प्रजन् + इष्णुच्, पैदा करने के स्वभाववाला ] उत्पचिष्णुः । [ उत्पच् + इष्णुच्, अच्छा पकाने के स्वभाववाला ] उत्पतिष्णुः । [ उत् पत् + इष्णुच्, ऊपर जाने के स्वभाववाला । ] उन्मदिष्णुः । [ उत् मद् + इष्णुच्, उन्मत्त होने के स्वभाववाला ] रोचिष्णुः [ रुच् + इष्णुच्, चमकने वाला ] अपत्रपिष्णुः [ अप त्रप् + इष्णुच्, लजाने के स्वभाववाला ] वर्तिष्णुः [ वृत् + इष्णुच्, गुण, रपर, होने वाला ] वर्धिष्णुः [ वृध् + इष्णुच्, गुण, रपर, बढ़ने वाला ] सहिष्णुः [ सह् + इष्णुच्, सहन करने वाला ] चरिष्णुः [ चर् + इष्णुच्, घूमने के स्वभाववाला । ]

❀ मण्डन = सजाना अर्थवाले 'अलं कृ' से युज् प्रत्यय को रोककर पूर्वविप्रतिषेध से इष्णुच् कहना चाहिये । ❀ [ भाव यह है कि अलम् पूर्वक 'कृ' धातु मण्डन अर्थ में होती है तब ''कृधमण्डार्थेभ्यश्च'' सूत्र से युच् प्रत्यय प्राप्त होता है, इसका पूर्वविप्रतिषेध होता है अतः युच् न होकर इष्णुच् होता है । ] ॥ १३६ ॥

वेदविषय में णिजन्त धातु से तच्छील आदि कर्ता अर्थ में इष्णुच् प्रत्यय होता है । उदा० दृषदं धारयिष्णवः । [ धारि = इष्णुच्, 'इ' ( णि ) का गुण, अयादेश—धारयिष्णु, प्रथमा बहुवचन का रूप है । ] वीरुधः पारयिष्णवः । [ पारि + इष्णुच् ] ॥ १३७ ॥

**९०७. भुवश्च ॥ १३८ ॥ ( ३११८ )**

**भवतेर्धातोश्छन्दसि विषये तच्छीलादिष्विष्णुच् प्रत्ययो भवति । भविष्णुः ( मै० सं० १.८.१ ) । योगविभाग उत्तरार्थः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुना लोहितचन्दनेन ॥**

**९०८. ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥ ( ३११९ )**

**'छन्दसि' इति निवृत्तम् । ग्ला, जि, स्था—इत्येतेभ्यो धातुभ्यश्चकाराद् भुवश्च तच्छीलादिषु क्स्नुः प्रत्ययो भवति । ग्लास्नुः । जिष्णुः । स्थास्नुः । भूष्णुः ।**

**गिच्चायं प्रत्ययो न कित् । तेन स्थ ईकारो न भवति । 'क्ङिति च' ( १.१.५ ) इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति । 'श्र्युकः किति' ( ७.२.११ ) इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति ॥**

**न्यासः**

**भुवश्च ॥ योगविभाग उत्तरार्थ इति ।** उत्तरसूत्रे भवतेरेवानुवर्त्तनं यथा स्यात्; अन्यथा यदि 'णिभूभ्याञ्च' इत्येको योगः क्रियते तदा णिग्रहणमप्यनुकृष्येत । **भ्राजिष्णुनेत्यादि ।** लौकिकप्रयोगः । तस्योपन्यासो भाषायामपि 'भ्राजृ दीप्तौ' इत्येतस्मादिष्णुच्प्रदर्शनार्थः ॥ १३८ ॥

**ग्लाजिस्थश्च क्स्नुः** ॥ अथ स्थास्नुरित्यत्र 'घुमास्थागापा' इत्यादिसूत्रेण कस्मादीत्वं न भवतीत्याह— **गिच्चायमित्यादि ।** ईत्वं क्ङिति । तत्र 'दीङो युडचि क्ङिति' इत्यनुवृत्तेः । न चायं कित्, न चायं ङित्; किं तर्हि ? गित् । गकारस्य त्वश्रवणम्, चर्त्वभूतस्य निर्देशात् । यदि तर्हि गिदयम्, जिष्णुरित्यत्र गुणः प्राप्नोति, यस्मात् 'क्ङिति च' इति क्ङितिप्रत्यये गुणः प्रतिषिध्यते, न गितीत्यत आह—**क्ङिति चेत्यादि ।** न हि 'क्ङिति च' इत्यत्र ककारङकारावेव निर्दिश्येते, किं तर्हि ? गकारोऽपि कृतचर्त्वः, तेन गित्यपि गुणो न भवति । भूष्णुरित्यत्र तर्हि 'श्र्युकः किति' इट्प्रतिषेध उच्यमानो गिति न स्यादित्यत आह—**श्र्युकः कितीत्यादिना गकारश्चर्त्वभूतो निर्दिश्यत इति प्रकृतेन सम्बन्धः । तेनेति ।** गकारस्य चर्त्वभूतस्य निर्देशेनेति ।

**पदमञ्जरी**

**भुवश्च ॥** छन्दसीत्युच्यते, तत्कथम्—'जगतप्रभोरप्रभविष्णु वैष्णवम्' 'विष्णवे प्रभविष्णवे' इति ? निरंकुशाः कवयः । **भ्राजिष्णुनेति ।** नैतद्भाष्ये समाश्रितम् ॥ १३८ ॥

**ग्लाजिस्थश्च ग्स्नुः ॥ चर्त्वभूत इति ।** चर्त्वं प्राप्तश्चर्त्वेन वा प्राप्त इत्यर्थः । **श्र्युकः कितीत्यत्रापीति ।** गकारोऽपि चर्त्वभूतो निर्दिश्यत इत्यनुषङ्गः ।

**भावबोधिनी**

और 'भू' धातु से भी वेद-विषय में तच्छील आदि कर्ता अर्थ में इष्णुच् प्रत्यय होता है। उदा० भविष्णुः । [ भू + इष्णुच्, 'ऊ' का गुण, अव् आदेश ] यह सूत्र उत्तर सूत्र में अनुवृत्ति के कारण अलग से बनाया गया है। चकार अनुक्त के समुच्चय के लिये है। अतः "भ्राजिष्णुना लोहितचन्दनेन" । [ भ्राज् + इष्णुच् । ] होता है ॥ १३८ ॥

"छन्दसि" इसकी निवृत्ति हो जाती है। ग्ला, जि, स्था—इन धातुओं से और 'च' के बल से 'भू' धातु से तच्छील आदि अर्थों में 'क्स्नु' प्रत्यय होता है। उदा० ग्लास्नुः [ 'ग्लै' ऐ का आत्व—ग्ला + क्स्नु = स्नु । उदास होने के स्वभाववाला । ] जिष्णुः । [ जि + क्स्नु = स्नु, कित् होने से गुणनिषेध ] स्थास्नुः [ स्था + क्स्नु ] भूष्णुः । [ क्रमशः—जीतने के स्वभाव या धर्मवाला, रुकने वाला, होने वाला—ये अर्थ हैं । ]

यह [ क्स्नु ] प्रत्यय गित् [ ग् की इत्संज्ञा वाला ] है न कि कित् [ क् की इत्संज्ञा वाला ]। इसीलिये 'स्था' के 'आ' का 'ई' नहीं होता है। "क्ङिति च" इस सूत्र में चर्त्वभूत गकार का भी निर्देश है इस लिये [ गित् परे रहते भी ] गुण का निषेध हो जाता है। "श्र्युकः कित्" इस सूत्र में भी गकार का निर्देश है अतः 'भू' से इट् नहीं होता है। [ इसी आशय को निम्न श्लोक में भाष्य में स्पष्ट किया गया है—]

**क्स्नोर्गित्त्वान्न स्थ ईकारः ङ्क्ङितोरीत्वशासनात् ।**
**गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ।। ( म० भा० ३.२.१३९ )**

❀ **दंशेश्छन्दस्युपसंख्यानम्** ❀ **( म० भा० ३.२.१३९ वा० ४ )। द॒ङ्क्ष्णवः॑ प॒शवः॑ ( वा० सं० १५.३ ) ।।**

**न्यासः**

**क्स्नोर्गित्त्वादित्यादि ।** गकार इत्संज्ञको यस्य स गित्; तद्भावो गित्त्वम् । तस्माद् गित्त्वान्न स्थास्नुरित्यत्रेकारः । तिष्ठतेरीकारो न भवति । कस्मात् पुनर्गित्त्वादीकारो न भवतीत्याह —**ङ्क्ङितोरीत्वशासनादित्यादि ।** ककारेऽकार उच्चारणार्थः । यस्मात् क्ङितीत्वमुच्यते, अयं तु गित्, तस्मात् क्ङिति विधीयमानमीत्वं गित्त्वादिह न प्राप्नोति । यद्येवम्, जिष्णुरित्यत्र गुणः प्राप्नोतीत्यत आह— **गुणाभाव इत्यादि ।** त्रिषु ककारगकारङकारेष्वित्संज्ञकेषु यो गुणप्रतिषेधः स स्मर्त्तव्यः=ज्ञातव्यः । 'क्ङिति च' इत्यत्र गकारश्चर्त्वभूतो निर्दिष्टः । यदि तर्हि गिदयम्, भूष्णुरित्यत्र 'श्र्युकः किति' इतीट्प्रतिषेधो न स्यादित्यत आह—**श्र्युकोऽनिट्त्वमित्यादि ।** गकारोऽपि ततश्चर्त्वभूतो निर्दिश्यते । तेन ककारगकारयोर्द्वयोरपीत्संज्ञकयोः श्र्युकोऽनिट्त्वमिट्प्रतिषेधो भवतीति वेदितव्यम् । यदि गकारश्चर्त्वभूतः 'श्र्युकः किति' इत्यत्र निर्दिश्यते 'हशि च' इत्युत्वं प्राप्नोति, तस्यासिद्धत्वात् ? सौत्रत्वान्निर्देशस्यासंहितया पाठान्न भविष्यतीत्यदोषः । **वामनस्य** त्वेतत् सर्वमनभिमतम् । यथा नाभिमतं तथा 'क्ङिति च' इत्यत्र प्रतिपादितम् । **दंशेरित्यादि ।** उपसंख्यानशब्दः प्रतिपादने वर्तते । 'दन्श दंशने' इत्येतस्मादपि क्स्नुप्रत्ययस्योपसंख्यानम् = प्रतिपादनं कर्तव्यम् । तत्रेदं प्रतिपादनम्—पूर्वसूत्राच्चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन दंशेरपि भविष्यतीति । **दङ्क्ष्णव इति ।** व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम् । 'अनिदिताम्' इत्यनुनासिकलोपो न भवति, क्स्नोर्गित्त्वात् । ये तु कित्वमिच्छन्ति, तैरिह नकारलोपप्रतिषेधः 'नाञ्चेः पूजायाम्' इत्यत्र नेति योगविभागेन कर्तव्यः । यत्नान्तरं वा तैरास्थेयम्—नकारस्यानुस्वारः, तस्य परसवर्णः ।। १३९ ।।

**पदमञ्जरी**

**क्स्नोर्गित्त्वान्न स्थ ईकारः ।** स्थास्नुरित्यत्र ईकारो न भवति, क्स्नोर्गित्त्वात् । **ङ्क्ङितोरीत्वशासनात् ।** ककारेऽकार उच्चारणार्थः । क्ङितोरीत्वमुच्यते, अयं तु गित् । यद्येवं जिष्णुभूष्णुरित्यत्र गुणः प्राप्नोति ?—**गुणाभावस्त्रिषु स्मार्यः ।** गित् कित् ङिदिति त्रिषु गुणाभावः स्मर्तव्यः; 'क्ङिति च' इत्यत्र गकारप्रश्लेषात् । इह तर्हि भूष्णुरिति 'श्र्युकः किति' इतीट्प्रतिषेधो न प्राप्नोति ?—**श्र्युकोऽनिट्त्वं गकोरितोः ।** श्र्युकः परस्य यदनिट्त्वं तद्गकारककारयोर्द्वयोरपीतोर्भवति, न केवलं ककारे; तत्रापि गकारस्य चर्त्वभूतस्य निर्देशात् । यद्येवम्, चर्त्वस्यासिद्धत्वाद् 'हशि च' इत्युत्वं प्राप्नोति ? सौत्रो निर्देशः, असंहितया वा निर्देशः करिष्यते छन्दसि । **दंक्ष्णवः पशव इति ।** क्स्नोर्गित्त्वादुपधालोपाभावः ।। १३९ ।।

**भावबोधिनी**

'क्स्नु' यह गित् है इस कारण 'स्था' के आ का ई [ ''घुमास्थागापा०'' इस सूत्र से ] नहीं होता है क्योंकि कित् और ङित् परे रहते ही ईत्व का विधान किया गया है । [ यहाँ गित् है । अतः ईत्व नहीं होता है । ] [ 'क्ङिति च'' इस सूत्र से ] कित्, गित् और ङित्—इन तीनों के परे रहते गुण का अभाव=निषेध समझना चाहिये । [ अर्थात् ''क्ङिति च'' इसमें चर्त्वभूत गकार का भी निर्देश है । ] ''श्र्युकः किति'' इसमें गित् और कित् दोनों के परे अनिट्त्व =इट्निषेध है । [ अतः 'भूष्णुः' यहाँ इट् का प्रतिषेध भी हो जाता है । इस प्रकार कोई दोष नहीं है । ]

❀ दंश् धातु से वेद में 'क्स्नु' प्रत्यय कहना चाहिये । ❀ उदा० दंक्ष्णवः पशवः । [ दंश् + क्स्नु = स्नु, कित् परे होने से उपधा 'न्' लोप नहीं होता है । ''व्रश्चभ्रस्ज'' आदि सूत्र से 'श्' का 'ष्' ''षढोः कः सि'' सूत्र से 'ष्' का 'क्' दंक् + स्नु, स् का ष्, क्ष् = क्ष् — दंक्ष्णु, प्रथमा बहुवचन में—दंक्ष्णवः । ] ।। १३९ ।।

**९०९. त्रसिगृधिधृषिक्षिपेः क्नुः ॥ १४० ॥ ( ३१२० )**

**त्रसादिभ्यो धातुभ्यस्तच्छीलादिषु क्नुः प्रत्ययो भवति । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥**

**९१०. शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥ ( ३१२१ )**

**'इति'शब्द आद्यर्थे । शमादिभ्यो धातुभ्योऽष्टाभ्यस्तच्छीलादिषु घिनुण् प्रत्ययो भवति । 'शम उपशमे' ( धा० पा० १२०२ ) इत्यतः प्रभृति 'मदी हर्षे' ( धा० पा० १२०९ ) इत्येवमन्तः शमादिर्दिवाद्यन्तर्गणः । घकार उत्तरत्र कुत्वार्थः । उकार उच्चारणार्थः । णकारो वृद्ध्यर्थः ।**

**शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उन्मादी ।**

**न्यासः**

**त्रसिगृधिधृषिक्षिपेः क्नुः** ॥ 'त्रस उद्वेगे', 'गृधु अभिकांक्षायाम्', 'ञिधृषा प्रागल्भ्ये', 'क्षिप प्रेरणे'। **त्रस्नुरिति** । 'नेड्वशिकृति' इतीट्प्रतिषेधः । **गृध्नुरिति** । 'क्ङिति च' इति गुणाभावः ॥ १४० ॥

**शमित्यष्टाभ्यो घिनुण्** ॥ 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपरमे', 'श्रमु तपसि खेदे च', 'भ्रमु अनवस्थाने', 'क्षमु सहने', 'क्लमु ग्लानौ', 'मदी हर्षे' । **उत्तरत्र कुत्वार्थ इति** । संपर्कीत्यादौ 'चजोः कु घिण्ण्यतोः' इति यथा स्यात् । **उकार उच्चारणार्थ इति** । अनुबन्धत्वमस्य निरस्यति । अनुबन्धत्वे सति शमिनौ शमिन इति 'उगिदचाम्' इति नुम् प्रसज्येत । इह शमिनितराम्, शमिनितमामिति 'नद्याः शेषस्यान्यतरस्याम्' इति वर्तमाने 'उगितश्च' इत्यन्यतरस्यां ह्रस्वत्वं स्यात्, अन्यथा ह्रस्वानुबन्धकरणमनर्थकं स्यात् । तस्मादुच्चारणार्थ एवोकारो भवति । ह्रस्वत्वञ्च 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु' इत्यनेन नित्यं भवति ।

**शमीति** । 'अत उपधायाः' इति वृद्धिर्न भवति, 'नोदात्तोपदेश' इत्यादिना प्रतिषिद्धत्वात् । 'सौ च'

**पदमञ्जरी**

**त्रसिगृधिधृषिक्षिपेः क्नुः** ॥ **त्रस्नुरिति** । 'नेड्वशि कृति' इतीट्प्रतिषेधः ॥ १४० ॥

**शमित्यष्टाभ्यो घिनुण्** ॥ **इतिशब्द आद्यर्थं इति** । अनेकार्थत्वान्निपातानाम् । तत्र 'शम्' इति आदिर्येषामिति बहुव्रीहौ सुपो लुक्, 'शमु उपशमने' ( धा० पा० १२०१ ), 'तमु काङ्क्षायाम् ( धा० पा० १२०२ ), 'दमु उपशमने' ( धा० पा० १२०३ ), 'श्रमु तपसि खेदे च' (धा० पा० १२०४), 'भ्रमु अनवस्थाने' (धा० पा० १२०५), 'क्षमूष् सहने' ( धा० पा० १२०६ ), 'क्लमु ग्लानौ' ( धा० पा० १२०७ ), 'मदी हर्षे' ( धा० पा० १२०८ ) । **उकार उच्चारणार्थ इति** । नानुबन्धः, अनुबन्धे हि सति शमिनौ शमिन इत्यत्र 'उगिदचाम्' इति नुम् प्रसज्येत; शमिनितरा, शमिनितमेत्यत्र "नद्याः शेषस्यान्यतरस्याम्" 'उगितश्च' इत्यन्यतरस्यां ह्रस्वः स्यात्; 'घरूपकल्पचेलड्' इति नित्यमिष्यते, तस्मान्नायमनुबन्धः किं तूच्चारणार्थ इति व्याचक्षते । **भाष्ये** तु 'अकार उगित्कार्यार्थोऽनुबन्ध एव' इति स्थितम् । तत्र ह्रस्वत्वं विकल्पेनेष्यते, न नित्यम् । नुम्विधौ तु झल्ग्रहणमनुवर्तिष्यते, अझलन्तत्वान्न भविष्यति । **शमीति** । 'नोदात्तस्य' इति वृद्धिप्रतिषेधः । **उन्मादीति** । ननु मादीत्यत्र चरितार्थमेतत्,

**भावबोधिनी**

त्रस् आदि धातुओं से तच्छील आदि अर्थों में 'क्नु' प्रत्यय होता है। उदा० त्रस्नुः । [ त्रस् + क्नु = नु, डरने वाला ] गृध्नुः । [ गृध् + क्नुः, कित् होने से गुण का निषेध, ललचाने वाला ] धृष्णुः [ धृष् + क्नु, कित् होने से गुण का अभाव, प्रगल्भ होने वाला, ढीठ ] क्षिप्नुः । [ प्रेरक ] ॥ १४० ॥

'इति' शब्द 'आदि' के अर्थ में है। शम् आदि आठ धातुओं से तच्छील आदि अर्थों में घिनुण् प्रत्यय होता है। "शम उपशमे" इससे लेकर "मदी हर्षे" तक शमादि आठ धातुयें दिवादिगण में हैं। 'घ' यह अग्रिम सूत्र में कुत्व करने के लिये है। उकार उच्चारण के लिये हैं। णकार वृद्धि के लिये है।

उदा० शमी [ शान्त होने वाला ] । तमी [ इच्छा करने वाला ] । दमी [ दमन करने वाला ] । श्रमी [ परिश्रम करने वाला ] । भ्रमी [ घूमने वाला ] । क्लमी [ दुःखी होने वाला ] । क्षमी [ सहन करने वाला ] । [इन सात धातुओं के

अष्टाभ्य इति किम् ? असिता ॥

९११. सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥ १४२ ॥ ( ३१२२ )

घिनुणनुवर्तते । संपृचादिभ्यो धातुभ्यो घिनुण् भवति तच्छीलादिषु । 'पृची संपर्के' ( धा० पा०

**न्यासः**

इति दीर्घः ।

**असितेति** । 'असु क्षेपणे' । तृनि भवति ॥ १४१ ॥

**सम्पृचानुरोधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुह - युजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** ॥ 'पृची संपर्के' संपूर्वः । 'रुधिर् 'आवरणे' अनुपूर्वः; 'यम उपरमे', 'यसु प्रयत्ने', आङ्पूर्वः', 'सृ गतौ' परिपूर्वः, 'सृज विसर्गे, 'ज्वर रोगे' संपूर्वः' 'क्षिप प्रेरणे', 'रट परिभाषणे', 'वद व्यक्तायां वाचि', 'दह भस्मीकरणे', 'मुह वैचित्त्ये' परिपूर्वः, 'दुष वैकृत्ये', 'द्विष अप्रीतौ', 'द्रुह जिघांसायाम्', 'दुह प्रपूरणे' 'क्रीडृ विहारे' आङ्पूर्वः, 'विचिर् पृथग्भावे' विपूर्वः, 'त्यज वयोहानौ', 'रञ्ज रागे', 'भज सेवायाम्', 'चर गत्यर्थः' अतिपूर्वः, स एवानुपूर्वः, 'मुष स्तेये' आङ्पूर्वः, हन हिंसागत्योः'

**पदमञ्जरी**

उत्पूर्वात्त्वलंकृञादिसूत्रेण विशेषविहित इष्णुजेव प्राप्नोति, वाऽसरूपविधिना घिनुण् भविष्यति, ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीत्येतत्तु प्रायिकमिति वक्ष्यते । **असितेति** । 'असु क्षेपणे' ( धा० पा० १२०९ ), तृन्नेव भवति ॥ १४१ ॥

**संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयु - जाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** ॥ 'पृची संपर्के' ( धा० पा० १४६२ ), 'रुधिर् आवरणे' ( धा० पा० १४३८ ), 'अनो रुध कामे' ( धा० पा० ११७४ ), इत्यस्य तु दैवादिकस्याग्रहणम्; पृचिना साहचर्यात् । अनुना सह पठितस्य दैवादिकस्य ग्रहणमित्यन्ये । 'यम उपरमे' ( धा० पा० ९८४ ) 'यसु प्रयत्ने' ( धा० पा० १२१० ), 'सृ गतौ' ( धा० पा० ९३५ ), 'सृज विसर्गे' ( धा० पा० ११७८ ), 'देवृ देवने' ( धा० पा० ५०० ), 'ज्वर रोगे' ( धा० पा० ७७६ ), 'क्षिप् प्रेरणे' ( १२८५ ), 'रट परिभाषणे' ( धा० पा० २९७ ), 'वद व्यक्तायां वाचि' ( १००९ ), 'दह भस्मीकरणे' ( ९९१ ), 'मुह वैचित्ये' ( ११९८ ), 'दुष वैकृत्ये' ( धा० पा० ११८५ ) 'द्विष अप्रीतौ' ( १०१३ ), 'द्रुह जिघांसायाम्' ( ११९७ ), 'दुह प्रपूरणे' ( १०१४ ) 'युजिर् योगे' ( १४४४ ) 'क्रीडृ विहारे' ( धा० पा० ३५० ), 'विचिर् पृथग्भावे' ( १४४२ ), 'त्यज हानौ' ( ९८६ ), 'रञ्ज

**भावबोधिनी**

अन्त में 'म्' है और उदात्तोपदिष्ट है अतः "अत उपधायाः" सूत्र से जो वृद्धि प्राप्त होती है उसका निषेध "नोदात्तोपदेशस्य मान्तस्यानाचमेः" ( पा. सू. ७.३.३४ ) से हो जाता है। अत एव ह्रस्व अ सुनाई देता है। ] प्रमादी । [ प्रमाद करने वाला ] उन्मादी । [ उन्माद करने वाला । प्रमद् + धिनुण् = इन्, उन्मद् + धिनुण् = इन्, 'अत उपधायाः" सूत्र से उपधा की वृद्धि होती है—प्रमादिन्, उन्मादिन्, विभक्ति लाने पर रूप बनते हैं । ]

आठ से इसका क्या फल है ? असिता । [ इसमें नहीं होता है । ] ॥ १४१ ॥

इसमें पूर्व सूत्र से धिनुण् की अनुवृत्ति होती है। 'सम्पृच्' आदि धातु रूपों से तच्छील आदि अर्थों में धिनुण् प्रत्यय होता है। 'सम्पर्क अर्थ में पृची है' इस रुधादिगणीय [ सम्पूर्वक ] का ग्रहण होता है, न कि अदादि-

१४६३ ) इति रुधादिर्गृह्यते, न त्वदादिर्लुग्विकरणत्वात् । परिदेविर्भ्वादिर्गृह्यते—'देवृ देवने' ( धा० पा० ५०० ) इति । 'क्षिप प्रेरणे' ( धा० पा० ११२२, १२८६ ) दिवादिस्तुदादिश्च सामान्येन गृह्यते । 'युज समाधौ' ( धा० पा० ११७८ ) दिवादिः, 'युजिर् योगे' ( धा० पा० १४४५ ) रुधादिः—द्वयोरपि ग्रहणम् । 'रञ्ज रागे' ( धा० पा० ११६८ ) इत्यस्य निपातनादनुनासिकलोपः । सम्पर्की अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी ।

**न्यासः**

अभ्याङ्पूर्वः । शेषा वृत्तावेव निर्दिष्टाः । **न त्वदादिरिति** । 'गृह्यते' इति सम्बध्यते । आदादिकः कस्मान्न गृह्यत इत्याह—**लुग्विकरणत्वादिति** । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' युक्तम्; आदादिकस्तु लुग्विकरणः, तस्मात् स न गृह्यते । **परिदेविर्भ्वादिरिति** । 'गृह्यते' इति सम्बन्धः । अथ परिदिवेः क्रीडाद्यर्थस्य ण्यन्तस्य ग्रहणं कस्मान्न भवति ? अण्यन्तैरितरैः साहचर्यात् । **सामान्येन गृह्यत इति** । विशेषाभावात् । **द्वयोरपि ग्रहणमिति** । तत एव हेतोः । **निपातनादनुनासिकलोप इति** । 'त्यजरज' इति सूत्रे निरनुनासिकस्योच्चारणमेव निपातनम् । **सम्पर्कीति** । लघूपधगुणः । **आयामीति** । 'अत उपधायाः' इति वृद्धिः । **परिसारीति** । अत्रापि 'अचो

**पदमञ्जरी**

रागे' ( ११६७ ), भज सेवायाम्' ( ९९८ ), 'चर गत्यर्थः' ( धा० पा० ५५९ ) 'मुष स्तेये' ( धा० पा० १५३० ), 'हन हिंसागत्योः' ( धा० पा० १०१२ )। **परिदेविर्भ्वादिरिति** । गृह्यते इति सम्बन्धः । क्रीडार्थस्य तु ण्यन्तस्याग्रहणम्, अण्यन्तैः साहचर्यात्, प्रतिपदोक्तत्वाच्च । अत एव 'दिव परिकूजने' ( धा० पा० १७०६ ) इत्यस्य चौरादिकस्यापि न भवति । **संपर्कीति** । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । येऽत्र संपूर्वाः तेषां द्वन्द्वं कृत्वा 'सम एतेभ्यः' इति वक्तव्यम्, एवमाङ्पूर्वेषु परिपूर्वेषु च, एवं सिद्धे यत्प्रतिपदं पठति तस्यैतत्प्रयोजनम्—उपात्ता-

**भावबोधिनी**

गणीय का, क्योंकि अदादिगणीय लुग्विकरणवाली है अर्थात् उसके शप् विकरण का लुक् होता है । [ अनु पूर्वक 'रुधिर् आवरणे' का ग्रहण है । यहाँ 'अनो रुध कामे' इस दिवादिगणीय का ग्रहण नहीं होता है क्योंकि 'पृची' इस रुधादिगणीय के साहचर्य से यह भी रुधादिगणीय ही ली जाती है । ] [ 'यम उपरमे' और 'यसु प्रयत्ने'—ये आङ्पूर्वक ली जाती हैं । 'सृ गतौ' यह परिपूर्वक और 'सृज विसर्गे' यह सम्पूर्वक ली जाती है । ] परिपूर्वक 'देव' यह भ्वादिगणीय ली जाती है—''देवृ देवने ।' [ सम्पूर्वक 'ज्वर रोगे' ली जाती है । ] 'क्षिप प्रेरणे' यह दिवादिगणीय और तुदादिगणीय दोनों सामान्यरूप से ली जाती है । [ 'रट परिभाषणे', 'वद व्यक्तायां वाचि', 'दह भस्मीकरणे' 'मुह वैचित्ये', इनका परिपूर्वक ग्रहण होता है । 'दुष वैकृत्ये', 'द्विष अप्रीतौ' 'दुह जिघांसायाम्', 'दुह प्रपूरणे' का ग्रहण है । ] 'युज समाधौ' इस दिवादिगणीय का और 'युजिर योगे' इस रुधादिगणीय का—सामान्यतया दोनों का ग्रहण होता है । [ 'क्रीड़ विहारे' यह आङ्पूर्वक ली जाती है । 'विचिर् पृथग्भावे' यह विपूर्वक ली जाती है, 'त्यज हानौ' ली जाती है । ] 'रञ्ज रागे' इसका न् ञ् निपातन से लुक् हो जाता है । [ ''भज सेवायाम्' ली जाती है । 'चर गत्यर्थः' यह 'अतिपूर्वक' और 'अपपूर्वक' ली जाती है । 'मुष स्तेये' यह आङ्पूर्वक 'हन हिंसागत्योः' यह अभ्याङ्पूर्वक ली जाती हैं । ]

अब क्रमशः उदा०—सम्पर्की । [ सम्पृच् + घिनुण् - इन्, घित् होने से ''चजोः कुः घिण्ण्यतोः'' सूत्र से 'च्' का कुत्व, ऋ का गुण, रपर प्रातिपदिक संज्ञा, सु, उपधादीर्घ, सुलोप, न् लोप—सम्पर्की = सम्पर्क करने वाला । ] अनुरोधी । [ अनुरुध् + घिनुण्, उपधागुण, शेष पूर्ववत्, अनुरोध करने वाला ] आयामी । [ आङ् यम् + घिनुण्, उपधावृद्धि, शेष पूर्ववत्, विस्तार करने वाला । ] आयासी । [ आङ पूर्वक यस् + घिनुण्, उपधावृद्धि । प्रयास करने वाला । ] परिसारी । [ परिपूर्वक सृ + घिनुण्, वृद्धि, रपर । सर्वत्र जाने वाला ] संसर्गी । [ सम्पूर्वक सृज् + घिनुण्, गुण, रपर संसर्ज् + इन्, ''चजोः कुः घिण्ण्यतोः'' से कुत्व करके 'ज्' का ग्—संसर्गी । संसर्ग = साथ करने वाला । ] परिदेवी । [ परिपूर्वक देव् + घिनुण् । शोक करने वाला । ] संज्वारी [ सम् पूर्वक ज्वर + घिनुण्, उपधावृद्धि । रोगी । ] परिक्षेपी । [ परिपूर्वक क्षिप् + घिनुण्, गुण । चारों ओर फेंकने वाला । ] परिराटी । [ परिपूर्वक रट + घिनुण्, उपधा-

द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती॥

**९१२. वौ कषलसकत्थस्रम्भः॥ १४३॥ ( ३१२३ )**

'कष हिंसार्थः', ( धा० पा० ६८५ ) 'लस श्लेषणक्रीडनयोः', ( धा० पा० ७१५ ) 'कत्थ श्लाघायाम्', ( धा० पा० ३७ ) 'स्रम्भु विश्वासे' ( धा० पा० ७५७ )—इत्येतेभ्यो धातुभ्यो विशब्द उपपदे घिनुण् प्रत्ययो भवति। विकाषी। विलासी। विकत्थी। विस्रम्भी॥

**९१३. अपे च लषः॥ १४४॥ ( ३१२४ )**

'लष कान्तौ' ( धा० पा० ८८९ )—अस्माद्धातोरप उपपदे चकाराद्वौ च घिनुण् भवति। अपलाषी। विलाषी॥

**न्यासः**

ञ्णिति' इति वृद्धिः। अभ्याघातीति। पूर्ववद् घत्वतत्वे॥ १४२॥

**वौ कषलसकत्थस्रम्भः॥ १४३॥ अपे च लषः॥ १४४॥**

**पदमञ्जरी**

देव रूपाद्यथा स्यात्, उपसर्गान्तरयुक्तान्मा भूदिति॥ १४२॥ १४३॥ १४४॥

**भावबोधिनी**

वृद्धि। अच्छी तरह याद करने वाला।] परिवादी [ परिवद्+घिनुण्। खूब बहस करने वाला।] परिदाही=जलाने वाला। परिमोही। [ परि मुह्+घिनुण्, उपधा का गुण। बहुत मोह करने वाला।] दोषी। [ दुष्+घिनुण्, उपधागुण। दोषवाला ] द्वेषी। [ द्विष्+घिनुण्, उपधागुण। द्वेष करने वाला।] द्रोही। [द्रुह्+घिनुण्, उपधागुण। द्रोह=वैर करने वाला।] योगी। [ युज्+घिनुण्, उपधागुण, ज् का ग् कुत्व। मिलने वाला, योग करने वाला।] आक्रीडी। आङ्+क्रीड्+घिनुण्। खूब खेलने वाला।] विवेकी [ 'वि' पूर्वक विच्+घिनुण्, उपधागुण, च् का कुत्व क्—विवेकी। अलग होने वाला। विवेक वाला ] त्यागी। [ त्यज्+घिनुण्, उपधावृद्धि, कुत्व ज् का ग्। त्यागने वाला, छोड़ने वाला।] रागी। [ रञ्ज्+घिनुण्, निपातन से न्=ञ् का लोप, उपधावृद्धि, ज् का कुत्व—ग्। राग करने वाला।] भागी। [ भज्+घिनुण्, उपधावृद्धि, कुत्व ज् का ग्। सेवा करने वाला, लगा रहने वाला।] अतिचारी। [ अति चर्+घिनुण्, उपधावृद्धि। अत्यधिक घूमने वाला।] अपचारी। [ गलत करने वाला, व्यभिचारी।] आमोषी [ आङ् मुष्+घिनुण्, उपधागुण। चुराने वाला ] अभ्याघाती। [ अभि आङ् हन्+घिनुण्, उपधावृद्धि, "हनस्तोऽचिण्णलोः" सूत्र से 'ह्' का 'त्', "हो हन्तेर्ञ्णिन्नेषु" सूत्र से 'ह' का कुत्व 'घ्' अभि आ+घात्+इन्, यण्—अभ्याघाती। हिंसा करने वाला।]

**विमर्श**—प्रस्तुत सूत्र कुछ उपसर्गयुक्त धातुओं से प्रत्यय करता है और कुछ केवल धातुओं से। जिन उपसर्गों का ग्रहण हैं उनसे भिन्न के साथ यह प्रत्यय नहीं होता है, ऐसा ज्ञापित करने के लिये ऐसा किया गया है—इस विषय में पदमञ्जरीकार का कथन ध्यान देने योग्य है—"उपात्तादेव रूपाद् यथा स्यात्, उपसर्गान्तरयुक्तात् मा भूत्॥ १४२॥

'कष हिंसार्थवाली है', 'लस श्लेषण और क्रीडन अर्थों वाली है', 'कत्थ श्लाघा अर्थवाली है,' 'स्रम्भु विश्वास अर्थ वाली है'—इन धातुओं से 'वि' उपपद रहते घिनुण् प्रत्यय होता है। उदा० विकाषी। [ वि-कष्+घिनुण्=इन्, उपधावृद्धि। हिंसा करने वाला ] विलासी। [ वि लस्+घिनुण्। खेलने वाला ] विकत्थी। [ वि कत्थ्+घिनुण्। अपनी प्रशंसा करने वाला।] विस्रम्भी विस्रम्भु+घिनुण्। विश्वास करने वाला।]॥ १४३॥

'लष कान्ति=इच्छा अर्थवाली है'—इससे 'उप' उपपद रहते और 'च' के बल से 'वि' उपपद रहते घिनुण् प्रत्यय होता है। उदा० अपलाषी। विलाषी। [ अप तथा वि-पूर्वक लष्+घिनुण्, उपधावृद्धि। अत्यधिक चाहने वाला, लालची।]॥ १४४॥

## ९१४. प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥ ( ३१२५ )

**'प्र' उपपदे लपादिभ्यो घिनुण् भवति । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी । वस इति 'वस निवासे' इत्यस्य ग्रहणम्, नाच्छादनार्थस्य; लुग्विकरणत्वात् ॥**

## ९१५. निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥ १४६ ॥ ( ३१२६ )

**निन्दादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु वुञ् प्रत्ययो भवति । पञ्चम्यर्थे प्रथमा । 'क्लिश उपतापे', ( धा० पा० ११६२ ) 'क्लिश विबाधने' ( धा० पा० १५२३ )—द्वयोरपि ग्रहणम् । निन्दकः । हिंसकः ।**

**न्यासः**

**प्रे लपसृद्रुमथवदवसः ॥ प्रलापी, प्रसारीति ।** 'लप व्यक्तायां वाचि', 'सृ गतौ' । **प्रद्रावी, प्रमाथीति ।** 'द्रु गतौ', 'मथ विलोडने' । **नाच्छादनार्थस्येति ।** न 'वस आच्छादने' इत्येतस्य ॥ १४५ ॥

**निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥** 'णिदि कुत्सायाम्', 'अर्द हिंसि हिंसायाम्', 'खादृ भक्षणे', 'णश अदर्शने' विपूर्वः, हेतुमण्ण्यन्तः । 'क्षिपिः' पूर्वोक्त एव, एवं रटिर्वदिः परिपूर्वो हेतुमण्ण्यन्तः, 'भाष व्यक्तायां वाचि' व्याङ्पूर्वः । 'असूय' इति कण्ड्वादियगन्तस्य ग्रहणम् । अत्र क्लिशेरुपतापार्थस्य भाषतेश्च 'अनुदात्तेतश्च हलादेः' इति युचि प्राप्ते वुञ्विधानम् । शेषेभ्यस्तु तृनि । ननु 'परश्च' इति दिग्योगलक्षणया पञ्चम्या भवितव्यम्, यथा वृत्तौ—'निन्दादिभ्यो धातुभ्यः' इति, तत् कथं सूत्रे प्रथमेत्यत आह—**पञ्चम्यर्थे प्रथमेति ।** 'व्यत्ययो बहुलम्' इति सुब्व्यत्ययेनेति भावः । समाहारद्वन्द्वाच्च प्रथमैकवचनम्,

**पदमञ्जरी**

**प्रे लपसृद्रुमथवदवसः ॥** 'रप लप व्यक्तायां वाचि' ( धा० पा० ४०१–२ ) 'सृ गतौ' ( धा० पा० ९३५ ) 'द्रु गतौ' ( धा० पा० ९४५ ), 'मथे विलोडने' ( धा० पा० ८४८ ) ॥ १४५ ॥

**निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥** 'णिदि कुत्सायाम्' ( धा० पा० ६६ ) 'तृह हिसि हिंसायाम्' ( धा० पा० १४५५–५६ ), 'क्लिश विबाधने' ( धा० पा० १५२२ ), 'खादृ भक्षणे' ( धा० पा० ४९ ), 'णश अदर्शने' ( धा० पा० ११९४ ), ण्यन्तः, भाविना णिलोपेन निर्देशः, अकारस्त्वागन्तुकः ।

**भावबोधिनी**

'प्र' उपपद रहते लप, सृ, द्रु, मथ, वद और वस—इन धातुओं से घिनुण् प्रत्यय होता है । उदा० प्रलापी [ प्रलप् + घिनुण्, बकने वाला ] प्रसारी [ प्र सृ + घिनुण्, ऋ की वृद्धि "अचो ञ्णिति", सूत्र से । सर्वत्र फैलने वाला ] प्रद्रावी । [ प्र द्रु + घिनुण्, 'उ' की वृद्धि आव् आदेश । दौड़ने वाला ] प्रमाथी [ प्रमथ् + घिनुण् । खूब मथने वाला । प्रवादी । [ खूब बोलने वाला । ] प्रवासी । [ रूढ अर्थ—विदेश में रहने वाला । ] 'वस्' यह 'निवासार्थक वस्' का ग्रहण है, आच्छादन अर्थवाली का नहीं, क्योंकि ( आच्छादन अर्थवाली अदादिगणीय होने से उसके शप् ) विकरण का लोप होता है ॥ १४५ ॥

'निन्द्' आदि धातुओं से तच्छील आदि कर्ता अर्थ में वुञ् प्रत्यय होता है । [ सूत्र में ] पञ्चमी के अर्थ में प्रथमा का प्रयोग है । 'क्लिश उपताप अर्थ वाली है' और 'क्लिश विबाधन अर्थ वाली है'—दोनों का ग्रहण होता है । उदा० निन्दकः । [ 'णिदि कुत्सायाम्' धातु के 'इ' की 'इत्संज्ञा करने पर 'इदितो नुम् धातोः' सूत्र से नुम् आगम, 'णो नः' सूत्र से ण् का न् होने पर 'निन्द्' + वुञ् = वु = अक, प्रातिपदिक संज्ञा, सु का विसर्ग–निन्दकः । निन्दा करने वाला । ] हिंसकः [ हिंसा करने वाला । 'हिंसि हिंसायाम्' इ की इत्संज्ञा लोप करने पर 'नुम्' और अनुस्वार होता

क्लेशकः । खादकः । विनाशकः । परिक्षेपकः । परिराटकः । परिवादकः । व्याभाषकः । असूयकः ।

**ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थम्—ताच्छीलिकेषु वाऽसरूपन्यायेन तृजादयो न भवन्तीति (म० भा० )** ॥

## ९१६. देविक्रुशोश्चोपसर्गे ॥ १४७ ॥ ( ३१२७ )

**देवयतेः क्रुशेश्चोपसर्गे उपपदे वुञ् प्रत्ययो भवति । आदेवकः, परिदेवकः । आक्रोशकः, परिक्रोशकः । उपसर्ग इति किम् ? देवयिता । क्रोष्टा ॥**

### न्यासः

पुंल्लिङ्गं तु व्यत्ययेन । **असूयक इति** । 'अतो लोपः' इत्यकारलोपः ।

अथ किमर्थं निन्दादिभ्यो धातुभ्यो वुञ् विधीयते, यावता वाऽसरूपविधिनैव निन्दकादयः सिद्धाः, तदेव हि रूपम्, स एव स्वरः, इहैवैकत्र स्वरविशेषोऽस्ति—असूयक इति, अत्र वुञि सति ञित्वादादेरुदात्तत्वं भवति, ण्वुलि तु सति लित्प्रत्ययात् पूर्वस्य स्यात्, तस्मादसूयतेरेवैकस्माद् वुञ् विधातव्यः, नेतरेभ्यो निन्दादिभ्य इत्यत आह—**ण्वुलैव सिद्ध इत्यादि** । यदि तच्छीलादिषु वाऽसरूपविधिना तृजादयोऽपि स्युः निन्दादिभ्यो वुञ् न विदध्यात्, विहितश्चासौ, अत एव वुञ्विधानं ज्ञापयति—तच्छीलादिषु वाऽसरूपविधिर्नास्तीति । तेनालंकारकः, निराकर्त्रे-त्यादीनां तच्छीलादिषु साधुत्वं न भवति ॥ १४६ ॥

**देविक्रुशोश्चोपसर्गे** ॥ **आदेवक इति** । दिवेः क्रीडाद्यर्थाद् ण्यन्ताद्वुञ् । **आक्रोशक** इति । 'क्रुश आह्वाने' । **क्रोष्टेति** । व्रश्चादिना षत्वम् ॥ १४७ ॥

### पदमञ्जरी

केचित्तु **विनाशीति** ण्यन्तमेव पठन्ति । क्षिपिरटी उक्तार्थौ, वदिर्ण्यन्तः, 'भाष व्यक्तायां वाचि' ( धा० पा० ६१२ ), असूयतिः कण्ड्वादियगन्तः ।

अथ किमर्थं निन्दादिभ्यो वुञ् विधीयते, न 'ण्वुल्तृचौ' इति ण्वुलैव सिद्धम्, तदेव रूपम्, स्वरोऽप्यसूयति-मेकं वर्जयित्वान्यत्र स एव; असूयतेस्तु ण्वुलि प्रत्ययात्पूर्वमुदात्तं स्यात्, वुञि तु 'ञ्नित्यादिः' इति । तस्मादे-वैकस्माद् वुञ् विधेयः, अन्येभ्यस्तु ण्वुलैव सिद्धम्, योऽयं तच्छीलादिषु तृन्विधीयते स बाधकः प्राप्नोति, वाऽसरूपविधिना ण्वुलपि भविष्यति, तत्राह—**ण्वुलैव सिद्ध इति** । **तृजादयो न भवन्तीति** । न केवलं ण्वुल्विषय-मेव ज्ञापकम्, किं तर्हि ? प्रत्ययमात्रविषयमित्यर्थः ॥ १४६ ॥

**देविक्रुशोश्चोपसर्गे** ॥ **देवयतेरिति** । दीव्यतेर्हेतुमण्णिजन्तस्य, 'दिवि कूजने' ( धा० पा० १७०६ ) इत्यस्य चुरादिण्यन्तस्य च ॥ १४७ ॥

### भावबोधिनी

है । ] क्लेशकः [ क्लेश देने वाला । क्लिश् + वु = अक, उपधा का गुण ] खादकः [ खाने वाला ] विनाशकः [ वि णश् + वुञ्, ण का न, उपधा की वृद्धि, विनाश् + अक, विनाश करने वाला ] परिक्षेपकः [ परि क्षिप् + वुञ् । चारों ओर फेकने वाला । ] परिराटकः [ परि रट् + वुञ्, खूब रटने वाला ] परिवादकः [ खूब बजाने वाला । ] व्याभाषकः । [ खूब बोलने वाला । ] असूयकः । [ निन्दा करने वाला, जलन करने वाला । ]

यद्यपि ण्वुल् के विधान से ही कार्य चल सकता था फिर भी वुञ् का विधान ज्ञापन करने के लिये हैं—ताच्छी-लादि अर्थों में 'वाऽसरूपोऽस्त्रियाम्'' इस सूत्र के अनुसार [ विकल्प न होने से ] तृच् आदि नहीं होते हैं ॥ १४६ ॥

उपसर्ग उपपद रहते 'देवि' धातु से और 'क्रुश्' धातु से वुञ् प्रत्यय होता है । उदा० आदेवकः । [ आङ् 'देवि' इस चुरादि—णिजन्त से वुञ्—आदेवि + वुञ् = अक, णिलोप, = आदेवकः । जुआ आदि खेलने वाला । ] परिदेवकः [ खेलने वाला ] आक्रोशकः [ खूब चिल्लाने वाला ] परिक्रोशकः । [ चारो ओर चिल्लाने वाला । ]

उपसर्ग पूर्व में हो—इसका क्या फल है—देवयिता, क्रोष्टा । [ यहाँ वुञ् न होकर सामान्य तृच् प्रत्यय होता है ] ॥ १४७ ॥

**९१७. चलनशब्दार्थादकर्मकाद् युच् ॥ १४८ ॥ ( ३१२८ )**

**चलनार्थेभ्यः शब्दार्थेभ्यश्चाकर्मकेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु युच् प्रत्ययो भवति। चलनः। चोपनः। शब्दार्थेभ्यः—शब्दनः। रवणः।**

**अकर्मकादिति किम् ? पठिता विद्याम्।**

**९१८ अनुदात्तेतश्च हलादेः ॥ १४९ ॥ ( ३१२९ )**

**अनुदात्तेद्यो धातुः हलादिरकर्मकः ततश्च युच् प्रत्ययो भवति। वर्त्तनः। वर्द्धनः।**

**अनुदात्तेत इति किम् ? भविता। हलादेरिति किम् ? एधिता। आदिग्रहणं किम् ? जुगुप्सनः। मीमांसनः। अकर्मकादित्येव—वसिता वस्त्रम् ॥**

**न्यासः**

**चलनशब्दार्थादकर्मकाद् युच् ॥** चलनं देशान्तरप्राप्तिहेतुः, क्रियाविशेषः। शब्दः श्रोत्रविषयोऽर्थः। **चलनः, चोपन इति।** 'चल कम्पने', 'चुप मन्दायां गतौ'। **शब्दन इति।** 'शब्द शब्दने उपसर्गाविष्कारे च' इति चौरादिकः। अथ वा—'प्रातिपदिकाद्धात्वर्थे बहुलम्' इत्यादिना णिच्, 'शब्दवैरकलह' इत्यादिना णिजन्ताद् युच्। **रवण इति।** 'रु शब्दे'॥ १४८॥

**अनुदात्तेतश्च हलादेः ॥ एधितेति।** 'एध वृद्धौ'। **जुगुप्सनः, मीमांसन इति।** 'गुप्तिज्किद्भ्यः सन्' 'मान्बध'

**पदमञ्जरी**

**चलनशब्दार्थादकर्मकाद् युच् ॥ चोपन इति।** 'चुप मन्दायां गतौ' ( धा० पा० ४०३ )। **शब्दन इति।** 'शब्द शब्दने' ( धा० पा० १७१४ ), चुरादिः, शब्दप्रातिपदिकाद्वा 'तत्करोति' ( वा० २०० ) इति णिच् ॥ १४८ ॥

**अनुदात्तेतश्च हलादेः ॥ जुगुप्सन इति।** 'गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्' इत्युक्तत्वाद् 'अवयवे कृतं

**भावबोधिनी**

चलना अर्थवाली और शब्दरूपी अर्थवाली अकर्मक धातुओं से तच्छील आदि कर्ता अर्थों में युच् प्रत्यय होता है। उदा० ( क ) चलनः। [ चल्+युच्=यु=अन। चलने वाला। ] चोपनः। [ चुप्+युच्=यु=अन, उपधागुण। धीरे से चलने वाला। ( ख ) शब्दरूपी अर्थवाली के उदा० शब्दनः। [ शब्द+युच्=यु=अन शब्द करने वाला ] रवणः। [ रु+युच्=यु=अन, 'उ' का गुण, अव् आदेश, णत्व, रवणः=शब्द करने वाला ] अकर्मक से—इसका क्या फल है ? पठिता विद्याम्। [ 'पठ' यद्यपि शब्दरूपी अर्थ वाली है किन्तु सकर्मक है। अतः युच् प्रत्यय न होकर तृच् यही होता है ]॥ १४८॥

अनुदात्तेत् [ अनुदात्त स्वर है इत् जिसका ] जो हलादि अकर्मक धातु उससे युच् प्रत्यय होता है। उदा० वर्तनः। [ 'वृतु' का उकार अनुदात्त है। इसकी इत्संज्ञा और लोप होता है। अतः वृत्+युच्=यु=अन, ऋ का गुण, रपर। रहने वाला। ] वर्द्धनः। [ वृधु=वृध्+युच्=अन, गुण, रपर। बढ़ने वाला ]।

अनुदात्तेत् से – इसका क्या फल है ? भविता। [ 'भू' में कोई इत् नहीं है। अतः युच् प्रत्यय न होकर तृच् होता है। ] हलादि से—इसका क्या फल है ? एधिता। [ 'एध' का 'अ' अनुदात्त और इत् है। किन्तु यह हलादि नहीं है। अतः युच् न होकर तृच् होता है। ]

आदि [ हलादि ]—का ग्रहण किस लिये है ? जुगुप्सनः, मीमांसनः। [ जुगुप्स और मीमांस—ये हलादि तो हैं किन्तु यदि सूत्र में केवल 'हल्' रहेगा तो तदन्तविधि हो जाने से—हलन्त से ही होगा न कि प्रस्तुत अजन्त उदाहरणों में। अतः 'आदि' के ग्रहण से हलादि ही देखना है हलन्त नहीं। ] अकर्मक से ही होता है—वसिता वस्त्रम्। [ 'वस' आच्छादने—यह अनुदात्तेत् है, किन्तु सकर्मक है। अतः यह सूत्र नहीं लग सकता। युच् न होकर तृच् ही होता है ]॥ १४९ ॥

## ९१९. जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥ ( ३१३० )

**जुप्रभृतिभ्यो धातुभ्यो युच् प्रत्ययो भवति ताच्छीलादिषु कर्तृषु। 'जु' इति सौत्रो धातुः—जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। गर्द्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः।**

**न्यासः**

इत्यादिना सनि दीर्घे च कृते भवतः। अत्र तदन्तौ समुदायावनुदात्तेतौ—अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति। तथा च यद्यादिग्रहणं न क्रियते तदा ताभ्यां न स्यात्; यस्मादसत्यादिग्रहणे हला तु तदन्तविधिर्विज्ञायते—अनुदात्तेतो हलन्तादिति। न च जुगुप्समीमांसशब्दौ हलन्तौ, किं तर्हि? अजन्तौ। आदिग्रहणे सत्यहलन्तेभ्योऽपि भवतीत्यादिग्रहणं कर्तव्यम्। तच्च तदा कर्तव्यं यदातो लोप आर्धधातुके परतो भवतीत्ययं पक्षः, न तु यदार्धधातुके विषयभूत इत्येष पक्षः। तदा ह्यार्धधातुकविवक्षायां प्रागेव प्रत्ययोत्पत्तेरलोपे कृते जुगुप्समीमांसशब्दावपि हलन्तौ भवतः, तत्रानुदात्तेतोऽजन्तस्याभावात् तदन्तविधौ विज्ञायमाने हलन्तग्रहणमनर्थकं स्यात्; व्यावर्त्याभावात्। तस्माद् हल्ग्रहणसामर्थ्यादादेर्विशेषणं विज्ञास्यत इत्यादिग्रहणं न कर्तव्यमेव। अत्रादिग्रहणं विस्पष्टार्थमेव व्याख्येयम्। **वसितेति**। 'वस आच्छादने' ॥ १४९ ॥

**जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ जवन इति**। 'जु' सौत्रो धातुः, गतौ वर्तते इत्येके। विशेषहेतौ वेग इत्यपरे। **चंक्रमणः, दन्द्रमण इति**। 'क्रमु पादविक्षेपे', 'द्रम हम्म गतौ', नित्यं कौटिल्ये गतौ' इति यङ्, द्विर्वचनम्, 'नुगतोऽनुनासिकान्तस्य' इति नुक्, 'अतो लोपः' इत्यकारलोपः, 'यस्य हलः' इति यकारलोपः। **ज्वलनः शोचन इति**। 'ज्वल ह्वल सञ्चलने', 'शुच शोके'।

**पदमञ्जरी**

लिङ्गं समुदायस्य विशेषकं भवति' ( हैम० परि० १०७ ) इति समुदायस्यानुदात्तेत्त्वम्। तत्रासत्यादिग्रहणे तदन्तविधिः स्यात्, ततश्चात्र न स्यात्, अतस्तदन्तविधिर्मा भूदित्येवमर्थमादिग्रहणम् ॥ १४९ ॥

**जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः** ॥ 'जु' इति सौत्रो धातुः। गतिवचन इत्येके। वेगवचन इत्यन्ये। 'क्रमु पादविक्षेपे' ( धा० पा० ४७३ ) 'द्रम हम्म मीमृ गतौ' ( धा० पा० ४६६–६८ ), 'सृ गतौ' ( धा० पा० ९३५ ), 'गृधु अभिकांक्षायाम्' ( धा० पा० १२४६ ), 'ज्वल दीप्तौ' ( धा० पा० ८०४ ), 'शुच शोके' ( धा० पा० १८३ ), 'लष इच्छायाम्' ( धा० पा० ८८८ ) 'शल हुल पत्लृ गतौ' ( धा० पा० ८४३–४५ ), 'पद गतौ' ( धा० पा० ११६९ )।

**भावबोधिनी**

'जु' आदि धातुओं से युच् प्रत्यय तच्छील आदि कर्ता अर्थों में होता है। उदा० 'जु' यह सौत्र धातु है—जवनः। [ जु + युच्=अन। तेज भागने वाला ] चङ्क्रमणः, दन्द्रमणः [ 'क्रम्' और 'द्रम्' गति अर्थ वाली है। अतः "नित्यं कौटिल्ये गतौ" सूत्र से कुटिलता अर्थ में यङ् होता है। द्वित्व, हलादि-शेष, 'नुगतोऽनुनासिकान्तस्य" सूत्र से नुम् का आगम—च न् क्रम् य, द न् द्रम् य 'न्' का लक्ष्यानुसार अनुस्वार और परसवर्ण करने पर—चङ्क्रम्य, दन्द्रम्य से युच्=अन प्रत्यय करने पर "अतो लोपः" से 'अ' का लोप "यस्य हलः" से य् का लोप, णत्व—चङ्क्रमणः, दन्द्रमणः [ टेढ़ा मेढ़ा चलने वाला। ] सरणः [ सृ+युच्=अन। चलने वाला ] गर्धनः [ गृध् + युच्=अन, गुण। ललचाने वाला ] ज्वलनः। [ ज्वल्+युच्=अन। जलने वाला। ] शोचनः। [ शुच् + युच्=अन, गुण। शोक करने वाला। ] लषणः [ लष् + युच्=अन। चाहने वाला। ] पतनः, पदनः। [ पत् + युच्=अन, पद् + युच्=अन। गिरने वाला, जाने वाला। ]

**चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थमिह । ज्ञापनार्थं च पदिग्रहणमन्ये वर्णयन्ति—ताच्छीलिकेषु मिथो वाऽसरूपविधिर्नास्तीति । तेनालंकृञस्तृन् न भवति—अलंकर्तेति । तथा हि—पदेरुकञा विशेषविहितेन सामान्यविहितस्य युचोऽसरूपत्वात्समावेशो भवेदेव, किमनेन विधानेन ? ज्ञापनार्थं पुनर्विधीयते । प्रायिकं चैतद् ज्ञापनम् । क्वचित्समावेश इष्यत एव—गन्ता खेटं विकत्थनः ॥**

**न्यासः**

ननु चात्र जुचंक्रम्यदन्द्रम्यप्रभृतयश्चलनार्थाः, पदिस्त्वनुदात्तेत्, हलादिश्च, तस्मादेतेभ्यो यथायोगं पूर्वयोगाभ्यां युच् सिद्धः, ततः किमर्थमिह ग्रहणमित्याह—**चलनार्थानामित्यादि** । असति तेषां ग्रहण इह चंक्रमणो ग्रामस्येत्येवमादौ न स्यात्, ग्रामादेः कर्मणो विवक्षितत्वात् । तस्मात् सकर्मकेभ्यो यथा स्यादित्येवमर्थमेषां ग्रहणम् । **ज्ञापकार्थमित्यादिना** मतान्तरं दर्शयति । **अलंकृञस्तृन्न भवतीति** । अनेनापि ज्ञापकस्य प्रयोजनम् । अलंकर्तेति साधुर्न भवतीत्यध्याहार्यम् । कथं पुनः पदिग्रहणं ज्ञापकमित्याह—**तथा हीत्यादि** । विशेषविहितेनोकञा बाधा, मा भूत्, समावेश एव यथा स्यादित्येवमर्थमिह पदिग्रहणं क्रियते । यदि ताच्छीलिके वाऽसरूपविधिः स्यात् ततोऽसरूपत्वादेवोकञा समावेशः स्यादिति पदेर्युज्विधानमनर्थकं स्यात् । तस्माज्ज्ञापनार्थमेवैतद् विशेषविहितत्वम्; 'अनुदात्तेतश्च हलादेः' इति सामान्यलक्षणेन विहितत्वात् । यदि तर्हि वाऽसरूपविधेरभावो ज्ञाप्यते, गन्तेति न सिध्येत्; गमेः 'लषपतपद' इत्यादिना बाधकस्योकञो विधानात् । विकत्थन इति च 'अनुदात्तेतश्च हलादेः' इति युज्न सिध्यति, 'वौ कष' इत्यादिना घिनुणो विधानादित्यत आह—**प्रायिकञ्चेत्यादि** । प्रायिकत्वञ्चोत्तरसूत्रे प्रतिपादयिष्यते ॥१५० ॥

**पदमञ्जरी**

ननु चात्र चंक्रम्यप्रभृतयः केचिच्चलनार्थाः, पदिस्त्वनुदात्तेत्, तेभ्यो यथायोगं पूर्वसूत्राभ्यामेव युच् सिद्धः, किमर्थमिह ग्रहणमित्यत्राह—**चलनार्थानामित्यादि** । प्रपूर्वः पदिः सकर्मकः । **ज्ञापकार्थमिति** । ज्ञापनं = ज्ञापकम्, **भाष्यकारप्रयोगाद्भावे ण्वुल्** । **अन्ये पदिग्रहणं वर्णयन्तीति** । **भाष्यकारादयः** । ते हि मन्यन्ते–सकर्मकात्पदेर्युचा न भवितव्यम्; अनभिधानादिति । यथाह—"पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात् ?" वासरूपनिवृत्त्यर्थं त्विति । "ताच्छीलिके वाऽसरूपविधिर्नास्तीति' ( व्या० परि० ३१ ) निन्दादिसूत्रे तच्छीलादिषु कर्तृषु वाऽसरूपविधिना तृजादयो न भवन्तीति ज्ञापितम् । इह तु ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्नास्तीति ज्ञाप्यते । **अलंकर्तेति** । एवमलंकृञादेस्तृन्न भवतीत्यर्थः । यथा तु पदिग्रहणं ज्ञापकं तथा दर्शयति—**तथा हीति** । **उकञा विशेषविहितेनेति** । 'लषपतपद' इत्यादिना । **प्रायिकं चैतदिति** । एतच्च 'सूददीपदीक्षश्च' इत्यत्र वक्ष्यते । **गन्तेति** । **गमेर्लषपतपदाद्युकञ्विषये** तृन् भवति । **विकत्थन इति** । 'वौ कषलष' इति धिनुण्विषयेऽनुदात्तेल्लक्षणो युज् भवति ॥ १५१ ॥

**भावबोधिनी**

इसमें चलनार्थकों का और पद धातु का ग्रहण सकर्मक के लिये है । दूसरे लोग यह कहते हैं कि 'पद' का ग्रहण ज्ञापन के लिये है—तच्छील आदि अर्थों में होने वाले प्रत्ययों में परस्पर "वाऽसरूपविधि' नहीं होती । इस लिये 'अलं कृञ्' से तृन् आदि नहीं होते हैं—अलंकर्ता । [ अतः 'अलंकर्ता' यह रूप शुद्ध नहीं है । इससे इष्णुच् का ही रूप होता है—अलङ्करिष्णुः ] यह इस प्रकार है—'पद्' से विशेषविहित उकञ् के साथ सामान्यविहित युच् का असरूप होने से समावेश हो ही जायेगा, तब इस विधान का क्या प्रयोजन ? अतः यह ज्ञापनार्थ किया जा रहा है । और ज्ञापन प्रायिक है । कहीं-कहीं समावेश इष्ट ही है—'गन्ता खेटं विकत्थनः ।' [ यहाँ 'गम्' से तृच् होता है और 'विकत्थ् के युच्=अन होता है । इस प्रकार एक साथ दोनों प्रकार के प्रत्ययों वाले शब्द प्रयुक्त हैं । ] ॥ १५० ॥

**९२०. क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥ ( ३१३१ )**

**'क्रुध कोपे', ( धा० पा० ११९० ) 'मडि भूषायाम्' ( धा० पा० १५८८ )—इत्येतदर्थेभ्यश्च धातुभ्यो युच् प्रत्ययो भवति । क्रोधनः । रोषणः । मण्डनः । भूषणः ॥**

**९२१. न यः ॥ १५२ ॥ ( ३१३२ )**

**यकारान्ताद्धातोर्युच् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । क्नूयिता । क्ष्मायिता ॥**

**९२२. सूददीपदीक्षश्च ॥ १५३ ॥ ( ३१३३ )**

**सूद, दीप, दीक्ष—इत्येतेभ्यश्च युच् प्रत्ययो न भवति । अनुदात्तेत्त्वात् प्राप्तः प्रतिषिध्यते । सूदिता । दीपिता । दीक्षिता ।**

**ननु च दीपेर्विशेषविहितो रप्रत्ययो दृश्यते—'नमिकम्पिस्म्यजसकमहिंसदीपो रः' ( ३.२.१६७ ) इति,**

**न्यासः**

**क्रुधमण्डार्थेभ्यश्च ॥** 'तृन्' इति तृनि प्राप्ते युज् विधीयते । इहोत्तरेऽपि प्रत्ययो यत्र विशेषो न विवक्ष्यते, तत्र तृन एवापवादो वेदितव्यः । **रोषण इति ।** 'रुष रोषे' ॥ १५१ ॥

**न यः ॥ पूर्वेणेति ।** 'अनुदात्तेतश्च हलादेः' इत्यादिना सिद्धत्वात् । अथ 'अय वय रय णय गतौ' इत्यस्माद्धातोर्युचो विधानार्थञ्चैतत् कस्मान्न विज्ञायते ? अशक्यमेवं विज्ञातुम्; यस्मान्नयतेः 'अनुदात्तेतश्च' इत्यादिनैव सिद्धत्वात् । तस्मात् प्रतिषेधार्थमिदम् । **क्नूयिता, क्ष्मायितेति ।** 'क्नूयी शब्द उन्दे च', 'क्ष्मायी विधूनने' ॥ १५२ ॥

**सूददीपदीक्षश्च ॥** 'षूद क्षरणे', 'दीपी दीप्तौ', 'दीक्ष मौण्ड्ये' । **ननु चेत्यादि** देश्यम् । [चोद्यम्] **वाऽसरूपेणेत्यादि**

**पदमञ्जरी**

**न यः ॥** 'अय वय नय तय गतौ' ( धा० पा० ४७४, ७५, ८०, ७९ ) इति नयतेरनुदात्तेत्त्वादेव युचः सिद्धत्वान्न तस्येदं ग्रहणम्, किं तर्हि ? प्रतिषेध एवेति मत्वाऽऽह—**यकारान्तादिति । पूर्वेणेति ।** अनुदात्तेतश्च' इत्यादिना । **क्नूयिता क्ष्मायितेति ।** 'क्नूयी शब्दे' ( धा० पा० ४८५ ), 'क्ष्मायी विधूनने' ( धा० पा० ४८६ ) ॥ ॥ १५१ ॥ १५२ ॥

**सूददीपदीक्षश्च ॥** 'षूद क्षरणे' ( धा० पा० २५ ), 'दीपी दीप्तौ' ( धा० पा० ११५० ) 'दीक्ष मौण्ड्ये' ( धा० पा० ६०९ ) ।

ननु 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीति' ( व्या० परि० ३१ ) ज्ञापितम्, तत्कथं वाऽसरूपेण

**भावबोधिनी**

'क्रुध्' क्रोध अर्थ में है'—'मडि' सजाना अर्थ में है' इन अर्थों वाली धातुओं से युच् प्रत्यय होता है । उदा० क्रोधनः; रोषणः । [ क्रुध् + युच् = दोनों का अर्थ है—क्रोध करने वाला । ] मण्डनः, भूषणः [ 'मडि' 'इ' की इत् संज्ञा होने से 'इदितो नुम् धातोः' से नुम् आगम, अनुस्वार, परसवर्ण करने पर—मण्ड् + युच्=अन, भूष + युच्=अन, न का ण । सजाने वाला—दोनों का यही अर्थ है । ] ॥ १५१ ॥

यकारान्त धातु से युच् प्रत्यय नहीं होता है । पूर्व सूत्र से प्राप्त का निषेध होता है । उदा० क्नूयिता, क्ष्मायिता । [ 'क्नूयी' और 'क्ष्मायी' ये यकारान्त हैं । अतः प्राप्त युच् का निषेध हो जाने पर तृन् होता है और इट् आगम करने पर रूप बनते हैं । शब्द करने वाला । कंपाने वाला । ] ॥ १५२ ॥

सूद, दीप और दीक्ष—इन धातुओं से भी युच् नहीं होता है । इनमें अनुदात्तेत् होने के कारण युच् प्राप्त होता है उसका निषेध हो जाता है । उदा० सूदिता । दीपिता । दीक्षिता ।

शंका—'दीप्' धातु से 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इस सूत्र से विशेष विहित 'र' दिखाई देता है, वही

**स एव बाधको भविष्यति, किं प्रतिषेधेन ? वाऽसरूपेण युजपि प्राप्नोति। ताच्छीलिकेषु च वाऽसरूपविधिर्नास्तीति प्रायिकमेतद् इत्युक्तम्। तथा च समावेशो दृश्यते। कम्रा युवतिः। कमना युवतिः। कम्प्रा शाखा। कम्पना शाखेति।**

**सूदेर्युचि प्रतिषिद्धे कथं मधुसूदनः, रिपुसूदनः इति ? अनित्योऽयं प्रतिषेध इति योगविभागाद्विज्ञायते। अथ वा—नन्द्यादिषु मधुसूदनादयो द्रक्ष्यन्ते। 'कृत्यल्युटो बहुलम्' ( ३.३.११३ ) इति ल्युडन्तो वा ॥**

## ९२३. लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ १५४ ॥ ( ३१३४ )

**लषादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु उकञ् प्रत्ययो भवति। अपलाषुकं वृषलसंगतम्। प्रपातुका**

### न्यासः

परिहारः। स्यादेतत्—वाऽसरूपविधिर्नास्तीति ज्ञापितमेतत् ततो नास्ति युच्प्राप्तिरित्यत आह—**ताच्छीलकेत्यादि।** प्रायिकत्वस्य चायमेव लिङ्गम्। यदि हि सर्वत्र वाऽसरूपविधेरभावः स्यात्, ततो विशेषविहितेनैव प्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽनर्थकः स्यात्। **तथा चेत्यादिना** ताच्छीलिकप्रत्ययेन समावेशं दर्शयन् प्रायिकत्वमेव ज्ञापकस्य द्रढयति। **कम्रेति।** 'नमिकम्पि' इत्यादिना रप्रत्ययः। **कमनेति।** 'अनुदात्तेतश्च हलादेः' इति युच्प्रत्ययः। **कम्प्रेति।** 'कपि चलने'।

**सूदेरित्यादि** चोद्यम्। **अनित्यमित्यादि** परिहारः। **योगविभागाद् विज्ञायत इति।** अनित्यत्वे साधनम् 'नयसूददीपदीक्ष' इत्येकयोगे कर्त्तव्ये यद् योगविभागं करोति तज् ज्ञापयति—पूर्वस्मात् प्रतिषेधादस्य कश्चिद् विशेषोऽस्तीति। स पुनर्विशेषोऽनित्यत्वमेव। यद्यपि दीपदीक्षतिभ्यामपि युच् प्राप्नोति, अनभिधानान्न भवति ॥१५३॥

**लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्। उपस्थायुक इति।** 'आतो युक्' इत्यादिना युक्।

### पदमञ्जरी

युजिह प्राप्नोति ? तत्राह—**ताच्छीलिकेष्विति।** प्रायिकत्वस्य चायमेव प्रतिषेधो लिङ्गम्, सर्वत्र वाऽसरूपविधेरभावे विशेषविहितेन रप्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽयमनर्थकस्स्यात्। **तथा चेत्यादिना** प्रायिकत्वस्य प्रयोजनं दर्शयति। नानेन प्रतिषेधेन युज्रयोरेव समावेशो ज्ञाप्यते, यथा भाष्ये प्रतिभासः, किं तर्हि ? ज्ञापकस्यैव प्रायिकत्वम्। तेन 'गन्ता खेटं विकत्थनः' इत्यपि भवति। एतच्च पूर्वमेवोक्तम्।

**अथ वा नन्द्यादिष्विति।** योगविभागस्त्विदानीं वैचित्र्यार्थः ॥ १५३ ॥

**लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ अपलाषुकमिति।** अशोभनमित्यर्थः। नन्वत्र विशेषविहित-

### भावबोधिनी

इस युच् का बाधक हो जायेगा, अतः इस प्रतिषेध का क्या प्रयोजन ? 'वाऽसरूप' न्याय से युच् भी प्राप्त होता है और ताच्छीलिक प्रत्ययों में 'वाऽसरूप' विधि नहीं होती है यह प्रायिक हैं—ऐसा कहा जा चुका है और इस प्रकार दोनों प्रत्ययों का समावेश देखा जाता है। उदा० कम्रा युवतिः, कमना युवतिः। [ 'कम्' धातु से "नमिकमि" इत्यादि सूत्र से 'र' प्रत्यय और टाप् होता है। इसी प्रकार 'कम्' + युच् = अन से भी टाप् होकर रूप बनता है 'चाहने वाली युवती' यह अर्थ है ] कम्प्रा शाखा, कम्पना शाखा। [ कम्प् + र, कम्प् + युच् = अन, से टाप्। काँपने वाली। ]

'सूद' धातु से युच् का प्रतिषेध हो जाने पर—'मधुसूदनः' और रिपुसूदनः' ये कैसे बनेंगे ? यह प्रतिषेध अनित्य है क्योंकि ऐसा [ 'नः यः' इसी के साथ न पढ़ कर ] योगविभाग [ = अलग सूत्र बनाने ] से ज्ञापित होता है।

अथवा 'नन्द्यादि' गण में 'मधुसूदन' आदि शब्दों को देखा जायगा, पाठ किया जायग। अथवा "कृत्यल्युटो बहुलम्" इससे ल्युट् करके बनाया गया है ॥ १५३ ॥

'लष' आदि धातुओं से तच्छील आदि कर्ता अर्थों में उकञ् प्रत्यय होता है। उदा० अपलाषुकं वृषलसंगतम्।

**गर्भा भवन्ति। उपपादुकं सत्त्वम्। उपस्थायुका एनं पशवो भवन्ति। प्रभावुकमन्नं भवति। प्रवर्षुकाः पर्जन्याः। आघातुकं पाकलिकस्य मूत्रम्। कामुका एनं स्त्रियो भवन्ति। आगामुकं वाराणसीं रक्ष आहुः। किंशारुकं तीक्ष्णमाहुः॥**

### ९२४. जल्पभिक्षकुट्टलुण्टवृङः षाकन्॥ १५५॥ ( ३१३५ )

**जल्पादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु षाकन् प्रत्ययो भवति। षकारो ङीषर्थः। जल्पाकः।**

**न्यासः**

**प्रवर्षुक इति**। 'वृषु मृषु सेचने' इति। **कामुका इति**। 'कमु कान्तौ'। नोदात्तोपदेश' इत्यादिना वृद्धिप्रतिषेधे प्राप्तेऽनाचमेरित्यत्र 'चमिकमिवमीनामिति वक्तव्यम्' इति वृद्धिरेव भवति। **शारुक इति**। 'शॄ हिंसायाम्'। अपपूर्वाल्लषेः 'अपे च लषः' इति घिनुण् भवति। उक्तं हि प्राक्—ताच्छीलिकेषु समावेशः क्वचिद् भवतीति। पतिपदिभ्यां 'जुचंक्रम्य' इत्यादिना युजपि भवत्येव। तिष्ठतेरिति 'ग्लाजि-स्थश्च क्स्नुः' इति वचनसामर्थ्यात्। गमेश्छन्दसि 'आदृगम्' इत्यादिना किकिनावपि भवतः। भाषायामपि; 'भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः, इत्युपसंख्यानात्। कमेः 'नमिकम्पि' इत्यादिना रप्रत्ययः॥ १५४॥

**जल्पभिक्षकुट्टलुण्टवृङः षाकन्**॥ 'जप जल्प व्यक्तायां वाचि', 'भिक्ष याच्ञायाम्' 'कुट्ट च्छेदने', 'लुण्ट स्तेये'–चौरादिकावेतौ। 'वृङ् संभक्तौ'। जल्पेरकर्मकत्वविवक्षया 'चलनशब्दार्थादकर्मकाद् युच्' इति युचि

**पदमञ्जरी**

त्वाद् 'अपे च लषः' इति घिनुणा भाव्यम्, अयं तु केवलेऽन्योपसर्गपूर्वे च लषौ चरितार्थः, वाऽसरूपविधिनोकञ् भविष्यति ? 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति' ( व्या० परि० ३१ ) इत्येतत्तु प्रायिकमित्युक्तम्। **आघातुकं पाकलिकस्य मूत्रमिति**। पाकलो नाम गजानां व्याधिविशेषः; स यस्यास्ति स पाकलिकः, 'द्वन्द्वोपतापगर्ह्यात्' इतीनिरेव प्राप्नोति, व्रीह्यादिपाठान्न भवति। पाकलिको गजस्तस्य मूत्रं स्पृष्टमाघ्रातं वान्यान् गजान्हन्ति, एष तस्य स्वभावः। **आगामुकं वाराणसीं रक्ष आहुरिति**। यः शापादिना रक्षोभूतः तं मोक्षार्थं वाराणसीं प्रत्यागमनशीलमाहुरित्यर्थः॥ १५४॥

**जल्पभिक्षकुट्टलुण्टवृङः षाकन्**॥ 'जल्प जप व्यक्तायां वाचि' ( धा० ३९८, ९७ ), 'भिक्ष याच्ञायाम्'

**भावबोधिनी**

[ अपलष् + उकञ् उपधावृद्धि। वृषलों की संगति न चाहने वाला।] प्रपातुका गर्भा भवन्ति। [ प्र पत् + उकञ्, उपधावृद्धि। गर्भ गिरने वाले होते हैं। ] उपपादुकं सत्त्वम्। [ सत्त्व जाने वाला होता है। ] उपस्थायुका एनं पशवो भवन्ति। [ उपस्था + उकञ् = उक, 'आतो युक् चिण्कृतोः' सूत्र से युक्=य् आगम। इसके पास बैठने वाले पशु होते हैं। ] प्रभावुकम् अन्नं भवति। [ प्रभू + उकञ्, वृद्धि आव् आदेश। अन्न होने वाला होता है। ] प्रवर्षुकाः पर्जन्याः। [ प्रवृष् + उकञ्, गुण, रपर। बादल बरसने वाले होते हैं। ] आघातुकं पाकलिकस्य मूत्रम्। [आङ् हन् + उकञ्, उपधावृद्धि, 'हनस्तोऽचिण्णलोः' सूत्र से 'न्' का 'त्', 'होहन्तेर्ञ्णिन्नेषु' सूत्र से 'ह' का 'घ्'—आघातुकं। 'पाकल' यह हाथियों का एक रोग होता है। इस रोग वाले हाथी को 'पाकालिक' कहा जाता है। ऐसे हाथी का मूत्र स्पर्श करना अथवा सूंघना प्राणघातक होता है। ] कामुका एनं स्त्रियो भवन्ति। [ कम् + उकञ् उपधावृद्धि। स्त्रियाँ इसे चाहने वाली होती हैं ] आगामुकं वाराणसीं रक्ष आहुः। [ आङ् गम् + उकञ्, उपधावृद्धि। पापग्रस्त व्यक्ति राक्षस होकर पापमुक्ति के लिये वाराणसी आता है। उसके लिये यह उक्ति है। ] किंशारुकं तीक्ष्णमाहुः। [ शॄ + उकञ्, वृद्धि, रपर। किंशारुक= तीर को तीखा कहते हैं। ]॥ १५४॥

जल्प आदि धातुओं से तच्छील आदि कर्ता अर्थों में षाकन् प्रत्यय होता है। षकार ङीष् करने के लिये है। उदा० जल्पाकः [ जल्प् + षाकन् ''षः प्रत्ययस्य'' से 'ष्' की इत्संज्ञा, लोप। खूब बोलने वाला ] भिक्षाकः। [ भीख

**भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥**

**९२५. प्रजोरिनिः ॥ १५६ ॥ ( ३१३६ )**

**प्रपूर्वाज्जवतेः तच्छीलादिषु कर्तृषु इनिः प्रत्ययो भवति । प्रजवी । प्रजविनौ ॥**

**९२६. जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५७ ॥ ( ३१३७ )**

**'जि जये', ( धा० पा० १४०८ ) 'दृङ् आदरे', ( धा० पा० २२३ ) 'क्षि क्षये', ( धा० पा० १४१२ ) 'क्षि निवासगत्योः', ( धा० पा० ५६१ )—इति द्वयोरपि ग्रहणम् । प्रसू इति 'षू प्रेरणे' ( धा० पा० १४०९ ) इत्यस्य ग्रहणम् । जिप्रभृतिभ्यो धातुभ्य इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु । जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ॥**

**न्यासः**

प्राप्ते । भिक्षेरपि 'अनुदात्तेतश्च हलादेः' इति युच्येव । कुट्टिलुण्टिभ्यां 'णेश्छन्दसि' इतीष्णुचि । वृङोऽपि 'आदृगमहन' इत्यादिना किकिनोः प्राप्तयोस्तदपवादः षाकन् विधीयते । **वराकीति** । षित्वान् ङीष् ॥ १५५ ॥

**प्रजोरिनिः** ॥ 'जुचंक्रम्य' इत्यादिना युचि प्राप्त इनिर्विधीयते । इकारो नकारस्येत्संज्ञापरित्राणार्थः ॥१५६॥

**जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च** ॥ 'जि जये', 'दृङ् आदरे', 'श्रिञ् सेवायाम्' विपूर्वः 'इण् गतौ', 'टुवम उद्गिरणे', 'व्यथ भयचलनयोः' नञ्पूर्वः, 'अम रोगे' अभिपूर्वः । 'षू प्रेरणे' प्रपूर्व इत्यस्य ग्रहणम्,

**पदमञ्जरी**

( धा० पा० ६०६ ), 'कुट्ट छेदने' ( धा० पा० १५५८ ), 'लुण्ठ स्तेये' ( धा० पा० १५५३ )—चौरादिकौ, 'वृङ सम्भक्तौ' ( धा० पा० १५०९ ) ॥ १५५ ॥

**प्रजोरिनिः** ॥ इनेरिकारो नकारस्येत्संज्ञा मा भूदिति ॥ १५६ ॥

**जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च** ॥ 'जि जये' (धा० पा० ५६१) 'जि अभिभवे' ( धा० पा० ९४६ )—द्वयोरपि ग्रहणम्, 'दृङ् आदरे' ( धा० पा० १४११ ), 'श्रिञ् सेवायाम्' ( ८९७ ), 'इण् गतौ' (१०४५), 'टुवम उद्वमने' ( धा० पा० ८४९ ), 'व्यथ भयचलनयोः' ( धा० पा० ७६४ ) नञ्पूर्वः, नञः कृतलोपस्य निर्देशः, निपातनाच्च नञो धातुना समासः, ततो वलोपः, ततः प्रत्ययः । 'अम रोगे' ( धा० पा० ४६५ ), 'भू सत्तायाम्' ( धा० पा० १ ) । **द्वयोरपि ग्रहणमिति** । 'क्षिष् हिंसायाम्' ( धा० पा० १५०६ ) इत्यस्य तु सानुबन्धकत्वादग्रहणम् । **षू प्रेरण इत्यस्य ग्रहणमिति** । 'षूङ् प्राणिगर्भविमोचने' ( धा० पा० १०३१ ) 'षूङ् प्राणिप्रसवे'

**भावबोधिनी**

माँगने वाला ] कुट्टाकः । [ कूटने = तोड़ने वाला ] लुण्टाकः । [ लूटने वाला ] । वराकः, वराकी [ वृ + षाकन् = आक, गुण, रपर, स्त्रीलिंग में "षिद्गौरादिभ्यश्च" सूत्र से ङीष् । बेचारा, बेचारी । ] ॥ १५५ ॥

प्रपूर्वक 'जु' धातु से तच्छील आदि कर्ता अर्थों में इनि प्रत्यय होता है । उदा० प्रजवी, प्रजविनौ । [ प्रजु + इन्, गुण, अव् आदेश, विभक्तिसम्बन्धी कार्य । तेज भागने वाला । द्विवचन में—दो तेजभागने वाले । ] ॥ १५६ ॥

'जि' जय अर्थ में है; 'दृङ् आदर अर्थ में है', 'क्षि क्षय अर्थ में है', 'क्षि निवास और गति अर्थों में है'—इन दोनों का ग्रहण होता है । 'प्रसू' इसमें 'षू प्रेरणे' का ग्रहण है । 'जि आदि धातुओं से तच्छील आदि कर्ता अर्थों में 'इनि' प्रत्यय होता है । उदा० जयी । [ जि + इनि = इन्, गुण, ए का अय् आदेश—जयी । जीतने वाला । ] दरी । [ दृ + इन् । आदर करने वाला ] क्षयी । [ क्षि = नष्ट होने वाला । निवास और गमन करने वाला ] विश्रयी । [ वि श्रि + इन् । सेवा करने वाला ] अत्ययी । [ अति इण्+इन्, धातु का गुण, अयादेश, यण् । अत्यधिक जाने वाला । ] वमी । [ वम् + इन् । वमन करने वाला । ] अव्यथी । [ अव्यथ् + इन् । व्यथित न होने वाला ] अभ्यमी । [ बहुत रोग वाला ] परिभवी । [ परिभू + इन्, गुण अवादेश । अनादर करने वाला । ] प्रसवी । [ प्र सू + इन्, गुण अव् आदेश । प्रेरित करने वाला । ] ॥ १५७ ॥

## ९२७. स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ १५८ ॥ ( ३१३८ )

**'स्पृह ईप्सायाम्'**, ( धा० पा० १८७२ 'गृह ग्रहणे', ( धा० पा० १९०० ) 'पत गतौ'' ( धा० पा० १८६२ )—चुरादावदन्ताः पठ्यन्ते; **'दय दानगतिरक्षणेषु'**, ( धा० पा० ४८१ ) **'द्रा कुत्सायां गतौ'** ( धा० पा० १०५५ ) **निपूर्वस्तत्पूर्वश्च, तदो नकारान्तता च निपात्यते; 'डुधाञ्** ( धा० पा० १०९३ ) **श्रत्पूर्वः—इत्येतेभ्यस्तच्छीलादिषु कर्तृषु आलुच् प्रत्ययो भवति । स्पृहयालुः । गृहयालुः ।**

**पतयालुः । दयालुः । निद्रालुः । तन्द्रालुः । श्रद्धालुः ।**

**❀ आलुचि शीङो ग्रहणं कर्तव्यम् ❀ ( म० भा० ३.२.१५८ वा० १ ) । शयालुः ॥**

### न्यासः

न 'षूङ् प्राणिगर्भविमोचने' 'षूङ् प्राणिप्रसवे' इत्येतयोः । निरनुबन्धकपरिभाषयेति भावः । इण्जिभ्यामित्यत्र 'इण्नशिजसर्तिभ्य क्वरप्' इति वचनात् क्वरब् भवति ॥ १५७ ॥

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ चुरादावदन्ताः पठचन्त इति ।** तेनातो लोपे कृते 'अचः परस्मिन् पूर्वविधौ' स्थानिवद्भावाद् वृद्धिगुणौ न भवत इत्यभिप्रायः । एतेभ्यश्छन्दसि पूर्ववदिष्णुचि प्राप्ते द्रातेर्दधातेश्च किकिनोः प्राप्तयोरासुज् विधीयते । **स्पृहयालुरिति ।** 'अयामन्त' इत्यादिना अयादेशः । **आलुचीत्यादि ।** शीङ् गृह्यते । येन तच् शीङ्ग्रहणं तत् पुनर्व्याख्यानमित्येतदुक्तं भवति । तद् व्याख्यानं कर्त्तव्यं येनालुचि विधातव्ये शीङोऽपि ग्रहणं भवति । तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन शीङपि प्रकृतित्वेन गृह्यत इति ॥ १५८ ॥

### पदमञ्जरी

( धा० पा० ११३२ ) इत्येतयोस्तु सानुबन्धकत्वादग्रहणम् । प्रजोरप्यत्रैव ग्रहणं कर्तव्यम्, एवं हि चकारो न वक्तव्यो भवति ? तथा तु न कृतमित्येव ॥ १५७ ॥

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ चुरादावदन्ताः पठ्यन्त इति ।** तेन णौ कृतस्यातो लोपस्य स्थानिवद्भावात्पतयतेः 'अत उपधायाः' इति वृद्धिर्न भवति, स्पृहयतिगृहयत्योश्च लघूपधगुणो न भवतीति भावः । **श्रत्पूर्वो धाञिति ।** धेटस्तु श्रत्पूर्वस्याप्रयोग एव । अथ किमर्थमालुज्विधीयते, न लुजेवोच्येत ? का रूपसिद्धिः ? स्पृहयालुः, शपि कृते 'अतो दीर्घो यञि' इति दीर्घो भविष्यति ? तत्र हि 'तुरुस्तुशम्यमः सार्वधातुके' इति सार्वधातुकग्रहणमनुवर्तते, न तु तिङ्ग्रहणम्, लकारस्येत्संज्ञाप्रयोजनाभावान्न भविष्यति, यकारादित्वाद्वा । किं यकारो न श्रूयते ? लुप्तनिर्दिष्टो यकारः, एवमपि श्रद्धालुर्न सिद्धचति, कथम् ? शपः श्लुर्द्विर्वचनम्, 'श्नाभ्यस्तयोरातः' श्रद्ध्लुरिति प्राप्नोति ? अथापि 'संज्ञापूर्वको विधिरनित्यः' इति द्विर्वचनं न प्रवर्तिष्यत इत्युच्येत ? एवमपि ज्ञापनार्थमालुज् विधीयते, एतज् ज्ञापयति—यत्रालुचैव रूपसिद्धिस्ततोऽप्ययं भवतीति । तेनालुचि शीङो ग्रहणमित्येतन्न वक्तव्यं भवति ॥ १५८ ॥

### भावबोधिनी

'स्पृह ईप्सा अर्थ में है', 'गृह ग्रहण करना अर्थ में है' 'पत गमन अर्थ में है'—ये चुरादिगण में अदन्त पढ़ीं गयीं हैं । 'दय दान, गति और रक्षण—अर्थों में है', 'द्रा कुत्सित गति अर्थ में है', निपूर्वक है और 'तत्' पूर्वक है, 'तत्' की नकारान्तता निपातित होती है । 'डुधाञ्' यह श्रत् पूर्वक है—इनसे तच्छील आदि कर्ता अर्थों में आलुच् प्रत्यय होता है । उदा० स्पृहयालुः । [ स्पृह् + आलुच् । चाहने वाला ] गृहयालुः । [ पकड़ने वाला । ] पतयालुः । [ जाने वाला ] दयालुः । [ दया करने वाला ] निद्रालुः । [ सोने वाला ] तन्द्रालुः । [ अलसाने वाला ] श्रद्धालुः । [ श्रद्धा करने वाला ] ।

❀ आलुच् के विधान में शीङ् का भी ग्रहण करना चाहिये । ❀ उदा० शयालुः । [ शी + आलुच्, गुण, अय् आदेश । सोने वाला । ] ॥ १५८ ॥

**९२८. दाधेट्सिशदसदो रुः ॥ १५९ ॥ ( ३१३९ )**

दा, धेट्, सि, शद, सद—इत्येतेभ्यो रुः प्रत्ययो भवति। दारुः। **धारुर्वत्सो मातरम्। 'न लोकाव्ययनिष्ठाखलर्थतृनाम्'** ( २.३.६९ ) इत्युकारप्रश्लेषात् षष्ठी न भवति। सेरुः। शद्रुः। सद्रुः॥

**९२९. सृघस्यदः क्मरच् ॥ १६० ॥ ( ३१४० )**

सृ, घसि, अद्—इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययो भवति। सृमरः। घस्मरः। अद्मरः॥

**९३०. भञ्जभासमिदो घुरच् ॥ १६१ ॥ (३१४१ )**

भञ्ज, भास, मिद—इत्येतेभ्यो घुरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। भङ्गुरं काष्ठम्।

**न्यासः**

**दाधेट्सिशदसदो रुः॥** 'डुदाञ् दाने', 'दो अवखण्डने', 'देङ् रक्षणे'—त्रयाणामिह ग्रहणम्; 'गामादाग्रहणेष्वविशेषः' इति वचनात्। 'धेट् पाने', षिञ् बन्धने', 'शद्लृ शातने, षद्लृ विशरणगत्यवसादनेषु'। अथ **धारुर्वत्सो मातरमिति** कथमत्र द्वितीया, यावता 'कर्तृकर्मणोः कृति' इति षष्ठया भवितव्यमित्यत आह—**न लोकाव्ययनिष्ठेति।** उको य उकारस्तेन सहाकः सवर्णदीर्घत्वेन प्रश्लिष्टः, तेन तदन्तविधौ विज्ञायमाने उकारान्तस्य प्रत्ययस्य प्रयोगे षष्ठी न भवति, तेन द्वितीयैव भवतीति न षष्ठी। नन्विह तर्हि—कटं चिकीर्षुरिति प्रतिषेधो न स्यात्, उप्रत्ययस्यानुकारान्तत्वात्। घिनुणपि भवति। छन्दस्यृकारान्तत्वाद्, 'आदृगमहन' इत्यादिना किकिनावपि भवतः॥ १५९॥

**सृघस्यदः क्मरच्॥** १६०॥ **भञ्जभासमिदो घुरच्॥** 'भञ्ज आमर्दने', 'भासृ दीप्तौ', 'ञिमिदा स्नेहनमोचनयोः'। **भङ्गुरमिति।** 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। **कर्मकर्त्तरि प्रत्यय इति।** भज्यते स्वयमेवेत्यर्थः।

**पदमञ्जरी**

**दाधेट्सिशदसदो रुः॥** 'गामादाग्रहणेष्वविशेषः' इति दारूपाणां यथाभिधानं ग्रहणम्। 'धेट् पाने' ( धा० पा० ९०२ ), 'षिञ् बन्धने' ( धा० पा० १२४८ ), 'शद्लृ शातने' ( धा० पा० १२२८ ), 'षद्लृ विशरणगत्यवसादनेषु' ( धा० पा० १२२७ )॥ १५९॥

**सृघस्यदः क्मरच्॥** घसिः प्रकृत्यन्तरमस्ति॥ १६०॥

**भञ्जभासमिदो घुरच्॥** 'भञ्जो आमर्द्दने' ( धा० पा० १४५३ ), 'भासृ दीप्तौ' ( धा० पा० ६२४ ),

**भावबोधिनी**

दा, धेट्, सि, शद् और सद—इन धातुओं से 'रु' प्रत्यय होता है। उदा० दारुः। [इसमें डुदाञ् दाने', 'दोअवखण्डने' और 'देङ् रक्षणे—इन तीनों का ग्रहण है 'दे' और 'दो' के ए और ओ का आत्व करने पर 'दा' रूप बनाकर 'रु' प्रत्यय होता है।] धारुः वत्सः मातरम्। ['धेट्' पीना अर्थ में है। 'ए' का आत्व करके धा + रु। पीने वाला।] 'न लोकाव्यय०' इस सूत्र में उकार का प्रश्लेष होने से षष्ठी का निषेध हो जाता है। [ अतः द्वितीया होती है।] सेरुः। [ बाँधने वाला ] शद्रुः। [ तीखा करने वाला ] सद्रुः। [ विशीर्ण होने वाला, जाने वाला, आदि अर्थ है। ]॥ १५९॥

'सृ' 'घस्' और 'अद्' इन धातुओं से तच्छील आदि कर्ता अर्थों में क्मरच् प्रत्यय होता है। उदा० स्मृमरः। [ स्मृ + क्मरच् = मर, तेज भागने वाला एक मृगविशेष। ] घस्मरः। [ 'घस्' यह अलग धातु है। खा जाने वाला ] अद्मरः [ खाने वाला ]॥ १६०॥

भञ्ज, भास और मिद—इन धातुओं से तच्छील आदि कर्म अर्थों में घुरच् प्रत्यय होता है। उदा० भङ्गुरं काष्ठम्। [ भञ्ज् + घुरच् = उर, "चजोः कुः घिण्ण्यतोः" सूत्र से 'ज्' का 'ग्' कुत्व करने पर रूप बनता है। टूटने

**घित्वात्कुत्वम् । भासुरं ज्योतिः । मेदुरः पशुः । भञ्जेः कर्मकर्त्तरि प्रत्ययः, स्वभावात् ॥**

**९३१. विदिभिदिच्छिदेः कुरच् ॥ १६२ ॥ ( ३१४२ )**

**ज्ञानार्थस्य विदेः ( धा० पा० १०६५ ) ग्रहणम्, न लाभाद्यर्थस्य ( धा० पा० १४३३ ); स्वभावात् । विदादिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति । विदुरः पण्डितः । भिदुरं काष्ठम् । छिदुरा रज्जुः । भिदिच्छिद्योः कर्मकर्तरि प्रयोगः ।**

**❀ व्यधेः संप्रसारणं कुरच्च वक्तव्यः ❀ ( ? ) । विधुरः ॥**

**न्यासः**

कुतः पुनः कर्मकर्त्तरि प्रत्ययो लभ्यत इत्यत आह—**स्वभावादिति** । प्रकृत्यैव प्रत्ययः कर्मकर्त्तारमभिधत्ते, न कर्तृमात्रम् । अतः कर्मकर्त्तर्येव ॥ १६१ ॥

**विदिभिदिच्छिदेः कुरच्** ॥ **ज्ञानार्थस्य विदेर्ग्रहणमिति** । 'विद ज्ञाने' इत्येतस्य । **न लाभार्थस्येति** । 'विद्लृ लाभे' इत्येतस्य । अज्ञानार्थस्य विदेरुपलक्षणमेतत्, तेन सत्ताविचारणार्थौ यौ विदी तयोरपि ग्रहणं न भवत्येव । क्वचित्त्वनयोरादिशब्देनोपसंग्रहाय **लाभार्थस्येति** पाठः । कस्मात् पुनर्ज्ञानार्थस्य ग्रहणमित्याह—**स्वभावादिति** । विदेरुत्पन्नेन प्रत्ययेन स्वभाव एव ज्ञानक्रियाया यः कर्त्ता स एव प्रतीयते, नान्यः । तस्माज् ज्ञानार्थस्य ग्रहणम्, नान्यस्य । **कर्मकर्त्तरि प्रत्यय इति** । स्वयमेव च्छिद्यत इत्यर्थे । तत्र स्वभावादिति पूर्वोक्त एव हेतुः ॥ १६२ ॥

**पदमञ्जरी**

'ञिमिदा स्नेहने' ( धा० पा० ७४३ ) ॥ १६१ ॥

**विदिभिदिच्छिदेः कुरच्** ॥ **न लाभार्थस्येति** । ज्ञानार्थस्येदमुपलक्षणं न लाभार्थस्येत्यर्थः । कुत इत्याह — **स्वभावादिति** । तेन 'लुग्विकरणालुग्विकरणयोः' ( व्या० परि० ५० ) इत्येतदपि न प्रवर्तत इत्यर्थः । विदिभिदिच्छिदेर्ङिदिति प्रकृतस्यैव घुरचो ङित्त्वातिदेशेनैव सिद्धे 'प्रत्ययान्तरकरणमातिदेशिकं ङित्त्वमनित्यम्' ( व्या० परि० ९५ ) इति ज्ञापनार्थम् । तेन 'धू विधूनने' (धा० पा० १३९८) कुटादिः, ततः 'अर्त्तिलूधू०' इतीत्रप्रत्यये कृते ङित्कार्यं न भवति । केचित्तु—धुवित्रमित्येवेच्छन्ति, 'प्राणा वै धुवित्राणि' इति छान्दसं तदनुसारेण **कल्पसूत्रेषु** प्रयोगः । **कर्मकर्त्तरीति** । **माघस्तु** शुद्धे कर्तरि प्रयुङ्क्ते —'गुरुमत्सरच्छिदुरया दुरयाचितमङ्गना' ( शिशु० ) इति ॥ १६२ ॥

**भावबोधिनी**

वाला काष्ठ ] घित् होने से ज् का कुत्व ग् हुआ है । भासुरं ज्योतिः । [चमकने वाली ज्योति] मेदुरः पशुः । [ मिद् घुरच्= उर, उपधागुण । चिकना होने वाला पशु । ] 'भंज्' धातु से कर्मकर्ता अर्थ में प्रत्यय होता है, यह स्वाभाविक है ॥ १६१ ॥

ज्ञानार्थक 'विद्' का ही ग्रहण है, लाभार्थक का नहीं, क्योंकि ऐसा शब्द-स्वभाव है । विदादि धातुओं से तच्छील आदि कर्ता अर्थों में कुरच् प्रत्यय होता है । उदा०—विदुरः पण्डितः [ विद् + कुरच् = उर, कित् होने से गुण का निषेध । जानने वाला पण्डित । ] भिदुरं काष्ठम् । [ भिद् + कुरच् = उर, इसमें भी कित् होने से गुणनिषेध । टूटने वाला ] छिदुरा रज्जुः । [ छिद् + कुरच् = उर, टाप् । टूटने वाली रस्सी ] भिद और छिद का कर्मकर्ता में प्रयोग है, अर्थात् स्वयं टूटने वाला—यह अर्थ होता है । ❀ व्यध का संप्रसारण और कुरच् प्रत्यय कहना चाहिए । ❀ विधुरः । [ व्यध् + कुरच्, संप्रसारण, पूर्वरूप । ] ॥ १६२ ॥

**९३२. इण्नशिजिसर्त्तिभ्यः क्वरप् ।। १६३ ।। ( ३१४३ )**

इण्, नश्, जि, सर्त्ति—इत्येतेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययो भवति । पकारस्तुगर्थः । इत्वरः, इत्वरी । नश्वरः, नश्वरी । जित्वरः, जित्वरी । सृत्वरः, सृत्वरी । 'नेड् वशि कृति' ( ७.२.८ ) इतीट्-प्रतिषेधः ।।

**९३३. गत्वरश्च ।। १६४ ।। ( ३१४४ )**

'गत्वर' इति निपात्यते । गमेरनुनासिकलोपः क्वरप्प्रत्ययश्च । गत्वरः । गत्वरी ।।

**९३४. जागरूकः ।। १६५ ।। ( ३१४५ )**

जागर्त्तेरूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु । जागरूकः ।।

**९३५. यजजपदशां यङः ।। १६६ ।। ( ३१४६ )**

यजादीनां यङन्तानामूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु । यायजूकः । जञ्जपूकः । दन्दशूकः ।।

**न्यासः**

**इण्नशिजिसर्त्तिभ्यः क्वरप् ।।** इत्वर इति । 'ह्रस्वस्य पिति कृति तुक्' । इत्वरीति । 'टिड्ढाणञ्' इत्यादिना ङीप् ।। १६३ ।। **गत्वरश्च ।।** १६४ ।।

**जागरूकः ।। जागरूक** इति । 'जागृ निद्राक्षये' । वाऽसरूपविधिना तृन्नपि—जागरितेति भवति ।।१६५ ।।

**यजजपदशां यङः ।।** दंशेर्यदि 'अनिदिताम्' इत्यादिनानुनासिकलोपो लुप्तेऽपि यङि प्रत्ययलक्षणेन सिध्यति, तथापि लाघवार्थं कृतानुनासिकलोपो द्रष्टव्यो निर्दिष्टः । **यायजूक इति ।** यजेर्यङ्, 'दीर्घोऽकितः' इति दीर्घः, 'अतो लोपः' इत्यकारलोपः । **जञ्जपूकः, दन्दशूक इति ।** 'लुपसद' इत्यादिना यङ्, 'जपजभ' इत्यादिनाऽभ्यासस्य नुक् ।। १६६ ।।

**पदमञ्जरी**

**इण्नशिजिसर्त्तिभ्यः क्वरप् ।।** क्वरपः पकारः स्वरार्थः, तुगर्थश्च । **इत्वरीति ।** 'टिड्ढाणञ्' इत्यादिना ङीप् ।। १६३ ।। १६४ ।। १६५ ।।

**यजजपदशां यङः ।।** दंशेर्भाविना नलोपेन निर्देशः । **यायजूक इति ।** 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम् । **जञ्जपूकः, दन्दशूक इति ।** 'जपजभदहदश' इति नुक् ।। १६६ ।।

**भावबोधिनी**

इण्, नश्, जि, सृ—इन धातुओं से तच्छीलादि कर्ता अर्थों में क्वरप् प्रत्यय होता है । पकार तुगागम के लिये है । उदा०—इत्वरः । इत्वरी । [ इ + क्वरप्=वर, 'ह्रस्वस्य पिति कृति तुक्' सूत्र से तुक्=त् आगम, स्त्रीलिङ्ग में 'टिड्ढाणञ्' सूत्र से ङीप् होता है । जाने वाला, जाने वाली—ये अर्थ हैं ] नश्वरः, नश्वरी । [ नष्ट होने वाला, नष्ट होने वाली ] जित्वरः, जित्वरी । [ जि + क्वरप् = वर, तुक् । जीतने वाला, जीतने वाली । ] सृत्वरः, सृत्वरी । [ सृ + क्वरप् = वर, तुक् = त् । जाने वाला, जाने वाली । ] 'नेट् वशि कृति'' इस सूत्र से इट् आगम का निषेध हो जाता है ।। १६३ ।।

'गत्वर' यह निपातित होता है । गम् से अनुनासिकलोप और क्वरप् प्रत्यय निपातित होते हैं । उदा० गत्वरः । गत्वरी । [ गम् + क्वरप् = वर, म् का लोप । जाने वाला, जाने वाली । ] ।। १६४ ।।

'जागृ' धातु से तच्छीलादि कर्ता अर्थों में 'ऊक' प्रत्यय होता है । उदा० जागरूकः । [ जागृ + ऊक, गुण, रपर । जागने वाला । ] ।। १६५ ।।

यङ्प्रत्ययान्त यज आदि से 'ऊक' प्रत्यय होता है । उदा० यायजूकः [ यज् + यङ्, द्वित्वादि करने पर—यायज्य + ऊक, अलोप, य् लोप । बार-बार यज्ञ करने वाला । ] जञ्जपूकः । [ जप् + यङ् द्वित्वादि कार्य, नुक्=न् आगम, जञ्जप्य + ऊक, अलोप, यलोप । बहुत जपने वाला ] दन्दशूकः । [ दंश् + यङ्, द्वित्वादि करने पर दन्दश्य + ऊक, अलोप, य् लोप, डंसने वाला, बार-बार काटने वाला ] ।। १६६ ।।

## ९३६. नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ १६७ ॥ ( ३१४७ )

**नम्यादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति। नम्रं काष्ठम्। कम्प्रा शाखा। स्मेरं मुखम्। अजस्रं जुहोति। कम्रा युवतिः। हिंस्रं रक्षः। दीप्रं काष्ठम्। अजस्रमिति 'जसु मोक्षणे' ( धा० पा० १२१२ ) नञ्पूर्वो रप्रत्ययान्तः क्रियासातत्ये वर्तते॥**

## ९३७. सनाशंसभिक्ष उः ॥ १६८ ॥ ( ३१४८ )

**सन्निति सन्प्रत्ययान्तो गृह्यते, न सनिर्धातुः; अनभिधानात्, व्याप्तिन्यायाद्वा। सन्नन्तेभ्यो धातुभ्य आशंसेर्भिक्षेश्च तच्छीलादिषु कर्तृषु उः प्रत्ययो भवति। चिकीर्षुः। जिहीर्षुः। आशंसुः। भिक्षुः। 'आङः शसि इच्छायाम्' ( धा० पा० ६२९ ) इत्यस्य ग्रहणम्, न शंसेः स्तुत्यर्थस्य ( धा० पा० ७२८ ) ॥**

### न्यासः

**नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥** 'णम प्रह्वत्वे शब्दे', 'कपि चलने', 'ष्मिङ् ईषद्धसने', 'कमु कान्तौ', 'तृहि हिसि हिंसायाम्', 'दीपी दीप्तौ'। कपेश्चलनार्थत्वात् कमिदीपिभ्याञ्चानुदात्तेत्त्वाद् युचि प्राप्ते रो विधीयते। **क्रियासातत्यमिति।** क्रियमाणानामविच्छेदेन प्रवृत्तिः = क्रियासातत्यम्। तत्र स्वभाव एव प्रत्ययान्तो वर्त्तते॥ १६७॥

**सनाशंसभिक्ष उः ॥ सन्प्रत्ययो गृह्यत इति।** 'गुप्तिज्किद्भ्यः' इत्यादिना यो विहितः। **न सनिर्धातुरिति।** 'षणु दाने' 'वन षण सम्भक्तौ' इति न गृह्यते। एतच्च गर्गादिषु जिगीषुशब्दपाठाद् विज्ञायते, स हि प्रत्ययग्रहणे चोपपद्यते, न तु धातुग्रहणे। **आङः शासि इच्छायामित्यादि।** एतदप्याङा सह निर्देशाद् विज्ञायते। इच्छार्थो ह्याङ्सहितः पठ्यते, न स्तुत्यर्थः। **आशंसुः, भिक्षुरिति।** अत्र 'अनुदात्तेतश्च हलादेः' इति युचि प्राप्त उप्रत्ययस्य विधानम्॥ १६८॥

### पदमञ्जरी

**नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥** अजसेत्यकार आगन्तुकः। **क्रियासातत्ये इति।** क्रियाणामविच्छेदेन प्रवृत्तिः = क्रियासातत्यम्। कथं तर्हि अग्निषु प्रयोगः—"अजस्रानजुहूत इन्धीरन्निति, आधानाद् द्वादशरात्रमजस्रा" इति ? अत्राप्यजस्रजागरणादजस्राः॥ १६७॥

**सनाशंसभिक्ष उः ॥ न सनिर्धातुरिति।** 'षणु दाने' ( धा० पा० १४६४ ) 'वन षण संभक्तौ' ( धा० पा० ४६३, ६४ ) इति च धातुर्न गृह्यते, कुतः ? गर्गादिषु विजिगीषुशब्दस्य पाठात्। **न शंसेः स्तुत्यर्थस्येति।** एत-दाङा सह निर्देशाद्विज्ञायते—इच्छार्थो हि स तेन सह पठ्यते, न स्तुत्यर्थः॥ १६८॥

### भावबोधिनी

नमि कम्पि, स्मि, अजस्, कम्, हिंस्, दीप्—इन धातुओं से तच्छीलादि कर्ता अर्थों में 'र' प्रत्यय होता है। उदा० नम्रं काष्ठम्। [ नम् + र। झुकने वाला ] कम्प्रा शाखा [ कम्प् + र, टाप्। कांपने वाली शाखा ] स्मेरं मुखम्। [ स्मि + र, गुण। मुस्कराने वाला ] अजस्रं जुहोति। [ अजस् + र। निरन्तर ] कम्रा युवतिः। [ कम् + र, टाप्। चाहने वाली युवती। ] हिंस्रं रक्षः। [ हिंस् + र। मारने वाला राक्षस। ] दीप्रं काष्ठम्। [ दीप् + र, चमकने वाली लकड़ी। ] अजस्रम्—यह 'मोक्षण अर्थ वाली 'जस्' धातु से नञ् पूर्वक, रप्रत्ययान्त निपातित किया जाता है और क्रियासातत्य = लगातार होना अर्थ में है॥ १६७॥

'सन्' यह सन्प्रत्ययान्त लिया जाता है, सन् धातु नहीं, क्योंकि अनभिधान है, अथवा व्याप्तिन्याय है। सन्नन्त धातुओं से और आशंस, भिक्ष—इन से तच्छील आदि कर्ता अर्थों में 'उ' प्रत्यय होता है। उदा० चिकीर्षुः। [ कृ + सन् द्वित्वादि करने पर—चिकीर्ष + उ 'अ' का लोप। करने की इच्छा वाला ] जिहीर्षुः [ हरने की इच्छा वाला ]

**९३८. विन्दुरिच्छुः ॥ १६९ ॥ ( ३१४९ )**

**विदेर्नुमागम इषेश्छत्वमुकारश्च प्रत्ययो निपात्यते तच्छीलादिषु कर्तृषु। वेदनशीलो विन्दुः। एषणशील इच्छुः ॥**

**९३९. क्याच्छन्दसि ॥ १७० ॥ ( ३१५० )**

**'क्य' इति क्यच्क्यष्क्यङां सामान्येन निर्देशः। क्यप्रत्ययान्ताद् धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु उकारप्रत्ययो भवति। मित्रयुः ( मै० सं० २.६.१२ )। संस्वेदयुः ( मै० सं० ४.१२.२.४४ )। सुम्नयुः ( ऋ० १.७९.१० )।**

छन्दसीति किम् ? मित्रीयिता। ( **'न छन्दस्यपुत्रस्य' ( ७ ४.३५ )इति प्रतिषेधान्न दीर्घः ॥ )**[1]

**न्यासः**

**विन्दुरिच्छुः ॥ विदेरिति।** 'विद ज्ञाने'। इतरेषां त्वनभिधानाद् निपातनसामर्थ्याद्वा ग्रहणं न भवति। **इषेरिति।** 'इषु इच्छायाम्' इत्येतस्य। 'इष गतौ' इत्यादीनां त्विषीणां पूर्ववद् ग्रहणं न भवति। **इच्छुरिति।** छकारादेशो निपात्यते। 'छे च' इति तुक्, 'स्तोः श्चुना श्चुः' इति श्चुत्वम् ॥ १६९ ॥

**क्याच्छन्दसि ॥ मित्रयुरिति।** मित्रमिच्छतीति 'सुप आत्मनः क्यच्' इति क्यच्। 'अकृत्सार्वधातुकयोः' इति दीर्घत्वं प्राप्नोति, 'क्यचि च' इतीत्वञ्च, एतदुभयमपि 'न च्छन्दस्यपुत्रस्य' इति प्रतिषेधान्न भवति। **संस्वेदयुरिति।** लोहितादित्वात् क्यष्। **सुम्नयुरिति।** 'देवसुम्नयोः' इति प्रतिषेधः। सुम्न इवाचरतीति

**पदमञ्जरी**

**विन्दुरिच्छुः ॥ विदेरिति।** ज्ञानार्थस्य ग्रहणं नेतरेषाम्, अनभिधानात्, निपातनाद्वा। बिन्दुशब्दस्तु पवर्गादिः 'बिदि अवयवे' ( धा० पा० ६४ ) इत्यस्मादौणादिके 'मृगय्वादयश्च' ( द० उ० १. १२१ ) इत्युप्रत्यये भवति। वकारस्य च्छन्दसि पक्षे भकार इष्यते—'वैश्वदेवा भिन्दवः' इति। **इषेरिति।** 'इषु इच्छायाम्' ( धा०पा० १३५१ ) इत्यस्य। 'इषु गतौ' (धा० पा० ११२७) 'इष 'आभीक्ष्ण्ये' (धा० पा० १५२५) इत्येतयोस्तु पूर्ववदग्रहणम् ॥१६९॥

**क्याच्छन्दसि ॥ क्य इति क्यच्क्यष्क्यङां सामान्येन निर्देश इति।** सूत्रे वृत्तौ च ककारानुबन्धवतो धातुसंज्ञानिमित्तस्य प्रत्ययस्योपलक्षणात् कण्ड्वादियकोऽपि ग्रहणम्, तेन 'भुरण्युः ( ऋ० १.६८.१ ) तुरण्यवोऽङ्गिरसो नक्षन्त' ( ऋ० ७.५२.३ ) सपर्येम सपर्यव ( ऋ० २.६.३ ) इत्यादि भवति। भाषायां च सुम्नयुशब्द उणादिषु मृगरवादिषु पाठाद् द्रष्टब्यः। **मित्रयुरिति।** 'क्यचि च' इतीत्वम्, 'अकृत्सार्वधातुकयोः' इति दीर्घत्वं

**भावबोधिनी**

आशंसुः [ चाहने वाला ] भिक्षुः [ माँगने वाला ] 'आङ् पूर्वक 'शंस्' इच्छा अर्थ वाली का ग्रहण है, स्तुति अर्थ वाली 'शंस' का नहीं। [ अतः आशंसुः = चाहने वाला। ] ॥ १६८ ॥

तच्छीलादि कर्ता अर्थ में 'विद्' धातु से नुम् आगम, और 'इष्' के 'ष्' का 'छ' निपातित करते हुये 'उ' प्रत्यय होता है। उदा० विन्दुः। [ विद् + उ, नुम् = न् आगम, अनुस्वार परसवर्ण। ] इसका अर्थ है वेदनशील = समझने वाला। ] इच्छुः = इच्छा करने वाला। [ इष् + उ, ष् का छ्, तुक् = त् आगम, श्चुत्व—इच्छुः। ] ॥ १६९ ॥

'क्य' यह क्यच्, क्यष् तथा क्यङ्—इन तीनों का सामान्यरूप से ग्रहण है। क्यप्रत्ययान्त धातु से वेदविषय में तच्छील आदि कर्ता अर्थों में 'उ' प्रत्यय होता है। उदा० मित्रयुः। [ मित्र को चाहने वाला। आत्मनः मित्रम् इच्छति इस अर्थ में 'सुप आत्मनः क्यच्' इस सूत्र से क्यच् = य प्रत्यय, सनाद्यन्त मानकर धातुसंज्ञा, "सुपो धातुप्रातिपदिकयोः" से विभक्तिलोप —मित्रय। दीर्घ और ईत्व प्राप्त होता है उसका निषेध हो जाता है। मित्रय + उ, "अतोलोपः" से 'अ' का लोप। ] संस्वेदयुः [ संस्वेद को लोहितादिगण का मानकर क्यष् = य प्रत्यय, संस्वेदय + उ, अलोप। ] सुम्नयुः। [ सुम्न इव आचरति – इस अर्थ में "कर्तुः क्यङ् सलोपश्च" सूत्र से क्यङ् प्रत्यय सुम्नय + उ, अलोप। ]

वेद में—इसका क्या फल है ? मित्रीयिता [ मित्र + क्यच्, ईत्व —मित्रीय + तृन्, इट् आगम। यहाँ लौकिक प्रयोग है, अतः 'उ' नहीं होता है। ] 'न छन्दस्यपुत्रस्य' ( पा. सू. ४।७।५ ) इस सूत्र से प्रतिषेध से दीर्घ नहीं होता है।

---

१. कोष्ठान्तर्गतः पाठो बहुषु हस्तलेखेषु न दृश्यते।

## ९४०. आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥ ( ३१५१ )

**आकारान्तेभ्य ऋवर्णान्तेभ्यश्च गम, हन, जन—इत्येतेभ्यश्छन्दसि विषये तच्छीलादिषु किकिनौ**

**न्यासः**

'कर्त्तुः क्यङ् सलोपश्च' इति क्यङ् ॥ १७० ॥

**आदृगमहनजनः किकिनौ लिट् च** ॥ परपदार्थेषु प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, यथा—गौर्वाहीकः, सिंहो माणवक इति। गौर्वाहीक इत्युक्ते गोशब्दोऽर्थान्तरे प्रयुक्तो विनापि वतिना गौरिवायमिति तुल्यशब्दरूपे वाहीके प्रतीयते। इह लिडिति स्वार्थादन्यत्र किकिनोः प्रयुक्तः। तस्मादसत्यपि वतिना योगेऽतिदेशो गम्यत इत्याह—**लिड्वच्च तौ भवत इति**। लिटा तुल्यौ=तुल्यधर्माणौ भवत इत्यर्थः। द्विर्वचनादिकं यल्लिटः कार्यं तत् किकिनोर्भवतीति भावः। कार्यातिदेशोऽयम्, न शास्त्रातिदेशः; कार्यातिदेशापेक्षया शास्त्रातिदेशस्याप्राधान्यात्। अप्राधान्यं तु शास्त्रातिदेशस्य कार्यत्वात्। यदि तर्हि कार्यातिदेशोऽयम् 'लः परस्मैपदम्' इति, परस्मैपदसंज्ञापि किकिनोः प्राप्नोति, ततश्चात्मनेपदिभ्यस्तौ न स्याताम्? नैष दोषः; लादेशस्य हि परस्मैपदसंज्ञा, न लकारस्य। 'ल' इति ह्यादेशापेक्षया तत्र षष्ठी, लादेशः परस्मैपदसंज्ञको भवतीति यावत्। न च किकिनौ लादेशौ, तत् कुतः परस्मैपदसंज्ञायाः प्रसङ्गः? तिबादयस्तर्हि कस्मान्न भवन्ति? तयोर्विधानसामर्थ्यात्। यदि तर्हि तिबादयः स्युः, किकिनोर्विधानमनर्थकं स्यात्—लिटमेव विदध्यादिति, न च तिबादिभिस्तच्छीलादयो विधीयन्ते? अनभिधानान्न भविष्यन्ति। क्वसुकानचौ कस्मान्न भवतः, न च तयोर्भाव आनर्थक्यं किकिनोरुपपद्यते; 'लिटः कानज् वा' 'क्वसुश्च' इति विकल्पेन क्वसुकानचोर्विधानात्? अनभिधानादेव तावपि न भविष्यतः, न हि ताभ्यां तच्छीलादयो विधीयन्ते; अत एवानभिधानात्। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावकर्मणोरपि किकिनौ न भवतः। यथैव हि 'भञ्जभासमिदो घुरच्' इति भञ्जेरुत्पन्नेन च घुरचा स्वभावात् कर्मकर्त्तैवाभिधीयते न कर्तृमात्रम्, तथा किकिन्भ्यामपि धातोरुत्पन्नाभ्यां स्वभावादेव

**पदमञ्जरी**

च न भवति, 'न छन्दस्यपुत्रस्य' इति निषेधात् ॥ १७० ॥

**आदृगमहनजनः किकिनौ लिट् च** ॥ किकिनौ लिट् चापरार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, गौर्वाहीक इतिवदित्याह—**लिड्वच्च तौ भवत इति**। किकिनौ भवतः, लिट् च प्रत्ययो भवतीत्ययं त्वर्थो न भवति; तथा हि सति 'लिट् किकिनः' इत्येव ब्रूयात्। कार्यातिदेशश्चायम्। यद्येवम्, 'लः परस्मैपदसंज्ञा किकिनोः स्यात्, ततश्च देङ्दृङादिभ्य आत्मनेपदिभ्यो न स्याताम्। न लकारस्य परस्मैपदसंज्ञा, किं तर्हि? तदादेशानाम्, न चैतावादेशौ। एवमपि भावकर्मकर्तृषु त्रिष्वपि लिड्वद्भावात्किकिनौ प्राप्नुतः? नैष दोषः; उत्पन्नयोर्लिट्कार्यमतिदेश्यम्। उत्पत्तिश्च तयोः कर्त्तर्येव भवति; 'कर्तरि कृत्' इत्यनेनास्यैवाक्यत्वात्। अनभिधानाद्वा भावकर्मणोर्न भविष्यतः। वर्तमानाधिकाराच्च वर्तमाने किकिनोर्विधानमिति भूतकालतापि विरोधान्नातिदिश्यते। स्वरूपाबाधेन च कार्यातिदेशः प्रवर्तत इति तिबादीनां कानच्क्वसोश्चाभावः। **आदिति**

**भावबोधिनी**

**विमर्श**—अधिकांश संस्करणों में 'मित्रीयिता।' 'न छन्दस्यपुत्रस्य' इति प्रतिषेधान्न दीर्घः।'' ऐसा पाठ मिलता है। परन्तु यह संगत नहीं है क्योंकि प्रत्युदाहरण रूप में लौकिक प्रयोग दिया गया है। अतः वेदविषयक सूत्र का उल्लेख अनावश्यक है। यहाँ यह भी संभव है कि सूत्र के उदाहरण—मित्रयुः संस्वेदयु सुम्नयुः—इनके बाद प्रस्तुत पाठ हो रहा हो। कालान्तर में किसी संपादकादि द्वारा वहाँ से हटा कर आगे जोड़ दिया गया हो ॥ १७० ॥

आकारान्त, ऋकारान्त और गम्, हन तथा जन्—इन धातुओं से वेदविषय में तच्छीलादि अर्थों में 'कि' तथा

**प्रत्ययौ भवतः, लिड्वच्च तौ भवतः। आदिति दकारो मुखसुखार्थः, न त्वयं तपरः; मा भूत्—तादपि परस्तपर इति ऋकारे तत्कालग्रहणम्। पपिः सोमं ददिर्गाः। ( ऋ० ६.२३.४ ) ददथुः मित्रावरुणा ततुरिः ( ऋ० ४.३९.२ )। मित्रावरुणौ ततुरिः। दूरे ह्यध्वा जगुरिः ( ऋ० १०.१०८.१ )। जग्मिर्युवा ( ऋ० ७.२०.१ )। जघ्निर्वृत्रम् ( ऋ० ९.६१.२० )। जज्ञिर्बीजम् ( तै० सं० ७.५.२०.१ )।**

**अथ किमर्थं कित्त्वम्, यावता 'असंयोगाल्लिट् कित्' ( १.२.५ ) सिद्धमेव ? 'ऋच्छत्यॄताम्' ( ७.४.११ ) इति लिटि गुणः प्रतिषेधविषय आरभ्यते, तस्यापि बाधनार्थं कित्त्वम्।**

**न्यासः**

कर्त्तर्येवाभिधीयते, न भावकर्मणी। **आदिति दकारो मुखसुखार्थ इति**। तपरत्वनिरासार्थमेतत्। अत एवाह—**न त्वयं तपर इति**। किं पुनः कारणं तपरो नेष्यत इत्याह—**मा भूदित्यादि**। 'तपरस्तत्कालस्य' इति तादपि पर इति पञ्चमीसमासोऽप्याश्रितः। 'वृद्धिरादैच्' इत्यत्र त्रिमात्रचतुर्मात्रयोरैचां वृद्धिसंज्ञा मा भूदित्येवमर्थम्। ततश्च यद्येवं तपरः स्यात् तदा ऋकारोऽपि तपर एव स्यात्, ततश्च ऋकारेण तत्कालानां मात्रिकाणामेतद् ग्रहणं स्यात्, न पुनर्दीर्घाणाम्। तत्र को दोषः ? दधिश्चक्रिरित्येवमादावेव स्याताम्; ततुरिः, जगुरिरित्येवमादौ च न स्याताम्। तस्मात् मा भूदित्येष दोष इति तपरत्वमत्र नेष्यते। **पपिः सोममिति**। 'आतो लोप इटि च' इत्याकारलोपः, द्विर्वचनम्, अभ्यासस्य ह्रस्वः। 'न लोकाव्ययनिष्ठा' इत्यादिना षष्ठीप्रतिषेधः कार्य इति सोम-शब्दात् कर्मणि द्वितीयैकवचनं भवति। **ददिरिति**। 'डुदाञ् दाने'। **ततुरिरिति**। 'बहुलं छन्दसि' इत्युत्त्वम्, रपरत्वञ्च। 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् तॄशब्दो द्विरुच्यते। 'उरत्' इत्यत्त्वम्, रपरत्वम्, हलादिशेषः। **जगुरिरिति**। 'गॄ निगरणे'। **जग्मिः, जघ्निरिति**। 'गमहन' इत्यादिनोपधालोपः। जनेर्नकारस्य 'स्तोः श्चुना श्चुः' इति श्चुत्वं ञकारः।

**अथेत्यादि** चोद्यम्। **ऋच्छत्यॄतामित्यादिना** परीहारः।

**पदमञ्जरी**

**दकारो मुखसुखार्थ इति**। आदित्ययं दकारः, स च मुखसुखार्थ इत्यर्थः। **न त्वयं तपर इति**। तश्चासौ परश्च तपरो नायमकारात्परस्तकारो जश्त्वेन निर्दिष्ट इत्यर्थः। किं कारणमित्याह—**मा भूदिति**। **तकारो मुखसुखार्थ** इति पाठे तु आदित्ययं तकारः स मुखसुखार्थः, न तु तपरकार्यसम्पादनार्थ इत्यर्थः। **पपिः सोममिति**। 'न लोकाव्यय' इति षष्ठीप्रतिषेधो लिटः कार्यमिति सोमशब्दाद् द्वितीया। **ततुरिरिति**। 'बहुलं छन्दसि' इत्युत्वम्। 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'तॄ' इत्येतद् द्विरुच्यते। **जज्ञिरिति**। 'गमहन' इत्युपधालोपः, चुत्वम्।

**तद्बाधनार्थं कित्त्वमिति**। अर्तेर्ऋकारान्तानां च किकिनोर्गुणो मा भूदित्येवमर्थमित्यर्थः।

**भावबोधिनी**

'किन्' प्रत्यय होते हैं और ये लिट्वत् हो जाते हैं। 'आद्' यह दकार मुखसुखार्थ ( उच्चारणसुविधार्थ ) है, तपर नहीं है। क्योंकि 'त' से परे भी तपर माना जाता है इस लिये ऋकार में तत्काल [ अर्थात् ह्रस्व ] का ग्रहण नहीं होना चाहिये। उदा० पपिः सोमम्। ददिः गाः। [ सोम पीने वाला। गायें देने वाला। पा + कि इ, लिड्वद्भाव के कारण द्वित्वादि के बाद पपा + इ, "आतो लोप इटि च" सूत्र से 'आ' का लोप—पपिः। दा + किन् = इ, लिड्वद्भाव, दित्वादि कार्य—ददा + इ, आलोप—ददिः। ] मित्रावरुणौ ततुरिः। [ तॄ + कि इ, द्वित्व, 'उरत्' सूत्र से ऋ का 'अ' रपरे, हलादि शेष ततॄ + इ, "बहुलं छन्दसि" सूत्र से 'ऋ' का 'उ', रपर ततुर् + इ = ततुरिः। पार करने वाले। ] दूरे ह्यध्वा जगुरिः। [ गॄ + कि = इ, द्वित्व आदि कार्य के बाद ऋ का उत्व करने पर जगुरिः रूप बनता है। ] जग्मिर्युवा। [ गम् + कि = इ, द्वित्वादि के बाद जश्त्व, 'गमहनजन०' सूत्र से उपधालोप—जग्मिः। ] जघ्निः वृत्रम्। [ हन् + कि = इ, द्वित्वादि के बाद 'ह' का झ और झ का जश्त्व, उपधालोप, ह् का कुत्व—जघ्निः ] जघ्निः बीजम्। [ जन् + कि = इ, द्वित्वादि कार्य के बाद उपधालोप जज्न् + इ, श्चुत्व द्वारा न् = ञ्, ज् + ञ् = ज्ञ—जज्ञिः। ]

यह प्रत्यय कित् क्यों किया गया है क्योंकि "असंयोगात् लिट् कित्" से कित्व सिद्ध ही है ? "ऋच्छत्यॄताम्" यह लिट् परे गुण प्रतिषेधविषयक आरब्ध किया जाता है, इसका भी बाध करने के लिये कित् है अर्थात् ऋ और ॠकारान्तों का कि और किन् परे गुण न हो इसी के लिये कित् किया गया है।

❀ किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ❀ (म० भा ३.२.१७१ वा० २)। सेदिः ( तै० सं० ४.२२.१ )। नेमिः ( ऋ० २.५३ )।

❀ भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः किकिनौ वक्तव्यौ ❀ ( वा० ३ )। दधिः। चक्रिः। सस्रिः। जज्ञिः। जग्मिः। नेमिः।

❀ सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ ❀ ( वा० ५ ) 'दीर्घोऽकितः' ( ७.४.८३ )। सासहिः। वावहिः। चाचलिः। पापतिः॥

**न्यासः**

**उत्सर्गश्छन्दसीत्यादि**। सामान्येन विधानम्—उत्सर्गः। एतदुक्तं भवति—प्रकृतिविशेषमनुपादाय धातुमात्रात् किकिनोरुत्पादौ द्रष्टव्याविति। धातुमात्राद् विधातव्याविति यावत्। कुतो हेतोरित्याह—**सदादिभ्योऽपि दर्शनादिति**। सदादिभ्योऽपि सूत्रानुपात्तेभ्यः किकिनौ यस्माद् दृश्येते तस्मादुत्सर्गः कर्त्तव्यः। **सेदिः, नेमिरिति**। पूर्ववदेत्त्वाभ्यासलोपौ। 'षद्लृ विशरणगत्यवसादनेषु', 'णम प्रह्वत्वे शब्दे', 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ।

**दधिः, चक्रिरिति**। धाञः पूर्ववदाकारलोपः। **चक्रिः, सस्रिरिति**। करोतेः सर्त्तेश्च यणादेशः। **जज्ञिरिति**। जनेः पूर्ववच्चुत्वोपधालोपौ। **नेमिरिति**। पूर्ववदेत्त्वाभ्यासलोपौ।

**सहिवहीत्यादि**। भाषायामपि वर्त्तते। **सासहिरित्यादि**। सहादिभ्यो यङ्, द्विर्वचनम्, पूर्ववदकारयलोपौ॥ १७१॥

**पदमञ्जरी**

**उत्सर्ग इति**। धातुमात्राद्विधानं कर्तव्यमित्यर्थः। कस्मादित्यत्राह—**सदादिभ्यो दर्शनादिति**। **सेदिः, नेमिरिति**। सदेर्नमेश्चैत्वाभ्यासलोपौ।

**सहिवहीत्यादि**। अत्र भाषायामित्यपेक्ष्यते। **पापतिरिति**। 'नीग्वञ्चु' इत्यादिना नीगागमः प्राप्तः 'सासहिवावहिचाचलिपापतीनां निपातनम्' ( कात्या० २१४४ ) इति वार्त्तिककारवचनान्न भवति। इदं तु

**भावबोधिनी**

❀ कि और किन् ये वेद में उत्सर्ग = सामान्य विधान हैं क्योंकि [ सूत्र में अनुपात्त ] 'सद्' आदि से भी ये प्रत्यय देखे जाते हैं। उदा० सेदिः। नेमिः। [ सद् + कि, लिड्वद्भाव, द्वित्व "अत एकहल्मध्ये" इस सूत्र से अभ्यासलोप और 'अ' का 'ए'--सेद् इ। नम् + कि = इ, द्वित्वादि के बाद अभ्यासलोप, एत्व--नेम् + इ। ]

❀ भाषा = लौकिक संस्कृत में धाञ्, कृञ्, सृ, जनि, गमि, और नमि--इन धातुओं से 'कि' तथा 'किन्' प्रत्यय कहने चाहिये। ❀ दधिः [ धा + कि = इ, द्वित्व, अभ्यास कार्य, जश्त्व दधा + इ, आलोप--दध् इ = दधिः। धारण करने वाला ] चक्रिः [ कृ + कि = इ, द्वित्व, ऋ का अत्व, रपर, हलादि शेष, क का च--चकृ + इ, यण्--चक्रिः। ] सस्रिः। [ सृ + कि = इ, द्वित्व, अत्व, रपर आदि के बाद ससृ + इ यण्--सस्रिः। ] जज्ञिः। [ जन् + इ, द्वित्वादि के बाद उपधालोप जज्न् + इ, श्चुत्व तथा ज् + ञ् = ज्ञ्--जज्ञिः ] जग्मिः। [ गम् + कि = इ द्वित्वादि के बाद जगम् + इ, उपधालोप--जग्मिः ] नेमिः। [ नम् + कि, द्वित्व, अभ्यासलोप अ का एत्व--नेमिः ]

❀ सहि, वहि, चलि और पति--इन यङन्तों से भी 'कि' तथा 'किन्' प्रत्यय कहने चाहिये। ❀ यङ् प्रत्यय करने पर "दीर्घोऽकितः" सूत्र से दीर्घ होता है। उदा० सासहिः। [ सह + यङ्, द्वित्व अभ्यासकार्य, 'दीर्घोऽकितः' से दीर्घ--सासह्य + कि = इ, अलोप, यलोप--सासहिः। ] वावहिः। [ यङन्त वावह्य + कि = इ, अलोप, यलोप--वावह् + इ = वावहिः ] चाचलिः। [ 'चाचल्य' इस यङन्त से कि = इ प्रत्यय, अलोप, यलोप--चाचल् इ। ] पापतिः। [ यङन्त पापत्य + कि = इ, अलोप यलोप--पापत् इ = पापतिः। सहन करने वाला। ढोने वाला। चलने वाला। गिरने वाला--ये अर्थ हैं। ] ॥ १७१ ॥

## ९४१. स्वपितृषोर्नजिङ् ॥ १७२ ॥ ( ३१५२ )

**'छन्दसि' इति निवृत्तम् । स्वपेस्तृषेश्च तच्छीलादिषु कर्तृषु नजिङ् प्रत्ययो भवति । स्वप्नक् । तृष्णक् ।**
**❀ धृषेश्चेति वक्तव्यम् ❀ ( ? ) । धृष्णक् ॥**

## ९४२. शॄवन्द्योरारुः ॥ १७३ ॥ ( ३१५३ )

**'शॄ हिंसायाम्' ( धा० पा० १४८९ ), 'वदि अभिवादनस्तुत्योः' ( धा० पा० ११ )—इत्येताभ्यां धातुभ्यां तच्छीलादिषु कर्तृष्वारुः प्रत्ययो भवति । शरारुः । वन्दारुः ॥**

## ९४३. भियः क्रुक्लुकनौ ॥ १७४ ॥ ( ३१५४ )

**'ञिभी भये'—( धा० पा० १०८५ ) अस्माद्धातोः तच्छीलादिषु कर्तृषु क्रुक्लुकनौ प्रत्ययौ भवतः । भीरुः । भीलुकः ।**

**❀ क्रुकन्नपि वक्तव्यः ❀ ( म० भा० ३.२.१७४ वा० १ ) । भीरुकः ॥**

**न्यासः**

**स्वपितृषोर्नजिङ् ॥ स्वप्नक्, तृष्णगिति ।** 'ञिष्वप् शये', 'ञितृषा पिपासायाम्', 'चोः कुः' इति कुत्वम्—गकारः । तस्य 'वावसाने' इति चर्त्वम्- ककारः । नजिङो ङकारस्तृषेश्च गुणप्रतिषेधार्थः, इकार उच्चारणार्थः ॥ १७२ ॥

**शॄवन्द्योरारुः ॥** शृणोतेः 'लषपत' इत्यादिनोकञपि भवति । वन्दतेः 'अनुदात्तेतश्च' इत्यादिना युचि प्राप्ते वचनमिदम् ॥ १७३ ॥

**भियः क्रुक्लुकनौ ॥ क्रुकन्नपि वक्तव्यमिति !** क्रुकन्नित्यपरः प्रत्ययो वाच्यः, व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'आदृगमहन' इत्यादेः सूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेन क्रुकन्नपि भविष्यतीति ॥ १७४ ॥

**पदमञ्जरी**

वृत्तौ पठितं वाक्यम् ! अपर आहेति भाष्ये पठितम्, तत्रापि **भाष्यकार**वचनान्नीगभावः । उक्तं हि तेन—तान्येवोदाहरणानीति ॥ १७१ ॥ १७२–१७४ ॥

**भावबोधिनी**

'छन्दसि' इसकी निवृत्ति हो जाती है । स्वप् और तृष्—इन से तच्छीलादि कर्ता अर्थों में 'नजिङ्' प्रत्यय होता है । उदा० स्वप्नक् । [ स्वप् + नजिङ् = नज्, स्वप्‌नज् "चोः कुः" से कुत्व ज् का ग्, "वाऽवसाने" सूत्र से वैकल्पिक चर्त्व—स्वप्नक्, स्वप्नग्—दो रूप होते हैं । ] तृष्णक् [ तृष् + नजिङ् = नज्, णत्व, कुत्व चर्त्व—तृष्णक्, तृष्णग्—रूप होते हैं । ]

❀ 'धृष से भी नजिङ् कहना चाहिये । ❀ धृष्णक [ 'धृष् + नजिङ् = नज्, णत्व, कुत्व, चर्त्व—धृष्णक्, धृष्णग् । ] ॥ १७२ ॥

'शॄ' यह हिंसा अर्थ में हैं 'वदि यह अभिवादन और स्तुति अर्थों में है ।'—इन धातुओं से तच्छीलादि कर्ता अर्थों में 'आरु' प्रत्यय होता है । उदा० शरारुः । वन्दारुः । [ शॄ + आरु, गुण, रपर शर् + आरुः । 'वदि इलोप, नुम् आगम वन्द् + आरु ] ॥ १७३ ॥

'ञिभी भय अर्थ में है—इस धातु से तच्छीलादि कर्ता अर्थों में क्रुक् और लुकन् प्रत्यय होते हैं । उदा० भीरुः, भीलुकः । [ भी + क्रुक् = उ, कित् होने से गुणनिषेध । भी + लुकन् = लुक ]

❀ क्रुकन् भी कहना चाहिये । * भीरुकः । [ भी + क्रुकन् = रुक = भीरुकः । डरने वाला—यही अर्थ है । ] ॥ १७४ ॥

## ९४४. स्थेशभासपिसकसो वरच् ।। १७५ ।। ( ३१५५ )

'ष्ठा गतिनिवृत्तौ' ( धा० पा० ९२९ ), 'ईश ऐश्वर्ये' ( धा० पा० १०२१ ), 'भासृ दीप्तौ' ( धा० पा० ६२४ ) 'पिसृ गतौ' ( धा० पा० ७१९,७२० ) 'कस गतौ' ( धा० पा० ८६१ )—इत्येतेभ्यस्तच्छीलादिषु कर्तृषु वरच प्रत्ययो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ।।

## ९४५. यश्च यङः ।। १७६ ।। ( ३१५६ )

'या प्रापणे' ( धा० पा० १०५० )—अस्माद्यङन्तात्तच्छीलादिषु कर्तृष वरच् प्रत्ययो भवति । यायावरः ।।

## ९४६. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।। १७७ ।। ( ३१५७ )

भ्राजादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् प्रत्ययो भवति । विभ्राट्, विभ्राजौ, विभ्राजः । भाः,

### न्यासः

**स्थेशभासपिसकसो वरच् । स्थावर इति ।** 'एकाच' इत्यादिनेट्प्रतिषेधः । ईश्वर इत्यादावपि 'नेड् वशि कृति' इति । तिष्ठतेः पूर्वसूत्रविहितौ क्स्नुकञावपि वचनाद् भवतः । ईशभासोः पूर्ववद् युचि प्राप्त इदं वचनम् ।। १७५ ।।

**यश्च यङः ।। यायावर इति ।** पूर्ववदकारयकारलोपौ ।। १७६ ।।

**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।।** 'भ्राज दीप्तौ', 'भासृ दीप्तौ', 'उर्वी तुर्वी थुर्वी धुर्वी हिंसार्थाः', 'द्युत दीप्तौ', 'ऊर्ज बलप्राणनयोः', 'पॄ पालनपूरणयोः', 'जु' इति सौत्रो धातुः, 'ष्टुञ् स्तुतौ' ग्रावपूर्वः । विभ्रा-

### पदमञ्जरी

**स्थेशभासपिसकसो वरच् ।। ईश्वर इति ।** 'नेड्वशि कृति' इतीट्प्रतिषेधः । स्त्रियामीश्वरा । ''विन्यस्तमङ्गलमहौषधिमीश्वरायाः ।'' 'ईश्वरीं सर्वभूतानाम्' ( ऋ० खि० २.६.९ ) इति तु छान्दसः । औणादिको वरडित्यन्ये । 'पुंयोगादाख्यायाम्' इत्यन्ये । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिपि 'वनो र च' इति ङीब्रावित्यन्ये ।। १७५ ।।

**यश्च यङः ।। यायावर इति ।** पूर्ववदिटि प्रतिषिद्धे 'अतो लोपः', 'लोपो व्योर्वलि', अल्लोपस्य स्थानिवत्त्वादाल्लोपः प्राप्तो वरे कृतस्य स्थानिवत्त्वनिषेधान्न भवति ।। १७६ ।।

**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।।** 'भ्राजृ दीप्तौ' ( धा० पा० १८१ ), 'भासृ दीप्तौ', ( धा०

### भावबोधिनी

'ष्ठा' यह गतिरोकना = बैठना अर्थ में है; 'ईश्' यह ऐश्वर्य अर्थ में है' 'भासृ' यह दीप्त होना अर्थ में है', 'पिसृ पेसृ'—ये गति अर्थ में हैं', 'कस' यह गति अर्थ में है—इन धातुओं से तच्छीलादि कर्ता अर्थों में 'वरच्' प्रत्यय होता है उदा० स्थावरः [ ''धात्वादेषः स'' इस सूत्र से 'ष्ठा' के ष् का स् कर देने पर ष्टुत्व के भी समाप्त हो जाने से—स्था + वरच् = वर । स्थिर रहने वाला । ] ईश्वरः । [ ऐश्वर्ययुक्त होने वाला । ] भास्वरः । [ चमकने वाला ] विकस्वरः । [ खिलने वाला । ] ।। १७५ ।।

''प्रापण = पहुँचाना अर्थ में 'या' धातु है'' इस यङन्त 'या' धातु से तच्छीलादि कर्ता अर्थों में 'वरच्' प्रत्यय होता है । उदा० यायावरः । [ या + यङ्, द्वित्वादि करने पर—यायाय + वरच् = वर ''अतो लोपः'' सूत्र से अलोप ''लोपो व्योर्वलि'' से 'य्' का लोप—यायावरः [ बार-बार या बहुत अधिक घूमने वाला । ] ।। १७६ ।।

भ्राज आदि धातुओं से तच्छीलादि कर्ता अर्थों में क्विप् प्रत्यय होता है । उदा० विभ्राट्, विभ्राजौ, विभ्राजः । [ विपूर्वक 'भ्राज्' + क्विप्, सर्वापहारी लोप, ''व्रश्चभ्रस्जसृज०'' आदि से 'ज्' का 'श्' जश्त्व से 'ष्' का 'ड्' और चर्त्व से 'ड्' का 'ट्'—विभ्राट् । द्विवचन में—विभ्राज् औ ' बहुवचन में—विभ्राज् + जस् = अस्, स् का रुत्व विसर्ग ]

**भासौ, भासः । धूः, धुरौ, धुरः । विद्युत्, विद्युतौ, विद्युतः । ऊर्क्, ऊर्जौ, ऊर्जः । पूः, पुरौ, पुरः ।**

**❀ जवतेर्दीर्घश्च निपात्यते ❀ ( ? ) । जूः, जुवौ, जुवः । ग्रावस्तुत्, ग्रावस्तुतौ, ग्रावस्तुतः ।**

**किमर्थमिदमुच्यते, यावता 'अन्येभ्योऽपि दृश्यते' ( ३.२:७५ ) 'क्विप् च' ( ३.२.७६ ) इति क्विप्सिद्ध एव ? ताच्छीलिकैर्बाध्यते । वाऽसरूपविधिर्नास्तीत्युक्तम् । अथ तु प्रायिकमेतत् ? ततस्तस्यैवायं प्रपञ्चः ॥**

**न्यासः**

**डिति** । व्रश्चादिसूत्रेण षत्वम् । पूर्ववज् जश्त्वं चर्त्वञ्च । **धूरिति** । 'राल्लोपः' इति वकारलोपः, 'र्वोरुपधाया दीर्घ इकः' इति दीर्घः । **पूरिति** । 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्' रपरत्वञ्च, पूर्ववद्दीर्घत्वम् । **जवतेर्दीर्घश्चेति** । कथम् ? केचिदाहुः—सूत्रे 'जू' इति दीर्घः पठितव्य इति । अपरे त्वाहुः—उत्तरसूत्रे दृश्यत इत्युभयोरपि योगयोः शेषः, तच्च विध्यन्तरोपसंग्रहार्थम्, अतो जवतेर्दीर्घो विधीयत इति । ग्रावाणं स्तौतीति **ग्रावस्तुत्** । 'ह्रस्वस्य पिति कृति तुक्' ।

**किमर्थमिदमित्यादि** चोद्यम् । **ताच्छीलिकैर्बाध्यत इति** परीहारः । स्यादेतत्—वाऽसरूपविधिना क्वचिदपि भविष्यतीत्याह—**वाऽसरूपविधिश्चेति** । एतत् तु 'निन्दहिंस' इत्यादौ सूत्र उक्तम् । ननु च 'सूददीपदीक्षश्च' इति सूत्रे प्रायिकत्वं ज्ञापकस्य प्रतिपादितम्, वाऽसरूपविधिश्चात्र नास्तीत्याह—**तस्यैवेति** । 'अन्येभ्योऽपि दृश्यते', 'क्विप् च' इत्यस्यैव । भ्राजिद्युतोः पूर्ववद् युचि प्राप्तेऽयं प्रत्ययः । भासेर्वरजपि 'स्थेशभास' इत्यादिना भवति ॥ १७७ ॥

**पदमञ्जरी**

पा० ६२४ ) 'तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम्' ( धा० पा० ५७०-५७३ ), 'द्युत दीप्तौ' ( धा० पा० ७४१ ), 'ऊर्ज बलप्राणनयोः' ( धा० पा० १५४९ ), 'पॄ पालनपूरणयोः' ( धा० पा० १०६८ ), 'जु' इति सौत्रो धातुः', 'ष्टुञ् स्तुतौ' ( धा० पा० १०४३ ) ग्रावपूर्वः ।

**जवतेर्दीर्घत्वं चेति** । केचिदाहुः—सूत्रे 'जू' इति दीर्घः पठितव्य इति । विध्यन्तरोपसंग्रहार्थं दृशिग्रहण-मुत्तरसूत्रादपकृष्टव्यमित्यन्ये । **ग्रावस्तुदिति** । ग्रावशब्दः सप्तमीनिर्देशाभावेऽप्युपपदसंज्ञ इष्यते । अन्ये तु सूत्र-निर्देशाद्धातुनैव समासे पश्चात्क्विपं कुर्वन्ति ॥ १७७ ॥

**भावबोधिनी**

भाः, भासौ, भासः । [ भास् + क्विप् सर्वापहारी लोप—भास्, स् का रुत्व, विसर्ग—भाः, द्विवचन में—भास् + औ, बहुवचन में भास् + जस् ] धूः, धुरौ, धुरः । [ धुर्वी = धुर्व् + क्विप्, सर्वापहारी लोप, "राल्लोपः" सूत्र से 'व्' लोप और "र्वोरुपधाया दीर्घ इकः" सूत्र से उपधा उकार का दीर्घ, रेफ का विसर्ग—धूः, द्विवचन में धुर् + औ, बहुवचन में धुर् + जस् = अस् ] विद्युत्, विद्युतौ, विद्युतः । [ विपूर्वक 'द्युत्' + क्विप् सर्वापहारी लोप—विद्युत् ] ऊर्क्, ऊर्जौ, ऊर्जः । [ उर्ज् + क्विप्, सर्वापहारी लोप, उपधादीर्घ, ज् को कुत्व, चर्त्व—ऊर्क् । ] पूः पुरौ, पुरः । [ पॄ + क्विप्, सर्वापहारी लोप, "उदोष्ठ्यपूर्वस्य" सूत्र से ॠ का 'उ', रपर, दीर्घ, रेफ का विसर्ग—पूः, पुर् + औ, पुर् + जस् । ] विभ्राट् = चमकने वाला, भाः = चमकने वाला, धूः = हिंसा करने वाला, विद्युत् = चमकने वाला, बिजली, ऊर्क् = बल प्रदान करने वाला, पूः = पालन और पूरण करने वाला ] * 'जु' से क्विप् होता है और दीर्घ भी निपातित होता है ।* उदा० जूः, जुवौ, जुवः [ 'जु' इस सौत्र धातु से क्विप्, सर्वापहारी लोप, जु + सु, दीर्घ, स् का रुत्व, विसर्ग—जूः । जु + औ, उवङ् जुव् औ, जु + जस् = अस्, 'उ' का उवङ्, स् का रुत्व, विसर्ग ] ग्रावस्तुत्, ग्रावस्तुतौः । [ ग्रावाणं स्तौति—इस विग्रह में क्विप् प्रत्यय, सर्वापहारी लोप, उपपदसमास, विभक्तिलोप, नुलोप—ग्रावस्तु । "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक् = त्—ग्रावस्तुत् । पत्थर की स्तुति करने वाला । ]

यह सूत्र किस लिये किया जा रहा है क्योंकि "अन्येभ्योऽपि दृश्यते" इससे क्विप् सिद्ध ही है ? वह क्विप् तच्छीलादि अर्थों में विहित प्रत्ययों से बाधित हो जाता है । यहाँ "वाऽसरूपोऽस्त्रियाम्" यह विधि लागू नहीं होती है । यह कहा जा चुका है । यदि यह कहें कि यह निषेध प्रायिक है ? तब तो उसी [ "अन्येभ्योऽपि दृश्यते" इसी सूत्र ] का प्रपञ्च [ = विस्तार ] यह सूत्र हैं ॥ १७७ ॥

## ९४७. अन्येभ्योऽपि दृश्यते ॥१७८॥ (३१५८)

**अन्येभ्योऽपि धातुभ्यस्ताच्छीलिकेषु क्विप् प्रत्ययो दृश्यते । युक् । छित् । भित् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः, क्वचिद्द्विर्वचनम्, क्वचित्संप्रसारणम्, क्वचिदसंप्रसारणम् । तथा चाह—**

**❀ क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ❀ ( म० भा० ३.२.१७८ वा० २ ) । वचि—वाक् । प्रच्छि—शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । जुग्रहणेनात्र नार्थः; भ्राजादिसूत्र ( ३.२.१७७ ) एव गृहीतत्वात् ।**

### न्यासः

**अन्येभ्योऽपि दृश्यते** ॥ ननु चान्येभ्योऽपीत्येतावतैव सिद्धम्, तत् किमर्थं दृशिग्रहणमित्यादि ? क्वचिदित्यादिना येषामुपसंग्रहार्थं दृशिग्रहणं तानि विध्यन्तराणि दर्शयति । यस्मात् विध्यन्तराणामुपसंग्रहार्थं दृशिग्रहणम्, एवञ्च कृत्वा **वृत्तिकारः** 'क्विब्वचिपृच्छि' इत्यादिकं वाक्यं पठति । दृशिग्रहणोपात्तानि तान्येव विध्यन्तराणि दर्शयितुमित्यभिप्रायः । कथं पुनर्दृशिग्रहणेन विध्यन्तरोपसंग्रहः ? दृशिग्रहणे हि सति 'यथा दृश्यन्ते क्विबन्ता धातवस्तथैव तेऽनुगन्तव्याः' इत्येषोऽर्थो लभ्यते । तस्मिंश्चार्थे लभ्यमाने द्विर्वचनादिविधयः संगृहीता भवन्ति । एवं हि ते यथा दृश्यन्ते तथानुगता भवन्ति । यदि यथायोगं द्विर्वचनादयो विधीयन्ते, तदा क्विबन्तेषु क्वचिद् द्विर्वचनं दृश्यते, क्वचिदपि संप्रसारणमिति युक्तमुक्तम्—**दृशिग्रहणं विध्यन्तरोपसंग्रहार्थमिति** ।

**वागिति** । वचेर्वच्यादिसूत्रेण प्राप्तस्य संप्रसारणस्याभावः क्रियते । **शब्दप्राडिति** । पृच्छेरपि ग्रह्यादिसूत्रेण संप्रसारणस्य । व्रश्चादिसूत्रेण षत्वम्, पूर्ववज्जश्त्वं चर्त्वञ्च । आयतं स्तौतीति **आयतस्तूः** । 'ष्टुञ् स्तुतौ' ।

### पदमञ्जरी

**अन्येभ्योऽपि दृश्यते । विध्यन्तरोपसंग्रहार्थमिति** । दृशिग्रहणे सति यथा क्विबन्ता धातवो दृश्यन्ते, तथैव तेऽनुगन्तव्या इत्यर्थो भवति । एवं च ते तथानुगता भवन्ति यदि यथायोगं द्विर्वचनादयो भवन्ति । विध्यन्तरमेव दर्शयति—**क्वचिदिति । तथा चाहेति । वार्त्तिककारः** । आयतं स्तौत्यायतस्तूः । कटं प्रवते **कटप्रूः** । **दिद्युदिति** । 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्यभ्यासस्य सम्प्रसारणम् । कथं पुनरभ्याससंज्ञा, यावता प्रत्यासत्तेः षाष्ठिक एव द्विर्वचने सा विधीयते अत एवाष्टमिके न भवति ? एवं तर्हि दृशिग्रहणादेव सम्प्रसारणम्, अभ्याससंज्ञा च द्रष्टव्या । **जगदिति** । 'गमः क्वौ' इति मलोपः । अत्रापि पूर्ववदेवाभ्यासकार्यम् ।

### भावबोधिनी

अन्य धातुओं से भी तच्छील आदि कर्ता अर्थों में क्विप् प्रत्यय दिखाई देता है । उदा० युक् [ युज् + क्विप् सर्वापहारी लोप, कुत्व, चर्त्व । मिलने वाला ] छित्, भित् । [ छिद् और भिद् से क्विप् और उसका लोप करके चर्त्व करने पर रूप बनता है । तोड़ने वाला—यही अर्थ है । ] 'दृशि' धातु का ग्रहण अन्य विधियों के उपसंग्रह के लिये है—कहीं दीर्घ, कहीं द्वित्व, कहीं सम्प्रसारण, कहीं सम्प्रसारण न होना । जैसा कि कहा गया है—❀ वच्, प्रच्छ्, आयतस्तु, कटप्रु, जु तथा श्रि---इनसे क्विप् होता है, दीर्घ होता है और सम्प्रसारण नहीं होता है । ❀ उदा० वचि—वाक् [ वच् + क्विप्, लोप, दीर्घ, सम्प्रसारणाभाव, वाच् + सु सुलोप, "चो कुः" से च् का क् । बोलने वाली ] प्रच्छ शब्दप्राट् । [ शब्दं पृच्छति-इस विग्रह में—शब्दम् उपपद प्रच्छ् + क्विप्, लोप उपपद समास विभक्तिलोप, दीर्घ, सम्प्रसारणाभाव—शब्दप्राच्छ् । "व्रश्चभ्रस्जसृज०" आदि सूत्र से 'छ' का 'ष', जश्त्व और चर्त्व करने पर—शब्दप्राट् = शब्द पूछने वाला । ] आयतस्तूः [ आयतं स्तौति—इस विग्रह में क्विप् और उसके लोप के बाद उपपदसमास, विभक्तिलोप, दीर्घ । ] कटप्रूः । [ कटं प्रवते—इस विग्रह में पूर्ववत् प्रत्यय, लोप और दीर्घ । ] जूः [ 'जु' से प्रत्यय, लोप और दीर्घ ] श्रीः [ श्रयति हरिं या सा—इस विग्रह में 'श्रि' से प्रत्यय उसका लोप और दीर्घ करने पर 'श्रीः' = लक्ष्मी ] यहाँ वार्तिक में 'जु' ग्रहण का फल नहीं है क्योंकि "भ्राजभास" पा० सू० ३।२।१७७ इस सूत्र में ही इसका उल्लेख है ।

**❀ द्युतिगमिजुहोतीनां द्वे च ❀ ( वा० ३ ) । दिद्युत् । जगत् ।**
**❀ जुहोतेर्दीर्घश्च ❀ ( वा० ३ ) । जुहूः ।**
**❀ 'दृ भये' ( धा० पा० ८०९ ) इत्यस्य ह्रस्वश्च द्वे च ❀ ( म० भा० वा० ४ ) । दद्दृत् ।**
**❀ ध्यायतेः संप्रसारणं च ❀ ( वा० ५ ) । धीः ।**

## ९४८. भुवः संज्ञान्तरयोः ।।१७९।। (३१५९)

**भवतेर्धातोः संज्ञायामन्तरे च गम्यमाने क्विप् प्रत्ययो भवति । विभूर्नाम कश्चित् । अन्तरे–प्रतिभूः । धनिकाधमर्णयोरन्तरे यस्तिष्ठति । स प्रतिभूरुच्यते ।।**

**न्यासः**

कटं प्रवत इति **कटप्रूः** । 'प्रुङ् गतौ' । **श्रीरिति** । 'श्रिञ् सेवायाम्' । **दिद्युदिति** । 'द्युत दीप्तौ' । 'द्युतिस्वाप्योः संप्रसारणम्' इत्यभ्यासस्य संप्रसारणम् । **जगदिति** । 'गमः क्वौ' इत्यनुनासिकलोपः । **दद्दृदिति** । 'उरत्' इत्यत्त्वम्, रपरत्वम्, हलादिशेषः । **धीरिति** । 'ध्यै चिन्तायाम्' । 'हल' इति दीर्घः ।। १७८ ।।

**भुवः संज्ञान्तरयोः** ।। **धनिकाधमर्णयोरित्यादि** । धनिको—यस्मै ऋणं धार्यते । अधमर्णो—यो धारयति । तदन्तरे मध्ये यस्तिष्ठत्यात्मपक्षपतितः संप्रत्ययहेतुः स प्रतिभूशब्देनोच्यते, न सर्वः । तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र प्रत्ययो न भवति । एतच्च शब्दशक्तिस्वाभाव्याल्लभ्यते, 'दृश्यते' इत्यस्यानुवृत्तेर्वा । अस्य ह्यनुवृत्तौ सत्याम्, यत्र लोके दृश्यते तत्रैव प्रत्ययेन भवितव्यम् । न च ग्रामयोरन्तरे यस्तिष्ठति तत्र प्रत्ययो दृश्यते । ननु प्रतिभूरिति संज्ञेयम्, तत् किमन्तरग्रहणेन, संज्ञायामित्येव वक्तव्यम् ? नैतदस्ति; द्रव्यता-

**पदमञ्जरी**

**द्वे चेति** । चकारेण दीर्घः समुच्चीयमानो दीर्घश्रुतया 'अचश्च' इत्युपस्थानादचा च तदन्तविध्याश्रयणाज्जुहोतेरेवाजन्तस्य विज्ञायते, न द्युतिगम्योरित्याह—**जुहोतेर्दीर्घत्वं चेति** । **जुहूरिति** । करणस्यात्र कर्तृत्वविवक्षा । **धीरित्यत्रापि** करणस्यैव कर्तृत्वविवक्षा, पुरुषो हि ध्यायति, न धीः ।। १७८ ।।

**भुवः संज्ञान्तरयोः** ।। **धनिकाधमर्णयोरिति** । यस्मै ऋणं धार्यते स धनिकः, यो धारयति सोऽधमर्णः, तयोरन्तरे—मध्ये यस्तिष्ठति विश्वासार्थं स प्रतिभूरित्युच्यते । ग्रामयोरन्तरे यस्तिष्ठति तत्र न भवति । एतच्च

**भावबोधिनी**

❀ 'द्युत्, गम् और 'हु' इनसे क्विप् प्रत्यय और द्वित्व होता है । ❀ दिद्युत् [ द्युत् + क्विप् , सर्वापहारी लोप, द्वित्व, हलादिशेष करके "द्युतिस्वाप्योः सम्प्रसारणम्" सूत्र से 'य्' का सम्प्रसारण, 'इ' और उकार का पूर्वरूप करने पर — दिद्युत् ] जगत् । [ गच्छति—इस विग्रह में—गम + क्विप्, सर्वापहारी लोप, द्वित्व, हलादिशेष, ग का ज—जगम् । "गमः क्वौ" इस सूत्र से अनुनासिक 'म्' का लोप, "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक् = त् आगम—जगत् । ]

❀ 'हु' का दीर्घ भी होता है । ❀ जुहूः । [ हु+क्विप्, लोप, द्वित्व, ह का झ, जश्त्व से ज—जुहु, दीर्घ करने पर जुहूः । ]

❀ 'दृ' 'भये' इसका ह्रस्व और द्वित्व होता है । ❀ दद्दृत् । [ दृ + क्विप्, लोप, द्वित्व, "उरत्" से ऋ का अ, रपर, हलादिशेष तुक् = त् आगम—दद्दृत् । ]

❀ 'ध्यै' का सम्प्रारण होता है । ❀ धीः [ ध्यै + क्विप्, लोप, य् का सम्प्रसारण 'इ' करने पर 'ऐ' का पूर्वरूप — धि, "हलः' इस सूत्र से दीर्घ, सु का रुत्व, विसर्ग—धीः = बुद्धि । ] १७८ ।।

संज्ञा और अन्तर अर्थ प्रतीयमान रहने पर 'भू' से क्विप् होता है । उदा० विभूः नाम कश्चित् । [ विभू नाम वाला कोई । विभू+क्विप्, लोप ] अन्तर—प्रतिभूः । [ प्रति भू + क्विप्, लोप । ] धनी और कर्जदार के मध्य में रहने वाला जो उसे 'प्रतिभू' [ जमानतदार ] ऐसा कहा जाता है ।। १७९ ।।

## ९४९. विप्रसंभ्यो ड्वसंज्ञायाम् ॥१८०॥ [३१६०]

**'भुवः' इति वर्त्तते। वि, प्र, सम्–इत्येवम्पूर्वाद् भवतेर्धातोः डुप्रत्ययो भवति, न चेत्संज्ञा गम्यते। विभुः सर्वगतः। प्रभुः स्वामी। संभुर्जनिता।**

**असंज्ञायामिति। किम्? विभूर्नाम कश्चित्।**

**※ डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम् ※ (म० भा० ३.२.१८० वा० १)। मितं द्रवति मितद्रुः। शंभुः॥**

## ९५०. धः कर्मणि ष्ट्रन् ॥१८१॥ [३१६१]

**धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन्प्रत्ययो भवति। षकारो ङीषर्थः। धयन्ति तां दधति वा भैषज्यार्थ-**

**न्यासः**

विधाता हि संज्ञाशब्दा भवन्ति, न चैवं प्रतिभूशब्दः। तथापि सत्यपि देवदत्ते कदाचिदसौ न प्रवर्तत एव ॥ १७९ ॥

**विप्रसम्भ्यो ड्वसंज्ञायाम् ॥ विभुरिति**। पूर्वेण क्विबेव भवति।

**मितद्र्वादिभ्य उपसंख्यानमिति**। अविशेषेण—संज्ञायाम्, असंज्ञायाञ्च। 'मितद्र्वादिभ्यः' इति तादर्थ्ये चतुर्थी। मितद्र्वादयो डुप्रत्ययान्ताः साधवो यथा स्युरित्येवमर्थः। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तच्च प्रतिपादनं प्रकृतत्वाड्डुशब्दस्य। तत्रेदं प्रतिपादनम्—'अन्येभ्योऽपि दृश्यते' इत्यतोऽपिशब्दोऽत्रानुवर्तते, तेन मितद्र्वादिभ्यो डुप्रत्ययो धात्वन्तरादपि भवति, पदान्तरे चेति ॥ १८० ॥

**धः कर्मणि ष्ट्रन् ॥ धयतेरिति**। 'धेट् पाने'। **दधातेरिति**। 'डुधाञ् धारणपोषणयोः'। **कर्मणि कारके**

**पदमञ्जरी**

दृशिग्रहणानुवृत्तेर्लभ्यते। यद्येवम्, संज्ञेयं भवति, तत्र 'संज्ञायाम्' इत्येव सिद्धम्? अत्राहुः—यावद्द्रव्यभाविन्यः संज्ञा भवन्ति, प्रतिभूशब्दस्तु सत्येव तस्मिन्नृणप्रतिदाने निवर्तते ॥ १७९ ॥

**विप्रसंभ्यो ड्वसंज्ञायाम् ॥ मितद्र्वादिभ्य इति**। मितादिपूर्वेभ्यो धातुभ्य इत्यर्थः। **शम्भुरिति**। अन्तर्भावितण्यर्थोऽत्र भवतिः ॥ १८० ॥

**धः कर्मणि ष्ट्रन् ॥ कर्मणि कारक इति**। उपपदं तु कर्म न सम्भवति, यदि स्यात् 'कर्मण्यण्' इत्य-

**भावबोधिनी**

'भुवः' की अनुवृत्ति होती है। वि, प्र तथा सम्—ये जिसके पूर्व में हैं, ऐसी 'भू' धातु से 'डु' प्रत्यय होता है, यदि संज्ञा की प्रतीति न हो रही हो तो। उदा० विभुः = सर्वगतः [ = सबमें रहने वाला। वि भू + डु = उ, डित् होने से टि = ऊ का लोप–विभ् उ। ] प्रभुः = स्वामी [ प्र भू + डु = उ, टिलोप ] संभुः = जनिता। [ = पैदा होने वाला। सम् भू + डु = उ, टि का लोप ]

संज्ञा अर्थ न होने पर—इसका क्या फल है? विभूः नाम कश्चित्। [ यहाँ संज्ञा है अतः 'डु' न होकर पूर्व सूत्र से क्विप् और उसका लोप ही होता है। ]

※ डु के प्रकरण में 'मितद्रु' आदि का भी उपसंख्यान करना चाहिये। ※ उदा—मितं द्रवति—इस विग्रह में—मितद्रुः। [ मितम् उपपद 'द्रु' से डु = उ प्रत्यय उपपदसमास विभक्तिलोप, टिलोप। ] शंभुः। [ शं भवति = भावयति—इस विग्रह में 'शम्' उपपद 'भू' से डु = उ प्रत्यय, टिलोप—शंभ् उ। सु का विसर्ग। इसमें णिच् का अर्थ अन्तर्भूत है। अतः शम् = कल्याण कराने वाला। ] ॥ १८० ॥

'धेट् पाने' और डुधाञ् धारणे'—इन धातुओं से कर्म कारक अर्थ में ष्ट्रन् प्रत्यय होता है। षकार [ 'षिद्गौरादिभ्यश्च" सूत्र से ] ङीष् करने के लिये है। उदा०—धयन्ति तां दधति वा लोकाः भैषज्यार्थम्—इस विग्रह में [ धे = धा, या धा से ष्ट्रन् प्रत्यय, ष् लोप, न् लोप कर देने पर ष्टुत्व समाप्त हो जाने से 'त्र' शेष—धा + त्र, ङीष् = ई, ] धात्री।

**मिति धात्री । स्तनदायिनी आमलकी चोच्यते ।**

## ९५१. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।।१८२।। (३१६२)

**'दाप् लवने'** ( धा० पा० १०६० ), **'णीञ् प्रापणे'** ( धा० पा० ९०२ ), **'शसु हिंसायाम्'** ( धा० पा० ७२७ ) **'यु मिश्रणे'** ( धा० पा० १०३४ ), **'युजिर् योगे'** ( धा० पा० १४४५ ), **'ष्टुञ् स्तुतौ'** ( धा० पा० १०४४ ), **'तुद व्यथने'** ( धा० पा० १२८२ ), **षिञ् बन्धने'** ( धा० पा० १२४९ ), **'षिचिर् क्षरणे'** ( धा० पा० १४३५ ), **'मिह सेचने'** ( धा० पा० ९९३ ), **'पत्लृ गतौ'** ( धा० पा० ८४६ ), **'दन्श दशने'** ( धा० पा० ९९० ), **'णह बन्धने'** ( धा० पा० ११६७ )**—इत्येतेभ्यो धातुभ्यः करणे कारके ष्ट्रन्प्रत्ययो भवति । दात्यनेनेति दात्रम् ।**

### न्यासः

**इति** । एतेन कर्मणः प्रत्ययार्थतां दर्शयन्नुपपदत्वमपाकरोति । यदि हि कर्मण उपपदत्वं स्यात् 'कर्मण्यण्' इत्यस्मिन्नेव प्रकरणे विदध्यात् । एवं हि द्विःकर्मग्रहणं न कर्त्तव्यं भवति । ननु च यद्यपि द्विःकर्मग्रहणं न कर्त्तव्यं भवति, तदाप्युत्तरसूत्रेण ष्ट्रन्ग्रहणं कर्त्तव्यं जायते ? जायतां नाम, लघीयो हि कर्मग्रहणात् ष्ट्रन्ग्रहणम् । नन्विह वर्त्तमान इत्यनुवृत्तं वर्तमानप्रत्ययो भवति, तत्र तु क्रियमाणे नैतल्लभ्यते ? नैतदस्ति; इहापि क्रियमाणे नैव वर्तमाने प्रत्ययो भवति । न हि धात्रीत्युक्ते काप्यविशेषा प्रतीयते, किं तर्हि ? क्रियाकारकसम्बन्धमात्रविशिष्टा स्त्री प्रतीयते—आमलकी च दधति तां भैषज्यार्थमिति कृत्वा । तस्मात् 'कर्मणि' इति प्रत्ययार्थ एव, नोपपदम् ॥ १८१ ॥

**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । दाप् लवन इति** । यथा 'दाधा घ्वदाप्' इति सूत्रे 'दैप् शोधने' इत्यस्यापि ग्रहणम् । तर्हीहापि कस्मान्न भवति ? अनभिधानात् । प्रकृत्यैव हि दात्रमिति ष्ट्रन्प्रत्ययान्तेन लवनस्य करणमुच्यते, न शोधनस्य । **करणे कारके इति** । एतेन करणप्रत्ययार्थतां दर्शयन्नुपपदत्वं

### पदमञ्जरी

स्मिन्नेव प्रकरणे ष्ट्रनं विदध्यात् । ननु चोत्तरसूत्रे पुनः ष्ट्रन्ग्रहणं कर्त्तव्यं स्यात्, अस्तु लघीयो हि कर्मग्रहणात् । ष्ट्रन्ग्रहणम् । न चेह वर्त्तमानकाले ष्ट्रन्प्रत्ययः, धात्रीत्युक्ते क्रियाकारकसम्बन्धमात्रं गम्यते । अतः 'कर्मणि' इति प्रत्ययार्थ एव, नोपपदम् ॥ १८१ ॥

**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥ दाप् लवन इति** । 'दैप् शोधने' ( धा० पा० ९२४ ) इत्यस्य त्वग्रहणम्, अनभिधानात् । **युजिर्योग इति** । 'युज समाधौ' ( धा० पा० ११७७ ) इत्यस्य तु पूर्ववदेवाग्रहणम् । **करणे कारके इति** । उपपदं तु करणं न भवति, अजादिषु दंष्ट्राशब्दस्य पाठात् । अत एव च पाठात्

### भावबोधिनी

जिसका स्तन पान करें अथवा जिसे औषध के लिये धारण करें—वह धात्री है । स्तन देने वाली धाय और आँवला को 'धात्री' ऐसा कहा जाता है ॥ १८१ ॥

दाप् लवन=काटना अर्थ में है', 'णीञ्' यह पहुँचाना अर्थ में है, 'शसु' यह हिंसा अर्थ में है', 'यु' यह मिलाना अर्थ में है, 'युजिर्' यह योग अर्थ में है', 'ष्टुञ्' यह स्तुति अर्थ में है,' 'तुद'यह व्यथन अर्थ में है, ''षिञ्' यह बन्धन अर्थ में है,' 'षिचिर' यह क्षरण=सींचना अर्थ में है', मिह्' यह सीचना अर्थ में है, 'पत्लृ' यह गमन अर्थ में है', 'दंश' यह दंसना अर्थ में है,' 'णह' यह बन्धन अर्थ में है'—इन धातुओं से करण कारक अर्थ में ष्ट्रन् प्रत्यय होता है । उदा० दाति अनेन—इस विग्रह में—दात्रम् । [ दाप्=दा + ष्ट्रन् = दात्रम्, जिससे काटा जाता है—हंसिया । ] नेत्रम्

**नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । अजादित्वात् टाप्, न ङीष् ।**

**दंशेरनुनासिकलोपेन निर्देशो ज्ञापनार्थः—क्ङितोऽन्यस्मिन्नपि प्रत्यये नलोपः क्वचिद् भवतीति; तेन ल्युटचपि भवति—दशनम् । नद्ध्री ॥**

## ९५२. हलसूकरयोः पुवः ॥१८३॥ (३१६४)

**'पू' इति पूङ्पुञोस्सामान्येन ग्रहणम् । अस्माद्धातोः करणे कारके ष्ट्रन् प्रत्ययो भवति । तच्चेत्करणं**

**न्यासः**

निराकरोति । यद्युपपदत्वमस्य स्यात् तदाजादिषु दंष्ट्राशब्दस्य पाठो नोपपद्यते । **योक्त्रमिति** । 'चोः कुः' इति कुत्वम् । **मेढ्रमिति** । 'हो ढः' इति ढत्वम्, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः' । **दंष्ट्रेति** । अजादित्वाट्टाप् ।

**दंशेरित्यादि** । ननु च यथा 'त्यजरज' इति रञ्जेरननुनासिकनिर्देशे घिनुण्प्रत्यये रागीत्यनुनासिकलोपो भवति, तथा दंशेः ष्ट्रन्प्रत्यये नलोपो भविष्यति, तत् कथमस्य ज्ञापकतोपपद्यते ? नैष दोषः, यद्ययं निर्देशो दंशेः ष्ट्रन्प्रत्ययेऽनुनासिकलोपार्थः स्यात्, तदा दंष्ट्राशब्दस्याजादिपाठो विरुध्यते । तस्माज्ज्ञापकार्थत्वम् । **नद्ध्रीति** । 'नहो धः' इति धत्वम्, 'झषस्तथोर्धोऽधः इति तकारस्य धत्वम्, धकारस्य 'झलां जश् झशि' इति जश्त्वम्, 'षिद्गौरादिभ्यश्च' इति ङीष् । येऽत्र सेटो धातवः शस्प्रभृतयस्तेषां हि 'तितुत्रतथ' इत्यादिनेट्प्रतिषेधः ।। १८२ ॥

**हलशूकरयोः पुवः ॥ तच्चेत्करणं हलशूकरयोरवयवो भवतीति** । एतेन हलशूकरयोरित्येषाऽवयवषष्ठी,

**पदमञ्जरी**

सूत्रेऽनुनासिकलोपेन निर्देशेऽपि ष्ट्रनि न भवति, ल्युट्येव तु भवति । योऽत्र सेट् ततः 'तितुत्र' इत्यादिनेट्प्रतिषेधः ॥ १८२ ॥

**हलसूकरयोः पुवः ॥ तच्चेत्करणं हलसूकरयोरवयवो भवतीति** । एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च

**भावबोधिनी**

[ नयति अनेन—नी + ष्ट्रन् ] शस्त्रम् [ शसति अनेन —शस् + ष्ट्रन्, जिससे वध किया जाया ] योत्रम् । [ जिससे मिलाया जाता है । ] योक्त्रम् । [ जिससे योग किया जाता है । युज् + ष्ट्रन् = त्र ज का कुत्व, चर्त्व—उपधागुण—योक्त्रम् ] स्तोत्रम् । [ जिससे प्रशंसा की जाती है । ] तोत्त्रम् । [ जिससे कष्ट दिया जाता है । तुद् + ष्ट्रन् = त्र, चर्त्व ] सेत्रम् । [ जिससे बाँधा जाता है । ] सेक्त्रम् । [ जिससे सींचा जाता है । ] मेढ्रम् । [ जिससे सींचा जाता है । मिह + ष्ट्रन् = त्र, 'हो ढः' से ह् का 'ढ्' "झषस्तथोर्धोधः" से 'त्' का 'ध्—मिढ् + ध्र, ष्टुत्व "ढो ढे लोपः" से प्रथम 'ढ्' का लोप, उपधा का गुण—मेढ्रम् । ] पत्त्रम् । [ पतति अनेन—इस अर्थ में पत् + ष्ट्रन् = त्र ] दंष्ट्रा । [ जिससे काटा जाता है । श् + ष्ट्रन् = त्र, दंश् का ष्, पुनः ष्टुत्व ] अजादिगणीय होने से टाप् होता है षित् होने से ङीष् नहीं ।

दंश—के अनुनासिकलोप से किया गया निर्देश ज्ञापन के लिये है—कित् और ङित् से भिन्न भी प्रत्यय परे रहते कहीं-कहीं 'न्' का लोप हो जाता है,—इस कारण ल्युट् परे रहते भी अनुनासिक का लोप हो जाता है—दशनम् । [ दंश् + ल्युट् = यु = अन, अनुनासिकलोप । ] नद्ध्री । [ णह = नह् + ष्ट्रन् = त्र; "नहो धः" सूत्र से ह् का ध्, त् का ध,—नध् + ध्र, "झलां जश् झशि" सूत्र से जश्त्व—प्रथम 'ध्' का द् । षित् होने से ङीष् = ई—नद्ध्री । बाँधने वाली रस्सी ] ।। १८२ ।।

'पू' इससे 'पूङ्' तथा 'पूञ्' इन दोनों का सामान्यरूप से ग्रहण है । इनसे करण कारक अर्थ में ष्ट्रन् प्रत्यय होता

हलसूकरयोरवयवो भवति । हलस्य पोत्रम् । सूकरस्य पोत्रम् । मुखमुच्यते ॥

**९५३. अर्त्तिलूधूसूखनसहचर इत्रः ॥१८४॥ (३१६५)**

'ऋ गतौ' ( धा० पा० १०९९ ), 'लूञ् छेदने' ( धा० पा० १४८४ ), 'धू विधूनने' (धा० पा० १३९९), 'षू प्रेरणे' ( धा० पा० १४०९ ), 'खनु अवदारणे' ( धा० पा० ८७९ ), 'षह मर्षणे' ( धा० पा० ८५३ ), 'चर गतिभक्षणयोः' ( धा० पा० ५५९ )—इत्येतेभ्यो धातुभ्यः करणे कारके इत्रप्रत्ययो भवति । अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

**९५४. पुवः संज्ञायाम् ॥१८५॥ (३१६६)**

पूङ्पूञोः सामान्येन ग्रहणम् । पवतेर्धातोः करणे कारके इत्रप्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते । दर्भः पवित्रम् । बर्हिष्पवित्रम् ॥

**न्यासः**

न त्वभिधेयसप्तमीति दर्शयति । **मुखमेवोच्यत इति** । नान्यः कर्णाद्यवयवः । एतच्चाभिधानशक्तिस्वाभाव्यात् ॥ १८३ ॥

**अर्त्तिलूधूसूखनसहचर इत्रः** ॥ 'धू विधूनने', 'षू प्रेरणे' इत्यनयोर्ग्रहणम् । 'धूञ् कम्पने' 'षूञ् प्राणिगर्भविमोचने' 'षूङ् प्राणिप्रसवे'—इत्येतेषां 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया ग्रहणं न भवति ॥ १८४ ॥

**पुवः संज्ञायाम्** ॥ **बर्हिष्पवित्रमिति** । पवतेः, पुनातेर्वा । अनेन पवित्रं बर्हिषा कृतम् । बर्हिष्पवित्रम् = कुशविकारः । प्रदेशिन्या अङ्गुलेर्वेष्टनमुच्यते ॥ १८५ ॥

**पदमञ्जरी**

निरस्यति । **मुखमुच्यते इति** । नान्यः कर्णादिः । एतदपि स्वभावादेव लभ्यते ॥ १८३ ॥

**अर्त्तिलूधूसूखनसहचर इत्रः** ॥ इकारोपदेशः 'तितुत्र' इति 'एकाचः' इति च यथायोगमनिट्प्रतिषेधो मा भूदिति । स्वरार्थश्च, इटि हि सत्यागमानुदात्तत्वं स्यात्, इका तु प्रत्ययाद्युदात्तत्वम् ॥ १८४ ॥

**पुवःसंज्ञायाम्** ॥ **बर्हिष्पवित्रमिति** । बर्हिषा कृतं बर्हिषः पवित्रं भवति, तत्र षष्ठीसमासः, 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम् । येनाज्यमुत्पूयते तत्पवित्रम् । अनामिकायाश्चाङ्गुलेर्वेष्टनं जपादिषु ॥ १८५ ॥

**भावबोधिनी**

है । वह करण यदि हल और सूकर का अवयव [ हल का पोत्र । पू + ष्ट्रन्=त्र, गुण ] सूकरस्य पोत्रम् । पोत्र = मुख को कहते हैं । [ सूकर और शूकर दोनों रूप शुद्ध हैं ] हो तो । उदा० हलस्य पोत्रम् । १८३ ॥

'ऋ गति अर्थ में है', 'लूञ् छेदन अर्थ में है', 'धू विधूनन=कंपाना अर्थ में हैं', 'षू' प्रेरण अर्थ में है', 'खनु' खोदना अर्थ में है', 'षह' सहना अर्थ में है', 'चर' यह खाना और चलना अर्थों में हैं—इन धातुओं से करण कारक अर्थ में 'इत्र' प्रत्यय होता है । उदा० अरित्रम् । [ ऋ + इत्र, गुण, रपर करने पर अर् + इत्र । जिससे चला जाय ] लवित्रम् । [ जिससे काटा जाय, चाकू आदि । ] धवित्रम् । [ जिससे कंपाया जाय । ] सवित्रम [ जिससे उत्पन्न कराया जाय । ] खनित्रम् । [ जिससे खोदा जाय, कुदाल, फावड़ा आदि । ] सहित्रम् । [ जिससे सहन किया जाय । ] चरित्रम् । [ जिससे चला जाय । ] ॥ १८४ ॥

'पूङ्' तथा 'पूञ्' इन दोनों का सामान्य रूप से ग्रहण होता है । 'पू' इस धातु से करण कारण अर्थ में 'इत्र' प्रत्यय होता है यदि समुदाय द्वारा संज्ञा की प्रतीति हो तो । उदा० दर्भः=पवित्रम् । बर्हिः पवित्रम् । [ 'पवित्र' यह कुश की संज्ञा है । लोकभाषा में 'पैंती' कहा जाता है । ] ॥ १८५ ॥

**९५५. कर्त्तरि चर्षिदेवतयोः ॥१८६॥ (३१६७)**

'पुवः' इति वर्त्तते। पुवः करणे कर्त्तरि च इत्रप्रत्ययो भवति। ऋषिदेवतयोर्यथासंख्यं सम्बन्धः। ऋषौ करणे देवतायां कर्त्तरि। पूयतेऽनेनेति पवित्रोऽयमृषिः। देवतायाम्—'अग्निः पवित्रं स मा पुनातु। वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु' ( निरु० ५.५ )॥

**९५६. ञीतः क्तः ॥१८७॥ (३०८८)**

'ञि' इद्यस्यासौ ञीत्। ञीतो धातोर्वर्तमानेऽर्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता, वर्तमाने न प्राप्नोतीति विधीयते। 'ञिमिदा स्नेहने' ( धा० पा० १२४४ )—मिन्नः। ञिक्ष्विदा–क्ष्विण्णः। ञिधृषा–धृष्टः॥

**९५७. मतिबुद्धिपूजार्थेभ्यश्च ॥ १८८ ॥ (३०८९)**

मतिः = इच्छा। बुद्धिः = ज्ञानम्। पूजा = सत्कारः–इत्येतदर्थेभ्यश्च धातुभ्यो वर्त्तमानार्थे क्तप्रत्ययो

**न्यासः**

**कर्त्तरि चर्षिदेवतयोः** ॥ १८६ ॥

**ञीतः क्तः॥ मिन्न इति।** 'आदितश्च' इतीट्प्रतिषेधः। 'रदाभ्याम्' इति नत्वम्। एवं **क्ष्विण्ण** इत्यत्रापि। 'अट्कुप्वाङ्' इत्यादिना णत्वम्। **धृष्ट इति।** 'धृषिशसी वैयात्ये' इतीट्प्रतिषेधः, 'ष्टुना ष्टुः' इति ष्टुत्वम्॥ १८७॥

**मतिबुद्धिपूजार्थेभ्यश्च ॥ मत इति।** 'मन ज्ञाने'। इट्प्रतिषेधः 'एकाचः' इत्यादिना, 'अनुदात्तोपदेश'

**पदमञ्जरी**

**कर्त्तरि चर्षिदेवतयो ॥ ऋषौ करणे इति।** ऋषिः=वेदमन्त्रः; 'तदुक्तमृषिणा' इति दर्शनादित्याहुः ॥१८६॥

**ञीतः क्तः॥ भूते निष्ठा विहितेत्यादि।** तत्र येननाप्राप्तिन्यायेन क्तस्यैव वर्त्तमानविषयतया भूतविषयता बाध्यते, यथा–'वडवाया वृषे वाच्ये' ( वा० ३८८ ) इत्यत्र वक्ष्यते—अपत्ये प्राप्तस्ततोऽपकृष्य वृषे विधीयत इति। एवमुत्तरविहितस्यापि। ज्ञातमित्येतत्तु भूतेऽपि भवति, तेनेत्यधिकारे उपज्ञात इति तद्धितविधानात्। वर्त्तमाने हि 'क्तस्य च वर्त्तमाने' इति षष्ठ्या भाव्यम्। एवं च'पूजितो यः सुरैरपि' इत्यादिनां साधुत्वं चिन्त्यम्॥ १८७॥

**मतिबुद्धिपूजार्थेभ्यश्च ॥ मतिरिच्छेति।** बुद्धेः पृथगुपादानाद् बुद्धिर्न गृह्यते। **मत इति।** 'अनुदात्तोपदेश' इत्यनुनासिकलोपः।

**भावबोधिनी**

'पुवः' इसकी अनुवृत्ति होती है। 'पू' धातु से करण और कर्ता अर्थों में 'इत्र' प्रत्यय होता है। ऋषि और देवता का यथासंख्य सम्बन्ध होता है—ऋषि करण रहने पर और देवता कर्ता रहने पर—यह अर्थ है। उदा० पूयतेऽनेन—इस विग्रह में—पवित्रः अयम् ऋषिः। [ पू + इत्र, गुण, अवादेश ] देवता अर्थ में—अग्निः पवित्रं समा पुनातु। वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु। ( निरु० ५।५ ) यहाँ पवित्रम्' यह देवता अर्थ में है। अतः पू + इत्र, गुण, अवादेश ]॥ १८६॥

'ञि' इत् है जिसका वह ञीत् है। ञीत् धातु से वर्तमान अर्थ में क्त प्रत्यय होता है भूतकाल अर्थ में निष्ठा किया गया है, अतः वर्तमान अर्थ में नहीं प्राप्त है, इस लिये किया जाता है। उदा० 'ञिमिदा' यह चिकना करना अर्थ में है, मिन्नः [ * 'आदिर्ञिटुडवः'' सूत्र से ञि का लुक् होता है, 'आ' का लोप होता है—मिद् + त ''रदाभ्यां निष्ठातो नः पूर्वस्य च दः'' सूत्र से 'द्' और 'त' के 'न्' न आदेश होते हैं—मिन्नः ] ञिक्ष्विदा = क्ष्विद् + त, पूर्ववत् नत्वादेश, ष्टुत्व—क्ष्विण्णः [ मुक्तः ] ञिधृषा धृष् + त, ष्टुत्व—धृष्टः [ प्रगल्भ ]॥ १८७॥

मति=इच्छा। बुद्धि=ज्ञान। पूजा=सत्कार = इन अर्थों वाली धातुओं से वर्तमान अर्थ में 'क्त' प्रत्यय होता है।

**भवति । राज्ञां मतः । राज्ञामिष्टः । राज्ञां बुद्धः । राज्ञां ज्ञातः । राज्ञां पूजितः । राज्ञामर्चितः । अनुक्तसमुच्चयार्थश्चकार ।**

**शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।**
**रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ १ ॥**
**हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ ।**
**कष्टं भविष्यतीत्याहुरमृतः पूर्ववत्स्मृतः ॥ २ ॥ ( म० भा० ३.२.१८८ )**

**न्यासः**

इत्यादिनानुनासिकलोपः । **इष्ट इति** । 'इषु इच्छायाम् ।' 'उदितो वा' इति विभाषितत्वान्निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । **बुद्ध इति** । 'बुध अवगमने' । पूर्ववद्धत्वम्, तकारस्य जश्त्वम्, धकारस्य दकारः । **पूजितः, अर्चित इति** । 'पूज पूजायाम्', 'अर्चपूजायाम्' भ्वादी । एतौ चुरादी च, तत्र यदा चुरादिभ्यां प्रत्ययस्तदा 'निष्ठायां सेटि' इति णिलोपः ।

**शीलित इत्यादौ**—'शील समाधौ', 'रक्ष पालने', 'क्षमूष् सहने', 'क्रुश आह्वाने', 'जुषी प्रीतिसेवनयोः', 'रुष रोषे', 'हृञ हरणे', 'हृष तुष्टौ', 'हृषु अलीके', 'तुष तुष्टौ', 'कमु कान्तौ', 'यम उपरमे', 'कष हिंसायाम्', 'मृङ् प्राणत्यागे'—इत्येतेषां धातूनां यथाक्रमेणैतानि रूपाणि । तत्राद्यौ सेटौ । यश्चात्र कश्चिदुदिदूदिच्च, तस्य निष्ठायाम् 'यस्य विभाषा' इतीट्प्रतिषेधः; यस्त्वीदित् तस्यापि 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः । हृषेरेव 'हृषेर्लोमसु' इत्यनेन । कषेरपि 'कृच्छ्रगहनयोः कषः' इत्यनेन । शेषेभ्यः 'एकाच' इत्यादिना 'रुष्यमत्वरसंघुषा-

**पदमञ्जरी**

**शीलित इत्यादि** । 'शील समाधौ' ( धा० पा० ५२३ ), 'रक्ष पालने' ( धा० पा० ६५८ ), 'क्षमूष् सहने' ( धा० पा० ४४२ ), 'क्रुश आह्वाने रोदने च' ( धा० पा० ८५६ ), 'जुषी प्रीतिसेवनयोः' ( १२८८ ), 'रुष रोषे' ( ६९३ ), 'हृञ् हरणे' ( ८९९ ), 'हृषु अलीके' ( ७०९ ), 'हृष् तुष्टौ' ( धा० पा० १२२९ ), इति वा; 'तुष तुष्टौ' ( ११८४ ), 'कमु कान्तौ' ( ४४३ ), 'यम उपरमे' ( ९८४ ), 'कष हिंसायाम्' ( धा० पा० ६८५ ) 'मृङ् प्राणत्यागे' ( धा० पा० १४०३ ) तत्राद्यौ सेटौ, ऊदितामुदितां च 'य विभाषा' इतीट्प्रतिषेधः ईदितः 'श्वीदितो

**भावबोधिनी**

उदा० राज्ञां मतः । [ मतः । मन् + क्त, "अनुदात्तोपदेश०" सूत्र से 'न' का लोप—मतः । राजाओं का चाहा जाने वाला ] राज्ञाम् इष्टः । [ इष् + क्त, ष्टुत्व ] । राज्ञां बुद्धः । [ बुध् + क्त 'झषस्तथोर्धोऽधः' से 'त्' का 'ध्', जश्त्व—बुद्धः । राजाओं द्वारा जाना जाने वाला ] राज्ञा ज्ञातः [ अर्थ पूर्वोक्त ] । राज्ञां पूजितः । राज्ञाम् अर्चितः । [ राजाओं द्वारा पूजित ] अनुक्त के समुच्चय के लिये चकार है, अर्थात् सूत्र में जो नहीं हैं उनसे भी 'क्त' होता है ।

शीलितः । [ शील् + क्त, इट् ] रक्षितः । [ रक्ष् + क्त, इट् ] क्षान्तः [ क्षम् + क्त, "अनुनासिकस्य क्विझलोः क्ङिति" सूत्र से दीर्घ, म् का अनुस्वार परसवर्ण ] आक्रुष्टः । [ आङ् क्रुष् + क्त, ष्टुत्व ] जुष्टः । [ जुषी = जुष् + क्त, ष्टुत्व ]—यह भी बनता है । रुष्टः [ रुष् + क्त, ष्टुत्व ] और रुषितः [ रुष् + क्त, इट् ]—ये दोनों रूप होते हैं । अभिव्याहृत.—[ अभि वि आङ् हृ + क्त ] यह भी बनता है तथा हृष्टः [ हृष् + क्त, ष्टुत्व ] तुष्टः [ तुष् + क्त, ष्टुत्व ] और —कान्तः [ कम् + क्त, "अनुनासिकस्य क्विझलोः" से दीर्घ, न् का अनुस्वार, परसवर्ण —कान्तः ] और—संयतः, उद्यतः [ सम् यम् + क्त, अनुनासिक का लोप, प्रथम म् का अनुस्वार—संयतः, उद् यम् + क्त, म् का लोप उद्यतः ]—ये दोनों होते हैं । कष्ट होगा—इस अर्थ में 'कष्टम्' [ कष् + क्त, ष्टुत्व ]—यह कहा गया है । 'अमृत' यह पूर्ववत् कहा गया है अर्थात् जैसे—शील आदि से वर्तमान में निष्ठा होकर—शीलित आदि होते हैं उसी प्रकार [ न म्रियते—इस वतमान में—] अमृतः [ मृ + क्त = मृतः नञ् समास ] होता है ।

**कष्ट इति भविष्यति काले । अमृत इति पूर्ववत् । वर्त्तमान इत्यर्थः ।**

**तथा सुप्तः, शयितः, आशितः, लिप्तः, तृप्तः—इत्येवमादयोऽपि वर्त्तमाने द्रष्टव्याः ॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ तृतीयाध्यायस्य द्वितीयः पादः ॥**

—: ० :—

**न्यासः**

स्वनाम्' इति विभाषितेट् । **कान्तः, क्षान्त इति** । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । **आक्रुष्टेति** । व्रश्चादिना षत्वम् । **संयत इति** । पूर्ववदनुनासिकलोपः । **अमृत इति** । गत्यर्थादीनां कर्त्तरि क्तः । **पूर्ववद्** । यथा शीलादिषु वर्त्तमाने निष्ठा तथाऽमृतशब्दस्यापीत्यर्थः ।

**सुप्त इति** । स्वपेः संप्रसारणम् । **शयित इति** । 'निष्ठा शीङ्' इत्यादिना कित्त्वप्रतिषेधाद् गुणः । **आशित इति** । 'अश भोजने' आङ्पूर्वः, 'लिप उपदेहे', 'तृप प्रीणने' । अत्र अशिशीङौ सेटौ, शेषास्त्वनिटः । एकाचः इत्यादिनेट्प्रतिषेधः । यद्यपि शीलादयो वर्त्तमानकाले व्युत्पाद्यन्ते, तथापि शीलितो देवदत्तेन, रक्षितो देवदत्तेन, आक्रुष्टो देवदत्तेनेत्यत्र 'क्तस्य च वर्त्तमाने' इति षष्ठी न भवति । यथा न भवति तथा तत्रैव प्रतिपादितम् ॥ १८८ ॥

**॥ इति बोधिसत्त्वदेशीचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥**

—: ० :—

**पदमञ्जरी**

निष्ठायाम्' इति । **हृष्ट इति** । 'हृषेर्लोमसु' इति । कषेः 'कृच्छ्रगहनयोः कषः' इति । रुषेः 'रुष्यमत्वरसंघुषास्वनाम्' इति । विकल्पः ।

**सुप्त इति** । सुपेः । 'ञीतः क्तः' इत्येव सिद्धे नजिङा तच्छीलादिषु बाधा मा भूदिति समुच्चीयते । क्वचित्तु **सृप्त** इति पठ्यते ॥ १८८ ॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य द्वितीयः पादः ॥**

—: ० :—

**भावबोधिनी**

'कष्टम्' यह [ वर्तमान में न होकर ] भविष्यत् काल में है 'अमृतः' यह पूर्ववत् अर्थात् वर्तमान काल में होता है ।

इसी प्रकार—सुप्तः [ सुप् + क्त ], आशितः [ आश् + क्त, इट् ], लिप्तः [ लिप् + क्त ], तृप्तः [ तृप् + क्त ]—इत्यादि शब्दों को भी वर्तमान काल अर्थ में समझना चाहिये ।

**विमर्श**—प्रस्तुत सूत्र में 'च' से किसका समुच्चय हो—इस पर काशिकाकार ने 'अनुक्तों का हो'—यह भाष्यानुसारी उत्तर दिया है । यहाँ जितने शब्द उदाहृत हैं उन सभी से वर्तमानकाल अर्थ की प्रतीति होती है । केवल 'कष्टम्' इससे भविष्यत् काल प्रतीत होता है । जिन शब्दों में इस वर्तमान कालिक 'क्त' का विधान है उनसे ''क्तस्य च वर्तमाने'' ( पा. सू. २.३.६७ ) सूत्र से 'कर्ता' अर्थ में षष्ठी होती हैं । इसके अतिरिक्त 'क्तेन च पूजायाम्' ( पा. सू. २.२.१२ ) यह सूत्र इनके प्रयोग में षष्ठीसमास का प्रतिषेध करता है ।

॥ इस प्रकार श्री जयादित्य द्वारा विरचित 'काशिकावृत्ति' में तृतीय-अध्याय का द्वितीय पाद समाप्त हुआ ॥

**॥ इस प्रकार जय शङ्कर लाल त्रिपाठि-विरचित 'भावबोधिनी'-हिन्दी-व्याख्या में काशिकावृत्ति के तृतीय अध्याय का द्वितीय पाद समाप्त हुआ ॥**

**॥ शिवार्पणमस्तु ॥**

—: ० :—

# पाणिनीय--सूत्रसूची

—: 0 :—

# शुद्धाशुद्धिपत्रम्

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ४१ | १७ | आदिह | आहि |
| ४७ | २४ | भो नक्तुार्हन्ती. | भोक्तुं नार्हन्ती |
| ४८ | १ | वा० | वा० ५ |
| ४८ | २ | वा० | वा० ६ |
| ५१ | १२ | च सेवाथाम् | चासेवायाम् |
| ९१ | १९ | शशु० | शिशु० |
| ९२ | २६ | निरामयं देवदत्तस्य | निरामयं देवदत्ताय |
| १२० | १२ | राज हःसखि० | राजाहःसखि० |
| १२१ | ४ | सेनासुरा' च्छाया० | सेनासुराच्छाया० |
| १२३ | २२ | आख्या= | आख्यातुम्= |
| १२५ | २७ | नसकपुलिंग | नपुंसकलिंग |
| १३१ | २३ | अश्वडवौ | अश्ववडवौ |
| १३४ | ३० | शङ्ख | शङ्ख |
| १३७ | ४ | छात्त्रस्य | अस्य छात्त्रस्य |
| १६४ | १० | नकण्वादिषु | न कण्वादिषु |
| १६५ | १ | शल्वा-वयवलक्षण | शाल्वावयवलक्षण |
| १७४ | ७ | गार्ग्गस्य | गार्ग्यस्य |
| १९३ | ४ | पुंवद्भवः | पुंवद्भावः |
| १९६ | १५ | स्थानिन्स्त्रस्य | स्थानिनस्त्रय |
| २०१ | १७ | करणीमति | करणीयमिति |
| २०५ | १४ | द्विरानुदात्तग्रहणं | द्विरनुदात्तग्रहणं |
| २१८ | २४ | तदीच्छाया | तत्रापि यदीच्छाया |
| २१८ | २८ | पुत्र चरस्य | पुत्रं परस्य |
| २१९ | ३१ | अक्रियाणे | अक्रियमाणे |
| २२१ | २३ | नुण्डमिच्छति | मुण्डमिच्छति |
| २२१ | १९ | ०छात्रा देर० | ०छात्रादेर० |
| २३३ | २२ | प्रत्यायार्थेन | प्रत्ययार्थेन |
| २३४ | २७ | युच्' इति । युचि | युच्' इति युचि |
| २४१ | २० | अनिर्दिष्टार्या: | अनिर्दिष्टार्थाः |
| २४५ | १६ | एवं हि षुपिभूतो ··वक्ष्यमाणं | (?) |
| २५८ | ६ | तस्माण्चि् | तस्माण्णिच् |
| २८० | २ | कृश्चानु० | कृश्वानु० |
| २९९ | ३० | अ व च् + अ | अ व उ च् + अ |
| २९९ | ३२ | आरव्यत् | आख्यत् |
| ३०६ | ३७ | णिथिश्रद्रु स्रु भ्यः | णिश्रिद्रु स्रु भ्यः |

| | | | |
|---|---|---|---|
| ३०९ | ५ | भावकर्मणा: | भावकर्मणो: |
| ३१० | २ | यक | यक् |
| ३३६ | ३७ | पहलेवाला सूत्र | पहलेवाला |
| ३३९ | १५ | दण्ड देवदत्त:, | दण्डं देवदत्त: |
| ३५७ | २० | जजी प्रादुर्भावे | जनी प्रादुर्भावे |
| ३५७ | २९ | यत्यम् [तत्न | यत्यम् [प्रयत्न |
| ३५८ | १ | परोदुपधात् | पोरदुपधात् |
| ३६१ | ३६ | 'अर्थं' आद्युदात्त | 'अर्यं' आद्युदात्त |
| ३७९ | ३६ | क्रियाम्यावृत्ति | क्रियाभ्यावृत्ति |
| ३८८ | ३८ | पदमञ्जयमियं | पदमञ्जर्यामियं |
| ४०७ | ५ | आताऽनुपसर्गे | आतोऽनुपसर्गे |
| ४१८ | २७ | दिग्धसहशाय: | दिग्धसहशय: |
| ४२० | ३ | अनुलोम्यम् | आनुलोम्यम् |
| ४२६ | ३२ | पयिरक्षी | पथिरक्षी |
| ४३४ | ३ | द्विषत्परय स्तायेः | द्विषत्परयोस्तापे: |
| ४४३ | ५ | टक | टक् |
| ४४५ | ६ | वा० | वा० १ |
| ४५४ | २ | (वा० २ ) | (?) |
| ४५५ | ३६ | विश्रण | विशरण |
| ४६० | ७ | पृ षोदरादि० | पृषोदरादि० |
| ४६० | २१ | (काव्य० | (कात्या० |
| ४६२ | १ | वा०) | वा० १, २) |
| ४६२ | २६ | श्वेतवह् भ्याम् | श्वेतवह् + भ्याम् |
| ४७२ | १२ | चेत्यदी | चेत्यादी |
| ५१० | १ | ❀ माङ्याक्रोशे ❀ (?) | ❀ माङ्याक्रोशे ❀ (म० भा० ३.२.१२४ वा० ६) |
| ५१३ | १४ | उपाघ्यसंग्रहार्थे | उपाध्यसंग्रहार्थे |
| ५१४ | २२ | न तथा | न संज्ञा । तथा |
| ५१४ | २९ | कर्मणि भावे च | कर्मणि च भावे |
| ५१५ | ५ | (म० भा० २.३.६९) | (म० भा० ३.२.१३४ वा० १०) |
| ५२५ | २ | गृस्नु: | गृध्नु: |
| ५२९ | ४ | ० भाषासूयो | ० भाषासूयो: |
| ५४३ | २४ | मृगरवादिपु | मृगय्वादिषु |
| ५४५ | ३६ | जज्ञि:] जघ्नि: | जघ्नि:] जज्ञि: |
| ५५५ | २५ | अवयव [हल | अवयव हो तो। उदा० हलस्य पोत्रम् । [हल |
| ५५५ | २६ | हो तो। उदा० हलस्य पोत्रम् । | × |
| ५५५ | ३० | सवित्रम | सवित्रम् |